# SRIMANMAHABHARATAM

A NEW EDITION

MAINLY BASED ON

**THE SOUTH INDIAN TEXTS,**

With footnotes and Readings.

## ANUS'ÂSANAPARVA XIII.

EDITED BY

T. R. KRISHNACHARYA & T. R. VYASACHARYA,

Proprietors, Madhva Vilâs Book Depot, Kumbakonam.

*Printed by B. R. Ghanekar for the proprietors,*

*at Tukaram Javaji "Nirnaya-Sagar" Press,*

**BOMBAY.**

॥ श्रीः ॥

# श्रीमन्महाभारतम्

## सटिप्पणम् ।



## अनुशासनपर्व १३.

---

एतच्च

कुम्भघोणस्थेन श्रीमन्मध्वविलासपुस्तकालयाधिपतिना

**टी. आर्. कृष्णाचार्येण टी. आर्. व्यासाचार्येण च**

अनेकेषां विदुषां साहाय्येन दाक्षिणात्यबहुकोशानुसारेण

संशोध्य

मुंबापुर्यां

जावजी दादाजी इत्येतेषां निर्णयसागरमुद्रणयन्त्रे मुद्रयित्वा प्रकाशितम् ।

---

शाके १८३१ सौम्यनामसंवत्सरे ।

श्रीः ।

# श्रीमन्महाभारतम् ।

## अनुशासनपर्व १३ ।

### (अथ दानधर्मपर्व ॥ १ ॥)

### प्रथमोऽध्यायः ॥ १ ॥

युधिष्ठिरेण भीष्मंप्रति पुनः शमादिकथनप्रार्थना ॥ १ ॥ भीष्मादिनिधने स्वस्यैव हेतुत्वबुद्ध्या स्वोपालम्भनपूर्वकं शोचन्तं युधिष्ठिरंप्रति भीष्मेण जीवस्य कर्मण्यस्वातन्त्र्यमभिधाय तन्निदर्शनतया गौतमीलुब्धकादिसंवादानुवादः ॥ २ ॥

---

श्रीवेदव्यासाय नमः ।
नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं चैव(व्यासं) ततो जयमुदीरयेत् ॥ १
वैशंपायन उवाच ।
'शरतल्पे महात्मानं शयानमपराजितम् ।
युधिष्ठिर उपागम्य प्रणिपत्येदमब्रवीत् ॥' १
शमो बहुविधाकारः सूक्ष्म उक्तः पितामह ।
न च मे हृदये शान्तिरस्ति श्रुत्वेदमीदृशम् ॥ २
अस्मिन्नर्थे बहुविधा शान्तिरुक्ता पितामह ।
स्वकृतात्का नु शान्तिः स्याच्छमाद्बहुविधादपि ॥ ३
शराचितं शरीरं हि तीव्रव्रणमुदीक्ष्य ते ।
शमं नोपलभे वीर दुष्कृतान्येव चिन्तयन् ॥ ४
रुधिरेणावसिक्ताङ्गं प्रस्रवन्तं यथाचलम् ।
त्वां दृष्ट्वा पुरुषव्याघ्र सीदे वर्षास्विवाम्बुजम् ॥ ५
अतः कष्टतरं किंनु मत्कृते यत्पितामहः ।
इमामवस्थां गमितः प्रत्यमित्रै रणाजिरे ॥ ६
तथा चान्ये नृपतयः सहपुत्राः सबान्धवाः ।
मत्कृते निधनं प्राप्ताः किंनु कष्टतरं ततः ॥ ७
वयं हि धार्तराष्ट्राश्च काममन्युवशं गताः ।
कृत्वेदं निन्दितं कर्म प्राप्स्यामः कां गतिं नृप ८
इदं तु धार्तराष्ट्रस्य श्रेयो मन्ये जनाधिप ।
इमामवस्थां संप्राप्तं यदसौ त्वां न पश्यति ॥ ९
सोऽहमार्तिकरो राजन्सुहृद्वधकरस्तथा ।
न शान्तिमधिगच्छामि पश्यंस्त्वां दुःखितं क्षितौ ॥ १०
[दुर्योधनो हि समरे सहसैन्यः सहानुजः ।
निहतः क्षत्रधर्मेऽस्मिन्दुरात्मा कुलपांसनः ॥ ११
न स पश्यति दुष्टात्मा त्वामद्य पतितं क्षितौ ।
अतः श्रेयो मृतं मन्ये नेह जीवितमात्मनः ॥ १२
अहं हि समरे वीर गमितः शत्रुभिः क्षयम् ।
अभविष्यं यदि पुरा सह भ्रातृभिरच्युत ।
न त्वामेवं सुदुःखार्तमद्राक्षं सायकार्दितम् ॥ १३
नूनं हि पापकर्माणो धात्रा सृष्टाः स्म हे नृप ॥ १४
अन्यस्मिन्नपि लोके वै यथा मुच्येम किल्बिषात् ।
तथा प्रशाधि मां राजन्मम चेदिच्छसि प्रियम् ॥ १५
भीष्म उवाच ।
परतन्त्रं कथं हेतुमात्मानमनु पश्यसि ।
कर्मणां हि महाभाग सूक्ष्मं ह्येतदतीन्द्रियम् ॥ १६
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।

---

धर्मो बहुविधाकार इति ट. पाठः ॥ २ ॥ सीदे सीदामि सदा वर्षमिवाम्बुदम् इति थ. पाठः ॥ ५ ॥ मत्कृते मन्निमित्तम् । प्रत्यमित्रैः अमित्राणां प्रतिकूलैरसदीयैरर्जुनशिखण्डिप्रभृतिभिः ॥ ६ ॥

अनु

मंत्राद् मृत्युगौतम्योः काललुब्धकपन्नगैः ॥ १७
गौतमी नाम काऽप्यासीत्स्थविरा शमसंयुता ।
सर्पेण दष्टं स्वं पुत्रमपश्यद्गतचेतनम् ॥ १८
अथ तं स्नायुपाशेन बद्ध्वा सर्पममर्षितः ।
लुब्धकोऽर्जुनको नाम गौतम्याः समुपानयत् ॥ १९
तां चाब्रवीदयं ते स पुत्रहा पन्नगाधमः ।
ब्रूहि क्षिप्रं महाभागे वध्यतां केन हेतुना ॥ २०
अग्नौ प्रक्षिप्यतामेष च्छिद्यतां खण्डशोपि वा ।
न ह्ययं बालहा पापश्चिरं जीवितुमर्हति ॥ २१
गौतम्युवाच ।
विसृजैनमबुद्धिस्त्वमवध्योऽर्जुनक त्वया ।
को ह्यात्मानं गुरुं कुर्यात्प्राप्तव्ये सति चिन्तयन् २२
प्लवन्ते धर्मलघवो लोकेऽम्भसि यथा प्लवाः ।
मज्जन्ति पापगुरवः शस्त्रं स्कन्नमिवोदके ॥ २३
नास्यामृतत्वं भवितैवं हतेऽस्मि-
ञ्जीवत्यस्मिन्कोऽत्ययः स्यादयं ते ।
अस्योत्सर्गे प्राणयुक्तस्य जन्तो-
र्मृत्युं लोके को न गच्छेदनन्ते ॥ २४
लुब्धक उवाच ।
जानाम्यहं नेह गुणागुणज्ञाः
सदायुक्ता गुरवो वै भवन्ति ।
स्वस्थस्य ते तूपदेशा भवन्ति
तस्मात्क्षुद्रं सर्पमेनं हनिष्ये ॥ २५
शममीप्सन्तः कालयोगं त्यजन्ति
सद्यः शुचं त्वर्थविदस्त्यजन्ति ।
श्रेयः क्षयः शोचतां नित्यशो हि
तस्माच्छुचं मुञ्च हते भुजङ्गे ॥ २६
गौतम्युवाच ।
न चैवार्तिर्विद्यतेऽस्मद्विधानां
धर्मात्मानः सर्वदा सज्जना हि ।
नित्यायस्तो बालजनो न चाहं
धर्मोपैति प्रभवाम्यस्य नाहम् ॥ २७
न ब्राह्मणानां कोपोऽस्ति कुतः कोपाच्च यातना ।
मार्दवात्क्षम्यतां साधो मुच्यतामेष पन्नगः ॥ २८
लुब्धक उवाच ।
हत्वा लाभः श्रेय एवाव्ययः स्या-
त्सद्यो लाभः स्याद्बलिभ्यः प्रशस्तः ।
कालाल्लाभो यस्तु सद्यो भवेत
श्रेयोलाभः कुत्सिते त्वीदृशि स्यात् ॥ २९
गौतम्युवाच ।
काऽर्थप्राप्तिर्गृह्य शत्रुं निहत्य
का कामाप्तिः प्राप्य शत्रुं न मुक्त्वा ।
कस्मात्सौम्याहं न क्षमे नो भुजङ्गे
मोक्षार्थं वा कस्य हेतोर्न कुर्याम् ॥ ३०
लुब्धक उवाच ।
अस्मादेकाद्बहवो रक्षितव्या
नैको बहुभ्यो गौतमि रक्षितव्यः ।
कृतागसं धर्महेतोस्त्यजन्ति
सरीसृपं पापमिमं त्यज त्वम् ॥ ३१
गौतम्युवाच ।
नास्मिन्हते पन्नगे पुत्रको मे
संप्राप्स्यते लुब्धक जीवितं वै ।
गुणं चान्यं नास्य वधे प्रपश्ये
तस्मात्सर्पं लुब्धक मुञ्च जीवम् ॥ ३२
लुब्धक उवाच ।
वृत्रं हत्वा देवराट् श्रेष्ठभाग्वै
यज्ञं हत्वा भागमवाप चैव ।
शूली देवो देववृत्तं चर त्वं
क्षिप्रं सर्पं जहि मा भूत्ते विशङ्का ॥ ३३

अथ त साधुपाशेनेति ध. पाठः ॥ १९ ॥ केन हेतुना केनोपायेन ॥ २० ॥ हेतुमेवाह अग्नाविति ॥ २१ ॥ प्राप्तव्यमविचिन्तयन्निति झ. पाठः ॥ २२ ॥ प्लवन्ते तु खार्णव तरन्ति । मज्जन्ति — तत्रैव । वज्रं क्लिन्नमिवोदके इति ट. पाठः ॥ २३ ॥ उत्सर्गे प्राणोत्सर्गे ॥ २४ ॥ श्रेयः परलोकहित तदेवाऽव्ययो लाभः सच शत्रून् हत्वैव लभ्य इत्यध्याहृत्य योज्यम् । बलिभ्यः सर्वेभ्यः प्रशस्तः श्रेष्ठश्च स्यात् । शत्रुविधाल्लोकत्रयेपि मान्यो भवतीत्यर्थः ॥ २९ ॥ त्यजन्ति नाशयन्ति ॥ ३१ ॥ मे पुत्रको जीवित न संप्राप्स्यते । गुण पुण्यम् । जीव जीवन्तम् ॥ ३२ ॥ शूली यज्ञ हत्वेति संबन्धः

भीष्म उवाच ।
असंकृत्प्रोच्यमानाऽपि गौतमी भुजगं प्रति ।
लुब्धकेन महाभागा सा पापे नाकरोन्मतिम् ॥३४
ईषदुच्छ्वसमानस्तु कृच्छ्रात्संस्तभ्य पन्नगः ॥
उत्ससर्ज गिरं मन्दां मानुषीं पाशपीडितः ॥३५
सर्प उवाच ।
को न्वर्जुनक दोषोऽत्र विद्यते मम बालिश ।
अस्वतन्त्रं हि मां मृत्युर्विवशं यदचूचुदत् ॥ ३६
तस्यायं वचनाद्दष्टो न कोपेन न काम्यया ।
तस्य तत्किल्बिषं लुब्ध विद्यते यदि किंचन ॥ ३७
लुब्धक उवाच ।
यद्यन्यवशगेनेदं कृतं ते पन्नगाशुभम् ।
कारणं वै त्वमप्यत्र तस्मात्त्वमपि किल्बिषी ॥३८
मृत्पात्रस्य क्रियायां हि दण्डचक्रादयो यथा ।
कारणत्वे प्रकल्प्यन्ते तथा त्वमपि पन्नग ॥ ३९
किल्बिषी चापि मे वध्यः किल्बिषी चासि पन्नग ।
आत्मानं कारणं ह्यत्र त्वमाख्यासि भुजङ्गम ॥४०
सर्प उवाच ।
सर्व एते ह्यस्ववशा दण्डचक्रादयो यथा ।
तथाहमपि तस्मान्मे नैष दोषो मतस्तव ॥ ४१
अथवा मतमेतत्ते तेऽप्यन्योऽन्यप्रयोजकाः ।
कार्यकारणसंदेहो भवत्यन्योन्यचोदनात् ॥ ४२
एवं सति न दोषो मे नास्मि वध्यो न किल्बिषी ।
किल्बिषं समवाये स्यान्मन्यसे यदि किल्बिषम् ४३
लुब्धक उवाच ।
कारणं यदि न स्याद्वै न कर्ता स्यास्त्वमप्युत ।
विनाशे कारणं त्वं च तस्माद्वध्योऽसि मे मतः ॥४४
असत्यपि कृते कार्ये नेह पन्नग लिप्यते ।
तस्मान्नात्रैव हेतुः स्याद्वध्यः किं बहुभाषसे ॥४५
सर्प उवाच ।
कार्याभावे क्रिया न स्यात्सत्यसत्यपि कारणे ।
तस्मात्समेऽस्मिन्हेतौ मे वाच्यो हेतुर्विशेषतः ॥४६
यद्यहं कारणत्वेन मतो लुब्धक तत्त्वतः ।
अन्यः प्रयोक्ता स्यादत्र किंतु जन्तुविनाशने ॥४७
लुब्धक उवाच ।
वध्यस्त्वं मम दुर्बुद्धे बालघाती नृशंसकृत् ।
भाषसे किं बहु पुनर्वध्यः सन्पन्नगाधम ॥ ४८
सर्प उवाच ।
यथा हवींषि जुह्वाना मखे वै लुब्धकर्त्विजः ।
न फलं प्राप्नुवन्त्यत्र फलयोगे तथा ह्यहम् ॥ ४९
भीष्म उवाच ।
तथा ब्रुवति तस्मिंस्तु पन्नगे मृत्युचोदिते ।
आजगाम ततो मृत्युः पन्नगं चाब्रवीदिदम् ॥५०
प्रचोदितोऽहं कालेन पन्नग त्वामचूचुदम् ।
विनाशहेतुर्नास्य त्वमहं न प्राणिनः शिशोः ॥५१
यथा वायुर्जलधरान्विकर्षति ततस्ततः ।
तद्वज्जलदवत्सर्प कालस्याहं वशानुगः ॥ ५२
सात्त्विका राजसाश्चैव तामसा ये च केचन ।
भावाः कालात्मकाः सर्वे प्रवर्तन्ते ह जन्तुषु ॥५३
जङ्गमाः स्थावराश्चैव दिवि वा यदि वा भुवि ।
सर्वे कालात्मकाः सर्प कालात्मकमिदं जगत् ॥५४
प्रवृत्तयश्च लोके या तथैव च निवृत्तयः ।
तासां विकृतयो याश्च सर्वं कालात्मकं स्मृतम् ॥५५
आदित्यश्चन्द्रमा विष्णुरापो वायुः शतक्रतुः ।

---

॥ ३३ ॥ संस्तभ्य धैर्यमालम्ब्य ॥ ३५ ॥ अचूचुदत् प्रेरितवान् ॥ ३६ ॥ दष्टो दष्टवान् । किल्बिषं चेदस्ति तर्हि प्रयोक्तुरेव न प्रयोज्यस्य मम शरस्येवेत्यर्थः ॥ ३७ ॥ चेतनत्वात्किल्बिषीत्यवश्यं वध्योऽसीत्यर्थः ॥ ३९ ॥ आयुध हि अयस्कान्तवत्प्रहर्तारं प्रयोजयति । तेनायुधकर्तापि प्रयोजकस्तस्यापि कारयिता प्रहर्तुकामः प्रयोजक इत्यन्योन्यप्रयोज्यत्वान्न कस्यचिद्धन्तृत्वमित्यर्थः ॥ ४२ ॥ समवाये समुदाये ॥ ४३ ॥ यतः कृतेऽपि अस्मति दुष्टे कार्ये दोषे हेतुः कर्ता न लिप्यते तव मते । तस्मात् चोरादिरत्रैव राज्ञां वध्यः प्रायश्चित्ती च न स्यात् ॥ ४५ ॥ कारणे कर्तरि सति कुठारोद्यमनादिकार्येण छिदिक्रिया जायते असत्यपि कर्तरि तरुशाखान्तनिघर्षेण कार्येण तज्जेनाग्निना वनदाहक्रिया जायते । तस्माच्छाखाया इव ममापि कर्तृत्वं अप्रयोजकत्वान्न दोषहेतुः विशेषाभावादित्यर्थः ॥ ४६ ॥ एवमृत्विगादिवदन्यप्रेर्यत्वान्नाहं किल्बिषी किंतु मम प्रयोजक एवेति भावः ॥ ४९ ॥ कालेन ईश्वरेण ॥ ५१ ॥ कालात्मकाः कालस्यैवाऽऽत्मा स्वभावो येषां ते । कालानुसारिण इत्यर्थः ॥ ५३ ॥

अग्निः स्वं पृथिवी मित्रः पर्जन्यो वसवोऽदितिः ॥
सरितः सागराश्चैव भावाभावौ च पन्नग ।
सर्वे कालेन सृज्यन्ते ह्रियन्ते च पुनःपुनः ॥५७
एवं ज्ञात्वा कथं मां त्वं सदोषं सर्प मन्यसे ।
अथ चैवं गते दोषे मयि त्वमपि दोषवान् ॥५८
सर्प उवाच ।
निर्दोषं दोषवन्तं वा न त्वां मृत्यो ब्रवीम्यहम् ।
त्वयाऽहं चोदित इति ब्रवीम्येतावदेव तु ॥ ५९
यदि काले तु दोषोऽस्ति यदि तत्रापि नेष्यते ।
दोषो नैव परीक्ष्यो मे न ह्यत्राधिकृता वयम् ॥६०
निर्मोक्षस्त्वस्य दोषस्य मया कार्यो यथा तथा ।
मृत्योरपि न दोषः स्यादिति मेऽत्र प्रयोजनम् ॥६१
भीष्म उवाच ।
सर्पोऽथार्जुनकं प्राह श्रुतं ते मृत्युभाषितम् ।
नानागसं मां पाशेन संतापयितुमर्हसि ॥ ६२
लुब्धक उवाच ।
मृत्योः श्रुतं मे वचनं तव चैव भुजङ्गम ।
नैव तावददोषत्वं भवति त्वयि पन्नग ॥ ६३
मृत्युस्त्वं चैव हेतुर्हि बालस्यास्य विनाशने ।
उभयं कारणं मन्ये न कारणमकारणम् ॥ ६४
धिङ्मृत्युं च दुरात्मानं क्रूरं दुःखकरं सताम् ।
त्वां चैवाहं वधिष्यामि पापस्य कारणम् ॥६५
मृत्युरुवाच ।
विवशौ कालवशगावावां निर्दिष्टकारिणौ ।
नावां दोषेण गन्तव्यौ यदि सम्यक्प्रपश्यसि ॥६६
लुब्धक उवाच ।
युवामुभौ कालवशौ यदि मे मृत्युपन्नगौ ।
हर्षक्रोधौ यथा स्यातामेतदिच्छामि वेदितुम् ॥६७

मृत्युरुवाच ।
या काचिदेव चेष्टा स्यात्सर्वा कालप्रचोदिता ।
पूर्वमेवैतदुक्तं हि मया लुब्धक तत्त्वतः ॥ ६८
तस्मादुभौ कालवशावावां निर्दिष्टकारिणौ ।
नावां दोषेण गन्तव्यौ त्वया लुब्धक कर्हिचित् ६९
भीष्म उवाच ।
अथोपगम्य कालस्तु तस्मिन्धर्मार्थसंशये ।
अब्रवीत्पन्नगं मृत्युं लुब्धं चार्जुनकं तथा ॥७०
न ह्यहं नाप्ययं मृत्युर्नायं लुब्धक पन्नगः ।
किल्बिषी जन्तुमरणे न वयं हि प्रयोजकाः ॥७१
अकरोद्यदयं कर्म तन्नोऽर्जुनक चोदकम् ।
विनाशहेतुर्नान्योऽस्य वध्यतेऽयं स्वकर्मणा ॥७२
यदनेन कृतं कर्म तेनायं निधनं गतः ।
विनाशहेतुः कर्मास्य सर्वे कर्मवशा वयम् ॥ ७३
कर्मदायादवाँल्लोकः कर्मसंबन्धलक्षणः ।
कर्माणि चोदयन्तीह यथान्योन्यं तथा वयम् ॥७४
यथा मृत्पिण्डतः कर्ता कुरुते यद्यदिच्छति ।
एवमात्मकृतं कर्म मानवः प्रतिपद्यते ॥ ७५
यथा च्छायातपौ नित्यं सुसंबद्धौ निरन्तरम् ।
तथा कर्म च कर्ता च संबद्धावात्मकर्मभिः ॥७६
एवं नाहं न वै मृत्युर्न सर्पो न तथा भवान् ।
न चेयं ब्राह्मणी वृद्धा शिशुरेवात्र कारणम् ॥७७
तस्मिंस्तथा ब्रुवाणे तु ब्राह्मणी गौतमी नृप ।
स्वकर्मप्रत्ययाँल्लोकान्मत्वाऽर्जुनकमब्रवीत् ॥ ७८
नैव कालो न भुजगो न मृत्युरिह कारणम् ।
स्वकर्मभिरयं बालः कालेन निधनं गतः ॥ ७९
मया च तत्कृतं कर्म येनायं मे मृतः सुतः ।
यातु कालस्तथा मृत्युर्मुञ्चार्जुनक पन्नगम् ॥८०

---

भावाभावावैश्वर्यानैश्वर्ये ॥ ५७ ॥ मे मया ॥ ६३ ॥ भो मृत्युपन्नगौ यदि युवां कालवशौ तर्हि मे मम तटस्थस्य परोपकर्तरि हर्षः अपकर्त्रोश्च युवयोरुपरि द्वेषो वा यथा स्यातां तथा ब्रूतम् । एतदहं वेदितुमिच्छामीत्यध्याहारपूर्वकं योज्यम् । एवं सर्वस्य परवशत्वे उपकर्त्रपकर्त्रोः स्तुतिनिन्दे न स्यातामिति भावः ॥ ६७ ॥ ईश्वराधीनो जनः सदसद्वा कुर्वाणो न स्तुत्यो न वा निन्द्य इति भावः ॥ ६८ ॥ दोषेण युक्ताविति शेषः । गन्तव्यौ ज्ञातव्यौ ॥ ६९ ॥ धर्मस्यार्थः फलं तत्र विषये ॥ ७० ॥ कर्मैव दायादः पुत्रवत्तारकं तद्वान् । कर्मसंबन्धः कर्मफलयोगः तदेव लक्षणं पुण्यपापवत्ताज्ञापकं यस्य तथा ॥ ७४ ॥ कर्मैव प्रत्ययः कारणं येषां तान् लोकान् स्वर्गनरकादीन् ॥ ७८ ॥ तत्कर्म पुत्रशोकप्रदम् ॥ ८० ॥ प्रथमोऽध्यायः ॥ १ ॥

भीष्म उव
ततौ यथागतं जग्मुर्मृत्युः कालोऽथ पन्नगः ।
अभूद्विशोकोऽर्जुनको विशोका चैव गौतमी ॥८१
एतच्छ्रुत्वा शमं गच्छ मा भूः शोकपरो नृप ।
स्वकर्मप्रत्ययाँल्लोकांस्त्रीन्विद्धि समितिंजय ॥ ८२
नैव त्वया कृतं कर्म नापि दुर्योधनेन वै ।
कालेनैतत्कृतं विद्धि निहता येन पार्थिवाः ॥८३
वैशंपायन उवाच ।
इत्येतद्वचनं श्रुत्वा बभूव विगतज्वरः ।
युधिष्ठिरो महातेजाः पप्रच्छेदं च धर्मवित् ॥८४

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि प्रथमोऽध्यायः ॥ १ ॥

---

## द्वितीयोऽध्यायः ॥ २ ॥

भीष्मेण युधिष्ठिरंप्रति गार्हस्थ्याश्रयणेनातिथिसत्कारस्य श्रेयःसाधनतायां दृष्टान्ततया सुदर्शनोपाख्यानकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
पितामह महाप्राज्ञ सर्वशास्त्रविशारद ।
श्रुतं मे महदाख्यानमिदं मतिमतांवर ॥ १
भूयस्तु श्रोतुमिच्छामि धर्मार्थसहितं नृप ।
कथ्यमानं त्वया किंचित्तन्मे व्याख्यातुमर्हसि ॥२
केन मृत्युर्गृहस्थेन धर्ममाश्रित्य निर्जितः ।
इत्येतद्धर्ममाचक्ष्व तत्त्वेनापि च पार्थिव ॥ ३
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
यथा मृत्युर्गृहस्थेन धर्ममाश्रित्य निर्जितः ॥ ४
मनोः प्रजापते राजन्निक्ष्वाकुरभवत्सुतः ।
तस्य पुत्रशतं जज्ञे नृपतेः सूर्यवर्चसः ॥ ५
दशमस्तस्य पुत्रस्तु दशाश्वो नाम भारत ।
माहिष्मत्यामभूद्राजा धर्मात्मा सत्यविक्रमः ॥६
दशाश्वस्य सुतस्त्वासीद्राजा परमधार्मिकः ।
सत्ये तपसि दाने च यस्य नित्यं रतं मनः ॥ ७
मदिराश्व इति ख्यातः पृथिव्यां पृथिवीपतिः ।
धनुर्वेदे च वेदे च निरतो योऽभवत्सदा ॥ ८
मदिराश्वस्य पुत्रस्तु द्युतिमान्नाम पार्थिवः ।
महाभागो महातेजा महासत्त्वो महाबलः ॥ ९
पुत्रो द्युतिमतस्त्वासीद्राजा परमधार्मिकः ।
सर्वलोकेषु विख्यातः सुवीरो नाम नामतः ।
धर्मात्मा कोशवांश्चापि देवराज इवापरः ॥ १०
सुवीरस्य तु पुत्रोऽभूत्सर्वसंग्रामदुर्जयः ।
दुर्जयो नाम विख्यातः सर्वशस्त्रभृतांवरः ॥ ११
दुर्जयस्येन्द्रवपुषः पुत्रोऽग्निसदृशद्युतिः ।
दुर्योधनो नाम महान्राजा राजर्षिसत्तमः ॥ १२
तस्येन्द्रसमवीर्यस्य संग्रामेष्वनिवर्तिनः ।
विषये वासवस्तस्य सम्यगेव प्रवर्षति ॥ १३
रत्नैर्धनैश्च पशुभिः सस्यैश्चापि पृथग्विधैः ।
नगरं विषयश्चास्य प्रतिपूर्णस्तदाऽभवत् ॥ १४
न तस्य विषये चाभूत्कृपणो नापि दुर्गतः ।
व्याधितो वा कृशो वाऽपि तस्मिन्नाभून्नरः क्वचित् ॥
सुदक्षिणो मधुरवागनसूयुर्जितेन्द्रियः ।
धर्मात्मा चानृशंसश्च विक्रान्तोऽथाविकत्थनः ॥१६
यज्वा च दान्तो मेधावी ब्रह्मण्यः सत्यसंगरः ।
न चावमन्ता दाता च वेदवेदाङ्गपारगः ॥ १७
तं नर्मदा देवनदी पुण्या शीतजला शिवा ।
चकमे पुरुषव्याघ्रं स्वेन भावेन भारत ॥ १८
तस्यां जज्ञे तदा नद्यां कन्या राजीवलोचना ।
नाम्ना सुदर्शना राजन्रूपेण च सुदर्शना ॥ १९
तादृग्रूपा न नारीषु भूतपूर्वा युधिष्ठिर ।
दुर्योधनसुता यादृगभवद्वरवर्णिनी ॥ २०
तामग्निश्चकमे साक्षाद्राजकन्यां सुदर्शनाम् ।
स्वरूपं दीप्तिमत्कृत्वा शरदर्कसमद्युति ॥ २१
सा त्वग्निशरणे राज्ञः शुश्रूषाकृतनिश्चया ।
नियुक्ता पितृसंदेशादारिराधयिषुः शिखिम् ॥२२

---

दुर्गतो दरिद्रः ॥ १५ ॥ चकमे कामयामास ॥ २१ ॥

तस्या मनोहरं रूपं दृष्ट्वा देवो हुताशनः ।
मन्मथेन समादिष्टः पर्वाणि यतते मिथः ॥ २३
भज मामनवद्याङ्गि कामात्कमललोचने ।
रम्भोरु मृगशावाक्षि पूर्णचन्द्रनिभानने ॥ २४
तवेदं पद्मपत्राक्षं मुखं दृष्ट्वा मनोहरम् ।
भ्रूलताललितं कान्तमनङ्गो दहते हि माम् ॥२५
ललाटं चन्द्ररेखाभं शिरोरुहविभूषितम् ।
दृष्ट्वा ते पत्रलेखान्तमनङ्गो बाधते भृशम् ॥ २६
बालातपेन तुलितं सस्वेदपुलकोद्गमम् ।
बिम्बाधरोष्ठवदनं विबुद्धमिव पङ्कजम् ।
अतीव चारुविभ्रान्तं मदमावहते मम ॥ २७
दन्तप्रकाशनियता वाणी तव सुरक्षिता ।
ताम्रपल्लवसंकाशा जिह्वेयं मे मनोहरा ॥ २८
समाः स्निग्धाः सुजाताश्च सहिताश्च द्विजास्तव ।
द्विजप्रिये प्रसीदस्व भज मां सुभगा ह्यसि ॥२९
मनोज्ञं मुक्तापाङ्गं मुखं तव मनोहरम् ।
स्तनौ ते संहतौ भीरु हाराभरणभूषितौ ॥ ३०
पक्वबिल्वप्रतीकाशौ कर्कशौ संगमक्षमौ ।
गम्भीरनाभिसुभगे भज मां वरवर्णिनि ॥ ३१
भीष्म उवाच ।
सैवमुक्ता विरहिते पावकेन महात्मना ।
ईषदाकम्पहृदया व्रीडिता वाक्यमब्रवीत् ॥ ३२
ननु नाम कुलीनानां कन्यकानां विशेषतः ।
माता पिता प्रभवतः प्रदाने बान्धवाश्च ये ॥३३
पाणिग्रहणमन्त्रैश्च हुते चैव विभावसौ ।
सतां मध्ये निविष्टायाः कन्यायाः शरणं पतिः ३४
साऽहं नात्मवशा देव पितरं वरयस्व मे ॥ ३५
अथ नातिचिराद्राजा कालाद्दुर्योधनस्तदा ।
यज्ञसंभारनिपुणान्मन्त्रीनाहूय चोक्तवान् ।
यज्ञं यक्ष्येऽहमिति वै संभारान्संभ्रियन्तु मे ॥३६
ततः समाहिते तस्य यज्ञे ब्राह्मणसत्तमैः ।
विप्ररूपी हुतवहो नृपं कन्यामयाचत ॥ ३७
न तु राजा प्रदानाय तस्य भावमकल्पयत् ।
दरिद्रश्चासवर्णश्च ममायमिति पार्थिवः ।
इति तस्मै न वै कन्यां दित्सां चक्रे नराधिपः ॥३८
अथ दीक्षामुपेतस्य यज्ञे तस्य महात्मनः ।
आहितो हवनार्थाय वेद्यामग्निः प्रणश्यत ॥ ३९
ततः स भीतो नृपतिर्भृशं प्रव्यथितेन्द्रियः ।
मन्त्रिणो ब्राह्मणांश्चैव पप्रच्छ किमिदं भवेत् ।
यज्ञे समिद्धो भगवान्नष्टो मे हव्यवाहनः ॥ ४०
संमन्त्रकुशलैस्तैस्तैर्ब्राह्मणैर्वेदपारगैः ।
ऋत्विग्भिर्मन्त्रकुशलैर्यज्यतां वा हुताशनः ॥ ४१
अथ ऋक्सामयजुषां ब्राह्मणैर्वेदपारगैः ।
वेदतत्वार्थकुशलैस्ततः सोमपुरस्करैः ॥ ४२
गुह्यैश्च नामभिः सर्वैराहूतो हव्यवाहनः ।
स्वरूपं दीप्तिमत्कृत्वा शरदर्कसमद्युतिः ॥ ४३
ततो महात्मा तानाह दहनो ब्राह्मणर्षभान् ।
वरयाम्यात्मनोऽर्थाय दुर्योधनसुतामिति ॥ ४४
ततस्ते कल्यमुत्थाय तस्मै राज्ञे न्यवेदयन् ।
ब्राह्मणा विस्मिताः सर्वे यदुक्तं चित्रभानुना ॥४५
ततः स राजा तच्छ्रुत्वा वचनं ब्रह्मवादिनाम् ।
अवाप्य परमं हर्षं तथेति प्राह बुद्धिमान् ॥ ४६
अयाचत च तं शुल्कं भगवन्तं विभावसुम् ।
नित्यं सान्निध्यमिह ते चित्रभानो भवेदिति ॥४७
तमाह भगवानग्निरेवमस्त्विति पार्थिवम् ।
ततः सान्निध्यमद्यापि माहिष्मत्यां विभावसोः ।
दृष्टं हि सहदेवेन दिशं विजयता च तत् ॥ ४८
ततस्तां समलंकृत्य कन्यामहतवाससम् ।
ददौ दुर्योधनो राजा पावकाय महात्मने ॥ ४९
प्रतिजग्राह चाग्निस्तु राजकन्यां सुदर्शनाम् ।
विधिना वेददृष्टेन वसोर्धारामिवाध्वरे ॥ ५०
तस्या रूपेण शीलेन कुलेन वपुषा श्रिया ।
अभवत्प्रीतिमानग्निर्गर्भं चास्यां समादधे ॥ ५१
तस्याः समभवत्पुत्रो नाम्नाऽग्नेयः सुदर्शनः ॥५२

असवर्णः अक्षत्रियः । दित्सां दातुमिच्छाम् ॥ ३८ ॥ प्रणश्यत नादृश्यत ॥ ३९ ॥ दर्शयामासेति शेषः ॥ ४३ ॥ कल्य प्रातः ॥ ४५ ॥ अहत नवं वासो यस्यास्ताम् ॥ ४९ ॥ वसोर्धारां संततां घृतधाराम् ॥ ५० ॥

सुदर्शनस्तु रूपेण पूर्णेन्दुसदृशोपमः ।
शिशुरेवाध्यगात्सर्वं परं ब्रह्म सनातनम् ॥ ५३
अथौघवान्नाम नृपो नृगस्यासीत्पितामहः ।
तस्याप्योघवती कन्या पुत्रश्चौघरथोऽभवत् ॥५४
तामोघवान्ददौ तस्मै स्वयमोघवतीं सुताम् ।
सुदर्शनाय विदुषे भार्यार्थे देवरूपिणीम् ॥ ५५
स गृहस्थाश्रमरतस्तया सह सुदर्शनः ।
कुरुक्षेत्रेऽवसद्राजन्नोघवत्या समन्वितः ॥ ५६
गृहस्थश्चावजेष्यामि मृत्युमित्येव स प्रभो ।
प्रतिज्ञामकरोद्धीमान्दीप्ततेजा विशांपते ॥ ५७
तामेवौघवतीं राजन्स पावकसुतोऽब्रवीत् ।
अतिथेः प्रतिकूलं ते न कर्तव्यं कथंचन ॥ ५८
येनयेन च तुष्येत नित्यमेव त्वयाऽतिथिः ।
अप्यात्मनः प्रदानेन न ते कार्या विचारणा ॥५९
एतद्व्रतं मम सदा हृदि संपरिवर्तते ।
गृहस्थानां च सुश्रोणि नातिथेर्विद्यते परम् ॥६०
प्रमाणं यदि वामोरु वचस्ते मम शोभने ।
इदं वचनमव्यग्रा हृदि त्वं धारयेः सदा ॥ ६१
निष्क्रान्ते मयि कल्याणि तथा संनिहितेऽनघे ।
नातिथिस्तेऽवमन्तव्यः प्रमाणं यद्यहं तव ॥ ६२
तमब्रवीदोघवती तथा मूर्ध्नि कृताञ्जलिः ।
न मे त्वद्वचनात्किंचिन्न कर्तव्यं कथंचन ॥ ६३
जिगीषमाणस्तु गृहे तदा मृत्युः सुदर्शनम् ।
पृष्ठतोऽन्वगमद्राजन्रन्ध्रान्वेषी तदा सदा ॥ ६४
इध्मार्थं तु गते तस्मिन्नग्निपुत्रे सुदर्शने ।
अतिथिर्ब्राह्मणः श्रीमांस्तामाहौघवतीं तदा ॥६५
आतिथ्यं कृतमिच्छामि त्वयाऽद्य वरवर्णिनि ।
प्रमाणं यदि धर्मस्ते गृहस्थाश्रमसंमतः ॥ ६६
इत्युक्ता तेन विप्रेण राजपुत्री यशस्विनी ।
विधिना प्रतिजग्राह वेदोक्तेन विशांपते ॥ ६७
आसनं चैव पाद्यं च तस्मै दत्त्वा द्विजातये ।
प्रोवाचौघवती विप्रं केनार्थः किं ददामि ते ॥६८
तामब्रवीत्ततो विप्रो राजपुत्रीं सुदर्शनाम् ।
त्वया ममार्थः कल्याणि निर्विशङ्कं तदाचर ॥६९
यदि प्रमाणं धर्मस्ते गृहस्थाश्रमसंमतः ।
प्रदानेनात्मनो राज्ञि कर्तुमर्हसि मे प्रियम् ॥७०
स तया छन्द्यमानोऽन्यैरीप्सितैर्नृपकन्यया ।
नान्यमात्मप्रदानात्स तस्या वव्रे परं द्विजः ॥७१
सा तु राजसुता स्मृत्वा भर्तुर्वचनमादितः ।
तथेति लज्जमाना सा तमुवाच द्विजर्षभम् ॥ ७२
ततो विहस्य विप्रर्षिः सा चैवोपविवेश ह ।
संस्मृत्य भर्तुर्वचनं गृहस्थाश्रमकाङ्क्षिणः ॥ ७३
अथेध्मान्समुपादाय स पावकिरुपागमत् ।
मृत्युना रौद्रभावेन नित्यं बन्धुरिवान्वितः ॥ ७४
ततस्त्वाश्रममागम्य स पावकसुतस्तदा
तां व्याजहारौघवतीं क्वासि यातेति चासकृत् ॥७५
तस्मै प्रतिवचः सा तु भर्त्रे न प्रददौ तदा ।
कराभ्यां तेन विप्रेण स्पृष्टा भर्तृव्रता सती ॥७६
उच्छिष्टाऽस्मीति मन्वाना लज्जिता भर्तुरेव च ।
तूष्णींभूताऽभवत्साध्वी विप्रकोपाच्च शङ्किता ॥७७
अथ तां किंन्विति पुनः प्रोवाच स सुदर्शनः ।
क्व सा साध्वी क्व सा याता गरीयः किमतो मम ७८
पतिव्रता सत्यशीला नित्यं चैवार्जवे रता ।
कथं न प्रत्युदेत्यद्य स्मयमाना यथापुरम् ॥ ७९
उटजस्थस्तु तं विप्रः प्रत्युवाच सुदर्शनम् ।
अतिथिं विद्धि संप्राप्तं ब्राह्मणं पावके च माम् ॥८०
अनया छन्द्यमानोऽहं भार्यया तव सत्तम ।
तैस्तैरतिथिसत्कारैर्ब्रह्मन्नेषा वृता मया ॥ ८१
आत्मप्रदानविधिना मामर्चति शुभानना ।
अनुरूपं यदत्रान्यत्तद्भवान्कर्तुमर्हति ॥ ८२
कूटमुद्गरहस्तस्तु मृत्युस्तं वै समन्वगात्
हीनप्रतिज्ञमत्रैवं वधिष्यामीति चिन्तयन् ॥ ८३

---

दृशाभ्यां दृग्भ्या सहितं सदृश वक्त्र तस्मिन् पूर्णेन्दोरुपमा सांदृश्य यस्य पूर्णेन्दुसदृशोपमः ॥ ५३ ॥ गृहस्थश्च गृहस्थ एव ॥ ५७ ॥ आत्मनः शरीरस्य ॥ ५९ ॥ प्रमाण हितज्ञापकम् ॥ ६२ ॥ किंचिन्न कर्तव्यमिति न अपितु कर्तव्यमेव ॥ ६३ ॥ पृष्ठतस्तस्याप्रत्यक्ष गृहेऽन्वगमत् ॥ ६४ ॥ ब्राह्मणस्तद्रूपी मृत्युः ॥६५॥ एतद्व्रतप्रदानम् ॥६९॥ राज्ञि राजकन्ये ॥७०॥ छन्द्यमानः प्रलोभ्यमानः ॥७१॥ विप्रकाराच्च शङ्कितेति थ. पाठः ॥७७॥ अनुरूप स्त्रीदूषणानुगुण दण्डम् ॥८२॥ कूटमुद्गरो लोहदण्डः । हीन-

सुदर्शनस्तु मनसा कर्मणा चक्षुषा गिरा ।
त्यक्तेर्ष्यस्त्यक्तमन्युश्च स्मयमानोऽब्रवीदिदम् ॥८४
सुरतं तेऽस्तु विप्राग्र्य प्रीतिर्हि परमा मम ।
गृहस्थस्य हि धर्मोऽग्र्यः संप्राप्तातिथिपूजनम् ॥८५
अतिथिः पूजितो यस्य गृहस्थस्य तु गच्छति ।
नान्यस्तस्मात्परो धर्म इति प्राहुर्मनीषिणः ॥८६
प्राणाश्च मम दाराश्च यच्चान्यद्विद्यते वसु ।
अतिथिभ्यो मया देयमिति मे व्रतमाहितम् ॥८७
निःसंदिग्धं यथा वाक्यमेतन्मे समुदाहृतम् ।
तेनाहं विप्र सत्येन स्वयमात्मानमालभे ॥ ८८
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ।
बुद्धिरात्मा मनः कालो दिशश्चैव गुणा दश ॥८९
नित्यमेव हि पश्यन्ति देहिनां देहसंश्रिताः ।
सुकृतं दुष्कृतं चापि कर्म कर्मवतांवर ॥ ९०
यथैषा नानृता वाणी मयाऽद्य समुदीरिता ।
तेन सत्येन मां देवाः पालयन्तु दहन्तु वा ॥९१
ततो नादः समभवद्दिक्षु सर्वासु भारत ।
असकृत्सत्यमित्येवं नैतन्मिथ्येति सर्वतः ॥ ९२
उटजात्तु ततस्तस्मान्निश्चक्राम स वै द्विजः ।
वपुषा द्यां च भूमिं च व्याप्य वायुरिवोद्यतः ॥९३
स्वरेण विप्रः शैक्षेण त्रींल्लोकाननुनादयन् ।
उवाच चैनं धर्मज्ञं पूर्वमामन्त्र्य नामतः ॥ ९४
धर्मोऽहमस्मि भद्रं ते जिज्ञासार्थं तवानघ ।
प्राप्तः सत्यं च ते ज्ञात्वा प्रीतिर्मे परमा त्वयि ॥९५
विजितश्च त्वया मृत्युर्योऽयं त्वामनुगच्छति ।
रन्ध्रान्वेषी तव सदा त्वया धृत्या वशीकृतः ॥९६
न चास्ति शक्तिस्त्रैलोक्ये कस्य चित्पुरुषोत्तम ।
पतिव्रतामिमां साध्वीं तवोद्वीक्षितुमप्युत ॥ ९७
रक्षिता त्वद्गुणैरेषा पातिव्रत्यगुणैस्तथा ।
अधृष्या यदियं ब्रूयात्तथा तन्नान्यथा भवेत् ॥९८
एषा हि तपसा स्वेन संयुक्ता ब्रह्मवादिनी ।
पावनार्थं च लोकस्य सरिच्छ्रेष्ठा भविष्यति ॥९९
अर्धेनौघवती नाम त्वामर्धेनानुयास्यति ।
शरीरेण महाभागा योगो ह्यस्या वशे स्थितः ।
अनया सह लोकांश्च गन्ताऽसि तपसार्जितान् ॥
यत्र नावृत्तिमभ्येति शाश्वतांस्ताननुत्तमान् ।
अनेन चैव देहेन लोकांस्त्वमभिपत्स्यसे ॥ १०१
निर्जितश्च त्वया मृत्युरैश्वर्यं च तवोत्तमम् ।
पञ्चभूतान्यतिक्रान्तः स्ववीर्याच्च मनोजवः ।
गृहस्थधर्मेणानेन कामक्रोधौ च ते जितौ ॥१०२
स्नेहो रागश्च तन्द्री च मोहो द्रोहश्च केवलः ।
तव शुश्रूषया राजन्राजपुत्र्या च निर्जिताः ॥१०३
भीष्म उवाच ।
शुक्लानां तु सहस्रेण वाजिनां रथमुत्तमम् ।
युक्तं प्रगृह्य भगवान्वासवोऽप्याजगाम तम् ॥१०४
मृत्युरात्मा च लोकाश्च जिता भूतानि पञ्च च ।
बुद्धिः कालो मदो मोहः कामक्रोधौ तथैव च १०५
तस्माद्गृहाश्रमस्थस्य नान्यद्दैवतमस्ति वै ।
ऋतेऽतिथिं नरव्याघ्र मनसैतद्विचारय ॥ १०६
अतिथिः पूजितो यद्धि ध्यायते मनसा शुभम् ।
न तत्क्रतुशतेनापि तुल्यमाहुर्मनीषिणः ॥ १०७
सुदत्तं सुकृतं वाऽपि कम्पयेदप्यनर्चितः ॥१०८
पात्रं त्वतिथिमासाद्य शीलाढ्यं यो न पूजयेत् ।
स दत्त्वा दुष्कृतं तस्मै पुण्यमादाय गच्छति ॥१०९
एतत्ते कथितं पुत्र मयाऽऽख्यानमनुत्तमम् ।
यथा हि विजितो मृत्युर्गृहस्थेन पुराऽभवत् ॥११०
धन्यं यशस्यमायुष्यमिदमाख्यानमुत्तमम् ।
बुभूषताऽभिमन्तव्यं सर्वदुश्चरितापहम् ॥ १११
इदं यः कथयेद्विद्वानहन्यहनि भारत ।
सुदर्शनस्य चरितं पुण्याँल्लोकानवाप्नुयात् ॥११२

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

प्रतिज्ञ त्यक्तातिथिव्रतम् ॥८३॥ गुणा इन्द्रियाणि तदभिमानिन्यो देवता इत्यर्थः ॥ ८९ ॥ शैक्षेण उदात्तादिधर्मवता ॥९४॥ अर्धेन ओघवती नाम नदी भविष्यतीति शेषः । योगो ह्येति योगसिद्धेयमनः शरीरद्वय करिष्यतीत्यर्थः ॥१००॥ राजन्निति ऋषिराजत्वात् राजजामातृत्वाद्वा सबोधनम् ॥ १०३ ॥ बुद्धिरित्यादावपि जितेत्याद्यनुषङ्गः ॥ १०५ ॥ बुभूषता भूतिमिच्छता ॥ १११ ॥ द्वितीयोऽध्यायः ॥ २ ॥

## तृतीयोऽध्यायः ॥ ३ ॥

भीष्मेण युधिष्ठिरंप्रति ब्राह्मण्यस्य क्षत्रियादिदौर्लभ्ये दृष्टान्ततया मतङ्गोपाख्यानकथनारम्भ. ॥ १ ॥ तत्रेन्द्रमतङ्ग-संवादानुवादारम्भ. ॥ २ ॥

उवाच ।
प्रज्ञाश्रुताभ्यां वृत्तेन शीलेन च यथा भवान् ।
गुणैश्च विविधैः सर्वैर्वयसा च समन्वितः ॥ १
भवान्विशिष्टो बुद्ध्या च प्रज्ञया तपसा तथा ।
'सर्वेषामेव जातानां सतामेतन्न संशयः ॥' २
तस्माद्भवन्तं पृच्छामि धर्मं धर्मभृतांवर ।
नान्यस्त्वदन्यो लोकेषु प्रष्टव्योस्ति नराधिप ॥ ३
क्षत्रियो यदि वा वैश्यः शूद्रो वा राजसत्तम ।
ब्राह्मण्यं प्राप्नुयाद्येन तन्मे व्याख्यातुमर्हसि ॥ ४
'ब्राह्मण्यं यदि दुष्प्रापं त्रिभिर्वर्णैर्नराधिप ।'
तपसा वा सुमहता कर्मणा वा श्रुतेन वा ।
ब्राह्मण्यमथ चेदिच्छेत्कथं शक्यं पितामह ॥ ५
भीष्म उवाच ।
ब्राह्मण्यमतिदुष्प्राप्यं वर्णैः क्षत्रादिभिस्त्रिभिः ।
परं हि सर्वभूतानां स्थानमेतद्युधिष्ठिर ॥ ६
बह्वीस्तु संसरन्योनीर्जायमानः पुनःपुनः ।
पर्याये तात कस्मिंश्चिद्ब्राह्मणो नाम जायते ॥ ७
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
मतङ्गस्य च संवादं गर्दभ्याश्च युधिष्ठिर ॥ ८
द्विजातेः कस्यचित्तात तुल्यवर्णः सुतस्त्वभूत् ।
मतंगो नाम नाम्नाऽऽसीत्सर्वैः समुदितो गुणैः ॥ ९
स यज्ञकारः कौन्तेय पित्रोत्सृष्टः परंतप ।
प्रायाद्गर्दभयुक्तेन रथेनाप्याशुगामिना ॥ १०
स बालं गर्दभं राजन्वहन्तं मातुरन्तिके ।
निरविध्यत्प्रतोदेन नासिकायां पुनःपुनः ॥ ११
तं दृष्ट्वा नसि निर्भिन्नं गर्दभी पुत्रगृद्धिनी ।
उवाच मा शुचः पुत्र चण्डालस्त्वाभिविध्यति ॥ १२
ब्राह्मणो दारुणो नास्ति मैत्रो ब्राह्मण उच्यते ।
आचार्यः सर्वभूतानां शास्ता किं प्रहरिष्यति ॥ १३
अयं तु पापप्रकृतिर्बाले न कुरुते दयाम् ।
स्वयोनिं मानयत्येष भावो भावं नियच्छति ॥ १४
एतच्छ्रुत्वा मतङ्गस्तु दारुणं रासभीवचः ।
अवतीर्य रथात्तूर्णं रासभीं प्रत्यभाषत ॥ १५
ब्रूहि रासभि कल्याणि माता मे येन दूषिता ।
केन मां वेत्सि चण्डालं ब्राह्मण्यं केन मेऽनशत् ।
तत्त्वेनैतन्महाप्राज्ञे ब्रूहि सर्वमशेषतः ॥ १६
गर्दभ्युवाच ।
ब्राह्मण्यां वृषलेन त्वं मत्तायां नापितेन ह ।
जातस्त्वमसि चण्डालो ब्राह्मण्यं तेन तेऽनशत् ॥ १७
एवमुक्तो मतङ्गस्तु प्रतिप्रायाद्गृहं पुनः ।
तमागतमभिप्रेक्ष्य पिता वाक्यमथाब्रवीत् ॥ १८
यस्त्वं यज्ञार्थसंसिद्धौ नियुक्तो गुरुकर्मणि ।
कस्मात्प्रतिनिवृत्तोसि कच्चिन्न कुशलं तव ॥ १९
मतङ्ग उवाच ।
अन्त्ययोनिरयोनिर्वा कथं स कुशली भवेत् ।
कुशलं तु कुतस्तस्य यस्येयं जननी पितः ॥
ब्राह्मण्यां वृषलाज्जातं पितर्वेदयते हि माम् ।
अमानुषी गर्दभीयं तस्मात्तप्स्ये तपो महत् ॥
एवमुक्त्वा स पितरं प्रतस्थे कृतनिश्चयः ।
ततो गत्वा महारण्यमतपत्सुमहत्तपः ॥

वृत्तमाचारः । शील·विनयः ॥ १ ॥ ब्राह्मण्य चेदिच्छेत्तर्हि केन प्राप्नुयात्तदिति अनुषज्य व्याख्येयम् ॥ ४ ॥ पर्याये आवृत्तौ जन्मनाम् ॥ ७ ॥ तुल्यवर्ण. अन्यवर्णजोऽपि जातकर्मादिसंस्कारयोगात्तुल्यवर्णत्व गतः । नाम प्रसिद्धम् ॥ ९ ॥ यज्ञकारः यज्ञ कारयन् आर्त्विज्य कुर्वन्नित्यर्थः । प्रायात् अग्निचयनार्थमिष्टका आनेतुमित्यर्थाद्गम्यते ॥ १० ॥ बालं अशिक्षितम् ॥ ११ ॥ बाले त्वयि । भावः जातिस्वभावः । भाव नियच्छति मार्गान्तरादपकर्षति । भाव भावोऽधिगच्छतीति थ. ध. पाठः ॥ १४ ॥ करुण रासभीवच इति ध. पाठः ॥ १५ ॥ संसिद्धौ संसिद्ध्यर्थम् ॥ १९ ॥ अन्त्ययोनिश्चण्डालजातिः । अयोनिस्तदन्यः कुत्सितयोनिः । तयोर्हीनकर्मतया कुशलित्व नास्तीत्यर्थः ॥ २० ॥

* एतदाद्यध्यायत्रय झ. पाठे २७–२८–२९ तमाध्यायतया वर्तन्ते ।

ततः स तापयामास विबुधांस्तपसाऽन्वितः ।
मतङ्गः सुसुखं प्रेप्सुः स्थानं सुचरितादपि ॥ २३
तं तथा तपसा युक्तमुवाच हरिवाहनः ।
मतङ्ग तप्यसे किं त्वं भोगानुत्सृज्य मानुषान् ॥ २४
वरं ददामि ते हन्त वृणीष्व त्वं यदिच्छसि ।
यच्चाप्यवाप्यं हृदि ते सर्वं तद्ब्रूहि मा चिरम् ॥ २५
मतङ्ग उवाच ।
ब्राह्मण्यं कामयानोऽहमिदमारब्धवांस्तपः ।
गच्छेयं तदवाप्येह वर एष वृतो मया ॥ २६
भीष्म उवाच ।
एतच्छ्रुत्वा तु वचनं तमुवाच पुरंदरः ।
मतङ्ग दुर्लभमिदं विप्रत्वं प्रार्थ्यते त्वया ॥ २७
ब्राह्मण्यं प्रार्थयानस्त्वमप्राप्यमकृतात्मभिः ।
विनशिष्यसि दुर्बुद्धे तदुपारम मा चिरम् ॥ २८
श्रेष्ठं यत्सर्वभूतेषु तपो यदतिवर्तते ।
तदग्र्यं प्रार्थयानस्त्वमचिराद्विनशिष्यसि ॥ २९
देवतासुरमर्त्येषु यत्पवित्रं परं स्मृतम् ।
चण्डालयोनौ जातेन न तत्प्राप्यं कथंचन ॥ ३०

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

## चतुर्थोऽध्यायः ॥ ४ ॥

मतङ्गेन ब्राह्मण्यप्राप्तये वर्षशतं तपश्चरणम् ॥ १ ॥ तंप्रतीन्द्रेण प्राणिनां कथंचिन्मानुषत्वलाभेपि नानानीचयोनिषु परिभ्रमणपूर्वकं क्रमेण त्रैवर्णिकत्वमात्रप्राप्तिकथनेन ब्राह्मण्यस्य दुर्लभत्वोक्तिः ॥ २ ॥

भीष्म उवाच ।
एवमुक्तो मतङ्गस्तु संशितात्मा यतव्रतः ।
अतिष्ठदेकपादेन वर्षाणां शतमच्युतः ॥ १
तमुवाच ततः शक्रः पुनरेव महायशाः ।
ब्राह्मण्यं दुर्लभं तात प्रार्थयानो न लप्स्यसे ॥ २
मतङ्ग परमं स्थानं प्रार्थयन्विनशिष्यसि ।
मा कृथाः साहसं पुत्र नैष धर्मपथस्तव ॥ ३
'विमार्गतो मार्गमाणः सर्वथा नभविष्यसि ।'
न हि शक्यं त्वया प्राप्तुं ब्राह्मण्यमिह दुर्मते ।
अप्राप्यं प्रार्थयानो हि नचिराद्विनशिष्यसि ॥ ४
मतङ्ग परमं स्थानं वार्यमाणोऽसकृन्मया ।
चिकीर्षस्येव तपसा सर्वथा नभविष्यसि ॥ ५
तिर्यग्योनिगतः सर्वो मानुष्यं यदि गच्छति ।
स जायते पुल्कसो वा चण्डालो वाऽप्यसंशयः ॥ ६
पुल्कसः पापयोनिर्वा यः कश्चिदिह लक्ष्यते ।
स तस्यामेव सुचिरं मतङ्ग परिवर्तते ॥ ७
ततो दशशते काले लभते शूद्रतामपि ।
शूद्रयोनावपि ततो बहुशः परिवर्तते ॥ ८
ततस्त्रिंशद्गुणे काले लभते वैश्यतामपि ।
वैश्यतायां चिरं कालं तत्रैव परिवर्तते ।
ततः षष्टिगुणे काले राजन्यो नाम जायते ॥ ९
ततः षष्टिगुणे काले लभते ब्रह्मबन्धुताम् ।
ब्रह्मबन्धुश्चिरं कालं ततस्तु परिवर्तते ॥ १०
ततस्तु द्विशते काले लभते काण्डपृष्ठताम् ।
काण्डपृष्ठश्चिरं कालं तत्रैव परिवर्तते ॥ ११
ततस्तु त्रिशते काले लभते जपतामपि ।
तं च प्राप्य चिरं कालं तत्रैव परिवर्तते ॥ १२
ततश्चतुःशते काले श्रोत्रियो नाम जायते ।
श्रोत्रियत्वे चिरं कालं तत्रैव परिवर्तते ॥ १३
तदेवं शोकहर्षौ तु कामद्वेषौ च पुत्रक ।
अतिमानातिवादौ च प्रविशेते द्विजाधमम् ॥ १४
तांश्चेज्जयति शत्रून्स तदा प्राप्नोति सद्गतिम् ।
अथ ते वै जयन्त्येनं तालं पक्वमिवापतेत् ॥ १५

सुचरितात्तपसश्च हेतोः स्थान ब्राह्मण्य सुखेन प्रेप्सुर्विबुधांस्तापयामासेति संबन्धः ॥ २३ ॥ हरिवाहन इन्द्रः ॥ २४ ॥ तृतीयोऽध्यायः ॥ ३ ॥

काण्डपृष्ठता शस्त्रजीवित्वम् ॥ ११ ॥ जपता गायत्रीमात्रसेविनां कुले जन्मेति शेषः ॥ १२ ॥ श्रोत्रियः अधीतवेदः ॥ १३ ॥ तत् तदा श्रोत्रियत्वलाभेऽपि ॥ १४ ॥ ते शोका-

मतङ्ग संप्रधार्यैवं यदहं त्वामचूचुदम् । वृणीष्व काममन्यं त्वं ब्राह्मण्यं हि सुदुर्लभम् ॥ १६

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥

## पञ्चमोऽध्यायः ॥ ५ ॥

इन्द्रेण पुनर्ब्राह्मण्यप्राप्तये तपस्यते मतङ्गाय ब्राह्मण्यस्य दुष्प्रापत्वकथनपूर्वकमितराभीष्टवरदानम् ॥ १ ॥

भीष्म उवाच ।
एवमुक्तो मतङ्गस्तु संशितात्मा यतव्रतः ।
सहस्रमेकपादेन ततो ध्याने व्यतिष्ठत ॥ १
तं सहस्रावरे काले शक्रो द्रष्टुमुपागमत् ।
तदेव च पुनर्वाक्यमुवाच बलवृत्रहा ॥ २
मतङ्ग उवाच ।
इदं वर्षसहस्रं वै ब्रह्मचारी समाहितः ।
अतिष्ठमेकपादेन ब्राह्मण्यं नाप्नुयां कथम् ॥ ३
शक्र उवाच ।
चण्डालयोनौ जातेन नावाप्यं वै कथंचन ।
अन्यं कामं वृणीष्व त्वं मा वृथा तेऽस्त्वयं श्रमः ॥ ४
एवमुक्तो मतङ्गस्तु भृशं शोकपरायणः ।
अध्यतिष्ठद्गयां गत्वा सोऽङ्गुष्ठेन शतं समाः ॥ ५
सुदुर्वहं वहन्योगं कृशो धमनिसंततः ।
त्वगस्थिभूतो धर्मात्मा स ततापेति नः श्रुतम् ॥ ६
तं तपन्तमभिद्रुत्य पाणिं जग्राह वासवः ।
वराणामीश्वरो दाता सर्वभूतहिते रतः ॥ ७
शक्र उवाच ।
मतङ्ग ब्राह्मणत्वं ते विरुद्धमिह दृश्यते ।
ब्राह्मण्यं दुर्लभतरं संवृतं परिपन्थिभिः ॥ ८
पूजयन्सुखमाप्नोति दुःखमाप्नोत्यपूजयन् ।
ब्राह्मणे सर्वभूतानां योगक्षेमः समाहितः ॥ ९
ब्राह्मणेभ्योऽनुतृप्यन्ते पितरो देवतास्तथा ।
ब्राह्मणः सर्वभूतानां मतङ्ग पर उच्यते ॥ १०
ब्राह्मणः कुरुते तद्धि यथा यद्यच्च वाञ्छति ॥ ११
बह्वीस्तु संसरन्योनीर्जायमानः पुनःपुनः ।
पर्याये तात कस्मिंश्चिद्ब्राह्मण्यमिह विन्दति ॥ १२
तदुत्सृज्येह दुष्प्रापं ब्राह्मण्यमकृतात्मभिः ।
अन्यं वरं वृणीष्व त्वं दुर्लभोऽयं हि ते वरः ॥ १३
किं मां तुदसि दुःखार्तं मृतं मारयसे च माम् ।
त्वां तु शोचामि यो लब्ध्वा ब्राह्मण्यं न बुभूषसे ॥ १४
ब्राह्मण्यं यदि दुष्प्रापं त्रिभिर्वर्णैर्दुरासदम् ।
सुदुर्लभं सदावाप्य नानुतिष्ठन्ति मानवाः ॥ १५
यः पापेभ्यः पापतमस्तेषामधम एव सः ।
ब्राह्मण्यं योऽवजानीते धनं लब्ध्वेव दुर्लभम् ॥ १६
दुष्प्रापं खलु विप्रत्वं प्राप्तं दुरनुपालनम् ।
दुरवापमवाप्यैतन्नानुतिष्ठन्ति मानवाः ॥ १७
एकारामो ह्यहं शक्र निर्द्वंद्वो निष्परिग्रहः ।
अहिंसादममास्थाय कथं नार्हामि विप्रताम् ॥ १८
दैवं तु कथमेतद्वै यदहं मातृदोषतः ।
एतामवस्थां संप्राप्तो धर्मज्ञः सन्पुरंदर ॥ १९
नूनं दैवं न शक्यं हि पौरुषेणातिवर्तितुम् ।
यदर्थं यत्नवानेव न लभे विप्रतां विभो ॥ २०
एवंगते तु धर्मज्ञ दातुमर्हसि मे वरम् ।
यदि तेऽहमनुग्राह्यः किंचिद्वा सुकृतं मम ॥ २१
वैशंपायन उवाच ।
वृणीष्वेति तदा प्राह ततस्तं बलवृत्रहा ।
चोदितस्तु महेन्द्रेण मतङ्गः प्राब्रवीदिदम् ॥ २२
यथा कामविहारी स्यां कामरूपी विहंगमः ।

दयः । एन श्रोत्रियम् ॥ १५ ॥ चतुर्थोऽध्यायः ॥ ४ ॥

सहस्रं वत्सरान् ॥ १ ॥ अभिद्रुत्य गत्वा ॥ ७ ॥ परिपन्थिभिः कामाद्यैश्चोरैः संवृतमतो दुःसरक्ष्यमपीत्यर्थः ॥ ८ ॥ अपूजयन् ब्राह्मणमिति शेषः ॥ ९ ॥ ब्राह्मणेभ्यस्तद्द्वारा देवादयस्तृप्यन्तीत्यर्थः ॥ १० ॥ यद्यद्वाञ्छति तत्तत्कुरुते ॥ ११ ॥

नानुतिष्ठन्ति तदुचितान् शमदमादीन्न सेवन्तेऽतः प्राप्तमपि दुःसंरक्ष्यमिति भावः ॥ १५ ॥ अवजानीते अवज्ञा करोति । न रक्षतीति यावत् ॥ १६ ॥ दैवं प्राक्कर्म । यत् यतः एतां अब्राह्मणत्वरूपाम् ॥ १९ ॥ पञ्चमोऽध्यायः ॥ ५ ॥

ब्रह्मक्षत्राविरोधेन पूजां च प्राप्नुयामहम् ॥ २३
यथा मम्नाक्षयी कीर्तिर्भवेच्चापि पुरंदर ।
कर्तुमर्हसि तद्देव शिरसा त्वां प्रसादये ॥ २४
शक्र उवाच ।
'मतङ्ग गम्यतां शीघ्रमेवमेतद्भविष्यति ।
स्त्रियः सर्वास्त्वया लोके यक्ष्यन्ते भूतिकर्मणि॥२५
छन्दोदेव इति ख्यातः स्त्रीणां पूज्यो भविष्यसि ।
कीर्तिश्च तेऽतुला वत्स त्रिषु लोकेषु यास्यति ॥२६
एवं तस्मै वरं दत्त्वा वासवोऽन्तरधीयत ।
प्राणांस्त्यक्त्वा मतङ्गोपि प्राप तत्स्थानमुत्तमम् २७
एवमेव परं स्थानं मर्त्यानां भरतर्षभ ।
ब्राह्मण्यं नाम दुष्प्रापमिन्द्रेणोक्तं महात्मना ॥२८

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥

## षष्ठोऽध्यायः ॥ ६ ॥

युधिष्ठिरेण भीष्मंप्रति सविस्तरं विश्वामित्रचरित्रानुवादपूर्वकं तस्य ब्राह्मण्यप्राप्तिहेतुप्रश्नः ॥ १ ॥

युधिष्ठिर उवाच ।
ब्राह्मण्यं यदि दुष्प्राप्यं त्रिभिर्वर्णैर्नराधिप ।
कथं प्राप्तं महाराज क्षत्रियेण महात्मना ॥ १
विश्वामित्रेण धर्मात्मन्ब्राह्मणत्वं नरर्षभ ।
श्रोतुमिच्छामि तत्त्वेन तन्मे ब्रूहि पितामह ॥ २
तेन ह्यमितवीर्येण वसिष्ठस्य महात्मनः ।
हतं पुत्रशतं सद्यस्तपसाऽपि पितामह ॥ ३
यातुधानाश्च बहवो राक्षसास्तिग्मतेजसः ।
मन्युनाऽऽविष्टदेहेन सृष्टाः कालान्तकोपमाः ॥४
महान्कुशिकवंशश्च ब्रह्मर्षिशतसंकुलः ।
स्थापितो नरलोकेऽस्मिन्विद्वद्ब्राह्मणसंकुलः ॥ ५
ऋचीकस्यात्मजश्चैव शुनःशेपो महातपाः ।
विमोक्षितो महासत्रात्पशुतामप्युपागतः ॥ ६
हरिश्चन्द्रक्रतौ देवांस्तोषयित्वाऽऽत्मतेजसा ।
पुत्रतामनुसंप्राप्तो विश्वामित्रस्य धीमतः ॥ ७
नाभिवादयते ज्येष्ठं देवरातं नराधिप ।
पुत्राः पञ्चशतं चापि शप्ताः श्वपचतां गताः ॥८
त्रिशङ्कुर्बन्धुभिर्मुक्त ऐक्ष्वाकः प्रीतिपूर्वकम् ।
अवाक्शिरा दिवं नीतो दक्षिणामाश्रितो दिशम्॥९
विश्वामित्रस्य भगिनी नदी देवर्षिसेविता ।
कौशिकीति कृता पुण्या ब्रह्मर्षिसुरसेविता ॥१०
तपोविघ्नकरी चैव पञ्चचूडा सुसंमता ।
रम्भा नामाप्सराः शापाद्यस्य शैलत्वमागता॥११
तथैवास्य भयाद्बद्ध्वा वसिष्ठः सलिले पुरा ।
आत्मानं मज्जयञ्श्रीमान्विपाशः पुनरुत्थितः॥१२
तदाप्रभृति पुण्या हि विपाशाऽभून्महानदी ।
विख्याता कर्मणा तेन वसिष्ठस्य महात्मनः॥१३
वश्यश्च भगवान्येन देवसेनाग्रगः प्रभुः ।
स्तुतः प्रीतमनाश्चासीच्छापाच्चैनममुञ्चत ॥ १४
ध्रुवस्यौत्तानपादेस्य ब्रह्मर्षीणां तथैव च ।
मध्ये ज्वलति यो नित्यमुदीचीमाश्रितो दिशम्१५
तस्यैतानि च कर्माणि तथाऽन्यानि च कौरव ।
क्षत्रियस्येत्यतो जातमिदं कौहतूलं मम ॥ १६
किमेतदिति तत्त्वेन प्रब्रूहि भरतर्षभ ।
देहान्तरमनासाद्य कथं स ब्राह्मणोऽभवत् ॥ १७

---

शुनःशेपो देवांस्तोषयित्वा तैर्मोक्षितः सन्पुत्रता विश्वामित्रस्यानुसंप्राप्त इत्युत्तरेण संबन्धः ॥ ७ ॥ नाभिवादयते न नमस्कुर्वन्ति । अनुस्वारलोप आर्षः । देवरातं देवैर्विश्वामित्राय दत्तं तेन च ज्येष्ठं कृतं सन्तम् । शप्ता येनेति शेषः ॥ ८ ॥ बन्धुभिर्मुक्तः=। वसिष्ठशापेन चण्डालतां गतत्वात् । दिवं येन नीतः ॥ ९ ॥ पञ्च चूडाः वलयभेदा यस्याः सा ॥ ११ ॥

त्रिशङ्कुं याजयन्विश्वामित्रो वसिष्ठपुत्रैः शप्तः श्वपचस्य याजकस्त्वं श्वपचो भविष्यसीति । तं शापमृतं कर्तुं विश्वामित्रः कस्याचिदापदि श्वजाघनीं चौर्येणार्जयित्वा पक्तुमारेभे । तामिन्द्रः श्येनरूपेण हृतवान् । तावतैवायं शापान्मुक्तो ववर्षेन्द्र इति । देवसेनानामग्रगः श्रेष्ठ इन्द्रः ॥ १४ ॥ ज्वलति तारारूपेण ॥ १५ ॥

एतत्तत्त्वेन मे तात सर्वमाख्यातुमर्हसि ।
मतङ्गस्य यथातत्त्वं तथैवैतद्वदस्व मे ॥ १८
स्थाने मतङ्गो ब्राह्मण्यं नालभद्भरतर्षभ ।
चण्डालयोनौ जातो हि कथं ब्राह्मण्यमाप्तवान् ॥ १९

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि षष्ठोऽध्यायः ॥ ६ ॥

## सप्तमोऽध्यायः ॥ ७ ॥

भीष्मेण युधिष्ठिरंप्रति विश्वामित्रस्योत्पत्तिप्रकारकथनेनैव ब्राह्मण्यप्राप्तिप्रकारकथनम् ॥ १ ॥

भीष्म उवाच ।
श्रूयतां पार्थ तत्त्वेन विश्वामित्रो यथा पुरा
ब्राह्मणत्वं गतस्तात ब्रह्मर्षित्वं तथैव च ॥ १
भरतस्यान्ववाये वै मिथिलो नाम पार्थिवः ।
बभूव भरतश्रेष्ठ यज्वा धर्मभृतांवरः ॥ २
तस्य पुत्रो महानासीज्जह्नुर्नाम नरेश्वरः ।
दुहितृत्वमनुप्राप्ता गङ्गा यस्य महात्मनः ॥ ३
तस्यात्मजस्तुल्यगुणः सिन्धुद्वीपो महायशाः ।
सिन्धुद्वीपाच्च राजर्षिर्बलाकाश्वो महाबलः ॥ ४
वल्लभस्तस्य तनयः साक्षाद्धर्म इवापरः ।
कुशिकस्तस्य तनयः सहस्राक्षसमद्युतिः ॥ ५
कुशिकस्यात्मजः श्रीमान्गाधिर्नाम जनेश्वरः ।
अपुत्रः प्रसवेनार्थी वनवासमुपावसत् ॥ ६
कन्या जज्ञे सुतात्तस्य वने निवसतः सतः ।
नाम्ना सत्यवती नाम रूपेणाप्रतिमा भुवि ॥ ७
तां वव्रे भार्गवः श्रीमांश्च्यवनस्यात्मसंभवः ।
ऋचीक इति विख्यातो विपुले तपसि स्थितः ॥ ८
स तां न प्रददौ तस्मै ऋचीकाय महात्मने ।
दरिद्र इति मत्वा वै गाधिः शत्रुनिबर्हणः ॥ ९
प्रत्याख्याय पुनर्यान्तमब्रवीद्राजसत्तमः ।
शुल्कं प्रदीयतां मह्यं ततो वत्स्यसि मे सुताम् ॥ १०
ऋचीक उवाच ।
किं प्रयच्छामि राजेन्द्र तुभ्यं शुल्कमहं नृप ।
दुहितुर्ब्रूह्यसंसक्तो माऽभूत्तत्र विचारणा ॥ ११
गाधिरुवाच ।
चन्द्ररश्मिप्रकाशानां हयानां वातरंहसाम् ।
एकतः श्यामकर्णानां सहस्रं देहि भार्गव ॥ १२
भीष्म उवाच ।
ततः स भृगुशार्दूलश्च्यवनस्यात्मजः प्रभुः ।
अब्रवीद्वरुणं देवमादित्यं पतिमम्भसाम् ॥ १३
एकतः श्यामकर्णानां हयानां चन्द्रवर्चसाम् ।
सहस्रं वातवेगानां भिक्षे त्वां देवसत्तम ॥ १४
तथेति वरुणो देव आदित्यो भृगुसत्तमम् ।
उवाच यत्र ते च्छन्दस्तत्रोत्थास्यन्ति वाजिनः ॥ १५
ध्यातमात्रे ऋचीकेन हयानां चन्द्रवर्चसाम् ।
गङ्गाजलात्समुत्तस्थौ सहस्रं विपुलौजसाम् ॥ १६
अदूरे कान्यकुब्जस्य गङ्गायास्तीरमुत्तमम् ।
अश्वतीर्थं तदद्यापि मानवाः परिचक्षते ॥ १७
ततो वै गाधये तात सहस्रं वाजिनां शुभम् ।
ऋचीकः प्रददौ प्रीतः शुल्कार्थं तपतां वरः ॥ १८
ततः स विस्मितो राजा गाधिः शापभयेन च ।
ददौ तां समलंकृत्य कन्यां भृगुसुताय वै ॥ १९
जग्राह विधिवत्पाणिं तस्या ब्रह्मर्षिसत्तमः ।
सा च तं पतिमासाद्य परं हर्षमवाप ह ॥ २०
स तुतोष च ब्रह्मर्षिस्तस्या वृत्तेन भारत ।
छन्दयामास चैवैनां वरेण वरवर्णिनीम् ॥ २१

स्थाने युक्तम् । कथ ब्राह्मण्यं प्राप्तवान्विश्वामित्र इति शेषः ॥ १९ ॥ षष्ठोऽध्यायः ॥ ६ ॥

ब्राह्मणेष्वपि ऋषित्व मन्त्रद्रष्टृत्वं गोत्रप्रवर्तकत्वं वा ॥ १ ॥ भरतस्यान्वये चैवाजमीढ इति झ. पाठः ॥ २ ॥ पिप्पलस्तस्य तनय इति थ. पाठः । पल्लवस्तस्येति ट. पाठः ॥ ५ ॥ प्रसवेन सोमाभिषवनिमित्तेन । अर्थी पुत्रार्थी ॥ ६ ॥ सुतात् सोमाभिषवोपलक्षितायज्ञात् ॥ ७ ॥ भार्गवो भृगोर्गोत्रापत्यम् ॥ ८ ॥ वत्स्यसि उद्वाहेन प्राप्स्यसि ॥ १० ॥ असंसक्तो निःसंशयः ॥ ११ ॥ आदित्यमदितेः पुत्रम् ॥ १३ ॥ छन्द इच्छा ॥ १५ ॥ वरेण पुत्रं ते दास्यामीत्यनुग्रहेण ॥ २१ ॥

मात्र तन्मन्त्रमाचख्या सा कन्या राजसत्तम ।
अथ तामब्रवीन्माता सुतां किंचिदवाङ्मुखीम्॥२२
ममापि पुत्रि भर्ता ते प्रसादं कर्तुमर्हति ।
अपत्यस्य प्रदानेन समर्थश्च महातपाः ॥ २३
ततः सा त्वरितं गत्वा तन्मर्वं प्रत्यवेदयत् ।
मातुश्चिकीर्षितं राजन्नृचीकस्तामथाब्रवीत् ॥२४
गुणवन्तं च पुत्रं वै त्वं च साऽथ जनिष्यथ ।
जनन्यास्तव कल्याणि मा भूद्वै प्रणयोऽन्यथा॥२५
तव चैव गुणश्लाघी पुत्र उत्पत्स्यते महान् ।
अस्मद्वंशकरः श्रीमांस्तव भ्राता च वंशकृत् ॥२६
ऋतुस्नाता च साऽश्वत्थं त्वं च वृक्षमुदुम्बरम् ।
परिष्वजेतं कल्याणि तत इष्टमवाप्स्यथः ॥ २७
चरुद्वयमिदं चैव मन्त्रपूतं शुचिस्मिते ।
त्वं च सा चोपभुञ्जीतं ततः पुत्रावधाप्स्यथः ॥२८
ततः सत्यवती हृष्टा मातरं प्रत्यभाषत ।
यदृचीकेन कथितं तच्चाचख्यौ चरुद्वयम् ॥ २९
तामुवाच ततो माता सुतां सत्यवतीं तदा ।
पुत्रि पूर्वोपपन्नायाः कुरुष्व वचनं मम ॥ ३०
भर्त्रा य एष दत्तस्ते चरुर्मन्त्रपुरस्कृतः ।
एतं प्रयच्छ मह्यं त्वं मदीयं त्वं गृहाण च ॥३१
व्यत्यासं वृक्षयोश्चापि करवाव शुचिस्मिते ।
यदि प्रमाणं वचनं मम मातुरनिन्दिते ॥ ३२
स्वमपत्यं विशिष्टं हि सर्व इच्छत्यनाविलम् ।
व्यक्तं भगवता चात्र कृतमेवं भविष्यति ॥३३
ततो मे त्वच्चरौ भावः पादपे च सुमध्यमे ।
कथं विशिष्टो भ्राता मे भवेदित्येव चिन्तय ॥३४
तथाच कृतवत्यौ ते माता सत्यवती च सा ।
अथ गर्भावनुप्राप्ते उभे ते वै युधिष्ठिर ॥ ३५
दृष्ट्वा गर्भमनुप्राप्तां भार्यां स च महानृषिः ।
उवाच तां सत्यवतीं दुर्मना भृगुसत्तमः ॥ ३६
व्यत्यासेनोपयुक्तस्ते चरुर्व्यक्तं भविष्यति ।
व्यत्यासः पादपे चापि सुव्यक्तं ते कृतः शुभे ॥३७
मया हि विश्वं यद्ब्रह्म त्वच्चरौ सन्निवेशितम् ।
क्षत्रवीर्यं च सकलं चरौ तस्या निवेशितम् ॥३८
त्रैलोक्यविख्यातगुणं त्वं विप्रं जनयिष्यसि ।
सा च क्षत्रं विशिष्टं वै तत एतत्कृतं मया ॥ ३९
व्यत्यासस्तु कृतो यस्मात्त्वया मात्रा च ते शुभे ।
तस्मात्सा ब्राह्मणं श्रेष्ठं माता ते जनयिष्यति ॥४०
क्षत्रियं तूग्रकर्माणं त्वं भद्रे जनयिष्यसि ।
न हि ते तत्कृतं साधु मातृस्नेहेन भामिनि ॥४१
सा श्रुत्वा शोकसंतप्ता पपात वरवर्णिनी ।
भूमौ सत्यवती राजंश्छिन्नेव रुचिरा लता ॥ ४२
प्रतिलभ्य च सा संज्ञां शिरसा प्रणिपत्य च ।
उवाच भार्या भर्तारं गाधेयी भार्गवर्षभम् ॥ ४३
प्रसादयन्त्यां भार्यायां मयि ब्रह्मविदांवर ।
प्रसादं कुरु विप्रर्षे न मे स्यात्क्षत्रियः सुतः ॥४४
कामं ममोग्रकर्मा वै पौत्रो भवितुमर्हति ।
न तु मे स्यात्सुतो ब्रह्मन्नेष मे दीयतां वरः ॥४५
एवमस्त्विति होवाच स्वां भार्यां सुमहातपाः ।
ततः सा जनयामास जमदग्निं सुतं शुभम् ॥४६
विश्वामित्रं चाजनयद्गाधिभार्या यशस्विनी ।
ऋषेः प्रसादाद्राजेन्द्र ब्रह्मर्षिं ब्रह्मवादिनम् ॥ ४७
ततो ब्राह्मणतां यातो विश्वामित्रो महातपाः ।
क्षत्रियः सोऽप्यथ तथा ब्रह्मवंशस्य कारकः ॥४८
तस्य पुत्रा महात्मानो ब्रह्मवंशविवर्धनाः ।
तपस्विनो ब्रह्मविदो गोत्रकर्तार एव च ॥ ४९
मधुच्छन्दश्च भगवान्देवरातश्च वीर्यवान् ।
अक्षीणश्च शकुन्तश्च बभ्रुः कालपथस्तथा ॥ ५०
याज्ञवल्क्यश्च विख्यातस्तथा स्थूणो महाव्रतः ।
उलूको यमदूतश्च तथर्षिः सैन्धवायनः ॥ ५१
पर्णजङ्घश्च भगवान्गालवश्च महानृषिः ।
ऋषिर्वज्रस्तथा ख्यातः सालङ्कायन एव च ॥५२
लीलाढ्यो नारदश्चैव तथा कूर्चामुखः स्मृतः ।
वादुलिर्मुसलश्चैव वक्षोग्रीवस्तथैव च ॥ ५३

---

पूर्वोपपन्नाया भर्तुः संबन्धात्पूर्वमुपपन्नया गुरुत्वेन प्राप्तायास्तव भर्त्रपेक्षयाहं गरीयसीत्यर्थः । पुत्रि पूर्वप्रपन्नाया इति ट. ध. पाठः ॥ ३० ॥ क्षत्रियः क्षत्रियवदुग्रकर्मा ॥ ४४ ॥ ऊर्ध्वलिर्मुसलश्चेति ट. ध. पाठः ॥ ५३ ॥ सप्तमोऽध्यायः ॥ ७ ॥

आङ्गिको नैकदृक्चैव शिलायूपः सितः शुचिः ।
चक्रको मारुतन्तव्यो वातघ्नोऽथाश्वलायनः ॥ ५४
श्यामायनोऽथ गार्ग्यश्च जाबालिः सुश्रुतस्तथा ।
कारीषिरथ संश्रुत्यः परपौरवतन्तवः ॥ ५५
महानृषिश्च कपिलस्तथर्षिस्ताडकायनः
तथैव चोपगहनस्तथर्षिश्चासुरायणः ॥ ५६
मार्दमर्षिर्हिरण्याक्षो जङ्गारिर्बाभ्रवायणिः ।
भूतिर्विभूतिः सूतश्च सुरकृत्तु तथैव च ॥ ५७
अरालिर्नाचिकश्चैव चाम्पेयोज्जयनौ तथा
नवतन्तुर्बकनखः सेयनो यतिरेव च ॥ ५८
अम्भोरुहश्चारुमत्स्यः शिरीषी चाथ गार्दभिः ।
ऊर्जयोनिरुदापेक्षी नारदी च महानृषिः ।
विश्वामित्रात्मजाः सर्वे मुनयो ब्रह्मवादिनः ॥ ५९
तथैव क्षत्रियो राजन्विश्वामित्रो महातपाः ।
ऋचीकेनाहितं ब्रह्म परमेतद्युधिष्ठिर ॥ ६०
एतत्ते सर्वमाख्यातं तत्त्वेन भरतर्षभ ।
विश्वामित्रस्य वै जन्म सोमसूर्याग्नितेजसः ॥ ६१
यत्रयत्र च संदेहो भूयस्ते राजसत्तम ।
तत्रतत्र च मां ब्रूहि च्छेत्ताऽस्मि तव संशयान् ॥ ६२

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि सप्तमोऽध्यायः ॥ ७ ॥

## अष्टमोऽध्यायः ॥ ८ ॥

भीष्मेण युधिष्ठिरंप्रति वीतहव्यस्य ब्राह्मण्यप्राप्तिप्रकारकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
श्रुतं मे महदाख्यानमेतत्कुरुकुलोद्वह ।
सुदुष्प्रापं यद्ब्रवीषि ब्राह्मण्यं वदतांवर ॥ १
विश्वामित्रो महाराज राजा ब्राह्मणतां गतः ।
कथितं भवता सर्वं विस्तरेण पितामह ॥ २
तच्च राजन्मया सर्वं श्रुतं बुद्धिमतांवर ।
आगमो हि परोऽस्माकं त्वत्तः कौरवनन्दन ॥ ३
वीतहव्यश्च नृपतिः श्रुतो मे विप्रतां गतः ।
तदेव तावद्गाङ्गेय श्रोतुमिच्छाम्यहं विभो ॥ ४
स केन कर्मणा प्राप्तो ब्राह्मण्यं राजसत्तमः ।
वरेण तपसा वाऽपि तन्मे व्याख्यातुमर्हसि ॥ ५
भीष्म उवाच ।
शृणु राजन्यथा राजा वीतहव्यो महायशाः ।
राजर्षिर्दुर्लभं प्राप्तो ब्राह्मण्यं लोकसत्कृतम् ॥ ६
मनोर्महात्मनस्तात प्रजा धर्मेण शासतः ।
बभूव पुत्रो धर्मात्मा शर्यातिरिति विश्रुतः ॥ ७
तस्यान्ववाये द्वौ राजन्राजानौ संबभूवतुः ।
हेहयस्तालजङ्घश्च वत्सेषु जयतांवर ॥ ८
हैहयस्य तु राजेन्द्र दशसु स्त्रीषु भारत ।
शतं बभूव पुत्राणां शूराणामनिवर्तिनाम् ।
तुल्यरूपप्रभावानां बलिनां युद्धशालिनाम् ॥ ९
धनुर्वेदे च वेदे च सर्वत्रैव कृतश्रमाः ॥ १०
काशिष्वपि नृपो राजन्दिवोदासपितामहः ।
हर्यश्व इति विख्यातो बभूव जयतांवरः ॥ ११
स वीतहव्यदायादैरागत्य पुरुषर्षभ ।
गङ्गायमुनयोर्मध्ये संग्रामे विनिपातितः ॥ १२
तं तु हत्वा नरपतिं हैहयास्ते महारथाः ।
प्रतिजग्मुः पुरीं रम्यां वत्सानामकुतोभयाः ॥ १३
हर्यश्वस्य च दायादः काशिराजोऽभ्यषिच्यत ।
सुदेवो देवसंकाशः साक्षाद्धर्म इवापरः ॥ १४
स पालयामास महीं धर्मात्मा काशिनन्दनः ।
तैर्वीतहव्यैरागत्य युधि सर्वैर्विनिर्जितः ॥ १५
तमथाजौ विनिर्जित्य प्रतिजग्मुर्यथागतम् ।
सौदेविस्त्वथ काशीशो दिवोदासोऽभ्यषिच्यत १६

शर्यातिरिति विश्रुत इति ट. ध. पाठः ॥ ७ ॥ ते चेति शेषः ॥ १० ॥ वीतहव्यदायादैः । हैहयस्यैव नामान्तरं वीतहव्य इति तत्पुत्रैः ॥ १२ ॥ वत्सानां वत्सवंश्यानां राज्ञाम् ॥ १३ ॥

* अयमध्यायः झ. पाठे ३० ध्यायतया वर्तते

दिवोदासस्तु विज्ञाय वीर्यं तेषां यतात्मनाम् ।
वाराणसीं महातेजा निर्ममे शक्रशासनात् ॥ १७
विप्रक्षत्रियसंबाधां वैश्यशूद्रसमाकुलाम् ।
नैकद्रव्योच्चयवतीं समृद्धविपणापणाम् ॥ १८
गङ्गाया उत्तरे कूले वप्रान्ते राजसत्तम ।
गोमत्या दक्षिणे कूले शक्रस्येवामरावतीम् ॥ १९
तत्र तं राजशार्दूलं निवसन्तं महीपतिम् ।
आगत्य हैहया भूयः पर्यधावन्त भारत ॥ २०
स निष्क्रम्य ददौ युद्धं तेभ्यो राजा महाबलः ।
देवासुरसमं घोरं दिवोदासो महाद्युतिः ॥ २१
स तु युद्धे महाराज दिनानां दशतीर्दश ।
हतवाहनभूयिष्ठस्ततो दैन्यमुपागमत् ॥ २२
हतयोधस्ततो राजन्क्षीणकोशश्च भूमिपः
दिवोदासः पुरीं त्यक्त्वा पलायनपरोऽभवत् ॥२३
गत्वाऽऽश्रमपदं रम्यं भरद्वाजस्य धीमतः ।
जगाम शरणं राजा कृताञ्जलिररिंदम ॥ २४
तमुवाच भरद्वाजो ज्येष्ठः पुत्रो बृहस्पतेः ।
पुरोधाः शीलसंपन्नो दिवोदासं महीपतिम् ॥२५
किमागमनकृत्यं ते सर्वं प्रब्रूहि मे नृप ।
यत्ते प्रियं तत्करिष्ये न मेऽत्रास्ति विचारणा ॥२६
राजोवाच ।
भगवन्वैतहव्यैर्मे युद्धे वंशः प्रणाशितः ।
अहमेकः परिद्यूनो भवन्तं शरणं गतः ॥ २७
शिष्यस्नेहेन भगवंस्त्वं मां रक्षितुमर्हसि ।
एकशेषः कृतो वंशो मम ।ः पापकर्मभिः ॥२८
तमुवाच महाभागो भरद्वाजः प्रतापवान् ।
न भेतव्यं न भेतव्यं सौदेव व्येतु ते भयम् ॥२९
अहमिष्टिं करिष्यामि पुत्रार्थं ते विशांपते
वीतहव्यसहस्राणि येन त्वं प्रहरिष्यसि ॥ ३०
तत इष्टिं चकारर्षिस्तस्य वै पुत्रकामिकीम् ।
अथास्य तनयो जज्ञे दैवोदासः प्रतर्दनः ॥ ३१
स जातमात्रो ववृधे समाः सद्यस्त्रयोदश ।
वेदं चापि जगौ कृत्स्नं धनुर्वेदं च भारत ॥ ३२
योगेन च समाविष्टो भरद्वाजेन धीमता ।
कृत्स्नं हि तेजो यल्लोके तदेतद्देहमाविशत् ॥ ३३
ततः स कवची धन्वी स्तूयमानः सुरर्षिभिः ।
वन्दिभिर्वन्द्यमानश्च बभौ सूर्य इवोदितः ॥ ३४
स रथी बद्धनिस्त्रिंशो बभौ दीप्त इवानलः ।
प्रययौ स धनुर्धुन्वन्विवर्षिषुरिवाम्बुदः ॥ ३५
तं दृष्ट्वा परमं हर्षं सुदेवतनयो ययौ ।
मेने च मनसाऽदग्धान्वैतहव्यान्स पार्थिवः॥३६
ततोसौ यौवराज्ये च स्थापयित्वा प्रतर्दनम् ।
कृतकृत्यं तदाऽऽत्मानं स राजा प्रत्यपद्यत ॥३७
ततस्तु वैतहव्यानां वधाय स महीपतिः
पुत्रं प्रस्थापयामास प्रतर्दनमरिंदमम् ॥ ३८
सरथः स तु संतीर्य गङ्गामाशु पराक्रमी
प्रययौ वीतहव्यानां पुरीं परपुरंजयः ॥ ३९
वैतहव्यास्तु संश्रुत्य रथघोषं समुद्धतम् ।
निर्ययुर्नगराकारै रथैः पररथारुजैः ॥ ४०
निष्क्रम्य ते नरव्याघ्रा दंशिताश्चित्रयोधिनः ।
प्रतर्दनं समाजग्मुः शरवर्षैरुदायुधाः ॥ ४१
शस्त्रैश्च विविधाकारै रथौघैश्च युधिष्ठिर
अभ्यवर्षन्त राजानं हिमवन्तमिवाम्बुदाः ॥ ४२
अस्त्रैरस्त्राणि संवार्य तेषां राजा प्रतर्दनः ।
जघान तान्महातेजा वज्रानलसमैः शरैः ॥ ४३
कृत्तोत्तमाङ्गास्ते राजन्भल्लैः शतसहस्रशः ।
अपतन्रुधिरार्द्राङ्गा निकृत्ता इव किंशुकाः ॥ ४४
हतेषु तेषु सर्वेषु वीतहव्यः सुतेष्वथ ।
प्राद्रवन्नगरं हित्वा भृगोराश्रममप्युत ॥ ४५
ययौ भृगुं च शरणं वीतहव्यो नराधिपः ।
अभयं च ददौ तस्मै वीतहव्यस्य भार्गवः ।
आसनं शिष्यमध्ये च भृगुरन्यत्समादिशत् ॥४६
अथानुपदमेवाशु तत्रागच्छत्प्रतर्दनः ।
स प्राप्य चाश्रमपदं दिवोदासात्मजोऽब्रवीत् ॥४७

वप्रान्ते तटसमीपे ॥ १९॥ दशतीर्दश सहस्रमित्यर्थ ॥ २२ ॥ परिद्यूनः सर्वतोनिरस्त. ॥ २७ ॥ सद्यो ववृधे त्रयोदशवार्षि-कोऽभूत् सद्यश्च वेदान् जगौ ॥ ३२ ॥ योगेन योगबलेन ॥ ३३ ॥

भोभो केऽत्राश्रमे सन्ति भृगोः शिष्या महात्मनः ।
द्रष्टुमिच्छे मुनिमहं तस्याचक्षत मामिति ॥ ४८
स तं विदित्वा तु भृगुर्निश्चक्रामाश्रमात्तदा ।
पूजयामास च ततो विधिना नृपसत्तमम् ॥ ४९
उवाच चैनं राजेन्द्र किं कार्यं ब्रूहि पार्थिव ।
स चोवाच नृपस्तस्मै यदागमनकारणम् ॥ ५०
राजोवाच ।
अयं ब्रह्मन्नितो राजा वीतहव्यो विसर्ज्यताम् ।
अस्य पुत्रैर्हि मे कृत्स्नो ब्रह्मन्वंशः प्रणाशितः ॥५१
उत्सादितश्च विषयः काशीनां रत्नसंचयः ।
एतस्य वीर्यदृप्तस्य हतं पुत्रशतं मया ।
अस्येदानीं वधादद्य भविष्याम्यनृणः पितुः ॥५२
तमुवाच कृपाविष्टो भृगुर्धर्मभृतांवरः ।
नेहास्ति क्षत्रियः कश्चित्सर्वे हीमे द्विजातयः ॥५३
एतत्तु वचनं श्रुत्वा भृगोस्तथ्यं प्रतर्दनः ।
पादावुपस्पृश्य शनैः प्रहृष्टो वाक्यमब्रवीत् ॥५४
एवमप्यस्मि भगवन्कृतकृत्यो न संशयः ।
य एष राजा वीर्येण स्वजातिं त्याजितो मया ॥ ५५
अनुजानीहि मां ब्रह्मन्ध्यायस्व च शिवेन माम् ।
त्याजितो हि मया जातिमेष राजा भृगूद्वह ॥५६
ततस्तेनाभ्यनुज्ञातो ययौ राजा प्रतर्दनः ।
यथागतं महाराज मुक्त्वा विषमिवोरगः ॥ ५७
भृगोर्वचनमात्रेण स च ब्रह्मर्षितां गतः ।
वीतहव्यो महाराज ब्रह्मवादित्वमेव च ॥ ५८
तस्य गृत्समदः पुत्रो रूपेणेन्द्र इवापरः ।
शक्रस्त्वमिति यो दैत्यैर्निगृहीतः किलाभवत् ॥५९
ऋग्वेदे वर्तते चाग्र्या श्रुतिर्यस्य महात्मनः ।
यत्र गृत्समदो राजन्ब्राह्मणैः स महीयते ॥ ६०
स ब्रह्मचारी विप्रर्षिः श्रीमान्गृत्समदोऽभवत् ।
पुत्रो गृत्समदस्यापि विप्रः सावेतसोऽभवत् ॥६१
सावेतसस्य पुत्रो वै वितस्त्यस्तस्य चात्मजः ।
वितस्त्यस्य सुतस्तस्य शिवस्तस्यात्मजोऽभवत् ॥६२
श्रवास्तस्य सुतश्चर्षिः श्रवसश्चाभवत्तमः ।
तमसश्च प्रकाशोऽभूत्तनयो द्विजसत्तमः ॥ ६३
प्रकाशस्य च वागिन्द्रो बभूव जयतांवरः ।
तस्यात्मजश्च प्रमितिर्वेदवेदाङ्गपारगः ॥ ६४
घृताच्यां तस्य पुत्रस्तु रुरुर्नामोदपद्यत ।
प्रमद्वरायां तु रुरोः पुत्रः समुदपद्यत ।
शुनको नाम विप्रर्षिर्यस्य पुत्रोऽथ शौनकः ॥ ६५
एवं विप्रत्वमगमद्वीतहव्यो नराधिपः ।
भृगोः प्रसादाद्राजेन्द्र क्षत्रियः क्षत्रियर्षभ ॥ ६६
एष ते कथितो वंशो राजन्गार्त्समदो मया ।
विस्तरेण महाराज किमन्यदनुपृच्छसि ॥ ६७

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि अष्टमोऽध्यायः ॥ ८ ॥

## नवमोऽध्यायः ॥ ९ ॥

भीष्मेण युधिष्ठिरंप्रति सदृष्टान्तप्रदर्शनं दैवादपि पुरुषकारस्य प्राबल्यप्रतिपादनम् ॥ १ ॥

युधिष्ठिर उवाच ।
पितामह महाप्राज्ञ सर्वशास्त्रविशारद ।
दैवे पुरुषकारे च किंस्विच्छ्रेष्ठतरं भवेत् ॥
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
वसिष्ठस्य च संवादं ब्रह्मणश्च युधिष्ठिर ॥
दैवमानुषयोः किंस्वित्कर्मणोः श्रेष्ठमित्युत ।
पुरा वसिष्ठो भगवान्पितामहमपृच्छत ॥ ३
ततः पद्मोद्भवो राजन्देवदेवः पितामहः ।
उवाच मधुरं वाक्यमर्थवद्धेतुभूषितम् ॥ ४
बीजतो ह्यङ्कुरोत्पत्तिरङ्कुरात्पर्णसंभवः ।
पर्णान्नालाः प्रसूयन्ते नालात्स्कन्धः प्रवर्तते ॥ ५

तस्य तत्प्रति मा आगतं आचक्षत कथयत ॥ ४८ ॥ आख्यायिकातात्पर्यमाह भृगोरिति ॥ ५८ ॥ यत्र गार्त्समद ब्रह्म ब्राह्मणैः समुदाहृतम् । इति ध. पाठः ॥ ६० ॥ अष्टमोऽध्यायः ॥ ८ ॥

स्कन्धात्प्रवर्तते पुष्पं पुष्पात्संवर्धते फलम् ।
फलान्निर्वर्तते बीजं बीजात्स्यात्संभवः पुनः ॥ ६
नाबीजं जायते किंचिन्न बीजेन विना फलम् ।
बीजाद्बीजं प्रभवति नाबीजं विद्यते फलम् ॥ ७
यादृशं वपते बीजं क्षेत्रमासाद्य वापकः
सुकृते दुष्कृते वाऽपि तादृशं लभते फलम् ॥ ८
यथा बीजं विना क्षेत्रमुप्तं भवति निष्फलम् ।
तथा पुरुषकारेण विना दैवं न सिध्यति ॥
क्षेत्रं पुरुषकारस्तु दैवं बीजमुदाहृतम् ।
क्षेत्रबीजसमायोगात्ततः सस्यं समृद्ध्यते ॥ १०
कर्मणः फलनिर्वृत्तिं स्वयमश्नाति कारकः ।
प्रत्यक्षं दृश्यते लोके कृतस्याप्यकृतस्य च ॥ ११
शुभेन कर्मणा सौख्यं दुःखं पापेन कर्मणा ।
कृतं सर्वत्र लभते नाकृतं भुज्यते क्वचित् ॥ १२
कृती सर्वत्र लभते प्रतिष्ठां भाग्यवीक्षितः ।
अकृती लभते भ्रष्टः क्षते क्षारावसेचनम् ॥ १३
तपसा रूपसौभाग्यं रत्नानि विविधानि च ।
प्राप्यते कर्मणा सर्वं न दैवादकृतात्मना ॥ १४
तथा स्वर्गश्च भोगश्च निष्ठा या च मनीषिता ।
सर्वं पुरुषकारेण कृतेनेहोपलभ्यते ॥ १५
ज्योतींषि त्रिदशा नागा यक्षाश्चन्द्रार्कमारुताः ।
सर्वे पुरुषकारेण मानुष्याद्देवतां गताः ॥ १६
अर्थो वा मित्रवर्गो वा ऐश्वर्यं वा कुलान्वितम् ।
श्रीश्चापि दुर्लभा भोक्तुं तथैवाकृतकर्मभिः ॥ १७
शौचेन लभते विप्रः क्षत्रियो विक्रमेण तु ।
वैश्यः पुरुषकारेण शूद्रः शुश्रूषया श्रियम् ॥ १८
नादातारं भजन्त्यर्था न क्लीबं नापि निष्क्रियम् ।
नाकर्मशीलं नाशूरं तथा नैवातपस्विनम् ॥ १९
येन लोकास्त्रयः सृष्टा दैत्याः सर्वाश्च देवताः ।
स एष भगवान्विष्णुः समुद्रे तप्यते तपः ॥ २०

स्वं चेत्कर्मफलं न स्यात्सर्वमेवाफलं भवेत्
लोको दैवं समालक्ष्य उदासीनो भवेद्यदि ॥ २१
अकृत्वा मानुषं कर्म यो दैवमनुवर्तते ।
वृथा श्राम्यति संप्राप्य पतिं क्लीबमिवाङ्गना ॥ २२
न तथा मानुषे लोके फलमस्ति शुभाशुभे ।
यथा त्रिदशलोके हि फलमल्पेन जायते ॥ २३
कृतः पुरुषकारस्तु दैवमेवानुवर्तते ।
न दैवमकृते किंचित्कस्यचिद्दातुमर्हति ॥ २४
यथा स्थानान्यनित्यानि दृश्यन्ते दैवतेष्वपि ।
कथं कर्म विना दैवं स्थास्यति स्थापयिष्यतः ॥ २५
न दैवतानि लोकेऽस्मिन्व्यापारं यान्ति कस्यचित् ।
व्यासङ्गं जनयन्त्युग्रमात्माभिभवशङ्कया ॥ २६
ऋषीणां देवतानां च सदा भवति विग्रहः ।
कस्य वाचा ह्यदैवं स्याद्यस्मात्कर्म पराक्रमे ॥ २७
कथं तस्य समुत्पत्तिर्यतो दैवं परपुरंजय ॥
एवं त्रिदशलोकेऽपि प्राप्यते परमं सुखम् ॥ २८
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ।
आत्मैव ह्यात्मनः साक्षी कृतस्याप्यकृतस्य च ॥ २९
कृतं च विकृतं किंचित्सिद्ध्यते गुरुकर्मणी ।
सुकृतं दुष्कृतं कर्म अकृतार्थं प्रपद्यते ॥ ३०
देवानां शरणं पुण्यं सर्वं पुण्यैरवाप्यते ।
पुण्यहीनं नरं प्राप्य किं दैवं प्रकरिष्यति ॥ ३१
पुरा ययातिर्विभ्रष्टश्च्यावितः पतितः क्षितौ ।
पुनरारोपितः स्वर्गं दौहित्रैः पुण्यकर्मभिः ॥ ३२
पुरूरवाश्च राजर्षिर्द्विजैरभिहितः पुरा ।
ऐल इत्यभिविख्यातः स्वर्गं प्राप्तो महीपतिः ॥ ३३
अश्वमेधादिभिर्यज्ञैः सत्कृतः कोसलाधिपः ।
महर्षिशापात्सौदासः पुरुषादत्वमागतः ॥ ३४
अश्वत्थामा च रामश्च मुनिपुत्रौ धनुर्धरौ ।
न गच्छतः स्वर्गलोकं वेददृष्टेन कर्मणा ॥ ३५

नाकृती लभतेऽभीष्टं क्षिति क्षीरावसेचनमिति ध. पाठः ॥ १३ ॥ चन्द्रार्कतारका इति ध. पाठः । मानुष्यात् मानुष्यमुल्लङ्घ्य ॥ १६ ॥ लभते श्रियमिति सर्वत्र संबन्धः ॥ १८ ॥ अकृते कर्माभावे सति ॥ २४ ॥ व्यापारं पुण्यरूपं यान्ति अनुमोदन्ते । उग्रं धर्मविघ्नकरम् । एवं संजनयन्त्युग्रा आत्म-निर्भयशङ्कयेति ध पाठः ॥ २६ ॥ यद्यप्येवं कर्मपरत्वं देवर्षीणामस्ति तथापि अदैवं दैवाभावो न वक्तुं शक्यं इत्यर्थः ॥ २७ ॥ यतो यस्माद्दैवं प्रवर्तते तस्य कर्मणोऽपि दैवं विना कथमुत्पत्तिः स्यान्न कथमपि ॥ २८ ॥

वसुर्यज्ञशतैरिष्ट्वा द्वितीय इव वासवः ।
मिथ्याभिधानेनैकेन रसातलतलं गतः ॥ ३६
बलिर्वैरोचनिर्बद्धो धर्मपाशेन दैवतैः ।
विष्णोः पुरुषकारेण पातालसदनः कृपः ॥ ३७
शक्रस्याथ रथोपस्थे विष्ठितो जनमेजयः ।
द्विजस्त्रीणां वधं कृत्वा किं दैवेन न वारितः ॥ ३८
अज्ञानाद्ब्राह्मणं हत्वा स्पृष्टो बालवधेन च ।
वैशंपायनविप्रर्षिः किं दैवेन न वारितः ॥ ३९
गोप्रदानेन मिथ्या च ब्राह्मणेभ्यो महामखे ।
पुरा नृगश्च राजर्षिः कृकलासत्वमागतः ॥ ४०
धुन्धुमारश्च राजर्षिः सत्रेष्वेव जरां गतः ।
प्रीतिदायं परित्यज्य सुष्वाप स गिरिव्रजे ॥ ४१
पाण्डवानां हृतं राज्यं धार्तराष्ट्रैर्महाबलैः ।
पुनः प्रत्याहृतं चैव न दैवाद्भुजसंश्रयात् ॥ ४२
तपोनियमसंयुक्ता मुनयः संशितव्रताः ।
किं ते दैवबलाच्छापमुत्सृजन्ते न कर्मणा ॥ ४३
पापमुत्सृजते लोके सर्वं प्राप्य सुदुर्लभम् ।
लोभमोहसमापन्नं न दैवं त्रायते नरम् ॥ ४४
यथाऽग्निः पवनोद्धूतः सुसूक्ष्मोऽपि महान्भवेत् ।
तथा कर्मसमायुक्तं दैवं साधु विवर्धते ॥ ४५
यथा तैलक्षयाद्दीपः प्रम्लानिमुपगच्छति ।
तथा कर्मक्षयाद्दैवं प्रम्लानिमुपगच्छति ॥ ४६
विपुलमपि धनौघं प्राप्य भोगान्स्त्रियो वा
पुरुष इह न शक्तः कर्महीनो हि भोक्तुम् ।
सुविहितमपि चार्थं दैवतं रक्ष्यमाणं
पुरुष इह महात्मा प्राप्नुते नित्ययुक्तः ॥ ४७
व्ययगुणमपि साधुं कर्मणा संश्रयन्ते
भवति मनुजलोकाद्देवलोको विशिष्टः ।
बहुतरसुसमृद्ध्या मानुषाणां गृहाणि
पितृवनभवनाभं दृश्यते चामराणाम् ॥ ४८
न च फलति विकर्मा जीवलोके न दैवं
व्यपनयति विमार्गं नास्ति दैवे प्रभुत्वम् ।
गुरुमिव कृतमग्र्यं कर्म संयाति दैवं
नयति पुरुषकारः संचितस्तत्रतत्र ॥ ४९
एतत्ते सर्वमाख्यातं मया वै मुनिसत्तम ।
फलं पुरुषकारस्य सदा संदृश्य तत्त्वतः ॥ ५०
अभ्युत्थानेन दैवस्य समारब्धेन केनचित् ।
विधिना कर्मणा चैव स्वर्गमार्गमवाप्नुयात् ॥ ५१

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि नवमोऽध्यायः ॥ ९ ॥

## दशमोऽध्यायः ॥ १० ॥

भीष्मेण युधिष्ठिरंप्रति शुभाशुभकर्मफलप्रतिपादनम् ॥ १ ॥

युधिष्ठिर उवाच ।
कर्मणां च समस्तानां फलिनां भरतर्षभ ।
फलानि महतां श्रेष्ठ प्रब्रूहि परिपृच्छतः ॥ १
भीष्म उवाच ।

---

पापमपि तेजीयसा न दोषायेत्याह शक्रस्येति द्वाभ्याम् ॥ ३८ ॥ पुण्यमपि केषाचिन्न त्राणायेत्याह गोप्रदानेनेति । कृकलासत्व सरठत्वम् ॥ ४० ॥ प्रीतिदाय देवैर्दत्त वरम् । सुष्वाप सत्रफलं नाप्तवानित्यर्थः । प्रतिरज्ञ परित्यज्येति ट. थ. ध. पाठः ॥ ४१ ॥ न दैवात् प्रत्याहृतमपि तु भुजसश्रयादेवेत्यर्थः ॥ ४२ ॥ अपितु कर्मणैवोत्सृजन्ते नतु दैवबलादित्यर्थः ॥ ४३ ॥ पाप पापिन प्रति सर्वमैश्वर्यादिक गुणजात लोके प्राप्य उपेत्यापि तमुत्सृजते इति योजना । एतदेव स्पष्टयति लोभेति । पापमुत्सृजता नृणा धर्म प्राहुः सुदुर्लभमिति थ. ध. पाठः ॥ ४४ ॥ व्यय एव गुणः स्वभावो यस्य त रिक्तम् । साधु कर्मणा सदाचारेण निमित्तेन श्रद्धैकप्रिया देवाः सश्रयन्ते । ततश्च श्रेष्ठैः फलैरेन योजयन्तीत्याह भवतीति । समृद्ध्या उपेतम् । गृहाणि गृहम् । बहुलमार्षम् । पितृवनभवनाभ श्मशानगृहतुल्यम् । अमराणा अमरैः ॥ ४८ ॥ विकर्मा कर्महीनः । नच फलति फल तृप्त्यादिक न प्राप्नोति । नापि केवल दैव विमार्गगामिन नर व्यपनयति विमार्गादन्यत्र नयति । अतएव दैवे प्रभुत्व नास्ति । किंतु दैव कर्तृकर्म सयाति पुरुषकारमनुसरति । गुरु शिष्य इवेत्यर्थः । अतएव पुरुषकारो यत्र यत्र विषये सचितः सम्यगनुष्ठितस्तत्रतत्र दैव नयति ॥ ४९ ॥ सदृश्य सम्यक्प्रयोगजदृष्ट्याऽनुभूय ॥५०॥ नवमोऽध्यायः ॥९॥

हन्त ते कथयिष्यामि यन्मां पृच्छसि भारत ।
रहस्यं ऋद्‌पीणां नु तच्छृणुष्व युधिष्ठिर ।
या गतिः प्राप्यते येन प्रेत्यभावे चिरेप्सिता ॥२
येनयेन शरीरेण यद्यत्कर्म करोति यः ।
तेनतेन शरीरेण तत्तत्फलमुपाश्नुते ॥ ३
यस्यांयस्यामवस्थायां यत्करोति शुभाशुभम् ।
तस्यांतस्यामवस्थायां भुङ्क्ते जन्मनिजन्मनि ॥ ४
न नश्यति कृतं कर्म चित्तपञ्चेन्द्रियैरिह ।
ते ह्यस्य साक्षिणो नित्यं पष्ठ आत्मा शुभाशुभे ॥ ५
चक्षुर्दद्यान्मनो दद्याद्वाचं दद्याच्च सूनृताम् ।
अनुव्रजेदुपासीत स यज्ञः पञ्चदक्षिणः ६
यो दद्यादपरिक्लिष्टमन्नमध्वनि वर्तते ।
श्रान्तायादृष्टपूर्वाय तस्य पुण्यफलं महत् ॥ ७
स्थण्डिलेषु शयानानां गृहाणि शयनानि च
चीरवल्कलसंवीते वासांस्याभरणानि च ॥ ८
वाहनानि च यानानि योगात्मनि तपोधने
अग्नीनुपशयानस्य राज्ञः पौरुषमेव च ॥ ९
रसानां प्रतिसंहारे सौभाग्यमनुगच्छति ।
आमिषप्रतिसंहारे पशून्पुत्रांश्च विन्दति ॥ १०
अवाक्शिरास्तु यो लम्बेदुदवासं च यो वसेत् ।
सततैकशायी च नरो लभते चेप्सितां गतिम् ॥११
पाद्यमासनमेवाथ दीपमन्नं प्रतिश्रयम् ।
दद्यादतिथिपूजार्थं स यज्ञः पञ्चदक्षिणः ॥ १२
वीरासनं वीरशय्यां वीरस्थानमुपासतः ।
अक्षयास्तस्य वै लोकाः सर्वकामगमास्तथा ॥१३
धनं लभेत दानेन मौनेनाज्ञां विशांपते ।
उपभोगांश्च तपसा ब्रह्मचर्येण जीवितम् ॥ १४
रूपमैश्वर्यमारोग्यमहिंसाफलमश्नुते ।

फलमूलाशिनो राज्यं स्वर्गः पर्णाशिनां भवेत् ॥१५
प्रायोपवेशिनो राजन्सर्वत्र सुखमुच्यते ।
गवाढ्यः शाकदीक्षायां स्वर्गगामी तृणाशनः ॥१६
स्त्रियस्त्रिषवणं स्नात्वा वायुं पीत्वा क्रतुं लभेत् ।
स्वर्गं सत्येन लभते दीक्षया कुलमुत्तमम् ॥ १७
सलिलाशी भवेद्यस्तु सदाग्निः संस्कृतो द्विजः ।
मरुत्साधयतो राज्यं नाकपृष्ठमनाशिने ॥ १८
उपवासं च दीक्षायामभिषेकं च पार्थिव ।
कृत्वा द्वादशवर्षाणि वीरस्थानाद्विशिष्यते ॥१९
अधीत्य सर्ववेदान्वै सद्यो दुःखाद्विमुच्यते ।
'तत्पाठधारणात्स्वर्गमर्थज्ञानात्परां गतिम् ॥ २०
वितृष्णानां वेदजपात्स्वर्गमोक्षफलं स्मृतम् ।'
मानसं हि चरन्धर्मं स्वर्गलोकमुपाश्नुते ॥ २१
या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः ।
योऽसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखं २२
यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् ।
एवं पूर्वकृतं कर्म कर्तारमनुगच्छति ॥ २३
अचोद्यमानानि यथा पुष्पाणि च फलानि च ।
स्वकालं नातिवर्तन्ते तथा कर्म पुराकृतम् ॥ २४
जीर्यन्ति जीर्यतः केशा दन्ता जीर्यन्ति जीर्यतः ।
चक्षुः श्रोत्रे च जीर्येते तृष्णैका न तु जीर्यते ॥२५
येन प्रीणन्ति पितरस्तेन प्रीतः प्रजापतिः ।
माता च येन प्रीणाति पृथिवी तेन पूजिता ।
येन प्रीणात्युपाध्यायस्तेन स्याद्ब्रह्म पूजितम् ॥२६
सर्वे तस्यादृता धर्मा यस्यैते त्रय आदृताः ।
अनादृतास्तु यस्यैते सर्वास्तस्याफलाः क्रियाः ॥२७
वैशंपायन उवाच ।
भीष्मस्यैतद्वचः श्रुत्वा विस्मिताः कुरुपुङ्गवाः ।

---

गतिः फलम् । येन कर्मणा । प्रेत्यभावे मरणोत्तरं देहान्तरप्राप्तौ ॥ २ ॥ अस्य कर्तुः ॥ ५ ॥ दद्यादभ्यागतायेति शेषः ॥ ६ ॥ वानप्रस्थधर्माणां फलान्याह स्थण्डिलेष्वित्यादिना ॥ ८ ॥ योगात्मनि योगयुक्तचित्ते ॥ ९ ॥ सतत चैकशायी यः स इति झ पाठः । तत्र एकशायी ब्रह्मचर्यवान् ॥ ११ ॥ वीरा आसतेऽस्मिन्निति वीरासनं रणदेशं उपेत्य वीरशय्यां तत्र दीर्घनिद्रां च प्राप्य वीरस्थानं स्वर्गलोकम् ॥ १३ ॥ आज्ञामविच्छिन्नामिति शेषः । तपसा कृच्छ्रादिना जीवितमायुः ॥ १४ ॥ शाकदीक्षायां शाकमात्राशननियमे ॥ १६ ॥ क्रतुं संकल्प सत्यसंकल्पत्वमिति यावत् । दीक्षया यज्ञेन ॥ १७ ॥ सदाग्निः अविच्छिन्नाग्निहोत्रः ॥ १८ ॥ अभिषेकं तीर्थाटनम् । वीरस्थानात्स्वर्गादपि विशिष्यते ॥ १९ ॥ मानसं धर्मं विवृणोति येति ॥ २२ ॥

आसन्प्रहृष्टमनसः प्रीतिमन्तोऽभवंस्तदा ॥ २८
यन्मन्त्रे भवति वृथोपयुज्यमाने
यत्सोमे भवति वृथाऽभिषूयमाणे ।
यच्चाग्नौ भवति वृथाऽभिहूयमाने
तत्सर्वं भवति वृथाऽभिधीयमाने ॥ २९
इत्येतदृषिणा प्रोक्तमुक्तवानस्मि भारत ।
शुभाशुभफलप्राप्तौ किमतः श्रोतुमिच्छसि ॥ ३०

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि दशमोऽध्यायः ॥ १० ॥

## एकादशोऽध्यायः ॥ ११ ॥

भीष्मेण युधिष्ठिरंप्रति शुकवासवसंवादानुवादेनानृशंस्यप्रशंसनम् ॥ १ ॥

युधिष्ठिर उवाच ।
आनृशंस्यस्य धर्मज्ञ गुणान्भक्तजनस्य च ।
श्रोतुमिच्छामि धर्मज्ञ तन्मे ब्रूहि पितामह ॥ १
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
वासवस्य च संवादं शुकस्य च महात्मनः ॥ २
विषये काशिराजस्य ग्रामान्निष्क्रम्य लुब्धकः ।
सविषं काण्डमादाय मृगयामास वै मृगम् ॥ ३
तत्र चामिषलुब्धेन लुब्धकेन महावने ।
अविदूरे मृगान्दृष्ट्वा बाणः प्रतिसमाहितः ॥ ४
तेन दुर्वारितास्त्रेण निमित्तचपलेषुणा ।
महान्वनतरुस्तत्र विद्धो मृगजिघांसया ॥ ५
स तीक्ष्णविषदिग्धेन शरेणातिबलात्क्षतः ।
उत्सृज्य फलपत्राणि पादपः शोषमागतः ॥ ६
तस्मिन्वृक्षे तथाभूते कोटरेषु चिरोषितः ।
न जहाति शुको वासं तस्य भक्त्या वनस्पतेः ॥७
निष्प्रचारो निराहारो ग्लानः शिथिलवागपि ।
कृतज्ञः सह वृक्षेण धर्मात्मा सोप्यशुष्यत ॥ ८
तमुदारं महासत्वमतिमानुषचेष्टितम् ।
समदुःखसुखं दृष्ट्वा विस्मितः पाकशासनः ॥ ९
ततश्चिन्तामुपगतः शक्रः कथमयं द्विजः ।
तिर्यग्योनावसंभाव्यमानृशंस्यमवस्थितः ॥ १०
अथवा नात्र चित्रं हीत्यभवद्वासवस्य तु ।
प्राणिनामपि सर्वेषां सर्वं सर्वत्र दृश्यते ॥ ११
ततो ब्राह्मणवेषेण मानुषं रूपमास्थितः ।
अवतीर्य महीं शक्रस्तं पक्षिणमुवाच ह ॥ १२
शुक भो पक्षिणांश्रेष्ठ दाक्षेयी सुप्रजास्त्वया ।
पृच्छे त्वां शुकमेनं त्वं कस्मान्न त्यजसि द्रुमम् ॥१३
अथ पृष्टः शुकः प्राह मूर्ध्ना समभिवाद्य तम् ।
स्वागतं देवराज त्वं विज्ञातस्तपसा मया ॥ १४
ततो दशशताक्षेण साधुसाध्विति भाषितम् ।
अहो विज्ञानमित्येवं मनसा पूजितस्ततः ॥ १५
तमेवं शुभकर्माणं शुकं परमधार्मिकम् ।
जानन्नपि च तत्पापं पप्रच्छ बलसूदनः ॥ १६
निष्पत्रमफलं शुष्कमशरण्यं पतत्रिणाम् ।
किमर्थं सेवसे वृक्षं यदा महदिदं वनम् ॥ १७
अन्येऽपि बहवो वृक्षाः पत्रसंछन्नकोटराः ।
शुभाः पर्याप्तसंचारा विद्यन्तेऽस्मिन्महावने ॥ १८
गतायुषमसामर्थ्यं क्षीणसारं हतश्रियम् ।
विमृश्य प्रज्ञया धीर जहीमं ह्यस्थिरं द्रुमम् ॥ १९
भीष्म उवाच ।
तदुपश्रुत्य धर्मात्मा शुकः शक्रेण भाषितम् ।

एतैस्त्रिभिर्यत्पाप तत्सर्वं मिथ्यावादिनो भवतीत्यर्थः ॥ २९ ॥ दशमोऽध्यायः ॥ १० ॥

विषये देशे । काण्ड बाणम् ॥ ३ ॥ तत्र मृगयायाम् ॥ ४ ॥ दुर्वारितास्त्रेण दुर्वार्यशस्त्रेण । निमित्ताल्लक्ष्याच्चपलश्चलित इषुर्यस्य तेन । निमित्तफलेषुणेति ध पाठ ॥ ५ ॥ दिग्धेन लिप्तेन ॥ ६ ॥ द्विजः पक्षी । आनृशंस्य परदुःखेन दुःखित्वम् ॥ १० ॥ सर्वेषां नृतिर्यगादीनाम् । सर्वत्र जातौ । सर्वं कृपाऽनैष्ठुर्यादिक दृश्यते इति वासवस्य बुद्धिरभवदिति संबन्धः ॥ ११ ॥ दाक्षेयी दक्षदौहित्री शुकीनाम ॥ १३ ॥ तपसा ज्ञानदृष्ट्या ॥ १४ ॥

सुदीर्घमतिनिःश्वस्य दीनो वाक्यमुवाच ह ॥ २०
अमविक्रमणीयानि दैवतानि शचीपते ।
यत्राभवंस्तत्र भवांस्तन्निबोध सुराधिप ॥ २१
अस्मिन्नहं द्रुमे जातः साधुभिश्च गुणैर्युते ।
बालभावेन संगुप्तः शत्रुभिश्च न धर्षितः ॥ २२
किमनुक्रोश्य वैफल्यमुत्पादयसि मेऽनघ ।
'अनुरक्तस्य भक्तस्य संस्पृशे न च पावकम् ।'
आनृशंस्याभियुक्तस्य भक्तस्यानन्यगस्य च ॥ २३
अनुक्रोशो हि साधूनां महद्धर्मस्य लक्षणम् ।
अनुक्रोशश्च साधूनां सदा प्रीतिं प्रयच्छति ॥ २४
त्वमेव दैवतैः सर्वैः पृच्छयसे धर्मसंशयात् ।
अतस्त्वं देवदेवानामाधिपत्ये प्रतिष्ठितः ॥ २५
नार्हसे मां सहस्राक्ष द्रुमं त्याजयितुं चिरात् ।
समर्थमुपजीवन्तं विषमस्थं कथं त्यजेत् ॥ २६
तस्य वाक्येन सौम्येन हर्षितः पाकशासनः ।
शुकं प्रोवाच धर्मज्ञमानृशंस्येन तोषितः ॥ २७
वरं वृणीष्वेति तदा स च वव्रे वरं शुकः ।
आनृशंस्यपरो नित्यं तस्य वृक्षस्य संभवम् ॥ २८
विदित्वा च दृढां भक्तिं तां शुके शीलसंपदम् ।
प्रीतः क्षिप्रमथो वृक्षममृतेनावसिक्तवान् ॥ २९
ततः फलानि पत्राणि शाखाश्चापि मनोहराः ।
शुकस्य दृढभक्तित्वाच्छ्रीमत्तां प्राप स द्रुमः ॥ ३०
शुकश्च कर्मणा तेन आनृशंस्यकृतेन वै ।
आयुषोन्ते महाराज प्राप शक्रसलोकताम् ॥ ३१
'एवमेव मनुष्येन्द्र भक्तिमन्तं समाश्रितः ।
सर्वार्थसिद्धिं लभते शुकं प्राप्य यथा द्रुमः ॥ ३२

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि एकादशोऽध्यायः ॥ ११ ॥

## द्वादशोऽध्यायः ॥ १२ ॥

भीष्मेण युधिष्ठिरंप्रति ब्राह्मणप्रशंसनम् ॥ १ ॥

युधिष्ठिर उवाच ।
यथैव ते नमस्कार्याः प्रोक्ताः शक्रेण मानद
एतन्मे सर्वमाचक्ष्व येभ्यः स्पृहयसे नृप ॥ १
उत्तमापद्गतस्यापि यत्र ते वर्तते मनः ।
मनुष्यलोके सर्वस्मिन्यदमुत्रेह चाप्युत ॥ २
भीष्म उवाच
स्पृहयामि द्विजातिभ्यो येषां ब्रह्म परं धनम्
येषां संप्रत्ययः स्वर्गस्तपःस्वाध्यायसाधनम् ॥ ३
येषां बालाश्च वृद्धाश्च पितृपैतामहीं धुरम् ॥
उद्वहन्ति न सीदन्ति तेभ्यो वै स्पृहयाम्यहम् ॥ ४
विद्यास्वभिविनीतानां दान्तानां मृदुभाषिणाम् ।
श्रुतवृत्तोपपन्नानां सदाऽक्षरविदां सताम् ॥ ५
संसत्सु वदतां तात हंसानामिव सङ्घशः ।
मङ्गल्यरूपा रुचिरा दिव्यजीमूतनिःस्वनाः ॥ ६
सम्यगुच्चरिता वाचः श्रूयन्ते हि युधिष्ठिर ।
शुश्रूषमाणे नृपतौ प्रेत्य चेह सुखावहाः ॥ ७
ये चापि तेषां श्रोतारः सदा सदसि संमताः ।
विज्ञानगुणसंपन्नास्तेभ्यश्च स्पृहयाम्यहम् ॥ ८
सुसंस्कृतानि प्रयताः शुचीनि गुणवन्ति च ।
ददत्यन्नानि तृप्त्यर्थं ब्राह्मणेभ्यो युधिष्ठिर ।
ये चापि सततं राजंस्तेभ्यश्च स्पृहयाम्यहम् ॥ ९
शक्यं ह्येवाहवे योद्धुं न दातुमनसूयितुम् ॥ १०
शूरा वीराश्च शतशः सन्ति लोके युधिष्ठिर ।
तेषां संख्यायमानानां दानशूरो विशिष्यते ॥ ११
'भद्रं तु जन्म संप्राप्य भूयो ब्राह्मणको भवेत् ।
बन्धुमध्ये कुले जातः सुदुरापमवाप्नुयात् ॥' १२

---

अनुक्रोश्य कृपायित्वा । वैफल्य जन्मन इति शेष ॥ २३ ॥ सशयात् सशय प्राप्य । अतः संशयच्छेत्तृत्वात् ॥ २५ ॥ सभवं सम्यगैश्वर्य वर वव्रे ॥ २८ ॥ एकादशोऽध्यायः ॥११॥

यदमुत्रेह च हित तद्वदेति शेष ॥२॥ अक्षरं ब्रह्म तद्विदाम् ॥ ५ ॥ हससादृश्य क्षीरनीरयोरिव सारासारयोर्विवेचनात् ॥६॥ नृपतौ नृपतेः समीपे उच्चरिता. ॥ ७ ॥ ये चापि तेषा दातार इति ध. पाठः ॥ ८ ॥

धन्यः स्यां यद्यहं भूयः सौम्यब्राह्मणकोपि वा ।
कुले जातो धर्मगतिस्तपोविद्यापरायणः ॥ १३
न मे त्वत्तः प्रियतरो लोकेऽस्मिन्पाण्डुनन्दन ।
त्वत्तश्चापि प्रियतरा ब्राह्मणा एव भारत ॥ १४
यथा मम प्रियतमास्त्वत्तो विप्राः कुरूत्तम ।
तेन सत्येन गच्छेयं लोकान्यत्र स शन्तनुः ॥ १५
न मे पिता प्रियतरो ब्रह्मणेभ्यस्तथाऽभवत् ।
न मे पितुः पिता वाऽपि ये चान्येऽपि सुहृज्जनाः ॥
न हि मे वृजिनं किंचिद्विद्यते ब्राह्मणेष्विह ।
अणु वा यदि वा स्थूलं विद्यते साधुकर्मसु ॥१७
कर्मणा मनसा वाऽपि वाचा वाऽपि परंतप ।
यन्मे कृतं ब्राह्मणेभ्यस्तेनाद्य न तपाम्यहम् ॥१८
ब्रह्मण्य इति मामाहुस्तया वाचाऽस्मि तोषितः ।
एतदेव पवित्रेभ्यः सर्वेभ्यः परमं स्मृतम् ॥ १९
पश्यामि लोकानमलाञ्शुचीन्ब्राह्मणतोषणात् ।
तेषु मे तात गन्तव्यमह्नाय च चिराय च ॥ २०
यथा भर्त्राश्रयो धर्मः स्त्रीणां लोके युधिष्ठिर ।
स देवः सा गतिर्नान्या क्षत्रियस्य तथा द्विजाः॥२१
क्षत्रियः शतवर्षी च दशवर्षी द्विजोत्तमः ।
पितापुत्रौ च विज्ञेयौ तयोर्हि ब्राह्मणो गुरुः ॥२२
नारी तु पत्यभावे वै देवरं कुरुते पतिम् ।
पृथिवी ब्राह्मणालाभे क्षत्रियं कुरुते पतिम् ॥२३
'ब्राह्मणानुज्ञया ग्राह्यं राज्यं च सपुरोहितैः ।
तद्रक्षणेन स्वर्गोऽस्य तत्कोपान्नरकोऽक्षयः ॥' २४
पुत्रवच्चैव ते रक्ष्या उपास्या गुरुवच्च ते ।
अग्निवच्चोपचार्या वै ब्राह्मणाः कुरुसत्तम ॥ २५
ऋजून्सतः सत्यशीलान्सर्वभूतहिते रतान् ।
आशीविषानिव क्रुद्धान्द्विजान्परिचरेत्सदा ॥२६
तेजसस्तपसश्चैव नित्यं बिभ्येद्युधिष्ठिर ।
उभे चैते परित्याज्ये तेजश्चैव तपस्तथा ॥ २७
व्यवसायस्तयोः शीघ्रमुभयोरेव विद्यते ।
हन्युः क्रुद्धा महाराज ब्राह्मणा ये तपस्विनः॥२८
'दूरतो मातृवत्पूज्या विप्रदाराः सुरक्षया ।
अकोपनापराधेन भूयो नरकमश्नुते ॥ २९
भूयः स्यादुभयं दत्तं ब्राह्मणाद्यदकोपनात् ।
कुर्यादुभयतः शेषं दत्तशेषं न शेषयेत् ॥ ३०
दण्डपाणिर्यथा गोष्ठं पालो नित्यं हि रक्षयेत् ।
ब्राह्मणेषु स्थितं ब्रह्म क्षत्रियः परिपालयेत् ॥३१
पितेव पुत्रान्रक्षेथा ब्राह्मणान्ब्रह्मतेजसः ।
गृहे चैषामवेक्षेथाः किंस्विदस्तीति जीवनम् ॥३२

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि द्वादशोऽध्यायः ॥ १२ ॥

## त्रयोदशोऽध्यायः ॥ १३ ॥

भीष्मेण युधिष्ठिरंप्रति क्रमेण क्रोधस्यातिथेश्च निन्दाप्रशंसनपरवेदचतुष्टयसंवादानुवादः ॥ १

'भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
चतुर्णामपि वेदानां संवादं शृणु पुत्रक ॥ १
ऋग्वेद उवाच ।

---

ब्राह्मणकः कुत्सितब्राह्मणोपि यद्यह स्यां तर्हि धन्यः किमुत कुले जातः ॥ १३ ॥ वृजिन संकटम् । फलाशेतियावत् । पूज्यत्वादेव तान्पूजयामि नतु फलायेत्यर्थः ॥ १७ ॥ तेन ब्राह्मणाराधनेन । न तपामि न व्यथां प्राप्नोमि ॥ १८ ॥ ब्रह्मण्यो ब्रह्मजातौ आसक्तः ॥ १९ ॥ ब्राह्मणाद्बिभ्येत् नतु तत्र तेजस्तपसी स्वीये प्रकाशयेदित्यर्थः । तेजः क्रोधबलम् । तपो योगबलम् ॥ २७ ॥ तयोस्तपस्तेजसोर्ब्राह्मणक्षत्रियस्थयोर्व्यवसायः फलमभिभवरूप शीघ्रं तीव्र तथापि तपस्विन एवेतरान् हन्युर्न तेजस्विन इत्यर्थः ॥ २८ ॥ ल्यब्लोपे पञ्चमी । अकोपनं ब्राह्मण प्राप्य यद्भूयः बहुतरं उभय तपस्तेजआख्य स्यात् तद्दत्त खण्डित भवतीति शेषः । उभयत उभय चेत् शेष कुर्यान्न तद्दत्तशेष शेषयेदित्यन्वयः । द्वाभ्यां अन्योन्यस्मिन्प्रयुक्त तेजआदिद्वय न निःशेषं नश्यति किंतु शेषम् । क्षमावता खण्डितस्य तस्यावशिष्ट तु न शेषयेन्न शिष्यते अपितु निःशेषमेव नश्यतीत्यर्थः ॥ ३० ॥ अभावे तद्देयमित्यर्थः ॥ ३२ ॥ द्वादशोऽध्यायः ॥ १२ ॥

---

* एतदादिसप्तदशाध्याया दाक्षिणात्यकोशेष्वेव दृश्यन्ते । झ. पाठे न दृश्यन्ते ।

गृहानाश्रयमाणस्य अग्निहोत्रं च जुह्वतः ।
सर्वं सुकृतमादत्ते यः सायं नुद्यतेऽतिथिः ॥ २
यजुर्वेद उवाच ।
न स्कन्दते न व्यथते नास्योर्ध्वं सर्पते रजः ।
वरिष्ठमग्निहोत्राच्च ब्राह्मणस्य मुखे हुतम् ॥ ३
सामवेद उवाच ।
न चेद्घ्नन्ति पितरं मातरं वा
न ब्राह्मणं नापवादं करोति ।
यत्किंचिदन्यद्वृजिनं करोति
प्रीतोऽतिथिस्तदुपहन्ति पापम् ॥ ४
अथर्ववेद उवाच ।
यत्क्रोधनो यजते यद्ददाति
यद्वा तपस्तप्यति यज्जुहोति ।
वैवस्वतो हरते सर्वमस्य
मोघं चेष्टं भवति क्रोधनस्य ॥ ५

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥

## चतुर्दशोऽध्यायः ॥ १४ ॥

भीष्मेण युधिष्ठिरंप्रति ब्राह्मणानां पतिव्रतानां च महिमप्रतिपादकेन्द्राग्न्यादिसंवादानुवादः ॥ १ ॥

'भीष्म उवाच ।
भूयस्तु शृणु राजेन्द्र धर्मान्धर्मभृतांवर ॥ १
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
इन्द्राग्न्योः सूर्यशच्योश्च तन्मे निगदतः शृणु ॥२
इन्द्र उवाच ।
राज्ये विप्रान्नपश्यामि कामक्रोधविवर्जितान् ।
एतेन सत्यवाक्येन पादः कुम्भस्य पूर्यताम् ॥ ३
अग्निरुवाच ।
यथाऽहं तत्र नाश्नामि यत्र नाश्नन्ति वै द्विजाः ।
एतेन सत्यवाक्येन पादः कुम्भस्य पूर्यताम् ॥ ४
सूर्य उवाच ।
यथा गोब्राह्मणस्यार्थे न तपामि यथाबलम् ।
एतेन सत्यवाक्येन पादः कुम्भस्य पूर्यताम् ॥५
शच्युवाच ।
कर्मणा मनसा वाचा नावमन्ये पुरन्दरम् ।
एतेन सत्यवाक्येन पादः कुम्भस्य पूर्यताम् ॥ ६

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥

## पञ्चदशोऽध्यायः ॥ १५ ॥

भीष्मेण युधिष्ठिरंप्रति भगवन्महिमप्रतिपादकव्यासवासुदेवसंवादानुवादः ॥ १ ॥

'भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
मद्रराजस्य संवादं व्यासस्य च महात्मनः ॥ १
वैताने कर्मणि तते कुन्तीपुत्र यथा पुरा ।
उक्तः स भगवान्यज्ञे तथा तत्राशृणोद्भवान् ॥२
मद्रराज उवाच ।
कानि तीर्थानि भगवन्फलार्थाश्चेह केऽऽश्रमाः ।
क इज्यते कश्च यज्ञः को यूपः क्रमते च कः ॥३
कश्चाध्वरे शस्यते गीतिशब्दैः
कश्चाध्वरे गीयते वल्गुभाषैः ।
को ब्रह्मशब्दैः स्तुतिभिः स्तूयते च
कस्येह वै हविरध्वर्यवः कल्पयन्ति ॥ ४
वर्णाश्रमे गोफले कश्च सोमे
कश्चोंकारः कश्च वेदार्थमार्गः

यथा राज्य प्रपास्यामि कामक्रोधदिवर्जित इति पाठान्तरम् । पास्यामि प्रालयिष्यामि । पा पालन इति धातोः । पादः कुम्भस्य पूर्यतामिति । चतुर्भागादेको भागः पादः । कुम्भे एकपादोनतयोदकपूरिते सति चतुर्थः पादः स्वयमेव पूर्यतामित्यर्थ. । यथा सत्यबलेनाग्निरनुष्णो भवति तद्वदित्यर्थः ॥ ३ ॥ चतुर्दशोऽध्यायः ॥ १४ ॥

पृष्टस्त्वम ब्रूहि सर्व-महर्षे
लोकज्येष्ठं कस्य विज्ञानमाहुः ॥ ५

द्वैपायन उवाच ।
लोकज्येष्ठं यस्य विज्ञानमाहु-
र्योनिर्ज्येष्ठं यस्य वदन्ति जन्म ।
पूतात्मानो ब्राह्मणा वेदमुख्या
अस्मिन्प्रश्नो दीयतां केशवाय ॥ ६

ब्राह्मण उवाच ।
बालो जात्या क्षत्रधर्मार्थशीलो
जातो देवक्यां शूरपुत्रेण वीर ।
वेत्तुं वेदानर्हते क्षत्रियो वै
दाशार्हाणामुत्तमः पुष्कराक्षः ॥ ७

वासुदेव उवाच ।
पाराशर्य ब्रूहि यद्ब्राह्मणेभ्यः
प्रीतात्मा वै ब्रह्मकल्पः सुमेधाः ।
पृष्टो यज्ञार्थं पाण्डवस्यातितेजा
एतच्छ्रेयस्तस्य लोकस्य चैव ॥ ८

व्यास उवाच ।
उक्तं वाक्य यद्भवान्मामवोच-
न्प्रश्नं चित्रं नाहमत्रोन्महेऽद्य ।
छेत्तुं विस्पष्टं निष्ठाति त्वद्विधे वै
लोकज्येष्ठे विश्वरूपे मुनाभे ॥ ९

वासुदेव उवाच ।
तत्त्वं वाक्यं ब्रूहि यत्त्वं महर्षे
यस्मिन्कृष्णः प्रोच्यते वै यथावत् ।
प्रीतस्तेऽहं ज्ञानशक्त्या यथाव-
त्तस्मान्निर्देशे कर्मणा ब्रूहि सिद्धिम् ॥ १०

वैशंपायन उवाच ।
उक्तवाक्ये सत्तमे यादवानां
कृष्णो व्यासः प्राञ्जलिर्वासुदेवम् ।
विप्रः सार्धं पूजयन्देवदेवं
कृष्णं विष्णुं वासुदेवं बभाषे ॥ ११

व्यास उवाच ।
आनन्त्यं ते विश्वकर्मंस्तवैवं
रूप प शाश्वत च ध्रुवं च
कस्ते वु ादपु चैत-
ल्लोके ह्यस्मिञ्शासकस्त्वं पितेव ॥ १२

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥

## षोडशोऽध्यायः ॥ १६ ॥

भीष्मेण युधिष्ठिरंप्रति भगवन्महिमप्रतिपादकव्यासवचनानुवादः ॥ १ ॥

भीष्म उवाच ।
द्वारकायां यथा प्राह पुराऽयं मुनिसत्तमः
वेदविप्रमयत्वं तु वासुदेवस्य तच्छृणु ॥
यूपं विष्णुं वासुदेवं विजान-
न्सर्वान्विप्रान्बोधते तत्वदर्शी ।
विष्णुं क्रान्तं वासुदेवं विजान-
न्विप्रो विप्रत्वं गच्छते तत्वदर्शी ॥ २
विष्णुर्यज्ञस्त्विज्यते चापि विष्णुः
कृष्णो विष्णुर्यश्च कृत्स्नः प्रभुश्च ।
कृष्णो वेदाङ्गं वेदवादाश्च कृष्ण
एवं जानन्ब्राह्मणो ब्रह्म एति ॥
स्थानं सर्वं वैष्णवं यज्ञमार्गे
चातुर्होत्रं वैष्णवं तत्र कृष्णः ।
सर्वैर्भावैरिज्यते सर्वकामैः
पुण्याँल्लोकान्ब्राह्मणाः प्राप्नुवन्ति ॥
सोमं सद्भावाद्ये च जातं पिबन्ति
दीप्तिं कर्म ये विदानाश्चरन्ति ।
एकान्तमिष्टं चिन्तयन्तो दिविस्था-
स्ते वै स्थानं प्राप्नुवन्ति व्रतज्ञाः ॥
ओमित्येतद्ध्यायमानो न गच्छे-
द्दुर्गं पन्थानं पापकर्मापि विप्रः ।
सर्वं कृष्णं वासुदेवं हि विप्राः
कृत्वा ध्यानं दुर्गतिं न प्रयान्ति ॥

आज्य यज्ञः स्रुक्स्रुवौ यज्ञदाता
इच्छा पत्नी पत्निशाला हवींषि ।
इध्माः पुरोडाशं सर्वदा होतृकर्ता
कृत्स्नं विष्णुं संविजानंस्तमेति ॥ ७
योगेयोगे कर्मणां चाभिहारे
युक्ते वैताने कर्मणि ब्राह्मणस्य ।
पुण्यर्थेषु प्राप्नुयात्कर्मसिद्धिं
शान्त्यर्थेषु प्राप्नुयात्सर्वशान्तिम् ॥' ८

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि षोडशोऽध्यायः ॥ १६ ॥

## सप्तदशोऽध्यायः ॥ १७ ॥

भीष्मेण युधिष्ठिरंप्रति भक्तिश्रद्धादीनां मुक्तिसाधनताप्रतिपादकव्यासवाक्यानुवादः ॥ १ ॥

द्वैपायन उवाच ।
श्रद्धात्यागं निर्वृतिं चापि पूजां
सत्यं धर्मं यः कृतं चाभ्युपैति ।
कामद्वेषौ त्यज्य सर्वेषु तुल्यः
श्रद्धापूतः सर्वयज्ञेषु योग्यः ॥
यस्मिन्यज्ञे सर्वभूताः प्रहृष्टाः
सर्वे चारम्भाः शास्त्रदृष्टाः प्रवृत्ताः
धर्म्यैरर्थ्यैर्ये यजन्ते ध्रुवं ते
पूतात्मानो धर्ममेकं भजन्ते ॥
एकाक्षरं त्र्यक्षरमेकमेव
सदा यजन्ते नियताः प्रतीताः ।
दृष्ट्वा मनागर्चयित्वा स विप्राः
सतां मार्गं तं ध्रुवं संभजन्ते ॥ ३
पापात्मानः क्रोधरागाभिभूताः
कृष्णे भक्ता नाम संकीर्तयन्तः ।
पूतात्मानो यज्ञशीलाः सुमेधा
यज्ञस्यान्ते कीर्तिलोकान्भजन्ते ॥ ४
एको वेदो ब्राह्मणानां बभूव
चतुष्पादस्त्रिगुणो ब्रह्मशीर्षः ।
पादंपादं ब्राह्मणा वेदमाहु-
स्त्रेताकाले तं च तं विद्धि शीर्षम् ॥' ५

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥

---

## अष्टादशोऽध्यायः ॥ १८ ॥

भीष्मेण युधिष्ठिरंप्रति श्रीकृष्णमहिमप्रतिपादकव्यासमद्रराजसंवादानुवादः ॥ १ ॥

'द्वैपायन उवाच ।
सर्वे वेदाः सर्ववेद्याः सशास्त्राः
सर्वे यज्ञाः सर्व इज्यश्च कृष्णः ।
विदुः कृष्णं ब्राह्मणास्तत्त्वतो ये
तेषां राजन्सर्वयज्ञः समाप्तः ॥
ज्ञेयो योगी ब्राह्मणैर्वेदतत्त्वै-
रारण्यकैः सैष कृष्णः प्रभुत्वात्
सर्वान्यज्ञान्ब्राह्मणान्ब्रह्म चैव
व्याप्यातिष्ठद्देवदेवस्त्रिलोके ॥
स एष देवः शक्रमीशं यजानं
प्रीत्या प्राह क्रतुयष्टारमग्र्यम् ।
न मा शक्रो वेदवेदार्थतत्त्वा-
द्भक्तो भक्त्या शुद्धभावप्रधानः ॥ ३
मा जानन्ते ब्रह्मशीर्षं वरिष्ठं
विश्वे विश्वं ब्रह्मयोनिं ह्ययोनिम् ।
सर्वत्राहं शाश्वतः शाश्वतेशः
कृत्स्नो वेदोऽग्निर्निर्गुणोऽनन्ततेजाः ॥ ४
सर्वे देवा वासुदेवं यजन्ते
ततो बुद्ध्या मार्गमाणास्तनूनाम् ।

सर्वान्कामान्प्राप्नुवन्ते विशालां-
त्रैलोक्येऽस्मिन्कृष्णनामाभिधानान् ॥ ५
कृष्णो यज्ञैरिज्यते यायजूकैः
कृष्णो वीर्यैरिज्यते विक्रमद्भिः ।
कृष्णो वाक्यैरिज्यते संमृशानैः
कृष्णो मुक्तैरिज्यते वीतमोहैः ॥ ६
विद्यावन्तः संभ्रमा ये विपापा
इष्ट्वा यज्ञैर्गोचरं प्रार्थयन्ते ।
भगवानुवाच ।
सर्वं क्रान्तं देवलोकं विशाल-
मन्ते गत्वा मुक्तिलोकं भजन्ति ॥ ७
एवं सर्वे त्वाश्रमाः सुव्रता ये
मां जानन्तो यान्ति लोकानदीनान् ।
ये ध्यानदीक्षामुद्वहन्तो विपापा
ज्योतिर्भूत्वा देवलोकं भजन्ति ॥ ८
पूज्यन्ते मां पूजयन्तः प्रहृष्टा
मां जानन्तः श्रद्धया वासुदेवम् ।
भक्त्या तुष्टोऽहं तस्य सत्त्वं प्रयच्छे
मन्त्रस्पृष्टो वीतमोहोऽयमेति ॥
द्वैपायन उवाच ।
ज्योतींषि शुक्लानि च यानि लोके
त्रयो लोका लोकपालास्त्रयश्च ।
त्रयोऽग्नयश्चाहुतयश्च पञ्च
सर्वे देवा देवकीपुत्र एव ॥ १०
भीष्म उवाच ।
व्यासस्यैतद्वचः श्रुत्वा मद्ररत्नः सहर्षिभिः ।
व्यासं कृष्णं च विधिवत्प्रीतात्मा प्रत्यपूजयत् ॥ ११
वैशंपायन उवाच ।
कविः प्रयातस्तु महर्षिपुत्रो
द्वैपायनस्तद्वचनं निशम्य ।
जगाम पृथ्वीं शिरसा महात्मा
नमश्च कृष्णाय चकार भीष्मः ॥ १२

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥

## एकोनविंशोऽध्यायः ॥ १९ ॥

श्रीकृष्णेन भीष्मंप्रति युधिष्ठिराय गरुडोपाख्यानकथनचोदना ॥ १ ॥

'युधिष्ठिर उवाच ।
गरुडः पक्षिणां श्रेष्ठ इति पूर्वं पितामह ।
उक्तस्त्वया महाबाहो श्वेतवाहं प्रशंसता ॥
अत्र कौतूहल इति श्रवणे जायते मतिः ।
कथं गरुत्मान्पक्षीणां श्रैष्ठ्यं प्राप परन्तप ॥
सुपर्णो वैनतेयश्च केन शत्रुश्च भोगिनाम् ।
किंवीर्यः किंबलश्चासौ वक्तुमर्हसि भारत ॥
भीष्म उवाच ।
महाबाहो देवकी सुप्रजास्त्वया
श्रुतं ते धर्मराजस्य मम हर्षविवर्धन ॥ ४
सुपर्णं शंस इत्येव मामाह कुरुनन्दनः ।
अस्य प्रवक्तुमिच्छामि त्वयाऽज्ञप्तो महाद्युते ॥ ५
त्वं हि शौरे महाबाहो सुपर्णः प्रोच्यसे पुरा ।
अनादिनिधने काले गरुडश्चासि केशव ॥ ६
तस्मात्पूर्वं प्रसाद्य त्वां धर्मपुत्राय धीमते ।
गरुडं पततांश्रेष्ठं वक्तुमिच्छामि माधव ॥ ७
वासुदेव उवाच ।
यथैव मां भवान्वेद तथा वेद युधिष्ठिरः ।
यथा च गरुडो जातस्तथाऽस्मै ब्रूहि तत्वतः' ॥ ८

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि एकोनविंशोऽध्यायः ॥ १९ ॥

## विंशोऽध्यायः ॥ २० ॥

भीष्मेण स्वभार्ययोः कद्रूविनतयोः क्रमेण पुत्रसहस्रतद्द्वयलाभरूपवरदानम् ॥ १ ॥ कद्र्वा अण्डसहस्रात्सर्पसहस्रविनिर्गमे उत्कण्ठितया विनतया स्वीयाण्डद्वये एकतराण्डविभेदनम् ॥ २ ॥ अकालेऽण्डभेदनादसमग्राङ्गतया जातेनारुणेन विनतायै दास्यप्राप्तिरूपशापदानम् ॥ ३ ॥

भीष्म उवाच ।
युधिष्ठिर महाबाहो शृणु राजन्यथातथम् ।
गरुडं पक्षिणां श्रेष्ठं वैनतेयं महाबलम् ॥ १
तथा च गरुडो राजन्सुपर्णश्च यथाऽभवत् ।
यथा च भुजगान्हन्ति तथा मे ब्रुवतः शृणु ॥२
पुराऽहं तात रामेण जामदग्न्येन धीमता
कैलासशिखरे रम्ये मृगान्निघ्नन्सहस्रशः ॥ ३
तमहं तात दृष्ट्वैव शस्त्राण्युत्सृज्य सर्वशः ।
अभिवाद्य पूर्वं रामाय विनयेनोपतस्थिवान् ॥ ४
तमहं कथान्ते वरदं सुपर्णस्य बलौजसी ।
अपृच्छं स च मां प्रीतः प्रत्युवाच युधिष्ठिर ॥५
कद्रूश्च विनता चास्तां प्रजापतिसुते उभे ।
ते तु धर्मेणोपयेमे मारीचः कश्यपः प्रभुः ॥ ६
प्रादात्ताभ्यां वरं प्रीतो भार्याभ्यां सुमहातपाः॥७
तत्र कद्रूर्वरं वव्रे पुत्राणां दशतः शतम्
तुल्यतेजःप्रभावानां सर्वेषां तुल्यजन्मनाम् ॥ ८
विनता तु वव्रे द्वौ पुत्रौ वीरौ भरतसत्तम
कद्रूपुत्रसहस्रेण तुल्यवेगपराक्रमौ ॥ ९
स तु ताभ्यां वरं प्रादात्तथेत्युक्त्वा महातपाः ।
जनयामास तान्पुत्रांस्ताभ्यामासीद्यथा पुरा॥१०
कद्रूः प्रजज्ञे ह्यण्डानां तथैव दशतःशतम् ।
अण्डे द्वे विनता चैव दर्शनीयतरे शुभे ॥ ११
तानि त्वण्डानि तु तयोः कद्रूविनतयोर्द्वयोः ।
सोपस्वेदेषु पात्रेषु निदधुः परिचारिणः ॥ १२
निस्सरन्ति तदाऽण्डेभ्यः कद्रूपुत्रा भुजङ्गमाः ।
पञ्चवर्षशते काले दृष्ट्वाऽमोघबलौजसः ॥ १३
विनता तेषु जातेषु पन्नगेषु महात्मसु
विपुत्रा पुत्रसंतापादण्डमेकं बिभेद ह ॥ १४
किमनेन करिष्येऽहमिति वाक्यमभाषत ।
नहि पञ्चशते काले पुरा पुत्रौ ददर्श सा ॥ १५
सापश्यदण्डान्निष्क्रान्तं विनापत्रं मनस्विनम् ।
पूर्वकायोपसंपन्नं वियुक्तमितरेण ह ॥ १६
दृष्ट्वा तु तं तथारूपमसमग्रशरीरिणम् ।
पुत्रदुःखान्विताऽशोचत्स च पक्षी तथा गतः॥१७
अब्रवीच्च मुदा युक्तः पर्यश्रुनयनस्तदा ।
मातरं च पलाशी ह हतोऽहमिति चासकृत् ॥१८
न त्वया काङ्क्षितः कालो यावानेवात्यगात्पुरा
आवां भवाव पुत्रौ ते श्वसनाद्बलवत्तरौ ॥ १९
ईर्ष्याक्रोधाभिभूतत्वाद्योहमेवं कृतस्त्वया ।
तस्मात्त्वमपि मे मातर्दासीभावं गमिष्यसि ॥ २०
पञ्चवर्षशतानि त्वं स्पर्धसे वै यया सह ।
दासी तस्या भवित्रीति साश्रुपातमुवाच ह ॥२१
एष चैव महाभागे बली बलवतांवरः ।
मोक्षयिष्यति ते मातर्दासीभावान्ममानुजः ॥ २२

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि विंशोऽध्यायः ॥ २० ॥

## एकविंशोऽध्यायः ॥ २१ ॥

वर्षसहस्रान्ते परिणतादण्डाद्विनिर्गतेन गरुडेन मातृपार्श्वं विहाय चिराद्देशान्तरेष्वेव संचरणम् ॥ १ ॥ कदाचन कद्रूविनताभ्यां समुद्रान्ते उच्चैश्रवसो हयस्य दर्शनम् ॥ २ ॥ कद्र्वा हयस्य वर्णं पृष्टया विनतया सर्वाङ्गश्वेतत्वकथनम् । कद्र्वा तु नीलवालत्वकथनम् ॥ ३ ॥ तथा विवदमानाभ्यां ताभ्यां स्वोक्तव्यत्यासे अन्यतरयाऽन्यतरस्या दास्यवहनरूपपणबन्धनम् ॥ ४ ॥

भीष्म उवाच ।
विनता पुत्रशोकार्ता शापाद्भीता च भारत
प्रतीक्षते स तं कालं यः पुत्रोक्तस्तदाऽभवत् ॥१

रामेण संगत इति शेषः ॥ ३ ॥ विंशोऽध्याय. ॥ २० ॥

ततोऽप्यर्नीते पञ्चशते वर्षाणां कालसंयुगे ।
गरुडोऽथ महावीर्यो जज्ञे भुजगभुग्बली ॥ २
बन्धुरास्यः शिखी पत्रकोशः कूर्मनखो महान् ।
रक्ताक्षः महतग्रीवो ह्रस्वपादो महाशिराः ॥ ३
यस्त्वण्डात्स विनिर्भिन्नो निष्क्रान्तो भरतर्षभ ।
विनतापूर्वजः पुत्रः सोऽरुणो दृश्यते दिवि ॥ ४
पूर्वां दिशामभिप्रेत्य सूर्यस्योदयनं प्रति ।
अरुणोऽरुणसंकाशो नाम्ना चैवारुणः स्मृतः ॥५
जातमात्रस्तु विहगो गरुडः पन्नगाशनः ।
विहाय मातरं क्षिप्रमगमत्सर्वतो दिशः ॥ ६
स तदा ववृधेऽतीव सर्वकामैः सदार्चितः ।
पितामहविसृष्टेन भोजनेन विशांपते ॥ ७
तस्मिंश्च विहगे तत्र यथाकामं विवर्धति ।
कद्रूश्च विनता चैवागच्छतां सागरं प्रति ॥ ८
ददृशाते तु ते यान्तमुच्चैःश्रवसमन्तिकात् ।
स्नात्वोपवृत्तं त्वरितं पीतवन्तं च वाजिनम् ॥ ९
ततः कद्रूर्हमन्त्र्येव विनतामिदमब्रवीत् ।
हयस्य वर्णः को न्वत्र ब्रूहि यन्ते मतः शुभे ॥ १०
विनतोवाच ।
एकवर्णो हयो राज्ञि सर्वश्वेतो मतो मम ।
वर्णं त्वा कीदृशं तस्य मन्यसे त्वं मनस्विनि ॥ ११
कद्रूरुवाच ।
सर्वश्वेतो मतस्तुभ्यं य एष हयसत्तमः ।
ब्रूहि कल्याणि दीव्यावो वर्णान्यत्वेन भामिनि १२
विनतोवाच ।
यद्यार्ये दीव्यसि त्वं मे कः पणो नो भविष्यति ।
सा तज्ज्ञात्वा पणेयं वै ज्ञात्वा तु विपणे त्वया ॥ १३
कद्रूरुवाच ।
जिता दासी भवेर्मे त्वमहं चाप्यमितेक्षणे ।
नैकवर्णैकवर्णत्वे विनते रोचते च ते ॥ १४
रोचते मे पणे राज्ञि दासीत्वेन न संशयः ।
सत्यमातिष्ठ भद्रं ते सत्ये स्थास्यामि चाप्यहम् १५

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि एकविंशोऽध्यायः ॥ २१ ॥

## द्वाविंशोऽध्यायः ॥ २२ ॥

कद्र्वा स्वपुत्रान्प्रति विनतया सह स्वस्य पणबन्धननिवेदनपूर्वकमुच्चैःश्रवसो वाले स्वाङ्गवेष्टनेन नैल्यसंपादनचोदना ॥ १ ॥

भीष्मउवाच ।
विनता तु तथेत्युक्त्वा कृतसंशयना पणे ।
कद्रूरपि तथेत्युक्त्वा पुत्रानिदमुवाच ह ॥ १
मया कृतः पणः पुत्रा मिथो विनतया सह ।
उच्चैःश्रवसि गान्धर्वे तच्छृणुध्वं भुजङ्गमाः ॥ २
अब्रवं नैकवर्णं तं सैकवर्णमथाब्रवीत् ।
जिता दासी भवेत्पुत्राः सा वाऽहं वा न संशयः ॥ ३
एकवर्णश्च वाजी स चन्द्रकोकनदप्रभः ।
साऽहं दासी भविष्यामि जिता पुत्रा न संशयः ॥ ४
ते यूयमश्वप्रवरमाविशध्वमतन्द्रिताः ।
सर्वश्वेतं वालधिषु वाला भूत्वाञ्जनप्रभाः ॥ ५
सर्पा ऊचुः ।
निकृत्या न जयः श्रेयान्मातः सत्या गिरः शृणु ।
आयत्यां च तदात्वे च न च धर्मोऽत्र विद्यते ६
सा त्वं धर्मादपेतं वै कुलस्यैवाहितं तव ।
निकृत्या विजयं मातर्मा स कार्षीः कथंचन ॥ ७
यद्यधर्मेण विजयं वयं काङ्क्षामहे क्वचित् ।
त्वया नाम निवार्याः स्म मा कुरुध्वमिति ध्रुवम् ॥ ८
सा त्वमस्मानपि सतो विपापानृजुबुद्धिनः ।
कल्मषेणाभिसंयोक्तुं काङ्क्षसे लोभमोहिता ॥ ९
ते वयं त्वां परित्यज्य द्रविष्याम दिशो दश ।
यत्र वाक्यं न ते मातः पुनः श्रोष्याम ईदृशम् १०
गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथं प्रतिपन्नस्य परित्यागो विधीयते ॥ ११
कद्रूरुवाच ।
शृणोमि विविधा वाचो हेतुमत्यः समीरिताः ।
वक्रमार्गनिवृत्त्यर्थं तदहं वो न रोचये ॥ १२
न च तत्पणितं मन्दाः शक्यं जेतुमतोऽन्यथा ।

जिते निकृत्या श्रुत्वैनत्क्षेमं कुरुत पुत्रकाः ॥१३
श्वोऽहं प्रभातसमये जिता धर्मेण पुत्रकाः ।
शैलूपर्णी भविष्यामि विनताया न संशयः॥१४
इह चामुत्र चार्थाय पुत्रानिच्छन्ति मातरः ।
मयेमीहा विपन्ना मे युष्मानासाद्य संगताम्॥१५
इह वा तारयेत्पुत्रः प्रेत्य वा तारयेत्पितॄन् ।
नात्र चित्रं भवेत्किंचित्पुनातीति च पुत्रकः॥१६
ते यूयं तारणार्थाय मम पुत्रा मनोजवाः ।
आविशध्वं हयश्रेष्ठं वाला भूत्वाऽञ्जनप्रभाः॥१७
जानाम्यधर्मं सकलं विजिता विनता भवेत् ।
निकृत्या दासभावस्तु युष्मानप्यवपीडयेत् ॥१८
निकृत्या विजयो वेति दासत्वं वा पराभवे ।
उभयं निश्चयं कृत्वा जयो वै धार्मिको वरः॥१९
यद्यप्यधर्मो विजयो युष्मानेव स्पृशेत्पुनः ।
गुरोर्वचनमास्थाय धर्मो वा संभविष्यति ॥' २०

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि द्वाविंशोऽध्यायः ॥ २२ ॥

## त्रयोविंशोऽध्यायः ॥ २३ ॥

कद्र्वा स्ववचननिरस्कारिणः कांश्चन पुत्रान्प्रति जनमेजयसर्पसत्रे निधनरूपशापदानम् ॥ १ ॥ कैश्चन सर्पैरुच्चैःश्रवसो वाले स्वाङ्गवेष्टनेन नैल्यसंपादनम् ॥ २ ॥ ततः कद्रूचोदनया हयवाले नैल्यदर्शिन्या विनतया तद्दास्याङ्गीकरणम् ॥ ३ ॥

'भीष्म उवाच ।
श्रुत्वा तु वचनं मातुः कद्र्वायास्ते भुजङ्गमाः ।
कृच्छ्रेणैनान्विमोदन्त केचिद्वित्वा दिशो गताः १
ये प्रतस्थुर्दिशस्तत्र क्रुद्धा तानशपद्भृशम् ।
भुजङ्गमाना माताऽसा कद्रूर्वरकरा तदा ॥ २
उत्पत्स्यति हि राजन्यः पाण्डवो जनमेजयः ।
चतुर्थो धन्विनां श्रेष्ठात्कुन्तीपुत्राद्धनञ्जयात् ॥ ३
स सर्पसत्रमाहर्ता क्रुद्धः कुरुकुलोद्वहः ।
तस्मिन्सत्रेऽग्निना युष्मान्पञ्चत्वमुपनेष्यति ॥ ४
एवं क्रुद्धाऽशपन्माता पन्नगान्धर्मचारिणः ।
गुरोः परित्यागकृतं नैतदन्यद्भविष्यति ॥ ५
एवं शप्ता दिशः प्राप्ताः पन्नगा धर्मचारिणः ।
विहाय मातरं क्रुद्धा गता वैरकरीं तदा ॥ ६
तत्र ये वृजिनं तस्या अनापन्ना भुजङ्गमाः
ते तस्य वाजिनो वाला बभूवुरसितप्रभाः ॥ ७
तान्दृष्ट्वा वालधिस्थांश्च पुत्रान्कद्रूस्थाब्रवीत् ।
विनतामथ संहृष्टा हयोसौ दृश्यतामिति ॥ ८
एकवर्णो न वा भद्रे पणो नौ सुव्यवस्थितः ।
उदकादुत्तरन्तं तं हयं चैव च भामिनि ॥ ९
सा त्ववक्रमतिर्देवी विनता जिह्मगामिनीम् ।
अब्रवीद्भगिनीं किंचिद्विहसन्तीव भारत ॥ १०
हन्त पश्याव गच्छावः सुकृतो नौ पणः शुभे ।
दासी वा ते भविष्यामि त्वं वा दासी भविष्यसि ॥
एवं स्थिरं पणं कृत्वा हयं ते तं ददर्शतुः ।
कृत्वा साक्षिणमात्मानं भगिन्यौ कुरुसत्तम ॥१२
सा दृष्ट्वैव हयं मन्दं विनता शोककर्शिता ।
श्वेतं चन्द्रांशुवालं तं कालवालं मनोजवम् ॥१३
तत्र सा व्रीलिता वाक्यं विनता साश्रुबिन्दुका
उवाच कालवालोऽयं तुरगो विजितं त्वया ॥१४
दासी मां प्रेष्य स्वार्थे यथा कामवशां शुभे ।
दासश्च कामकारा हि भर्तॄणां नात्र संशयः॥'१५

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥

हयमुद्दिश्य नौ पणः सुव्यवस्थित इति शेषेणान्वयः ॥ ९ ॥ त्रयोविंशोऽध्यायः ॥ २३ ॥

## चतुर्विंशोऽध्यायः ॥ २४ ॥

नारदेन गरुडंप्रति विनताया कद्रूदास्यनिवेदनम् ॥ १ ॥ तच्छ्रवणखिन्नेन तेन कद्रूंप्रति स्वमातुर्दास्यान्मोचनप्रार्थना ॥ २ ॥ कद्र्वा गरुडंप्रत्यमृतानयने मातुर्दास्यान्मोचनोक्तिः ॥ ३ ॥

---

'भीष्म उवाच ।
ततः कद्रूर्हसन्ती च विनतां धर्मचारिणीम् ।
दासीवत्प्रेषयामास सा च सर्वं चकार तत् ॥ १
न विवर्णा न संक्षुब्धा न च क्रुद्धा न दुःखिता ।
प्रेष्यकर्म चकारास्या विनता कमलेक्षणा ॥
इमा दिशश्चतस्रोऽस्याः प्रेष्यभावेन वर्तिताः
अथ स्म वैनतेयं वै बलदर्पौ समीयतुः ॥ ३
तं दर्पवशमापन्नं परिधावन्तमन्तिकात् ।
ददर्श नारदो राजन्देवर्षिर्दर्पसंयुतम् ॥ ४
तमब्रवीच्च देवर्षिर्नारदः प्रहसन्निव
किं दर्पवशमापन्नो न वै पश्यसि मातरम् ॥ ५
बलेन दृप्तः सततमहंमानकृतः सदा ।
दासीं पन्नगराजस्य मातुरन्तर्गृहे सतीम् ॥ ६
तमब्रवीद्वैनतेयः कर्म किं तन्महामते
जनयित्री मयि सुते जाता दासी तपस्विनी ॥७
अथाब्रवीदृषिर्वाक्यं दीव्यती विजिता खग ।
निकृत्या पन्नगेन्द्रस्य मात्रा पुत्रैः पुरा सह ॥ ८
गरुड उवाच ।
कथं जिता निकृत्या सा भगवञ्जननी मम ।
ब्रूहि तन्मे यथावृत्तं श्रुत्वा वेत्स्ये ततः परम् ॥९
ततस्तस्य यथावृत्तं सर्वं तन्नारदस्तदा ।
आचख्यौ भरतश्रेष्ठ यथावृत्तं पतत्रिणः ॥ १०
तच्छ्रुत्वा वैनतेयस्य कोपो हृदि समाविशत् ।
जगर्हे पन्नगान्सर्वान्मात्रा सह परंतपः ॥ ११
ततस्तु रोषाद्दुःखाच्च तूर्णमुत्पत्य पक्षिराट् ।
जगाम यत्र माताऽस्य कृच्छ्रे महति वर्तते ॥ १२
तत्रापश्यत्ततो दीनां जटिलां मलिनां कृशाम् ।
तोयदेन प्रतिच्छन्नां सूर्याभामिव मातरम् ॥ १३
तस्य दुःखाच्च रोषाच्च नेत्राभ्यामश्रु चास्रवत्
प्रवृत्तिं च निवृत्तिं च पौरुषे प्रतितस्थुषः ॥ १४
अनुक्त्वा मातरं किंचित्पतत्रिवरपुङ्गवः ।
कद्रूमेव स धर्मात्मा वचनं प्रत्यभाषत ॥ १५
यदि धर्मेण मे माता जिता यद्यप्यधर्मतः ।
ज्येष्ठा त्वमसि मे माता धर्मः सर्वः स मे मतः ॥१६
इयं तु मे स्यात्कृपणा मयि पुत्रेऽम्ब दुःखिता ।
अनुजानीहि तां साधु मत्कृते धर्मदर्शिनि ॥ १७
कद्रूः श्रुत्वास्य तद्वाक्यं वैनतेयस्य धीमतः ।
उवाच वाक्यं दुष्प्रज्ञा परीता दुःखमूर्च्छिता॥१८
नाहं तव न ते मातुर्वैनतेय कथंचन ।
कुर्यां प्रियमनिष्टात्मा मां ब्रवीषि खग द्विज॥१९
तां तदा ब्रुवतीं वाक्यमनिष्टं क्रूरभाषिणीम् ।
दारुणां सूनृताभिस्तामनुनेतुं प्रचक्रमे ॥ २०
गरुड उवाच ।
ज्येष्ठा त्वमसि कल्याणि मातुर्मे भामिनि प्रिया ।
सोदर्या मम चासि त्वं ज्येष्ठा माता न संशयः॥२१
कद्रूरुवाच ।
विहंगम यथाकामं गच्छ कामगम द्विज ।
सूनृताभिस्त्वया माता नादासी शक्यमण्डज॥२२
अमृतं यद्याहरेस्त्वं विहङ्ग जननीं तव ।
अदासीं मम पश्येमां वैनतेय न संशयः ॥ २३

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥

## पञ्चविंशोऽध्यायः ॥ २५ ॥

कद्र्वाऽमृताहरणं चोदितेन गरुडेन स्वपितरि कश्यपे तन्निवेदनम् ॥ १ ॥ तेन तस्य दुष्करत्वकथने गरुडेन स्वेन तस्य सुकरत्वोक्तिः ॥ २ ॥ कश्यपेन गरुडंप्रति गजकच्छपवृत्तान्तकथनपूर्वकं तयोर्भक्षणाद्बलाप्यायनसंपादनेनामृताहरणचोदना ॥ ३ ॥

---

'भीष्म उवाच
तथेत्युक्त्वा तु विहगः प्रतिज्ञाय महाद्युतिः ।

अमृताहरणे वाक्ये ततः पितरमब्रवीत् ॥ १
कामं मे मातृता वाचो विसृज्य च मुहुर्मुहुः ।
यच्चाप्यनुज्ञां मातुर्वै न च मा ह्यनुमन्यते ॥ २
मा मा बहुविधा वाचो वज्रकल्पा विसृज्य वै ।
भगवन्विनता दासी मम माता महाद्युते ॥ ३
कद्रुः प्रपयने चैव दासीयमिति चाब्रवीत् ।
आहरामृतमित्येव मोक्ष्यते विनता ततः ॥ ४
सोऽहं मातृविमोक्षार्थमाहरिष्य इति ब्रुवन् ।
अमृतं प्रार्थितस्तूर्णमाहर्तुं प्रतिनन्द्य वै ॥
पितोवाच ।
अमृतं तात दुष्प्रापं देवैरपि कुतस्त्वया ।
रक्ष्यते हि भृशं पुत्र रक्षिभिस्तन्निबोध मे ॥ ६
गुप्तमद्भिर्भृशं साधु सर्वतः परिवारितम् ।
अनन्तरमथो गुप्तं ज्वलता जातवेदसा ॥ ७
ततः शतसहस्राणि अयुतान्यर्बुदानि च ।
रक्षन्त्यमृतमत्यन्तं किङ्करा नाम राक्षसाः ॥ ८
तेषां शक्त्यृष्टिशूलांश्च शतघ्न्यः पट्टसास्तथा ।
आयुधा रक्षिणां तात वज्रकल्पाः शिलास्तथा॥९
ततो जालेन महता अवनद्धं समन्ततः ।
अयस्मयेन वै तात वृत्रहन्तुः स शासनात् ॥ १०
न त्वमेवंविधं तात कथं प्रार्थयसेऽमृतम् ।
सुरक्षितं वज्रभृता वैनतेय विहङ्गम ।
इन्द्रेण देवैर्नागैश्च खड्गैर्गिरिजलादिभिः ॥ ११
गरुड उवाच ।
पुत्रगृद्ध्या ब्रवीष्येतच्छृणु तात विनिश्चयम् ।
बलवानुपायवानस्मि भूयः किं करवाणि ते ॥१२
तमब्रवीत्पिता हृष्टः प्रहसन्वै पुनः पुनः ।
यदि तौ भक्षयेस्तात क्रूरौ कच्छपवारणौ ॥ १३
तथा बलममेयं ते भविता तन्न संशयः ।
अमृतस्यैव चाहर्ता भविष्यसि न संशयः ॥ १४
गरुड उवाच ।
क तौ क्रूरौ महाभाग वर्तेते हस्तिकच्छपौ ।
भक्षयिष्याम्यहं तात बलस्याप्यायनं प्रति ॥ १५
कश्यप उवाच ।
पर्वतो वै समुद्रान्ते नभः स्तब्ध्वेव तिष्ठति ।
उरगो नाम दुष्प्रापः पुरा देवगणैरपि ॥ १६
गोरुतानि स विस्तीर्णः पुष्पितद्रुमसानुमान् ।
तत्र पन्थाः कृतस्तात कुञ्जरेण बलीयसा ॥ १७
गोरुतान्युच्छ्रयस्तस्य नव सप्त च पुत्रक ।
गच्छताऽगच्छता चैव क्षपितः स महागिरिः ॥१८
तावान्भूमिसमस्तात कृतः पन्थाः समुत्थितः ।
तेन गत्वा स मातङ्गः पिपासुर्युद्धमिच्छति ॥ १९
तमतीत्य तु शैलेन्द्रं ह्रदः कोकनदायुतः ।
कनकेति च विख्यातस्तत्र कूर्मो महाबलः ॥२०
गोरुतानि स विस्तीर्णः कच्छपः कुञ्जरश्च सः ।
आयामतश्चापि समौ तेजोबलसमन्वितौ ॥ २१
पुनरावृत्तिमापन्नौ तावेतौ मधुकैटभौ ।
जन्मान्तरे विमूढौ परस्परवधैषिणौ ॥ २२
यदा स नागो व्रजति पिपासुस्तं जलाशयम् ।
तदैनं कच्छपो रोषात्प्रतियाति महाबलः ॥ २३
नखैश्च दशनैश्चापि निमज्योन्मज्य वाऽसकृत् ।
विददाराग्रहस्तेन कुञ्जरं तं जलेचरः ॥ २४
नागराडपि तोयार्थी पिपासुश्चरणैरपि ।
अग्रहस्तेन दन्ताभ्यां निवारयति वारिजम् ॥२५
स तु तोयादनुत्तिष्ठन्वारिजो गजयूथपम् ।
नखैश्च दशनैश्चैव द्विरदं प्रतिषेधति ॥ २६
निवारितो गजश्रेष्ठः पुनर्गच्छति स्वं वनम् ।
पिपासुः छिन्नहस्ताग्रो रुधिरेण समुक्षितः ॥ २७
तौ गच्छ सहितौ पुत्र यदि शक्नोषि भक्षय ।
न तौ पृथक्त्वया शक्यावप्रमत्तौ बले स्थितौ ॥ २८

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥

गोरुतानि गव्यूतीः ॥ १७ ॥

## षड्विंशोऽध्यायः ॥ २६ ॥

गरुडेन गजकच्छपावासमेत्य चरणाभ्यां तयोर्ग्रहणम् ॥ १ ॥ तथा तयोर्भक्षणाय नैमिषारण्यस्थमहातरुशाखायां वेगान्निपतनम् ॥ २ ॥ तथा स्वनिपतनमात्रेण भज्यमानशाखाया अधोभागे लम्बमानमुनिगणावलोकनात्तुण्डेन तच्छाखाग्रहणपूर्वकं पुनरुत्पतनम् ॥ ३ ॥ तथा देवदूतवचनात्समुद्रान्ते शाखाविसर्जनेन तन्निवासिनां कुविन्दानां हननम् ॥ ४ ॥

गरुड उवाच ।
कथं तौ भगवञ्शक्यौ मया वारणकच्छपौ ।
युगपद्गृहीतुं तं मे त्वमुपायं वक्तुमर्हसि ॥ १
कश्यप उवाच ।
योद्धुकामे गजे तस्मिन्मुहूर्तं स जलेचरः ।
उत्तिष्ठति जलात्तूर्णं योद्धुकामः पुनःपुनः ॥ २
जलजं निर्गतं तात प्रमत्तं चैव वारणम् ।
ग्रहीष्यसि पतङ्गेश नान्यो योगोऽत्र विद्यते ॥ ३
भीष्म उवाच ।
इत्येवमुक्तो विहगस्तद्गत्वा वनमुत्तमम् ।
ददर्श वारणेन्द्रं तं मेघाचलसमप्रभम् ॥ ४
तां स नागो गिरेर्वीथिं संप्राप्त इव भारत ।
स तं दृष्ट्वा महाभागः संप्रहृष्टतनूरुहः ॥ ५
विभक्षयिषितो राजन्दारुणस्य महात्मनः ।
मातङ्गं कच्छपं चैव प्रहर्षः सुमहानभूत् ॥ ६
अथ वेगेन महता खेचरः स महाबलः ।
संकुच्य सर्वगात्राणि कृच्छ्रेणैवान्वपद्यत ॥ ७
तथा गत्वा तमध्वानं वारणप्रवरो बली ।
निशश्वास महाश्वासः श्रमाद्विश्रमणाय च ॥ ८
तस्य निश्वासवातेन मदगन्धेन चैव ह ।
उदतिष्ठन्महाकूर्मो वारणप्रतिषेधकः ॥ ९
तयोः सुतुमुलं युद्धं ददर्श पतगेश्वरः ।
कच्छपेन्द्रद्विरदयोरिन्द्रप्रह्लादयोरिव ॥ १०
स्पृशन्तमग्रहस्तेन तोयं वारणयूथपम् ।
दन्तैर्नखैश्च जलजो वारयामास भारत ॥ ११
जलजं वारणोऽप्येवं चरणैः पुष्करेण च ।
प्रत्यषेधन्निमज्जन्तमुन्मज्जन्तं तथैव च ॥ १२
मुहूर्तमभवद्युद्धं तयोर्भीमप्रदर्शनम् ।
अथ तस्माज्जलाद्राजन्कच्छपः स्थलमास्थितः ॥ १३
स तु नागः प्रभग्नोऽपि पिपासुर्न न्यवर्तत ।
तोयगृध्नुः शनैस्तत्पादपासर्पत पृष्ठतः ॥ १४
तं दृष्ट्वा जलजस्तूर्णमपमर्पन्तमाहवात् ।
अभिदुद्राव वेगेन वज्रपाणिरिवासुरम् ॥ १५
तं रोषात्स्थलमुत्तीर्णमसंप्राप्तं गजोत्तमम् ।
उभावेव समस्तौ तु जग्राह विनतासुतः ॥ १६
चरणेन तु सव्येन जग्राह स गजोत्तमम् ।
प्रस्पन्दमानं बलवान्दक्षिणेन तु कच्छपम् ॥ १७
उत्पपात ततस्तूर्णं पन्नगेन्द्रनिषूदनः ।
दिवं खं च समुत्पत्य पक्षाभ्यामपराजितः ॥ १८
तेन चोत्पतता तूर्णं संगृहीतौ नखैर्भृशम् ।
वज्रगर्भैः सुनिशितैः प्राणांस्तूर्णं मुमोचतुः ॥ १९
तौ गृह्य बलवांस्तूर्णं स्रस्तपादशिरोधरौ ।
विवल्गन्निव खे क्रीडन्खेचरोऽभिजगाम ह ॥ २०
अत्तुकामस्ततो वीरः पृथिव्यां पृथिवीपते ।
निरैक्षत न चापश्यद्द्रुमं पर्याप्तमासितुम् ॥ २१
नैमिषं त्वथ संप्राप्य देवारण्यं महाद्युतिः ।
अपश्यत द्रुमं कंचिच्छाखास्कन्धसमावृतम् ॥ २२
हिमवच्छिखरप्रख्यं योजनद्वयमुच्छ्रितम् ।
परिणाहेन राजेन्द्र नल्वमात्रं समन्ततः ॥ २३
तस्य शाखाऽभवत्काचिदायता पञ्चयोजनम् ।
दृढमूला दृढस्कन्धा वज्रपत्रसमाचिता ॥ २४
तत्रोपविष्टः सहसा वैनतेयो निगृह्य तौ ।
अत्तुकामस्ततः शाखा तस्य वेगादवापतत् ॥ २५
तां पतन्तीमभिप्रेक्ष्य प्रेक्ष्य चर्षिगणानधः ।
आसीनान्वसुभिः सार्धं सत्रेण जगतीपते ॥ २६
वैखानसान्नाम यतीन्वालखिल्यगणानपि ।
तत्र भीराविशत्तस्य पतगेन्द्रस्य भारत ॥ २७
तान्दृष्ट्वा स यतींस्तत्र समासीनान्सुरैः सह ।
तुण्डेन गृह्य तां शाखामुत्पपात खगेश्वरः ।

तां च पक्षी भुजंगाशो व्योम्नि क्रीडन्निवाव्रजत् २८
तं दृष्ट्वा गुरुसंभारं प्रगृह्योत्पतितं खगम् ।
ऋषयस्तेऽब्रुवन्सर्वे गरुडोऽयमिति स ह ।
न त्वन्यः क्षमते कश्चिद्यथाऽयं वीर्यवान्खगः ॥२९
असौ गच्छति धर्मात्मा गुरुभारसमन्वितः ।
अयं क्रीडन्निवाकाशे तस्माद्गरुड एव सः ॥ ३०
एवं ते समयं सर्वे वसवश्च दिवौकसः ।
अकार्षुः पक्षिराजस्य गरुडेत्येव नाम ह ॥ ३१
स पक्षी पृथिवीं सर्वां परिधावंस्ततस्ततः ।
:: शाखिनः शाखां न स देशमपश्यत ॥३२
स वाचमशृणोद्दिव्यामुपर्युपरि जल्पतः ।
देवदूतस्य विस्पष्टमाभाष्य गरुडेति च ॥ ३३
वैनतेय कुविन्देषु समुद्रान्ते महाबल ।
पात्यतां शाखिनः शाखा न हि ते धर्मनिश्चयाः ३४
तच्छ्रुत्वा गरुडस्तूर्णं जगाम लवणाम्भसः ।
उद्देशं यत्र ते मन्दाः कुविन्दाः पापकर्मिणः ॥३५
ततो गत्वा ततः शाखां मुमोच पततांवरः ।
तया हता जनपदास्तदा षड्विंशतो नृप ॥ ३६
स देशो राजशार्दूल ख्यातः परमदारुणः ।
शाखापतग इत्येव कुविन्दानां महात्मनाम् ॥ ३७

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि षड्विंशोऽध्यायः ॥ २६ ॥

## सप्तविंशोऽध्यायः ॥ २७ ॥

गरुडेन शैलाग्रे उपविश्य गजकच्छपयोर्भक्षणम् ॥ १ ॥ ततः स्वर्गेऽमृतसमीपं गतेन तेन तत्र परितो ज्वलदग्निदर्शनभयाद्ब्रह्माणं प्रति तच्छमनोपायप्रश्नः ॥ २ ॥ ब्रह्मणा तंप्रति नवनीतप्रक्षेपेणाग्निसंशामनचोदना ॥ ३ ॥

भीष्म उवाच ।
हत्वा तं पक्षिशार्दूलः कुविन्दानां जनं व्रती ।
उपोपविश्य शैलाग्रे भक्षयामास तावुभौ ।
वारणं कच्छपं चैव संहृष्टः स पतत्रिराट् ॥ १
तयोः स रुधिरं पीत्वा मेदसी च परन्तप ।
संहृष्टः पततांश्रेष्ठो लब्ध्वा बलमनुत्तमम् ।
जगाम देवराजस्य भवनं पन्नगाशनः ॥ २
तं प्रणम्य महात्मानं पावकं विस्फुलिङ्गिनम् ।
रात्रिंदिवं प्रज्वलितं रक्षार्थममृतस्य ह ॥ ३
तं दृष्ट्वा विहगेन्द्रस्य भयं तीव्रमुपाविशत् ।
नतु तोयान्न रक्षिभ्यो भयमस्योपपद्यते ॥ ४
पक्षित्वमात्मनो दृष्ट्वा ज्वलन्तं च हुताशनम् ।
पितामहमथो गत्वा ददर्श भुजगाशनः ॥ ५
तं प्रणम्य महात्मानं गरुडः प्रयताञ्जलिः ।
प्रोवाच तदसंदिग्धं वचनं पन्नगेश्वरः ॥ ६
उद्यतं गुरुकृत्ये मां भगवन्धर्मनिश्चितम् ।
विमोक्षणार्थं मातुर्हि दासभावादनिन्दितम् ॥ ७
कद्रूसकाशममृतं मयाहर्तव्यमीश्वर ।
तदा मे जननी देव दासभावात्प्रमोक्ष्यते ॥ ८
तत्रामृतं प्रज्वलितो नित्यमीश्वर रक्षति ।
हिरण्यरेता भगवान्पाकशासनशासनात् ॥ ९
तत्र मे देवदेवेश भयं तीव्रमथाविशत् ।
ज्वलन्तं पावकं दृष्ट्वा पक्षित्वं चात्मनः प्रभो ॥१०
समतिक्रमितुं शक्यः कथं स्यात्पावको मया ।
तस्याभ्युपायं वरद वक्तुमीशोऽसि मे प्रभो ॥११
तमब्रवीन्महाभाग तप्यमानं विहङ्गमम् ।
अग्नेः संशमनोपायमुत्स्मयन्स पुनःपुनः ॥ १२
पयसा शाम्यते वत्स सर्पिषा च हुताशनः ।
शरीरस्थोपि भूतानां किं पुनः प्रज्वलन्भुवि ॥१३

तुण्डेन शाखां गृहीत्वा कश्यपसमीपं गते गरुडे शाखाया अधोभागलम्बिनामृषीणां कश्यपप्रार्थनया शाखाविसर्जनेन हिमवद्गिरिगमनादिपर्वोक्तमत्रानुसंधेयम् ॥ ३६ ॥ षड्विंशोऽध्यायः ॥ २६ ॥

जानीहीति शेषः ॥ ७ ॥ सप्तविंशोऽध्यायः ॥ २७ ॥

नवनीतं पयो वाऽपि पावके त्वं ममादधः । ततो गच्छ यथाकामं न त्वा धक्ष्यति पावकः ॥ १४

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥

## अष्टाविंशोऽध्यायः ॥ २८ ॥

गरुडेन नवनीतप्रक्षेपेण मन्दीभूताग्न्युल्लङ्घनपूर्वकममृतरक्षिणां पक्षप्रहारेण निराकरणम् ॥ १ ॥ तथाऽमृतमाहृत्य वियति समुत्पतनम् ॥ २ ॥ तथा स्वस्योपरि इन्द्रेण वज्रे विसृष्टे तत्सन्माननार्थैकतनूरुहविसर्जनम् ॥ ३ ॥

भीष्म उवाच

पितामहवचः श्रुत्वा गरुडः पततांवरः
जगाम गोकुलं किंचिन्नवनीतजिहीर्षया ॥ १
नवनीतं तथाऽपश्यन्मथितं कलशे स्थितम् ।
तदादाय ततोऽगच्छद्यतस्तद्रक्ष्यतेऽमृतम् ॥ २
स तत्र गत्वा पतगस्तिर्यक्कोयं महाबलः ।
हुताशनमपक्रम्य नवनीतमपातयत् ॥ ३
सोऽर्चिष्मान्मन्दवेगोऽभूत्सर्पिषा तेन तर्पितः ।
धूमकेतुर्न जज्वाल धूममेव ससर्ज ह ॥ ४
तमतीत्याशु गरुडो हृष्टात्मा जातवेदसम् ।
रक्षांसि समतिक्रामत्पक्षवातेन पातयन् ॥ ५
ते पतन्ति शिरोभिश्च जानुभिश्चरणैस्तथा ।
उत्सृज्य शस्त्रावरणं पक्षिपक्षसमाहताः ॥ ६
उत्प्लुत्य चावृतान्नागान्हत्वा चक्रं व्यतीत्य च ।
अरान्तरेण शिरसा भित्त्वा जालं समाद्रवत् ॥ ७
स भित्त्वा शिरसा जालं वज्रवेगसमो बली ।
उज्जहार ततः शीघ्रममृतं भुजगाशनः ॥ ८
तदादायाद्रवच्छीघ्रं गरुडः श्वसनो यथा ।
अथ सन्नाहमकरोद्वृत्रहा विबुधैः सह ॥ ९
ततो मातलिसंयुक्तं हरिभिः स्वर्णमालिभिः ।
आरुरोह रथं शीघ्रं सूर्याग्निसमतेजसम् ॥ १०
सोऽभ्यद्रवत्पक्षिराजं वृत्रहा पाकशासनः ।
उद्यम्य निशितं वज्रं वज्रहस्तो महाबलः ॥ ११
तथैव गरुडो राजन्वज्रहस्तं समाद्रवत् ।
ततो वै मातलिं प्राह शीघ्रं वाहय वाजिनः ॥ १२
अथ दिव्यं महाघोरं गरुडार्थं समर्ज ह ।
वज्रं सहस्रनयनस्तिग्मवेगपराक्रमः ॥ १३
उत्सिसृक्षन्तमाज्ञाय वज्रं वै त्रिदशेश्वरम् ।
तूर्णं वेगपरो भूत्वा जगाम पततांवरः ॥ १४
पितामहनिसर्गेण ज्ञात्वा लब्धवरः खगः ।
आयुधानां वरं वज्रमथ शक्रमुवाच ह ॥ १५
वृत्रहन्नेष वज्रस्ते वरो लब्धः पितामहात् ।
अतः संमानमाकाङ्क्षन्मुञ्चाम्येकं तनूरुहम् ॥ १६
एतेनायुधराजेन यदि शक्तोऽसि वृत्रहन् ।
हन्यास्त्वं परया शक्त्या गच्छाम्यहमनामयः ॥ १७
तत्तु तूर्णं तदा वज्रं स्वेन वेगेन भारत ।
जघान परया शक्त्या न चैनमदहद्भृशम् ॥ १८
ततो देवर्षयो राजन्गच्छन्तो वै विहायसा ।
दृष्ट्वा वज्रं विषक्तं तं पक्षिपर्णेऽब्रुवन्वचः ॥ १९
सुपर्णः पक्षिगरुडो यस्य पर्णे वरायुधम् ।
विषक्तं देवराजस्य वृत्रहन्तुः सनातनम् ॥ २०
एवं सुपर्णो विहगो वैनतेयः प्रतापवान् ।
ऋषयस्तं विजानन्ति चाग्नेयं वैष्णवं पुनः ॥ २१
वेदाभिष्टुतमत्यर्थं स्वर्गमार्गफलप्रदम् ।
तनुपर्णं सुपर्णस्य जगृहुर्बर्हिणस्तथा ॥ २२
मयूरा विस्मिताः सर्वे आद्रवन्ति स वज्रिणम् ॥ २३

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥

## एकोनत्रिंशोऽध्यायः ॥ २९ ॥

गरुडेन कद्रूंप्रत्यमृतानयनकथनम् ॥ १ ॥ कद्र्वा विनताया दास्यान्मोचनम् ॥ २ ॥ गरुडेन पुनरिन्द्रायामृतप्रत्यर्पणम् ॥ ३ ॥

'भीष्म उवाच ।
ततो वज्रं सहस्राक्षो दृष्ट्वा रुक्तं वरायुधम् ।
ऋषींश्च दृष्ट्वा सहसा सुपर्णमिदमब्रवीत् ॥ १
न ते सुपर्ण पश्यामि प्रभावं तेन योधये ।
इत्युक्ते न मया रक्षा शक्या कर्तुमतोऽन्यथा
इदं वज्रं मया सार्धं निवृत्तं हि यथागतम् ॥ २
ततः सहस्रनयने निवृत्ते गरुडस्तथा ।
कद्रूमभ्यगमत्तूर्णममृतं गृह्य भारत ॥ ३
गरुड उवाच ।
तदाहृतं मया शीघ्रममृतं जननीकृते ।
अदासी सा भवत्वद्य विनता धर्मचारिणी ॥ ४
कद्रूरुवाच ।
स्वागतं स्वाहृतं चेदममृतं विनतात्मज ।
अदासी जननी तेऽद्य पुत्र कामवशा शुभा ।
एवमुक्ते तदा सा च संप्राप्ता विनता गृहम् ॥ ५
उपनीय यथान्यायं विहगो बलिनांवरः ।
स्मृत्वा निकृत्या विजयं मातुः संप्रतिपद्य च ॥ ६
वृधं च भुजगेन्द्राणां ये वालास्तस्य वाजिनः ।
बभूवुरसितप्रख्या निकृत्या वै जितं त्वया ॥ ७
तामुवाच ततो न्याय्यं विहगो बलिनांवरः ।
उज्जहारामृतं तूर्णमुत्पपात च रंहसा ॥ ८
तद्गृहीत्वाऽमृतं तूर्णं प्रयान्तमपराजितम् ।
कद्रूर्भुजङ्गजननी सुपर्णमिदमब्रवीत् ॥ ९
किमर्थं वैनतेय त्वमाहृत्यामृतमुत्तमम् ।
मा जातु व्राजन कृथाः ॥ १०
उवाच
अमृताहरणं मेऽद्य यत्कृतं जननीकृते ।
भवत्या वचनादेतदाहरामृतमित्युत ॥ ११
आहृतं तदिदं शीघ्रं मुक्ता च जननी मम ।
हराम्येष पुनस्तत्र यत एतन्मयाऽऽहृतम् ॥ १२
यदि मां भवती ब्रूयादमृतं मे च दीयताम् ।
तथा कुर्यां न वा कुर्यां न हि त्वममृतक्षमा ।
मया धर्मेण सत्येन विनता च समुद्धृता ॥ १३
भीष्म उवाच ।
ततो गत्वाऽथ गरुडः पुरन्दरमुवाच ह ।
इदं मया वृत्रहन्तर्हृतं तेऽमृतमुत्तमम्
मात्रर्थे हि तथैवेदं गृहाणामृतमाहृतम् ॥ १४
माता च मम देवेश दासीत्वमुपजग्मुषी ।
भुजङ्गमानां मातुर्वै सा मुक्ताऽमृतदर्शनात् ॥ १५
एतच्छ्रुत्वा सहस्राक्षः सुपर्णमनुमन्यते ।
उवाच च मुदा युक्तो दिष्ट्यादिष्ट्येति वासवः १६
ऋषयो ये सहस्राक्षमुपासन्ति सुरैः सह ।
ते सर्वे च मुदा युक्ता विश्वेदेवास्तथैव च ॥ १७
ततस्तमृषयः सर्वे देवाश्च भरतर्षभ ।
ऊचुः पुरन्दरं हृष्टा गरुडो लभतां वरम् ॥ १८
ततः शचीपतिर्वाक्यमुवाच प्रहसन्निव ।
जनिष्यति हृषीकेशः स्वयमेवैष पक्षिराट् ॥ १९
केशवः पुण्डरीकाक्षः शूरपुत्रस्य वेश्मनि ।
स्वयं धर्मस्य रक्षार्थं विभज्य भुजगाशनः ॥ २०
एष ते पाण्डवश्रेष्ठ गरुडोऽथ पतत्रिराट् ।
सुपर्णो वैनतेयश्च कीर्तितो भद्रमस्तु ते ॥ २१
तदेतद्भरतश्रेष्ठ मयाऽऽख्यानं प्रकीर्तितम् ।
सुपर्णस्य महाबाहो किं भूयः कथयामि ते ॥' २२

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि एकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

जित त्वयेति ता कद्रूमुवाचेत्युत्तरेण सबन्धः ॥ ७ ॥ | एकोनत्रिंशोऽध्यायः ॥ २९ ॥

## त्रिंशोऽध्यायः ॥ ३० ॥

भीष्मेण युधिष्ठिरंप्रति ब्राह्मणाय प्रतिश्रुतार्थाप्रदानस्यानर्थहेतुतायां दृष्टान्ततया सृगालवानरसंवादानुवादः ॥ १ ॥

युधिष्ठिर उवाच ।
ब्राह्मणानां तु ये लोके प्रतिश्रुत्य पितामह ।
न प्रयच्छन्ति लोभात्ते के भवन्ति महामते ॥ १
एतन्मे तत्वतो ब्रूहि धर्मे धर्मभृतांवर ।
प्रतिश्रुत्य दुरात्मानो न प्रयच्छन्ति ये नराः ॥२
भीष्म उवाच ।
यो न दद्यात्प्रतिश्रुत्य स्वल्पं वा यदि वा बहु ।
आशास्तस्य हताः सर्वाः क्लीबस्येव प्रजाफलम् ॥३
यां रात्रिं जायते पापो यां च रात्रिं विनश्यति ।
एतस्मिन्नन्तरे यद्यत्सुकृतं तस्य भारत ॥ ४
यच्च तस्य हुतं किंचिद्दत्तं वा भरतर्षभ ।
तपस्तप्तमथो वाऽपि सर्वं तस्योपहन्यते ॥ ५
अथैतद्वचनं प्राहुर्धर्मशास्त्रविदो जनाः
निशाम्य भरतश्रेष्ठ बुद्ध्या परमयुक्तया ॥ ६
अपि चोदाहरन्तीमं धर्मशास्त्रविदो जनाः ।
अश्वानां श्यामकर्णानां सहस्रेण स मुच्यते ॥ ७
अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
सृगालस्य च संवादं वानरस्य च भारत ॥ ८
तौ सखायौ पुरा ह्यास्तां मानुषत्वे परंतप ।
अन्यां योनिं समापन्नौ सृगालीं वानरीं तथा ।
संभाषणात्ततः सख्यं तत्रतत्र परस्परम् ॥ ९
ततः परासून्खादन्तं सृगालं वानरोऽब्रवीत् ।
श्मशानमध्ये संप्रेक्ष्य पूर्वजातिमनुस्मरन् ॥ १०
किं त्वया पापकं पूर्वं कृतं कर्म सुदारुणम् ।
यस्त्वं श्मशाने मृतकान्पूतिकानत्सि कुत्सितान् ॥
एवमुक्तः प्रत्युवाच सृगालो वानरं तदा
ब्राह्मणस्य प्रतिश्रुत्य न मया तदुपाहृतम् ॥ १२
तत्कृते पापिकां योनिमापन्नोऽस्मि प्लवंगम
तस्मादेवंविधं भक्ष्यं भक्षयामि बुभुक्षितः ॥ १३
भीष्म उवाच ।
सृगालो वानरं प्राह पुनरेव नरोत्तम ।
किं त्वया पातकं कर्म कृतं येनासि वानरः ॥१४
वानर उवाच ।
स चाप्याह फलाहारो ब्राह्मणानां प्लवंगमः ।
तस्मान्न ब्राह्मणस्वं तु हर्तव्यं विदुषा सदा ।
सीमाविवादे मोक्तव्यं दातव्यं च प्रतिश्रुतम् ॥१५
भीष्म उवाच ।
इत्येतद्ब्रुवतो राजन्ब्राह्मणस्य मया श्रुतम् ।
कथां कथयतः पुण्यां धर्मज्ञस्य पुरातनीम् ॥१६
श्रुतं चापि मया भूयः कृष्णस्यापि विशांपते ।
कथां कथयतः पूर्वं ब्राह्मणं प्रति पाण्डव ॥ १७
न हर्तव्यं विप्रधनं क्षन्तव्यं तेषु नित्यशः ।
बालाश्च नावमन्तव्या दरिद्राः कृपणा अपि ॥१८
एवमेव च मां नित्यं ब्राह्मणाः संदिशन्ति वै ।
प्रतिश्रुतं भवेद्देयं नाशा कार्या द्विजोत्तमे ॥ १९
ब्राह्मणो ह्याशया पूर्वं कृतया पृथिवीपते ।
सुसमिद्धो यथा दीप्तः पावकस्तद्विधः स्मृतः ॥२०
यं निरीक्षेत संक्रुद्ध आशया पूर्वजातया ।
प्रदहेच्च हितं राजन्कक्षमक्षय्यभुग्यथा ॥ २१
स एव हि यदा तुष्टो वचसा प्रतिनन्दति ।
भवत्यगदसंकाशो विषये तस्य भारत ॥ २२
पुत्रान्पौत्रान्पशूंश्चैव बान्धवान्सचिवांस्तथा ।
पुरं जनपदं चैव शान्तिरिष्टेन पोषयेत् ॥ २३
एतद्धि परमं तेजो ब्राह्मणस्येह दृश्यते
सहस्रकिरणस्येव सवितुर्धरणीतले ॥ २४

* निशाम्य विचार्य ॥ ६ ॥ ततः पुरा सखाय त सृगाल- थ. ध. पाठः ॥ १० ॥ ब्रुवतोऽध्यापकस्य कथां कथयतो मुखात् श्रुतम् ॥ १६ ॥ कृष्णस्य व्यासस्य । नृगकथां कथयतो वासुदेवस्य वा मुखात् ॥ १७ ॥ आशा वन्ध्याशा ॥ १९ ॥ अक्षय्य पित्रर्थमुद्दिष्टं दानं भुङ्क्ते इत्यक्षय्यभुगग्निः ॥ २१ ॥ अगदसंकाशः चिकित्सकतुल्यः ॥ २२ ॥ शान्तिरिष्टेन शान्त्याहितेन क्षेमेण ॥ २३ ॥ त्रिंशोऽध्यायः ॥ ३० ॥

तस्माद्दातव्यमेवेह प्रतिश्रुत्य युधिष्ठिर ।
यदीच्छेच्छोभनां जातिं प्राप्तुं भरतसत्तम ॥ २५
ब्राह्मणस्य हि दत्तेन ध्रुवं स्वर्गो ह्यनुत्तमः ।
शक्यः प्राप्तुं विशेषेण दानं हि महती क्रिया ॥२६
इतो दत्तेन जीवन्ति देवताः पितरस्तथा ।
तस्माद्दानानि देयानि ब्राह्मणेभ्यो विजानता ॥२७
महद्धि भरतश्रेष्ठ ब्राह्मणस्तीर्थमुच्यते ।
वेलायां न तु कस्यां चिद्गच्छेद्विप्रो ह्यपूजितः ॥२८

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि त्रिंशोऽध्यायः ॥ ३० ॥

## एकत्रिंशोऽध्यायः ॥ ३१ ॥

भीष्मेण युधिष्ठिरंप्रति शूद्रोपदेशस्यानर्थहेतुतायां दृष्टान्ततया मुनिशूद्रयोः कथाकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
मित्रसौहार्दयोगेन उपदेशं करोति यः ।
जात्याऽधरस्य राजर्षे दोषस्तस्य भवेन्न वा । १
एतदिच्छामि तत्त्वेन व्याख्यातुं वै पितामह ।
सूक्ष्मा गतिर्हि धर्मस्य यत्र मुह्यन्ति मानवाः ॥२
भीष्म उवाच ।
अत्र त वर्तयिष्यामि शृणु राजन्यथाक्रमम् ।
'मदुक्तं वचनं राजन्यथान्यायं यथागमम् ।'
ऋषीणां वदतां पूर्वं श्रुतमासीद्यथा पुरा ॥
उपदेशो न कर्तव्यो जातिहीनस्य कस्य चित् ।
उपदेशे महान्दोष उपाध्यायस्य भाष्यते ॥ ४
'नाध्यापयेच्छूद्रमिह तथा नैव च याजयेत् ।'
निदर्शनमिदं राजञ्शृणु मे भरतर्षभ ॥ ५
दुरुक्तवचनं राजन्यथापूर्वं युधिष्ठिर ।
ब्रह्माश्रमपदे वृत्तं पार्श्वे हिमवतः शुभे ॥ ६
तत्राश्रमपदं पुण्यं नानावृक्षगणायुतम् ।
नानागुल्मलताकीर्णं मृगद्विजनिषेवितम् ।
सिद्धचारणसंघुष्टं रम्यं पुष्पितकाननम् ॥ ७
व्रतिभिर्बहुभिः कीर्णं तापसैरुपशोभितम् ।
ब्राह्मणैश्च महाभागैः सूर्यज्वलनसन्निभैः ॥
नियमव्रतसंपन्नैः समाकीर्णं तपस्विभिः ।
दीक्षितैर्भरतश्रेष्ठ यताहारैः कृतात्मभिः ॥ ९
वेदाध्ययनघोषैश्च नादितं भरतर्षभ ।
वालखिल्यैश्च बहुभिर्यतिभिश्च निषेवितम् ॥ १०
तत्र कश्चित्समुत्साहं कृत्वा शूद्रो दयान्वितः ।
आगतो ह्याश्रमपदं पूजितश्च तपस्विभिः ॥ ११
तांस्तु दृष्ट्वा मुनिगणान्देवकल्पान्महौजसः ।
विविधां वहतो दीक्षां संप्राहृष्यत भारत ॥ १२
अथास्य बुद्धिरभवत्तापस्ये भरतर्षभ ।
ततोऽब्रवीत्कुलपतिं पादौ संगृह्य भारत ॥ १३
भवत्प्रसादादिच्छामि धर्मं चर्तुं द्विजर्षभ ।
तस्माद्भगवंस्त्वं मां प्रव्राजयितुमर्हसि ॥ १४
वर्णावरोऽहं भगवञ्शूद्रो जात्याऽस्मि सत्तम ।
शुश्रूषां कर्तुमिच्छामि प्रपन्नाय प्रसीद मे ॥ १५
कुलपतिरुवाच ।
न शक्यमिह शूद्रेण लिङ्गमाश्रित्य वर्तितुम् ।
आस्यतां यदि ते बुद्धिः शुश्रूषानिरतो भव ॥ १६
शुश्रूषया पराँल्लोकानवाप्स्यसि न संशयः ॥ १७
भीष्म उवाच ।
एवमुक्तस्तु मुनिना स शूद्रोऽचिन्तयन्नृप ।
कथमत्र मया कार्यं श्रद्धा धर्मपरा च मे ॥ १८
विज्ञातमेवं भवतु करिष्ये प्रियमात्मनः ।
गत्वाऽऽश्रमपदाद्दूरमुटजं कृतवांस्तु सः ॥ १९

मित्रमुपकारमपेक्ष्योपकर्ता । सुहृदुपकारमनपेक्ष्योपकर्ता । लोभात् कृपया वेत्यर्थः ॥ १ ॥ उपाध्यायस्योपदेशकर्तुः ॥ ४ ॥ दुरुक्तं दुःखस्य नीचं प्रति उक्तं वचनम् ॥ ६ ॥ व्रतिभिर्ब्रह्मचारिभिः । तापसैर्वानप्रस्थैः ॥ ८ ॥ यतिभिः संन्यासिभिः ॥ १० ॥ दयान्वितः सर्वभूताभयदानेन प्रव्रज्यां कृतवानित्यर्थः ॥ ११ ॥ दीक्षां नियमम् ॥ १२ ॥ तापस्ये तपस्वित्वे ॥ १३ ॥ प्रव्राजयितुं विधिवत् स्वोचितं कर्म त्याजयितुम् ॥ १४ ॥ लिङ्गं संन्यासिचिह्नम् ॥ १६ ॥ आत्मनः प्रियं विक्षेपकस्य शुश्रूषाख्यस्य स्वधर्मस्य त्यागम् । लिङ्गधारणानधिकारेऽपि त्यागमात्रे सर्वस्याधिकारात् । उटजं पर्णशालाम् ॥ १९ ॥

तत्र वेदीं च भूमिं च देवतायतनानि च ।
निवेश्य भरतश्रेष्ठ नियमस्थोऽभवन्मुनिः ॥ २०
अभिषेकांश्च नियमान्देवतायतनेषु च ।
बलिं च कृत्वा हुत्वा च देवतां चाप्यपूजयत् ॥२१
संकल्पनियमोपेतः फलाहारो जितेन्द्रियः ।
नित्यं सन्निहिताभिस्तु ओषधीभिः फलैस्तथा २२
अतिथीन्पूजयामास यथावत्समुपागतान् ।
एवं हि सुमहान्कालो व्यत्यक्रामत् तस्य वै ॥२३
अथास्य मुनिरागच्छत्संगत्या वै तमाश्रमम् ।
संपूज्य स्वागतेनर्षिं विधिवत्समतोषयत् ॥ २४
अनुकूलाः कथाः कृत्वा यथागतमपृच्छत ।
ऋषिः परमतेजस्वी धर्मात्मा संशितव्रतः ॥ २५
एवं सुबहुशस्तस्य शूद्रस्य भरतर्षभ ।
सोऽगच्छदाश्रममृषिः शूद्रं द्रष्टुं नरर्षभ ॥ २६
अथ तं तापसं शूद्रः सोऽब्रवीद्भरतर्षभ ।
पितृकार्यं करिष्यामि तत्र मेऽनुग्रहं कुरु ॥ २७
बाढमित्येव तं विप्र उवाच भरतर्षभ ।
शुचिर्भूत्वा स शूद्रस्तु तस्यर्षेः पाद्यमानयत् ॥२८
अथ दर्भांश्च वन्यांश्च ओषधीर्भरतर्षभ ।
पवित्रमासनं चैव बृसीं च समुपानयत् ॥ २९
अथ दक्षिणमावृत्य बृसीं चरमशैर्षिकीम् ।
कृतामन्यायतो दृष्ट्वा तं शूद्रमृषिरब्रवीत् ॥ ३०
कुरुष्वैतां पूर्वशीर्षां भवांश्चोदङ्मुखः शुचिः ।
स च तत्कृतवाञ्शूद्रः सर्वं यदृषिरब्रवीत् ॥ ३१
यथोपदिष्टं मेधावी दर्भार्घादि यथातथम् ।
हव्यकव्यविधिं कृत्स्नमुक्तं तेन तपस्विना ॥ ३२
ऋषिणा पितृकार्येषु सदा धर्मपथे स्थितः ।
पितृकार्ये कृते चापि विसृष्टः स जगाम ह ॥३३
अथ दीर्घस्य कालस्य स तप्यञ्शूद्रतापसः ।
वने पञ्चत्वमगमत्सुकृतेन च तेन वै ।
अजायत महाराज वंशे स च महाद्युतिः ॥ ३४
तथैव स ऋषिस्तात कालधर्ममवाप ह ।
पुरोहितकुले विप्रः स जातोऽर्स्य वशानुगः ॥ ३५
एवं तौ तत्र संभूतावुभौ शूद्रमुनी तदा ।
क्रमेण वर्धितौ चापि विद्यासु कुशलावुभौ ॥३६
अथर्ववेदे वेदे च बभूवर्षिः सुनिष्ठितः ।
कल्पप्रयोगे चोत्पन्ने ज्योतिषे च परं गतः ।
साङ्ख्ये चैव परा प्रीतिस्तस्य चैवं व्यवर्धत ॥ ३७
पितर्युपरते चापि कृतशौचस्तु पार्थिवः
अभिषिक्तः प्रकृतिभी राजपुत्रः स पार्थिवः ॥३८
अभिषिक्तेन स ऋषिरभिषिक्तः पुरोहितः ॥ ३९
स तं पुरोधाय सुखमवसद्भरतर्षभ ।
राज्यं शशास धर्मेण प्रजाश्च परिपालयन् ॥ ४०
पुण्याहवाचने नित्यं धर्मकार्येषु चासकृत् ।
उत्स्मयन्प्राहसच्चापि दृष्ट्वा राजा पुरोहितम् ।
एवं स बहुशो राजन्पुरोधसमुपाहसत् ॥ ४१
लक्षयित्वा पुरोधास्तु बहुशस्तं नराधिपम् ।
उत्स्मयन्तं च सततं दृष्ट्वा तं मन्युमानभूत् ॥४२
अथ शून्ये पुरोधास्तु सह राज्ञा समागतः ।
कथाभिरनुकूलाभी राजानं चाभ्यरोचयत् ॥ ४३
ततोऽब्रवीन्नरेन्द्रं स पुरोधा भरतर्षभ ।
वरमिच्छाम्यहं त्वेकं त्वया दत्तं महाद्युते ॥ ४४
राजोवाच ।
वराणां ते शतं दद्यां किं बतैकं द्विजोत्तम ।
स्नेहाच्च बहुमानाच्च नास्त्यदेयं हि मे तव ॥ ४५
पुरोहित उवाच ।
एकं वै वरमिच्छामि यदि तुष्टोसि पार्थिव ।
प्रतिजानीहि तावत्त्वं सत्यं यद्वद नानृतम् ॥४६
भीष्म उवाच ।
बाढमित्येव तं राजा प्रत्युवाच युधिष्ठिर ।
यदि ज्ञास्यामि वक्ष्यामि अजानन्न तु संवदे ॥४७
पुरोहित उवाच ।
पुण्याहवाचने नित्यं धर्मकृत्येषु चासकृत् ।
शान्तिहोमेषु च सदा किं त्वं हससि वीक्ष्य मां ४८

वेदी पूजार्थम् । भूमि शयनाद्यर्थम् ॥ २० ॥ अभिषेकान् त्रिसंध्य स्नानानि ॥ २१ ॥ संकल्पस्य नियमो निग्रहः । चित्तवृत्तिनिरोध इति यावत् । तेन उपेतः ॥ २२ ॥ बृसीं चरमशैर्षिकी आसनकूर्चं पश्चिमाग्रम् ॥ ३० ॥ वेदे ऋग्वेदादित्रये । कल्पप्रयोगे सूत्रोक्तयज्ञप्रयोगे ॥ ३७ ॥

सव्रीडं वै प्रवृत्तं हि मनो मे ह्यमता त्वया ।
कस्मया शापितो राजन्नान्यथावक्तुमर्हसि ॥ ४९
भाव्यं हि कारणेनात्र न ते हास्यमकारणम् ।
कौतूहलं मे सुभृशं तत्त्वेन कथयस्व मे ॥ ५०
राजोवाच ।
एवमुक्ते त्वया विप्र यदवाच्यं भवेदपि ।
अवश्यमेव वक्तव्यं शृणुष्वैकमना द्विज ॥ ५१
पूर्वदेहे यथा वृत्तं तन्निबोध द्विजोत्तम ।
जातिं स्मराम्यहं ब्रह्मन्नवधानेन मे शृणु ॥ ५२
शूद्रोऽहमभवं पूर्वं तपसे कृतनिश्चयः ।
ऋषिरुग्रतपास्त्वं च तदाऽभूर्द्विजसत्तम ॥ ५३
प्रीयता हि तदा ब्रह्मन्ममानुग्रहबुद्धिना ।
पितृकार्ये त्वया पूर्वमुपदेशः कृतोऽनघ ॥ ५४
बृस्यां दर्भेषु हव्ये च कव्ये च मुनिसत्तम ।
एतेन कर्मदोषेण पुरोधास्त्वमजायथाः ॥ ५५
अहं राजा च विप्रेन्द्र पश्य कालस्य पर्ययम् ।
मत्कृतस्योपदेशस्य त्वयाऽवाप्तमिदं फलम् ॥ ५६
एतस्मात्कारणाद्ब्रह्मन्प्रहसे त्वां द्विजोत्तम ।
न त्वां परिभवन्ब्रह्मन्प्रहसामि गुरुर्भवान् ॥ ५७
विपर्ययेण मे मन्युस्तेन संतप्यते मनः ।
जातिं स्मराम्यहं तुभ्यमतस्त्वां प्रहसामि वै॥ ५८
एवं तवोग्रं हि तप उपदेशेन नाशितम् ।
पुरोहितत्वमुत्सृज्य यतस्व त्वं पुनर्भवे ॥ ५९
इतस्त्वमधमामन्यां मा योनिं प्राप्स्यसे द्विज ।
गृह्यतां द्रविणं विप्र पूतात्मा भव सत्तम ॥ ६०
भीष्म उवाच ।
ततो विसृष्टो राज्ञा तु विप्रो दानान्यनेकशः ।
ब्राह्मणेभ्यो ददौ वित्तं भूमिं ग्रामांश्च सर्वशः॥६१
कृच्छ्राणि चीर्त्वा च ततो यथोक्तानि द्विजोत्तमैः ।
तीर्थानि चापि गत्वा वै दानानि विविधानि च॥६२
दत्त्वा गाश्चैव विप्रेभ्यः पूतात्माऽभवदात्मवान् ।
तमेव चाश्रमं गत्वा चचार विपुलं तपः ॥ ६३
ततः सिद्धिं परां प्राप्तो ब्राह्मणो राजसत्तम ।
संमतश्चाभवत्तेषामाश्रमे तन्निवासिनाम् ॥ ६४
एवं प्राप्तो महत्कृच्छ्रमृषिः स नृपसत्तम ।
ब्राह्मणेन न वक्तव्यं तस्माद्वर्णावरे जने ॥ ६५
'वर्जयेदुपदेशं च सदैव ब्राह्मणो नृप ।
उपदेशं हि कुर्वाणो द्विजः कृच्छ्रमवाप्नुयात्॥६६
नेषितव्यं सदा वाचा द्विजेन नृपसत्तम ।
न च प्रवक्तव्यमिह किंचिद्वर्णावरे नरे ॥' ६७
ब्राह्मणाः क्षत्रिया वैश्यास्त्रयो वर्णा द्विजातयः ।
एतेषु कथयन्राजन्ब्राह्मणो न प्रदुष्यति ॥ ६८
तस्मात्सद्भिर्न वक्तव्यं कस्यचित्किंचिदग्रतः ।
सूक्ष्मा गतिर्हि धर्मस्य दुर्ज्ञेया ह्यकृतात्मभिः ॥६९
तस्मान्मौनेन मुनयो दीक्षां कुर्वन्ति चादृताः ।
दुरुक्तस्य भयाद्राजन्नाभाषन्ते च किंचन ॥ ७०
धार्मिका गुणसंपन्नाः सत्यार्जवसमन्विताः ।
दुरुक्तवाचाभिहितैः प्राप्नुवन्तीह दुष्कृतम् ॥ ७१
उपदेशो न कर्तव्यो ह्यज्ञात्वा यस्यकस्य चित् ।
उपदेशाद्धि तत्पापं ब्राह्मणः समवाप्नुयात् ॥ ७२
विमृश्य तस्मात्प्राज्ञेन वक्तव्यं धर्ममिच्छता ।
सत्यानृतेन हि कृत उपदेशो हिनस्ति हि ॥ ७३
वक्तव्यमिह पृष्टेन विनिश्चयविपर्ययम् ।
स चोपदेशः कर्तव्यो येन धर्ममवाप्नुयात् ॥ ७४
एतत्ते सर्वमाख्यातमुपदेशकृते मया ।
महान्क्लेशो हि भवति तस्मान्नोपदिशेदिह ॥ ७५

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि एकत्रिंशोऽध्यायः ॥ ३१ ॥

मत्कृतस्य मया कृतस्य ॥ ५६ ॥ विपर्ययेण वैपरीत्येन मन्युर्दैन्यम् ॥ ५८ ॥ भवे भवनिमित्तम् ॥ ५९ ॥ सत्यानृतेन वाणिज्येन धनलोभेनेत्यर्थः ॥ ७३ ॥ एकत्रिंशोऽध्यायः ॥ ३१ ॥

## द्वात्रिंशोऽध्यायः ॥ ३२

महालक्ष्म्या रुक्मिणींप्रति स्वावासस्थलनिर्देशः ॥ १ ॥

युधिष्ठिर उवाच ।
कीदृशे पुरुषे तात स्त्रीषु वा भरतर्षभ ।
श्रीः पद्मा वसते नित्यं तन्मे ब्रूहि पितामह ॥ १
भीष्म उवाच ।
अत्र ते वर्णयिष्यामि यथावृत्तं यथाश्रुतम् ।
रुक्मिणी देवकीपुत्रसन्निधौ पर्यपृच्छत ॥ २
नारायणस्याङ्कगतां ज्वलन्तीं
दृष्ट्वा श्रियं पद्मसमानवक्राम् ।
कौतूहलाद्विस्मितचारुनेत्रा
पप्रच्छ माता मकरध्वजस्य ॥ ३
कानीह भूतान्युपसेवसे त्वं
संतिष्ठसे कानि च सेवसे त्वम् ।
तानि त्रिलोकेश्वरभूतकान्ते
तत्त्वेन मे ब्रूहि महर्षिकन्ये ॥ ४
एवं तदा श्रीरभिभाष्यमाणा
देव्या समक्षं गरुडध्वजस्य ।
उवाच वाक्यं मधुराभिधानं
मनोहरं चन्द्रमुखी प्रसन्ना ॥ ५
श्रीरुवाच ।
वसामि नित्यं सुभगे प्रगल्भे
दक्षे नरे कर्मणि वर्तमाने ।
अक्रोधने देवपरे कृतज्ञे
जितेन्द्रिये नित्यमुदीर्णसत्त्वे ॥ ६
नाकर्मशीले पुरुषे वसामि
न नास्तिके सांकरिके कृतघ्ने ।
न भिन्नवृत्ते न नृशंसवृत्ते
न चाविनीते न गुरुष्वसूयके ॥ ७
ये चाल्पतेजोबलसत्त्वमानाः
क्लिश्यन्ति कुप्यन्ति च यत्रतत्र ।
न चैव तिष्ठामि तथाविधेषु
नरेषु संगुप्तमनोरथेषु ॥
यश्चात्मनि प्रार्थयते न किंचि-
द्यश्च स्वभावोपहतान्तरात्मा ।
तेष्वल्पसंतोषपरेषु नित्यं
नरेषु नाहं निवसामि सम्यक् ॥ ९
वसामि धर्मशीलेषु धर्मज्ञेषु महात्मसु ।
वृद्धसेविषु दान्तेषु सत्त्वज्ञेषु महात्मसु ॥ १०
अवन्ध्यकालेषु सदा दानशौचरतेषु च ।
ब्रह्मचर्यतपोज्ञानगोद्विजातिप्रियेषु च ॥ ११
स्त्रीषु कान्तासु शान्तासु देवद्विजपरासु च ।
विशुद्धगृहभाण्डासु गोधान्याभिरतासु च ॥ १२
स्वधर्मशीलेषु च धर्मवित्सु
वृद्धोपसेवानिरते च दान्ते ।
कृतात्मनि क्षान्तिपरे समर्थे
क्षान्तासु दान्तासु तथाऽबलासु ।
सत्यस्वभावार्जवसंयुतासु
वसामि देवद्विजपूजिकासु ॥ १३
प्रकीर्णभाण्डामनवेक्ष्यकारिणीं
सदा च भर्तुः प्रतिकूलवादिनीम् ।
परस्य वेश्माभिरतामलज्जा-
मेवंविधां तां परिवर्जयामि ॥ १४
लोलामदक्षामवलेपिनीं च
व्यपेतशौचां कलहप्रियां च ।
निद्राभिभूतां सततं शयाना-
मेवंविधां स्त्रीं परिवर्जयामि ॥ १५
सत्यासु नित्यं प्रियदर्शनासु
सौभाग्ययुक्तासु गुणान्वितासु ।

पर्यपृच्छत श्रियमित्यपकृष्यते ॥ २ ॥ उपसेवसे गजतुरगादिरूपेण । संतिष्ठसे शौर्यादिरूपेण पुरुषे वससि ॥ ४ ॥ देव्या रुक्मिण्या ॥ ५ ॥ प्रगल्भे वाग्मिनि । दक्षे अनलसे । वसामि सत्त्वे इति ट. थ. ध. पाठः ॥ ६ ॥ तेजः शौर्य । सत्त्व बुद्धिः । यत्र तत्र विशिष्टपुरुषे । संगुप्तमनोरथेषु अन्यत् ध्यायन्त्यन्यद्दर्शयन्ति तादृशेषु ॥ ८ ॥

वसामि नारीषु पतिव्रतासु
कल्याणशीलासु विभूषितासु ॥ १६
यानेषु कन्यासु विभूषणेषु
यज्ञेषु मेघेषु च वृष्टिमत्सु ।
वसामि फुल्लासु च पद्मिनीषु
नक्षत्रवीथीषु च शारदीषु ॥ १७
गजेषु गोष्ठेषु तथाऽऽसनेषु
सरःसु फुल्लोत्पलपङ्कजेषु ।
नदीषु हंसस्वननादितासु
क्रौञ्चावघुष्टस्वरशोभितासु ॥ १८
विकीर्णकूलद्रुमराजितासु
तपस्विसिद्धद्विजसेवितासु ।
वसामि नित्यं सुबहूदकासु
सिंहैर्गजैश्चाकुलितोदकासु ॥ १९
मत्ते गजे गोवृषभे नरेन्द्रे
सिंहासने सत्पुरुषेषु नित्यम् ॥ २०
यस्मिञ्जनो हव्यभुजं जुहोति
गोब्राह्मणं चार्चति देवताश्च ।
काले च पुष्पैर्बलयः क्रियन्ते
तस्मिन्गृहे नित्यमुपैमि वासम् ॥ २१
स्वाध्यायनित्येषु सदा द्विजेषु
क्षत्रे च धर्माभिरते सदैव ।
वैश्ये च कृष्याभिरते वसामि
शूद्रे च शुश्रूषणनित्ययुक्ते ॥ २२
नारायणे त्वेकमना वसामि
सर्वेण भावेन शरीरभूता ।
तस्मिन्हि धर्मः सुमहान्निविष्टो
ब्रह्मण्यता चात्र तथा प्रियत्वम् ॥ २३
नाहं शरीरेण वसामि देवि
नैवं मया शक्यमिहाभिधातुम् ।
भावेन यस्मिन्निवसामि पुंसि
स वर्धते धर्मयशोर्थकामैः ॥ २४

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि द्वात्रिंशोऽध्यायः ॥ ३२ ॥

## त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

भीष्मेण युधिष्ठिरंप्रति कृतघ्नस्य प्रायश्चित्तविषये दृष्टान्ततया वत्सनाभमुनिचरित्रकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
प्रायश्चित्तं कृतघ्नानां प्रतिब्रूहि पितामह ।
मातृः पितॄन्गुरूंश्चैव येऽवमन्यन्ति मोहिताः ॥ १
ये चाप्यन्ये परे तात कृतघ्ना निरपत्रपाः ।
तेषां गतिं महाबाहो श्रोतुमिच्छामि तत्वतः ॥ २
भीष्म उवाच ।
कृतघ्नानां गतिस्तात नरके शाश्वतीः समाः ।
मातापितृगुरूणां च ये न तिष्ठन्ति शासने ।
क्रिमिकीटपिपीलेषु जायन्ते स्थावरेषु च ॥ ३
दुर्लभो हि पुनस्तेषां मानुष्ये पुनरुद्भवः ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ॥ ४
वत्सनाभो महाप्राज्ञो महर्षिः संशितव्रतः ।
वल्मीकभूतो ब्रह्मर्षिस्तप्यते सुमहत्तपः ॥ ५
तस्मिंश्च तप्यति तपो वासवो भरतर्षभ ।
ववर्ष सुमहद्वर्षं सविद्युत्स्तनयित्नुमान् ॥ ६
तत्र सप्ताहवर्षं तु मुमुचे पाकशासनः ।
निमीलिताक्षस्तद्वर्षं प्रत्यगृह्णत वै द्विजः ॥ ७
तस्मिन्पतति वर्षे तु शीतवातसमन्विते ।
विशीर्णध्वस्तशिखरो वल्मीकोऽशनिताडितः ॥ ८
ताड्यमाने ततस्तस्मिन्वत्सनाभे महात्मनि ।
कारुण्यात्तस्य धर्मः स्वमानृशंस्यमथाकरोत् ॥ ९
चिन्तयानस्य ब्रह्मर्षिं तपन्तमतिधार्मिकम् ।

भावेन आदरेण शरीरभूता शरीरवती ॥ २३ ॥ नारायणादन्यत्र धर्मादिवृद्धिरूपेणैव वसामि न शरीरेणेत्यर्थः ॥ २४ ॥ द्वात्रिंशोऽध्यायः ॥ ३२ ॥

* अयमध्यायः दाक्षिणात्यकोशेष्वेव दृश्यन्ते

अनुरूपा मृतिः क्षिप्रमुपजाता स्वभावजा ॥ १०
स्वं रूपं माहिषं कृत्वा सुमहान्तं मनोहरम् ।
रक्षार्थं वत्सनाभस्य चतुष्पादुपरिस्थितः ॥ ११
यदा त्वपगतं वर्षं वृष्टिवातसमन्वितम् ।
ततो महिषरूपेण धर्मो धर्मभृतांवर ।
शनैर्वल्मीकमुत्सृज्य प्राद्रवद्भरतर्षभ ॥ १२
स्थितेऽस्मिन्वृष्टिसंपाते वीक्षते स महातपाः ।
दिशश्च विपुलास्तत्र गिरीणां शिखराणि च ॥१३
दृष्ट्वा च पृथिवीं सर्वां सलिलेन परिप्लुताम् ।
जलाशयान्स तान्दृष्ट्वा विप्रः प्रमुदितोऽभवत् ॥१४
अचिन्तयद्विस्मितश्च वर्षात्केनाभिरक्षितः ।
ततोऽपश्यत्स महिषमवस्थितमदूरतः ॥ १५
तिर्यग्योनावपि कथं दृश्यते धर्मवत्सलः ॥ १६
अतो नु भद्रमहिषः शिलापट्टमवस्थितः ।
पीवरश्चैव बल्यश्च बहुमांसो भवेदयम् ॥ १७
तस्य बुद्धिरियं जाता धर्मसंसक्तजा मुनेः ।
कृतघ्ना नरकं यान्ति ये च विश्वस्तघातिनः ॥१८
निष्कृतिं नैव पश्यामि कृतघ्नानां कथंचन ।
ऋते प्राणपरित्यागाद्धर्मज्ञानां वचो यथा ॥ १९
अकृत्वा भरणं पित्रोरदत्त्वा गुरुदक्षिणाम् ।
कृतघ्नतां च संप्राप्य मरणान्ता च निष्कृतिः ॥२०
आकाङ्क्षायामुपेक्षायां चोपपातकमुत्तमम् ।
तस्मात्प्राणान्परित्यक्ष्ये प्रायश्चित्तार्थमित्युत ॥२१
स मेरुशिखरं गत्वा निस्सङ्गेनान्तरात्मना ।
प्रायश्चित्तं कर्तुकामः शरीरं त्यक्तुमुद्यतः ।
निगृहीतश्च धर्मात्मा हस्ते धर्मेण धर्मवित् ॥ २२
धर्म उवाच ।
वत्सनाभ महाप्राज्ञ बहुवर्षशतायुष ।
परितुष्टोऽसि त्यागेन निस्संगेन तथाऽऽत्मनः ॥२३
एवं धर्मभृतः सर्वे विमृशन्ति कृताकृतम् ।
न कश्चिद्वत्सनाभस्य यस्य नोपहतं मनः ॥ २४
यश्चानवद्यश्चरति शक्तो धर्मं च सर्वशः ।
निवर्तस्व महाप्राज्ञ पूतात्मा ह्यसि शाश्वतः ॥२५

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

## चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

भीष्मेण युधिष्ठिरंप्रति स्त्रीपुंसयोः समायोगे स्त्रिया एव सुखाधिक्ये सवादतया भङ्गास्वनोपाख्यानकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
स्त्रीपुंसयोः संप्रयोगे स्पर्शः कस्याधिको भवेत् ।
एतस्मिन्संशये राजन्यथावद्वक्तुमर्हसि ॥ १
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
भङ्गास्वनेन शक्रस्य यथा वैरमभूत्पुरा ॥ २
पुरा भङ्गास्वनो नाम राजर्षिरतिधार्मिकः ।
अपुत्रः पुरुषव्याघ्र पुत्रार्थं यज्ञमाहरत् ॥ ३
अग्निष्टुतं स राजर्षिरिन्द्रद्विष्टं महाबलः ।
प्रायश्चित्तेषु मर्त्यानां पुत्रकामेषु चेष्यते ॥ ४
इन्द्रो ज्ञात्वा तु तं यज्ञं महाभागः सुरेश्वरः ।
अन्तरं तस्य राजर्षेरन्विच्छन्नियतात्मनः ।
न चैवास्यान्तरं राजन्स ददर्श महात्मनः ॥ ५
कस्य चित्त्वथ कालस्य मृगयां गतवान्नृपः ।
इदमन्तरमित्येव शक्रो नृपममोहयत् ॥ ६
एकाश्वेन च राजर्षिर्भ्रान्त इन्द्रेण मोहितः ।
न दिशोऽविन्दत नृपः क्षुत्पिपासार्दितस्तदा ॥७
इतश्चेतश्च धावन्वै श्रमतृष्णार्दितो नृप ।
सरोऽपश्यत्सुरुचिरं पूर्णं परमवारिणा ॥ ८
सोऽवगाह्य सरस्तात पाययामास वाजिनम् ॥ ९

बल्यः बलिकर्मार्हः । पीवरश्चैव वध्यश्चेति पाठान्तरम् ॥ १७ ॥ त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥
स्पर्शः वैषयिक सुखम् ॥ १ ॥ तत्र ह्यग्निरेव स्तूयते ।
सच पुत्रप्रदः क्रतुः सचेन्द्रद्विष्टस्तत्रेन्द्रस्य प्राधान्याभावात् ॥ ४ ॥ यज्ञ कृतमिति शेषः ॥ ५ ॥

अथ पीतोदकं सोऽश्वं वृक्षे बद्ध्वा नृपोत्तमः ।
अवगाह्य ततः स्नानं तत्र स्त्रीत्वमवाप्तवान् ॥ १०
आत्मानं स्त्रीकृतं दृष्ट्वा व्रीडितो नृपसत्तमः ।
चिन्तानुगतसर्वात्मा व्याकुलेन्द्रियचेतनः ॥ ११
आरोहिष्ये कथं त्वश्वं कथं यास्यामि वै पुरम् ।
इष्टेनाग्निष्टुता चापि पुत्राणां शतमौरसम् ॥ १२
जातं महाबलानां मे तान्प्रवक्ष्यामि किन्न्वहम् ।
दारेषु चास्मदीयेषु पौरजानपदेषु च ॥ १३
मृदुत्वं च तनुत्वं च पराधीनत्वमेव च ।
'हासभावादि लावण्यं स्त्रीगुणाद्या कुतूहलम् ।'
स्त्रीगुणा ऋषिभिः प्रोक्ता धर्मतत्त्वार्थदर्शिभिः १४
व्यायामः कर्कशत्वं च वीर्यं च पुरुषे गुणाः ॥ १५
पौरुषं विप्रनष्टं वै स्त्रीत्वं केनापि मेऽभवत् ।
स्त्रीभावात्पुनरश्वं तं कथमारोढुमुत्सहे ॥ १६
महता त्वथ खेदेन आरुह्याश्वं नराधिपः ।
पुनरायात्पुरं तात स्त्रीभूतो नृपसत्तमः ॥ १७
पुत्रा दाराश्च भृत्याश्च पौरजानपदाश्च ते ।
किंन्विदं त्विति विज्ञाय विस्मयं परमं गताः ॥ १८
अथोवाच स राजर्षिः स्त्रीभूतो वदतांवरः ।
मृगयामस्मि निर्यातो बलैः परिवृतो दृढम् ।
उद्भ्रान्तः प्राविशं घोरामटवीं दैवमोहितः ॥ १९
अटव्यां च सुघोरायां तृष्णार्तो नष्टचेतनः ।
सरः सुरुचिरप्रख्यमपश्यं पक्षिभिर्वृतम् ॥ २०
तत्रावगाढः स्त्रीभूतो व्यक्तं दैवान्न संशयः ।
'अतृप्त एव पुत्राणां दाराणां च धनस्य च ॥'२१
नामगोत्राणि चाभाष्य दाराणां मन्त्रिणां तथा ।
आह पुत्रांस्ततः सोऽथ स्त्रीभूतः पार्थिवोत्तमः ।
संप्रीत्या भुज्यतां राज्यं वनं यास्यामि पुत्रकाः २२
स पुत्राणां शतं राजा अभिषिच्य वनं गतः ।
गत्वा चैवाश्रमं सा तु तापसं प्रत्यपद्यत ॥ २३
तापसेनास्य पुत्राणामाश्रमेष्वभवच्छतम् ।
अथ साऽऽदाय तान्सर्वान्पूर्वपुत्रानभाषत ॥ २४
पुरुषत्वे सुता यूयं स्त्रीत्वे चेमे शतं सुताः ।
एकत्र भुज्यतां राज्यं भ्रातृभावेन पुत्रकाः ॥ २५
सहिता भ्रातरस्तेऽथ राज्यं बुभुजिरे तदा ॥ २६
तान्दृष्ट्वा भ्रातृभावेन भुञ्जानान्राज्यमुत्तमम् ।
चिन्तयामास देवेन्द्रो मन्युनाऽथ परिप्लुतः ।
उपकारोऽस्य राजर्षेः कृतो नापकृतं मया ॥ २७
ततो ब्राह्मणरूपेण देवराजः शतक्रतुः ।
भेदयामास तान्गत्वा नगरं वै नृपात्मजान् ॥ २८
भ्रातॄणां नास्ति सौभ्रात्रं येऽप्येकस्य पितुः सुताः ।
कश्यपस्य सुराश्चैव असुराश्च सुतास्तथा ।
राज्यहेतोर्विवदिताः कश्यपस्य सुरासुराः ॥ २९
यूयं भङ्गास्वनापत्यास्तापसस्येतरे सुताः
युष्माकं पैतृकं राज्यं भुज्यते तापसात्मजैः ॥ ३०
इन्द्रेण भेदितास्ते तु युद्धेऽन्योन्यमपातयन् ।
तच्छ्रुत्वा तापसी चापि संतप्ता प्ररुरोद ह ॥ ३१
ब्राह्मणच्छद्मनाऽभ्येत्य तामिन्द्रोऽथान्वपृच्छत ।
केन दुःखेन संतप्ता रोदिषि त्वं वरानने ॥ ३२
ब्राह्मणं तं ततो दृष्ट्वा सा स्त्री करुणमब्रवीत् ।
पुत्राणां द्वे शते ब्रह्मन्कालेन विनिपातिते ॥ ३३
अहं राजाऽभवं विप्र तत्र पूर्वं शतं मम ।
समुत्पन्नं सुरूपाणां पुत्राणां ब्राह्मणोत्तम ॥ ३४
कदाचिन्मृगयां यात उद्भ्रान्तो गहने वने ।
अवगाढश्च सरसि स्त्रीभूतो ब्राह्मणोत्तम ॥ ३५
पुत्रान्राज्ये प्रतिष्ठाप्य वनमस्मि ततो गतः ॥ ३६
स्त्रियाश्च मे पुत्रशतं तापसेन महात्मना ।
आश्रमे जनितं ब्रह्मन्नीतं तन्नगरं मया ॥ ३७
तेषां च वैरमुत्पन्नं कालयोगेन वै द्विज ।
एतच्छोचाम्यहं ब्रह्मन्दैवेन समभिप्लुता ॥ ३८
इन्द्रस्तां दुःखितां दृष्ट्वा अब्रवीत्परुषं वचः ॥ ३९
पुरा सुदुःसहं भद्रे मम दुःखं त्वया कृतम् ।
इन्द्रद्विष्टेन यजता मामनाहूय धिष्ठितम् ।
इन्द्रोऽहमस्मि दुर्बुद्धे वैरं ते पातितं मया ॥ ४०

मृदुत्वादय. स्त्रीगुणा आगता. ॥ १४ ॥ कर्कशत्वादय. पुरुषगुणा. नष्टा' ॥ १५ ॥ प्रत्यपद्यत भर्तृत्वेन स्वीकृतवती ॥ २३ ॥ स्त्रीत्वदानेन द्विगुणितपुत्रप्राप्तिरूप उपकारएव जातो न स्त्रीत्वकृतोऽपकार इत्यर्थ. ॥ २७ ॥ इन्द्रद्विष्टेन अग्निष्टुता यज्ञेन । धिष्ठितमधिष्ठितम् । क्रतूनिति शेष. ॥ ४० ॥

चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

इन्द्रं दृष्ट्वा तु राजर्षिः पादयोः शिरसा गतः ।
प्रसीद त्रिदशश्रेष्ठ पुत्रकामेन स क्रतुः ।
इष्टस्त्रिदशशार्दूल तत्र मे क्षन्तुमर्हसि ॥ ४१
प्रणिपातेन तस्येन्द्रः परितुष्टो वरं ददौ ॥ ४२
पुत्रास्ते कतमे राजञ्जीवन्त्वेतत्प्रचक्ष्व मे ।
स्त्रीभूतस्य हि ये जाताः पुरुषस्याथ येऽभवन् ४३
तापसी तु ततः शक्रमुवाच प्रयताञ्जलिः ।
स्त्रीभूतस्य हि ये पुत्रास्ते मे जीवन्तु वासव ॥४४
इन्द्रस्तु विस्मितो दृष्ट्वा स्त्रियं पप्रच्छ तां पुनः ।
पुरुषोत्पादिता ये ते कथं द्वेष्याः सुतास्तव ॥४५
स्त्रीभूतस्य हि ये जाताः स्नेहस्तेभ्योऽधिकः कथम् ।
कारणं श्रोतुमिच्छामि तन्मे वक्तुमिहार्हसि ॥४६
स्त्र्युवाच ।
स्त्रियास्त्वभ्यधिकः स्नेहो न तथा पुरुषस्य वै
तस्मात्ते शक्र जीवन्तु ये जाताः स्त्रीकृतस्य वै ४७
भीष्म उवाच ।
एवमुक्तस्ततस्त्विन्द्रः प्रीतो वाक्यमुवाच ह ।
सर्व एवेह जीवन्तु पुत्रास्ते सत्यवादिनि ॥ ४८
वरं च वृणु राजेन्द्र यं त्वमिच्छसि सुव्रत ।
पुरुषत्वमथ स्त्रीत्वं मत्तो यदभिकाङ्क्षसे ॥ ४९
स्त्र्युवाच ।
स्त्रीत्वमेव वृणे शक्र पुंस्त्वं नेच्छामि वासव ।
एवमुक्तस्तु देवेन्द्रस्तां स्त्रियं प्रत्युवाच ह ॥ ५०
पुरुषत्वं कथं त्यक्त्वा स्त्रीत्वं रोचयसे विभो ।
एवमुक्तः प्रत्युवाच स्त्रीभूतो राजसत्तमः ॥ ५१
स्त्रियाः पुरुषसंयोगे प्रीतिरभ्यधिका सदा ।
एतस्मात्कारणाच्छक्र स्त्रीत्वमेव वृणोम्यहम् ॥५२
रमामि चाधिकं स्त्रीत्वे सत्यं वै देवसत्तम ।
स्त्रीभावेन हि तुष्यामि गम्यतां त्रिदशाधिप ॥५३
एवमस्त्विति चोक्त्वा तामापृच्छ्य त्रिदिवं गतः ।
एवं स्त्रिया महाराज अधिका प्रीतिरुच्यते ॥५४

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

## पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

भीष्मेण युधिष्ठिरंप्रति मनोवाक्कायरूपकरणैर्दुष्कर्मपरित्यागपूर्वकं शुभकर्मकरणस्य भगवत्प्रसादनहेतुत्वोक्तिः ॥ १ ॥

युधिष्ठिर उवाच ।
किं कर्तव्यं मनुष्येण लोकयात्राहितार्थिना ।
कथं वै लोकयात्रां तु किंशीलश्च समाचरेत् ॥ १
भीष्म उवाच ।
'देवे नारायणे भक्तिः शंकरे साधुपूजया ।
ध्यानेनाथ जपः कार्यः स्वधर्मैः शुचिचेतसा ॥'२
कायेन त्रिविधं कर्म वाचा चापि चतुर्विधम् ।
मनसा त्रिविधं चैव दश कर्मपथांस्त्यजेत् ॥ ३
प्राणातिपातः स्तैन्यं च परदाराभिमर्शनम् ।
त्रीणि पापानि कायेन सर्वतः परिवर्जयेत् ॥ ४
असत्प्रलापं पारुष्यं पैशुन्यमनृतं तथा ।
चत्वारि वाचा राजेन्द्र न जल्पेन्नानुचिन्तयेत् ॥५
अनभिध्या परस्वेषु सर्वसत्त्वेषु सौहृदम् ।
कर्मणां फलमस्तीति त्रिविधं मनसा चरेत् ॥ ६
तस्माद्वाक्कायमनसा नाचरेदशुभं नरः ।
शुभान्येवाचरँल्लोके भक्तो नारायणस्य हि ।
तस्यैव तु पदं सूक्ष्मं प्रसादादश्नुयात्परम् ॥' ७

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

लोकयात्रा लोकद्वयश्रेयःसाधनम् ॥ १ ॥ शुभं कर्मफलं चरेदिति ध. पाठः ॥ ३ ॥ प्राणातिपातो हिंसा ॥ ४ ॥ पारुष्यं निष्ठुरभाषणम् । पैशुन्यं राजद्वारादौ परदोषसूचनम् । अनृतं मिथ्यावादः । मनसाऽप्येवं वदिष्यामीति नानुचिन्तयेत् ॥ ५ ॥ अनभिध्येति श्लोकेन परद्रव्येष्वभिध्यानं परस्यानिष्टचिन्तनं वेदवादेषु नास्तिक्यमिति त्रीणि त्याज्यानि लक्षयेत् । दश त्यजेदित्युपक्रमात् ॥ ६ ॥ पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

## षट्त्रिंशोऽध्यायः ॥ ३६ ॥

•युधि[illegible] [illegible] [illegible]धर्माननघ प्राणिनां सांसारिकदु खानुवर्णनपूर्वकं स्वस्य संसारनिर्वेदनिवेदनेन पुनर्विस्तरेण [illegible] ॥ [illegible] ॥

'युधिष्ठिर उवाच ।
चित्तं मे दूयते तात लोके परमविन्दतः ॥ १
अशाश्वतमिदं सर्वं जगत्स्थावरजङ्गमम् ।
ऋते नारायणं पुण्यं प्रतिभाति पितामह ॥ २
नारायणो हि विश्वात्मा पुरुषः पुष्करेक्षणः
तस्यास्य देवकीसूनोः श्रुतं कृत्स्नं त्वयाऽनघ ।३
भीष्म उवाच ।
युधिष्ठिर महाप्राज्ञ मया दृष्टं च संगरे ॥ ४
युधिष्ठिर उवाच ।
त्वत्त एव तु राजेन्द्र राजधर्माश्च पुष्कलाः ।
श्रुतं पुराणमखिलं नारदेन निवेदितम् ।
गुह्यं नारायणाख्यानं त्रिविधक्लेशनाशनम् ।
एकान्तिधर्मनियमाः समासव्यासकल्पिताः
कथिता वै महाभाग त्वया वै मदनुग्रहात्
लोकरक्षणकर्तृत्वं तस्यैव हरिमेधसः ।
आतिथेयविधिश्चैव तपांसि नियमाश्च ये ॥ ७
वेदवादप्रसिद्धाश्च वाजपेयादयो मखाः ।
यज्ञा द्रविणनिष्पाद्या अग्निहोत्रानुपालिताः ॥ ८
जपयज्ञाश्च विविधा ब्राह्मणानां तपस्विनाम् ।
एकादशविधाः प्रोक्ता हविर्यज्ञा द्विजातिनाम् ९
तेषां फलविशेषाश्च उञ्छधर्मास्तथैव च ।
अहन्यहनि ये प्रोक्ता महायज्ञा द्विजातिनाम्॥१०
वेदश्रवणधर्माश्च ब्रह्मयज्ञफलं तथा ।
वेदव्रतविधानं च नियमाश्चैव वैदिकाः ॥ ११
स्वाहा स्वधा प्रणीते च इष्टापूर्तफलं तथा ।
उत्तरोत्तरसेवायामाश्रमाणां च यत्फलम् ॥ १२
प्रत्येकशश्च निष्ठायामाश्रमाणां महामते ।
मासपक्षोपवासानां सम्यगुक्तफलं च यत् ॥ १३
अनाग्नितानां ये लोका ये च पञ्चतपा नराः ।
वीराध्वानं प्रपन्नानां या गतिश्चाग्निहोत्रिणाम्॥१४
ग्रीष्मे पञ्चतपानां च शिशिरे जलचारिणाम् ।
वर्षे स्थण्डिलशायीनां फलं यत्परिकीर्तितम्॥१५
लोके चक्रचराणां च द्विजानां यत्फलं स्मृतम् ।
अन्नादीनां च दानानां यत्फलं परिकीर्तितम्॥१६
सर्वतीर्थाभिषिक्तानां नराणां च फलोदयः ।
राज्ञां धर्माश्च ये लोके सम्यक्पालयतां प्रजाः॥१७
ये च सत्यव्रता लोके ये च तीर्थे कृतश्रमाः ।
मातापितृपरा ये च गुरुवृत्तीश्च संश्रिताः ॥ १८
गोब्राह्मणपरित्राणे राष्ट्रातिक्रमणे तथा ।
त्यजन्त्यभिमुखाः प्राणान्निर्भयाः सत्वमाश्रिताः ॥
सहस्रदक्षिणानां च या गतिर्वदतां वर ।
ये च संध्यामुपासन्ते सम्यगुक्ता महाव्रताः ॥२०
तथा योगविधानं च यद्ग्रन्थेष्वभिशब्दितम् ।
वेदाद्यः श्रुतयश्चापि श्रुता मे गुरुसत्तम ॥ २१
सिद्धान्तनिर्णयाश्चापि द्वैपायनमुखोद्गताः ।
श्रुताः पञ्च महायज्ञा येषु सर्वं प्रतिष्ठितम् ॥२
तत्प्रभेदेषु ये धर्मास्तेऽपि वै कृत्स्नशः श्रुताः ।
न च दूषयितुं शक्याः सद्भिरुक्ता हि वै तथा॥२
एतेषां किल धर्माणामुत्तमो वैष्णवो विधिः ।
रक्षते भगवान्विष्णुर्भक्तमात्मशरीरवत् ॥ २
कर्मणो हि कृतस्येह कामितस्य द्विजोत्तम ।
फलं ह्यवश्यं भोक्तव्यमृषिर्द्वैपायनोऽब्रवीत् ॥२
भोगान्ते चापि पतनं गतिः पूर्वं प्रभाषिता ।
न मे प्रीतिकरास्त्वेते विषोदर्का हि मे मताः ॥२६
वधात्कष्टतरं मन्ये गर्भवासं महाद्युते ।
दिष्टान्ते यानि दुःखानि पुरुषो विन्दते विभो
ततः कष्टतराणीह गर्भवासे हि विन्दति ॥ २
ततश्चाभ्याधिकां तीव्रां वेदनां लभते नरः ।

गर्भोपक्रमणे तात कर्मणामुपसर्पणे ॥ २८
तस्मान्मे निश्चयो जातो धर्मेष्वेतेषु भारत
तदिच्छामि कुरुश्रेष्ठ त्वत्प्रसादान्महामते
तं धर्मं चेह वेत्तुं वै यो जराजन्ममृत्युहा ॥ २९
येनोष्णदा वैतरणी असिपत्रवनं च तत् ।
कुण्डानि चाग्नितप्तानि क्षुरधारापथस्तथा
शाल्मलीं च महाघोरामायसीं घोरकण्टकाम् ॥३०
मातापितृकृते चापि सुहृन्मित्रार्थकारणात् ।
आत्महेतोश्च पापानि कृतानीह नरैश्च यैः ।
तेषां फलोदयं कष्टमृषिर्द्वैपायनोऽब्रवीत् ॥ ३१
कुम्भीपाकमदीप्तानां शूलार्तानां च क्रन्दताम् ।
रौरवे क्षिप्यमाणानां प्रहारैर्मथितात्मनाम् ॥ ३२
स्तनतामपकृत्तानां पिबतामात्मशोणितम् ।
तेषामेव प्रवदतां कारुण्यं नास्ति यत्रतः ॥ ३३
तृष्णाशुष्कोष्ठकण्ठानां विह्वलानामचेतसाम् ।
सर्वदुःखाभिभूतानां रुजार्तानां च क्रोशताम् ३४
वेदनार्ता हि क्रन्दन्ति पूरयन्तो दिशो दश ॥३५
एकः करोति पापानि सहभोज्यानि बान्धवैः ।
तेषामेकः फलं भुङ्क्ते कष्टं वैवस्वते गृहे ॥ ३६
येन नैतां गतिं गच्छेन्न विण्मूत्रास्थिपिच्छिले ।
विष्ठामूत्रकृमीमध्ये बहुजन्तुनिषेविते ॥ ३७
को गर्भवासात्परतो नरकोऽन्यो विधीयते ।
यत्र वासकृतो योगः कुक्षौ वासो विधीयते ॥३८
जातो विस्तीर्णशोकः स्यांद्भवेतं विगतज्वरः ।
न चैष लभ्यते कामो जातमात्रं हि मानवम् ।
आविशन्तीह दुःखानि मनोवाक्कायिकानि तु॥३९
तैरस्वतन्त्रो भवति पीड्यमानो भयानकैः ।
तैर्गर्भवासं गच्छति अवशो जायते तथा ॥ ४०
अवशश्चेहते जन्तुर्व्रजत्यवश एव हि ।
जरसा रूपविध्वंसं प्राप्नोत्यवश एव तु ॥ ४१
शरीरभेदमाप्नोति जीर्यतेऽवश एव तु ।
एवं ह्यनियतो मृत्युर्भवत्येव सदा नृषु ॥ ४२
गर्भेषु म्रियते कश्चिज्जायमानस्तथाऽपरः ।
जाता म्रियन्ते बहवो यौवनस्थास्तथाऽपरे ।
मध्यभावे तु नश्यन्ति स्थविरो मृत एव तु ॥ ४३
को जन्मनो नोद्विजेत स्वयंभूरपि यो भवेत् ।
कुतस्त्वस्माद्विधस्तात मरण वशानुगः ॥ ४४
नित्याविष्टो भयेनाहं मनसा कुरुसत्तम
मुहूर्तमप्यहं शर्म न विन्दामि महामते ॥ ४५
कालात्मनि तिरोभूतो नित्यं तद्गुणवर्जितः ।
अन्नैर्बहुविधैः पुष्टं वस्त्रैर्नानाविधैर्वृतम् ॥ ४६
चन्दनागरुदिग्धाङ्गं मणिमुक्ताविभूषितम् ।
यानैर्बहुविधैर्यातमेकान्तेनैव लालितम् ॥ ४७
यौवनोद्धतरूपाभिर्मन्दविह्वलगामिभिः ।
इष्टाभिरभिरामाभिर्वरस्त्रीभिरयन्त्रितम् ॥ ४८
रमितं सुचिरं कालं शरीरममितप्रभम् ।
अवितृप्ता गमिष्यन्ति हित्वा प्राणांस्तथाऽपरे॥४९
स्वर्गेऽप्यनियता भूतिस्तथैवाकाशसंश्रये ।
देवाऽप्यधिष्ठानवशास्तस्मादेवं न कामये ॥ ५०
कामानां नास्त्यधिष्ठानमकामस्तु निवर्तते ।
लोकसंग्रहधर्मास्तु सर्व एव न संशयः ॥ ५१
डोलासधर्मा धर्मज्ञ ऋषिर्द्वैपायनोऽब्रवीत् ।
अस्मात्को विषमं दुःखमारोहेत विचक्षणः ॥ ५२
विद्यमाने समे मार्गे डोलाधर्मविवर्जिते ।
को ह्यात्मानं प्रियं लोके डोलासाधर्म्यतांनयेत् ५३
चराचरैः सर्वभूतैर्गन्तव्यमविशङ्कया ।
अस्माल्लोकात्परं लोकमपाथेयमदैशिकम् ।
घोरं तमः प्रवेष्टव्यमत्रातारमबान्धवम् ॥ ५४
ये तु तं किल धर्मज्ञा धर्मं नारायणेरितम् ।
अनन्यमनसो दान्ताः स्मरन्ति नियतव्रताः ॥५५
ततस्तेनैव पश्यन्ति प्राप्नुवन्ति परं पदम् ।
रक्षते भगवान्विष्णुर्भक्तानात्मशरीरवत् ॥ ५६
कुलालचक्रप्रतिमे भ्राम्यमाणेषु जन्तुषु ।
मातापितृसहस्राणि संप्राप्तानि मया गुरो ॥ ५७
स्नेहापन्नेन पीतास्तु मातॄणां विविधाः स्तनाः ॥५८
पुत्रदारसहस्राणि इष्टानिष्टशतानि च ।
प्राप्तान्यधिष्ठानवशादतीतानि तथैव च ।

न क्वचिच्च सुखं प्राप्तं न क्वचिच्छाश्वती स्थितिः॥५९
स्थानैर्महद्भिर्विभ्रंशो दुःखलब्धैः पुनः पुनः।
धननाशश्च संप्राप्तो लब्ध्वा दुःखेन तद्धनम्।
अध्वगानामिव पथि च्छायामाश्रित्य संगमः॥६०
एवं कर्मवशो लोको ज्ञातीनां हितसंगमः।
विश्रम्य च पुनर्याति कर्मभिर्दर्शितां गतिम्॥६१
एतदीदृशकं दृष्ट्वा ज्ञात्वा चैव समागमम्।
को न विभ्येत्कुरुश्रेष्ठ विष्ठान्नस्येव भोजनात्॥६२
बुद्धिश्च मे समुत्पन्ना वैष्णवे धर्मविस्तरे।
तदेव शिरसा पादौ गतोऽस्मि भगवंस्तव।
शरणं च प्रपन्नोऽस्मि गन्तव्ये शरणे ध्रुवे॥ ६३
जन्ममृत्युजराखिन्नस्त्रिभिर्दुःखैर्निपीडितः।
इच्छामि भवता त्रातुमेभ्यस्त्वत्तो महामते।
तस्माद्य युगधर्मस्य श्रवणात्कुरुपुङ्गव॥ ६४
एतदाद्ययुगोद्भूतं त्रेतायां तत्तिरोहितम्।
स एव धर्ममखिलमृषिर्द्वैपायनोऽब्रवीत्॥' ६५

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि षट्त्रिंशोऽध्यायः॥ ३६॥

## सप्तत्रिंशोऽध्यायः॥ ३७॥

भीष्मेण युधिष्ठिरंप्रति ब्रह्मादिस्तम्बजगतामनित्यत्वादिकथनपूर्वकं नारायणस्य नित्यत्वादिकथनेन तदुपासनविधानम्॥१॥

'भीष्म उवाच।
सदृशं राजशार्दूल वृत्तस्य च कुलस्य च॥ १
को राज्यं विपुलं गृह्य स्फीताकारं पुनर्महत्।
निर्जितारातिसामन्तं देवराज्योपमं सुखम्॥ २
राज्ये राज्यगुणा ये च तान्व्युदस्य नराधिप।
दोषं पश्यति राजेन्द्र देहेऽस्मिन्पाञ्चभौतिके॥३
अतिक्रान्तास्त्वया राजन्वृत्तेन प्रपितामहाः।
धर्मो विग्रहवान्धीरो विदुरश्च महायशाः॥ ४
संजयश्च महातेजा ये चान्ये दिव्यदर्शनाः।
प्रवृत्तज्ञानसंपन्नास्तत्त्वज्ञानविदो नृप॥ ५
तेऽतिक्रान्ता ब्रह्मराज ब्रह्माद्याः ससुरासुराः
अनित्यं दुःखबहुलं जगदेतन्न संशयः॥ ६
एवमेतान्महाबाहो ब्रह्माद्यान्ससुरासुरान्।
अनित्यान्सततं पश्य मनुष्यादिषु का कथा॥७
नित्यां तु प्रकृतीमाह याऽसौ प्रसवधर्मिणी।
अरूपिणीमनिर्देश्यामकृतां पुरुषातिगाम्॥ ८
तामत्यन्तसुखां सौम्यां निर्वाणमिति संज्ञिताम्।
आहुर्ब्रह्मर्षयो द्यावां भुवि चैव महर्षयः॥ ९
तया पुरुषरूपिण्या धर्मप्रकृतिकोऽनव।
स यात्येव हि निर्वाणं दत्तत्प्रकृतिसंज्ञितम्॥१०
स एष प्राकृतो धर्मो भ्राजत्यादियुगे नृप।
विकारधर्माः शेषेषु युगेषु भरतर्षभ।
भ्राजन्तेऽभ्यधिकं वीर संसारपथगोचराः॥ ११
प्रकृतीनां च सर्वासामकृता प्रकृतिः स्मृता।
एवं प्रकृतिधर्मा हि वरां प्रकृतिमाश्रिता॥ १२
पश्यन्ति परमां लोके दृष्टादृष्टानुदर्शिनीम्।
सत्वादियुगपर्यन्ते त्रेतायुगसमुद्भवे॥ १३
कामं कामयमानेषु ब्राह्मणेषु तिरोहितः।
कुपथेषु तु धर्मेषु प्रादुर्भूतेषु कौरव।
जातो मन्दप्रचारो हि धर्मः कलियुगे नृप॥१४
नित्यस्तु पुरुषो ज्ञेयो विश्वरूपो निरञ्जनः।
ब्रह्माद्या अपि देवाश्च यं सदा पर्युपासते॥ १५
तं च नारायणं विद्धि परं ब्रह्मेति शाश्वतम्।
तत्कर्म कुरु कायेन ध्यायस्व मनसा च तम्॥१६
कीर्तयस्व च तन्नाम वाचा सर्वत्र भूपते।
तत्पदं प्राप्नुहि प्राप्यं शाश्वतं चापुनर्भवम्॥ १७
इत्येतद्विष्णुमाश्रित्य संसारग्रहमोक्षणम्।
कथितं ते महाबाहो किं भूयः श्रोतुमिच्छसि॥'१८

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि सप्तत्रिंशोऽध्यायः॥ ३७॥

देहेऽस्मिन्पञ्चविंशक इति ट. थ. ध. पाठः॥ ३॥

सप्तत्रिंशोऽध्यायः॥ ३७॥

## अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

भीष्मेण युधिष्ठिरंप्रति तत्वसृष्ट्यादिप्रतिपादकनारदसनत्कुमारसंवादानुवादः ॥ १ ॥

उवाच ।
क्लिश्यमानेषु भूतेषु जातीमरणसागरे ।
यत्प्राप्य क्लेशं नाप्नोति तन्मे ब्रूहि पितामह ॥ १
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
सनत्कुमारस्य सतः संवादं नारदस्य च ॥ २
सनत्कुमारो भगवान्ब्रह्मपुत्रो महायशाः ।
पूर्वजातास्त्रयस्तस्य कथ्यन्ते ब्रह्मवादिनः ॥ ३
सनकः सनन्दनश्चैव तृतीयश्च सनातनः ।
जातमात्राश्च ते सर्वे प्रतिबुद्धा इति श्रुतिः ॥ ४
चतुर्थश्चैव तेषां स भगवान्योगवित्तमः ।
सनत्कुमार इति वै कथयन्ति महर्षयः ॥ ५
हैरण्यगर्भः स मुनिर्वसिष्ठः पञ्चमः स्मृतः ।
षष्ठः स्थाणुः स भगवानमेयात्मा त्रिशूलधृत् ॥ ६
ततोऽपरे समुत्पन्नाः पावकादारुणे क्रतौ ।
मनसा स्वयंभुवो हीमे मरीचिप्रमुखास्तथा ॥ ७
भृगुर्मरीचेरनुजो भृगोरप्यङ्गिरास्तथा ।
अनुजोऽङ्गिरसोऽथात्रिः पुलस्त्योऽत्रेस्तथाऽनुजः ॥८
पुलस्त्यस्यानुजो विद्वान्पुलहो नु महाद्युतिः ।
पश्यन्ते ब्रह्मजा ह्येते विद्वद्भिरमितौजसः ॥ ९
सर्वमेतन्महाराज कुर्वन्नादिगुरुर्महान् ।
प्रभुर्विभुरनन्तश्रीर्ब्रह्मा लोकपितामहः ॥ १०
मूर्तिमन्तोऽमूर्तीभूतास्तेजसाऽतितपोन्विताः ।
सनकप्रभृतयस्तत्र ये च प्राप्ताः परं पदम् ।
कृत्स्नं क्षयमनुप्राप्य विमुक्ता मूर्तिबन्धनात् ॥११
सनत्कुमारस्तु विभुर्योगमास्थाय योगवित् ।
त्रीँल्लोकानचरच्छश्वदैश्वर्येण परेण हि ॥ १२
रुद्रश्चाप्यष्टगुणितं योगं प्राप्तो महायशाः ।
सूक्ष्ममष्टगुणं राजन्नितरे नृपसत्तम ॥ १३
मरीचिप्रमुखास्तात सर्वे सृष्ट्यर्थमेव ते ।
नियुक्ता राजशार्दूल तेषां सृष्टिं शृणुष्व मे ॥१४
सप्त ब्रह्माण इत्येते पुराणे निश्चयं गताः ।
सर्वे वेदेषु चैवोक्ताः खिलेषु च न संशयः ॥१५
इतिहासपुराणे च श्रुतिरेषा सनातनी ।
ब्राह्मणा वरदानेतान्प्राहुर्वेदान्तपारगाः ॥ १६
एतेषां पितरस्तात पुत्रा इत्यनुचक्षते ।
गणाः सप्त महाराज मूर्तयोऽमूर्तयस्तथा ॥ १७
पितॄणां चैव राजेन्द्र पुत्रा देवा इति श्रुतिः ।
देवैर्व्याप्ता इमे लोका इत्येवमनुशुश्रुम ॥ १८
कृष्णद्वैपायनाच्चैव देवस्थानात्तथैव च ।
देवलाच्च नरश्रेष्ठ काश्यपाच्च मया श्रुतम् ॥ १९
गौतमादपि कौण्डिन्याद्भारद्वाजात्तथैव च ।
मार्कण्डेयात्तथैवैतद्दृषेर्देवमतादपि ॥ २०
पित्रा च मम राजेन्द्र श्राद्धकाले प्रभाषितम् ।
परं रहस्यं वेदान्तं प्रियं हि परमात्मनः ॥ २१
अतः परं प्रवक्ष्यामि यन्मां पृच्छसि भारत ।
तदिहैकमनोबुद्धिः शृणुष्वावहितो नृप ।
स्वायंभुवस्य संवादं नारदस्य च धीमतः ॥ २२
सनत्कुमारो भगवान्दिव्यं जज्वाल तेजसा ।
अङ्गुष्ठमात्रो भूत्वा वै विचचार महाद्युतिः ॥२३
स कदाचिन्महाभागो मेरुपृष्ठं समागमत् ।
नारदेन नरश्रेष्ठ मुनिना ब्रह्मवादिना ॥ २४
जिज्ञासमानावन्योन्यं सकाशे ब्रह्मणस्ततः ।
ब्रह्म भागवतौ तात परमार्थार्थचिन्तकौ ॥ २५
मतिमान्मतिमच्छ्रेष्ठं बुद्धिमान्बुद्धिमत्तरम् ।
क्षेत्रवित्क्षेत्रविच्छ्रेष्ठं ज्ञानविज्ञानमत्तमम् ॥ २६
सनत्कुमारं तत्वज्ञं भगवन्तमरिंदम ।
लोकविल्लोकविच्छ्रेष्ठमात्मविचात्मवित्तमम् ।
सर्ववेदार्थकुशलं सर्वशास्त्रविशारदम् ॥ २७
साङ्ख्ययोगं च यो वेद पाणावामलकं यथा ।
नारदोऽथ नरश्रेष्ठ तं पप्रच्छ महाद्युतिः ॥ २८
नारद उवाच ।
त्रयोविंशतितत्वस्य अव्यक्तस्य महामुने ।
प्रभवं चाप्ययं चैव श्रोतुमिच्छामि तत्वतः ॥२९

अध्यात्ममधिभूतं च अधिदैवं तथैव च ।
कालमङ्ख्याश्च सर्गं च स्रष्टारं पुरुषं प्रभुम् ॥ ३०
यं विश्वमुपजीवन्ति येन सर्वमिदं ततम् ।
यं प्राप्य न निवर्तन्ते तद्भवान्वक्तुमर्हति ॥ ३१
सनत्कुमार उवाच ।
यं विश्वमुपजीवन्ति यमाहुः पुरुषं परम् ।
तं वै शृणु महाबुद्धे नारायणमनामयम् ॥ ३२
एष नारायणो नाम यं विश्वमुपजीवति ।
एष स्रष्टा विधाता च भर्ता पालयिता प्रभुः ॥ ३३
प्राप्यैनं न निवर्तन्ते यतयोऽध्यात्मचिन्तकाः ।
एतावदेव वक्तव्यं मया नारद पृच्छते ॥ ३४
परं न वेद्मि तत्सर्गं यावांश्चायं यथाप्यहम् ।
श्रूयतामानुपूर्व्येण न च सर्गः प्रयत्नतः ॥ ३५
यथा कालपरीमाणं तत्वानामृषिसत्तम ।
अध्यात्ममधिभूतं च अधिदैवं तथैव च ।
कालसंख्यां च सर्गं च सर्वमेव महामुने ॥ ३६
तमसः कुर्वतः सर्गं तामसो ह्यभिधीयते ।
ब्रह्मविद्भिर्द्विजैर्नित्यं नित्यमध्यात्मचिन्तकैः ॥ ३७
पर्यायनामान्येतस्य कथयन्ति मनीषिणः ।
तानि त संप्रवक्ष्यामि तदिहैकमनाः शृणु ॥ ३८
महार्णवोऽर्णवश्चैव सलिलं च गुणास्तथा ।
वेदास्तपांसि यज्ञाश्च धर्माश्च भगवान्विभुः ।
प्राणः सावर्तकोऽग्निश्च व्योम कालस्तथैव च ॥ ३९
नामान्येतानि ब्रह्मर्षे शरीरस्येश्वरस्य वै ।
कीर्तितानि द्विजश्रेष्ठ मया शास्त्रानुसारतः ॥ ४०
चतुर्युगसहस्राणि चतुर्युगमरिंदम ।
प्राहुः कल्पसहस्रं वै ब्राह्मणास्तत्वदर्शिनः ॥ ४१
दशकल्पसहस्राणि अव्ययस्य महानिशा ।
तथैव दिवसं प्राहुर्योगाः साङ्ख्याश्च तत्वतः ४२
निशासुप्तोथ भगवान्क्षपान्ते प्रत्यबुध्यत ।
पश्चाद्बुद्ध्वा ससर्जापस्तासु वीर्यमवासृजत् ॥ ४३
तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ।
अहंकृत्वा ततस्तस्मिन्ससर्ज प्रभुरीश्वरः ॥ ४४
हिरण्यगर्भं विश्वात्मा ब्रह्माणं जलवन्मुनिम् ।
भूतभव्यभविष्यस्य कर्तारमनघं विभुम् ।
मूर्तिमन्तं महात्मानं विश्वशंभुं स्वयंभुवम् ॥ ४५
अणिमा लघिमा प्राप्तिरीशानो ज्योतिषां नरम् ।
चक्रे तिरोधां भगवानेतत्कृत्वा महायशाः ॥ ४६
एतस्यापि निशामाहुर्वेदवेदाङ्गपारगाः ।
पञ्चकल्पसहस्राणि अहरेतावदेव च ॥ ४७
स सर्गं कुरुते ब्रह्मा तामसश्चानुपूर्व्यशः ।
सृजतेऽहं त्वहंकारं परमेष्ठिनमव्ययम् ॥ ४८
अहंकारेणैव लोका व्याप्ताः साहंकृतेन वै ।
येनाविष्टानि भूतानि मज्जन्त्यव्यक्तसागरे ॥ ४९
देवर्षिदानवनरा यक्षगन्　　।
उन्मज्जन्ति निमज्जन्ति ऊर्ध्वाधस्तिर्यगेव च ॥ ५०
एतस्यापि निशामाहुस्तृतीयामथ कुर्वतः ।
त्रीणि कल्पसहस्राणि अहरेतावदेव तु ॥ ५१
अहंकारस्तु सृजति महाभूतानि पञ्च वै ।
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ॥ ५२
एतेषां गुणतत्वानि पञ्च प्राहुर्द्विजातयः ।
शब्दे स्पर्शे च रूपे च रसे गन्धे तथैव च ॥ ५३
गुणेष्वेतेष्वभिरताः पङ्कलग्ना इव द्विपाः ।
नोत्तिष्ठन्त्यवशीभूताः सक्ता अव्यक्तसागरे ॥ ५४
एतेषामिह वै सर्वं चतुर्थमिह कुर्वतः ।
चतुर्युगसहस्रे वै अहोरात्रास्तथैव च ॥ ५५
अनन्त इति विख्यातः पञ्चमः सर्ग उच्यते ।
इन्द्रियाणि दशैकं च यथाश्रुतिनिदर्शनात् ॥ ५६
मनः सर्वमिदं तात विश्वं सर्वमिदं जगत् ।
न तथान्यानि भूतानि बलवन्ति यथा मनः ५७
एतस्यापि ह वै सर्गं षष्ठमाहुर्द्विजातयः ।
अहः कल्पसहस्रं वै रात्रिरेतावती तथा ॥ ५८
ऊर्ध्वस्रोतस्तु वै सर्गं सप्तमं ब्रह्मणो विदुः ।
अष्टमं चाप्यधःस्रोतस्तिर्यक्तु नवमः स्मृतः ॥ ५९
एतानि नव सर्गाणि तत्वानि च महामुने ।
चतुर्विंशतितत्वानि तत्वसंख्यानि तेऽनघ ॥ ६०
सर्वस्य प्रभवः पूर्वमुक्तो नारायणः प्रभुः ।

अव्ययः प्रभवश्चैव अव्यक्तस्य महामुने ।
प्रवक्ष्याम्यपरं तत्त्वं यस्य यस्येश्वरश्च यः ॥ ६१
अध्यात्ममधिभूतं च अधिदैवं तथैव च ।
यथाश्रुतं यथादृष्टं तत्त्वतो वै निबोध मे ॥' ६२

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

## एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

सनत्कुमारेण नारदंप्रति प्रलयप्रकारादिकथनम् ॥ १ ॥ तथा भूतादिनिरूपणम् ॥ २ ॥

'सनत्कुमार उवाच ।
अधःस्रोतसि सर्गे च तिर्यक्स्रोतसि चैव हि ।
एताभ्यामीश्वरं विन्द्यादूर्ध्वस्रोतस्तथैव च ॥ १
कर्मेन्द्रियाणां पञ्चानामीश्वरो बुद्धिगोचरः
बुद्धीन्द्रियाणामपि तु ईश्वरो मन उच्यते
मनसः पञ्चभूतानि सगुणान्याहुरीश्वरम् ।
भूतानामीश्वरं विद्याद्ब्रह्माणं परमेष्ठिनम् ॥ ३
भवान्हि कुशलश्चैव धर्मेष्वेषु परेषु वै ।
कालाग्निरद्भुः कल्पान्ते जगद्दहति चांशुभिः ॥ ४
ततः सर्वाणि भूतानि स्थावराणि चराणि च ।
महाभूतानि दग्धानि स्वां योनिं गमितानि वै ॥५
कूर्मपृष्ठनिभा भूमिर्निर्दग्धकुशकण्टका ।
निर्वृक्षा निस्तृणा चैव दग्धा कालाग्निना तदा ॥६
जगत्प्रलीनं जगति जगच्चापि प्रलीयते ।
नष्टगन्धा तदा सूक्ष्मा जलमेवाभवत्तदा ॥ ७
ततो मयूखजालेन सूर्यस्त्वापीयते जलम् ।
रसात्मा लीयते चार्के तथा ब्राह्मणसत्तम ॥
अन्तरिक्षगतान्भूतान्प्रदहत्यनलस्तदा ।
अग्निभूतं तदा व्योम भवतीत्यभिचक्षते ॥ ९
तं तथा विस्फुरद्वह्निं वायुर्जरयते महान् ।
महता बलवेगेन आदत्ते तं हि भानुमान् ॥ १०
वायोरपि गुणं स्पर्शमाकाशं ग्रसते यदा ।
प्रशाम्यति तदा वायुः खं तु तिष्ठति नानदत् ॥११
तस्य तं निनदं शब्दमादत्ते वै मनस्तदा ।
स शब्दगुणहीनात्मा तिष्ठते मूर्तिमांस्तु वै ॥ १२
भुङ्क्ते च स तदा व्योम मनस्तात दिगात्मकम् ।
व्योमात्मनि विनष्टे तु संकल्पात्मा विवर्धते ॥१३
संकल्पात्मानमादत्ते चित्तं वै स्वेन तेजसा ।
चित्तं ग्रसत्यहंकारस्तदा वै मुनिसत्तम ॥ १४
विनष्टे च तदा चित्ते अहंकारोऽभवन्महान् ।
अहंकारं तदादत्ते महान्ब्रह्मा प्रजापतिः ॥ १५
अभिमाने विनष्टे तु महान्ब्रह्मा विराजते ।
तं तदा त्रिषु लोकेषु मूर्तिष्वेवाग्रमूर्तिजम् ॥ १६
येन विश्वमिदं कृत्स्नं निर्मितं वै गुणार्थिना ।
मूर्तं जलेचरमपि व्यवसायगुणात्मकम् ।
ग्रसिष्णुर्भगवान्ब्रह्मा व्यक्ताव्यक्तमसंशयम् ॥ १७
एषोऽव्ययस्य प्रलयो मया ते परिकीर्तितः ।
अध्यात्ममधिभूतं च अधिदैवं च श्रूयताम् ॥१८

आकाशं प्रथमं भूतं श्रोत्रमध्यात्मं शब्दोधिभूतं दिशोधिदैवतं ॥ १९

वायुर्द्वितीयं भूतं त्वगध्यात्मं स्पर्शोधिभूतं विद्युदधिदैवतं स्यात् ॥ २०

ज्योतिस्तृतीयं भूतं चक्षुरध्यात्मं रूपमधिभूतं सूर्योधिदैवतं स्यात् ॥ २१

आपश्चतुर्थं भूतं जिह्वाध्यात्मं रसोधिभूतं वरुणोधिदैवतं स्यात् ॥ २२

पृथिवी पञ्चमं भूतं घ्राणमध्यात्मं गन्धोधिभूतं वायुरधिदैवतं स्यात् ॥ २३

पाञ्चभौतिकमेतच्चतुष्टयं वर्णितम् । अत ऊर्ध्वमिन्द्रियमनुवर्णयिष्यामः ॥ २४

पादावध्यात्मं गन्तव्यमधिभूतं विष्णुरधिदैवतं स्यात् ॥ २५

हस्तावध्यात्मं कर्तव्यमधिभूतमिन्द्रोऽधिदैवतं स्यात् ॥ २६

पायुरध्यात्मं विसर्गोऽधिभूतं मित्रोऽधिदैवतं स्यात् ॥ २७

उपस्थोऽध्यात्ममानन्दोऽधिभूतं प्रजापतिर-
धिदैवतं स्यात् ॥ २८
वागध्यात्मं वक्तव्यमधिभूतमग्निरधिदैवतं स्यात् ॥
मनोऽध्यात्मं मन्तव्यमधिभूतं चन्द्रमा अधि-
दैवतं स्याद् ॥ ३०
अहङ्कारोऽध्यात्ममभिमानोऽधिभूतं विरि-
ञ्चोऽधिदैवतं स्यात् ॥ ३१
बुद्धिरध्यात्मं व्यवसायोऽधिभूतं ब्रह्माधिदैवतं
स्यात् ॥ ३२
एवमव्यक्तो भगवान्सकृत्कृत्स्नान्कुरुते संहरते
च । कर्मान्क्रीडार्थम् ॥ ३३
यथाऽऽदित्योंऽशुजालं क्षिपति संहरते च
एवमव्यक्तो गुणान्सृजति संहरते च ॥ ३४
यथाऽर्णवादूर्मिमालानिच यश्चोर्ध्वमुत्तिष्ठते
संहरते च ।

यथा चान्तरिक्षादभ्रमाकाशमुत्तिष्ठति स्त-
नितगर्जितोन्मिश्रं तद्वत्तत्रैव प्रणश्यत् ।
एवमव्यक्तो गुणान्सृजति संहरति च ॥ ३५
यथा कूर्मोऽङ्गानि कामात्प्रसारयते पुनश्च
प्रवेशयति एवमव्यक्तो भगवान्लोकान्प्रकाशयति
प्रवेशयते च ॥ ३६
एवं चेतनश्च भगवान्पञ्चविंशः शुचिस्तेनाधि-
ष्ठिता प्रकृतिश्चेतयति नित्यं सहधर्मा च । भग-
वतोऽव्यक्तस्य क्रियावतोक्रियावतश्च प्रकृतिः क्रि-
यावानजरामरः क्षेत्रज्ञो नारायणाख्यः पुरुषः॥३७
भीष्म उवाच ।
इत्येतन्नारदायोक्तं कुमारेण च धीमता ।
एतच्छ्रुत्वा द्विजो राजन्सर्वयज्ञफलं लभेत् ॥' ३८

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

## चत्वारिंशोऽध्यायः ॥ ४० ॥

ब्रह्मणा देवान्प्रति नारायणमहिमप्रतिपादकगरुडकश्यपसंवादानुवादः ॥ १ ॥

'युधिष्ठिर उवाच ।
आत्मन्यग्नौ समाधाय य एते कुरुनन्दन ।
द्विजातयो व्रतोपेता जपयज्ञपरायणाः ॥ १
यजन्त्यारम्भयज्ञैश्च मानसं यज्ञमास्थिताः ।
अग्निभ्यश्च परं नास्ति येषामेषोऽव्यवस्थितः ॥ २
तेषां गतिर्महाप्राज्ञ कीदृशी किंपराश्च ते ।
एतदिच्छामि तत्वेन त्वत्तः श्रोतुं पितामह ॥ ३
भीष्म उवाच ।
अत्र ते वर्तयिष्यामि इतिहासं पुरातनम् ।
च संवादं सुपर्णस्य च भारत ॥ ४
अमृतस्य समुत्पत्तौ देवानामसुरैः सह ।
षष्टिवर्षसहस्राणि दैवासुरमवर्तत ॥ ५
तत्र देवास्तु दैतेयैर्वध्यन्ते भृशदारुणैः ।
त्रातारं नाधिगच्छन्ति वध्यमाना महासुरैः ॥ ६

आर्तास्ते देवदेवेशं प्रपन्नाः शरणैषिणः ।
पितामहं महाप्राज्ञं वध्यमानाः सुरेतरैः ॥ ७
ता दृष्ट्वा देवता ब्रह्मा संभ्रान्तेन्द्रियमानसः ।
वैकुण्ठं शरणं देवं प्रतिपेदे च तैः सह ॥ ८
ततः स देवैः सहितः पद्मयोनिर्नरेश्वर ।
तुष्टाव प्राञ्जलिर्भूत्वा नारायणमनामयम् ॥ ९
त्वद्रूपचिन्तनान्नाम्नां स्मरणादर्चनादपि ।
तपोयोगादिभिश्चैव श्रेयो यान्ति मनीषिणः १०
भक्तवत्सल पद्माक्ष परमेश्वर पापहन् ।
परमात्माऽविकाराद्य नारायण नमोस्तु ते ॥११
नमस्ते सर्वलोकादे सर्वात्मामितविक्रम ।
सर्वभूतभविष्येश सर्वभूतमहेश्वर ॥ १२
देवानामपि देवस्त्वं सर्वविद्यापरायणः ।
जगद्बीजसमाहार जगतः परमो ह्यसि ॥ १३

जगद्बीजसमारम्भेति पाठान्तरम् ॥ १३ ॥

त्रायस्व देवता वीर दानवाद्यैः सुपीडिताः ।
लोकांश्च लोकपालांश्च ऋषींश्च जयतांवर ॥ १४
वेदाः साङ्गोपनिषदः सरहस्याः ससंग्रहाः ।
सोङ्काराः सवषट्काराः प्राहुस्त्वां यज्ञमुत्तमम् ॥१५
पवित्राणां पवित्रं च मङ्गलानां च मङ्गलम् ।
तपस्विनां तपश्चैव दैवतं देवतास्वपि ॥ १६
एवमादिपुरस्कारैर्ऋक्सामयजुषां गणैः ।
वैकुण्ठं तुष्टुवुर्देवाः सर्वे ब्रह्मर्षिभिः सह ॥ १७
ततोऽन्तरिक्षे वागासीन्मेघगम्भीरनिस्वना ।
जेष्यध्वं दानवान्यूयं मयैव सह सङ्गरे ॥ १८
ततो देवगणानां च दानवानां च युध्यताम् ।
प्रादुरासीन्महातेजाः शार्ङ्गचक्रगदाधरः ॥ १९
सुपर्णपृष्ठमास्थाय तेजसा प्रदहन्निव ।
व्यधमद्दानवान्सर्वान्बाहुद्रविणतेजसा ॥ २०
तं समासाद्य समरे दैत्यदानवपुङ्गवाः ।
व्यनश्यन्त महाराज पतङ्गा इव पावकम् ॥ २१
स विजित्यासुरान्सर्वान्दानवांश्च महामतिः ।
पश्यतामेव देवानां तत्रैवान्तरधीयत ॥ २२
तं दृष्ट्वाऽन्तर्हितं देवा विष्णुं देवामितद्युतिम् ।
विस्मयोत्फुल्लनयना ब्रह्माणमिदमब्रुवन् ॥ २३
भगवन्सर्वलोकेश सर्वलोकपितामह ।
इदमत्यद्भुतं वृत्तं तन्नः शंसितुमर्हसि ॥ २४
दैवासुरेऽस्मिन्संग्रामे त्राता येन वयं विभो ।
एतद्विज्ञातुमिच्छामः कुतोसौ कश्च तत्वतः ॥२५
कोऽयमस्मान्परित्राय तूष्णीमेव यथागतम् ।
प्रतिप्रयातो दिव्यात्मा तं नः शंसितुमर्हसि ॥२६
एवमुक्तः सुरैः सर्वैर्वचनं वचनार्थवित् ।
उवाच पद्मनाभस्य पूर्वरूपं प्रति प्रभो ॥ २७
ब्रह्मोवाच ।
न ह्येनं वेद तत्वेन भुवनं भुवनेश्वरम् ।
सङ्ख्यातुं नैव चात्मानं निर्गुणं गुणिनां वरम् ॥२८
अत्र ते वर्तयिष्यामि इतिहासं पुरातनम् ।
सुपर्णस्य च संवादमृषीणां चापि देवताः ॥ २९
पुरा ब्रह्मर्षयश्चैव सिद्धाश्च भुवनेश्वरम् ।
आश्रित्य हिमवत्पृष्ठे चक्रिरे विविधाः कथाः ॥३०
तेषां कथयतां तत्र कथान्ते पततां वरः ।
प्रादुरासीन्महातेजा वाहश्चक्रगदाभृतः ॥ ३१
स तानृषीन्समासाद्य विनयावनताननः ।
अवतीर्य महावीर्यस्तानृषीनभिजग्मिवान् ॥ ३२
अभ्यर्चितः स ऋषिभिः स्वागतेन महाबलः ।
उपाविशत तेजस्वी भूमौ वेगवतां वरः ॥ ३३
तमासीनं महात्मानं वैनतेयं महाद्युतिम् ।
ऋषयः परिपप्रच्छुर्महात्मानस्तपस्विनः ॥ ३४
कौतूहलं वैनतेय परं नो हृदि वर्तते ।
तस्य नान्योस्ति वक्तेह त्वामृते पन्नगाशन ॥३५
तदाख्यातमिहेच्छामो भवता प्रश्नमुत्तमम् ।
एवमुक्तः प्रत्युवाच प्राञ्जलिर्विनतासुतः ॥ ३६
धन्योस्म्यनुगृहीतोस्मि यन्मां ब्रह्मर्षिसत्तमाः ।
प्रष्टव्यं प्रष्टुमिच्छन्ति प्रीतिमन्तोऽनसूयकाः ॥३७
किं मया ब्रूत वक्तव्यं कार्यं च वदतां वराः ।
यूयं हि मां यथायुक्तं सर्वे वै प्रष्टुमर्हथ ॥ ३८
नमस्कृत्वा ह्यनन्ताय ततस्त ऋषिसत्तमाः ।
प्रष्टुं प्रचक्रमुस्तत्र वैनतेयं महाबलम् ॥ ३९
देवदेवं महात्मानं नारायणमनामयम् ।
भवानुपास्ते वरदं कुतोऽसौ कश्च तत्वतः ॥ ४०
प्रकृतिर्विकृतिर्वाऽस्य कीदृशी क्वनु संस्थितिः ।
एतद्भवन्तं पृच्छामो देवोऽयं क कृतालयः ॥४१
एष भक्तप्रियो देवः प्रियभक्तस्तथैव च ।
त्वं प्रियश्चास्य भक्तश्च नान्यः काश्यप विद्यते ॥४२
मुष्णन्निव मनश्चक्षूंष्यविभाव्यतनुर्विभुः ।
अनादिमध्यनिधनो न विद्मैनं कुतो ह्यसौ ॥४३
वेदेष्वपि च विश्वात्मा गीयते न च विद्महे ।
तत्वतस्तत्वभूतात्मा विभुर्नित्यः सनातनः ॥४४
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ।
गुणाश्चैषां यथासङ्ख्यं भावाभावौ तथैव च ॥४५
तमः सत्वं रजश्चैव भावाश्चैव तदात्मकाः ।
मनो बुद्धिश्च तेजश्च बुद्धिगम्यानि तत्वतः ।
जायन्ते तात तस्माद्धि तिष्ठते तेष्वसौ विभुः ॥४६

संचिन्त्य बहुधा बुद्ध्या नाध्यवस्यामहे परम् ।
तस्य देवस्य तत्त्वेन तन्नः शंस यथातथम् ॥ ४७
एतमेव परं प्रश्नं कौतूहलसमन्विताः ।
एवं भवन्तं पृच्छामस्तन्नः शंसितुमर्हसि ॥ ४८
सुपर्ण उवाच ।
स्थूलतो यस्तु भगवांस्तेनैव स्वेन हेतुना ।
त्रैलोक्यस्य तु रक्षार्थं दृश्यते रूपमास्थितः ॥४९
मया तु महदाश्चर्यं पुरा दृष्टं सनातने ।
देवे श्रीवत्सनिलये तच्छृणुध्वमशेषतः ॥ ५०
न स शक्यो मया वेत्तुं न भवद्भिः कथंचन ।
यथा मां प्राह भगवांस्तथा तच्छ्रूयतां मम ॥५१
मयाऽमृतं देवतानां मिषतामृषिसत्तमाः ।
हृतं विपाट्य तं यन्त्रं विद्राव्यामृतरक्षिणः ॥ ५२
देवता विमुखीकृत्य सेन्द्राः समरुतो मृधे ।
उन्मथ्याशु गिरींश्चैव विक्षोभ्य च महोदधिं ५३
तं दृष्ट्वा मम विक्रान्तं वागुवाचाशरीरिणी ।
प्रीतोस्मि ते वैनतेय कर्मणाऽनेन सुव्रत ।
अवृथा तेऽस्तु मद्वाक्यं ब्रूहि किं करवाणि ते ५४
तामेवंवादिनीं वाचमहं प्रत्युक्तवांस्तदा ॥
ज्ञातुमिच्छामि कस्त्वं हि ततो मे दास्यसे वरम् ।
प्रकृतिर्विकृतिर्वा त्वं देवो वा दानवोपि वा ५५
ततो जलदगम्भीरं प्रहस्य वदतांवरः ।
उवाच वरदः प्रीतः काले त्वं माऽभिवेत्स्यसि ॥
वाहनं भव मे साधो वरं दद्मि तवोत्तमम् ।
न ते वीर्येण सदृशः कश्चिल्लोके भविष्यति ॥५७
पतङ्ग पततांश्रेष्ठ न देवो नापि दानवः ।
मत्सखित्वमनुप्राप्तो दुर्धर्षश्च भविष्यसि ॥ ५८
तमब्रवं देवदेवं मामेवंवादिनं परम् ।
प्रयतः प्राञ्जलिर्भूत्वा प्रणम्य शिरसा विभुम् ५९
एवमेतन्महाबाहो सर्वमेतद्भविष्यति ।
वाहनं ते भविष्यामि यथा वदति मां भवान् ६०
मम चापि महाबुद्धे निश्चयं श्रूयतामिति ।
ध्वजस्तेऽहं भविष्यामि रथस्यस्य न संशयः ॥६१
तथास्त्विति स मामुक्त्वा भूयः प्राह महामनाः

न ते गतिविघातोऽद्य भविष्यत्यमृतं विना ॥६२
एवं कृत्वा तु समयं देवदेवः सनातनः ।
मामुक्त्वा साधयस्वेति यथाऽभिप्रायतो गतः ६३
ततोऽहं कृतसंवादो येन केनापि सत्तमाः ।
कौतूहलसमाविष्टः पितरं कश्यपं गतः ॥ ६४
सोहं पितरमासाद्य प्रणिपत्याभिवाद्य च ।
सर्वमेतद्यथातथ्यमुक्तवान्पितुरन्तिके ॥ ६५
श्रुत्वा तु भगवान्मह्यं ध्यानमेवान्वपद्यत ।
स मुहूर्तमिव ध्यात्वा मामाह वदतां वरः ॥ ६६
धन्योस्म्यनुगृहीतश्च यत्त्वं तेन महात्मना ।
संवादं कृतवांस्तात गुह्येन परमात्मना ॥ ६७
स्थूलदृश्यः स भगवांस्तेन तेनैव हेतुना ।
दृश्यतेऽव्यक्तरूपस्थः प्रधानप्रभवाप्ययः ॥ ६८
मया हि स महातेजा नान्ययोगसमाधिना ।
तपसोग्रेण तेजस्वी तोषितस्तपसांनिधिः ॥ ६९
ततो मे दर्शयामास तोषयन्निव पुत्रकं ।
श्वेतपीतारुणनिभः कद्रूकपिलपिङ्गलः ॥ ७०
रक्तनीलासितनिभः सहस्रोदरपाणिमान् ।
द्विसाहस्रमहावक्त्र एकाक्षः शतलोचनः ॥ ७१
अनिष्पन्दा निराहाराः समानाः सूर्यतेजसा ।
तमुपासन्ति परमं गुह्यमक्षरमव्ययम् ॥ ७२
समासाद्य तु तं विश्वमहं मूर्ध्ना प्रणम्य च ।
ऋग्यजुःसामभिः स्तुत्वा शरण्यं शरणं गतः ७३
महामेघौघधीरेण स्वरेण जयतांवरः ।
आभाष्य पुत्रपुत्रेति इदमाह धृतं वचः ॥ ७४
त्वयाऽभ्युदयकामेन तपश्चीर्णं महामुने ।
अमुक्तस्त्वं समासङ्गैरविमुक्तोऽद्य पश्यसि ॥ ७५
यदा सङ्गैर्विमुक्तश्च गतमोहो गतस्पृहः ।
भविष्यसि सदा ब्रह्म मामनुध्यास्यसे द्विज ॥७६
ऐकान्तिकीं मतिं कृत्वा मद्भक्तो मत्परायणः ।
ज्ञास्यसे मां ततो ब्रह्मन्वीतमोहश्च तत्वतः ॥७७
तन त्वं कृतसंवादः स्वतः णा
विश्वरूपेण देवेन पुरुषेण महात्मना
तमेवाराधय क्षिप्रं तमाराध्य न सीदसि ॥ ७८

सोहमेवं भगवता पित्रा ब्रह्मर्षिसत्तमाः । अनुर्नीतो यथान्यायं स्वमेव भवनं गतः ॥' ७९

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि चत्वारिंशोऽध्यायः ॥ ४० ॥

## एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

ब्रह्मणा देवान्प्रति गरुडस्य बदरीनारायणानुगमनादिप्रतिपादकगरुडमुनिगणसंवादानुवादः ॥ १ ॥

'सुपर्ण उवाच ।
सोऽहमामन्त्र्य पितरं तद्भावगतमानसः ।
स्वमेवालयमासाद्य तमेवार्थमचिन्तयम् ॥ १
तद्भावगतभावात्मा तद्भूतगतमानसः ।
गोविन्दं चिन्तयन्नासे शाश्वतं परमव्ययम् ॥ २
धृतं बभूव हृदयं नारायणदिदृक्षया ।
सोहं वेगं समास्थाय मनोमारुतवेगवान् ।
रम्यां विशालां बदरीं गतो नारायणाश्रमम् ॥ ३
ततस्तत्र हरिं दृष्ट्वा जगतः प्रभवं विभुम् ।
गोविन्दं पुण्डरीकाक्षं प्रणतः शिरसा हरिम् ।
ऋग्यजुस्सामभिश्चैनं तुष्टाव परया मुदा
अथापश्यं सुविपुलमश्वत्थं देवसंश्रयम् ॥ ५
चतुर्द्विगुणपीनांसः शङ्खचक्रगदाधरः ।
प्रादुर्बभूव पुरुषः पीतवासाः सनातनः ।
मध्याह्नार्कप्रतीकाशस्तेजसा भासयन्दिशः ॥ ६
संस्तुतः संविदं कृत्वा व्रजेति श्रेयसे रतः ।
प्रागुदीचीं दिशं देवः प्रतस्थे पुरुषोत्तमः ।
दिशश्च विदिशश्चैव भासयन्स्वेन तेजसा ॥ ७
तमहं पुरुषं दिव्यं व्रजन्तममितौजसम् ।
अनुवव्राज वेगेन शनैर्गच्छन्तमव्ययम् ॥ ८
योजनानां सहस्राणि षष्टिमष्टौ तथा शतम् ।
तथा शतसहस्रं च शतं द्विगुणमेव च ॥ ९
स गत्वा दीर्घमध्वानमपश्यमहमद्भुतम् ।
महान्तं पावकं दीप्तमर्चिष्मन्तमनिन्धनम् ॥ १०
शतयोजनविस्तीर्णं तस्माद्द्विगुणमायतम् ।
विवेश स महायोगी पावकं पावकद्युतिः ॥ ११
तत्र शंभुस्तपस्तेपे महादेवः सहोमया ।
स तेन संविदं कृत्वा पावकं समतिक्रमत् ॥ १२
श्रमाभिभूतेन मया कथंचिदनुगम्यते ॥ १३
गत्वा स दीर्घमध्वानं भास्करेणावभासितम् ।
अभास्करममर्यादं विवेश सुमहत्तमः ॥ १४
अथ दृष्टिः प्रतिहता मम तत्र बभूव ह ।
यथास्वभावं भूतात्मा विवेश स महाद्युतिः ॥ १५
ततोऽहमभवं मूढो जडान्धबधिरोपमः ।
दिशश्च विदिशश्चैव न विजज्ञे तमोवृतः ॥ १६
अविजानन्नहं किंचित्तस्मिंस्तमसि संवृते ।
ससंभ्रान्तेन मनसा व्यथां परमिकां गतः ॥ १७
सोऽहं प्रपन्नः शरणं देवदेवं सनातनम् ।
प्राञ्जलिर्मनसा भूत्वा वाक्यमेतत्तदोक्तवान् १८
भगवन्भूतभव्येश भवद्भूतकृदव्यय ।
शरणं संप्रपन्नं मां त्रातुमर्हस्यरिंदम ॥ १९
अहं तु तत्त्वजिज्ञासुः कोसि कस्यासि कुत्र वा ।
संप्राप्तः पदवीं देव स मां संत्रातुमर्हसि ॥ २०
आविर्भूतः पुराणात्मा मामेहीति सनातनः ।
ततोपरान्ततो देवो विश्वस्य गतिरात्मवान् ।
मोहयामास मां तत्र दुर्विभाव्यवपुर्विभुः ॥ २१
स्वभावमात्मनस्तत्र दर्शयन्स्वयमात्मना ।
श्रमं मे जनयामास भयं चाभयदः प्रभुः ॥ २२
खिन्न इत्येव मां मत्वा भगवानव्ययोऽच्युतः ।
शब्देनाश्वासयामास जगाहे च तमो महत् ॥ २३
अहं तमेवानुगतः श्रमालसपदश्चरन् ।
मनसा देवदेवेशं ध्यातुं समुपचक्रमे ॥ २४
तथागतं तु मां ज्ञात्वा भगवानमितद्युतिः ।
तमः प्रणाशयामास ममानुग्रहकाङ्क्षया ॥ २५
ततः प्रनष्टे तमसि तमहं दीप्ततेजसम् ।
अपश्यं तेजसा व्याप्तं मध्याह्न इव भास्करम् २६
स्वयंप्रभांश्च पुरुषान्स्त्रियश्च परमाद्भुताः ।
अपश्यमहमव्यग्रस्तस्मिन्देशे सहस्रशः ॥ २७

न तत्र द्योतते सूर्यो नक्षत्राणि तथैव च ।
न तत्र चन्द्रमा भाति न वायुर्वाति पांसुलः २८
तत्र तूर्याण्यनेकानि गीतानि मधुराणि च
अदृश्यानि मनोज्ञानि श्रूयन्ते सर्वतोदिशम् २९
स्रवन्ति वैडूर्यलताः पद्मोत्पलझषाकुलाः ।
मुक्तासिकतवप्राश्च सरितो निर्मलोदकाः ॥ ३०
अगातस्तत्र देवानामसुराणां तथैव च ।
गन्धर्वनागयक्षाणां राक्षसानां तथैव च ॥ ३१
स्वयंप्रभास्तत्र नरा दृश्यन्तेऽद्भुतदर्शनाः ।
येषां न देवतास्तुल्याः प्रभाभिर्भावितात्मनाम् ३२
स च तानप्यतिक्रम्य दैवतैरपि पूजितः ।
विवेश ज्वलनं दीप्तमनिन्धनमनौपमम् ॥ ३३
ज्वालाभिर्मां प्रविष्टं च ज्वलन्तं सर्वतोदिशम् ।
दैत्यदानवरक्षोभिर्दैवतैश्चापि दुस्सहम् ॥ ३४
ज्वालामालिनमासाद्य तमग्निमहमव्ययम् ।
अविषह्यतमं मत्वा मनसेदमचिन्तयम् ॥ ३५
मया हि समरेष्वग्निरनेकेषु महाद्युतिः ।
प्रविष्टश्चापविद्धश्च न च मां दग्धवान्कचित् ॥ ३६
अयं च दुस्सहः शश्वत्तेजसाऽतिहुताशनः ।
अत्यादित्यप्रकाशार्चिरनलो दीप्यते महान् ॥३७
स तथा दह्यमानोपि तेजसा दीप्तवर्चसा
प्रपन्नः शरणं देवं शङ्खचक्रगदाधरम् ॥ ३८
भक्तश्चानुगतश्चेति त्रातुमर्हसि मां विभो ।
यथा मां न दहेदग्निः सद्यो देव तथा कुरु ॥३९
एवं विलपमानस्य ज्ञात्वा मे वचनं प्रभुः ।
मा भैरिति वचः प्राह मेघगम्भीरनिस्वनः ॥४०
स मामाश्वास्य वचनं प्राहेदं भगवान्विभुः ।
मम त्वं विदितः सौम्य यथावत्तत्वदर्शने ॥ ४१
ज्ञापितश्चापि यत्पित्रा तच्चापि विदितं महत् ।
वैनतेय ममाप्येवमहं वेद्यः कथंचन ॥ ४२
महदेतत्स्वरूपं मे न ते वेद्यं कथंचन ।
मां हि विन्दन्ति विद्वांसो ये ज्ञाने परिनिष्ठिताः ।
निर्ममा निरहंकारा निराशीर्बन्धनाश्रिताः ॥ ४३
भवांस्तु सततं भक्तो मन्मनाः पक्षिसत्तम ।
स्थूलं मां वेत्स्यसे तस्माज्जगतः कारणेस्थितम्' ४४

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

## द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

ब्रह्मणा देवान्प्रति श्रीनारायणमहिमप्रतिपादकगरुडमुनिगणसंवादानुवादः ॥ १ ॥

'सुपर्ण उवाच ।
एवं दत्ताभयस्तेन ततोऽहमृषिसत्तमाः ।
नष्टखेदश्रमभयः क्षणेन ह्यभवं तदा ॥ १
स शनैर्याति भगवान्गत्या लघुपराक्रमः ।
अहं तु सुमहावेगमास्थायानुव्रजामि तम् ॥ २
स गत्वा दीर्घमध्वानमाकाशममितद्युतिः ।
मनसाऽप्यगमं देवमाससादात्मतत्ववित् ॥ ३
अथ देवः समासाद्य मनसः सदृशं जवम् ।
मोहयित्वा च मां तत्र क्षणेनान्तरधीयत ॥ ४
तत्राम्बुधरधीरेण भोशब्देनानुनादिना ।
अयं भोऽहमिति प्राह वाक्यं वाक्यविशारदः ॥ ५
शब्दानुसारी तु ततस्तं देशमहमाव्रजम् ।
तत्रापश्यं ततश्चाहं श्रीमद्धंसयुतं सरः ॥
स तत्सरः समासाद्य भगवानात्मवित्तमः ।
भोशब्दप्रतिसृष्टेन स्वरेण प्रतिवादिना ॥ ७
विवेश देवः स्वां योनिं मामिदं चाभ्यभाषत ।
विशस्व सलिलं सौम्य सुखमत्र वसामहे ॥ ८
ततश्च प्राविशं तत्र सह तेन महात्मना ।
दृष्टवानद्भुततरं तस्मिन्सरसि भास्वताम् ॥ ९
अग्नीनामप्रणीतानामिद्धानामिन्धनैर्विना ।
दीप्तानामाज्यसिक्तानां स्थानेष्वर्चिष्मतां सदा १०
दीप्तिस्तेषामनाज्यानां प्राप्ताज्यानामिवाभवत् ।
अनिद्धानामिव सतामिद्धानामिव भास्वताम् ११
अथाहं वरदं देवं नापश्यं तत्र संगतम् ।

ततः संमोहमापन्नो विषादमगमं परम् ॥ १२
अपश्यं चाग्निहोत्राणि शतशोऽथ सहस्रशः ।
विधिना संप्रणीतानि धिष्ण्येष्वाज्यवतां तदा १३
असंमृष्टतलाश्चैव वेदीः कुसुमसंस्तृताः ।
कुशपद्मोत्पलासङ्गाः कलशांश्च हिरण्मयान् ॥१४
अग्निहोत्राणि चित्राणि शतशोऽथ सहस्रशः ।
अग्निहोत्राय योग्यानि यानि द्रव्याणि कानिचित्
तानि चात्र समृद्धानि दृष्टवानस्म्यनेकशः ॥१५
मनोहृद्यतमश्चाग्निः सुरभिः पुण्यलक्षणः ।
आज्यगन्धो मनोग्राही घ्राणचक्षुस्सुखावहः॥१६
तेषां तत्राग्निहोत्राणामीडितानां सहस्रशः ।
समीपे त्वद्भुततममपश्यमहमव्ययम् ॥ १७
चन्द्रांशुकाशशुभ्राणां तुषारोद्भेदवर्चसाम् ।
विमलादित्यभासानां स्थण्डिलानि सहस्रशः ।
दृष्टान्यग्निसमीपे तु द्युतिमन्ति महान्ति च॥१८
एषु चाग्निसमीपेषु शुश्राव सुपदाक्षराः ।
प्रभावान्तरितानां तु प्रस्पष्टाक्षरभाषिणाम् ।
ऋग्यजुःसामगानां च मधुराः सुस्वरा गिरः॥१९
सुसंमृष्टतलैस्तैस्तु बृहद्भिर्दीप्ततेजसैः ।
पावकैः पावितात्माहमभवं लघुविक्रमः ॥ २०
ततोऽहं तेषु धिष्ण्येषु ज्वलमानेषु यज्वनाम् ।
— — प्रणमित्वाऽथ अन्वेष्टुमुपचक्रमे ॥ २१
तान्यनेकसहस्राणि पर्यटंस्तु महाजवात्
अपश्यमानस्तं देवं ततोऽहं व्यथितोऽभवम्॥२२
ततस्तेष्वग्निहोत्रेषु ज्वलत्सु विमलार्चिषु ।
भानुमत्सु न पश्यामि देवदेवं सनातनम् ॥ २३
ततोऽहं तानि दीप्तानि परीय व्यथितेन्द्रियः ।
नान्तं तेषां प्रपश्यामि खेदश्च सहसाभवत् ॥२४
विसृत्य सर्वतो दृष्टिं भयमोहसमन्वितः ।
श्रमं परममापन्नश्चिन्तयानस्त्वचेतनः ॥ २५
तृप्तिश्च खलु वर्तेऽहं लोके यत्रैतदीदृशम् ।
ऋग्यजुस्सामनिर्घोषः श्रूयते न च दृश्यते ॥२६
न च पश्यामि तं देवं येनाहमिह चोदितः ।
एवं चिन्तासमापन्नः प्रध्यातुमुपचक्रमे ॥ २७
ततश्चिन्तयतो मह्यं मोहेनाविष्टचेतसः ।
महाशब्दः प्रादुरासीत्सुभृशं मे व्यथाकरः ॥२८
अथाहं सहसा तत्र शृणोमि विपुलध्वनिम् ।
अपश्यं च सुपर्णानां सहस्राण्ययुतानि च ॥२९
अभ्यद्रवन्त मामेव विपुलद्युतिरंहसः ।
तेषामहं प्रभावेण सर्वथैवावरोऽभवम् ॥ ३०
सोऽहं समन्ततः सर्वैः सुपर्णैरतितेजसैः ।
दृष्ट्वाऽऽत्मानं परिगतं संभ्रमं परमं गतः ॥ ३१
विनयावनतो भूत्वा नमश्चक्रे महात्मने ।
अनादिनिधनायैभिर्नामभिः परमात्मने ॥ ३२
नारायणाय शुद्धाय शाश्वताय ध्रुवाय च ।
भूतभव्यभवेशाय शिवाय शिवमूर्तये ॥ ३३
शिवयोनेः शिवाद्याय शिवपूज्यतमाय च ।
घोररूपाय महते युगान्तकरणाय च ॥ ३४
विश्वाय विश्वदेवाय विश्वेशाय महात्मने ।
सहस्रोदरपादाय सहस्रनयनाय च ॥ ३५
सहस्रबाहवे चैव सहस्रवदनाय च ।
शुचिश्रवाय महते ऋतुसंवत्सराय च ॥ ३६
ऋग्यजुःसामवक्त्राय अथर्वशिरसे नमः ।
हृषीकेशाय कृष्णाय द्रुहिणोरुक्रमाय च ॥ ३७
बृहद्वेगाय तार्क्ष्याय वराहायैकशृङ्गिणे ।
शिपिविष्टाय सत्याय हरयेऽथ शिखण्डिने ॥३८
हुताशायोर्ध्ववक्त्राय रौद्रानीकाय साधवे ।
सिन्धवे सिन्धुवर्षघ्ने देवानां सिन्धवे नमः ॥३९
गरुत्मते त्रिनेत्राय सुधर्माय वृषाकृते ।
संम्राडुग्रे संकृतये विरजे संभवे भवे ॥ ४०
वृषाय वृषरूपाय विभवे भूर्भुवाय च ।
दीप्तसृष्टाय यज्ञाय स्थिराय स्थविराय च ॥ ४१
अच्युताय तुषाराय वीराय च समाय च ।
जिष्णवे पुरुहूताय वसिष्ठाय वराय च ॥ ४२
सत्येशाय सुरेशाय हरयेऽथ शिखण्डिने ।
बर्हिषाय वरेण्याय वसवे विश्ववेधसे ॥ ४३
किरीटिने सुकेशाय वासुदेवाय शुष्मिणे ।
बृहदुक्थ्यसुषेणाय युग्मे दुन्दुभये तथा ॥ ४४

भयेमखाय त्रिभवे भरद्वाजेऽभयाय च ।
भास्कराय च चन्द्राय पद्मनाभाय भूरिणे ॥४५
पुनर्वसुभृतत्वाय जीवप्रभविषाय च ।
वषट्काराय स्वाहाय स्वधाय निधनाय च ॥ ४६
ऋचे च यजुषे साम्ने त्रैलोक्यपतये नमः ।
श्रीपद्मायात्ममदृशे धरणीधारिणे परे ॥ ४७
सौम्यासौम्यस्वरूपाय सौम्ये सुमनसे नमः ।
विश्वाय च सुविश्वाय विश्वरूपधराय च ॥ ४८
केशवाय सुकेशाय रश्मिकेशाय भूरिणे ।
हिरण्यगर्भाय नमः सौम्याय वृषरूपिणे ॥ ४९
नारायणाग्र्यवपुषे पुरुहूताय वज्रिणे ।
वर्मिणे वृषसेनाय धर्मसेनाय रोधसे ।
मुनये ज्वरमुक्ताय ज्वराधिपतये नमः ॥ ५०
अनेत्राय त्रिनेत्राय पिङ्गलाय विडूर्मिणे ।
तपोब्रह्मनिधानाय युगपर्यायिणे नमः ॥ ५१
शरणाय शरण्याय भक्तेष्टशरणाय च ।
नमः सर्वभवेशाय भूतभव्यभवाय च ॥ ५२
पाहि मां देवदेवेश कोप्यजोसि सनातनः ।
एवं गतोसि शरणं शरण्यं ब्रह्मयोनिनम् ॥ ५३
स्तव्यं स्तवं स्तुतवतस्तत्तमो मे प्रणश्यत ।
भयं च मे व्यपगतं पक्षिणोऽन्तर्हिताऽभवन् ॥५४
शृणोमि च गिरं दिव्यामन्तर्धानगतां शिवाम् ।
मा भैर्गरुत्मन्दान्तोसि पुनः सेन्द्रान्दिवौकसः ।
स्वं चैव भवनं गत्वा द्रक्ष्यसे पुत्रबान्धवान् ॥५५
ततस्तस्मिन्क्षणेनैव सहसैव महाद्युतिः ।
प्रत्यदृश्यत तेजस्वी पुरस्तात्स ममान्तिके ॥ ५६
समागम्य ततस्तेन शिवेन परमात्मना ।
अपश्यं चाहमायान्तं नरनारायणाश्रमे ।
चतुर्द्विगुणविन्यासं तं च देवं सनातनम् ॥ ५७
यजतस्तानृषीन्देवान्वदतो ध्यायतो मुनीन् ।
युक्तान्सिद्धान्नैष्ठिकांश्च जपतो यजतो गृहे ॥ ५८
पुष्पपूरपरिक्षिप्तं धूपितं दीपितं हुतम् ।
वन्दितं सिक्तसंमृष्टं नरनारायणाश्रमम् ॥ ५९
तदद्भुतमहं दृष्ट्वा विस्मितोस्मि तदाऽनघाः ।
जगाम शिरसा देवं प्रयतेनान्तरात्मना ॥ ६०
तदत्यद्भुतसंकाशं किमेतदिति चिन्तयन् ।
नाध्यगच्छं परं दिव्यं तस्य सर्वभवात्मनः ॥ ६१
प्रणिपत्य सुदुर्धर्षं पुनः पुनरुदीक्ष्य च ।
शिरस्यञ्जलिमाधाय विस्मयोत्फुल्ललोचनः ।
अवोचं तमदीनार्थं श्रेष्ठानां श्रेष्ठमुत्तमम् ॥ ६२
नमस्ते भगवन्देव भूतभव्यभवत्प्रभो ।
यदेतदद्भुतं देव मया दृष्टं त्वदाश्रयम् ॥ ६३
अनादिमध्यपर्यन्तं किं तच्छंसितुमर्हसि ।
यदि जानासि मां भक्तं यदि वाऽनुग्रहो मयि ।
शंस सर्वमशेषेण श्रोतव्यं यदि चेन्मया ॥ ६४
स्वभावस्तव दुर्ज्ञेयः प्रादुर्भावो भवस्य च ।
भवद्भूतभविष्येश सर्वथा गहनं भवान् ॥ ६५
ब्रूहि सर्वमशेषेण तदाश्चर्यं महामुने ।
किं तदत्यद्भुतं वृत्तं तेष्वग्निषु समन्ततः ॥ ६६
कानि तान्यग्निहोत्राणि केषां शब्दः श्रुतो मया ।
शृण्वतां ब्रह्म सततमदृश्यानां महात्मनाम् ॥६७
एतन्मे भगवन्कृष्ण ब्रूहि सर्वमशेषतः ।
गृणन्त्यग्निसमीपेषु के च ते ब्रह्मराशयः ॥' ६८

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

## त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

बदरीनारायणेन गरुडंप्रति स्वमहिमोक्तिः ॥ १ ॥ गरुडेन मुनिगणान्प्रति स्वानुभूतनारायणमहिमोक्तिः ॥ २ ॥

'भगवानुवाच ।
मां न देवा न गन्धर्वा नासुरा न च राक्षसाः ।
विदुस्तत्त्वेन सत्वस्थं सूक्ष्मात्मानमवस्थितम् ॥ १
चतुर्धाऽहं विभक्तात्मा लोकानां हितकाम्यया ।

भूतभव्यभविष्यादिरनादिर्विश्वकृत्तमः ॥ २
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ।
मनो बुद्धिश्च चेतश्च तमः सत्वं रजस्तथा ॥ ३
प्रकृतिर्विकृतिश्चैव विद्याविद्ये शुभाशुभे ।
मत्त एतानि जायन्ते नाहमेभ्यः कथंचन ॥ ४
यत्किंचिच्छ्रेयसा युक्तं श्रेयस्करमनुत्तमम् ।
धर्मयुक्तं च पुण्यं च सोऽहमस्मि निरामयः ॥ ५
यत्स्वभावात्मतत्वज्ञैः कारणैरुपलक्ष्यते ।
अनादिमध्यनिधनः सोन्तरात्माऽस्मि शाश्वतः ६
यत्तु मे परमं गुह्यं रूपं सूक्ष्मार्थदर्शिभिः ।
गृह्यते सूक्ष्मभावज्ञैः सोऽविभाव्योस्मि शाश्वतः ७
तत्तु मे परमं गुह्यं येन व्याप्तमिदं जगत् ।
सोहंगतः सर्वसत्वः सर्वस्य प्रभवोऽव्ययः ॥ ८
मत्तो जायन्ति भूतानि मया धार्यन्त्यहर्निशम्
मय्येव विलयं यान्ति प्रलये पन्नगाशन ॥ ९
यो मां यथा वेदयति तथा तस्यास्मि काश्यप
मनोबुद्धिगतः श्रेयो विदधामि विहङ्गम ॥ १०
मां तु ज्ञातुं कृता बुद्धिर्भवता पक्षिसत्तम ।
शृणु योऽहं यतश्चाहं यदर्थश्चाहमुद्यतः ॥ ११
ये केचिन्नियतात्मानस्त्रेताग्निपरमार्चिताः ।
अग्निकार्यपरा नित्यं जपहोमपरायणाः ॥ १२
आत्मन्यग्नीन्समाधाय नियता नियतेन्द्रियाः ।
अनन्यमनसस्ते मां सर्वे वै समुपासते ॥ १३
यजन्तो जपयज्ञैर्मां मानसैश्च सुसंयताः ।
अग्नीनभ्युद्ययुः शश्वदग्निष्वेवाभिसंश्रिताः ॥ १४
अनन्यकार्याः शुचयो नित्यमग्निपरायणाः
य एवंबुद्धयो धीरास्ते मां गच्छन्ति तादृशाः॥१५
अकामहतसंकल्पा ज्ञाने नित्यं समाहिताः ।
आत्मन्यग्निं समाधाय निराहारा निराशिषः ॥१६
विषयेषु निरारम्भा विमुक्ता ज्ञानचक्षुषः ।
अनन्यमनसो धीराः स्वभावनियमान्विताः ॥१७
यत्तद्वियति दृष्टं तत्सरः पद्मोत्पलायुतम् ।
तत्राग्नयः संनिहिता दीप्यन्ते स्म निरिन्धनाः १८
ज्ञानामलाशयास्तस्मिन्ये च चन्द्रांशुनिर्मलाः ।
उपासीना गृणन्तोऽग्निमस्पष्टाक्षरभाषिणः ।
आकाङ्क्षमाणाः शुचयस्तेष्वग्निषु विहङ्गम ॥ १९
ये मया भावितात्मानो मय्येवाभिरताः सदा ।
उपासते च मामेव ज्योतिर्भूता निरामयाः ॥२०
तैर्हि तत्रैव वस्तव्यं नीरागादिभिरच्युतैः ।
निराहारा ह्यनिष्पन्दाश्चन्द्रांशुसदृशप्रभाः ॥ २१
निर्मला निरहङ्कारा निरालम्बा निराशिषः ।
मद्भक्ताः सततं ते वै भक्तांस्तानपि चाप्यहम् ॥२२
चतुर्धाऽहं विभक्तात्मा चरामि जगतो हितः ।
लोकानां धारणार्थाय विधानं विदधामि च ॥२३
यथावत्तदशेषेण श्रोतुमर्हति मे भवान् ॥ २४
एका मूर्तिर्निर्गुणाख्या योगं परममास्थिता ।
द्वितीया सृजते तात भूतग्रामं चराचरम् ॥ २५
सृष्टं संहरते चैका जगत्स्थावरजङ्गमम् ।
ज्ञातात्मनिष्ठा क्षपयन्मोहयन्तीव मायया ।
क्षपयन्ती मोहयति आत्मनिष्ठा स्वमायया ॥ २६
चतुर्थी मे महामूर्तिर्जगद्वृद्धिं ददाति सा ।
रक्षते चापि नियता सोहमस्मि नभश्चरः ॥ २७
मया सर्वमिदं व्याप्तं मयि सर्वं प्रतिष्ठितम् ।
अहं सर्वजगद्बीजं सर्वत्रगतिरव्ययः ॥ २८
यानि तान्यग्निहोत्राणि ये च चन्द्रांशुराशयः ।
गृणन्ति वेदं सततं तेष्वग्निषु विहङ्गम ॥ २९
क्रमेण मां समायान्ति सुखिनो ज्ञानसंयुताः ।
तेषामहं तपो दीप्तं तेजः सम्यक्समाहितम् ।
नित्यं ते मयि वर्तन्ते तेषु चाहमतन्द्रितः ॥ ३०
सर्वतो मुक्तसङ्गेन मय्यनन्यसमाधिना ।
शक्यः समासादयितुमहं वै ज्ञानचक्षुषा ॥ ३१
मां स्थूलदर्शनं विद्धि जगतः कार्यकारणम् ।
मत्तश्च संप्रसूतान्वै विद्धि लोकान्सदैवतान् ॥३२
मया चापि चतुर्धात्मा विभक्तः प्राणिषु स्थितः ।
आत्मभूतो वासुदेवो ह्यनिरुद्धो मतौ स्थितः ॥ ३३
संकर्षणोऽहंकारे च प्रद्युम्नो मनसि स्थितः ।
अन्यथा च चतुर्धा यत्सम्यक्त्वं श्र ॥३४
यत्तत्पद्ममभूत्पूर्वं तत्र ब्रह्मा व्यजायत

ब्राह्मणश्चापि संभूतः शिव इत्यवधार्यताम् ॥ ३५
शिश्नात्स्कन्दः संबभूव एतत्सृष्टिचतुष्टयम् ।
दैत्यदानवदर्पघ्नमेवं मां विद्धि नित्यशः ॥ ३६
दैत्यदानवरक्षोभिर्यदा धर्मः प्रपीड्यते ।
तदाऽहं धर्मवृद्ध्यर्थं मूर्तिमान्भविताऽऽशुग ॥३७
वेदव्रतपरा ये तु धीरा निश्चितबुद्धयः ।
योगिनो योगयुक्ताश्च ते मां पश्यन्ति नान्यथा ३८
पञ्चभिः संप्रयुक्तोऽहं विप्रयुक्तश्च पञ्चभिः ।
वर्तमानश्च तेष्वेवं निवृत्तश्चैव तेष्वहम् ॥ ३९
ये विदुर्जातसंकल्पास्ते मां पश्यन्ति तादृशाः ॥४०
खं वायुरापो ज्योतिश्च पृथिवी चेति पञ्चमम् ।
तदात्मकोऽस्मि विज्ञेयो न चान्योस्मीति निश्चितम्
वर्तमानमतीतं च पञ्चवर्गेषु निश्चलम् ।
शब्दस्पर्शेषु रूपेषु रसगन्धेषु चाप्यहम् ॥ ४२
रजस्तमोभ्यामाविष्टा येषां बुद्धिरनिश्चिता ।
ते न पश्यन्ति मे तत्वं तपसा महता ह्यपि ॥४३
नोपवासैर्न नियमैर्न व्रतैर्विविधैरपि ।
द्रष्टुं वा वेदितुं वाऽपि न शक्या परमा गतिः ॥ ४४
महामोहार्थपङ्के तु निमग्नानां गतिर्हरिः ।
एकान्तिनो ध्यानपरा यतिभावाद्व्रजन्ति माम् ४५
सत्वयुक्ता मतिर्येषां केवलाऽऽत्मविनिश्चिता ।
ते पश्यन्ति स्वमात्मानं परमात्मानमव्ययम् ॥४६
अहिंसा सर्वभूतेषु तेष्ववस्थितमार्जवम् ।
तेष्वेव च समाधाय सम्यगेति स मामजम् ॥४७
यदेतत्परमं गुह्यमाख्यानं परमाद्भुतम् ।
यत्तेन तदशेषेण यथावच्छ्रोतुमर्हसि ॥ ४८
ये त्वग्निहोत्रनियता जपयज्ञपरायणाः ।
ते मामुपासते शश्वद्यांस्तांस्त्वं दृष्टवानसि ॥ ४९
शास्त्रदृष्टविधानज्ञा असक्ताः क्वचिदन्यथा ।
शक्योऽहं वेदितुं तैस्तु यन्मे परममव्ययम् ॥५०
ये तु सांख्यं च योगं च ज्ञात्वाऽप्यधृतनिश्चयाः ।
न ते गच्छन्ति कुशलाः परां गतिमनुत्तमाम् ५१
तस्माज्ज्ञानेन शुद्धेन प्रसन्नात्माऽऽत्मविच्छुचिः ।
आसादयति तद्ब्रह्म यत्र गत्वा न शोचति ॥५२
शुद्धाभिजनसंपन्नाः श्रद्धायुक्तेन चेतसा ।
मद्भक्त्या च द्विजश्रेष्ठा गच्छन्ति परमां गतिं ५३
यद्गुह्यं परमं बुद्धेरलिङ्गग्रहणं च यत् ।
तत्सूक्ष्मं गृह्यते विप्रैर्यतिभिस्तत्त्वदर्शिभिः ॥ ५४
न वायुः पवते तत्र न तस्मिञ्ज्योतिषां गतिः ।
न चापः पृथिवी चैव नाकाशं न मनोगतिः ५५
तस्माच्चैतानि सर्वाणि प्रजायन्ते विहङ्गम ।
सर्वेभ्यश्च स तेभ्यश्च प्रभवत्यमलो विभुः ॥ ५६
स्थूलदर्शनमेतन्मे यद्दृष्टं भवताऽनघ ।
एतत्सूक्ष्मस्य तद्द्वारं कार्याणां कारणं त्वहम् ५७
दृष्टो वै भवता तस्मात्सरस्यमितविक्रम ।
ब्रह्मणो यदहोरात्रसङ्ख्याभिज्ञैर्विभाव्यते ॥ ५८
एष कालस्त्वया तत्र सरस्यहमुपागतः ।
मां यज्ञमाहुर्यज्ञज्ञा वेदं वेदविदो जनाः ।
मुनयश्चापि मामेव जपयज्ञं प्रचक्षते ॥ ५९
वक्ता मन्ता रसयिता घ्राता द्रष्टा प्रदर्शकः ।
बोद्धा बोधयिता चाहं गन्ता श्रोता चिदात्मकः ॥
मामिष्ट्वा स्वर्गमायान्ति तथा चाप्नुवते महत् ।
ज्ञात्वा मामेव चैवान्ते निःसङ्गेनान्तरात्मना ६१
अहं तेजो द्विजातीनां मम तेजो द्विजातयः ।
मम यस्तेजसो देहः सोग्निरित्यवगम्यताम् ॥ ६२
प्राणपालः शरीरेऽहं योगिनामहमीश्वरः ।
सांख्यानामिदमेवाग्रे मयि सर्वमिदं जगत् ॥६३
धर्ममर्थं च कामं च मोक्षं चैवार्जवं जपम् ।
तमः सत्वं रजश्चैव कर्मजं च भवाप्ययम् ॥ ६४
स तदाऽहं तथारूपस्त्वया दृष्टः सनातनः ।
ततस्त्वहं परतरः शक्यः कालेन वेदितुम् ॥ ६५
मम यत्परमं गुह्यं शाश्वतं ध्रुवमव्ययम् ।
तदेवं परमो गुह्यो देवो नारायणो हरिः ।
न तच्छक्यं भुजङ्गारे वेत्तुमभ्युदयान्वितैः ॥ ६६
निरारम्भनमस्कारा निराशीर्बन्धनास्तथा ।
गच्छन्ति तं महात्मानः परं ब्रह्म सनातनम् ६७
स्थूलोऽहमेवं विहग त्वया दृष्टस्तथाऽनघ ।
एतच्चापि न वेत्त्यन्यस्त्वामृते पन्नगाशन ॥ ६८

मा मतिस्तत्र गान्नाशमेषा गतिरनुत्तमा ।
मद्भक्तो भव नित्यं त्वं ततो वेत्स्यसि मे पदम् ॥
एतत्ते सर्वमाख्यातं रहस्यं दिव्यमानुषम् ।
एतच्छ्रेयः परं चैतत्पन्थानं विद्धि मोक्षिणाम् ७०
एवमुक्त्वा स भगवांस्तत्रैवान्तरधीयत ।
पश्यतो मे महायोगी जगामात्मगतिं गतिम् ७१
एतदेवंविधं तस्य महिमानं महात्मनः ।
अच्युतस्याप्रमेयस्य दृष्टवानसि यत्पुरा ॥ ७२
एतद्वः सर्वमाख्यातं चेष्टितं तस्य धीमतः ।
मयाऽनुभूतं प्रत्यक्षं दृष्ट्वा चाद्भुतकर्मणः ॥ ७३

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

## चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

भीष्मेण युधिष्ठिरंप्रति ब्रह्मणा देवान्प्रत्यनूदितसुपर्णोपाख्यानकथनसमापनम् ॥ १ ॥

ऋषय ऊचुः ।
अहो श्रावितमाख्यानं भवताऽत्यद्भुतं महत् ।
पुण्यं यशस्यमायुष्यं स्वर्ग्यं स्वस्त्ययनं महत् ॥ १
एतत्पवित्रं देवानामेतद्गुह्यं परंतप ।
एतज्ज्ञानवता ज्ञेयमेषा गतिरनुत्तमा ॥ २
य इमां श्रावयेद्विद्वान्कथां पर्वसुपर्वसु ।
स लोकान्प्राप्नुयात्पुण्यान्देवर्षिभिरभिष्टुतान् ॥ ३
श्राद्धकाले च विप्राणां य इमां श्रावयेच्छुचिः
न तत्र रक्षसां भागो नासुराणां च विद्यते ॥ ४
अनसूयुर्जितक्रोधः सर्वसत्वहिते रतः ।
यः पठेत्सततं युक्तः स व्रजेत्तत्सलोकताम् ॥ ५
वेदान्पारयते विप्रो राजा विजयवान्भवेत् ।
वैश्यस्तु धनधान्याढ्यः शूद्रः सुखमवाप्नुयात् ॥ ६
भीष्म उवाच ।
ततस्ते मुनयः सर्वे संपूज्य विनतासुतम् ।
स्वानेव चाश्रमाञ्जग्मुर्बभूवुः शान्तितत्पराः ॥ ७
स्थूलदर्शिभिराक्रष्टो दुर्ज्ञेयो ह्यकृतात्मभिः ।
एषा श्रुतिर्महाराज धर्म्या धर्मभृतांवर ॥
सुराणां ब्रह्मणा प्रोक्ता विस्मितानां परंतप ।
मयाप्येषा कथा तात कथिता मातुरन्तिके ।
वसुभिः सत्त्वसंपन्नैस्तवाप्येषा मयोच्यते ॥
तदग्निहोत्रपरमा जपयज्ञपरायणाः
निराशीर्बन्धनाः सन्तः प्रयान्त्यक्षरसात्मताम् ॥ १०
आरम्भयज्ञानुत्सृज्य जपहोमपरायणाः ।
ध्यायन्तो मनसा विष्णुं गच्छन्ति परमां गतिम् ११
तदेष परमो मोक्षो मोक्षद्वारं च भारत ।
यथा विनिश्चितात्मानो गच्छन्ति परमां गतिम् ॥

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

## पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

भीष्मनियोगात्कृष्णेन युधिष्ठिरंप्रति महादेवमहिमकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
पितामह महेशाय नामान्याचक्ष्व शंभवे
विदुषे विश्वमायाय महाभाग्यं च तत्वतः ॥ १
भीष्म उवाच ।

* एतदध्यायारम्भे युधिष्ठिरप्रश्ने प्रकारान्तरेण अधिकाश्च सप्तदश श्लोका झ. पुस्तके दृश्यन्ते ।

युधिष्ठिर उवाच ।
यथाऽऽपगेय नामानि श्रुतानीह जगत्पतेः ।
पितामहेशाय विभो नामान्याचक्ष्व शंभवे ॥ १
बभ्रवे विश्वरूपाय महाभाग्यं च तत्त्वतः ।

सुरासुरगुरो देव विष्णो त्वं वक्तुमर्हसि ।
शिवाय शिवरूपाय यन्माऽपृच्छद्युधिष्ठिरः ॥ २
नाम्नां सहस्रं देवस्य तण्डिना ब्रह्मवादिना ।
निवेदितं ब्रह्मलोके ब्रह्मणो यत्पुराऽभवत् ॥ ३
द्वैपायनप्रभृतयस्तथा चेमे तपोधनाः ।
ऋषयः सुव्रता दान्ताः शृण्वन्तु गदतस्तव ॥ ४
ध्रुवाय नन्दिने होत्रे गोप्त्रे विश्वसृजेऽग्नये ।
महाभाग्यं विभोर्ब्रूहि मुण्डिनेऽथ कपर्दिने ॥ ५
वासुदेव उवाच ।
न गतिः कर्मणां शक्या वेत्तुमीशस्य तत्त्वतः ।
हिरण्यगर्भप्रमुखा देवाः सेन्द्रा महर्षयः ॥ ६
न विदुर्यस्य निधनमादिं वा सूक्ष्मदर्शिनः ।
स कथं नाममात्रेण शक्यो ज्ञातुं सतां गतिः ॥७
तस्याहमसुरघ्नस्य कांश्चिद्भगवतो गुणान् ।
भवतां कीर्तयिष्यामि व्रतेशाय यथातथम् ॥ ८
वैशंपायन उवाच ।
एवमुक्त्वा तु भगवान्गुणांस्तस्य महात्मनः ।
उपस्पृश्य शुचिर्भूत्वा कथयामास धीमतः ॥ ९
वासुदेव उवाच ।
शुश्रूषध्वं ब्राह्मणेन्द्रास्त्वं च तात युधिष्ठिर ।
त्वं चापगेय नामानि निशामय जगत्पतेः ॥१०
यदवाप्तं च मे पूर्वं साम्बहेतोः सुदुष्करम् ।
यथावद्भगवान्दृष्टो मया पूर्वं समाधिना ॥ ११
शम्बरे निहते पूर्वं रौक्मिणेयेन धीमता ।
अतीते द्वादशे वर्षे जाम्बवत्यब्रवीद्धि माम् ॥१२
प्रद्युम्नचारुदेष्णादीन्रुक्मिण्या वीक्ष्य पुत्रकान् ।
पुत्रार्थिनी मामुपेत्य वाक्यमाह युधिष्ठिर ॥ १३
शूरं बलवतां श्रेष्ठं कान्तरूपमकल्मषम् ।
आत्मतुल्यं मम सुतं प्रयच्छाच्युत माचिरम् ॥१४
न हि तेऽप्राप्यमस्तीह त्रिषु लोकेषु किंचन ।
लोकान्सृजेस्त्वमपरानिच्छन्यदुकुलोद्वह ॥ १५
त्वया द्वादशवर्षाणि व्रतीभूतेन शुष्यता ।
आराध्य पशुभर्तारं रुक्मिण्यां जनिताः सुताः ॥१६
चारुदेष्णः सुचारुश्च चारुवेशो यशोधरः ।
चारुश्रवाश्चारुयशाः प्रद्युम्नः शंभुरेव च ॥ १७
यथा ते जनिताः पुत्रा रुक्मिण्यां चारुविक्रमाः ।
तथा ममापि तनयं प्रयच्छ मधुसूदन ॥ १८

सुरासुरगुरा देवे शंकरऽव्यक्तयोनये
भीष्म उवाच ।
अशक्तोऽहं गुणान्वक्तुं महादेवस्य धीमतः ।
यो हि सर्वगतो देवो न च सर्वत्र दृश्यते ॥ ३
ब्रह्मविष्णुसुरेशानां स्रष्टा च प्रभुरेव च ।
ब्रह्मादयः पिशाचान्ता यं हि देवा उपासते ॥ ४
प्रकृतीनां परत्वेन पुरुषस्य च यः परः ।
चिन्त्यते यो योगविद्भिर्ऋषिभिस्तत्त्वदर्शिभिः ।
अक्षरं परमं ब्रह्म असच्च सदसच्च यः ॥ ५
प्रकृतिं पुरुषं चैव क्षोभयित्वा स्वतेजसा ।
ब्रह्माणमसृजत्तस्माद्देवदेवः प्रजापतिः ॥ ६
को हि शक्तो गुणान्वक्तुं देवदेवस्य धीमतः ।
गर्भजन्मजरायुक्तो मर्त्यो मृत्युसमन्वितः ॥ ७
को हि शक्तो भवं ज्ञातुं मद्विधः परमेश्वरम् ।
ऋते नारायणात्पुत्र शङ्खचक्रगदाधरात् ॥ ८
एष विद्वान्गुणश्रेष्ठो विष्णुः परमदुर्जयः ।
दिव्यचक्षुर्महातेजा वीक्ष्यते योगचक्षुषा ॥ ९
रुद्रभक्त्या तु कृष्णेन जगद्व्याप्तं महात्मना ।
तं प्रसाद्य तदा देवं बदर्यां किल भारत ॥ १०
अर्थात्प्रियतरत्वं च सर्वलोकेषु वै तदा ।
प्राप्तवानेव राजेन्द्र सुवर्णाक्षान्महेश्वरात् ॥ ११
पूर्णं वर्षसहस्रं तु तप्तवानेष माधवः ।
प्रसाद्य वरदं देवं चराचरगुरुं शिवम् ॥ १२
युगेयुगे तु कृष्णेन तोषितो वै महेश्वरः ।
भक्त्या परमया चैव प्रीतश्चैव महात्मनः ॥ १३
ऐश्वर्यं यादृशं तस्य जगद्योनेर्महात्मनः ।
तदयं दृष्टवान्साक्षात्पुत्रार्थे हरिरच्युतः ॥ १४
यस्मात्परतरं चैव नान्यं पश्यामि भारत ।
व्याख्यातुं देवदेवस्य शक्तो नामान्यशेषतः ॥ १५
एष शक्तो महाबाहुर्वक्तुं भगवतो गुणान् ।
विभूतिं चैव कार्त्स्न्येन सत्यां माहेश्वरीं नृप ॥ १६
वैशंपायन उवाच ।
एवमुक्त्वा तदा भीष्मो वासुदेवं महायशाः ।
भवमाहात्म्यसंयुक्तमिदमाह पितामहः ॥ १७

१शिवाय विष्णुरूपायेति झ. पाठः ॥ २ ॥ तण्डिना ब्रह्मयोनिनेति झ. पाठः ॥ ३ ॥ ते त्वया ॥ १८ ॥

इत्येवं चोदितो देव्या तामवोचं सुमध्यमाम् ।
अनुजानीहि मां राज्ञि करिष्ये वचनं तव ॥ १९
सा च मामब्रवीद्गच्छ शिवाय विजयाय च ।
ब्रह्मा शिवः काश्यपश्च नद्यो देवा मनोऽनुगाः २०
क्षेत्रौषध्यो यज्ञवाहाश्छन्दांस्यृषिगणाध्वराः ।
समुद्रा दक्षिणा स्तोभा ऋक्षाणि पितरो ग्रहाः २१
देवपत्न्यो देवकन्या देवमातर एव च ।
मन्वन्तराणि गावश्च चन्द्रमाः सविता हरिः ॥२२
सावित्री ब्रह्मविद्या च ऋतवो वत्सरास्तथा ।
क्षणा लवा मुहूर्ताश्च निमेषा युगपर्ययाः ॥ २३
रक्षन्तु सर्वत्र गतं त्वां यादव सुखाय च ।
अरिष्टं गच्छ पन्थानमप्रमत्तो भवानघ ॥ २४

एवं कृतस्वस्त्ययनस्तयाऽहं
ततोऽभ्यनुज्ञाप्य नरेन्द्रपुत्रीम् ।
पितुः समीपं नरसत्तमस्य
मातुश्च राज्ञश्च तथाऽऽहुकस्य ॥ २५
गत्वा समावेद्य यदब्रवीन्मां
विद्याधरेन्द्रस्य सुता भृशार्ता ।
तानभ्यनुज्ञाप्य तदाऽतिदुःखा-
द्गदं तथैवातिबलं च रामम् ।
अथोचतुः प्रीतियुतौ तदानीं
तपःसमृद्धिर्भवतोऽस्त्वविघ्नम् ॥ २६

प्राप्यानुज्ञां गुरुजनादहं तार्क्ष्यमचिन्तयम् ।
सोवहद्धिमवन्तं मां प्राप्य चैनं व्यसर्जयम् ॥२७
तत्राहमद्भुतान्भावानपश्यं गिरिसत्तमे ।
[illegible] च तपसां श्रेष्ठं पश्याम्यद्भुतमुत्तमम् ॥ २८
दिव्यं वैयाघ्रपद्यस्य उपमन्योर्महात्मनः ।
पूजितं देवगन्धर्वैर्ब्राह्म्या लक्ष्म्या समावृतम् ॥२९

धवककुभकदम्बनारिकेलैः
कुरवककेतकजम्बुपाटलाभिः ।
वटवरुणकवत्सनाभबिल्वैः
सरलकपित्थप्रियालसालतालैः ॥ ३०

बदरीकुन्दपुन्नागैरशोकाम्रातिमुक्तकैः ।
मधूकैः कोविदारैश्च चम्पकैः पनसैस्तथा ॥ ३१
वन्यैर्बहुविधैर्वृक्षैः फलपुष्पप्रदैर्युतम् ।
पुष्पगुल्मलताकीर्णं कदलीषण्डशोभितम् ॥ ३२
नानाशकुनिसंभोज्यैः फलैर्वृक्षैरलंकृतम् ।
यथास्थानविनिक्षिप्तैर्भूषितं भस्मराशिभिः ॥ ३३
रुरुवानरशार्दूलसिंहद्वीपिसमाकुलम् ।
कुरङ्गबर्हिणाकीर्णं मार्जारभुजगावृतम् ।
पूगैश्च मृगजातीनां महिषर्क्षनिषेवितम् ॥ ३४

सकृत्प्रभिन्नैश्च गजैर्विभूषितं
प्रहृष्टनानाविधपक्षिसेवितम् ।
सुपुष्पितैरम्बुधरप्रकाशै-
र्महीरुहाणां च वनैर्विचित्रैः ॥ ३५

नानापुष्परजोमिश्रो गजदानाधिवासितः ।
दिव्यस्त्रीगीतबहुलो मारुतोऽभिमुखो ववौ ॥ ३६

धारानिनादैर्विहगप्रणादैः
शुभैस्तथा बृंहितैः कुञ्जराणाम् ।
गीतैस्तथा किन्नराणामुदारैः
शुभैः स्वनैः सामगानां च वीर ॥ ३७

अचिन्त्यं मनसाऽप्यन्यैः सरोभिः समलंकृतम् ।
विशालैश्चाग्निशरणैर्भूषितं कुसुमावृतैः ॥ ३८

विभूषितं पुण्यपवित्रतोयया
सदा च जुष्टं नृप जह्नुकन्यया ।
विभूषितं धर्मभृतां वरिष्ठै-
र्महात्मभिर्वह्निसमानकल्पैः ॥ ३९
वाय्वाहारैरम्बुपैर्जप्यनित्यैः
संप्रक्षालैर्योगिभिर्ध्याननित्यैः ।
धूमप्राशैरूष्मपैः क्षीरपैश्च
संजुष्टं च ब्राह्मणेन्द्रैः समन्तात् ॥ ४०

गोचारिणोऽथाश्मकुट्टा दन्तोलूखलिकास्तथा ।
मरीचिपाः फेनपाश्च तथैव मृगचारिणः ॥ ४१

---

यज्ञवाहा इति छन्दसामेव विशेषणम् । छन्दांसि वै देवेभ्यो हव्यमूढ्वेति ब्राह्मणात् तेषां यज्ञवाहत्वसिद्धिः । स्तोभाः सामपूरणान्यक्षराणि हुंमा इत्यादीनि ॥ २१ ॥ नरेन्द्रपुत्रीं ऋक्षराजस्य जाम्बवतो दुहितरम् ॥ २५ ॥ अभ्यनुज्ञाय स्थित मामिति शेषः । अथोचतुरित्यर्ध. ॥ २६ ॥ भस्मराशिभिरिति भस्मच्छन्नैरग्निभिः ॥ ३३ ॥ संप्रक्षालैः मैत्र्यादिभिश्चित्तशोधन कुर्वद्भिः ॥ ४० ॥ गोचारिणो गेवन्मुखेनैव चरन्तो हस्तव्यापारशून्या इत्यर्थः । मरीचिपाश्चन्द्ररश्मि-

अश्वत्थफलभक्षाश्च तथा ह्युदकशायिनः ।
चीरचर्माम्बरधरास्तथा वल्कलधारिणः ॥ ४२
सुदुःखान्नियमांस्तांस्तान्वहतः सुतपोधनान् ।
पश्यन्मुनीन्बहुविधान्प्रवेष्टुमुपचक्रमे ॥ ४३
सुपूजितं देवगणैर्महात्मभिः
शिवादिभिर्भारतपुण्यकर्मभिः ।
रराज तच्चाश्रममण्डलं सदा
दिवीव राजञ्शशिमण्डलं यथा ॥ ४४
क्रीडन्ति सर्पैर्नकुला मृगैर्व्याघ्राश्च मित्रवत् ।
प्रभावाद्दीप्ततपसां सन्निकर्षान्महात्मनाम् ॥ ४५
तत्राश्रमपदे श्रेष्ठे सर्वभूतमनोरमे ।
सेविते द्विजशार्दूलैर्वेदवेदाङ्गपारगैः ॥ ४६
नानानियमविख्यातैर्ऋषिभिः सुमहात्मभिः ।
प्रविशन्नेव चापश्यं जटाचीरधरं प्रभुम् ॥ ४७
तेजसा तपसा चैव दीप्यमानं यथाऽनलम् ।
शिष्यैरनुगतं शान्तं युवानं ब्राह्मणर्षभम् ॥ ४८
शिरसा वन्दमानं मामुपमन्युरभाषत ॥ ४९
स्वागतं पुण्डरीकाक्ष सफलानि तपांसि नः ।
यः पूज्यः पूजयसि मां द्रष्टव्यो द्रष्टुमिच्छसि ॥ ५०
'मनुष्यतानुवृत्त्या त्वा ज्ञात्वा तिष्ठाम सर्वगम् ।'
तमहं प्राञ्जलिर्भूत्वा मृगपक्षिष्वथाग्निषु ।
धर्मे च शिष्यवर्गे च समपृच्छमनामयम् ॥ ५१
ततो मां भगवानाह साम्ना परमवल्गुना ।
लप्स्यसे तनयं कृष्ण आत्मतुल्यमसंशयम् ॥ ५२
तपः सुमहदास्थाय तोषयेशानमीश्वरम् ।
इह देवः सपत्नीकः समाक्रीडत्यधोक्षज ॥ ५३
इहैनं दैवतश्रेष्ठं देवाः सर्षिगणाः पुरा ।
तपसा ब्रह्मचर्येण सत्येन च दमेन च ॥ ५४
तोषयित्वा शुभान्कामान्प्राप्तवन्तो जनार्दन ।
तेजसां तपसां चैव निधिः स भगवानिह ॥ ५५
शुभाशुभान्वितान्भावान्विसृजन्स क्षिपन्नपि ।
आस्ते देव्या सहाचिन्त्यो यं प्रार्थयसि शत्रुहन् ॥ ५६
हिरण्यकशिपुर्योऽभूद्दानवो मेरुकम्पनः ।
तेन सर्वामरैश्वर्यं शर्वात्प्राप्तं समार्बुदम् ॥ ५७
तस्यैव पुत्रप्रवरो दमनो नाम विश्रुतः ।
महादेववराच्छक्रं वर्षार्बुदमयोधयत् ॥ ५८
विष्णोश्चक्रं च तद्घोरं वज्रमाखण्डलस्य च ।
शीर्णं पुराऽभवत्तात ग्रहस्याङ्गेषु केशव ॥ ५९
[यत्तद्भगवता पूर्वं दत्तं चक्रं तवानघ ।
जलान्तरचरं हत्वा दैत्यं च बलगर्वितम् ॥ ६०
उत्पादितं वृषाङ्केन दीप्तज्वलनसन्निभम् ।
दत्तं भगवता तुभ्यं दुर्धर्षं तेजसाऽद्भुतम् ॥ ६१
न शक्यं द्रष्टुमन्येन वर्जयित्वा पिनाकिनम् ।
सुदर्शनं भवत्येवं भवेनोक्तं तदा तु तत् ॥ ६२
सुदर्शनं तदा तस्य लोके नाम प्रतिष्ठितम् ।
तज्जीर्णमभवत्तात ग्रहस्याङ्गेषु केशव ॥ ६३
ग्रहस्यातिबलस्याङ्गे वरदत्तस्य धीमतः ।
न शस्त्राणि वहन्त्यङ्गे चक्रवज्रशतान्यपि ॥] ६४
अर्द्यमानाश्च विबुधा ग्रहेण सुबलीयसा ।
शिवदत्तवराञ्जघ्नुरसुरेन्द्रान्सुरा भृशम् ॥ ६५
तुष्टो विद्युत्प्रभस्यापि त्रिलोकेश्वरतां ददौ ।
शतं वर्षसहस्राणां सर्वलोकेश्वरोऽभवत् ॥ ६६
ममैवानुचरो नित्यं भवितासीति चाब्रवीत् ।
तथा पुत्रसहस्राणामयुतं च ददौ प्रभुः ॥ ६७
कुशद्वीपं च स ददौ राज्येन भगवानजः ।
[तथा शतमुखो नाम धात्रा सृष्टो महासुरः ॥ ६८
येन वर्षशतं साग्रमात्ममांसैर्हुतोऽनलः ।
तं प्राह भगवांस्तुष्टः किं करोमीति शंकरः ॥ ६९
तं वै शतमुखः प्राह योगो भवतु मेऽद्भुतः ।
बलं च दैवतश्रेष्ठ शाश्वतं संप्रयच्छ मे ॥ ७०
तथेति भगवानाह तस्य तद्वचनं प्रभुः ।
स्वायंभुवः क्रतुश्चापि पुत्रार्थमभवत्पुरा ॥ ७१

---

पानेनैव जीवन्तः ॥ ४१ ॥ नियमाः अम्बुपानादयस्तैरेवाम्बुपैः क्षीरपैरित्यादिनामभिः ख्यातैः । प्रविशन्नेवापश्यमुपमन्युमिति शेष. ॥ ४७ ॥ समाना सवत्सराणामर्बुदं समार्बुदम् ॥ ५७ ॥ ग्रहस्य मन्दारनाम्न. ॥ ५९ ॥ भगवता महादेवेन ॥ ६० ॥ उत्पादित तस्यैव दैत्यस्य हननार्थम् ॥ ६१ ॥ जीर्णं जीर्णतृणवद्व्यर्थमित्यर्थः ॥ ६३ ॥ वरदत्तस्य सर्वेशस्त्रावध्यस्त्व भवेति दत्तवरस्य ॥ ६४ ॥

आविश्य योगेनात्मानं त्रीणि वर्षशतान्यपि ।
तस्य चोपददौ पुत्रान्सहस्रं ऋतुसंमितान् ।]
योगेश्वरं देवगीतं वेत्थ कृष्ण न संशयः ॥ ७२
याज्ञवल्क्य इति ख्यात ऋषिः परमधार्मिकः ।
आराध्य स महादेवं प्राप्तवानतुलं यशः ॥ ७३
वेदव्यासश्च योगात्मा पराशरसुतो मुनिः ।
सोऽपि शंकरमाराध्य प्राप्तवानतुलं यशः ॥ ७४
वालखिल्या मघवता ह्यवज्ञाताः पुरा किल ।
तैः क्रुद्धैर्भगवान्रुद्रस्तपसा तोषितो ह्यभूत् ॥ ७५
तांश्चापि दैवतश्रेष्ठः प्राह प्रीतो जगत्पतिः ।
सुपर्णं सोमहर्तारं तपसोत्पादयिष्यथ ॥ ७६
महादेवस्य रोषाच्च आपो नष्टाः पुराऽभवन् ।
ताश्च सप्तकपालेन देवैरन्याः प्रवर्तिताः ॥ ७७
ततः पानीयमभवत्प्रसन्ने त्र्यम्बके भुवि ।
अत्रिभार्या सुतं दत्तं सोमं दुर्वाससं प्रभो ॥ ७८
अत्रेर्भार्याऽपि भर्तारं संत्यज्य ब्रह्मवादिनी ।
नाहं तव मुने भूयो वशगा स्यां कथंचन ॥ ७९
इत्युक्त्वा सा महादेवमगमच्छरणं किल ।
निराहारा भयादत्रेस्त्रीणि वर्षशतान्यपि ॥ ८०
अशेत मुसलेष्वेव प्रसादार्थं भवस्य सा ।
तामब्रवीद्धसन्देवो भविता वै सुतस्तव ॥ ८१
विना भर्त्रा चरुद्रेण भविष्यति न संशयः ।
वंशे तवैव नाम्ना तु ख्यातिं यास्यति चेप्सिताम् ॥
विकर्णश्च महादेवं तथा भक्तसुखावहम् ।
प्रसाद्य भगवान्सिद्धिं प्राप्तवान्मधुसूदन ॥ ८३
शाकल्यः संशितात्मा वै नववर्षशतान्यपि ।
आराधयामास भवं मनोयज्ञेन केशव ॥ ८४
तं चाह भगवांस्तुष्टो ग्रन्थकारो भविष्यसि ।
वत्साक्षया च ते कीर्तिस्त्रैलोक्ये वै भविष्यति ८५
अक्षयं च कुलं तेऽस्तु महर्षिभिरलंकृतम् ।
भविष्यति द्विजश्रेष्ठः सूत्रकर्ता सुतस्तव ॥ ८६
सावर्णिश्चापि विख्यात ऋषिरासीत्कृते युगे ।
इह तेन तपस्तप्तं षष्टिवर्षशतान्यथ ॥ ८७
तमाह भगवान्रुद्रः साक्षात्तुष्टोसि तेऽनघ ।
ग्रन्थकृल्लोकविख्यातो भवितास्यजरामरः ॥ ८८
शक्रेण तु पुरा देवो वाराणस्यां जनार्दन ।
आराधितोऽभूद्भक्तेन दिग्वासा भस्मगुण्ठितः ॥
आराध्य स महादेवं देवराज्यमवाप्तवान् ॥ ८९
नारदेन तु भक्त्याऽसौ भव आराधितः पुरा ।
तस्य तुष्टो महादेवो जगौ देवगुरुर्गुरुः ॥ ९०
तेजसा तपसा कीर्त्या त्वत्समो न भविष्यति ।
गीतेन वादितव्येन नित्यं मामनुयास्यसि ॥ ९१
बाणः स्कन्दसमत्वं च कामो दर्पविमोक्षणम् ।
लवणोऽवध्यतामन्यैर्दशास्यश्च पुनर्बलम् ।
अन्तकोऽन्तमनुप्राप्तस्तस्मात्कोऽन्यः परः प्रभुः ९२
मयाऽपि च यथा दृष्टो देवदेवः पुरा विभो ।
साक्षात्पशुपतिस्तात तच्चापि शृणु माधव ॥ ९३
यदर्थं च मया देवः प्रयतेन तथा विभो ।
आराधितो महातेजास्तच्चापि शृणु विस्तरात् ॥ ९४
यदवाप्तं च मे पूर्वं देवदेवान्महेश्वरात् ।
तत्सर्वं निखिलेनाद्य कथयिष्यामि तेऽनघ ॥ ९५
पुरा कृतयुगे तात ऋषिरासीन्महायशाः ।
व्याघ्रपाद इति ख्यातो वेदवेदाङ्गपारगः ।
तस्याहमभवं पुत्रो धौम्यश्चापि ममानुजः ॥ ९६
कस्यचित्त्वथ कालस्य धौम्येन सह माधव ।
आगच्छमाश्रमं क्रीडन्मुनीनां भावितात्मनाम् ९७
तत्रापि च मया दृष्टा दुह्यमाना पयस्विनी ।
लक्षितं च मया क्षीरं स्वादुतो ह्यमृतोपमम् ॥ ९८
तदाप्रभृति चैवाहमरुदं मधुसूदन ।
दीयतां दीयतां क्षीरं मम मातरितीरिता ॥ ९९
अभावाच्चैव दुग्धस्य दुःखिता जननी तदा ॥ १००
ततः पिष्टं समालोड्य तोयेन सह माधव ।

सप्तकपालेन त्र्यम्बकदैवत्येन हेतुना । देवैः सप्तकपालेन रुद्रमिष्ट्वा आपो निर्मिता इत्यर्थः ॥ ७७ ॥ रुद्रप्रसादाज्जनयामासेति शेषः ॥ ७८ ॥ मुसलेष्वयोग्रेषु काष्ठकीलेषु ॥ ८१ ॥ चरुद्रः चरोर्द्रवः मण्ड इति यावत् । चरुशब्दपूर्वाद्द्रवतेरन्येभ्योपि दृश्यत इति डः । भर्तारविनापि चरुद्रवपानमात्रेण तव पुत्रो भविष्यतीत्यर्थः ॥ ८२ ॥ धूम्रश्चापि ममानुज इति ट. थ. पाठः ॥ ९६ ॥

आवयोः क्षीरमित्येव पानार्थं समुपानयन् १०१
अथ गव्यं पयस्तात कदाचित्प्राशितं मया १०२
पित्राऽहं यज्ञकाले हि नीतो ज्ञातिकुलं महत् ।
तत्र सा क्षरते देवी दिव्या गौः सुरनन्दिनी १०३
यस्याहं तत्पयः पीत्वा रसेन ह्यमृतोपमम् ।
ज्ञात्वा क्षीरगुणांश्चैव उपलभ्य हि संभवम् ।
स च पिष्टरसस्तात न मे प्रीतिमुपावहत् ॥१०४
ततोऽहमब्रुवं बाल्याज्जननीमात्मनस्तदा ।
नेदं क्षीरोदनं मातर्यत्त्वं मे दत्तवत्यसि ॥ १०५
ततो मामब्रवीन्माता दुःखशोकसमन्विता ।
पुत्रस्नेहात्परिष्वज्य मूर्ध्नि चाघ्राय माधव ॥१०६
कुतः क्षीरोदनं वत्स मुनीनां भावितात्मनाम् ।
वने निवसतां नित्यं कन्दमूलफलाशिनाम् १०७
आस्थितानां नदीं दिव्यां वालखिल्यैर्निषेविताम्
कुतः क्षीरं वनस्थानां मुनीनां गिरिवासिनाम् १०८
पावनानां वनाशानां वनाश्रमनिवासिनाम् ।
ग्राम्याहारनिवृत्तानामारण्यफलभोजिनाम् ।
नास्ति पुत्र पयोऽरण्ये सुरभीगोत्रवर्जिते ॥ १०९
नदीगह्वरशैलेषु तीर्थेषु विविधेषु च ।
तपसा जप्यनित्यानां शिवो नः परमा गतिः ॥
अप्रसाद्य विरूपाक्षं वरदं स्थाणुमव्ययम् ।
कुतः क्षीरोदनं वत्स सुखानि वसनानि च १११
तं प्रपद्य सदा वत्स सर्वभावेन शंकरम् ।
तत्प्रसादाच्च कामेभ्यः फलं प्राप्स्यसि पुत्रक ११२
जनन्यास्तद्वचः श्रुत्वा तदाप्रभृति शत्रुहन् ।
[प्राञ्जलिः प्रणतो भूत्वा इदमम्बामवोचयं ॥११३
कोऽयमम्ब महादेवः स कथं च प्रसीदति ।
कुत्र वा वसते देवो द्रष्टव्यो वा कथंचन ॥११४
तुष्यते वा कथं शर्वो रूपं तस्य च कीदृशम् ।
कथं ज्ञेयः प्रसन्नो वा दर्शयेज्जननी मम ॥ ११५
एवमुक्ता तदा कृष्ण माता मे सुतवत्सला ।
मूर्धन्याघ्राय गोविन्द सबाष्पाकुललोचना ११६
प्रमार्जन्ती च गात्राणि मम वै मधुसूदन ॥
दैन्यमालम्ब्य जननी इदमाह सुरोत्तम ॥ ११७
दुर्विज्ञेयो महादेवो दुराधारो दुरन्तकः ।
दुराबाधश्च दुर्ग्राह्यो दुर्दृश्यो ह्यकृतात्मभिः ॥११८
यस्य रूपाण्यनेकानि प्रवदन्ति मनीषिणः ।
स्थानानि च विचित्राणि प्रासादाश्चाप्यनेकशः ॥
को हि तत्त्वेन तद्वेद ईशस्य चरितं शुभम् ।
कृतवान्यानि रूपाणि देवदेवः पुरा किल ।
क्रीडते च तथा शर्वः प्रसीदति यथाच वै १२०
हृदिस्थः सर्वभूतानां विश्वरूपो महेश्वरः ।
भक्तानामनुकम्पार्थं दर्शनं च यथाश्रुतम् ।
मुनीनां ब्रुवतां दिव्यमीशानचरितं शुभम् १२१
कृतवान्यानि रूपाणि कथितानि दिवौकसैः ।
अनुग्रहार्थं विप्राणां शृणु वत्स समासतः ॥१२२
तानि ते कीर्तयिष्यामि यन्मां त्वं परिपृच्छसि ॥
ब्रह्मविष्णुसुरेन्द्राणां रुद्रादित्याश्विनामपि ।
विश्वेषामपि देवानां वपुर्धारयते भवः ॥ १२४
नराणां देवनारीणां तथा प्रेतपिशाचयोः ।
किरातशबराणां च जलजानामनेकशः ॥ १२५
करोति भगवान्रूपमाटव्यशबराण्यपि ।
कूर्मो मत्स्यस्तथा शङ्खः प्रवालाङ्कुरभूषणः ॥१२६
यक्षराक्षससर्पाणां दैत्यदानवयोरपि ।
वपुर्धारयते देवो भूयश्च बिलवासिनाम् ॥ १२७
व्याघ्रसिंहमृगाणां च तरक्ष्वृक्षपतत्रिणाम् ।
उलूकश्वशृगालानां रूपाणि कुरुतेऽपि च ॥१२८
हंसकाकमयूराणां कृकलासकसारसाम् ।
रूपाणि च बलाकानां गृध्रचक्राङ्गयोरपि ॥१२९
करोति वा स रूपाणि धारयत्यपि पर्वतम् ।
गोरूपं च महादेवो हस्त्यश्वोष्ट्रखराकृतिः ॥१३०
छागशार्दूलरूपश्च अनेकमृगरूपधृक् ।
अण्डजानां च दिव्यानां वपुर्धारयते भवः ॥१३१
दण्डी छत्री च कुण्डी च द्विजानां वारणस्तथा ।

पावनानां पवनाशिनाम् । वनाशाना अब्भक्षाणाम् ॥ १०९ ॥ प्रपद्य प्रपन्नो भव ॥ ११२ ॥ दुराधारः मनसि धर्तुमशक्यः ॥ ११८ ॥ प्रवालाङ्कुरभूषणो वसन्तस्तेन कालोऽप्ययमेवेत्यर्थः ॥ १२६ ॥

षण्मुखो वै बहुमुखस्त्रिनेत्रो बहुशीर्षकः ॥ १३२
अनेककटिपादश्च अनेकोदरवक्त्रधृक् ।
अनेकपाणिपार्श्वश्च अनेकगणसंवृतः ॥ १३३
ऋषिगन्धर्वरूपश्च सिद्धचारणरूपधृक् ।
भस्मपाण्डुरगात्रश्च चन्द्रार्धकृतभूषणः ॥ १३४
अनेकरावसंघुष्टश्चानेकस्तुतिसंस्कृतः ।
सर्वभूतान्तकः सर्वः सर्वलोकप्रतिष्ठितः ॥ १३५
सर्वलोकान्तरात्मा च सर्वगः सर्ववाद्यपि ।
सर्वत्र भगवान्ज्ञेयो हृदिस्थः सर्वदेहिनाम् ॥१३६
यो हि यं कामयेत्कामं यस्मिन्नर्थेऽर्च्यते पुनः ।
तत्सर्वं वेत्ति देवेशस्तं प्रपद्य यदीच्छसि ॥ १३७
नन्दते कुप्यते चापि तथा हुंकारयत्यपि ।
चक्री शूली गदापाणिर्मुसली खड्गपट्टसी ॥१३८
भूधरो नागमौञ्जी च नागकुण्डलकुण्डली ।
नागयज्ञोपवीती च नागचर्मोत्तरच्छदः ॥ १३९
हसते गायते चैव नृत्यते च मनोहरम् ।
वादयत्यपि वाद्यानि विचित्राणि गणैर्युतः॥१४०
वल्गते जृम्भते चैव रुदते रोदयत्यपि ।
उन्मत्तमत्तरूपं च भाषते चापि सुस्वरः ॥ १४१
अतीव हसते रौद्रस्त्रासयन्नयनैर्जनम् ।
जागर्ति चैव स्वपिति जृम्भते च यथासुखम्॥१४२
जपते जप्यते चैव तपते तप्यते पुनः ।
ददाति प्रतिगृह्णाति युञ्जते ध्यायतेऽपि च ॥१४३
वेदीमध्ये तथा यूपे गोष्ठमध्ये हुताशने ।
दृश्यते दृश्यते चापि बालो वृद्धो युवा तथा ॥१४४
क्रीडते ऋषिकन्याभिर्ऋषिपत्नीभिरेव च ।
ऊर्ध्वकेशो महाशेफो नग्नो विकृतलोचनः ॥१४५
गौरः श्यामस्तथा कृष्णः पाण्डुरो धूमलोहितः ।
विकृताक्षो विशालाक्षो दिग्वासाः सर्ववासकः ॥
अरूपस्याद्यरूपस्य अतिरूपाद्यरूपिणः ।
अनाद्यन्तमजस्यान्तं वेत्स्यते कोस्य तत्त्वतः १४७
हृदि प्राणो मनो जीवो योगात्मा योगसंज्ञितः ।
ध्यानं तत्परमात्मा च भावग्राह्यो महेश्वरः १४८
वादको गायनश्चैव सहस्रशतलोचनः ।
एकवक्त्रो द्विवक्त्रश्च त्रिवक्त्रोऽनेकवक्त्रकः ॥ १४९
तद्भक्तस्तद्गतो नित्यं तन्निष्ठस्तत्परायणः ।
भज पुत्र महादेवं ततः प्राप्स्यसि चेप्सितम्॥१५०
जनन्यास्तद्वचः श्रुत्वा तदाप्रभृति शत्रुहन् । ]
मम भक्तिर्महादेवे नैष्ठिकी समपद्यत ॥ १५१
ततोऽहं तप आस्थाय तोषयामास शंकरम् ।
दिव्यं वर्षसहस्रं तु वामाङ्गुष्ठाग्रविष्ठितः ॥ १५२
एकं वर्षशतं चैव फलाहारस्ततोऽभवम् ।
द्वितीयं शीर्णपर्णाशी तृतीयं चाम्बुभोजनः ॥१५३
शतानि सप्त चैवाहं वायुभक्षस्तदाऽभवम् ।
एकं वर्षसहस्रं तु दिव्यमाराधितो मया ॥ १५४
ततस्तुष्टो महादेवः सर्वलोकेश्वरः प्रभुः ।
एकभक्त इति ज्ञात्वा जिज्ञासां कुरुते तदा॥१५५
शक्ररूपं स कृत्वा तु सर्वैर्देवगणैर्वृतः ।
सहस्राक्षस्तदा भूत्वा वज्रपाणिर्महायशाः॥१५६
सुधावदातं रक्ताक्षं स्तब्धकर्णं मदोत्कटम् ।
आवेष्टितकरं घोरं चतुर्दंष्ट्रं महागजम् ॥ १५७
समास्थितः स भगवान्दीप्यमानः स्वतेजसा ।
आजगाम किरीटी तु हारकेयूरभूषितः ॥ १५८
पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्धनि ।
सेव्यमानोऽप्सरोभिश्च दिव्यगन्धर्वनादितैः॥१५९
ततो मामाह देवेन्द्रस्तुष्टस्तेऽहं द्विजोत्तम ।
वरं वृणीष्व मत्तस्त्वं यत्ते मनसि वर्तते ॥ १६०
शक्रस्य तु वचः श्रुत्वा नाहं प्रीतमनाऽभवम् ।
अब्रवं च तदा कृष्ण देवराजमिदं वचः ॥ १६१
नाहं त्वत्तो वरं काङ्क्षे नान्यस्मादपि दैवतात् ।
महादेवादृते सौम्य सत्यमेतद्ब्रवीमि ते ॥ १६२
सत्यंसत्यं हि नः शक्र वाक्यमेतत्सुनिश्चितम् ।
न यन्महेश्वरं मुक्त्वा कथाऽन्या मम रोचते॥१६३
पशुपतिवचनाद्भवामि सद्यः
कृमिरथवा तरुरप्यनेकशाखः ।

भूधरः शेषनागः ॥ १३९ ॥ सर्ववासक. सर्वस्याच्छादकः ॥ १४६ ॥ अभव सधिरार्ष. ॥ १६१ ॥

अपशुपतिवरप्रसादजा मे
त्रिभुवनराज्यविभूतिरप्यनिष्टा ॥ १६४
[जन्मश्वपाकमध्येऽ-
पि मेऽस्तु हरचरणवन्दनरतस्य ।
मा वाऽनीश्वरभक्तो
भवानि भवनेऽपि शक्रस्य ॥ १६५
वाय्वम्बुभुजोऽपि सतो
नरस्य दुःखक्षयः कुतस्तस्य ।
भवति हि सुरासुरगुरौ
यस्य न विश्वेश्वरे भक्तिः ॥ १६६
अलमन्याभिस्तेषां
कथाभिरप्यन्यधर्मयुक्ताभिः ।
येषां न क्षणमपि रुचितो
हरचरणस्मरणविच्छेदः ॥ १६७
हरचरणनिरतमतिना
भवितव्यमनार्जवं युगं प्राप्य
संसारभयं न भवति
हरभक्तिरसायनं पीत्वा ॥ १६८
दिवसं दिवसार्धं वा मुहूर्तं वा क्षणं लवम् ।
न ह्यलब्धप्रसादस्य भक्तिर्भवति शंकरे ॥ १६९]
अपि कीटः पतङ्गो वा भवेयं शंकराज्ञया ।
न तु शक्र त्वया दत्तं त्रैलोक्यमपि कामये॥१७०
[श्वाऽपि महेश्वरवचना-
द्भवामि स हि नः परः कामः ।
त्रिदशगणराज्यमपि खलु
नेच्छाम्यमहेश्वराज्ञप्तम् ॥ १७१
न नाकपृष्ठं न च देवराज्यं
न ब्रह्मलोकं न च निष्कलत्वम् ।
न सर्वकामानखिलान्वृणोमि
हरस्य दासत्वमहं वृणोमि ॥ १७२]
यावच्छशाङ्कधवलामलबद्धमौलि-
र्न प्रीयते पशुपतिर्भगवान्ममेशः ।
तावज्जरामरणजन्मशताभिघातै-
र्दुःखानि देहविहितानि समुद्वहामि॥१७३
दिवसकरशशाङ्कवह्निदीप्तं
त्रिभुवनसारमसारमाद्यमेकम् ।
अजरममरमप्रसाद्य रुद्रं
जगति पुमानिह को लभेत शान्तिं ॥१७४
'धिक्तेषां धिक्तेषां
पुनरपि च धिगस्तु धिक्तेषाम् ।
येषां न वसति हृदये
कुपथगतिविमोक्षको रुद्रः ॥' १७५
यदि नाम जन्म भूयो
भवति मदीयैः पुनर्दोषैः ।
तस्मिंस्तस्मिञ्जन्मनि
भवे भवेन्मेऽक्षया भक्तिः ॥ १७६
शक्र उवाच ।
कः पुनर्भवने हेतुरीशे कारणकारणे ।
येन शर्वादृतेऽन्यस्मात्प्रसादं नाभिकाङ्क्षसि॥१७७
[उपमन्युरुवाच ।
सदसद्व्यक्तमव्यक्तं यमाहुर्ब्रह्मवादिनः
नित्यमेकमनेकं च वरं तस्माद्वृणीमहे ॥ १७८
अनादिमध्यपर्यन्तं ज्ञानैश्वर्यमचिन्तितम् ।
आत्मानं परमं यस्माद्वरं तस्माद्वृणीमहे ॥ १७९
ऐश्वर्यं सकलं यस्मादनुत्पादितमव्ययम् ।
अबीजाद्बीजसंभूतं वरं तस्माद्वृणीमहे ॥ १८०
तमसः परमं ज्योतिस्तपस्तद्वृत्तिनां परम् ।
यं ज्ञात्वा नानुशोचन्ति वरं तस्माद्वृणीमहे १८१
भूतभावनभावज्ञं सर्वभूताभिभावनम् ।
सर्वगं सर्वदं देवं पूजयामि पुरंदर ॥ १८२
साङ्ख्ययागार्थदं परम्
यमुपासन्ति तत्त्वज्ञा वरं तस्माद्वृणीमहे ॥ १८३
मघवन्मघवात्मानं यं वदन्ति सुरेश्वरम् ।
सर्वभूतगुरुं देवं वरं तस्माद्वृणीमहे ॥ १८४

मावा मैव । भवानि भूयासम् ॥ १६५ ॥ अनार्जवं वक्रम् । युगं कलियुगम् ॥ १६८ ॥ असारं नास्ति सारो यस्मादन्य-स्तम् ॥ १७४ ॥ ईशे ईशस्य । भवने सत्तायाम् । को हेतुः का युक्तिः । ईशसत्त्वे प्रमाणं नास्तीत्यर्थः ॥ १७७ ॥

यत्पूर्वमसृजद्देवं ब्रह्माणं लोकभावनम् ।
अण्डमाकाशमापूर्य वरं तस्माद्वृणीमहे ॥ १८५
अग्निरापोऽनिलः पृथ्वी खं बुद्धिश्च मनो महान्।
स्रष्टा चैषां भवेद्योऽन्यो ब्रूहि कः परमेश्वरात् ॥
मनो मतिरहंकारस्तन्मात्राणीन्द्रियाणि च ।
ब्रूहि चैषां भवेच्छक्र कोऽन्योस्ति परमं शिवात् ॥
स्रष्टारं भुवनस्येह वदन्तीह पितामहम् ।
आराध्य स तु देवेशमश्नुते महतीं श्रियम्॥१८८
भगवत्युत्तमैश्वर्यं ब्रह्मविष्णुपुरोगमम् ।
विद्यते वै महादेवाद्ब्रूहि कः परमेश्वरात् ॥ १८९
दैत्यदानवमुख्यानामाधिपत्यारिमर्दनात् ।
कोऽन्यः शक्नोति देवेशाद्दितेः संपादितुं सुतान्॥
दिक्कालसूर्यतेजांसि ग्रहवाय्विन्दुतारकाः ।
विद्धि त्वेते महादेवाद्ब्रूहि कः परमेश्वरात् ॥१९१
अथोत्पत्तिविनाशे वा यज्ञस्य त्रिपुरस्य वा ।
दैत्यदानवमुख्यानामाधिपत्यारिमर्दनः ॥ १९२
किं चात्र बहुभिः सूक्तैर्हेतुवादैः पुरंदर ।
सहस्रनयनं दृष्ट्वा त्वामेव सुरसत्तम ॥ १९३
पूजितं सिद्धगन्धर्वैर्देवैश्च ऋषिभिस्तथा ।
देवदेवप्रसादेन तत्सर्वं कुशिकोत्तम ॥ १९४
अव्यक्तमुक्तकेशाय सर्वगस्येदमात्मकम् ।
चेतनाचेतनाद्येषु शक्र विद्धि महेश्वरात् ॥ १९५
भुवाद्येषु महान्तेषु लोकालोकान्तरेषु च ।
द्वीपस्थानेषु मेरोश्च विभवेष्वन्तरेषु च ।
भगवन्मघवन्देवं वदन्ते तत्त्वदर्शिनः ॥ १९६
यदि देवाः सुराः शक्र पश्यन्त्यन्यां भवाकृतिम् ।
किं न गच्छन्ति शरणं मर्दिताश्चासुरैः सुराः ॥१९७
अभिघातेषु देवानां सयक्षोरगरक्षसाम् ।
परस्परविनाशेषु स्वस्थानैश्वर्यदो भवः ॥ १९८
अन्धकस्याथ शुक्रस्य दुन्दुभेर्महिषस्य च ।
यक्षेन्द्रबलरक्षःसु निवातकवचेषु च ।
वरदानावघाताय ब्रूहि कोऽन्यो महेश्वरात् ॥१९९
सुरासुरगुरोर्वक्त्रे कस्य रेतः पुरा हुतम् ।
कस्य वाऽन्यस्य रेतस्तद्येन हैमो गिरिः कृतः ॥२००

दिग्वासाः कीर्त्यते कोऽन्यो लोके कश्चोर्ध्वरेतसः ।
कस्य चार्धे स्थिता कान्ता अनङ्गः केन निर्जितः ॥
ब्रूहीन्द्र परमं स्थानं कस्य देवैः प्रशस्यते ।
श्मशाने कस्य क्रीडार्थं नृत्ते वा कोऽभिभाष्यते ॥
कस्यैश्वर्यं समानं च भूतैः को वाऽपि क्रीडते ।
कस्य तुल्यबला देवगणाश्चैश्वर्यदर्पिताः ॥ २०३
घुष्यते ह्यचलं स्थानं कस्य त्रैलोक्यपूजितम् ।
वर्षते तपते कोऽन्यो ज्वलते तेजसा च कः ॥२०४
कस्मादोषधिसंपत्तिः को वा धारयते वसु ।
प्रकामं क्रीडते को वा त्रैलोक्ये सचराचरे २०५
ज्ञानसिद्धिक्रियायोगैः सेव्यमानश्च योगिभिः ।
ऋषिगन्धर्वसिद्धैश्च विहितं कारणं परम् ॥ २०६
कर्मयज्ञक्रियायोगैः सेव्यमानः सुरासुरैः ।
नित्यं कर्मफलैर्हीनं तमहं कारणं वदे ॥ २०७
स्थूलं सूक्ष्ममनौपम्यमग्राह्यं गुणगोचरम् ।
गुणहीनं गुणाध्यक्षं परं माहेश्वरं पदम् ॥ २०८
विश्वेशं कारणगुरुं लोकालोकान्तकारणम् ।
भूताभूतभविष्यच्च जनकं सर्वकारणम् ॥ २०९
अक्षराक्षरमव्यक्तं विद्याविद्ये कृताकृते ।
धर्माधर्मौ यतः शक्र तमहं कारणं ब्रुवे ॥ २१०
प्रत्यक्षमिह देवेन्द्र पश्य लिङ्गं भगाङ्कितम् ।
देवदेवेन रुद्रेण सृष्टिसंहारहेतुना ॥ २११
मात्रा पूर्वं ममाख्यातं कारणं लोकलक्षणम् ।
नास्ति चेशात्परं शक्र तं प्रपद्य यदीच्छसि ॥२१२
प्रत्यक्षं ननु ते सुरेश विदितं संयोगलिङ्गोद्भवं
त्रैलोक्यं सविकारनिर्गुणगणं ब्रह्मादिरेतोद्भवम् ।
यद्ब्रह्मेन्द्रहुताशविष्णुसहिता देवाश्च दैत्येश्वरा
नान्यत्कामसहस्रकल्पितधियः शंसन्ति ईशात्परं॥
तं देवं सचराचरस्य जगतो व्याख्यातवद्यात्तम
कामार्थी वरयामि संयतमना मोक्षाय सद्यः शिवम्
हेतुभिर्वा किमन्यैस्तैरीशः कारणकारणम् ।
न शुश्रुम यदन्यस्य लिङ्गमभ्यर्चितं सुरैः ॥२१४
कस्यान्यस्य सुरैः सर्वैर्लिङ्गं मुक्त्वा महेश्वरम् ।
अर्च्यतेऽर्चितपूर्वं वा ब्रूहि यद्यस्ति ते श्रुतिः॥ २१५

यस्य ब्रह्मा च विष्णुश्च त्वं चापि सहदैवतैः ।
अर्चयध्वं सदा लिङ्गं तस्माच्छ्रेष्ठतमो हि सः॥२१६
न पद्माङ्का न चक्राङ्का न वज्राङ्का यतः प्रजाः ।
लिङ्गाङ्का च भगाङ्का च तस्मान्माहेश्वरी प्रजा २१७
देव्याः कारणरूपभावजनिताः सर्वा भगाङ्काः स्त्रियो
लिङ्गेनापि हरस्य सर्वपुरुषाः प्रत्यक्षचिह्नीकृताः ।
योऽन्यत्कारणमीश्वरात्प्रवदते देव्या च यन्नाङ्कितं
त्रैलोक्ये सचराचरे स तु पुमान्बाह्यो भवेद्दुर्मतिः ॥
पुल्लिङ्गं सर्वमीशानं स्त्रीलिङ्गं विद्धि चाप्युमाम् ।
द्वाभ्यां तनुभ्यां व्याप्तं हि चराचरमिदं जगत् ॥ ]
तस्माद्वरमहं काङ्क्षे निधनं वाऽपि कौशिक ।
गच्छ वा तिष्ठ वा शक्र यथेष्टं बलसूदन ॥२२०
काममेष वरो मेऽस्तु शापो वाऽथ महेश्वरात् ।
न चान्यां देवतां काङ्क्षे सर्वकामफलामपि ॥२२१
एवमुक्त्वा तु देवेन्द्रं दुःखादाकुलितेन्द्रियः ।
न प्रसीदति मे देवः किमेतदिति चिन्तयन् ॥२२२
अथापश्यं क्षणेनैव तमेवैरावतं पुनः ।
हंसकुन्देन्दुसदृशं मृणालरजतप्रभम् ॥　२२३
वृषरूपधरं साक्षात्क्षीरोदमिव सागरम् ।
कृष्णपुच्छं महाकायं मधुपिङ्गललोचनम् ॥२२४
वज्रसारमयैः शृङ्गैर्निष्टप्तकनकप्रभैः ।
सुतीक्ष्णैर्मृदुरक्ताग्रैरुत्किरन्तमिवावनिम् ॥ २२५
जाम्बूनदेन दाम्ना च सर्वतः समलंकृतम् ।
सुवक्त्रखुरनासं च सुकर्णं सुकटीतटम् ।
सुपार्श्वं विपुलस्कन्धं सुरूपं चारुदर्शनम् ॥२२६
ककुदं तस्य चाभाति स्कन्धमापूर्य धिष्ठितम् ।
तुषारगिरिकूटाभं सिताभ्रशिखरोपमम् ॥ २२७
तमास्थितश्च भगवान्देवदेवः सहोमया ।
अशोभत महादेवः पौर्णमास्यामिवोडुराट् ॥२२८
'किरीटं च जटाभारः सर्पाद्याभरणानि च ।
वज्रादिशूलमातङ्गगम्भीरस्मितमागतम् ॥' २२९
तस्य तेजोभवो वह्निः समेघः स्तनयित्नुमान् ।
सहस्रमिव सूर्याणां सर्वमापूर्य धिष्ठितः ॥ २३०
ईश्वरः सुमहातेजाः संवर्तक इवानलः ।
युगान्ते सर्वभूतानां दिधक्षुरिव चोद्यतः ॥२३१
तेजसा तु तदा व्याप्तं दुर्निरीक्ष्यं समन्ततः ।
पुनरुद्विग्नहृदयः किमेतदिति चिन्तयम् ॥ २३२
मुहूर्तमिव तत्तेजो व्याप्य सर्वा दिशो दश ।
प्रशान्तं च क्षणेनैव देवदेवस्य मायया ॥ २३३
अथापश्यं स्थितं स्थाणुं भगवन्तं महेश्वरम् ।
'सौरभेयगतं सौम्यं विधूममिव पावकम् ॥२३४
प्रशान्तमनसं देवं त्रिनेत्रमपराजितम् ।
सहितं चारुसर्वाङ्ग्या पार्वत्या परमेश्वरम् ॥'२३५
नीलकण्ठं महात्मानमसक्तं तेजसां निधिम् ।
अष्टादशभुजं स्थाणुं सर्वाभरणभूषितम् ॥ २३६
शुक्लाम्बरधरं देवं शुक्लमाल्यानुलेपनम् ।
शुक्लध्वजमनाधृष्यं शुक्लयज्ञोपवीतिनम् ॥ २३७
गायद्भिर्नृत्यमानैश्च वादयद्भिश्च सर्वशः ।
वृतं पार्श्वचरैर्दिव्यैरात्मतुल्यपराक्रमैः ॥ २३८
बालेन्दुमुकुटं पाण्डुं शरच्चन्द्रमिवोदितम् ।
त्रिभिर्नेत्रैः कृतोद्योतं त्रिभिः सूर्यैरिवोदितैः २३९
'सर्वविद्याधिपं देवं शरच्चन्द्रसमप्रभम् ।
नयनाह्लादसौम्योऽहमपश्यं परमेश्वरम् ॥' २४०
अशोभतास्य देवस्य माला गात्रे सितप्रभे ।
जातरूपमयैः पद्मैर्ग्रथिता रत्नभूषिता ॥ २४१
मूर्तिमन्ति तथाऽस्त्राणि सर्वतेजोमयानि च ।
मया दृष्टानि गोविन्द भवस्यामिततेजसः ॥२४२
इन्द्रायुधसहस्राभं धनुस्तस्य महात्मनः ।
पिनाकमिति विख्यातं स च वै पन्नगो महान् ॥
सप्तशीर्षो महाकायस्तीक्ष्णदंष्ट्रो विषोल्बणः ।
ज्यावेष्टितमहाग्रीवः स्थितः पुरुषविग्रहः ॥ २४४
शरश्च सूर्यसंकाशो दृष्टः पाशुपताह्वयः ।
'सहस्रभुजजिह्वास्यो भीषणो नागविग्रहः ॥२४५
शङ्खशूलासिभिश्चैव पट्टसैः रूपवान्स्थितः ।
येन च त्रिपुरं दग्धं सर्वदेवमयः शरः ॥' २४६
एतदस्त्रं महाघोरं दिव्यं पाशुपतं महत् ।
अद्वितीयमनिर्देश्यं सर्वभूतभयावहम् ।
सस्फुलिङ्गं महाकायं विसृजन्तमिवानलम् ॥२४७

एकपादं महादंष्ट्रं सहस्रशिरसोदरम् ।
सहस्रभुजजिह्वाक्षमुद्गिरन्तमिवानलम् ॥ २४८
ब्राह्मान्नारायणाच्चैन्द्राद् आग्नेयादपि वारुणात् ।
यद्विशिष्टं महाबाहो सर्वशस्त्रविघातनम् ॥ २४९
येन तत्त्रिपुरं दग्ध्वा क्षणाद्भस्मीकृतं पुरा ।
शरेणैकेन गोविन्द महादेवेन लीलया ॥ २५०
निर्ददाह च यत्कृत्स्नं त्रैलोक्यं सचराचरम् ।
महेश्वरभुजोत्सृष्टं निमेषार्धान्न संशयः ॥ २५१
नावध्यो यस्य लोकेऽस्मिन्ब्रह्मविष्णुसुरेष्वपि ।
तदहं दृष्टवांस्तत्र आश्चर्यमिदमुत्तमम् ॥ २५२
गुह्यमस्त्रवरं नान्यत्तत्तुल्यमधिकं हि वा ।
यत्तच्छूलमिति ख्यातं सर्वलोकेषु शूलिनः २५३
दारयेद्यां महीं कृत्स्नां शोषयेद्वा महोदधिम् ।
संहरेद्वा जगत्कृत्स्नं विसृष्टं शूलपाणिना ॥ २५४
यौवनाश्वो हतो येन मान्धाता सबलः पुरा ।
चक्रवर्ती महातेजास्त्रिलोकविजयी नृपः ॥ २५५
महाबलो महावीर्यः शक्रतुल्यपराक्रमः ।
करस्थेनैव गोविन्द लवणस्येह रक्षसः ॥ २५६
तच्छूलमतितीक्ष्णाग्रं सुभीमं रोमहर्षणम् ।
त्रिशिखां भ्रुकुटिं कृत्वा तर्जमानमिव स्थितम् ॥
विधूमं सार्चिषं कृष्णं कालसूर्यमिवोदितम् ।
सर्पहस्तमनिर्देश्यं पाशहस्तमिवान्तकम् ॥ २५८
दृष्टवानस्मि गोविन्द तदस्त्रं रुद्रसन्निधौ ।
परशुस्तीक्ष्णधारश्च दत्तो रामस्य यः पुरा ॥ २५९
महादेवेन तुष्टेन दत्तं भृगुसुताय च ।
कार्तवीर्यो हतो येन चक्रवर्ती महामृधे ॥ २६०
त्रिःसप्तकृत्वः पृथिवी येन निःक्षत्रिया कृता ।
जामदग्न्येन गोविन्द रामेणाक्लिष्टकर्मणा ॥ २६१
दीप्तधारः सुरौद्रास्यः सर्पकण्ठाग्रधिष्ठितः ॥
अभवच्छूलिनोऽभ्याशे दीप्तवह्निशतोपमः ॥ २६२
असङ्ख्येयानि चास्त्राणि तस्य दिव्यानि धीमतः ।
प्राधान्यतो मयैतानि कीर्तितानि तवानघ ॥ १६३
सव्यदेशे तु देवस्य ब्रह्मा लोकपितामहः ।
दिव्यं विमानमास्थाय हंसयुक्तं मनोजवम् ॥ २६४
वामपार्श्वगतश्चापि तथा नारायणः स्थितः ।
वैनतेयं समारुह्य शङ्खचक्रगदाधरः ॥ २६५
स्कन्दो मयूरमास्थाय स्थितो देव्याः समीपतः ।
शक्तिकण्टे समादाय द्वितीय इव पावकः ॥ २६६
पुरस्ताच्चैव देवस्य नन्दिं पश्याम्यवस्थितम् ।
शूलं विष्टभ्य तिष्ठन्तं द्वितीयमिव शंकरम् ॥ २६७
स्वायंभुवाद्या मनवो भृग्वाद्या ऋषयस्तथा ।
शक्राद्या देवताश्चैव सर्व एव समभ्ययुः ॥ २६८
सर्वभूतगणाश्चैव मातरो विविधाः स्थिताः ।
तेऽभिवाद्य महात्मानं परिवार्य समन्ततः ॥ २६९
अस्तुवन्विविधैः स्तोत्रैर्महादेवं सुरास्तदा ।
'जगन्मूर्ति महालिङ्गं तन्मध्ये स्फीतरूपिणम् २७०
ब्रह्मा भवं तदाऽस्तौषीद्रथन्तरमुदीरयन् ।
ज्येष्ठसाम्ना च देवेशं जगौ नारायणस्तदा ॥ २७१
गृणन्ब्रह्म परं शक्रः शतरुद्रियमुत्तमम् ।
ब्रह्मा नारायणश्चैव देवराजश्च कौशिकः ।
अशोभन्त महात्मानस्त्रयस्त्रय इवाग्नयः ॥ २७२
तेषां मध्यगतो देवो रराज भगवाञ्छिवः ।
शरदभ्रविनिर्मुक्तः परिधिस्थ इवांशुमान् ॥ २७३
अयुतानि च चन्द्रार्कानपश्यं दिवि केशव ।
ततोऽहमस्तुवं देवं स्तवेनानेन सुव्रत ॥ २७४
उपमन्युरुवाच ।
नमो देवाधिदेवाय महादेवाय ते नमः ।
शक्ररूपाय शक्राय शक्रवेषधराय च ॥ २७५
नमस्ते वज्रहस्ताय पिङ्गलायारुणाय च ।
पिनाकपाणये नित्यं शङ्खशूलधराय च ॥ २७६
नमस्ते कृष्णवासाय कृष्णकुञ्चितमूर्धज ।
कृष्णाजिनोत्तरीयाय कृष्णाष्टमिरताय च ॥ २७७
शुक्लवर्णाय शुक्लाय शुक्लाम्बरधराय च ।
शुक्लभस्मावलिप्ताय शुक्लकर्मरताय च ॥ २७८
नमोस्तु रक्तवर्णाय रक्ताम्बरधराय च ।
रक्तध्वजपताकाय रक्तस्रगनुलेपिने ॥ २७९

---

रथन्तरज्येष्ठे सामनी ॥ २७१ ॥

शुक्लकर्म हिंसारहितो ध्यानादिधर्मः ॥ २७८ ॥

नमोस्तु पीतवर्णाय पीताम्बरधराय च ॥ २८०
नमोस्तूच्छ्रितच्छत्राय किरीटवरधारिणे ।
अर्धहारार्धकेयूर अर्धकुण्डलकर्णिने ॥ २८१
नमः पवनवेगाय नमो देवाय वै नमः ।
सुरेन्द्राय मुनीन्द्राय महेन्द्राय नमोस्तु ते ॥२८२
नमः पद्मार्धमालाय उत्पलैर्मिश्रिताय च ।
अर्धचन्दनलिप्ताय अर्धस्रगनुलेपिने ॥ २८३
नम आदित्यवक्त्राय आदित्यनयनाय च ।
नम आदित्यवर्णाय आदित्यप्रतिमाय च ॥२८४
नमः सोमाय सौम्याय सौम्यवक्त्रधराय च ।
सौम्यरूपाय मुख्याय सौम्यदंष्ट्राविभूषिणे ॥२८५
नमः श्यामाय गौराय अर्धपीतार्धपाण्डवे ।
नारीनरशरीराय स्त्रीपुंसाय नमोस्तु ते ॥ २८६
नमो वृषभवाहाय गजेन्द्रगमनाय च ।
दुर्गमाय नमस्तुभ्यमगम्यागमनाय च ॥ २८७
नमोस्तु गणगीताय गणवृन्दरताय च ।
गुणानुयातमार्गाय गणनित्यव्रताय च ॥ २८८
नमः श्वेताभ्रवर्णाय संध्यारागप्रभाय च ।
अनुद्दिष्टाभिधानाय स्वरूपाय नमोस्तु ते ॥२८९
नमो रक्ताग्रवासाय रक्तसूत्रधराय च ।
रक्तमालाविचित्राय रक्ताम्बरधराय च ॥ २९०
मणिभूषितमूर्धाय नमश्चन्द्रार्धभूषिणे ।
विचित्रमणिमूर्धाय कुसुमाष्टधराय च ॥ २९१
नमोऽग्निमुखनेत्राय सहस्रशशिलोचने ।
अग्निरूपाय कान्ताय नमोस्तु गहनाय च ॥२९२
खचराय नमस्तुभ्यं गोचराभिरताय च ।
भूचराय भुवनाय अनन्ताय शिवाय च ॥ २९३
नमो दिग्वाससे नित्यमधिवाससुवाससे ।
नमो जगन्निवासाय प्रतिपत्तिसुखाय च ॥ २९४
नित्यमुद्बद्धमुकुटे महाकेयूरधारिणे ।
सर्पकण्ठोपहाराय विचित्राभरणाय च ॥ २९५
नमस्त्रिनेत्रनेत्राय सहस्रशतलोचने ।
स्त्रीपुंसाय नपुंसाय नमः साङ्ख्याय योगिने २९६
शंयोरभिस्रवन्ताय अथर्वाय नमोनमः ।
नमः सर्वार्तिनाशाय नमः शोकहराय च ॥२९७
नमो मेघनिनादाय बहुमायाधराय च ।
बीजक्षेत्राभिपालाय स्रष्टाराय नमोनमः ॥ २९८
नमः सुरासुरेशाय विश्वेशाय नमोनमः ।
नमः पवनवेगाय नमः पवनरूपिणे ॥ २९९
नमः काञ्चनमालाय गिरिमालाय वै नमः ।
नमः सुरारिमालाय चण्डवेगाय वै नमः ॥ ३००
ब्रह्मशिरोपहर्ताय महिषघ्नाय वै नमः ।
नमः स्त्रीरूपधाराय यज्ञविध्वंसनाय च ॥ ३०१
नमस्त्रिपुरहर्ताय यज्ञविध्वंसनाय च ।
नमः कामाङ्गनाशाय कालदण्डधराय च ॥ ३०२
नमः स्कन्दविशाखाय ब्रह्मदण्डाय वै नमः ।
नमो भवाय शर्वाय विश्वरूपाय वै नमः ॥३०३
ईशानाय भवघ्नाय नमोस्त्वन्धकघातिने ।
नमो विश्वाय मायाय चिन्त्याचिन्त्याय वै नमः॥
त्वं नो गतिश्च श्रेष्ठश्च त्वमेव हृदयं तथा ।]
त्वं ब्रह्मा सर्वदेवानां रुद्राणां नीललोहितः ३०५
आत्मा च सर्वभूतानां साङ्ख्ये पुरुष उच्यते ।
ऋषभस्त्वं पवित्राणां योगिनां निष्कलः शिवः ॥
गृहस्थस्त्वमाश्रमिणामीश्वराणां महेश्वरः ।
कुबेरः सर्वयक्षाणां क्रतूनां विष्णुरुच्यते ॥ ३०७
पर्वतानां भवान्मेरुर्नक्षत्राणां च चन्द्रमाः ।
वसिष्ठस्त्वमृषीणां च ग्रहाणां सूर्य उच्यते ॥३०८
आरण्यानां पशूनां च सिंहस्त्वं परमेश्वरः ।
ग्राम्याणां गोवृषश्चासि भवाँल्लोकप्रपूजितः ॥३०९
आदित्यानां भवान्विष्णुर्वसूनां चैव पावकः ।
पक्षिणां वैनतेयस्त्वमनन्तो भुजगेषु च ॥ ३१०
सामवेदश्च वेदानां यजुषां शतरुद्रियम् ।
सनत्कुमारो योगानां साङ्ख्यानां कपिलो ह्यसि ॥
शक्रोसि मरुतां देव पितॄणां हव्यवाडसि ।

मिश्रिताय मिश्रितमालाय ॥ २८३ ॥ मुकुटे मुकुटाय ॥ २९५ ॥ त्रीणि नेत्राणीव नेत्राणि लोकयात्रानिर्वाहकाग्न्यग्निचन्द्रसूर्याख्यानि नेत्राणि यस्य तस्मै त्रिनेत्रनेत्राय । लोचने लोचनाय ॥ २९६ ॥ स्रष्टाराय औणादिकः सृजेस्तारन् । स्रष्ट्रे इत्यर्थः ॥ २९८ ॥ मायाय मायाविने ॥ ३०४ ॥

रुद्राणीकूपमासाद्य ह्रदे तत्र समाश्वसत् ।
विश्रान्तश्च समुत्थाय कैलासमभितो ययौ ॥३४
सोऽपश्यत्काञ्चनद्वारं दीप्यमानमिव श्रिया ।
मन्दाकिनीं च नलिनीं धनदस्य महात्मनः ॥३५
अथ ते राक्षसाः सर्वे येऽभिरक्षन्ति पद्मिनीम् ।
प्रत्युत्थिता भगवन्तं माणिभद्रपुरोगमाः ॥ ३६
स तान्प्रत्यर्चयामास राक्षसान्भीमविक्रमान् ।
निवेदयत मां क्षिप्रं धनदायेति चाब्रवीत् ॥ ३७
ते राक्षसास्तथा राजन्भगवन्तमथाब्रुवन् ।
असौ वैश्रवणो राजा स्वयमायाति तेऽन्तिकम् ३८
विदितो भगवानस्य कार्यमागमनस्य यत् ।
पश्यैनं त्वं महाभागं ज्वलन्तमिव तेजसा ॥ ३९
ततो वैश्रवणोऽभ्येत्य अष्टावक्रमनिन्दितम् ।
विधिवत्कुशलं पृष्ट्वा ततो ब्रह्मर्षिमब्रवीत् ॥ ४०
सुखं प्राप्तो भवान्कच्चित्किंवा मत्तश्चिकीर्षति ।
ब्रूहि सर्वं करिष्यामि यन्मां वक्ष्यसि वै द्विज ४१
भवनं प्रविश त्वं मे यथाकामं द्विजोत्तम ।
सत्कृतः कृतकार्यश्च भवान्यास्यत्यविघ्नतः ॥ ४२
प्राविशद्भवनं स्वं वै गृहीत्वा तं द्विजोत्तमम् ।
आसनं स्वं ददौ चैव पाद्यमर्घ्यं तथैव च ॥ ४३
अथोपविष्टयोस्तत्र माणिभद्रपुरोगमाः ।
निषेदुस्तत्र कौबेरा यक्षगन्धर्वकिन्नराः ॥ ४४
ततस्तेषां निषण्णानां धनदो वाक्यमब्रवीत् ।
भवच्छन्दं समाज्ञाय नृत्येरन्नप्सरोगणाः ॥ ४५
आतिथ्यं परमं कार्यं शुश्रूषा भवतस्तथा ।
संवर्ततामित्युवाच मुनिर्मधुरया गिरा ॥ ४६
यथोर्वरा मिश्रकेशी रम्भा चैवोर्वशी तथा ।
अलम्बुसा घृताची च चित्रा चित्राङ्गदा रुचिः ॥
मनोहरा सुकेशी च सुमुखी हासिनी प्रभा ।
विद्युता प्रशमी दान्ता विद्योता रतिरेव च ॥४८
एताश्चान्याश्च वै बह्व्यः प्रनृत्ताप्सरसः शुभाः ।
अवादयंश्च गन्धर्वा वाद्यानि विविधानि च ॥४९
अथ प्रवृत्ते गान्धर्वे दिव्ये ऋषिरुपाविशत् ।
दिव्यं संवत्सरं तत्रारमतैष महातपाः ॥ ५०
ततो वैश्रवणो राजा भगवन्तमुवाच ह ।
साग्रः संवत्सरो यातो विप्रेह तव पश्यतः ॥५१
हार्योऽयं विषयो ब्रह्मन्गान्धर्वो नाम नामतः ।
छन्दतो वर्ततां विप्र यथा वदति वा भवान् ५२
अतिथिः पूजनीयस्त्वमिदं च भवतो गृहम् ।
सर्वमाज्ञाप्यतामाशु परवन्तो वयं त्वयि ॥ ५३
अथ वैश्रवणं प्रीतो भगवान्प्रत्यभाषत ।
अर्चितोस्मि यथान्यायं गमिष्यामि धनेश्वर ॥ ५४
प्रीतोस्मि सदृशं चैव तव सर्वं धनाधिप ।
तव प्रसादाद्भगवन्महर्षेश्च महात्मनः ।
नियोगादद्य यास्यामि वृद्धिमानृद्धिमान्भव ॥५५
अथ निष्क्रम्य भगवान्प्रययावुत्तरामुखः ।
'कैलासे शंकरावासमभिवीक्ष्य प्रणम्य च ॥ ५६
गौरीशं शंकरं दान्तं शरणागतवत्सलम् ।
गङ्गाधरं गोपतिनं गणावृतमकल्मषम् ॥' ५७
कैलासं मन्दरं हैमं सर्वाननुचचार ह ।
तानतीत्य महाशैलान्कैरातं स्थानमुत्तमम् ॥ ५८
प्रदक्षिणं तथा चक्रे प्रयतः शिरसा नतः ।
धरणीमवतीर्याथ पूतात्माऽसौ तदाऽभवत् ॥५९
स तं प्रदक्षिणं कृत्वा निर्यातश्चोत्तरामुखः ।
समेन भूमिभागेन ययौ प्रीतिपुरस्कृतः ॥ ६०
ततोऽपरं वनोद्देशं रमणीयमपश्यत ।
सर्वर्तुभिर्मूलफलैः पक्षिभिश्च समन्वितैः ।
रमणीयैर्वनोद्देशैस्तत्रतत्र विभूषितम् ॥ ६१
तत्राश्रमपदं दिव्यं ददर्श भगवानथ ॥ ६२
शैलांश्च विविधाकारान्काञ्चनान्रत्नभूषितान् ।
मणिभूमौ निविष्टाश्च पुष्करिण्यस्तथैव च ॥ ६३
अन्यान्यपि सुरम्याणि ददर्श सुबहून्यथ ।

भवच्छन्द भवदिच्छाम् ॥ ४५ ॥ हार्यः हरतीति हार्यः ॥५२॥ भगवान् अष्टावक्रः ॥ ५४ ॥ वृद्धिरुपचयस्तद्वान् । ऋद्धिः संपत् तद्वान् ॥ ५५ ॥ कैरात किरातवेषधारिणो महादेवस्य सबन्धि ॥ ५८ ॥ धरणीमवतीर्येत्यनेनाकाशमार्गेणाष्टावक्रो गच्छतीति गम्यते ॥ ५९ ॥

भृशं तस्य मनो रेमे महर्षेर्भावितात्मनः ॥ ६४
स तत्र काञ्चनं दिव्यं सर्वरत्नमयं गृहम् ।
ददर्शाद्भुतसंकाशं धनदस्य गृहाद्वरम् ॥ ६५
महान्तो यत्र विविधा मणिकाञ्चनपर्वताः ।
विमानानि च रम्याणि रत्नानि विविधानि च ६६
मन्दारपुष्पैः संकीर्णां तथा मन्दाकिनीं नदीम् ।
स्वयंप्रभाश्च मणयो वज्रैर्भूमिश्च भूषिता ॥ ६७
नानाविधैश्च भवनैर्विचित्रमणितोरणैः ।
मुक्ताजालविनिक्षिप्तैर्मणिरत्नविभूषितैः ॥ ६८
मनोदृष्टिहरै रम्यैः सर्वतः संवृतं शुभैः ।
ऋषिभिश्चावृतं तत्र आश्रमं तं मनोहरम् ॥ ६९
ततस्तस्याभवच्चिन्ता कुत्र वासो भवेदिति ।
अथ द्वारं समभितो गत्वा स्थित्वा ततोऽब्रवीत् ॥
अतिथिं समनुप्राप्तमभिजानन्तु येऽत्र वै ॥ ७१
अथ कन्याः परिवृता गृहात्तस्माद्विनिर्गताः ।
नानारूपाः सप्त विभो कन्याः सर्वा मनोहराः ७२
यां यामपश्यत्कन्यां वै सा सा तस्य मनोऽहरत् ।
न च शक्तो वारयितुं मनोऽस्याथावसीदति ।
ततो धृतिः समुत्पन्ना तस्य विप्रस्य धीमतः ७३
अथ तं प्रमदाः प्राहुर्भगवान्प्रविशत्विति ।
स च तासां सुरूपेण तस्यैव भवनस्य च ।
कौतूहलं समाविष्टः प्रविवेश गृहं द्विजः ॥ ७४
तत्रापश्यज्जरायुक्तामरजोम्बरधारिणीम् ।
वृद्धां पर्यङ्कमासीनां सर्वाभरणभूषिताम् ॥ ७५
स्वस्तीति तेन चैवोक्ता सा स्त्री प्रत्यवदत्तदा ।
प्रत्युत्थाय च तं विप्रमास्यतामित्युवाच ह ॥७६
अष्टावक्र उवाच ।
सर्वाः स्वानालयान्यान्तु एका मामुपतिष्ठतु ।
प्रज्ञाता या प्रशान्ता या शेषा गच्छन्तु च्छन्दतः॥
ततः प्रदक्षिणीकृत्य कन्यास्तास्तमृषिं तदा ।
निश्चक्रमुर्गृहात्तस्मात्सा वृद्धाऽथ व्यतिष्ठत ।
'तया संपूजितस्तत्र शयने चापि निर्मले ॥' ७८
अथ तां संविशन्प्राह शयने भास्वरे तदा ।
त्वयाऽपि सुप्यतां भद्रे रजनी ह्यतिवर्तते ॥ ७९
संलापात्तेन विप्रेण तथा सा तत्र भाषिता ।
द्वितीये शयने दिव्ये संविवेश महाप्रभे ॥ ८०
अथ सा वेपमानाङ्गी निमित्तं शीतजं तदा ।
व्यपदिश्य महर्षेर्वै शयनं व्यवरोहत ॥ ८१
स्वागतेनागतां तां तु भगवानभ्यभाषत ।
सा जुगूह भुजाभ्यां तु ऋषिं प्रीत्या नरर्षभ ॥८२
निर्विकारमृषिं चापि काष्ठकुड्योपमं तदा ।
दुःखिता प्रेक्ष्य संजल्पमकार्षीदृषिणा सह ॥८३
ब्रह्मन्नकामकरोस्ति स्त्रीणां पुरुषतो धृतिः ।
कामेन मोहिता चाहं त्वां भजन्तीं भजस्व माम्८४
प्रहृष्टो भव विप्रर्षे समागच्छ मया सह ।
उपगूह च मां विप्र कामार्ताऽहं भृशं त्वयि ॥ ८५
एतद्धि तव धर्मात्मंस्तपसः पूज्यते फलम् ।
प्रार्थितं दर्शनादेव भजमानां भजस्व माम् ॥८६
सद्म चेदं धनं सर्वं यच्चान्यदपि पश्यसि ।
प्रभुस्त्वं भव सर्वत्र मयि चैवं न संशयः ॥ ८७
सर्वान्कामान्विधास्यामि रमस्व सहितो मया ।
रमणीये वने विप्र सर्वकामफलप्रदे ॥ ८८
त्वद्वशाऽहं भविष्यामि रंस्यसे च मया सह ।
सर्वान्कामानुपाश्नीमो ये दिव्या ये च मानुषाः८९
नातः परं हि नारीणां विद्यते च कदाचन ।
यथा पुरुषसंसर्गः परमेतद्धि नः फलम् ॥ ९०
आत्मच्छन्देन वर्तन्ते नार्यो मन्मथचोदिताः ।
न च दह्यन्ति गच्छन्त्यः सुतप्तैरपि पांसुभिः ॥९१
अष्टावक्र उवाच ।
परदारानहं भद्रे न गच्छेयं कथंचन ।
दूषितं धर्मशास्त्रज्ञैः परदाराभिमर्शनम् ॥ ९२
'शुद्धक्षेत्रे ब्रह्महत्याप्रायश्चित्तमथोच्यते ।

सप्त इतरदिग्देवताः ॥ ७२ ॥ उत्तराधिष्ठात्री तु देवता मुख्याऽष्टमी सैव जरायुक्ता ॥ ७५ ॥ प्रज्ञाता अत्यन्तं ज्ञानवती । प्रशान्ता निर्जितचित्ता ॥ ७७ ॥ जुगूह आलिङ्गितवती ॥ ८२ ॥ ब्रह्मन्नकामतोऽन्यास्तीति झ. पाठः । तत्र अकामतोऽनिच्छातः स्वभावत इत्यर्थः । पुरुषतः पुरुषं प्राप्य स्त्रीणां धृतिर्धैर्यमन्या परकीयास्ति । पुयोगे स्त्रीणां धृतिः स्वकीया सर्वथा नास्तीत्यर्थः ॥ ८४ ॥ प्रहृष्टः कामुको भव । उपगूह आलिङ्गस्व ॥ ८५ ॥

पुनश्च पातकं दृष्टं विप्रक्षेत्रे विशेषतः ॥' ९३
भद्रे निर्वेष्टुकामोऽहं तत्रात्वकिरणं मम ।
'प्रायश्चित्तं महदतो दारग्रहणपूर्वकम् ॥ ९४
बीजं न शुद्ध्यते वोढुरन्यथा कृतनिष्कृतेः ।
मातृतः पितृतः शुद्धो ज्ञेयः पुत्रो यथार्थतः ॥'९५
विषयेष्वनभिज्ञोऽहं धर्मार्थं किल संततिः ।
एवं लोकान्गमिष्यामि पुत्रैरिति न संशयः ॥९६
भद्रे धर्मं विजानीहि ज्ञात्वा चोपरमस्व ह ॥९७
स्त्र्युवाच ।
नानिलोऽग्निर्न वरुणो न चान्ये त्रिदशा द्विज ।
प्रियाः स्त्रीणां यथा कामो रतिशीला हि योषितः॥
सहस्रे किल नारीणां प्राप्येतैका कदाचन ।
तथा शतसहस्रेषु यदि काचित्पतिव्रता ॥ ९९
नैता जानन्ति पितरं न कुलं न च मातरम् ।
न भ्रातॄन्न च भर्तारं न च पुत्रान्न देवरान् ॥ १००
लीलायन्त्यः कुलं घ्नन्ति कूलानीव सरिद्वराः ।
दोषान्सर्वांश्च मत्वाऽऽशु प्रजापतिरभाषत ॥१०१
भीष्म उवाच ।
ततः स ऋषिरेकाग्रस्तां स्त्रियं प्रत्यभाषत ।
आस्यतां रुचितश्छन्दः किंच कार्यं ब्रवीहि मे १०२
सा स्त्री प्रोवाच भगवन्द्रक्ष्यसे देशकालतः ।
वस तावन्महाभाग कृतकृत्यो भविष्यसि ॥१०३
ब्रह्मर्षिस्तामथोवाच स तथेति युधिष्ठिर ।
वत्स्येऽहं यावदुत्साहो भवत्या नात्र संशयः॥१०४
अथर्षिरभिसंप्रेक्ष्य स्त्रियं तां जरयाऽर्दिताम् ।
चिन्तां परमिकां भेजे संतप्त इव चाभवत् ॥१०५
यद्यदङ्गं हि सोऽपश्यत्तस्या विप्रर्षभस्तदा ।
नारमत्तत्रतत्रास्य दृष्टी रूपविरागिता ॥ १०६
देवतेयं गृहस्यास्य शापात्किंनु विरूपिता ।
अस्याश्च कारणं वेत्तुं न युक्तं सहसा मया ॥ १०७
इति चिन्ताविषक्तस्य तमर्थं ज्ञातुमिच्छतः ।
व्यगमद्रात्रिशेषः स मनसा व्याकुलेन तु ॥ १०८
अथ सा स्त्री तथोवाच भगवन्पश्य वै रवेः ।
रूपं सन्ध्याभ्रसंरक्तं किमुपस्थाप्यतां तव ॥१०९
स उवाच ततस्तां स्त्रीं स्नानोदकमिहानय ।
उपासिष्ये ततः सन्ध्यां वाग्यतो नियतेन्द्रियः ॥

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि पञ्चाशोऽध्यायः ॥ ५० ॥

## एकपञ्चाशोऽध्यायः ॥ ५१ ॥

उत्तरदिगभिमानिदेवतया परदारत्वशङ्कया स्वभोगमनङ्गीकुर्वाणमष्टावक्रंप्रति जरतीरूपत्यागेन कन्यारूपस्वीकरणपूर्वकं स्वपाणिग्रहणप्रार्थना ॥ १ ॥

भीष्म उवाच ।
अथ सा स्त्री तमुवाच विप्रमेवं भवत्विति ।
तैलं दिव्यमुपादाय स्नानशाटीमुपानयत् ॥ १
अनुज्ञाता च मुनिना सा स्त्री तेन महात्मना ।
अथास्य तैलेनाङ्गानि सर्वाण्येवाभ्यमृक्षत ॥ २
शनैश्चाच्छादितस्तत्र स्नानशालामुपागमत् ।
भद्रासनं ततश्चित्रमृषिरन्वगमन्नवम् ॥ ३
अथोपविष्टश्च यदा तस्मिन्भद्रासने तदा ।
स्नापयामास शनकैस्तमृषिं सुखहस्तवत् ।
दिव्यं च विधिवच्चक्रे सोपचारं मुनेस्तदा ॥ ४

---

अनभिज्ञोऽप्रीतिमान् ॥ ९६ ॥ लीलायन्त्य लीला रतिमात्मन इच्छन्त्यः । दोषांश्च मन्दान्मन्दासु प्रजापतिरभाषत इति ध. पाठः ॥ १०१ ॥ एकाग्रः स्त्रीदोषाननुसंदधानः स्त्रियंप्रति आस्यता तूष्णीं स्थीयताम् । रुचित रुचिं प्राप्य छन्दः इच्छा भवतीति अभाषत । त्व रुचिज्ञा मामिच्छसि अहं त्वरुचिज्ञो न त्वा स्प्रष्टुमिच्छामीति भावः । एवमपि यत्कार्यं कर्तव्यं तव तन्मे ब्रवीहि ॥ १०२ ॥ द्रक्ष्यसे स्पर्शसुख ज्ञायसे ॥ १०३ ॥ रूपे विरागिता वैराग्यवती दृष्टिर्नारमत् न रेमे ॥ १०६ ॥ व्यगच्छत्तदहःशेष इति झ. पाठः ॥ १०८ ॥ पञ्चाशोऽध्याय ॥ ५० ॥

अभ्यमृक्षत अभ्यञ्जितवती ॥ २ ॥ शनैश्चोत्सादित इति ड. झ. पाठः । तत्र उत्सादितः चालितः ॥ ३ ॥

जलन सुसुखोष्णेन तस्या हस्तसुखेन च।
व्यतीतां रजनीं कृत्स्नां नाजानात्स महाव्रतः॥५
तत उत्थाय स मुनिस्तदा परमविस्मितः।
पूर्वस्यां दिशि सूर्यं च सोऽपश्यदुदितं दिवि ॥६
'सन्ध्योपासनमित्येव सर्वपापहरं न मे।'
तस्य बुद्धिरियं किंतु मोहस्तत्त्वमिदं भवेत् ॥ ७
अथोपास्य सहस्रांशुं किं करोमीत्युवाच ताम्।
सा चामृतरसप्रख्यं ऋषेरन्नमुपाहरत् ॥ ८
तस्य स्वादुतयाऽन्नस्य न प्रभूतं चकार सः।
व्यगमच्चाप्यहःशेषं ततः सन्ध्याऽऽगमत्पुनः ॥९
अथ सा स्त्री भगवन्तं सुप्यतामित्यचोदयत्।
तत्र वै शयने दिव्ये तस्य तस्याश्च कल्पिते ॥१०
[पृथक्चैव तथा सुप्तौ सा स्त्री स च मुनिस्तदा।
तथाऽर्धरात्रे सा स्त्री तु शयनं तदुपागमत् ॥]११
अष्टावक्र उवाच।
न भद्रे परदारेषु मनो मे संप्रसज्जति।
उत्तिष्ठ भद्रे भद्रं ते स्वापं वै विरमस्व च ॥ १२
भीष्म उवाच।
सा तदा तेन विप्रेण तथा धृत्वा निवर्तिता।
स्वतन्त्राऽस्मीत्युवाचर्षिं न धर्मच्छलमस्ति ते ॥१३
अष्टावक्र उवाच।
नास्ति स्वतन्त्रता स्त्रीणामस्वतन्त्रा हि योषितः।
प्रजापतिमतं ह्येतन्न स्त्री स्वातन्त्र्यमर्हति ॥ १४
स्त्र्युवाच।
बाधते मैथुनं विप्र मम भक्तिं च पश्य वै।
अधर्मं प्राप्स्यसे विप्र यन्मां त्वं नाभिनन्दसि १५

अष्टावक्र उवाच।
हरन्ति दोषजातानि नरमिन्द्रियकिंकरम्।
प्रभवामि सदा धृत्या भद्रे स्वशयनं व्रज ॥ १६
स्त्र्युवाच।
शिरसा प्रणमे विप्र प्रसादं कर्तुमर्हसि।
भूमौ निपतमानायाः शरणं भव मेऽनघ ॥ १७
यदि वा दोषजातं त्वं परदारेषु पश्यसि।
आत्मानं स्पर्शयाम्यद्य पाणिं गृह्णीष्व मे द्विज ॥
न दोषो भविता चैव सत्येनैतद्ब्रवीम्यहम्।
स्वतन्त्रां मां विजानीहि यो धर्मः सोऽस्तु वै मयि।
त्वय्यावेशितचित्ता च स्वतन्त्राऽस्मि भजस्व माम्॥
अष्टावक्र उवाच।
स्वतन्त्रा त्वं कथं भद्रे ब्रूहि कारणमत्र वै।
नास्ति त्रिलोके स्त्री काचिद्या वै स्वातन्त्र्यमर्हति२०
पिता रक्षति कौमारे भर्ता रक्षति यौवने।
पुत्रस्तु स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति।
'न वृद्धामक्षतां मन्ये न चेच्छा त्वयि मेऽनघे२१'
स्त्र्युवाच।
कौमारं ब्रह्मचर्यं मे कन्यैवास्मि न संशयः।
पत्नीं कुरुष्व मां विप्र श्रद्धां विजहि मा मम २२
अष्टावक्र उवाच।
यथा मम तथा तुभ्यं यथा तुभ्यं तथा मम।
जिज्ञासेयमृषेस्तस्य विघ्नः सत्यं नु किं भवेत् २३
आश्चर्यं परमं हीदं किंतु श्रेयो हि मे भवेत्।
दिव्याभरणवस्त्रा हि कन्येयं मामुपस्थिता ॥ २४
किं त्वस्याः परमं रूपं जीर्णमासीत्कथं पुनः।
कन्यारूपमिहाद्यैवं किमिवात्रोत्तरं भवेत् ॥ २५

---

नाजानात् न ज्ञातवान् ॥५॥ न प्रभूत चकार पूर्णमिति नाभ्य-वहृदित्यर्थः ॥९॥ स्वप वै विरमस्व चेति झ. पाठः ॥ १२ ॥ स्वातन्त्र्यान्मम। न तव पारदार्यदोषोऽस्तीत्यर्थ.। धर्मच्छल परपुरुषप्रलोभनम्। नाधर्मफलमस्ति ते इति ध. पाठः ॥ १३ ॥ नास्तीति अप्रदत्ता त्वां न कामये इत्यर्थः ॥ १४ ॥ स्पर्शयामि ददामि ॥ १८ ॥ स्वतन्त्रामात्मप्रदाने इति शेषः। यो धर्मः पाणिग्रहणादिसंस्कारो मयि मन्निमित्त सोस्तु ॥ १९ ॥

मा मा नाशय ॥ २२ ॥ तुभ्य तव। सगमश्रद्धेत्युभयत्र शेष.। किं तस्य मया कन्यार्थिना प्रार्थितस्य तत्कन्यका इयं जिज्ञासा मम परीक्षा किमय साधुरसाधुर्वेति ॥ २३ ॥ विघ्नत्वमेवाह आश्चर्यमिति। पूर्वमतिजीर्णत्वेन दृष्टा पुनः कन्येव दृश्यत इति मायारूपमाश्चर्यम् ॥ २४ ॥ अत्रास्मिन्विषये किमुत्तरं श्रेष्ठतरम्। पूर्वपरिगृहीतस्यात्यागः उत एतस्याः स्वीकारः कर्तव्य इति भावः ॥ २५ ॥

यथा मे परमा शक्तिर्न व्युत्थाने कथंचन । न रोचते हि व्युत्थानं सत्येनासादयाम्यहम् ॥२६

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि एकपञ्चाशोऽध्यायः ॥ ५१ ॥

## द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

उत्तरदिगभिमानिदेवतया स्वीयप्रार्थनायाः स्त्रीचापलप्रदर्शनाद्यर्थकत्वकथनपूर्वकमष्टावक्रस्य धर्मोपदेशेन स्वगृहंप्रति प्रेषणम् ॥ १ ॥ अष्टावक्रेण वदान्यकन्यापाणिग्रहणेन स्वाश्रमे सुखनिवासः ॥ २ ॥

युधिष्ठिर उवाच ।
न बिभेति कथं सा स्त्री शापाच्च परमद्युतेः ।
कथं निवृत्तो भगवांस्तद्भवान्प्रब्रवीतु मे ॥ १
भीष्म उवाच ।
अष्टावक्रोऽन्वपृच्छत्तां रूपं विकुरुषे कथम् ।
न चानृतं ते वक्तव्यं ब्रूहि ब्राह्मणकाम्यया
स्त्र्युवाच ।
द्यावापृथिव्योर्यत्रैषा काम्या ब्राह्मणसत्तम ।
शृणुष्वावहितः सर्वं यदिदं सत्यविक्रम ॥
जिज्ञासेयं प्रयुक्ता मे स्थैर्यं कर्तुं तवानघ ।
अव्युत्थानेन ते लोका जिताः सत्यपराक्रम ॥४
उत्तरां मां दिशं विद्धि दृष्टं स्त्रीचापलं च ते ।
स्थविराणामपि स्त्रीणां बाधते मैथुनज्वरः ॥ ५
'अविश्वासो न व्यसनी नातिसक्तोऽप्रवासकः ।
विद्वान्सुशीलः पुरुषः सदारः सुखमश्नुते ॥' ६
तुष्टः पितामहस्तेऽद्य तथा देवाः सवासवाः ॥ ७
स त्वं येन च कार्येण संप्राप्तो भगवानिह ।
प्रेषितस्तेन विप्रेण कन्यापित्रा द्विजर्षभ ॥ ८
प्रेषितश्चोपदेशाय तच्च सर्वं श्रुतं त्वया ॥ ९
'नितान्तं स्त्री भोगपरा प्रियवादाप्रवासनात् ।
रक्ष्यते चाकुचेलाद्यैरप्रसङ्गानुवर्तनैः ॥ १०
अपर्वस्वनिषिद्धासु रात्रिष्वप्यनृतौ व्रजेत् ।
रात्रौ च नातिनियमो न वै ह्यनियमो भवेत् ॥' ११
क्षेमैर्गमिष्यसि गृहं श्रमश्च न भविष्यति ।
कन्यां प्राप्स्यसि तां विप्र पुत्रिणी च भविष्यति १२
काम्यया पृष्टवांस्त्वं मां ततो व्याहृतमुत्तरम्
अनतिक्रमणीया सा कृत्स्नैर्लोकैस्त्रिभिः सदा ॥१३
गच्छस्व कृतकृत्यस्त्वं किं वाऽन्यच्छ्रोतुमिच्छसि ।
यावद्ब्रवीमि विप्रर्षे अष्टावक्र यथातथम् ॥ १४
ऋषिणा प्रसादिता चास्मि तव हेतोर्द्विजर्षभ ।
तस्य संमाननार्थं मे त्वयि वाक्यं प्रभाषितम् ॥१५
भीष्म उवाच ।
श्रुत्वा तु वचनं तस्याः स विप्रः प्राञ्जलिः स्थितः ।
अनुज्ञातस्तया चापि स्वगृहं पुनराव्रजत् ॥ १६
गृहमागत्य विश्रान्तः स्वजनं परिपृच्छ्य च
अभ्यगच्छच्च तं विप्रं न्यायतः कुरुनन्दन ॥ १७
पृष्टश्च तेन विप्रेण दृष्टं त्वेतन्निदर्शनम् ।
प्राह विप्रं तदा विप्रः सुप्रीतेनान्तरात्मना ॥१८
भवताऽहमनुज्ञातः प्रस्थितो गन्धमादनम् ।
तस्य चोत्तरतो देशे दृष्टं मे दैवतं महत् ॥ १९
तया चाहमनुज्ञातो भवांश्चापि प्रकीर्तितः ।
श्रावितश्चापि तद्वाक्यं गृहं चाभ्यागतः प्रभो ॥२०
तमुवाच तदा विप्रः सुतां प्रतिगृहाण मे ।
नक्षत्रतिथिसंयोगे पात्रं हि परमं भवान् ॥ २१
भीष्म उवाच ।
अष्टावक्रस्तथेत्युक्त्वा प्रतिगृह्य च तां प्रभो ।
कन्यां परमधर्मात्मा प्रीतिमांश्चाभवत्तदा ॥ २२

---

न व्युत्थास्येऽस्याः स्वीकारं न करिष्ये । व्युत्थान धर्मातिक्रमो मम न रोचते किंतु सत्येनासादयाम्यहं दारानिति शेष । धृत्येना साधयाम्यहमिति ध. पाठः ॥ २६ ॥ एकपञ्चाशो-ऽध्यायः ॥ ५१ ॥

विकुरुषेऽन्यथान्यथा करोषि । ब्राह्मणकाम्यया ब्राह्मणमान-लिप्सया ॥ २ ॥ द्यावापृथिव्यो. दिवि पृथिव्या च यत्र स्थीयते तत्र एषा काम्या स्त्रीपुंसयोः अन्योन्याभिलाषरूपा इच्छास्तीत्यर्थ. ॥ ३ ॥ मे मया ॥ ४ ॥ तत्कार्यं ज्ञापयामीति शेषः ॥ ८ ॥ सा काम्याऽनतिक्रमणीया ॥ १३ ॥ ऋषिणा वदान्येन ॥ १५ ॥ द्विपञ्चाशोऽध्याय. ॥ ५२ ॥

कन्यां तां प्रतिगृह्यैव भार्यां परमशोभनाम् । उवास मुदितस्तत्र स्वाश्रमे विगतज्वरः ॥ २३

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

## त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

भीष्मेण युधिष्ठिरंप्रति ऋष्यादीनां वियोनिजत्वेपि तपोविद्यादीनामेव माहात्म्यप्रयोजकत्वे निदर्शनतया तादृशानां संभवप्रकारादिकथनम् ॥ १ ॥

उवाच ।
वैश्ययोन्यां समुत्पन्नाः शूद्रयोन्यां तथैव च ।
ब्रह्मर्षय इति प्रोक्ताः पुराणा द्विजसत्तमाः ॥ १
कथमेतन्महाराज तत्त्वं शंसितुमर्हसि ।
विरुद्धमिह पश्यामि वियोनौ ब्राह्मणो भवेत् ॥२
भीष्म उवाच ।
अलं कौतूहलेनात्र निबोध त्वं युधिष्ठिर ।
शुभेतरं शुभं वाऽपि न चिन्तयितुमर्हसि ॥ ३
ईशन्त्यात्मन इत्येते गतिश्चैषां न सज्जते ।
ब्रह्मभूयांस इत्येव ऋषयः श्रुतिचोदिताः ॥ ४
निन्द्या न चैते राजेन्द्र प्रमाणं हि प्रमाणिनाम् ।
लोकोऽनुमन्यते चैतान्प्रमाणं ह्यत्र वै तपः ॥ ५
एवं महात्मभिस्तात तपोज्ञानसमन्वितैः ।
प्रवर्तितानि कार्याणि प्रमाणान्येव सत्तम ॥ ६
भार्याश्चतस्रो राजेन्द्र ब्राह्मणस्य स्वधर्मतः ।
ब्राह्मणी क्षत्रिया वैश्या शूद्रा च भरतर्षभ ॥ ७
राज्ञां तु क्षत्रिया वैश्या शूद्रा च भरतर्षभ ।
वैश्यस्य वैश्या विहिता शूद्रा च भरतर्षभ ॥ ८
शूद्रस्यैका स्मृता भार्या प्रतिलोमे तु संकरः ।
शूद्रायास्तु नरश्रेष्ठ चत्वारः पतयः स्मृताः ॥ ९
वर्णोत्तमायास्तु पतिः सवर्णस्त्वेक एव सः ।
द्वौ क्षत्रियाया विहितौ ब्राह्मणः क्षत्रियस्तथा १०
वैश्यायास्तु नरश्रेष्ठ विहिताः पतयस्त्रयः ।
सवर्णः क्षत्रियश्चैव ब्राह्मणश्च विशांपते ॥ ११
एवंविधिमनुस्मृत्य ततस्ते ऋषिभिः पुरा ।
उत्पादिता महात्मानः पुत्रा ब्रह्मर्षयः पुरा ॥ १२
पुराणाभ्यामृषिभ्यां तु मित्रेण वरुणेन च ।
वसिष्ठोऽथ तथाऽगस्त्यो बर्हिषद्युस्तथैव च ॥१३
कक्षीवानार्ष्टिषेणश्च पुरुषः कप एव च ।
मामतेयस्य वै पुत्रा गौतमश्चात्मजाः स्मृताः १४
वत्सप्रियश्च भगवान्स्थूलरश्मिस्तथाक्षणिः ।
गौतमस्यैव तनया ये दास्यां जनिता ह्युत ॥ १५
कपिञ्जलादो ब्रह्मर्षिश्चाण्डाल्यामुदपद्यत ।
वैनतेयस्तथा पक्षी तुर्यायां च वसिष्ठतः ॥ १६
प्रसादाच्च वसिष्ठस्य शुक्राभ्युपगमेन च ।
अदृश्यन्त्याः पिता वैश्यो नाम्ना चित्रमुखः पुरा ।
ब्राह्मणत्वमनुप्राप्तो ब्रह्मर्षित्वं च कौरव ॥ १७
वैश्यश्चित्रमुखः कन्यां वसिष्ठतनयस्य वै ।
शुभां प्रादाद्यतो जातो ब्रह्मर्षिस्तु पराशरः ॥ १८
तथैव दाशकन्यायां सत्यवत्यां महानृषिः ।
पराशरात्प्रसूतश्च व्यासो योगमयो मुनिः ॥ १९
विभण्डकस्य मृग्यां च तपोयोगात्मको मुनिः ।
ऋश्यशृङ्गः समुत्पन्नो ब्रह्मचारी महायशाः ॥ २०
शार्ङ्ग्यां च मन्दपालस्य चत्वारो ब्रह्मवादिनः ।
जाता ब्रह्मर्षयः पुण्या यैः स्तुतो हव्यवाहनः ॥२१
द्रोणश्च स्तम्बमित्रश्च सारिसृक्कश्च बुद्धिमान् ।
जरितारिश्च विख्यातश्चत्वारः सूर्यसन्निभाः ॥ २२
महर्षेः कालवृक्षस्य शकुन्त्यामेव जज्ञिवान् ।
हिरण्यहस्तो भगवान्महर्षिः काञ्चनप्रभः ॥ २३
पावकात्तात संभूता मनसा च महर्षयः ।
पितामहस्य राजेन्द्र पुलस्त्यपुलहादयः ॥ २४
सावर्ण्यश्चापि राजर्षिः सवर्णायामजायत ।
मृण्मय्यां भरतश्रेष्ठ आदित्येन विवस्वता ॥ २५
शाण्डिल्यश्चाग्नितो जातः कश्यपस्याग्रजः प्रभुः ।

* एतदादिसप्ताध्याया दाक्षिणात्यकोशेष्वेव दृश्यन्ते ।

शरद्वतः शरस्तम्बात्कृपश्च कृपया सह ॥ २६
गृत्साच्च जज्ञे राजेन्द्र सोमपस्य महात्मनः ।
रेणुश्च रेणुका चैव राममाता यशस्विनी ॥ २७
यमुनायाः समुद्भूतः सोमकेन महात्मना ।
अर्कदन्तो महानृषिः प्रथितः पृथिवीतले ॥ २८
अग्नेराहवनीयाच्च द्रुपदस्येन्द्रवर्चसः ।
धृष्टद्युम्नश्च संभूतो वेद्यां कृष्णा च भारत ॥ २९
व्याघ्रयोन्यां ततो जाता वसिष्ठस्य महात्मनः ।
एकोनविंशतिः पुत्राः ख्याता व्याघ्रपदादयः ३०
मन्थश्च वादलोमश्च जाबालिश्च महानृषिः ।
मन्युश्चैवोपमन्युश्च सेतुकर्णस्तथैव च ।
एते चान्ये च विख्याताः पृथिव्यां गोत्रतां गताः॥
विश्वकाशस्य राजर्षेरैक्ष्वाकोस्तु महात्मनः ।
बालाश्वो नाम पुत्रोऽभूच्छिखां भित्त्वा विनिस्सृतः
मान्धाता चैव राजर्षिर्युवनाश्वेन धीमता ।
स्वयं धृतोऽथ गर्भेण दिव्यास्त्रबलसंयुतः ॥ ३३
गौरिकश्चापि राजर्षिश्चक्रवर्ती महायशाः ।
बाहुदायां समुत्पन्नो नद्यां राज्ञा सुबाहुना ॥ ३४
भूमेश्च पुत्रो नरकः संवर्तश्चैव पुष्कलः ।
अद्भिश्चैव महातेजा ऋषिर्गार्ग्योऽभ्यजायत ॥३५
एते चान्ये च बहवो राजन्या ब्राह्मणास्तथा ।
प्रभावेनाभिसंभूता महर्षीणां महात्मनाम् ।
नासाध्यं तपसा तेषां विद्यया ऽऽत्मगुणैः परैः॥३६
अस्मिन्नर्थे च मनुना गीतः श्लोको नराधिप ।
धर्मं प्रणयता राजंस्तं निबोध युधिष्ठिर ॥ ३७
ऋषीणां च नदीनां च साधूनां च महात्मनाम् ।
प्रभवो नाधिगन्तव्यः स्त्रीणां दुश्चरितस्य न ॥ ३८
तन्नात्र चिन्ता कर्तव्या महर्षीणां समुद्भवे ।
यथा सर्वगतो ह्यग्निस्तथा तेजो महात्मसु ॥' ३९

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

## चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

भीष्मेण युधिष्ठिरंप्रति युगचतुष्टयधर्मादिप्रतिपादकनारदमार्कण्डेयसंवादानुवादः ॥ १ ॥

'युधिष्ठिर उवाच ।
पुत्रैः कथं महाराज पुरुषस्तारितो भवेत् ।
यावन्न लब्धवान्पुत्रमफलः पुरुषो नृप ॥ १
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
नारदेन पुरा गीतं मार्कण्डेयाय पृच्छते ॥ २
पर्वतं नारदं चैव असितं देवलं च तम् ।
आरुणेयं च रैभ्यं च एतानत्रागतान्पुरा ॥ ३
गङ्गायमुनयोर्मध्ये भोगवत्याः समागमे ।
दृष्ट्वा पूर्वं समासीनान्मार्कण्डेयोऽभ्यगच्छत ॥ ४
ऋषयस्तु मुनिं दृष्ट्वा समुत्थायोन्मुखाः स्थिताः ।
अर्चयित्वाऽर्हतो विप्रं किं कुर्म इति चाब्रुवन् ॥५
मार्कण्डेय उवाच
अयं समागमः सद्भिर्यत्नेनासादितो मया ।
अत्र प्राप्स्यामि धर्माणामाचारस्य च निश्चयम् ॥६
ऋजुः कृतयुगे धर्मस्तस्मिन्क्षीणे विमुह्यति ।
युगेयुगे महर्षिभ्यो धर्ममिच्छामि वेदितुम् ॥ ७
ऋषिभिर्नारदः प्रोक्तो ब्रूहि यत्रास्य संशयः ।
धर्माधर्मेषु तत्त्वज्ञ त्वं हि छेत्ता हि संशयान् ॥८
ऋषिभ्योऽनुमतं वाक्यं नियोगान्नारदस्तदा ।
सर्वधर्मार्थतत्त्वज्ञं मार्कण्डेयं ततोऽब्रवीत् ॥ ९
दीर्घायो तपसा दीप्त वेदवेदाङ्गतत्त्ववित् ।
यत्र ते संशयो ब्रह्मन्समुत्पन्नः स उच्यताम् ॥१०
धर्मं लोकोपकारं वा यच्चान्यच्छ्रोतुमिच्छसि ।
तदहं कथयिष्यामि ब्रूहि त्वं सुमहातपाः ॥ ११
मार्कण्डेय उवाच ।
युगेयुगे व्यतीतेऽस्मिन्धर्मसेतुः प्रणश्यति ।
कथं धर्मच्छलेनाहं प्राप्नुयामिति मे मतिः ॥ १२
नारद उवाच ।
आसीद्धर्मः पुरा विप्र चतुष्पादः कृते युगे ।

ततो ह्यधर्मः कालेन प्रसूतः किंचिदूनतः ॥ १३
ततस्त्रेतायुगं नाम प्रवृत्तं धर्मदूषणम् ॥ १४
तस्मिन्नतीते संप्राप्ते तृतीयं द्वापरं युगम् ।
तदा धर्मस्य द्वौ पादावधर्मो नाशयिष्यति ॥१५
द्वापरे तु परिक्षीणे नन्दिके समुपस्थिते ।
लोकवृत्तं च धर्मं च उच्यमानं निबोध मे ॥१६
चतुर्थं नन्दिकं नाम धर्मः पादावशेषितः ।
ततः प्रभृति जायन्ते क्षीणप्रज्ञायुषो नराः ।
क्षीणप्राणधना लोके धर्माचारबहिष्कृताः ॥ १७
मार्कण्डेय उवाच ।
एवं विलुलिते धर्मे लोके चाधर्मसंयुते ।
चातुर्वर्ण्यस्य नियतं हव्यं कव्यं नियच्छति ॥१८
नारद उवाच ।
मन्त्रपूतं सदा हव्यं कव्यं चैव न नश्यति ।
प्रतिगृह्णन्ति तद्देवा दातुर्न्यायात्प्रयच्छतः ॥ १९
सत्वयुक्तं च दाता च सर्वान्कामानवाप्नुयात् ।
अवाप्तकामः स्वर्गे च महीयेत यथेप्सितम् ॥२०
मार्कण्डेय उवाच ।
चत्वारो ह्यथ ये वर्णा हव्यं कव्यं प्रदास्यति ।
मन्त्रहीनमपन्यायं तेषां दत्तं क गच्छति ॥ २१
नारद उवाच ।
असुरान्गच्छते दत्तं विप्रै रक्षांसि क्षत्रियैः ।
वैश्यैः प्रेतानि वै दत्तं शूद्रैर्भूतानि गच्छति ॥२२
मार्कण्डेय उवाच ।
अथ वर्णावरे जाताश्चातुर्वर्ण्योपदेशिनः ।
दास्यन्ति हव्यकव्यानि तेषां दत्तं क गच्छति२३
नारद उवाच ।
वर्णावराणां भूतानां हव्यकव्यप्रदातॄणाम् ।
नैव देवा न पितरः प्रतिगृह्णन्ति तत्स्वयम् ॥२४
यातुधानाः पिशाचाश्च भूता ये चापि नैर्ऋताः ।
तेषां सा विहिता वृत्तिः पितृदैवतनिर्गताः ॥२५
तेषां सर्वप्रदातॄणां हव्यकव्यं समाहिताः ।
यत्प्रयच्छन्ति विधिवत्तद्वै भुञ्जन्ति देवताः ॥२६

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

## पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

भीष्मेण युधिष्ठिरंप्रति कन्यानां प्रदानकालादिप्रतिपादकनारदमार्कण्डेयसंवादानुवादः ॥ १ ॥

'मार्कण्डेय उवाच ।
श्रुतं वर्णावरैर्दत्तं हव्यं कव्यं च नारद ।
संप्रयोगे च पुत्राणां कन्यानां च ब्रवीहि मे ॥१
नारद उवाच ।
कन्याप्रदानं पुत्राणां स्त्रीणां संयोगमेव च ।
आनुपूर्व्यान्मया सम्यगुच्यमानं निबोध मे ॥२
जातमात्रा तु दातव्या कन्यका सदृशे वरे ।
काले दत्तासु कन्यासु पिता धर्मेण युज्यते ॥ ३
यस्तु पुष्पवतीं कन्यां बान्धवो न प्रयच्छति ।
मासिमासि गते बन्धुस्तस्या भ्रौणघ्न्यमाप्नुते ॥ ४
यस्तु कन्यां गृहे रुन्ध्याद्ग्राम्यैर्भोगैर्विवर्जिताम् ।
अपध्यातः स कन्याया बन्धुः प्राप्नोति भ्रूणहाम् ५
दूषिता पाणिमात्रेण मृते भर्तरि दारिका ।
संस्कारं लभते नारी द्वितीये सा पुनः पतौ ॥ ६
पुनर्भूर्नाम सा कन्या सपुत्रा हव्यकव्यदा ।
अदूष्या सा प्रसूतीषु प्रजानां दारकर्मणि ॥ ७
मार्कण्डेय उवाच ।
या तु कन्या प्रसूयेत गर्भिणी या तु वा भवेत् ।
कथं दारक्रियां भूयः सा भवेदृषिसत्तम ॥
नारद उवाच ।
तत्वार्थनिश्चितं शब्दं कन्यका नयतेऽग्रये ।
तस्मात्कुर्वन्ति वै भावं कुमार्यस्ता न कन्यकाः ९

नन्दिक इति कलियुगे प्रवर्तमानधर्मैकपादस्य नाम ॥ १६ ॥

चतुष्पञ्चाशोऽध्यायः ॥ ५४ ॥

ब्रह्महत्यात्रिभागेन गर्भाधानविशोधितः ।
गृह्णीयात्तां चतुर्भागविशुद्धां सर्जनात्पुनः ॥ १०
मार्कण्डेय उवाच ।
कथं कन्यासु ये जाता बन्धूनां दूषिताः सदा ।
कस्य ते हव्यकव्यानि प्रदास्यन्ति महामुने॥ ११
नारद उवाच ।
कन्यायास्तु पितुः पुत्राः कानीना हव्यकव्यदाः ।
अन्तर्वत्न्यास्तु यः पाणिं गृह्णीयात्स सहोढजः॥१२
मार्कण्डेय उवाच ।
अथ येनाहितो गर्भः कन्यायां तत्र नारद ।
कथं पुत्रफलं तस्य भवेदेतत्प्रचक्ष्व मे ॥ १३
नारद उवाच ।
धर्माचारेषु ते नित्यं दूषकाः कृतशोधनाः ।
बीजं च नश्यते तेषां मोघचेष्टा भवन्ति ते ॥ १४
मार्कण्डेय उवाच ।
अथ क्वचिद्भवेत्कन्या क्रीता दत्ता हृताऽपि वा ।
कथं पुत्रकृतं तस्यास्तद्भवेदृषिसत्तम ॥ १५
नारद उवाच ।
क्रीता दत्ता हृता चैव या कन्या पाणिवर्जिता ।
कौमारी नाम सा भार्या प्रसवेदौरसान्सुतान् ।
न पत्न्यर्थे शुभा प्रोक्ता तत्कर्मण्यपराजिते ॥ १६
मार्कण्डेय उवाच
केन मङ्गलकृत्येषु विनियुज्यन्ति कन्यकाः ।
एतदिच्छामि विज्ञातुं तत्वेनेह महामुने ॥ १७
नारद उवाच ।
नित्यं निवसते लक्ष्मीः कन्यकासु प्रतिष्ठिता ।
शोभना शुभयोग्या च पूज्या मङ्गलकर्मसु ॥१८
आकरस्थं यथा रत्नं सर्वकामफलोपगम् ।
तथा कन्या महालक्ष्मीः सर्वलोकस्य मङ्गलम्॥१९
एवं कन्या परा लक्ष्मी रतिस्तोषश्च देहिनाम् ।
महाकुलानां चारित्रवृत्तेनं निकषोपलम् ॥ २०
आनयित्वा स्वकाद्वर्णात्कन्यकां यो भजेन्नरः ।
दातारं हव्यकव्यानां पुत्रकं या प्रसूयति ॥ २१
साध्वी कुलं वर्धयति साध्वी पुष्टिर्गृहे परा ।
साध्वी लक्ष्मी रतिः साक्षात्प्रतिष्ठा संततिस्तथा २२

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

## षट्पञ्चाशोऽध्यायः ॥ ५६ ॥

भीष्मेण युधिष्ठिरंप्रति स्त्रीणां भार्यात्वेन परिग्रहयोग्यताप्रतिपादकनारदमार्कण्डेयसंवादानुवादः ॥ १ ॥

मार्कण्डेय उवाच ।
श्रुतं बहुविधं वृत्तं कन्यकानां महामते ।
इच्छामि योषितां श्रोतुं धर्माधर्मौ परिग्रहे ॥ १
नारद उवाच ।
अष्टौ भार्यागमा धर्म्या नराणां दारकर्मणि ।
प्रेत्येह च हिता यास्तु सत्पुत्रा हव्यकव्यदाः ॥ २
साध्वी पाणिगृहीता या कौमारी पाणिवर्जिता ।
भ्रातृभार्या स्वभार्येति प्रसूयेत्पुत्रमौरसम् ॥ ३
मार्कण्डेय उवाच ।
त्रयो भार्यागमा ज्ञेया यत्र धर्मो न नश्यति ।
पञ्चान्याः पश्चिमा ब्रूहि भार्यास्तासां च ये सुताः ४
नारद उवाच ।
सगोत्रभार्या क्रीता च परभार्या च कारिता ।
गतागता च या भार्या आश्रमादाहृता च या॥५
एता भार्यागमाः पञ्च पुनर्भार्या भवन्ति याः ।
एता भार्या नृणां गम्यास्तत्पुत्रा हव्यकव्यदाः॥६

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि षट्पञ्चाशोऽध्यायः ॥ ५६ ॥

चतुर्भागविशुद्धात्सजनात्पुनरिति ध. पाठः ॥ १० ॥

## सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

भीष्मेण युधिष्ठिरंप्रति सतीनामसतीनां गुणदोषप्रतिपादकनारदमार्कण्डेयसंवादानुवादः ॥ १ ॥

मार्कण्डेय उवाच ।
श्रुता भार्याश्च पुत्राश्च विस्तरेण महामुने ।
आश्रमस्थाः कथं नार्यो न दुष्यन्तीति ब्रूहि भो ॥१
नारद उवाच ।
आश्रमस्थासु नारीषु बान्धवत्वं प्रणश्यति ।
नष्टवंश्या भवन्त्येता बन्धूनामथ भर्तृणाम् ॥ २
परदारा मुक्तदोषास्ता नार्योऽऽश्रमसंस्थिताः ।
स्वयमीशाः स्वदेहानां काम्यास्तद्गतमानसाः ॥३
एवं नार्यो न दुष्यन्ति नराणां तत्प्रसूतिषु ।
धर्मपत्न्यो भवन्त्येताः सपुत्रा हव्यकव्यदाः ॥४
मार्कण्डेय उवाच ।
परस्य भार्या या पूर्वं मृते भर्तरि या पुनः ।
अन्यं भजति भर्तारं ससुता असुता कथम् ॥ ५
नारद उवाच ।
असुता वा प्रसूता वा गृहस्थानां परस्त्रियः ।
परामृष्टेति ता वर्ज्या धर्माचारेषु दूषिताः ॥ ६
न चासां हव्यकव्यानि प्रतिगृह्णन्ति देवताः ।
यस्तासु जनयेत्पुत्रान्न तैः पुत्रमवाप्नुयात् ॥ ७
मार्कण्डेय उवाच ।
परक्षेत्रेषु यो बीजं चापलाद्विसृजेन्नरः ।
कथं पुत्रफलं तस्य भवेत्तदृषिसत्तम ॥ ८
नारद उवाच ।
अस्वामिके परक्षेत्रे यो नरो बीजमुत्सृजेत् ।
स्वयंवृतोऽऽश्रमस्थायां तद्बीजं न विनश्यति ॥ ९
परक्षेत्रेषु यो बीजं नरो दर्पात्समुत्सृजेत् ।
क्षेत्रिकस्यैव तद्बीजं न बीजी लभते फलम् ॥ १०
नातः परमधर्म्यं चाप्ययशस्यं तथोत्तरम् ।
गर्भादीनां च बहुभिस्ताश्च त्याज्याः समेष्वपि ११
मार्कण्डेय उवाच ।
अथ ये परदारेषु पुत्रा जायन्ति नारद ।
कस्य ते बन्धुदायादा भवन्ति परमद्युते ॥ १२
नारद उवाच ।
परदारेषु जायेते द्वौ पुत्रौ कुण्डगोलकौ ।
जीवत्यथ पतौ कुण्डो मृते भर्तरि गोलकः ॥१३
ते च जाताः परक्षेत्रे देहिनां प्रेत्य चेह च ।
दत्तानि हव्यकव्यानि नाशयन्त्यथ दातृणाम्१४
पितुर्हि नरकायैते गोलकस्तु विशेषतः ।
चण्डालतुल्यौ तज्ज्ञौ हि परत्रेह च नश्यतः॥ १५
मार्कण्डेय उवाच ।
कस्य ते गर्हिताः पुत्राः पितॄणां हव्यकव्यदाः ।
यस्य क्षेत्रे प्रसूयन्ते यो वा ताञ्जनयेत्सुतान् १६
नारद उवाच ।
क्षेत्रिकश्चैव बीजी च द्वावेतौ निरयं गतौ ।
न रक्षति च यो दारान्परदारांश्च गच्छति ॥ १७
गर्हितास्ते नरा नित्यं धर्माचारबहिष्कृताः ।
कुण्डो भोक्ता च भोगी च कुत्सिताः पितृदैवतैः ॥
मार्कण्डेय उवाच ।
तथैते गर्हिताः पुत्रा हव्यकव्यानि नारद ।
कस्य नित्यं प्रयच्छन्ति धर्मो वा तेषु किं फलं १९
नारद उवाच ।
यातुधानाः पिशाचाश्च प्रतिगृह्णन्ति तैर्हुतम् ।
हव्यं कव्यं च तैर्दत्तं ये च भूता निशाचराः ॥२०
मार्कण्डेय उवाच ।
अथ ते राक्षसाः प्रीताः किं प्रयच्छन्ति दातृणाम् ।
किं वा धर्मफलं तेषां भवेत्तदृषिसत्तम ॥ २१
नारद उवाच ।
न दत्तं नश्यते किंचित्सर्वभूतेषु दातृणाम् ।
प्रेत्य चेह च तां पुष्टिमुपाश्नन्ति प्रदायिनः ॥२२
मार्कण्डेय उवाच ।
अथ गोलककुण्डाभ्यां संततिर्या भविष्यति ।
तयोर्ये बान्धवाः केचित्प्रदास्यन्ति कथं नु तं २३
नारद उवाच ।
साध्वीजाताः सुतास्तेषां तां वृत्तिमनुतिष्ठताम् ।
प्रीणन्ति पितृदैवत्यं हव्यकव्यसमाहिताः ॥ २४

परम मुक्तदोषास्ता या नार्योऽऽश्रमसंस्थिता इति ध. पाठः

॥ ३ ॥ सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

एवं गोलककुण्डाभ्यां ये च वर्णापदेशिनः । हव्यं कव्यं च शुद्धानां प्रतिगृह्णन्ति देवताः ॥ २५

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

## अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

भीष्मेण युधिष्ठिरंप्रति स्त्रीणामतिक्रमे प्रायश्चित्तादिप्रतिपादकनारदमार्कण्डेयसंवादानुवादः ॥ १ ॥

मार्कण्डेय उवाच ।
श्रुतं नराणां चापल्यं परस्त्रीषु प्रजायताम्
प्रमदानां तु चापल्ये दोषमिच्छामि वेदितुम् ॥ १
नारद उवाच ।
एकवर्णे विदोषं तु गमनं पूर्वकालिकम् ।
धाता च समनुज्ञातो विष्णुना तत्तथाऽकरोत् ॥ २
भगलिङ्गे महाप्राज्ञ पूर्वमेव प्रजापतिः ।
ससर्ज ताभ्यां संयोगमनुज्ञातश्चकार सः ॥ ३
अथ विष्णुप्रसादेन भगो दत्तवरः किल ।
तेन चैव प्रसादेन सर्वाल्लोकानुपाश्नुते ॥ ४
तस्मात्तु पुरुषे दोषो ह्यधिको नात्र संशयः ।
विना गर्भे सवर्णेषु न त्याज्या गमनात्स्त्रियः ॥ ५
प्रायश्चित्तं यथान्याय्यं दण्डं कुर्यात्स पण्डितः ।
श्वभिर्वा दंशनं स्नानं सवनत्रितयं निशि ॥ ६
भूमौ च भस्मशयनं दानं भोगविवर्जितम् ।
दोषगौरवतः कालो द्रव्यगौरवमेव च ।
मर्यादा स्थापिता पूर्वमिति तीर्थान्तरं गते ॥ ७
तद्योषितां तु दीर्घायो नास्ति दोषो व्यतिक्रमे ।
भगतीर्थान्तरे शुद्धो विष्णोस्तु वचनादिह ॥ ८
रक्ष्याश्चैवान्यसंवादैरन्यगेहाद्विचक्षणैः ।
आसां शुद्धौ विशेषेण कर्मणां फलमश्नुते ॥ ९
नैता वाच्या न वै वध्या न क्लेश्याः शुभमिच्छता ।
विष्णुप्रसादादित्येव भगस्तीर्थान्तरं गतः ।
मासिमासि ऋतुस्तासां दुष्कृतान्यपकर्षति ॥ १०
स्त्रियस्तोषकरा नृणां स्त्रियः पुष्टिप्रदाः सदा ।
पुत्रसेतुप्रतिष्ठाश्च स्त्रियो लोके महाद्युते ॥ ११

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

## एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

भीष्मेण युधिष्ठिरंप्रति स्त्रीणामपरित्यागपरित्यागप्रयोजकगुणदोषादिप्रतिपादकनारदमार्कण्डेयसंवादानुवादः ॥ १ ॥

मार्कण्डेय उवाच ।
श्रुतं बलं प्रभावश्च योषितां मुनिसत्तम ।
एकस्य बहुभार्यस्य धर्ममिच्छामि वेदितुम् ॥ १
नारद उवाच ।
बहुभार्यासु सक्तस्य नारीभोगेषु गेहिनः ।
ऋतौ विमुञ्चमानस्य सांनिध्ये भ्रूणहा स्मृतः ॥ २
वृद्धां वन्ध्यां सुव्रतां च मृतापत्यामपुष्पिणीम् ।
कन्यां च बहुपुत्रां च वर्जयन्मुच्यते भयात् ॥ ३
व्याधितो बन्धनस्थो वा प्रवासेष्वथ पर्वसु ।
ऋतुकाले तु नारीणां भ्रूणहत्यां प्रमुञ्चति ॥ ४
मार्कण्डेय उवाच ।
वैश्यनारीषु वै जाताः परप्रेष्यासु वा सुताः ।
कस्य ते बन्धुदायादा भवन्ति हि महामुने ॥ ५
नारद उवाच ।
पण्यस्त्रीषु प्रसूता ये यस्य स्त्री तस्य ते सुताः ।
क्रयाच्च कृत्रिमाः पुत्राः प्रदानाच्चैव दत्रिमाः ॥ ६
मार्कण्डेय उवाच ।
पण्यनारीष्वनियतः पुंसोऽर्थो वर्तते ध्रुवम् ।
अत्र चाहितगर्भायाः कस्य पुत्रं वदन्ति तम् ॥ ७
नारद उवाच ।
तीर्थभूतासु नारीषु ज्ञायते योऽभिगच्छति ।
ऋतौ तस्य भवेद्गर्भो यं वा नारी न शङ्कते ॥ ८
मार्कण्डेय उवाच
नराणां त्यजतां भार्यां कामक्रोधाद्गुणान्विताम् ।

अप्रसूतां प्रसूतां वा तेषां पृच्छामि निष्कृतिम् ॥९
नारद उवाच ।
अपापां त्यजमानस्य साध्वीं मन्वा यमादितः ।
आत्मवंशस्वधर्मो वा त्यजतो निष्कृतिर्न तु॥१०
यो नरस्त्यजते भार्यां पुष्पिणीमप्रसूतिकाम् ।
स नष्टवंशः पितृभिर्युक्तस्त्यज्येत दैवतैः ॥ ११
भार्यामपत्यसंजातां प्रसूतां पुत्रपौत्रिणीम् ।
पुत्रदारपरित्यागी न स प्राप्नोति निष्कृतिम्॥१२
एवं हि भार्यां त्यजतां नराणां नास्ति निष्कृतिः।
नार्हन्ति प्रमदास्त्यक्तुं पुत्रपौत्रप्रतिष्ठिताः ॥ १३
मार्कण्डेय उवाच ।
कीदृशीं संत्यजन्भार्यां नरो दोषैर्न लिप्यते ।
एतदिच्छामि तत्त्वेन विज्ञातुमृषिसत्तम ॥ १४
नारद उवाच ।
मोक्षधर्मस्थितानां तु अन्योन्यमनुजानताम् ।
भार्यापतीनां मुक्तानामधर्मो न विधीयते ॥ १५
अन्यसङ्गां गतापत्यां शूद्रगां परगामिनीम् ।
परीक्ष्य त्यजमानानां नराणां नास्ति पातकम्१६
पातकेऽपि तु भर्तव्यौ द्वौ तु माता पिता तथा॥
मार्कण्डेय उवाच ।
भार्यायां व्यभिचारिण्यां नरस्य त्यजतो रुषा ।
कथं धर्मोऽप्यधर्मो वा भवतीह महामते ॥ १८
नारद उवाच ।
अनृतेऽपि हि सत्ये वा यो नारीं दूषितां त्यजेत्
अरक्षमाणः स्वां भार्यां नरो भवति भ्रूणहा ॥१९
अपत्यहेतोर्या नारी भर्तारमतिलङ्घयेत् ।
लोलेन्द्रियेति सा रक्ष्या न सन्त्याज्या कथंचन२०

नद्यश्च नार्यश्च समस्वभावा
नैताः प्रमुञ्चन्ति नरावगाढाः ।
स्रोतांसि नद्यो वहते निपातं
नारी रजोभिः पुनरेति शौचम् ॥ २१

एवं नार्यो न दुष्यन्ति व्यभिचारेऽपि भर्तृणाम् ।
मासिमासि भवेद्रागस्ततः शुद्धा भवन्त्युत ॥२२
मार्कण्डेय उवाच ।
कानि तीर्थानि भगवन्नृणां देहाश्रितानि वै ।
तानि वै शंस भगवन्याथातथ्येन पृच्छतः ॥ २३
सर्वतीर्थेषु सर्वज्ञ किं तीर्थं परमं नृणाम् ।
यत्रोपस्पृश्य पूतो यो नरो भवति नित्यशः ॥२४
नारद उवाच ।
देवर्षिपितृतीर्थानि ब्राह्मं मध्येऽथ वैष्णवम् ।
नृणां तीर्थानि पञ्चाहुः पाणौ संनिहितानि वै॥२५
आद्यतीर्थं तु तीर्थानां वैष्णवो भाग उच्यते ।
यत्रोपस्पृश्य वर्णानां चतुर्णां वर्धते कुलम् ।
पितृदैवतकार्याणि वर्धन्ते प्रेत्य चेह च ॥ २६
मार्कण्डेय उवाच ।
नराणां कामवृत्तानां या नार्यो निरवग्रहाः ।
यासामभिग्रहो नास्ति ता मे कथय नारद ॥ २७
नारद उवाच ।
पांशुवेश्या नटी गोपी तान्तुकी तुन्नवायिकी ।
नारी किराती शबरी नर्तकी चानवग्रहा ॥ २८
मार्कण्डेय उवाच ।
एतासु जाता नारीषु सर्ववर्णेषु ये सुताः ।
केषु के बन्धुदायादा भवन्ति ऋषिसत्तम ॥ २९
नारद उवाच ।
य एताः परिगृह्णन्ति तेषामेव हि ते सुताः ।
सर्वत्र तु प्रवृत्तासु बीजं नश्यति देहिनाम् ॥ ३०
मार्कण्डेय उवाच ।
सर्वस्त्रीषु प्रवृत्ताश्च साधुवेदविवर्जिताः
मानवाः काण्डपृष्ठाश्च वेदमन्त्रबहिष्कृताः ।
नियुक्ता हव्यकव्येषु तेषां दत्तं कथं भवेत् ॥ ३१
नारद उवाच ।
नार्हन्ति हव्यकव्यानि सावित्रीवर्जिता द्विजाः ।
व्रात्येष्वन्नप्रदानं तैर्यथा शूद्रेषु वै तथा ॥ ३२
मार्कण्डेय उवाच ।
धर्मेष्वधिकृतानां तु नराणां मुह्यते मनः ।
कथं नु विप्रो भवति एतदिच्छामि वेदितुम्॥३३

---

एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

यं नाम प्रदानं तदिति क. पाठः॥ ३२ ॥

नारद उवाच ।

'अर्थाश्च नार्यश्च समानमेत-
च्छ्रेयांसि पुंसामिह मोहयन्ति
रतिप्रमोदात्प्रमदा हरन्ति
भोगैर्धनं चाप्युपहन्ति धर्मान् ॥ ३४

हव्यं कव्यं च धर्मात्मा सर्वं तच्छ्रोत्रियोऽर्हति ।
दत्तं हि श्रोत्रिये साधौ ज्वलिताग्नाविवाहुतिः॥३५

मार्कण्डेय उवाच ।

श्रोत्रियाणां कुले जाता वेदार्थविदितात्मनाम् ।
हित्वा कस्मात्त्रयीं विद्यां वार्तां वृत्तिमुपाश्रिताः ३६

नारद उवाच ।

चातुर्वर्ण्यं पुरा न्यस्तं सुविद्वत्सु द्विजातिषु ।
तस्माद्वर्णैः संविभज्या वृत्तिः सङ्करवर्जिता ॥ ३७
ये चान्ये श्रोत्रिया जाताः संस्कृताः पुत्रगृध्नुभिः ।
पूर्वनिर्वाणनिर्वृत्तां जातां वृत्तिमुपाश्रिताः ॥ ३८

मार्कण्डेय उवाच

असंस्कृताः श्रोत्रियजाः संस्कृता ज्ञानिजाः कथम्

नारद उवाच ।

असंस्कारो वैदिकश्च स मान्यः श्रोत्रियात्मजः
शुद्धान्वयः श्रोत्रियस्तु सुविद्वद्भिः समोऽन्यथा४०
अनधीयानपुत्राश्च वेदसंस्कारवर्जिताः ।
तस्मात्ते वेदविज्ञाऽपि विप्राः श्रुतिनिकारिणः॥४१
ब्रह्मराशौ पुरा सृष्टा वेदसंस्कारसंस्कृताः ।
तस्मात्तेष्वेव ते जाताः साधवः कुलधारिणः ॥४२

मार्कण्डेय उवाच ।

स्वयं क्रीतासु प्रेष्यासु प्रसूयन्ते तु ये नराः ।
कस्य नार्यः सुताश्चैव भवन्ति ऋषिसत्तम ॥ ४३

नारद उवाच

स्वदारायां यो नरो मोहात्प्रसूयेन्न स पापकृत् ।
इहाभिनिन्दितः प्रेत्य अपत्यं प्रेष्यतां नयेत् ॥४४
सा तस्य भार्या पुत्रा ये हव्यकव्यप्रदास्तु ते ।
तस्या ये बान्धवाः केचिद्विषक्ताः प्रेष्यतां गताः।
सर्वे तस्यास्तु संबन्धा मुच्यन्ते प्रेष्यकर्मसु ॥ ४५
एतत्ते कथितं सर्वं यदभिव्याहृतं त्वया
अथवा संशयः कश्चिद्भूयः संप्रष्टुमर्हसि ॥ ४६

मार्कण्डेय उवाच ।

अमिथ्यादर्शनाल्लोके नारदः सर्वकोविदः ।
प्रत्यक्षदर्शी लोकानां स्वयंभुरिव सत्तमः ॥ ४७

भीष्म उवाच ।

इति संभाष्य ऋषिभिर्मार्कण्डेयो महातपाः ।
नारदं चापि सत्कृत्य तेन चैवाभिसत्कृतः ।
आमन्त्रयित्वा ऋषिभिः प्रययावाश्रमं मुनिः॥४८
ऋषयश्चापि तीर्थानां परिचर्यां प्रचक्रमुः ॥ ४९
सुक्षेत्रबीजसंस्कारविशुद्धो ब्रह्मचर्यया ।
नित्यनैमित्तिकात्स्नातो मनश्शुद्ध्या च शुद्ध्यति ॥'

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि एकोनषष्ठितमोऽध्यायः ॥ ५९ ॥

## षष्टितमोऽध्यायः ॥ ६० ॥

भीष्मेण युधिष्ठिरं प्रति दाने पात्राणां लक्षणादिकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।

किमाहुर्भरतश्रेष्ठ पात्रं विप्राः सनातनम् ।
ब्राह्मणं लिङ्गिनं चैव ब्राह्मणं वाऽप्यलिङ्गिनम्॥१

भीष्म उवाच ।

स्ववृत्तिमभिपन्नाय लिङ्गिने चेतराय च ।
देयमाहुर्महाराज उभावेतौ तपस्विनौ ॥ २

युधिष्ठिर उवाच ।

श्रद्धया परयाऽपूतो यः प्रयच्छेद्द्विजातये ।
हव्यं कव्यं तथा दानं को दोषः स्यात्पितामह॥३

भीष्म उवाच ।

ब्राह्मण ब्रह्मविदम् । लिङ्गिन ब्रह्मचारिण सन्यासिन चै दण्डादिलिङ्गवन्तम् ॥ १ ॥ अपूतोपि परया श्रद्धया यदि प्रयच्छति तर्हि तस्य दातुरपूतत्वप्रयुक्तः को दोषः स्यात्तं वद ॥ ३ ॥

श्रद्धापूतो नरस्तात दुर्दान्तोऽपि न संशयः ।
पूतो भवति सर्वत्र किमुत त्वं महाद्युते ॥ ४
युधिष्ठिर उवाच ।
न ब्राह्मणं परीक्षेत दैवेषु सततं नरः ।
कव्यप्रदाने तु बुधाः परीक्ष्यं ब्राह्मणं विदुः ॥५
भीष्म उवाच ।
न ब्राह्मणः साधयते हव्यं दैवात्प्रसिद्ध्यति ।
देवप्रसादादिज्यन्ते यजमानैर्न संशयः ॥ ६
ब्राह्मणान्भरतश्रेष्ठ सततं ब्रह्मवादिनः ।
मार्कण्डेयः पुरा प्राह इति लोकेषु बुद्धिमान् ।
'ब्राह्मणाः पात्रभूताश्च शुद्धा नैवं पितृष्विह ॥ ७
युधिष्ठिर उवाच ।
अपूर्वोऽप्यथवा विद्वान्संबन्धी वा यथा भवेत् ।
तपस्वी यज्ञशीलो वा कथं पात्रं भवेत्तु सः ॥ ८
भीष्म उवाच ।
कुलीनः कर्मकृद्वैद्यस्तथैवाप्यनृशंस्यवान् ।
ह्रीमानृजुः सत्यवादी पात्रं पूर्वे च ये त्रयः ॥९
तत्रेमं शृणु मे पार्थ चतुर्णां तेजसां मतम् ।
पृथिव्याः काश्यपस्याग्नेर्मार्कण्डेयस्य चैव हि॥१०
पृथिव्युवाच ।
यथा महार्णवे क्षिप्तः क्षिप्रं नेष्टुर्विनश्यति ।
तथा दुश्चरितं सर्वं त्रयीनित्ये निमज्जति ॥ ११
काश्यप उवाच ।
सर्वे च वेदाः सह षड्भिरङ्गैः
साङ्ख्यं पुराणं च कुले च जन्म ।
नैतानि सर्वाणि गतिर्भवन्ति
शीलव्यपेतस्य नृप द्विजस्य ॥ १२
अग्निरुवाच ।
अधीयानः पण्डितंमन्यमानो
यो विद्यया हन्ति यशः परेषाम् ।
ब्रह्मन्स तेन लभते ब्रह्मवध्यां
लोकास्तस्य ह्यन्तवन्तो भवन्ति ॥ १३
मार्कण्डेय उवाच ।
अश्वमेधसहस्रं च सत्यं च तुलया धृतम् ।
नाभिजानामि यज्ञं तु सत्यस्यार्धमवाप्नुयात् ॥१४
भीष्म उवाच ।
इत्युक्त्वा ते जग्मुराशु चत्वारोऽमिततेजसः ।
पृथिवी काश्यपोऽग्निश्च प्रकृष्टायुश्च भार्गवः ॥१५
युधिष्ठिर उवाच ।
यदि ते ब्राह्मणा लोके व्रतिनो भुञ्जते हविः ।
दत्तं ब्राह्मणकामाय कथं तत्सुकृतं भवेत् ॥ १६
भीष्म उवाच ।
आदिष्टिनो ये राजेन्द्र ब्राह्मणा वेदपारगाः ।
भुञ्जते ब्रह्मकामाय व्रतलुप्ता भवन्ति ते ॥ १७
युधिष्ठिर उवाच ।
अनेकान्तं बहुद्वारं धर्ममाहुर्मनीषिणः ।
किं निमित्तं भवेदत्र तन्मे ब्रूहि पितामह ॥ १८
भीष्म उवाच ।
अहिंसा सत्यमक्रोध आनृशंस्यं दमस्तथा ।
आर्जवं चैव राजेन्द्र निश्चितं धर्मलक्षणम् ॥ १९
ये तु धर्मं प्रशंसन्तश्चरन्ति पृथिवीमिमाम् ।
अनाचरन्तस्तद्धर्मं संकरेऽभिरताः प्रभो ॥ २०
तेभ्यो हिरण्यं रत्नं वा गामश्वं वा ददाति यः ।
दशवर्षाणि विष्ठां स भुङ्क्ते निरयमास्थितः ॥ २१

---

श्रद्धैवास्य पूतत्वं करोतीत्यर्थः ॥ ४ ॥ श्रद्धैव पूतत्वकर्त्री चेत् कव्ये पात्रपरीक्षा न विधेया स्यादित्याशयः ॥ ५ ॥ हव्यं दैवं कर्म सिध्यति फलदं भवति नतु ब्राह्मणगुणादिति भावः । इज्यन्ते देवा इति शेषः । दैवं कर्म देवानुग्रहादेव पूर्णं भवति । श्रद्धामात्रप्रियत्वाद्देवानामिति भावः ॥ ६ ॥ पित्र्यं तु कर्म ब्राह्मणानुग्रहादेव पूर्णं भवतीति तत्रानुग्रहकर्तरि तपोबलमावश्यकमित्याशयेनाह ब्राह्मणानिति ॥ ७ ॥ त्रयः अपूर्वसंबन्धितपस्विनः कुलीनत्वादिगुणसप्तकयुक्ता एव पात्रत्वं भजन्ते परिशेषात् ॥ ९ ॥ तेजसां तेजस्विनां सर्वज्ञानामिति यावत् ॥ १० ॥ नेष्टुः पांसुपिण्डः लोष्टो विनश्यतीति ध. पाठः ॥ ११ ॥ भार्गवः मार्कण्डेयः ॥ १५ ॥ व्रतिनः ब्रह्मचारिण. । तदीयव्रतनाशात्स्वीयं श्राद्धं दुष्यति नवेति प्रश्नः ॥ १६ ॥ आदिष्टं द्वादशवर्षाणि ब्रह्मचर्यं चरेति गुर्वादेशस्तद्वन्तः । भोक्तुरेव व्रतं लुप्यते । नतु दाता प्रत्यवैति ॥ १७ ॥ अन्तो निष्ठा । अनेकान्तं अनेकफलाकारमित्यर्थः । पात्रगुणानामनन्तत्वात्के गुणा नियमेन पात्रताया निमित्तं तानेव संक्षेपेण ब्रूहीति प्रश्नार्थः ॥ १८ ॥

धनेन पुल्कसानां च तथैवान्तेवसायिनाम् ।
कृतं कर्माकृतं वाऽपि रागमोहेन जल्पताम् ॥२२
वैश्वदेवं च ये मूढा विप्राय ब्रह्मचारिणे ।
न ददन्तीह राजेन्द्र ते लोकान्भुञ्जतेऽशुभान् २३
युधिष्ठिर उवाच ।
किं परं ब्रह्मचर्यं च किं परं धर्मलक्षणम् ।
किंच श्रेष्ठतमं शौचं तन्मे ब्रूहि पितामह ॥ २४
भीष्म उवाच ।
ब्रह्मचर्यं परं तात मधुमांसस्य वर्जनम् ।
मर्यादायां स्थितो धर्मः शमः शौचस्य लक्षणम् २५
युधिष्ठिर उवाच ।
कस्मिन्काले चरेद्धर्मं कस्मिन्कालेऽर्थमाचरेत् ।
कस्मिन्काले सुखी च स्यात्तन्मे ब्रूहि पितामह ॥२६
भीष्म उवाच ।
काल्यमर्थं निषेवेत ततो धर्ममनन्तरम् ।
पश्चात्कामं निषेवेत न च गच्छेत्प्रसङ्गिताम् ॥२७
ब्राह्मणांश्चैव मन्येत गुरूंश्चाप्यभिपूजयेत् ।
सर्वभूतानुलोमश्च मृदुशीलः प्रियंवदः ॥ २८
अधिकारे यदनृतं यच्च राजसु पैशुनम् ।
गुरोश्चालीकनिर्बन्धः समानि ब्रह्महत्यया ॥ २९
प्रहरेन्न नरेन्द्रेषु न हन्याद्गां तथैव च ।
भ्रूणहत्यासमं चैतदुभयं यो निषेवते ॥ ३०
नाग्निं परित्यजेज्जातु न च वेदान्परित्यजेत् ।
न च ब्राह्मणमाक्रोशेत्समं तद्ब्रह्महत्यया ॥ ३१
युधिष्ठिर उवाच ।
कीदृशाः साधवो विप्राः केभ्यो दत्तं महाफलम् ।
कीदृशानां च भोक्तव्यं तन्मे ब्रूहि पितामह ॥ ३२
भीष्म उवाच ।
अक्रोधना धर्मपराः सत्यनित्या दमे रताः ।
तादृशाः साधवो विप्रास्तेभ्यो दत्तं महाफलम् ३३
अमानिनः सर्वसहा दृढार्था विजितेन्द्रियाः ।
सर्वभूतहिता मैत्रास्तेभ्यो दत्तं महाफलम् ॥ ३४
अलुब्धाः शुचयो वैद्या ह्रीमन्तः सत्यवादिनः ।
स्वकर्मनिरता ये च तेभ्यो दत्तं महाफलम् ॥३५
साङ्गांश्च चतुरो वेदानधीते यो द्विजर्षभः ।
षड्भ्यः प्रवृत्तः कर्मभ्यस्तं पात्रमृषयो विदुः ॥३६
ये त्वेवंगुणजातीयास्तेभ्यो दत्तं महाफलम् ।
सहस्रगुणमाप्नोति गुणार्हाय प्रदायकः ॥ ३७
प्रज्ञाश्रुताभ्यां वृत्तेन शीलेन च समन्वितः ।
तारयेत कुलं सर्वमेकोऽपीह द्विजर्षभः ।
'तृप्ते तृप्ताः सर्वदेवाः पितरो मुनयोपि च ॥' ३८
गामश्वं वित्तमन्नं वा तद्विधे प्रतिपादयेत् ।
द्रव्याणि चान्यानि तथा प्रेत्यभावे न शोचति ॥३९
तारयेत कुलं सर्वमेकोपि ह द्विजोत्तमः ।
किमङ्ग पुनरेवैते तस्मात्पात्रं समाचरेत् ॥ ४०
निशाम्य च गुणोपेतं ब्राह्मणं साधुसंमतम् ।
दूरादानाय्य सत्कृत्य सर्वतश्चापि पूजयेत् ॥ ४१

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि षष्टितमोऽध्यायः ॥ ६० ॥

## एकषष्टितमोऽध्यायः ॥ ६१ ॥

भीष्मेण युधिष्ठिरंप्रति श्राद्धे निमन्त्रणार्हानर्हब्राह्मणलक्षणादिकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
'श्राद्धकाले च दैवे च पित्र्येऽपि च पितामह ।'
इच्छामीह त्वयाऽऽख्यातं विहितं यत्सुरर्षिभिः ॥१
भीष्म उवाच

मेदीनां पुल्कसां चेति झ. पाठः । तत्र मेदादीना स विष्ठा भुङ्क्ते इति संबन्धः । मेदा गोमहिष्यादीनां मृतानां मांसमश्नन्तः । पुल्कसा ये ब्राह्मणादीनपि स्वभावादेव हिंसन्ति । अन्तेवसायिनश्चर्मकारादयः । कृतमकृत वा परकीयं पापि कर्म ॥ २२ ॥ परं श्रेष्ठम् ॥ २४ ॥ काल्य पूर्वाह्णे ॥ २७ ॥ न शोचति प्रतिपादयन् ॥ ३९ ॥ द्विजोत्तमः निर्दोषः । एते पूर्वोक्ता गुणाश्च तत्र यदि लभ्यन्ते तर्हि तारयेतेति किमु ॥ ४० ॥ षष्टितमोऽध्यायः ॥ ६० ॥
कालादौ विहितं विशेषमिति शेषः ॥ १ ॥

दैवं पौर्वाह्णिके कुर्यादपराह्णे तु पैतृकम् ।
मङ्गलाचारसंपन्नः कृतशौचः प्रयत्नवान् ॥ २
मनुष्याणां तु मध्याह्ने प्रदद्यादुपपत्तिभिः ।
कालहीनं तु यद्दानं तं भागं रक्षसां विदुः ॥ ३
लङ्घितं चावलीढं च कालपूर्वं च यत्कृतम् ।
रजस्वलाभिदृष्टं च तं भागं रक्षसां विदुः ॥ ४
अवघुष्टं च यद्भुक्तमव्रतेन च भारत ।
परामृष्टं शुना चैव तं भागं रक्षसां विदुः ॥ ५
केशकीटावपतितं क्षुतं श्वभिरवेक्षितम् ।
रुदितं चावधूतं च तं भागं रक्षसां विदुः ॥ ६
निरोङ्कारेण यद्भुक्तं सशस्त्रेण च भारत ।
दुरात्मना च यद्भुक्तं तं भागं रक्षसां विदुः ॥ ७
परोच्छिष्टं च यद्भुक्तं परिभुक्तं च यद्भवेत् ।
दैवे पित्र्ये च सततं तं भागं रक्षसां विदुः ॥ ८
मन्त्रहीनं क्रियाहीनं यच्छ्राद्धं परिविष्यते ।
त्रिभिर्वर्णैर्नरश्रेष्ठ तं भागं रक्षसां विदुः ॥ ९
आज्याहुतिं विना चैव यत्किंचित्परिविष्यते ।
दुराचारैश्च यद्भुक्तं तं भागं रक्षसां विदुः ॥ १०
ये भागा रक्षसां प्राप्तास्त उक्ता भरतर्षभ ।
अत ऊर्ध्वं विसर्गस्य परीक्षां ब्राह्मणे शृणु ॥ ११
यावन्तः पतिता विप्रा जडोन्मत्तास्तथैव च ।
दैवे वाऽप्यथ पित्र्ये वा राजन्नार्हन्ति केतनम् १२
श्वित्री क्लीबश्च कुष्ठी च तथा यक्ष्महतश्च यः ।
अपस्मारी च यश्चान्धो राजन्नार्हन्ति केतनम् १३
चिकित्सका देवलका वृथा नियमधारिणः ।
सोमविक्रयिणश्चैव श्राद्धे नार्हन्ति केतनम् ॥ १४
गायना नर्तकाश्चैव प्लवका वादकास्तथा ।
कथका योधकाश्चैव राजन्नार्हन्ति केतनम् ॥ १५
होतारो वृषलानां च वृषलाध्यापकास्तथा ।
तथा वृषलशिष्याश्च राजन्नार्हन्ति केतनम् ॥ १६
अनुयोक्ता च यो विप्रो अनुयुक्तश्च भारत ।
नार्हतस्तावपि श्राद्धं ब्रह्मविक्रयिणौ हि तौ ॥ १७
अग्रणीर्यः कृतः पूर्वं वर्णावरपरिग्रहः ।
ब्राह्मणः सर्वविद्योऽपि राजन्नार्हति केतनम् ॥ १८
अनग्नयश्च ये विप्रा मृतनिर्यातकाश्च ये ।
स्तेनाश्च पतिताश्चैव राजन्नार्हन्ति केतनम् ॥ १९
अपरिज्ञातपूर्वाश्च गणपूर्वाश्च भारत ।
पुत्रिकापूर्वपुत्राश्च श्राद्धे नार्हन्ति केतनम् ॥ २०
ऋणकर्ता च यो राजन्यश्च वार्धुषिको नरः ।
प्राणिविक्रयवृत्तिश्च राजन्नार्हन्ति केतनम् ॥ २१
स्त्रीपूर्वाः काण्डपृष्ठाश्च यावन्तो भरतर्षभ ।
अजपा ब्राह्मणाश्चैव श्राद्धे नार्हन्ति केतनम् २२
श्राद्धे दैवे च निर्दिष्टो ब्राह्मणो भरतर्षभ ।
दातुः प्रतिग्रहीतुश्च शृणुष्वानुग्रहं पुनः ॥ २३
चीर्णव्रता गुणैर्युक्ता भवेयुर्येऽपि कर्षकाः ।
सावित्रीज्ञाः क्रियावन्तस्ते राजन्केतनक्षमाः ॥ २४
क्षात्रधर्मिणमप्याजौ केतयेत्कुलजं द्विजम् ।
न त्वेव वणिजं तात श्राद्धे च परिकल्पयेत् ॥ २५
अग्निहोत्री च यो विप्रो ग्रामवासी च यो भवेत् ।
अस्तेनश्चातिथिज्ञश्च स राजन्केतनक्षमः ॥ २६
सावित्रीं जपते यस्तु त्रिकालं भरतर्षभ ।
भिक्षावृत्तिः क्रियावांश्च स राजन्केतनक्षमः ॥ २७

---

उपपत्तिभि. आदरादिभिर्युक्तः सन् ॥ ३ ॥ कलिपूर्वं चेति झ. पाठः ॥ ४ ॥ क्षुत क्षुतेन दूषितम् ॥ ६ ॥ निरोंकारेण अनभ्यनुज्ञातेन शूद्रेण वा ॥ ७ ॥ परिभुक्त देवातिथिपितृबालकादीन्वर्जयित्वा भुक्त स्वेनैव ॥८॥ आज्याहुतिं पात्राभिघारण विना ॥ १० ॥ विसर्गस्य ब्राह्मणे दानस्य पात्रभूते ॥ ११ ॥ पतिता· महापातकेन जातिबहिर्भूताः । केतन निमन्त्रणम् ॥ १२ ॥ श्वित्री श्वेतकुष्ठी । कुष्ठी मण्डलकुष्ठी । यक्ष्महतो महारोगी । अपस्मारी ग्रहग्रस्त. ॥ १३ ॥ देवलका देवार्चनवृत्तिजीविन. । वृथानियमधारिणो दम्भवन्तः ॥ १४ ॥ प्लवकाः क्रीडापराः । कथका वृथालापिनः । योधका मल्ला. ॥ १५ ॥ वृषलानां शूद्राणां होतारो याजकाः ॥ १६ ॥ अनुयोक्ता भृतकाध्यापक । अनुयुक्तो भृतकाध्येता ॥ १७ ॥ वर्णावरपरिग्रहः शूद्रापतिः ॥ १८ ॥ गणपूर्वा ग्रामण्यः । पुत्रिकापूर्वपुत्राः । अस्यामुत्पन्नः पुत्रो मदीय इति नियमेन या दीयते तस्या च यो जातः स पुत्रिकापूर्वपुत्र. ॥ २० ॥ ऋणकर्ता वृद्ध्यर्थं धनप्रयोक्ता ॥ २१ ॥ स्त्रीपूर्वाः स्त्रीजिताः स्त्रीपण्योपजीविनो वा । काण्डपृष्ठो वेश्यापतिः । अजपाः सन्ध्यावन्दनहीनाः ॥ २२ ॥ अनुग्रह निषिद्धानामपि केनचिद्गुणेनाभ्यनुज्ञानम् ॥ २३ ॥ वणिजं वणिग्वृत्तिम् ॥ २५ ॥

उदितास्तमितो यश्च तथैवास्तमितोदितः ।
अहिंस्रश्चाल्पदोषश्च स राजन्केतनक्षमः ॥ २८
अकल्कको ह्यतर्कश्च ब्राह्मणो भरतर्षभ ।
संसर्गे भैक्ष्यवृत्तिश्च स राजन्केतनक्षमः ॥ २९
अव्रती कितवः स्तेनः प्राणिविक्रयिको वणिक् ।
सनिष्कृतिः पुनः सोमं पीतवान्केतनक्षमः ॥३०
अर्जयित्वा धनं पूर्वं दारुणैरपि कर्मभिः ।
भवेत्सर्वा ः पश्चात्स राजन्केतनक्षमः ॥ ३१
ब्रह्मविक्रयनिर्दिष्टं स्त्रिया यच्चार्जितं धनम् ।
अदेयं पितृविप्रेभ्यो यच्च क्लैब्यादुपार्जितम् ॥३२
क्रियमाणेऽपवर्गे च यो द्विजो भरतर्षभ ।
न व्याहरति यद्युक्तं तस्याधर्मो गवानृतम् ॥ ३३
श्राद्धस्य ब्राह्मणः कालः प्राप्तं दधि घृतं तथा ।
सोमक्षयश्च मांसं च यदारण्यं युधिष्ठिर ॥ ३४
'मुहूर्तानां त्रयं पूर्वमह्नः प्रातरिति स्मृतम् ।
जपध्यानादिभिस्तस्मिन्विप्रैः कार्यं शुभव्रतम् ३५
संगवाख्यं त्रिभागं तु मध्याह्नस्त्रिमुहूर्तकः ।
लौकिकं संगवेऽर्थं च स्नानादि ह्यथ मध्यमे ॥३६
चतुर्थमपराह्णं तु त्रिमुहूर्तं तु पित्र्यकम् ।
सायाह्नस्त्रिमुहूर्तं च मध्यमं कविभिः स्मृतम् ॥ ३७
चतुर्थे त्वपराह्णाख्ये श्राद्धं कुर्यात्सदा नृप ॥३८
प्रागुदीचीमुखा विप्राः विश्वेदेवे च दक्षिणाः ।
प्रावितेषु सुतृप्तेषु पिण्डं दद्यात्सदक्षिणम् ॥' ३९
श्राद्धापवर्गे विप्रस्य दातारो.वोस्त्वितीरयेत् ।
क्षत्रियस्यापि यो ब्रूयात्प्रीयन्तां पितरस्त्विति ॥४०
अपवर्गे तु वैश्यस्य श्राद्धकर्मणि भारत ।
अक्षय्यमभिधातव्यं स्वस्ति शूद्रस्य भारत ॥ ४१
पुण्याहवाचनं दैवं ब्राह्मणस्य विधीयते ।
एतदेव निरोङ्कारं क्षत्रियस्य विधीयते ॥ ४२
वैश्यस्य दैवे वक्तव्यं प्रीयन्तां देवता इति ।
'गोहिंसायां चतुर्भागं पूर्वं विप्रातिकेतिनः ॥४३
वर्णावरेषु भुञ्जानं क्रमाच्छूद्रे चतुर्गुणम् ।
नान्यत्र ब्राह्मणो ब्रूयात्पूर्वं विप्रेण केतितः ॥४४
अभोजने च दोषः स्याद्वर्जयेच्छूद्रकेतनम् ।
शूद्रान्नरसपुष्टाङ्गो द्विजो नोर्ध्वां गतिं लभेत् ॥४५
अशुचिर्नैव चाश्नीयान्नास्तिको मानवर्जितः ।
न पूर्वं लङ्घयेल्लोभादेकवर्णोऽपि पार्थिव ॥ ४६
विप्राः स्मृता भूमिदेवा उपकुर्वाणवर्जिताः ।'
कर्मणामानुपूर्व्येण विधिपूर्वं कृतं शृणु ॥ ४७
जातकर्मादिकाः सर्वास्त्रिषु वर्णेषु भारत ।
ब्रह्मक्षत्रे हि मन्त्रोक्ता वैश्यस्य च युधिष्ठिर ॥ ४८
विप्रस्य रशना मौञ्जी मौर्वी राजन्यगामिनी ।
बाल्बजी ह्येव वैश्यस्य धर्म एष युधिष्ठिर ॥ ४९
'पालाशो द्विजदण्डः स्यादश्वत्थः क्षत्रियस्य तु ।
औदुम्बरश्च वैश्यस्य धर्म एष युधिष्ठिर ॥' ५०
दातुः प्रतिग्रहीतुश्च धर्माधर्माविमौ शृणु ।
ब्राह्मणस्यानृतेऽधर्मः प्रोक्तः पातकसंज्ञितः ।
चतुर्गुणः क्षत्रियस्य वैश्यस्याष्टगुणः स्मृतः ॥५१
नान्यत्र ब्राह्मणोऽश्नीयात्पूर्वं विप्रेण केतितः ।
[यवीयान्पशुहिंसायां तुल्यधर्मा भवेत्स हि ॥५२
तथा राजन्यवैश्याभ्यां यद्यश्नीयात्तु केतितः ।
यवीयान्पशुहिंसायां भागार्धं समवाप्नुयात् ॥ ५३

---

उदित आढ्य. । अस्तमितो दरिद्र. पूर्वं आढ्यः सद्यो दरिद्रः ॥ २८ ॥ अकल्ककोऽदाम्भिक अपापो वा । अतर्कोऽहैतुकः संसर्गे सगत्यर्हे गृहे ज्ञाते भैक्ष्यवृत्ति ॥ २९ ॥ कितवो धूर्त ॥ ३० ॥ सर्वं देवतादिक अतिथिरेव यस्य स सर्वातिथि. ॥ ३१ ॥ ब्रह्म वेदः । क्लैब्यात् दीनभाषणेन मिथ्याशपथादिना वा ॥ ३२ ॥ अपवर्गे श्राद्धसमाप्तौ युक्त अस्तुस्वधेत्यादिवचन गवानृत अनृतगोशपथस्य पापम् ॥ ३३ ॥ सोमक्षयो दर्शः । आरण्य मृगादिमासं च यदा प्राप्त तदैव श्राद्धस्य-कालः ॥ ३४ ॥ स्वधा वै मुदिता भवेदिति झ. पाठः । स्वधोच्यतामिति प्रदात्रा उक्ते अस्तुस्वधेति ब्राह्मणो वदेत् । एवमुत्तरत्र मुदिता प्रीतिकरी पितॄणामित्यर्थात् ॥ ४० ॥ पुण्याह भवन्तो ब्रुवन्त्विति यजमानेन प्रोक्ते ओ पुण्याहमस्त्विति ब्राह्मणा ब्रूयुः । दैव सोंकारम् ॥ ४२ ॥ दैवे ओंकारस्थाने प्रीयन्तां देवता. पुण्याहमस्त्विति प्रतिवदेदित्यर्थ. ॥ ४३ ॥ रशना मेखला । मौञ्जी मुञ्जमयी । मौर्वी धनुर्ज्या । बाल्बजी बल्बजस्तृणविशेषस्तन्मयी ॥ ४९ ॥ धर्मो दातुः । अधर्म. प्रतिग्रहीतुः ॥ ५१ ॥ ब्राह्मणेन केतितः सन् यदि यवीयान् भवेत्तर्हि वृथा पशुहिंसायाः पूर्ण पाप प्राप्नुयात् । क्षत्रियादिना केतितः सन् यदि यवीयान्स्यात्तर्हि वृथापशुहिंसाया अर्ध पाप प्राप्नुयादिति श्लोकद्वयार्थः ॥ ५३ ॥

दैवं वाऽप्यथवा पित्र्यं योऽश्नीयाद्ब्राह्मणादिषु ।]
अस्नातो ब्राह्मणो राजंस्तस्याधर्मोऽनृतं स्मृतम् ५४
आशौचो ब्राह्मणो राजन्योऽश्नीयाद्ब्राह्मणादिषु ।
ज्ञानपूर्वमथो लोभात्तस्याधर्मो गवानृतम् ॥ ५५
अर्थेनान्येन यो लिप्सेत्कर्मार्थं चैव भारत ।
आमन्त्रयति राजेन्द्र तस्याधर्मोऽनृतं स्मृतम् ॥५६
अवेदव्रतचारित्रास्त्रिभिर्वर्णैर्युधिष्ठिर ।
मन्त्रवत्परिविष्यन्ते तस्याधर्मो गवानृतम् ॥ ५७

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि एकषष्टितमोऽध्यायः ॥ ६१ ॥

## द्विषष्टितमोऽध्यायः ॥ ६२ ॥

भीष्मेण युधिष्ठिरंप्रति दानादिषु पात्रलक्षणानां स्वर्गनरकप्रापकपुण्यपापाना च प्रतिपादनम् ॥१ ॥

युधिष्ठिर उवाच ।
पित्र्यं वाऽप्यथवा दैवं दीयते यत्पितामह ।
एतदिच्छाम्यहं ज्ञातुं दत्तं केषु महाफलम् ॥ १
भीष्म उवाच ।
येषां दाराः प्रतीक्षन्ते सुवृष्टिमिव कर्षकाः ।
उच्छेषपरिशेषं हि तान्भोजय युधिष्ठिर ॥ २
चारित्रनिरता राजन्ये कृशाः कृशवृत्तयः ।
अर्थिनश्चोपगच्छन्ति तेषु दत्तं महाफलम् ॥ ३
तद्भक्तास्तद्गृहा राजंस्तद्बलास्तदपाश्रयाः ।
अर्थिनश्च भवन्त्यर्थे तेषु दत्तं महाफलम् ॥ ४
तस्करेभ्यः परेभ्यो वा हृतस्वा भयदुःखिताः ।
अर्थिनो भोक्तुमिच्छन्ति तेषु दत्तं महाफलम् ॥५
अकल्ककस्य विप्रस्य रौक्ष्यात्करकृतात्मनः ।
वटवो यस्य भिक्षन्ति तेभ्यो दत्तं महाफलम् ॥६
हृतस्वा हृतदाराश्च ये विप्रा देशसंप्लवे ।
अर्थार्थमभिगच्छन्ति तेभ्यो दत्तं महाफलम् ॥ ७
व्रतिनो नियमस्थाश्च ये विप्राः श्रुतसंमताः ।
तत्समाप्त्यर्थमिच्छन्ति तेभ्यो दत्तं महाफलम् ॥८
अत्युत्क्रान्ताश्च धर्मेषु पाषण्डसमयेषु च ।
कृशप्राणाः कृशधनास्तेभ्यो दत्तं महाफलम् ॥ ९
कृतसर्वस्वहरणा निर्दोषाः प्रभविष्णुभिः ।
स्पृहयन्ति च भुक्त्वाऽन्नं तेषु दत्तं महाफलम् ॥१०
तपस्विनस्तपोनिष्ठास्तेषां भैक्षचराश्च ये ।
अर्थिनः किंचिदिच्छन्ति तेषु दत्तं महाफलम् ॥११
महाफलविधिर्दाने श्रुतस्ते भरतर्षभ ।
निरयं येन गच्छन्ति स्वर्गं चैव हि तच्छृणु ॥ १२
'व्रतानां पारणार्थाय गुर्वर्थे यज्ञदक्षिणाम् ।
निवेशार्थं च विद्वांसस्तेषां दत्तं महाफलम् ॥ १३
पित्रोश्च रक्षणार्थाय पुत्रदारार्थमेव वा ।
महाव्याधिविमोक्षार्थं तेषु दत्तं महाफलम् ॥ १४
बालाः स्त्रियश्च वाञ्छन्ति सुभक्तं चाप्यसाधनाः ।
स्वर्गमायान्ति दत्त्वैषां निरयान्नोपयान्ति ते ॥' १५
गुर्वर्थमभयार्थं वा वर्जयित्वा युधिष्ठिर ।
येऽनृतं कथयन्ति स्म ते वै निरयगामिनः ॥ १६
परदाराभिहर्तारः परदाराभिमर्शिनः ।
परदारप्रयोक्तारस्ते वै निरयगामिनः ॥ १७

---

आशौचः जननमरणाशौचवान् ॥ ५५ ॥ अर्थेन प्रयोजनेन तीर्थयात्राव्यपदेशेन जीविकाद्यर्थी यो धन लिप्सेत् यो वा कर्मार्थं मे भिक्षा देहीत्यामन्त्रयति दातारमभिमुखीकरोति तस्यापि अनृत गवानृतमेव स्मृतम् ॥ ५६ ॥ वेदव्रत चारित्र च येषां नास्ति ते । येन मन्त्रवत् मन्त्रयुक्त यथा स्यात्तथा श्राद्धे परिविष्यन्ते तस्य ॥ ५७ ॥ एकषष्टितमोऽध्यायः ॥६१॥

भोजनपात्रेऽवशिष्टमुच्छेषः तेन सहित परिशेष स्थाल्यामवशिष्टं प्रतीक्षन्ते । येषा पाकपर्याप्तमेव धान्यादिकमस्ति न कुसूलादौ तान् भोजय ॥ २ ॥ तद्भक्ताः चारित्रमेव भक्तोऽन्न तद्धज्जीवनं येषा ते । तद्गृहाः तदेव गृहे कुयादौ येषा ते अर्थे प्रयोजने सत्येवार्थिनो भवन्ति न संग्रहार्थम् ॥ ४ ॥ रौक्ष्यात् दारिद्र्यात् । करे कृतः आत्मैवात्मा जीवनमन्नम् । हस्ते गृहीतान्नस्य वटवः क्षुधार्ताः मह्य देहि मह्य देहीति याचन्ते तेभ्योऽतिदरिद्रेभ्यः ॥ ६ ॥ पाषण्डाना समयो मर्यादा येषु धर्मेषु तत्र अत्युत्क्रान्ताः अत्यन्त ततो दूरे स्थिताः ॥ ९ ॥ भुक्त्वान्नमेव स्पृहयन्ति न स्वादु । अतएव न चतुर्थी ॥ १० ॥ अभयार्थं भयनिवृत्तिरूप प्रयोजनम् ॥ १६ ॥ अभिमर्शिनो जाराः । प्रयोक्तारः हर्त्रभिमर्शिनोर्दूताः ॥ १७ ॥

ये परस्वापहर्तारः परस्वानां च नाशकाः ।
सूचकाश्च परेषां ये ते वै निरयगामिनः ॥ १८
प्रपाणां च सभानां च संक्रमाणां च भारत ।
अगाराणां च भेत्तारो नरा निरयगामिनः ॥ १९
अनाथां प्रमदां बालां वृद्धां भीतां तपस्विनीम् ।
वञ्चयन्ति नरा ये च ते वै निरयगामिनः ॥ २०
वृत्तिच्छेदं गृहच्छेदं दारच्छेदं च भारत ।
मित्रच्छेदं तथाऽऽशायास्ते वै निरयगामिनः ॥२१
सूचकाः सेतुभेत्तारः परवृत्त्युपजीवकाः ।
अकृतज्ञांश्च मित्राणां ते वै निरयगामिनः ॥२२
पाषण्डा दूषकाश्चैव समयानां च दूषकाः ।
ये प्रत्यवसिताश्चैव ते वै निरयगामिनः ॥ २३
विषमव्यवहाराश्च विषमाश्चैव वृद्धिषु ।
लाभेषु विषमाश्चैव ते वै निरयगामिनः ॥ २४
द्यूतसंव्यवहाराश्च निष्परीक्षाश्च मानवाः ।
प्राणिहिंसाप्रवृत्ताश्च ते वै निरयगामिनः । २५
कृताशं कृतनिर्देशं कृतभक्तं कृतश्रमम् ।
भेदैर्ये व्यपकर्षन्ति ते वै निरयगामिनः ॥ २६
पर्यश्नन्ति च ये दारानग्निभृत्यातिथींस्तथा ।
उत्सन्नपितृदेवेज्यास्ते वै निरयगामिनः ॥ २७
वेदविक्रयिणश्चैव वेदानां चैव दूषकाः ।
वेदानां लेखकाश्चैव ते वै निरयगामिनः ॥ २८
चातुराश्रम्यबाह्याश्च श्रुतिबाह्याश्च ये नराः ।
विकर्मभिश्च जीवन्ति ते वै निरयगामिनः ॥२९
केशविक्रयिका राजन्विषविक्रयिकाश्च ये ।
क्षीरविक्रयिकाश्चैव ते वै निरयगामिनः ॥ ३०
ब्राह्मणानां गवां चैव कन्यानां च यु
येऽन्तरायान्ति कार्येषु ते वै निरयगामिनः॥ ३१
शस्त्रविक्रयिकाश्चैव कर्तारश्च युधिष्ठिर ।
शल्यानां धनुषां चैव ते वै निरयगामिनः ॥३२
शिलाभिः शङ्कुभिर्वाऽपि श्वभ्रैर्वा भरतर्षभ ।
ये मार्गमनुरुन्धन्ति ते वै निरयगामिनः ॥ ३३
उपाध्यायांश्च भृत्यांश्च भक्तांश्च भरतर्षभ ।
ये त्यजन्त्यविकारांस्त्रींस्ते वै निरयगामिनः ॥३४
अप्राप्तदमकाश्चैव नासानां वेधकाश्च ये ।
बन्धकाश्च पशूनां ये ते वै निरयगामिनः ॥ ३५
अगोप्तारश्च राजानो बलिषड्भागतस्कराः ।
समर्थाश्चाप्यदातारस्ते वै निरयगामिनः ॥ ३६
क्षान्तान्दान्तांस्तथा प्राज्ञान्दीर्घकालं सहोषितान् ।
त्यजन्ति कृतकृत्या ये ते वै निरयगामिनः ॥३७
बालानामथ वृद्धानां दासानां चैव ये नराः ।
अदत्त्वा भक्षयन्त्यग्रे ते वै निरयगामिनः ॥ ३८
एते पूर्वं विनिर्दिष्टाः प्रोक्ता निरयगामिनः ।
भागिनः स्वर्गलोकस्य वक्ष्यामि भरतर्षभ ॥ ३९
सर्वेष्वेव तु कार्येषु दैवपूर्वेषु भारत ।
हन्ति पुत्रान्पशून्कृत्स्नान्ब्राह्मणातिक्रमः कृतः ४०
दानेन तपसा चैव सत्येन च युधिष्ठिर ।
ये धर्ममनुवर्तन्ते ते नराः स्वर्गगामिनः ॥ ४१
शुश्रूषाभिस्तपोभिश्च विद्यामादाय भारत ।
ये प्रतिग्रहनिःस्नेहास्ते नराः स्वर्गगामिनः ॥ ४२
भयात्पापात्तथा बाधाद्दारिद्र्याद्व्याधिधर्षणात् ।
तत्कृते धनमीप्सन्ते ते नराः स्वर्गगामिनः ॥४३
क्षमावन्तश्च धीराश्च धर्मकार्येषु चोत्थिताः ।
मङ्गलाचारसंपन्नाः पुरुषाः स्वर्गगामिनः ॥ ४४
निवृत्ता मधुमांसेभ्यः परदारेभ्य एव च ।
निवृत्ताश्चैव मद्येभ्यस्ते नराः स्वर्गगामिनः ॥ ४५

---

परेषां दोषस्येति शेषः ॥१८॥ आशायाश्छेदमित्येकदेशानुषङ्गः । कुर्वन्तीति शेषः ॥ २१ ॥ सूचकाः राजगामिपैशुन्यवादिनः । सेतुः आर्यमर्यादा ॥ २२ ॥ पाषण्डाः वेदविरोधिनः शाक्यादयः दूषकाः सतां निन्दकाः । समयानां धर्मसंकेतानाम् । प्रत्यवसिताः आरूढपतिताः ॥ २३ ॥ कृताशं दारार्थिनं वा । कृतनिर्देशं निर्देशः तुभ्यमिदं दास्यामीति प्रतिज्ञा सा कृता यस्मै तम् । भक्तं वेतनम् । व्यपकर्षन्ति पत्युः सकाशाद्दूरीकुर्वन्ति ॥ २६ ॥ पर्यश्नन्ति । परित्यज्याश्नन्ति ॥ २७ ॥ विकर्मभिः स्वस्य निषिद्धैः कर्मभिः ॥ २९ ॥ केशाश्चामरकम्बलादयः ॥ ३० ॥ कर्तारः शस्त्रशल्यादीनाम् ॥ ३२ ॥ अप्राप्तानामदान्तानां पशूनाम् । अण्डमर्दनेन बलवीर्ययोर्नाशकाः अप्राप्तदमकाः ॥ ३५ ॥ ये ब्राह्मणातिक्रमं न कुर्वन्ति ते स्वर्गगामिन इत्यर्थः ॥ ४

आश्रमाणां च कर्तारः कुलानां चैव भारत ।
देशानां नगराणां च ते नराः स्वर्गगामिनः ॥४६
वस्त्राभरणदातारो भक्ष्यपानान्नदास्तथा ।
कुटुम्बानां च भर्तारः पुरुषाः स्वर्गगामिनः॥ ४७
सर्वहिंसानिवृत्ताश्च नराः सर्वसहाश्च ये ।
सर्वस्याश्रयभूताश्च ते नराः स्वर्गगामिनः ॥ ४८
मातरं पितरं चैव शुश्रूषन्ति जितेन्द्रियाः ।
भ्रातॄणां चैव सस्नेहास्ते नराः स्वर्गगामिनः ॥४९
आढ्याश्च बलवन्तश्च यौवनस्थाश्च भारत ।
ये वै जितेन्द्रिया धीरास्ते नराः स्वर्गगामिनः॥५०
अपराधिषु सस्नेहा मृदवो मृदुवत्सलाः ।
आराधनसुखाश्चापि पुरुषाः स्वर्गगामिनः ॥ ५१
सहस्रपरिवेष्टारस्तथैव च सहस्रदाः ।
त्रातारश्च सहस्राणां ते नराः स्वर्गगामिनः ॥ ५२
सुवर्णस्य च दातारो गवां च भरतर्षभ ।
यानानां वाहनानां च ते नराः स्वर्गगामिनः॥५३
वैवाहिकानां द्रव्याणां प्रेष्याणां च युधिष्ठिर ।
दातारो वाससां चैव ते नराः स्वर्गगामिनः॥५४
विहारावसथोद्यानकूपारामसभाप्रपाः ।
वप्राणां चैव कर्तारस्ते नराः स्वर्गगामिनः ॥ ५५
निवेशनानां क्षेत्राणां वसतीनां च भारत ।
दातारः प्रार्थितानां च ते नराः स्वर्गगामिनः॥५६
रसानां चाथ बीजानां धान्यानां च युधिष्ठिर ।
स्वयमुत्पाद्य दातारः पुरुषाः स्वर्गगामिनः ॥५७
यस्मिंस्तस्मिन्कुले जाता बहुपुत्राः शतायुषः ।
सानुक्रोशा जितक्रोधाः पुरुषाः स्वर्गगामिनः५८
एतदुक्तममुत्रार्थं दैवं पित्र्यं च भारत ।
दानधर्मं च दानस्य यत्पूर्वमृषिभिः कृतम् ॥५९

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि द्विषष्टितमोऽध्यायः ॥ ६२ ॥

## त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

भीष्मेण युधिष्ठिरंप्रति हिंसाभावेपि ब्रह्महत्याप्राप्तिप्रतिपादकव्यासवचनानुवादः ॥ १ ॥

युधिष्ठिर उवाच ।
इदं मे तत्त्वतो राजन्वक्तुमर्हसि भारत ।
अहिंसयित्वाऽपि कथं ब्रह्महत्या विधीयते ॥ १
भीष्म उवाच ।
व्यासमामन्त्र्य राजेन्द्र पुरा यत्पृष्टवानहम् ।
तत्तेऽहं संप्रवक्ष्यामि तदिहैकमनाः शृणु ॥ २
चतुर्थस्त्वं वसिष्ठस्य तत्त्वमाख्याहि मे मुने ।
अहिंसयित्वा केनेह ब्रह्महत्या विधीयते ॥ ३
इति पृष्टो मया राजन्पराशरशरीरजः ।
अब्रवीन्निपुणो धर्मे निःसंशयमनुत्तमम् ॥ ४
ब्राह्मणं स्वयमाहूय भिक्षार्थं कृशवृत्तिनम् ।
ब्रूयान्नास्तीति यः पश्चात्तं विद्याद्ब्रह्मघातिनम् ॥५
मध्यस्थस्येह विप्रस्य योऽनूचानस्य भारत ।
वृत्तिं हरति दुर्बुद्धिस्तं विद्याद्ब्रह्मघातिनम् ॥ ६
गोकुलस्य तृषार्तस्य जलार्थमभिधावतः ।
उत्पादयति यो विघ्नं तं विद्याद्ब्रह्मघातिनम् ॥७
यः प्रवृत्तां श्रुतिं सम्यक् शास्त्रं वा मुनिभिः कृतम् ।
दूषयत्यनभिज्ञाय तं विद्याद्ब्रह्मघातिनम् ॥ ८
आत्मजां रूपसंपन्नां महतीं सदृशे वरे ।
न प्रयच्छति यः कन्यां तं विद्याद्ब्रह्मघातिनम् ॥९
अधर्मनिरतो मूढो मिथ्या यो वै द्विजातिषु ।
दद्यान्मर्मातिगं शोकं तं विद्याद्ब्रह्मघातिनम् ॥१०
चक्षुषा विप्रहीणस्य पङ्गुलस्य जडस्य वा ।
हरेत यो वै सर्वस्वं तं विद्याद्ब्रह्मघातिनम् ॥ ११
आश्रमे वा वने वाऽपि ग्रामे वा यदि वा पुरे ।
अग्निं समुत्सृजेन्मोहात्तं विद्याद्ब्रह्मघातिनम् ॥१२

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

---

कर्तारः पालनकर्तारः ॥ ४६ ॥ आराधनेन इतरान् सुखयन्ति ते तथा ॥ ५१ ॥ दानस्य प्रत्यर्पणस्य। दान च तद्धर्म चेति शोधको धर्मः दैप् शोधन इति धातुः अमुत्रार्थं परलोकफलम् ॥ ५७ ॥ द्विषष्टितमोऽध्यायः ॥ ६२ ॥

## चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

भीष्मेण युधिष्ठिरप्रति नद्यादितीर्थानां तत्तन्नामविशेषनिर्देशेन तत्सेवनफलप्रतिपादकगौतमाङ्गिरःसंवादानुवाद ॥ १ ॥

उवाच ।
तीर्थानां दर्शनं श्रेयः स्नानं च भरतर्षभ ।
श्रवणं च महाप्राज्ञ श्रोतुमिच्छामि तत्त्वतः ॥ १
पृथिव्यां यानि तीर्थानि पुण्यानि भरतर्षभ ।
वक्तुमर्हसि मे तानि श्रोताऽसि नियतं प्रभो ॥२
भीष्म उवाच ।
इममङ्गिरसा प्रोक्तं तीर्थवंशं महाद्युते ।
श्रोतुमर्हसि भद्रं ते प्राप्स्यसे धर्ममुत्तमम् ॥ ३
तपोवनगतं विप्रमभिगम्य महामुनिम् ।
पप्रच्छाङ्गिरसं धीरं गौतमः संशितव्रतः ॥ ४
अस्ति मे भगवन्कश्चित्तीर्थेभ्यो धर्मसंशयः ।
तत्सर्वं श्रोतुमिच्छामि तन्मे शंस महामुने ॥ ५
उपस्पृश्य फलं किं स्यात्तेषु तीर्थेषु वै मुने ।
प्रेत्यभावे महाप्राज्ञ तद्यथाऽस्ति तथा वद ॥ ६
अङ्गिरा उवाच ।
सप्ताहं चन्द्रभागां वै वितस्तामूर्मिमालिनीम् ।
विगाह्य वै निराहारो निर्मलो मुनिवद्भवेत् ॥ ७
काश्मीरमण्डले नद्यो याः पतन्ति महानदम् ।
ता नदीः सिन्धुमासाद्य शीलवान्स्वर्गमाप्नुयात् ॥८
पुष्करं च प्रभासं च नैमिषं सागरोदकम् ।
देविकामिन्द्रमार्गं च स्वर्गबिन्दुं विगाह्य च ॥९
विबोध्यते विमानस्थः सोऽप्सरोभिरभिष्टुतः ।
हिरण्यबिन्दुमालक्ष्य प्रयतश्चाभिवाद्य च ॥ १०
कुशेशये च देवत्वं धूयते तस्य किल्बिषम् ।
इन्द्रतोयां समासाद्य गन्धमादनसन्निधौ ॥ ११
करतोयां कुरङ्गे च त्रिरात्रोपोषितो नरः ।
अश्वमेधमवाप्नोति विगाह्य प्रयतः शुचिः ॥ १२
गङ्गाद्वारे कुशावर्ते बिल्वके नीलपर्वते ।
तथा कनखले स्नात्वा धूतपाप्मा दिवं व्रजेत् ॥१३
अपां ह्रद उपस्पृश्य वाजिमेधफलं लभेत् ।
ब्रह्मचारी जितक्रोधः सत्यसन्धस्त्वहिंसकः ॥ १४
यत्र भागीरथी गङ्गा वहते दिशमुत्तराम् ।
महेश्वरस्य त्रिस्थाने यो नरस्त्वभिषिच्यते ॥ १५
एकमासं निराहारः स पश्यति हि देवताः ।
सप्तगङ्गे त्रिगङ्गे च इन्द्रमार्गे च तर्पयन् ॥ १६
अर्थान्वै लभते भोक्तुं यो नरो जायते पुनः ।
महाश्रम उपस्पृश्य योऽग्निहोत्रपरः शुचिः ॥ १७
एकमासं निराहारः सिद्धिं मासेन स व्रजेत् ।
महाह्रद उपस्पृश्य भृगुतुङ्गे त्वलोलुपः ॥ १८
त्रिरात्रोपोषितो भूत्वा मुच्यते ब्रह्महत्यया ।
कन्याकूप उपस्पृश्य बलाकायां कृतोदकः ॥ १९
देवेषु लभते कीर्तिं यशसा च विराजते ॥ २०
देविकायामुपस्पृश्य तथा सुन्दरिकाह्रदे ।
अश्विन्यां रूपवर्चस्कं प्रेत्य वै लभते नरः ॥ २१
महागङ्गामुपस्पृश्य कृत्तिकाङ्गारके तथा ।
पक्षमेकं निराहारः स्वर्गमाप्नोति निर्मलः ॥ २२
वैमानिक उपस्पृश्य किङ्किणीकाश्रमे तथा ।
निवासेऽप्सरसां दिव्ये कामचारी महीयते ॥ २३
कालिकाश्रममासाद्य विपाशायां कृतोदकः ।
ब्रह्मचारी जितक्रोधस्त्रिरात्रं मुच्यते भवात् ॥२४
आश्रमे कृत्तिकानां तु स्नात्वा यस्तर्पयेत्पितॄन् ।
तोषयित्वा महादेवं निर्मलः स्वर्गमाप्नुयात् ॥ २५
महाकूपमुपस्पृश्य त्रिरात्रोपोषितः शुचिः ।
त्रसानां स्थावराणां च द्विपदानां भयं त्यजेत् ॥२६
देवदारुवने स्नात्वा धूतपाप्मा कृतोदकः ।
देवशब्दमवाप्नोति सप्तरात्रोषितः शुचिः ॥ २७
शरस्तम्बे कुशस्तम्बे द्रोणशर्मपदे तथा ।
अपांप्रपतनासेवी सेव्यते सोऽप्सरोगणैः ॥ २८

तीर्थवंश तीर्थसवम् ॥ ३ ॥ तीर्थेभ्यः तीर्थान्युद्दिश्य ॥ ५ ॥ प्रेत्यभावे जन्मान्तरे ॥ ६ ॥ मुनिवद्भवेत् मुनीना गतिं लभेतेत्यर्थः ॥ ७ ॥ सिंधु समुद्र पतन्तीत्यन्वयः ॥ ८ ॥ स्वर्गबिन्दु विगाह्येति थ. ध. पाठः ॥ ९ ॥ रूपवर्चसोः समाहारः रूपवर्चस्कम् । वर्चस्तेजः ॥ २१ ॥ त्रसाना जङ्गमानाम् ॥ २६ ॥

चित्रकूटे जनस्थाने तथा मन्दाकिनीजले ।
विगाह्य वै निराहारो राजलक्ष्म्या निषेव्यते ॥ २९
श्यामायास्त्वाश्रमं गत्वा उषित्वा चाभिषिच्य च ।
एकपक्षं निराहारस्त्वन्तर्धानफलं लभेत् ॥ ३०
कौशिकीं तु समासाद्य वायुभक्षस्त्वलोलुपः ।
एकविंशतिरात्रेण स्वर्गमारोहते नरः ॥ ३१
मतङ्गवाप्यां यः स्नायादेकरात्रेण सिध्यति ।
विगाहति ह्यनालम्बमन्धकं वै सनातनम् ॥ ३२
नैमिषे स्वर्गतीर्थे च उपस्पृश्य जितेन्द्रियः ।
फलं पुरुषमेधस्य लभेन्मासं कृतोदकः ॥ ३३
गङ्गाह्रद उपस्पृश्य तथा चैवोत्पलावने ।
अश्वमेधमवाप्नोति तत्र मासं कृतोदकः ॥ ३४
गङ्गायमुनयोस्तीर्थे तथा कालञ्जरे गिरौ ।
दशाश्वमेधानाप्नोति तत्र मासं कृतोदकः ॥ ३५
षष्टिह्रद उपस्पृश्य चान्नदानाद्विशिष्यते ॥ ३६
दशतीर्थसहस्राणि तिस्रः कोट्यस्तथाऽपराः ।
समागच्छन्ति माघ्यां तु प्रयागे भरतर्षभ ॥ ३७
माघमासं प्रयागे तु नियतः संशितव्रतः ।
स्नात्वा तु भरतश्रेष्ठ निर्मलः स्वर्गमाप्नुयात् ॥ ३८
मरुद्गण उपस्पृश्य पितॄणामाश्रमे शुचिः ।
वैवस्वतस्य तीर्थे च तीर्थभूतो भवेन्नरः ॥ ३९
तथा ब्रह्मसरो गत्वा भागीरथ्यां कृतोदकः ।
एकमासं निराहारः सोमलोकमवाप्नुयात् ॥ ४०
उत्पातके नरः स्नात्वा अष्टावक्रे कृतोदकः ।
द्वादशाहं निराहारो नरमेधफलं लभेत् ॥ ४१
अश्मपृष्ठे गयायां च निरविन्दे च पर्वते ।
तृतीयां क्रौञ्चपद्यां च ब्रह्महत्यां विशुध्यते ॥ ४२
कलविङ्क उपस्पृश्य विद्याच्च बहुशो जलम् ।
अग्नेः पुरे नरः स्नात्वा अग्निकन्यापुरे वसेत् ॥ ४३
करवीरपुरे स्नात्वा विशालायां कृतोदकः ।
देवह्रद उपस्पृश्य ब्रह्मभूतो विराजते ॥ ४४
पुनरावर्तनन्दां च महानन्दां च सेव्य वै ।
नन्दने सेव्यते दान्तस्त्वप्सरोभिरहिंसकः ॥ ४५
उर्वशीं कृत्तिकायोगे गत्वा चैव समाहितः ।
लौहित्ये विधिवत्स्नात्वा पुण्डरीकफलं लभेत् ॥ ४६
रामह्रद उपस्पृश्य विपाशायां कृतोदकः ।
द्वादशाहं निराहारः कल्मषाद्विप्रमुच्यते ॥ ४७
महाह्रद उपस्पृश्य शुद्धेन मनसा नरः ।
एकमासं निराहारो जमदग्निगतिं लभेत् ॥ ४८
विन्ध्ये संताप्य चात्मानं सत्यसन्धस्त्वहिंसकः ।
विनयात्तप आस्थाय मासेनैकेन सिध्यति ॥ ४९
'मुण्डे ब्रह्मगवां चैव निरिञ्चिं देवपर्वतम् ।
देवह्रदमुपस्पृश्य ब्रह्मभूतो विराजते ।
कुमारपदमास्थाय मासेनैकेन शुध्यति ॥' ५०
नर्मदायामुपस्पृश्य तथा शूर्पारकोदके ।
एकपक्षं निराहारो राजपुत्रो विधीयते ॥ ५१
जम्बूमार्गे त्रिभिर्मासैः संयतः सुसमाहितः ।
अहोरात्रेण चैकेन समधिगच्छति ॥ ५२
कोकामुखे विगाह्यार्थं गत्वा चाञ्जलिकाश्रमम् ।
शाकभक्षश्चीरवासाः कुमारीर्विन्दते दश ॥ ५३
वैवस्वतस्य सदनं न स गच्छेत्कदाचन ।
यस्य कन्याह्रदे वासो देवलोकं स गच्छति ॥ ५४
प्रभासे त्वेकरात्रेण अमावास्यां समाहितः ।
सिद्ध्यते तु महाबाहो यो नरो जायतेऽमरः ॥ ५५
उज्जानक उपस्पृश्य आर्ष्टिषेणस्य चाश्रमे ।
पिङ्गायाश्चाश्रमे स्नात्वा सर्वपापैः प्रमुच्यते ॥ ५६
कुल्यायां समुपस्पृश्य जप्त्वा चैवाघमर्षणम् ।
अश्वमेधमवाप्नोति त्रिरात्रोपोषितो नरः ॥ ५७
पिण्डारक उपस्पृश्य एकरात्रोषितो नरः ।
अग्निष्टोममवाप्नोति प्रभातां शर्वरीं शुचिः ॥ ५८
तथा ब्रह्मसरो गत्वा धर्मारण्योपशोभितम् ।
पुण्डरीकमवाप्नोति उपस्पृश्य नरः शुचिः ॥ ५९
मैनाके पर्वते स्नात्वा तथा सन्ध्यामुपास्य च ।
कामं जित्वा च वै मासं सर्वयज्ञफलं लभेत् ॥ ६०

अन्तर्धानफल गन्धर्वादिभोगम् ॥ ३० ॥ कालाञ्जने गिराविति थ, ध. पाठः ॥ ३५ ॥ समागच्छन्त्यमावास्यामिति थ. पाठः ॥ ३७ ॥ उर्वशीं उर्वशीतीर्थम् । कृत्तिकायोगे कार्तिक्यां पौर्णमास्याम् ॥ ४६ ॥

कालोदकं नन्दिकुण्डं तथा चोत्तरमानसम् ।
अभ्येत्य योजनशताद्भ्रूणहा विप्रमुच्यते ॥ ६१
नन्दीश्वरस्य मूर्तिं तु दृष्ट्वा मुच्येत किल्बिषैः ।
स्वर्गमार्गे नरः स्नात्वा ब्रह्मलोकं स गच्छति ॥६२
विख्यातो हिमवान्पुण्यः शंकरश्वशुरो गिरिः ।
आकरः सर्वरत्नानां सिद्धचारणसेवितः ॥ ६३
'दर्शनाद्गमनात्पूतो भवेदनशनादपि ।'
शरीरमुत्सृजेत्तत्र विधिपूर्वमनाशके ॥ ६४
अध्रुवं जीवितं ज्ञात्वा यो वै वेदान्तगो द्विजः ।
अभ्यर्च्य देवतास्तत्र नमस्कृत्य मुनींस्तथा ।
ततः सिद्धो दिवं गच्छेद्ब्रह्मलोकं सनातनम् ॥ ६५
कामं क्रोधं च लोभं च यो जित्वा तीर्थमावसेत् ।
न तेन किंचिन्न प्राप्तं तीर्थाभिगमनाद्भवेत् ॥६६
यान्यगम्यानि तीर्थानि दुर्गाणि विषमाणि च ।
मनसा तानि गम्यानि सर्वतीर्थसमीक्षया ॥ ६७
इदं मेध्यमिदं पुण्यमिदं स्वर्ग्यमनुत्तमम् ।
इदं रहस्यं वेदानामाप्लाव्यं पावनं तथा ॥ ६८
इदं दद्याद्द्विजातीनां साधोरात्महितस्य च ।
सुहृदां च जपेत्कर्णे शिष्यस्यानुगतस्य च ॥ ६९
दत्तवान्गौतमस्यैतदङ्गिरा वै महातपाः ।
अङ्गिराः समनुज्ञातः काश्यपेन च धीमता ॥ ७०
महर्षीणामिदं जप्यं पावनानां तथोत्तमम् ।
जपंश्चाभ्युत्थितः शश्वन्निर्मलः स्वर्गमाप्नुयात् ॥७१
इदं यश्चापि शृणुयाद्रहस्यं त्वङ्गिरोमतम् ।
उत्तमे च कुले जन्म लभेज्जातीश्च संस्मरेत् ॥ ७२

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

---

## पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

भीष्मेण युधिष्ठिरंप्रति गङ्गामहिमप्रतिपादकसिद्धशिलवृत्तिसंवादानुवादः ॥ १ ॥

वैशंपायन उवाच ।
बृहस्पतिसमं बुद्ध्या क्षमया ब्रह्मणः समम् ।
पराक्रमे शक्रसममादित्यसमतेजसम् ॥ १
गाङ्गेयमर्जुनेनाजौ निहतं भूरितेजसम् ।
भ्रातृभिः सहितोऽन्यैश्च पर्यपृच्छद्युधिष्ठिरः ॥ २
शयानं वीरशयने कालाकाङ्क्षिणमच्युतम् ।
आजग्मुर्भरतश्रेष्ठं द्रष्टुकामा महर्षयः ॥ ३
अत्रिर्वसिष्ठोऽथ भृगुः पुलस्त्यः पुलहः क्रतुः ।
अङ्गिरा गौतमोऽगस्त्यः सुमतिः सुयतात्मवान् ॥४
विश्वामित्रः स्थूलगिराः संवर्तः प्रमतिर्दमः ।
बृहस्पत्युशनोव्यासश्च्यवनः काश्यपो ध्रुवः ॥ ५
दुर्वासा जमदग्निश्च मार्कण्डेयोऽथ गालवः ।
भरद्वाजोऽथ रैभ्यश्च यवक्रीतस्त्रितस्तथा ॥ ६
स्थूलाक्षः शबलाक्षश्च कण्वो मेधातिथिः कृशः ।
नारदः पर्वतश्चैव सुधन्वाऽथैकतो द्विजः ॥ ७
नितंभूर्भुवनो धौम्यः शतानन्दोऽकृतव्रणः ।
जामदग्न्यस्तथा रामः कचश्चेत्येवमादयः ।
समागता महात्मानो भीष्मं द्रष्टुं महर्षयः ॥ ८
तेषां महात्मनां पूजामागतानां युधिष्ठिरः ।
भ्रातृभिः सहितश्चक्रे यथावदनुपूर्वशः ॥ ९
ते पूजिताः सुखासीनाः कथाश्चक्रुर्महर्षयः ।
भीष्माश्रिताः सुमधुराः सर्वेन्द्रियमनोहराः ॥१०
भीष्मस्तेषां कथाः श्रुत्वा ऋषीणां भावितात्मनाम् ।
मेने दिविष्ठमात्मानं तुष्ट्या परमया युतः ॥ ११
ततस्ते भीष्ममामन्त्र्य पाण्डवांश्च महर्षयः ।
अन्तर्धानं गताः सर्वे सर्वेषामेव पश्यताम् ॥ १२
तानृषीन्सुमहाभागानन्तर्धानगतानपि ।
पाण्डवास्तुष्टुवुः सर्वे प्रणेमुश्च मुहुर्मुहुः ॥ १३

---

इदं तीर्थसेवनम् । मेध्य यज्ञफलप्रदम् । पुण्य पापघ्नम् ॥ ६८ ॥ समनुज्ञातः प्रार्थितः । काश्यपेन एतद्विज्ञातुकामेनेति शेषः ॥ ७० ॥ चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

यदाऽपृच्छत्तदैवाजग्मुरिति द्वितीयेन यत्तदोरध्याहारेणान्वयः ॥ २ ॥

प्रसन्नमनसः सत्र गाङ्ग्यं कुरुसत्तमम् ।
उपतस्थुर्यथोद्यन्तमादित्यं मन्त्रकोविदाः ॥ १४
प्रभावं तपसस्तेषामृर्षीणां वीक्ष्य पाण्डवाः ।
प्रकाशन्तो दिशः सर्वा विस्मयं परमं ययुः ॥१५
महाभाग्यं परं तेषामृषीणामनुचिन्त्य ते ।
पाण्डवाः सह भीष्मेण कथाश्चक्रुस्तदाश्रयाः ॥१६
कथान्ते शिरसा पादौ स्पृष्ट्वा भीष्मस्य पाण्डवः ।
धर्म्यं धर्मसुतः प्रश्नं पर्यपृच्छद्युधिष्ठिरः ॥ १७
के देशाः के जनपदा आश्रमाः के च पर्वताः ।
प्रकृष्टाः पुण्यतः काश्च ज्ञेया नद्यः पितामह ॥१८
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
शिलोञ्छवृत्तेः संवादं सिद्धस्य च युधिष्ठिर ॥ १९
इमां कश्चित्परिक्रम्य पृथिवीं शैलभूषणाम् ।
असकृद्द्विपदां श्रेष्ठः श्रेष्ठस्य गृहमेधिनः ॥ २०
शिलवृत्तेर्गृहं प्राप्तः स तेन विधिनाऽर्चितः ।
उवास रजनीं तत्र सुमुखः सुखभागृषिः ॥ २१
शिलवृत्तिस्तु यत्कृत्यं प्रातस्तत्कृतवाञ्शुचिः ।
कृतकृत्यमुपातिष्ठत्सिद्धं तमतिथिं तदा ॥ २२
तौ समेत्य महात्मानौ सुखासीनौ कथाः शुभाः ।
चक्रतुर्वेदसंबद्धास्तच्छेषकृतलक्षणाः ॥ २३
शिलवृत्तिः कथान्ते तु सिद्धमामन्त्र्य यत्नतः ।
प्रश्नं पप्रच्छ मेधावी यन्मां त्वं परिपृच्छसि ॥ २४
शिलवृत्तिरुवाच ।
के देशाः के जनपदाः केऽऽश्रमाः के च पर्वताः ।
प्रकृष्टाः पुण्यतः काश्च ज्ञेया नद्यस्तदुच्यताम् ॥२५
सिद्ध उवाच ।
ते देशास्ते जनपदास्तेऽऽश्रमास्ते च पर्वताः ।
येषां भागीरथी गङ्गा मध्येनैति सरिद्वरा ॥ २६
तपसा ब्रह्मचर्येण यज्ञैस्त्यागेन वा पुनः ।
गतिं तां न लभेज्जन्तुर्गङ्गां संसेव्य यां लभेत ॥२७
स्पृष्टानि येषां गाङ्गेयैस्तोयैर्गात्राणि देहिनाम् ।
न्यस्तानि न पुनस्तेषां त्यागः स्वर्गाद्विधीयते ॥२८
सर्वाणि येषां गाङ्गेयैस्तोयैः कार्याणि देहिनाम् ।
गां त्यक्त्वा मानवा विप्र दिवि तिष्ठन्ति ते जनाः॥
पूर्वे वयसि कर्माणि कृत्वा पापानि ये नराः ।
पश्चाद्गङ्गां निषेवन्ते तेऽपि यान्त्युत्तमां गतिम्॥३०
'युक्ताश्च पातकैस्त्यक्त्वा देहं शुद्धा भवन्ति ते ।
मुच्यन्ते देहसंत्यागाद्गङ्गायमुनसंगमे ॥' ३१
स्नातानां शुचिभिस्तोयैर्गाङ्गेयैः प्रयतात्मनाम् ।
व्युष्टिर्भवति या पुंसां न सा क्रतुशतैरपि ॥ ३२
यावदस्थि मनुष्यस्य गङ्गातोयेषु तिष्ठति ।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥ ३३
अपहत्य तमस्तीव्रं यथा भात्युदये रविः ।
तथाऽपहत्य पाप्मानं भाति गङ्गाजलोक्षितः॥ ३४
विसोमा इव शर्वर्यो विपुष्पास्तरवो यथा ।
तद्वद्देशा दिशश्चैव हीना गङ्गाजलैः शिवैः ॥ ३५
वर्णाश्रमा यथा सर्वे धर्मज्ञानविवर्जिताः ।
क्रतवश्च यथाऽसोमास्तथा गङ्गां विना जगत् ॥ ३६
यथा हीनं नभोऽर्केण भूः शैलैः खं च वायुना ।
तथा देशा दिशश्चैव गङ्गाहीना न संशयः ॥ ३७
त्रिषु लोकेषु ये केचित्प्राणिनः सर्व एव ते ।
तर्प्यमाणाः परां तृप्तिं यान्ति गङ्गाजलैः शुभैः॥ ३८
'अन्ये च देवा मुनयः प्रेतानि पितृभिः सह ।
तर्पितास्तृप्तिमायान्ति त्रिषु लोकेषु सर्वशः ॥' ३९
यस्तु सूर्येण निष्टप्तं गाङ्गेयं पिबते जलम् ।
गवां निर्हारनिर्मुक्ताद्यावकात्तद्विशिष्यते ॥ ४०
इन्दुव्रतसहस्रं तु यश्चरेत्कायशोधनम् ।
पिबेद्यश्चापि गङ्गाम्भः समौ स्यातां न वा समौ॥४१
तिष्ठेद्युगसहस्रं तु मदेनैकेन यः पुमान् ।

---

महाभाग्य योगैश्वर्यं खेचरत्वान्तर्धानशक्त्यादिसिद्धिमत्त्वम् ॥ १६ ॥ देशाः भूमिभागाः । जनपदाः महाजननिवासस्थानानि । आश्रमा. ऋषिस्थानानि ॥ १८ ॥ ते देशा इति प्रकृष्टाः पुण्यत इत्यनुषङ्ग. ॥ २६ ॥ गात्राण्यस्थीनि । न्यस्तानि गङ्गायाम् । त्यक्तानि यानि वै तेषां. त्यागात्स्वर्गो विधीयते इति ध. पाठः ॥ २८ ॥ व्युष्टि. पुण्यवृद्धिः ॥ ३२ ॥ यावदस्थि मनुष्याणामिति थ. ध. पाठः॥ ३३ ॥ गवां निर्हार- आहारनिर्गमनमार्गस्ततो निर्मुक्त यावक यवविकारस्तस्मात् । गा यवानादयित्वा तच्छकृदन्तर्गतान् यवान् पक्त्वा भुञ्जानो यावकव्रतीत्युच्यते ॥ ४० ॥ इन्दुव्रतं चान्द्रायणम् ॥ ४१ ॥

मासमेकं तु गङ्गायां समौ स्यातां न वा समौ ॥ ४२
लम्बतेऽवाक्शिरा यस्तु युगानामयुतं पुमान् ।
तिष्ठेद्यथेष्टं यश्चापि गङ्गायां स विशिष्यते ॥ ४३
अग्नौ प्रास्तं प्रधूयेत यथा तूलं द्विजोत्तम ।
तथा गङ्गावगाढस्य सर्वपापं प्रधूयते ॥ ४४
भूतानामिह सर्वेषां दुःखोपहतचेतसाम् ।
गतिमन्वेषमाणानां न गङ्गासदृशी गतिः ॥ ४५
भवन्ति निर्विषाः सर्पा यथा तार्क्ष्यस्य दर्शनात् ।
गङ्गाया दर्शनात्तद्वत्सर्वपापैः प्रमुच्यते ॥ ४६
अप्रतिष्ठाश्च ये केचिदधर्मशरणाश्च ये ।
तेषां प्रतिष्ठा गङ्गेह शरणं शर्म वर्म च ॥ ४७
प्रकृष्टैरशुभैर्ग्रस्ताननेकैः पुरुषाधमान् ।
पततो नरके गङ्गा संश्रितान्प्रेत्य तारयेत् ॥ ४८
ते संविभक्ता मुनिभिर्नूनं देवैः सवासवैः ।
येऽभिगच्छन्ति सततं गङ्गां मतिमतां वर ॥ ४९
विनयाचारहीनाश्च अशिवाश्च नराधमाः ।
ते भवन्ति शिवा विप्र ये वै गङ्गामुपाश्रिताः ॥५०
यथा सुराणाममृतं पितॄणां च यथा स्वधा ।
सुधा यथा च नागानां तथा गङ्गाजलं नृणाम् ॥५१
उपासते यथा बाला मातरं क्षुधयाऽर्दिताः ।
श्रेयस्कामास्तथा गङ्गामुपासन्तीह देहिनः ॥ ५२
स्वायंभुवं यथा स्थानं सर्वेषां श्रेष्ठमुच्यते ।
स्नातानां सरितां श्रेष्ठा गङ्गा तद्वदिहोच्यते ॥ ५३
'उपजीव्या यथा धेनुलोकानां ब्राह्ममेव वा ।
हविषां तु यथा सोमस्तरणेषु तथा त्वियम् ॥५४
यथोपजीविनां धेनुर्देवादीनां परा स्मृता ।
तथोपजीविनां गङ्गा सर्वप्राणभृतामिह ॥ ५५
देवाः सोमार्कसंस्थानि यथा सत्रादिभिर्मखैः ।
अमृतान्युपजीवन्ति तथा गङ्गाजलं नराः ॥ ५६
जाह्नवीपुलिनोत्थाभिः सिकताभिः समुक्षितम् ।
आत्मानं मन्यते लोको दिविष्ठमिव शोभितम् ॥५७
जाह्नवीतीरसंभूतां मृदं मूर्ध्ना बिभर्ति यः ।
बिभर्ति रूपं सोऽर्कस्य तमोनाशाय निर्मलम् ॥५८
गङ्गोर्मिभिरथो दिग्धः पुरुषं पवनो यदा ।
स्पृशते सोऽस्य पाप्मानं सद्य एवापकर्षति ॥५९
व्यसनैरभितप्तस्य नरस्य विनशिष्यतः ।
गङ्गादर्शनजा प्रीतिर्व्यसनान्यपकर्षति ॥ ६०
हंसारावैः कोकरवै रवैरन्यैश्च पक्षिणाम् ।
पस्पर्ध गङ्गा गन्धर्वान्पुलिनैश्च शिलोच्चयान् ॥६१
हंसादिभिः सुबहुभिर्विविधैः पक्षिभिर्वृताम् ।
गङ्गां गोकुलसंबाधां दृष्ट्वा स्वर्गोऽपि विस्मृतः ॥६२
न सा प्रीतिर्दिविष्ठस्य सर्वकामानुपाश्नतः ।
संभवेद्या परा प्रीतिर्गङ्गायाः पुलिने नृणाम् ॥६३
वाङ्मनःकर्मजैर्ग्रस्तः पापैरपि पुमानिह ।
वीक्ष्य गङ्गां भवेत्पूतो अत्र मे नास्ति संशयः ॥६४
सप्तावरान्सप्त परान्पितॄंस्तेभ्यश्च ये परे ।
पुमांस्तारयते गङ्गां वीक्ष्य स्पृष्ट्वाऽवगाह्य च ॥६५
श्रुताभिलषिता पीता स्पृष्टा दृष्टाऽवगाहिता ।
गङ्गा तारयते नृणामुभौ वंशौ विशेषतः ॥ ६६
'तत्तीरगानां तपसा श्राद्धपारायणादिभिः ।
गङ्गाद्वारप्रभृतिभिस्तत्तीर्थैर्न परं नृणाम् ॥ ६७
सायं प्रातः स्मरेद्गङ्गां नित्यं स्नाने तु कीर्तयेत् ।
तर्पणे पितृपूजासु मरणे चापि संस्मरेत् ॥' ६८
दर्शनात्स्पर्शनात्पानात्तथा गङ्गेति कीर्तनात् ।
पुनात्यपुण्यान्पुरुषाञ्शतशोऽथ सहस्रशः ॥ ६९
य इच्छेत्सफलं जन्म जीवितं श्रुतमेव च ।
स पितॄंस्तर्पयेद्गङ्गामभिगम्य सुरांस्तथा ॥ ७०
न श्रुतैर्न च वित्तेन कर्मणा न च तत्फलम् ।
प्राप्नुयात्पुरुषोऽत्यन्तं गङ्गां प्राप्य यदाप्नुयात् ॥७१
जात्यन्धैरिह तुल्यास्ते मृतैः पङ्गुभिरेव च ।
समर्था ये न पश्यन्ति गङ्गां पुण्यजलां शिवाम् ॥७२
भूतभव्यभविष्यज्ञैर्महर्षिभिरुपस्थिताम् ।
देवैः सेन्द्रैश्च को गङ्गां नोपसेवेत मानवः ॥ ७३
वानप्रस्थैर्गृहस्थैश्च यतिभिर्ब्रह्मचारिभिः ।
विद्यावद्भिः श्रितां गङ्गां पुमान्को नाम नाश्रयेत् ॥७४
उत्क्रामद्भिश्च यः प्राणैः प्रयतः शिष्टसंमतः ।

धूयते दूरे जायते भस्मीभूयापि न शिष्यते इत्यर्थः ॥ ४४ ॥

कामान् भोगान् ॥ ६३ ॥ उपस्थिता नित्य सेविताम् ॥ ७३ ॥

चिन्तयेन्मनसा गङ्गां स गतिं परमां लभेत् ॥ ७५
न भयेभ्यो भयं तस्य न पापेभ्यो न राजतः ।
आदेहपतनाद्गङ्गामुपास्ते यः पुमानिह ॥ ७६
गगनाद्गां पतन्तीं वै महापुण्यां महेश्वरः ।
दधार शिरसा गङ्गां तामेव दिवि सेवते ॥ ७७
अलंकृतास्त्रयो लोकाः पथिभिर्विमलैस्त्रिभिः ।
यस्तु तस्या जलं सेवेत्कृतकृत्यः पुमान्भवेत् ॥ ७८
दिवि ज्योतिर्यथाऽऽदित्यः पितॄणां चैव चन्द्रमाः ।
देवेशश्च यथा नृणां गङ्गा च सरितां तथा ॥ ७९
मात्रा पित्रा सुतैर्दारैर्विमुक्तस्य धनेन वा ।
न भवेद्धि तथा दुःखं यथा गङ्गावियोगजम् ॥८०
नारण्यैर्नेष्टविषयैर्न सुतैर्न धनागमैः ।
तथा प्रसादो भवति गङ्गां वीक्ष्य यथा भवेत् ॥ ८१
पूर्णमिन्दुं यथा दृष्ट्वा नृणां दृष्टिः प्रसीदति ।
तथा त्रिपथगां दृष्ट्वा नृणां दृष्टिः प्रसीदति ॥ ८२
तद्भावस्तद्गतमनास्तन्निष्ठस्तत्परायणः ।
गङ्गां योऽनुगतो भक्त्या स तस्याः प्रियतां व्रजेत्८३
भूस्थैः खस्थैर्दिविष्ठैश्च भूतैरुच्चावचैरपि ।
गङ्गा विगाह्या सततमेतत्कार्यतमं सताम् ॥ ८४
विश्वलोकेषु पुण्यत्वाद्गङ्गायाः प्रथितं यशः ।
'दुर्मृताननपत्यांश्च सा मृताननयद्दिवम् ।'
यत्पुत्रान्सगरस्यैतो भस्माख्याननयद्दिवम् ॥ ८५
वाय्वीरिताभिः सुमनोहराभि-
र्द्रुताभिरत्यर्थसमुत्थिताभिः ।
गङ्गोर्मिभिर्भानुमतीभिरिद्धाः
सहस्ररश्मिप्रतिमा भवन्ति ॥ ८६
पयस्विनीं घृतिनीमत्युदारां
समृद्धिनीं वेगिनीं दुर्विगाह्याम् ।
गङ्गां गत्वा यैः शरीरं विसृष्टं
गता धीरास्ते विबुधैः समत्वम् ॥ ८७
अन्धाञ्जडान्द्रव्यहीनांश्च गङ्गा
यशस्विनी बृहती विश्वरूपा ।
देवैः सेन्द्रैर्मुनिभिर्मानवैश्च
निषेविता सर्वकामैर्युनक्ति ॥ ८८
ऊर्जस्वतीं मधुमतीं महापुण्यां त्रिवर्त्मगाम् ।
त्रिलोकगोप्त्रीं ये गङ्गां संश्रितास्ते दिवं गताः ॥८९
यो वत्स्यति द्रक्ष्यति वाऽपि मर्त्य-
स्तस्मै प्रयच्छन्ति सुखानि देवाः ।
तद्भाविताः स्पर्शनदर्शनेन
इष्टां गतिं तस्य सुरा दिशन्ति ॥ ९०
दक्षां पृश्निं बृहतीं विप्रकृष्टां
शिवामृद्धां भागिनीं सुप्रसन्नाम् ।
विभावरीं सर्वभूतप्रतिष्ठां
गङ्गां गता ये त्रिदिवं गतास्ते ॥ ९१
ख्यातिर्यस्याः खं दिवं गां च नित्यं
पूर्वं दिशो विदिशश्चावतस्थे ।
तस्या जलं सेव्य सरिद्वरायां
मर्त्याः सर्वे कृतकृत्या भवन्ति ॥ ९२
इयं गङ्गेति नियतं प्रतिष्ठा
गुहस्य रुक्मस्य च गर्भयोषा ।
प्रातस्त्रिवर्गा घृतवहा विपाप्मा
गङ्गाऽवतीर्णा वियतो विश्वतोया ॥ ९३
नारायणादक्षयात्पूर्वजात।
विष्णोः पादाच्छिशुमाराद्ध्रुवाच्च ।
सोमात्सूर्यान्मेरुरूपाच्च विष्णोः
समागता शिवमूर्ध्नो हिमाद्रिम्

इष्टं यागादि तत्प्राप्यैरिष्टविषयैः स्वर्ग्यैः ॥ ८१ ॥ इद्धाः निर्दोषत्वेन दीप्ताः ॥ ८६ ॥ पयोघृते यागीये हविषी समृद्धिर्यागफल तद्वतीम् । यागादिज पुण्य तत्फल स्वर्गादि च गङ्गाप्राप्त्यैव लभ्यत इत्यर्थः ॥ ८७ ॥ ऊर्क् अन्नपश्वादिः तत्प्रदामित्यर्थः । मधु कर्मफल ब्रह्म वा तत्प्रदा मधुमतीम् ॥ ८९ ॥ योगं गामिति शेषः । तया गङ्गया भाविताः महत्त्वं गताः देवाः । स्पर्शनदर्शनेन गङ्गाया एव ॥ ९० ॥ दक्षां तारणसमर्थाम् । पृश्निं विष्णुमातरम् । बृहतीं वाचम् । वाग्वै बृहतीतिश्रुतेः । भागिनीं भगानामैश्वर्यादीनां षण्णां समूहो भागं तद्वतीम् । विभावरी प्रकाशिकाम् ॥ ९१ ॥ गङ्गां दृष्ट्वा इयं गङ्गेति अन्यान् गङ्गा दर्शयतः पुरुषस्य नियतं नियमेन गङ्गैक प्रतिष्ठा संसारावसानहेतुर्भवति । गुहस्य कार्तिकेयस्य रुक्मस्य स्वर्णस्य च गर्भयोषा गर्भधारिणी स्त्री । वियतः सकाशात्प्रातरवतीर्णा त्रिवर्गा धर्मार्थकामदा । घृतवहा जलवाहिनी ।

मर्त्यावनी द्रव्यपरस्य यथा
 दिक्चे सुवश्चापि वीक्ष्यानुरूपा ॥' ९४
सुताऽवनीध्रस्य हरस्य भार्या
 दिवो भुवश्चापि कृतानुरूपा ।
भव्या पृथिव्यां भागिनी चापि राज-
 न्गङ्गा लोकानां पुण्यदा वै त्रयाणाम् ॥ ९५
मधुस्रवा घृतधारा घृतार्चि-
 र्महोर्मिभिः शोभिता ब्राह्मणैश्च ।
दिवश्च्युता शिरसाऽऽप्ता शिवेन
 गङ्गाऽवनीध्रात्रिदिवस्य माता ॥ ९६
योनिर्वरिष्ठा विरजा वितन्वी
 शय्याऽचिरा वारिवहा यशोदा ।
विश्वावती चाकृतिरिष्टसिद्धा
 गङ्गोक्षितानां भुवनस्य पन्थाः ॥ ९७
क्षान्त्या मह्या गोपने धारणे च
 दीप्त्या कृशानोस्तपनस्य चैव ।
तुल्या गङ्गा संमता ब्राह्मणानां
 गुहस्य ब्रह्मण्यतया च नित्यम् ॥ ९८
ऋषिष्टुतां विष्णुपदीं पुराणां
 सुपुण्यतोयां मनसाऽपि लोके ।
सर्वात्मना जाह्नवीं ये प्रपन्ना-
 स्ते ब्रह्मणः सदनं संप्रयाताः ॥ ९९
लोकानिमान्नयति या जननीव पुत्रा-
 न्सर्वात्मना सर्वगुणोपपन्ना ।
तत्स्थानकं ब्राह्ममभीप्समानै-
 र्गङ्गा सदैवात्मवशैरुपास्या ॥ १००
'न तेर्जुष्टां स्पृशतीं विश्वतोया-
 मिरावन्तां रेवतीं भूधराणाम् ।'
उस्रां पुष्टां मिषतीं विश्वभोज्या-
 मिरावतीं धारिणीं भूधराणाम् ।
शिष्टाश्रयाममृतां ब्रह्मकान्तां
 गङ्गां श्रयेदात्मवान्सिद्धिकामः ॥ १०१
प्रसाद्य देवान्सविभून्समस्ता-
 न्भगीरथस्तपसोग्रेण गङ्गाम् ।
गामानयत्तामभिगम्य शश्व-
 त्पुंसां भयं नेह चामुत्र विद्यात् ॥ १०२
उदाहृतः सर्वथा ते गुणानां
 मयैकदेशः प्रसमीक्ष्य बुद्ध्या ।
शक्तिर्न मे काचिदिहास्ति वक्तुं
 गुणान्सर्वान्परिमातुं तथैव ॥ १०३
मेरोः समुद्रस्य च सर्वरत्नैः
 सङ्ख्योपलानामुदकस्य वाऽपि ।
शक्यं वक्तुं नेह गङ्गाजलानां
 गुणाख्यानं परिमातुं तथैव ॥ १०४
तस्मादेतान्परया श्रद्धयोक्ता-
 न्गुणान्सर्वाञ्जाह्नवीयान्सदैव ।
भवेद्वाचा मनसा कर्मणा च
 भक्त्या युक्तः श्रद्धया श्रद्दधानः ॥ १०५
लोकानिमांस्त्रीन्यशसा वितत्य
 सिद्धिं प्राप्य महतीं तां दुरापाम् ।
गङ्गाकृतानचिरेणैव लोका-
 न्यथेष्टमिष्टान्विहरिष्यसि त्वम् ॥ १०६

विश्वतोया विश्वप्रियतोया ॥ ९३ ॥ अवनीध्रस्य मेरो. हिमवतो वा पर्वतस्य । कृत अनुरूप-अलकारो यया सा कृतानुरूपा ॥ ९५ ॥ मधुस्रवा धर्मद्रवा । घृतधारा तेजोधारा घृतार्चिः आज्यस्येव अर्चिर्वर्चो यस्याः । सा अवनीध्रात् पृथिवीं प्राप्तेति शेषः ॥ ९६ ॥ वरिष्ठा योनिः परमकारणम् । विरजा निर्मला । वितन्वी विशेषेण तन्वी सूक्ष्मा । शय्या दीर्घनिद्रा तल्पः । मरण जाह्नवीतट इति वचनात् । अचिरा शीघ्रा । विश्वावती विश्व अवन्ती पालयन्ती । नुमभाव आर्षः । इष्टसिद्धा इष्टाः सिद्धा यस्याः सा, सिद्धानामिष्टा इति वा । उक्षितानां स्नातानाम् । भुवनस्य स्वर्गस्य । पुष्पाविला परिवाहा यशोदेति ध. पाठ. ॥ ९७ ॥ क्षान्त्यादित्रये मह्या तुल्येति सबन्ध । गुहस्य कुमारस्य समता । ब्रह्मण्यतया ब्राह्मणजात्यनुग्राहकतया ॥ ९८ ॥ मनसापि प्रपन्ना. किमुत साक्षात् ॥ ९९ ॥ उस्रां धेनुममृतदुघामिति यावत् । मिषतीं पश्यन्तीं सर्वज्ञामित्यर्थ. । इरावतीमन्नवतीम् । ब्रह्मणोपि कान्तां चेतोहराम् ॥ १०१ ॥ सविभून् सेश्वरान् । गां पृथ्वीम् ॥ १०२ ॥ मदुक्तान् गङ्गागुणान् ज्ञात्वा वागादिभिः स्तोत्रध्यानस्नानादिषु श्रद्दधानो भवेदिति संबन्धः । गङ्गाकृतान् गङ्गासेवनप्राप्तान् ।

तव मम च गुणैर्महानुभावा
जुषतु मतिं सततं स्वधर्मयुक्तैः ।
अभिमतजनवत्सला हि गङ्गा
जगति युनक्ति सुखैश्च भक्तिमन्तम् ॥ १०७
भीष्म उवाच ।
इति परममतिर्गुणाननेका-
ञ्छिलरतये त्रिपथानुयोगरूपान् ।
बहुविधमनुशास्य तथ्यरूपा-
न्गगनतलं द्युतिमान्विवेश सिद्धः ॥ १०८
शिलवृत्तिस्तु सिद्धस्य वाक्यैः संबोधितस्तदा ।
गङ्गामुपास्य विधिवत्सिद्धिं प्राप सुदुर्लभाम् ॥ १०९
तथा त्वमपि कौन्तेय भक्त्या परमया युतः ।
गङ्गामभ्येहि सततं प्राप्स्यसे सिद्धिमुत्तमाम् ॥ ११०
वैशंपायन उवाच ।
श्रुत्वेतिहासं भीष्मोक्तं गङ्गायाः स्तवसंयुतम् ।
युधिष्ठिरः परां प्रीतिमगच्छद्भ्रातृभिः सह ॥ १११

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

## षट्षष्टितमोऽध्यायः ॥ ६६ ॥

भीष्मेण युधिष्ठिरंप्रति मानवेषु पूज्यताप्रयोजकगुणप्रतिपादककृष्णनारदसंवादानुवादः ॥ १ ॥

:उवाच ।
के पूज्या वै त्रिलोकेऽस्मिन्मानवा भरतर्षभ ।
विस्तरेण तदाचक्ष्व न हि तृप्यामि कथ्यतः ॥ १
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
नारदस्य च संवादं वासुदेवस्य चोभयोः ॥ २
नारदं प्राञ्जलिं दृष्ट्वा पूजयानं द्विजर्षभान् ।
केशवः परिपप्रच्छ भगवन्कान्नमस्यसि ॥ ३
बहुमानपरस्तेषु भगवन्यान्नमस्यसि ।
शक्यं चेच्छ्रोतुमस्माभिर्ब्रूह्येतद्धर्मवित्तम ॥ ४
नारद उवाच ।
शृणु गोविन्द यानेतान्पूजयाम्यरिमर्दन ।
त्वत्तोऽन्यः कः पुमाँल्लोके श्रोतुमेतदिहार्हति ॥ ५
वरुणं वायुमादित्यं पर्जन्यं जातवेदसम् ।
स्थाणुं स्कन्दं महालक्ष्मीं विष्णुं ब्रह्माणमेव च ॥ ६
वाचस्पतिं चन्द्रमसमपः पृथ्वीं सरस्वतीम् ।
सततं ये नमस्यन्ति तान्नमस्याम्यहं विभो ॥ ७
तपोधनान्वेदविदो नित्यं वेदपरायणान् ।
महार्हान्वृष्णिशार्दूल सदा संपूजयाम्यहम् ॥ ८
अभुक्त्वा देवकार्याणि कुर्वते येऽविकत्थनाः ।
संतुष्टाश्च क्षमायुक्तास्तान्नमस्याम्यहं विभो ॥ ९
सम्यग्यजन्ति ये चेष्टीः क्षान्ता दान्ता जितेन्द्रियाः
सत्यं धर्मं क्षितिं गाश्च तान्नमस्यामि यादव ॥ १०
ये वै तपसि वर्तन्ते वने मूलफलाशनाः ।
असंचयाः क्रियावन्तस्तान्नमस्यामि यादव ॥ ११
ये भृत्यभरणे शक्ताः सततं चातिथिव्रताः ।
भुञ्जते देवशेषाणि तान्नमस्यामि यादव ॥ १२
ये वेदं प्राप्य दुर्धर्षा वाग्मिनो ब्रह्मचारिणः ।
याजनाध्यापने युक्ता नित्यं तान्पूजयाम्यहम् ॥ १३
प्रसन्नहृदयाश्चैव सर्वसत्वेषु नित्यशः ।
आपृष्ठतापात्स्वाध्याये युक्तास्तान्पूजयाम्यहम् ॥ १४
गुरुप्रसादे स्वाध्याये यतन्तो ये स्थिरव्रताः ।
शुश्रूषवोऽनसूयन्तस्तान्नमस्यामि यादव ॥ १५

इष्टान् संकल्पसिद्धान् ॥ १०६ ॥ महानुभावा गङ्गा मति जुषतु प्रीणातु"। गङ्गादर्शनादिना मति प्रसीदत्वित्यर्थ । अभिमतः श्रद्धालुः ॥ १०७ ॥ पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

मानवैर्भरतर्षभेति झ. थ. ध. पाठ ॥ १ ॥ तेषु मानवेषु बहुमानपरः सन् कान्नमस्यसीति योज्यम् ॥ ४ ॥ महार्हान् महीन् अर्हः पूजा येषाम् । अतिपूज्यानित्यर्थः ॥ ८ ॥ अविकत्थनाः श्लाघाहीना. ॥ ९ ॥ सत्य धर्म च यजन्ति पूजयन्ति । क्षिति गाश्च यजन्ति ब्राह्मणेभ्यः प्रयच्छन्ति । यज देवपूजासंगतिकरणदानेषु । सत्य धन क्षितिमिति थ. ध पाठः ॥ १० ॥ आपृष्ठतापान् यावन्मध्याह्नम् ॥ १४ ॥ स्वाध्याये

सुव्रता मुनयो ये च ब्राह्मणाः सत्यसंगराः ।
वोढारो हव्यकव्यानां तान्नमस्यामि यादव ॥ १६
भैक्षचर्यासु निरताः कृशा गुरुकुलाश्रयाः ।
निःसुखा निर्धना ये तु तान्नमस्यामि यादव ॥१७
निर्ममा निष्प्रतिद्वन्द्वा निर्ह्रीका निष्प्रयोजनाः ।
ये वेदं प्राप्य दुर्धर्षा वाग्मिनो ब्रह्मवादिनः ॥१८
अहिंसानिरता ये च ये च सत्यव्रता नराः ।
दान्ताः शमपराश्चैव तान्नमस्यामि केशव ॥ १९
देवतातिथिपूजायां युक्ता ये गृहमेधिनः ।
कपोतवृत्तयो नित्यं तान्नमस्यामि यादव ॥ २०
येषां त्रिवर्गः कृत्येषु वर्तते नोपहीयते ।
शिष्टाचारप्रवृत्ताश्च तान्नमस्याम्यहं सदा ॥ २१
ब्राह्मणाः श्रुतसंपन्ना ये त्रिवर्गमनुष्ठिताः ।
अलोलुपाः पुण्यशीलास्तान्नमस्यामि केशव ॥२२
'अवन्ध्यकाला येऽलुब्धास्त्रिवर्गे साधनेषु च ।
विशिष्टाचारयुक्ताश्च नारायण नमामि तान् ॥'२३
अब्भक्षा वायुभक्षाश्च सुधाभक्षाश्च ये सदा
व्रतैश्च विविधैर्युक्तास्तान्नमस्यामि माधव ॥ २४
अयोनीनग्नियोनींश्च ब्रह्मयोनींस्तथैव च ।
सर्वभूतात्मयोनींश्च तान्नमस्याम्यहं सदा ॥ २५
नित्यमेतान्नमस्यामि कृष्ण लोककरानृषीन् ।
लोकज्येष्ठान्कुलज्येष्ठांस्तमोघ्नाँल्लोकभास्करान् २६
तस्मात्त्वमपि वार्ष्णेय द्विजान्पूजय नित्यदा ।
पूजिताः पूजनार्हा हि सुखं दास्यन्ति तेऽनघ ॥ २७
अस्मिँल्लोके सदा ह्येते परत्र च सुखप्रदाः ।
चरन्ते मान्यमाना वै प्रदास्यन्ति सुखं तव ॥ २८
ये सर्वातिथयो नित्यं गोषु च ब्राह्मणेषु च ।
नित्यं सत्ये चाभिरता दुर्गाण्यतितरन्ति ते ॥२९
नित्यं शमपरा ये च तथा ये चानसूयकाः ।
नित्यस्वाध्यायिनो ये च दुर्गाण्यतितरन्ति ते ॥३०
सर्वान्देवान्नमस्यन्ति ये चैकं वेदमाश्रिताः ।
श्रद्दधानाश्च दान्ताश्च दुर्गाण्यतितरन्ति ते ॥ ३१
तथैव विप्रप्रवरान्नमस्कृत्य यतव्रताः ।
भवन्ति ये दानरता दुर्गाण्यतितरन्ति ते ॥ ३२
तपस्विनश्च ये नित्यं कौमारब्रह्मचारिणः ।
तपसा भावितात्मानो दुर्गाण्यतितरन्ति ते ॥३३
देवतातिथिभृत्यानां पितॄणां चार्चने रताः ।
शिष्टान्नभोजिनो ये च दुर्गाण्यतितरन्ति ते ॥३४
अग्निमाधाय विधिवत्प्रणता धारयन्ति ये ।
प्राप्ताः सोमाहुतिं चैव दुर्गाण्यतितरन्ति ते ॥३५
मातापित्रोर्गुरुषु च सम्यग्वर्तन्ति ये सदा ।
यथा त्वं वृष्णिशार्दूलेत्युक्त्वैवं विरराम सः ॥३६
तस्मात्त्वमपि कौन्तेय पितृदेवद्विजातिथीन् ।
सम्यक्पूजयसे नित्यं गतिमिष्टामवाप्स्यसि ॥ ३७

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि षट्षष्टितमोऽध्यायः ॥ ६६ ॥

## सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

भीष्मेण युधिष्ठिरंप्रति शरणागतरक्षणफलप्रतिपादकश्येनकपोतोपाख्यानकथनम् ॥ १ ॥

[illegible] उवाच ।
पितामह महाप्राज्ञ सर्वशास्त्रविशारद
त्वत्तोऽहं श्रोतुमिच्छामि धर्मं भरतसत्तम ॥ १
शरणागतं ये रक्षन्ति भूतग्रामं चतुर्विधम् ।

ब्रह्मयज्ञे मन्त्रजपे वा ॥ १५ ॥ निर्ह्रीका निष्प्रयोजनाः इति झ. पाठः । निर्ह्रीकाः दिगम्बराः ॥ १८ ॥ कपोतवृत्तयः कणश आदाय ये संग्रह न कुर्वन्तीत्यर्थः ॥ २० ॥ त्रिवर्गो धर्मार्थकामाः । कृत्येषु कर्तुं योग्येषु कर्मसु वर्तते उत्तममध्यमाधमभावेन वर्तते नतु हीयते अधममध्यमोत्तमभावेनेत्यर्थः ॥ २१ ॥ सुधा वैश्वदेवशेषः ॥ २४ ॥ अयोनीन् अकृतदारान् । अग्नियोनीन् दाराग्निहोत्रयुतान् । ब्रह्मणो वेदस्य योनीन् आश्रयभूतान् । अब्योनीनग्नियोनींश्चेति थ ध. पाठः ॥ २५ ॥ लोकज्येष्ठाञ्ज्ञाननिष्ठानिति थ. ध. पाठः ॥२६॥ स्वाध्याये सर्वे यज्ञा अन्तर्भवन्तीत्यर्थः ॥३१॥ षट्षष्टितमोऽध्यायः ॥६६॥

* अयमध्यायो झ. पाठ एव दृश्यते ।

किं तस्य भरतश्रेष्ठ फलं भवति तत्त्वतः ॥ २
भीष्म उवाच ।
इदं शृणु महाप्राज्ञ धर्मपुत्र महायशः ।
इतिहासं पुरावृत्तं शरणार्थं महाफलम् ॥ ३
प्रपात्यमानः श्येनेन कपोतः प्रियदर्शनः ।
वृषदर्भं महाभागं नरेन्द्रं शरणं गतः ॥ ४
स तं दृष्ट्वा विशुद्धात्मा त्रासादङ्कमुपागतम् ।
आश्वास्याश्वसिहीत्याह न तेऽस्ति भयमण्डज ॥ ५
भयं ते सुमहत्कस्मात्कुत्र किं वा कृतं त्वया ।
येन त्वमिह संप्राप्तो विसंज्ञो भ्रान्तचेतनः ॥ ६
नवनीलोत्पलापीड चारुवर्ण सुदर्शन ।
दाडिमाशोकपुष्पाक्ष मा त्रसस्वाभयं तव ॥ ७
मत्सकाशमनुप्राप्तं न त्वां कश्चित्समुत्सहेत् ।
मनसा ग्रहणं कर्तुं रक्षाध्यक्षपुरस्कृतम् ॥ ८
काशिराज्यं तदद्यैव त्वदर्थं जीवितं तथा ।
त्यजेयं भव विस्रब्धः कपोत न भयं तव ॥ ९
श्येन उवाच ।
ममैतद्विहितं भक्ष्यं न राजंस्त्रातुमर्हसि ।
अतिक्रान्तं च प्राप्तं च प्रयत्नाच्चोपपादितम् ॥ १०
मांसं च रुधिरं चास्य मज्जा मेदश्च मे हितम् ।
परितोषकरो ह्येष मम माऽस्याग्रतो भव ॥ ११
तृष्णा मे बाधतेऽत्युग्रा क्षुधा निर्दहतीव माम् ।
मुञ्चैनं नहि शक्ष्यामि राजन्मन्दयितुं क्षुधाम् ॥ १२
मया ह्यनुसृतो ह्येष मत्पक्षनखविक्षतः ।
किंचिदुच्छ्वसनिःश्वासं न राजन्गोप्तुमर्हसि ॥ १३
यदि स्वविषये राजन्प्रभुस्त्वं रक्षणे नृणाम् ।
खेचरस्य तृषार्तस्य न त्वं प्रभुरथोत्तम ॥ १४
यदि वैरिषु भृत्येषु स्वजनव्यवहारयोः ।
विषयेष्विन्द्रियाणां च आकाशे मा पराक्रम ॥ १५
प्रभुत्वं हि पराक्रम्य सम्यक् पक्षहरेषु ते ।
यदि त्वमिह धर्मार्थी मामपि द्रष्टुमर्हसि ॥ १६
भीष्म उवाच ।
श्रुत्वा श्येनस्य तद्वाक्यं राजर्षिर्विस्मयं गतः ।
संभाव्य चैनं तद्वाक्यं तदर्थी प्रत्यभाषत ॥ १७
राजोवाच ।
गोवृषो वा वराहो वा मृगो वा महिषोऽपि वा ।
त्वदर्थमद्य क्रियतां क्षुधाप्रशमनाय ते ॥ १८
शरणागतं न त्यजेयमिति मे व्रतमाहितम् ।
न मुञ्चति ममाङ्गानि द्विजोऽयं पश्य वै द्विज ॥ १९
श्येन उवाच ।
न वराहं न चोक्षाणं न चान्यान्विविधान्द्विजान् ।
भक्षयामि महाराज किमन्नाद्येन तेन मे ॥ २०
यस्तु मे विहितो भक्ष्यः स्वयं देवैः सनातनः ।
श्येनाः कपोतान्खादन्ति स्थितिरेषा सनातनी ॥ २१
उशीनर कपोते तु यदि स्नेहस्तवानघ ।
ततस्त्वं मे प्रयच्छाद्य स्वमांसं तुलया धृतम् ॥ २२
राजोवाच ।
महाननुग्रहो मेऽद्य यस्त्वमेवमिहात्थ माम् ।
बाढमेव करिष्यामीत्युक्त्वाऽसौ राजसत्तमः ॥ २३
उत्कृत्योत्कृत्य मांसानि तुलया समतोलयत् ।
अन्तःपुरे ततस्तस्य स्त्रियो रत्नविभूषिताः ॥ २४
हाहाभूता विनिष्क्रान्ताः श्रुत्वा परमदुःखिताः ।
तासां रुदितशब्देन मन्त्रिभृत्यजनस्य च ॥ २५
बभूव सुमहान्नादो मेघगम्भीरनिःस्वनः ।
निरुद्धं गगनं सर्वं व्यभ्रं मेघैः समन्ततः ॥ २६
मही प्रचलिता चासीत्तस्य सत्येन कर्मणा ॥ २७
स राजा पार्श्वतश्चैव बाहुभ्यामूरुतश्च यत् ।
तानि मांसानि संछिद्य तुलां पूरयतेऽशनैः ।
तथापि न समस्तेन कपोतेन बभूव ह ॥ २८
अस्थिभूतो यदा राजा निर्मांसो रुधिरस्रवः ।
तुलां ततः समारूढः स्वं मांसक्षयमुत्सृजन् ॥ २९

---

प्रपात्यमान आकाशादिति शेषः । वृषदर्भमौशीनरं शिबिम् ॥ ४ ॥ नव नील च यदुत्पलं तस्याऽऽपीड इवालंकारभूत ॥ ७ ॥ अतिक्रान्त गतप्रायजीवितम् ॥ १० ॥ यदि वैर्यादिषु पराक्रमसे तद्युक्त न त्वाकाशे आकाशचारिषु ॥ १५ ॥ पक्षहरेष्वाज्ञाभङ्गिषु शत्रुषु ॥ १६ ॥ तदर्थी कपोतार्थी ॥ १७ ॥ द्विजः पक्षी ॥ १९ ॥ अशनैः शीघ्रम् ॥ २८ ॥ मांसक्षयं

ततः सेन्द्रास्त्रयो लोकास्तं नरेन्द्रमुपस्थिताः ।
भेर्यश्चाकाशगास्तत्र वादिता देवदुन्दुभिः ॥ ३०
अमृतनावामेक्तश्च वृषदर्भो नरेश्वरः ।
दिव्यैश्च सुसुखैर्माल्यैरभिवृष्टः पुनःपुनः ॥ ३१
देवगन्धर्वसंघातैरप्सरोभिश्च सर्वतः ।
नृत्तश्चैवोपगीतश्च पितामह इव प्रभुः ॥ ३२
हेमप्रासादमंबाधं मणिकाञ्चनतोरणम् ।
सर्वैडूर्यमणिस्तम्भं विमानं समधिष्ठितः ॥ ३३
स राजर्षिगतः स्वर्गं कर्मणा तेन शाश्वतम् ।
शरणागतेषु चैवं त्वं कुरु सर्वं युधिष्ठिर ॥ ३४
भक्तानामनुरक्तानामाश्रितानां च रक्षिता ।
दयावान्सर्वभूतेषु परत्र सुखमेधते ॥ ३५
साधुवृत्तो हि यो राजा सद्वृत्तमनुतिष्ठति ।
किं न प्राप्तं भवेत्तेन स्वव्याजेनेह कर्मणा ॥ ३६
स राजर्षिर्विशुद्धात्मा धीरः सत्यपराक्रमः ।
काशीनामीश्वरः ख्यातस्त्रिषु लोकेषु कर्मणा ॥ ३७
योऽप्यन्यः कारयेदेवं शरणागतरक्षणम् ।
सोपि गच्छेत तामेव गतिं भरतसत्तम ॥ ३८
इदं वृत्तं हि राजर्षेर्वृषदर्भस्य कीर्तयन् ।
पूतात्मा वै भवेल्लोके शृणुयाद्यश्च नित्यशः ॥ ३९

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

## अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

भीष्मेण युधिष्ठिरंप्रति ब्राह्मणमहिमकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
किं राज्ञः सर्वकृत्यानां गरीयः स्यात्पितामह ।
कुर्वन्किं कर्म नृपतिरुभौ लोकौ समश्नुते ॥ १
भीष्म उवाच ।
एतद्राज्ञः कृत्यतममभिषिक्तस्य भारत ।
ब्राह्मणानां रक्षणं च पूजा च सुखमिच्छतः ॥ २
कर्तव्यं पार्थिवेन्द्रेण तथैव भरतर्षभ ।
श्रोत्रियान्ब्राह्मणान्वृद्धान्नित्यमेवाभिपूजयेत् ॥ ३
पौरजानपदांश्चापि ब्राह्मणांश्च बहुश्रुतान् ।
सान्त्वेन भोगदानेन नमस्कारैः सदाऽर्चयेत् ॥ ४
एतत्कृत्यतमं राज्ञो नित्यमेवोपलक्षयेत् ।
यथाऽऽत्मानं यथा पुत्रांस्तथैतान्प्रतिपालयेत् ॥ ५
ये चाप्येषां पूज्यतमास्तान्दृढं प्रतिपूजयेत् ।
तेषु शान्तेषु तद्राष्ट्रं सर्वमेव विराजते ॥ ६
ते पूज्यास्ते नमस्कार्या मान्यास्ते पितरो यथा ।
तेष्वेव यात्रा लोकानां भूतानामिव वासवे ॥ ७
अभिचारैरुपायैश्च दहेयुरपि चेतसा ।
निःशेषं कुपिताः कुर्युरुग्राः सत्यपराक्रमाः ॥ ८
नान्तमेषां प्रपश्यामि न दिशश्चाप्यपावृताः ।
कुपिताः समुदीक्षन्ते दावेष्वग्निशिखा इव ॥ ९
'मान्यास्तेषां साधवो ये न निन्द्याश्चाप्यसाधवः ।'
बिभ्यत्येषां साहसिका गुणास्तेषामतीव हि ।
कूपा इव तृणच्छन्ना विशुद्धा द्यौरिवापरे ॥ १०
प्रसह्यकारिणः केचित्कार्पासमृदवोऽपरे ।
सन्ति चैषामतिशठास्तथैवान्ये तपस्विनः ॥ ११
कृषिगोरक्ष्यमप्येके भैक्ष्यमन्येऽप्यनुष्ठिताः ।
चोराश्चान्येऽनृताश्चान्ये तथाऽन्ये नटनर्तकाः ॥ १२
सर्वकर्मसहाश्चान्ये पार्थिवेष्वितरेषु च ।
विविधाचारयुक्ताश्च ब्राह्मणा भरतर्षभ ॥ १३
नानाकर्मसु रक्तानां बहुकर्मोपजीविनाम् ।
धर्मज्ञानां सतां तेषां नित्यमेवानुकीर्तयेत् ॥ १४
पितृणां देवतानां च मनुष्योरगरक्षसाम् ।

मासालय शरीरम् ॥ २९ ॥ नृत्तः नृत्येन तोषितः । एवमुपगीतः ॥ ३२ ॥ साधुवृत्तः सुशीलः । सद्वृत्त शिष्टाचारम् । स्वव्याजेन सुतरां निष्कपटेन॥३६॥ सप्तषष्टितमोऽध्यायः॥६७॥ एषा ब्राह्मणानां मध्ये ॥ ६ ॥ वासवे पर्जन्ये ॥ ७ ॥

अभिचारैः श्येनयागादिभिः । उपायैः कौलिकशास्त्रप्रसिद्धैः । चेतसा सङ्कल्पमात्रेण ॥ ८ ॥ एषां एभ्यः. साहसिका अकार्यकारिणोऽपि बिभ्यति किमुत विवेकिनः ॥ १० ॥

पुराऽप्येते महाभागा ब्राह्मणा वै जनाधिप ॥१५
नैते देवैर्न पितृभिर्न गन्धर्वैर्न राक्षसैः ।
नासुरैर्न पिशाचैश्च शक्या जेतुं द्विजातयः ॥१६
अदैवं दैवतं कुर्युर्दैवतं चाप्यदैवतम् ।
यमिच्छेयुः स राजा स्याद्यं द्विष्युः स पराभवेत् १७
परिवादं च ये कुर्युर्ब्राह्मणानामचेतसः ।
सत्यं ब्रवीमि ते राजन्विनश्येयुर्न संशयः ॥ १८
निन्दाप्रशंसाकुशलाः कीर्त्यकीर्तिपरायणाः ।
परिकुप्यन्ति ते राजन्सततं द्विषतां द्विजाः ॥१९
ब्राह्मणा यं प्रशंसन्ति पुरुषः स प्रवर्धते ।
ब्राह्मणैर्यः पराक्रुष्टः पराभूयात्क्षणाद्धि सः ॥२०
शका यवनकाम्भोजास्तास्ताः क्षत्रियजातयः ।
वृषलत्वं परिगता ब्राह्मणानामदर्शनात् ॥ २१
द्राविडाश्च कलिङ्गाश्च पुलिन्दाश्चाप्युशीनराः ।
कोलिसर्पा महिषकास्तास्ताः क्षत्रियजातयः ॥ २२
वृषलत्वं परिगता ब्राह्मणानामदर्शनात्
श्रेयान्पराजयस्तेभ्यो न जयो जयतांवर ॥ २३
यस्तु सर्वमिदं हन्याद्ब्राह्मणं च न तत्समम् ।
ब्रह्मवध्या महान्दोष इत्याहुः परमर्षयः ॥ २४
परिवादो द्विजातीनां न श्रोतव्यः कथंचन ।
आसीताधोमुखस्तूष्णीं समुत्थाय व्रजेत वा ॥२५
न स जातो जनिष्यो वा पृथिव्यामिह कश्चन ।
यो ब्राह्मणविरोधेन सुखं जीवितुमुत्सहेत् ॥ २६
दुर्ग्राह्यो मुष्टिना वायुर्दुःस्पर्शः पाणिना शशी ।
दुर्धरा पृथिवी मूर्ध्ना दुर्जया ब्राह्मणा भुवि ॥२७

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

## एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

भीष्मेण युधिष्ठिरंप्रति ब्राह्मणमाहात्म्यप्रतिपादकपृथ्वीवासुदेवसंवादानुवादः ॥ १ ॥

भीष्म उवाच ।
ब्राह्मणानेव सततं भृशं संपरिपूजयेत् ।
एते हि सोमराजान ईश्वराः सुखदुःखयोः ॥ १
एते भोगैरलंकारैरन्यैश्चैव किमिच्छकैः ।
सदा पूज्या नमस्कारै रक्ष्याश्च पितृवन्नृपैः ।
ततो राष्ट्रस्य शान्तिर्हि भूतानामिव वासवात् ॥२
ज्ञानवान्ब्रह्मवर्चस्वी राष्ट्रे वै ब्राह्मणः शुचिः ।
महारथश्च राजन्य एष्टव्यः शत्रुतापनः ॥ ३
ब्राह्मणं जातिसंपन्नं धर्मज्ञं संशितव्रतम् ।
भोजयीत गृहे राजन्न तस्मात्परमस्ति वै ॥ ४
ब्राह्मणेभ्यो हविर्दत्तं प्रतिगृह्णन्ति देवताः ।
पितरः सर्वभूतानां नैतेभ्यो विद्यते परम् ॥ ५
आदित्यश्चन्द्रमा विष्णुः शंकरोऽग्निः प्रजापतिः ।
सर्वे ब्राह्मणमाविश्य सदाऽन्नमुपभुञ्जते ॥ ६
न तस्याश्नन्ति पितरो यस्य विप्रा न भुञ्जते ।
देवाश्चाप्यस्य नाश्नन्ति पापस्य ब्राह्मणद्विषः ॥ ७
ब्राह्मणेषु तु तुष्टेषु प्रीयन्ते पितरः सदा ।
तथैव देवता राजन्नात्र कार्या विचारणा ॥ ८
तथैव तेऽपि प्रीयन्ते येषां भवति तद्धविः ।
न च प्रेत्य विनश्यन्ति गच्छन्ति च परां गतिम् ॥९
येनयेनैव हविषा ब्राह्मणांस्तर्पयेन्नरः ।
तेनतेनैव प्रीयन्ते पितरो देवतास्तथा ॥ १०
ब्राह्मणादेव तद्भूतं प्रभवन्ति यतः प्रजाः ।
यतश्चायं प्रभवति प्रेत्य यत्र च गच्छति ॥ ११
वेदैष मार्गं स्वर्गस्य तथैव नरकस्य च ।
आगतानागते चोभे ब्राह्मणो द्विपदांवरः ॥ १२

एते पूज्या इति शेषः । यतो महाभागा. ॥ १५ ॥ परायणाः हेतवः ॥ १९ ॥ अदर्शनात् अननुग्रहात् ॥ २१ ॥ अष्टषष्टितमोऽध्यायः ॥ ६८ ॥
सोमो राजा येषा ते सोमराजानः ॥ १ ॥ किमिच्छसीति प्रश्नपूर्वकं यत्तदिष्टं दीयते तत्किमिच्छकम् ॥ २ ॥ चन्द्रमा वायुरापो भूरम्बरं दिशः इति झ पाठः ॥ ६ ॥ तेपि दातारोपि । तत् प्रदेयं द्रव्यम् ॥ ९ ॥ तद्यज्ञादिकम् । भूतमुत्पन्नम् । ब्राह्मणो वेद तद्भूतमिति थ. ध. पाठः ॥ ११ ॥

ब्राह्मणो द्विपदां श्रेष्ठः स्वधर्मं चैव वेद यः ।
ये चैनमनुवर्तन्ते ते न यान्ति पराभवम् ।
न ते प्रेत्य विनश्यन्ति गच्छन्ति न पराभवम् ॥१३
यद्ब्राह्मणमुखात्प्राप्तं प्रतिगृह्णन्ति वै वचः ।
कृतात्मानो महात्मानस्ते न यान्ति पराभवम् ॥१४
क्षत्रियाणां प्रतपतां तेजसा च बलेन च ।
ब्राह्मणेष्वेव शाम्यन्ति तेजांसि च बलानि च ॥१५
भृगवस्तालजङ्घांश्च नीपानाङ्गिरसोऽजयन् ।
भरद्वाजो वैतहव्यानैलांश्च भरतर्षभ ॥ १६
चित्रायुधांश्चाप्यजयन्नेते कृष्णाजिनध्वजाः ।
प्रक्षिप्याथ च कुम्भान्वै पारगामिनमारभेत् ॥१७
यत्किंचित्कथ्यते लोके श्रूयते पठ्यतेऽपि वा ।
सर्वं तद्ब्राह्मणेष्वेव गूढोऽग्निरिव दारुषु ॥ १८
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
संवादं वासुदेवस्य पृथ्व्याश्च भरतर्षभ ॥ १९
वासुदेव उवाच ।
मातरं सर्वभूतानां पृच्छे त्वां संशयं शुभे ।
केनस्वित्कर्मणा पापं व्यपोहति नरो गृही ॥ २०
पृथिव्युवाच ।
ब्राह्मणानेव सेवेत पवित्रं ह्येतदुत्तमम् ।
ब्राह्मणान्सेवमानस्य रजः सर्वं प्रणश्यति ।
अतो भूतिरतः कीर्तिरतो बुद्धिः प्रजायते ॥ २१
महारथश्च राजन्य एष्टव्यः शत्रुतापनः ।
इति मां नारदः प्राह सततं सर्वभूतये ॥ २२
ब्राह्मणं जातिसंपन्नं धर्मज्ञं संशितं शुचिम् ।
अपरेषां परेषां च परेभ्यश्चैव ये परे ॥ २३
ब्राह्मणा यं प्रशंसन्ति स मनुष्यः प्रवर्धते ।
अथ यो ब्राह्मणान्क्रुष्टः पराभवति सोचिरात् ॥२४
यथा महार्णवे क्षिप्त आमलोष्टो विनश्यति ।
तथा दुश्चरितं विप्रे पराभावाय कल्पते ॥ २५
पश्य चन्द्रे कृतं लक्ष्म समुद्रे लवणोदकम् ।
तथा भगसहस्रेण महेन्द्रः परिचिह्नितः ॥ २६
तेषामेव प्रभावेन सहस्रनयनो ह्यसौ ।
शतक्रतुः समभवत्पश्य माधव यादृशम् ॥ २७
इच्छन्कीर्तिं च भूतिं च लोकांश्च मधुसूदन ।
ब्राह्मणानुमते तिष्ठेत्पुरुषः शुचिरात्मवान् ॥ २८
भीष्म उवाच ।
इत्येतद्वचनं श्रुत्वा मेदिन्या मधुसूदनः ।
साधुसाध्विति कौरव्य मेदिनीं प्रत्यपूजयत् ॥२९
एतां श्रुत्वोपमां पार्थ प्रयतो ब्राह्मणर्षभान् ।
सततं पूजयेथास्त्वं ततः श्रेयोऽभिपत्स्यसे ॥ ३०

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

## सप्ततितमोऽध्यायः ॥ ७० ॥

भीष्मेण युधिष्ठिरंप्रति ब्राह्मणमाहात्म्यकथनम् ॥ १ ॥

भीष्म उवाच ।
जन्मनैव महाभागो ब्राह्मणो नाम जायते ।
नमस्यः सर्वभूतानामतिथिः प्रश्रिताग्रभुक् ॥ १
सर्वेषां सुहृदस्तात ब्राह्मणाः सुमनोमुखाः ।
'सर्वानेते हनिष्यन्ति ब्राह्मणा जातमन्यवः ।'
गीर्भिर्मङ्गलयुक्ताभिरनुध्यायन्ति पूजिताः ॥ २
सर्वान्नो द्विषतस्तात ब्राह्मणा जातमन्यवः ।
गीर्भिर्दारुणयुक्ताभिर्हन्युश्चैते ह्यपूजिताः ॥ ३

---

कुम्भान् पृथिवीं ब्राह्मणाय प्रक्षिप्य दत्त्वा पारगामिन परलोकहितं कर्म आरभेदाचरेत् । भान् दीप्तिं कुर्वन्नुभयलोके इति शेषः । पुरगामिनमाहरन्निति थ. पाठः ॥ १७ ॥ अपरे ब्राह्मण सर्वभूतये इच्छेदित्याहुरिति विपरिणामेनानुषङ्गः ॥ २३ ॥ कुष्टः कोशति । कर्तरि क्तः ॥ २४ ॥ एकोनसप्ततितमोऽध्यायः ॥६९॥

जन्मनैव संस्काराद्यभावेऽपि ब्राह्मणो नमस्य एव । प्रश्रितं पक्वमन्नं तत्स्याग्रे भोक्तुमर्हः प्रश्रिताग्रभुक् ॥ १ ॥ सुमनसां देवाना मुखमिव भूताः सुमनोमुखाः ॥ २ ॥ नोऽस्माकं द्विषतः शत्रून् । तैरपूजिता ब्राह्मणा हन्युरिति संबन्धः ॥ ३ ॥

अत्र गाथाः पुरा गीताः कीर्तयन्ति पुराविदः ।
सृष्ट्वा द्विजातीन्धाता हि यथापूर्वं समादधत् ॥४
न वोऽन्यदिह कर्तव्यं किंचिदूर्ध्वायनं विधि ।
गुप्तो गोपायते ब्रह्मा श्रेयो वस्तेन शोभनम् ॥५
स्वमेव कुर्वतां कर्म श्रीर्वो ब्राह्मी भविष्यति ।
प्रमाणं सर्वभूतानां प्रग्रहाश्च भविष्यथ ॥ ६
न शौद्रं कर्म कर्तव्यं ब्राह्मणेन विपश्चिता ।
शौद्रं हि कुर्वतः कर्म ब्राह्मी श्रीरुपरुध्यते ॥ ७
श्रीश्च बुद्धिश्च तेजश्च विभूतिश्च प्रतापिनी ।
स्वाध्यायेनैव माहात्म्यं विपुलं प्रतिपत्स्यथ ॥ ८
हुत्वा चाहवनीयस्थं महाभाग्ये प्रतिष्ठिताः ।
अग्रभोज्याः प्रसूतीनां श्रिया ब्राह्म्याऽनुकल्पिताः
श्रद्धया परया युक्ता ह्यनभिद्रोहलब्धया ।
दमस्वाध्यायनिरताः सर्वान्कामानवाप्स्यथ ॥ १०
यच्चैव मानुषे लोके यच्च देवेषु किंचन ।
सर्वं वस्तपसा साध्यं ज्ञानेन नियमेन च ॥ ११
'युष्मत्संमाननां प्रीतिं पावनैः क्षत्रिया भृशम् ।
अमुत्रेह समायान्ति वैश्यशूद्राधिकास्तथा ॥ १२
अरक्षिताश्च युष्माभिर्विरुद्धा यान्ति विप्लवम्
युष्मत्तेजोधृता लोकास्तद्रक्ष्यथ जगत्त्रयम् ॥' १३
इत्येवं ब्रह्मगीतास्ते समाख्याता मयाऽनघ ।
विप्रानुकम्पार्थमिदं तेन प्रोक्तं हि धीमता ॥१४
भूयस्तेषां बलं मन्ये यथा राजस्तपस्विनः ।
दुरासदाश्च चण्डाश्च तपसा क्षिप्रकारिणः ॥ १५
सन्त्येषां सिंहसत्त्वाश्च व्याघ्रसत्त्वास्तथाऽपरे ।
वराहमृगसत्त्वाश्च गजसत्त्वास्तथाऽपरे ॥ १६
सर्पस्पर्शसमाः केचित्तथाऽन्ये मकरस्पृशः ।
विभाष्य घातिनः केचित्तथा चक्षुर्हणोऽपरे ॥१७
सन्ति चाशीविषसमाः सन्ति मन्दास्तथाऽपरे ।
विविधानीह वृत्तानि ब्राह्मणानां युधिष्ठिर ॥१८
मेकला द्राविडा लाटाः पौण्ड्राः कान्वशिरास्तथा ।
शौण्डिका दरदा दार्वाश्चोराः शबरबर्बराः ॥ १९
किराता यवनाश्चैव तास्ताः क्षत्रियजातयः ।
वृषलत्वमनुप्राप्ता ब्राह्मणानामदर्शनात् ॥ २०
ब्राह्मणानां परिभवादसुराः सलिलेशयाः ।
ब्राह्मणानां प्रसादाच्च देवाः स्वर्गनिवासिनः ॥२१
अशक्यं स्प्रष्टुमाकाशमचाल्यो हिमवान्गिरिः ।
अवार्या सेतुना गङ्गा दुर्जया ब्राह्मणा भुवि ॥२२
न ब्राह्मणविरोधेन शक्या शास्तुं वसुंधरा ।
ब्राह्मणा हि महात्मानो देवानामपि देवताः ॥२३
तान्पूजयस्व सततं दानेन परिचर्यया ।
यदीच्छसि महीं भोक्तुमिमां सागरमेखलाम् ॥२४
प्रतिग्रहेण तेजो हि विप्राणां शाम्यतेऽनघ
प्रतिग्रहं ये नेच्छेयुस्तेऽपि रक्ष्यास्त्वया नृप ॥२५

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि सप्ततितमोऽध्यायः ॥ ७० ॥

## एकसप्ततितमोऽध्यायः ॥ ७१ ॥

भीष्मेण युधिष्ठिरंप्रति ब्राह्मणमाहात्म्यप्रतिपादकशक्रशम्बरसंवादानुवादः ॥ १ ॥

भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
शक्रशम्बरसंवादं तन्निबोध युधिष्ठिर ॥ १
शक्रो ह्यज्ञातरूपेण जटी भूत्वा सुदारुणः ।
विप्ररूपं समास्थाय प्रश्नं पप्रच्छ शम्बरम् ॥ २
केन शम्बर वृत्तेन स्वजात्यानधितिष्ठसि ।
श्रेष्ठं त्वां केन मन्यन्ते तद्वै प्रब्रूहि तत्त्वतः ॥ ३
शम्बर उवाच ।

---

समादधत् समाधिं नियमं कृतवान् ॥ ४ ॥ ब्रह्मा ब्राह्मणः । वः शोभनं श्रेयस्तेनैव ॥ ५ ॥ प्रग्रहाः दमनक्षमा रज्जव इव ॥ ६ ॥ शौद्रं कर्म सेवा ॥ ७ ॥ श्रीश्चेत्यादेः श्रियमित्यादिरर्थः ॥ ८ ॥ आहवनीयस्थं देवतागणं प्रसूतीनां शिशुभ्योऽप्यग्रे भोज्यं येषां ते । ब्राह्म्या श्रिया विद्ययाऽनुकल्पिताः पात्रीभूताः ॥ ९ ॥ चण्डत्वादिदोषवन्तोपि पूज्या एवेत्यर्थः ॥ १५ ॥ कार्पासमृदवः केचिदिति थ. पाठः ॥ १७ ॥ अदर्शनात् अननुग्रहात् ॥ २० ॥ सप्ततितमोऽध्यायः ॥ ७० ॥

नामृयामि सदा विप्रान्ब्राह्ममेव च मे मतम् ।
शास्त्राणि वदतो विप्रान्संमन्यामि यथासुखम् ॥४
श्रुत्वा च नावजानामि नापराध्यामि कर्हिचित् ।
अभ्यर्च्याभ्यनुपृच्छामि पादौ गृह्णामि धीमताम् ५
ते विस्रब्धाः प्रभाषन्ते संयच्छन्ति च मां सदा ।
प्रमत्तेष्वप्रमत्तोऽस्मि सदा सुप्तेषु जागृमि ॥ ६
ते मां शास्त्रपथे युक्तं ब्रह्मण्यमनसूयकम् ।
समासिञ्चति शास्तारः क्षौद्रं मध्विव मक्षिकाः ॥७
यच्च भाषन्ति संतुष्टास्तच्च गृह्णाम्यमायया ।
समाधिमात्मनो नित्यमनुलोममचिन्तयम् ॥ ८
सोऽहं वागग्रमृष्टानां रसानामवलेहकः ।
स्वजात्यानधितिष्ठामि नक्षत्राणीव चन्द्रमाः ॥९
एतत्पृथिव्याममृतमेतच्चक्षुरनुत्तमम् ।
यद्ब्राह्मणमुखाच्छास्त्रमिह श्रुत्वा प्रवर्तते ॥ १०
एतत्कारणमाज्ञाय दृष्ट्वा देवासुरं पुरा ।
युद्धं पिता मे हृष्टात्मा विस्मितः समपद्यत ॥११
दृष्ट्वा च ब्राह्मणानां तु महिमानं महात्मनाम् ।
पर्यपृच्छत्कथममी सिद्धा इति निशाकरम् ॥ १२

सोम उवाच ।
ब्राह्मणास्तपसा सर्वे सिध्यन्ते वाग्बलाः सदा ।
भुजवीर्याश्च राजानो वागस्त्राश्च द्विजातयः ॥१३
प्रवसन्वाप्यधीयीत ब्राह्मीर्दुर्वसतीर्वसन् ।
निर्मन्युरपि निर्वाणो यतिः स्यात्समदर्शनः ॥१४
अपि च ज्ञानसंपन्नः सर्वान्वेदान्पितुर्गृहे ।
श्लाघमान इवाधीयाद्ग्राम्य इत्येव तं विदुः ॥१५
भूमिरेतौ निगिरति सर्पो बिलशयानिव ।
राजानं चाप्ययोद्धारं ब्राह्मणं चाप्रवासिनम् ॥१६
अभिमानः श्रियं हन्ति पुरुषस्याल्पमेधसः ।
गर्भेण दुष्यते कन्या गृहवासेन च द्विजः ॥ १७
'विद्याविदो लोकविदस्तपोदमसमन्विताः ।
नित्यपूज्याश्च वन्द्याश्च द्विजा लोकद्वयेच्छुभिः' १८
इत्येतन्मे पिता श्रुत्वा सोमादद्भुतदर्शनात् ।
ब्राह्मणान्पूजयामास तथैवाहं महाव्रतान् ॥ १९
भीष्म उवाच ।
श्रुत्वैतद्वचनं शक्रो दानवेन्द्रमुखाच्च्युतम् ।
द्विजान्संपूजयामास महेन्द्रत्वमवाप च ॥ २०

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि एकसप्ततितमोऽध्यायः ॥ ७१ ॥

## द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

भीष्मेण युधिष्ठिरंप्रति पात्रलक्षणादिकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
अपूर्वं वा भवेत्पात्रमथवाऽपि चिरोषितम् ।
दूरादभ्यागतं वाऽपि किं पात्रं स्यात्पितामह ॥१
भीष्म उवाच ।
क्रिया भवति केषांचिदुपांशुव्रतमुत्तमम् ।
यो नो याचेत यत्किंचित्सर्वं दद्याम इत्यपि ॥२

अपीडयन्भृत्यवर्गमित्येवमनुशुश्रुम ।
पीडयन्भृत्यवर्गं हि आत्मानमपकर्षति ॥ ३
अपूर्वं चापि यत्पात्रं यच्चापि स्याच्चिरोषितम् ।
दूरादभ्यागतं चापि तत्पात्रं न विदुर्बुधाः ॥ ४
युधिष्ठिर उवाच ।
अपीडया च भूतानां धर्मस्याहिंसया तथा ।

---

मां मयि । मधु अमृततुल्या विद्यां समासिञ्चन्ति क्षौद्रं मधुपटलम् मक्षिका मध्विवेत्यावृत्त्या योज्यम् ॥ ७ ॥ समाधिं ब्राह्मणेषु निष्ठाम् ॥ ८ ॥ वागग्रे जिह्वाग्रे मृष्ट विद्यामृत येषा ब्राह्मणानाम् । रसानामुक्तिसुधानाम् ॥ ९ ॥ ब्राह्मीर्वेदार्थाः दुर्वसतीः गुरुकुलवासक्लेशात् । अपि अपिवा । सति वैराग्ये यतिः स्यात् ॥ १४ ॥ पितुर्गृहे वेदाध्ययन निन्दति अपीति ॥ १५ ॥ अप्रवासिनं वेदार्थ ग्रामान्तरे वा समकुर्वाणम् ॥ १६ ॥ एकसप्ततितमोऽध्यायः ॥ ७१ ॥

कश्चिद्यज्ञार्थं कश्चित् गुरुदक्षिणार्थं कश्चित्कुटुम्बभरणार्थमिति एवरूपा क्रिया केषांचित्पात्रत्वे प्रधान भवति केषांचिदुपांशुव्रत मौन पारिव्राज्यमिति । दद्यामः ददाम इत्येव वक्तव्य नत्वेतेषु कश्चित्प्रत्याचक्षीतेत्यर्थः ॥ २ ॥

पात्रं विद्यामतत्त्वेन यस्मै दत्तं न संतपेत् ॥ ५
भीष्म उवाच ।
ऋत्विक्पुरोहिताचार्याः शिष्यसंबन्धिबान्धवाः ।
सर्वे पूज्याश्च मान्याश्च श्रुतवन्तोऽनसूयकाः ॥ ६
अतोऽन्यथा वर्तमानाः सर्वे नार्हन्ति सत्क्रियाम् ।
तस्माद्गुणैः परीक्षेत पुरुषान्प्रणिधाय वै ॥ ७
अक्रोधः सत्यवचनमहिंसा दम आर्जवम् ।
अद्रोहोऽनभिमानश्च ह्रीस्तितिक्षा दमः शमः ॥८
यस्मिन्नेतानि दृश्यन्ते न चाकार्याणि भारत ।
स्वभावतो निविष्टानि तत्पात्रं मानमर्हति ॥ ९
तथा चिरोषितं चापि संप्रत्यागतमेव च ।
अपूर्वं चैव पूर्वं च तत्पात्रं मानमर्हति ॥ १०
अप्रामाण्यं च वेदानां शास्त्राणां चाभिलङ्घनम् ।
अव्यवस्था च सर्वत्र एतन्नाशनमात्मनः ॥ ११
भवेत्पण्डितमानी यो ब्राह्मणो वेदनिन्दकः ।
आन्वीक्षिकीं तर्कविद्यामनुरक्तो निरर्थिकाम् ॥ १२
हेतुवादान्ब्रुवन्सत्सु विजेताऽहेतुवादकः ।
आक्रोष्टा चातिवक्ता च ब्राह्मणानां सदैव हि ॥ १३
सर्वाभिशङ्की मूढश्च बालः कटुकवागपि ।
बोद्धव्यस्तादृशस्तात नरं श्वानं हि तं विदुः ॥ १४
यथा श्वा भषितुं चैव हन्तुं चैवावसज्जते ।
एवं संभाषणार्थाय सर्वशास्त्रवधाय च ।
'अल्पश्रुताः कुतर्काश्च दृष्टाः स्पृष्टाः कुपण्डिताः १५
श्रुतिस्मृती चेतिहासपुराणारण्यवेदिनः ।
अनुरुन्ध्याद्बहुज्ञांश्च सारज्ञाश्चैव पण्डिताः ॥' १६
लोकयात्रा च द्रष्टव्या धर्मश्चात्महितानि च ।
एवं नरो वर्तमानः शाश्वतीर्वर्धते समाः ॥ १७
ऋणमुन्मुच्य देवानामृषीणां च तथैव च ।
पितॄणामथ विप्राणामतिथीनां च पञ्चमम् ॥ १८
पर्यायेण विशुद्धो यः सुनिर्णिक्तेन कर्मणा ।
एवं गृहस्थः कर्माणि कुर्वन्धर्मान्न हीयते ॥ १९

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

## त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

भीष्मेण युधिष्ठिरंप्रति स्त्रीस्वभावप्रतिपादकनारदपञ्चचूडासंवादानुवादः ॥ १ ॥

युधिष्ठिर उवाच ।
स्त्रीणां स्वभावमिच्छामि श्रोतुं भरतसत्तम ।
स्त्रियो हि मूलं दोषाणां लघुचित्ता हि ताः स्मृताः १
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
च संवादं पुंश्चल्या पञ्चचूडया ॥ २
लोकाननुचरन्सर्वान्देवर्षिर्नारदः पुरा ।
ददर्शाप्सरस   ह्मीं पञ्चचूडामनिन्दिताम् ॥ ३
ता दृष्ट्वा चारुसर्वाङ्गीं पप्रच्छाप्सरसं मुनिः ।
संशयो हृदि कश्चिन्मे ब्रूहि तन्मे सुमध्यमे ॥ ४
एवमुक्ताऽथ सा विप्रं प्रत्युवाचाथ नारदम् ।
विषये सति वक्ष्यामि समर्थां मन्यसे च माम् ५
नारद उवाच ।
न त्वामविषये भद्रे नियोक्ष्यामि कथंचन ।
स्त्रीणां स्वभावमिच्छामि त्वत्तः श्रोतुं वरानने ॥६
एतच्छ्रुत्वा वचस्तस्य देवर्षेरप्सरोत्तमा ।

---

दत्त प्रदेयवस्त्वभिमानिनी देवता न संतपेत् । विप्रे वेदविवर्जिते । दीयमानं रुदत्यन्नमिति स्मृतेः।अतः कस्तादृश इति प्रश्नः ॥ ५ ॥ मुख्य पात्र विशेषेण श्रुतवन्तोऽनसूयका इति ॥ ६ ॥ तथा अक्रोधादिगुणविशिष्टम् ॥१० ॥ अपात्रताबीजमाह अप्रामाण्यमिति । आत्मनः पात्रताया इति शेषः ॥ ११ ॥ निरर्थिकां श्रुतिविरोधित्वेन मोक्षानुपयोगिनीम् ॥ १२ ॥ अहेतुवादकः शास्त्रोक्तहेतुवादविरोधात् ॥ १३ ॥ बोद्धव्यः अस्पृश्यत्वेनेति शेष. ॥ १४ ॥ धर्मश्चात्महिताय चेति थ. ध. पाठः ॥ १७ ॥ देवानामृणं यज्ञेन ऋषीणां वेदाधिगमेन पितॄणां प्रजोत्पादनेन विप्राणां दानमानेनाऽतिथीना सम्यगातिथ्येन चोन्मुच्याऽपाकृत्य कर्माणि कुर्वन्नित्युत्तरेणान्वयः ॥ १८ ॥ द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

लघुचित्ताः वायुवत् चलचित्ता. ॥ १ ॥ ब्राह्मी ब्रह्मलोकस्थाम् ॥ ३ ॥ विषये वक्तु योग्यत्वे ॥ ५ ॥

प्रत्युवाच न शक्ष्यामि स्त्री सती निन्दितुं स्त्रियः॥
विदितास्ते स्त्रियो याश्च यादृशाश्च स्वभावतः।
न मामर्हसि देवर्षे नियोक्तुं कार्य ईदृशे
तामुवाच स देवर्षिः सत्यं वद सुमध्यमे
मृषावादे भवेद्दोषः सत्ये दोषो न विद्यते॥ ९
इत्युक्ता सा कृतमतिरभवच्चारुहासिनी।
स्त्रीदोषाञ्शाश्वतान्सत्यान्भाषितुं संप्रचक्रमे॥१०
कुलीना रूपवत्यश्च नाथवत्यश्च योषितः
मर्यादासु न तिष्ठन्ति स दोषः स्त्रीषु नारद ११
न स्त्रीभ्यः किंचिदन्यद्वै पापीयस्तरमस्ति वै।
स्त्रियो हि मूलं दोषाणां तथा त्वमपि वेत्थ ह॥
समाज्ञातानृद्धिमतः प्रतिरूपान्वशे स्थितान्।
पतीनन्तरमासाद्य नालं नार्यः परीक्षितुम्॥१३
असद्धर्मस्त्वयं स्त्रीणामस्माकं भवति प्रभो।
पापीयसो नरान्यद्वै लज्जां त्यक्त्वा भजामहे १४
स्त्रियं हि यः प्रार्थयते सन्निकर्षं च गच्छति।
ईषच्च कुरुते सेवां तमेवेच्छन्ति योषितः॥ १५
अनर्थित्वान्मनुष्याणां भयात्परिजनस्य च।
मर्यादायाममर्यादाः स्त्रियस्तिष्ठन्ति भर्तृषु॥१६
नासां कश्चिदगम्योस्ति नासां वयसि निश्चयः।
विरूपं रूपवन्तं वा पुमानित्येव भुञ्जते॥ १७
न भयान्नाप्यनुक्रोशान्नार्थहेतोः कथंचन।
न ज्ञातिकुलसंबन्धात्स्त्रियस्तिष्ठन्ति भर्तृषु॥१८
यौवने वर्तमानानां मृष्टाभरणवाससाम्।
नारीणां स्वैरवृत्तीनां स्पृहयन्ति कुलस्त्रियः॥१९
याश्च शश्वद्बहुमता रक्ष्यन्ते दयिताः स्त्रियः।
अपि ताः संप्रसज्जन्ते कुब्जान्धजडवामनैः॥२०
पङ्गुष्वथ च देवर्षे ये चान्ये कुत्सिता नराः।
स्त्रीणामगम्यो लोकेऽस्मिन्नास्ति कश्चिन्महामुने॥
यदि पुंसां गतिर्ब्रह्मन्कथंचिन्नोपपद्यते।
अप्यन्योन्यं प्रवर्तन्ते न हि तिष्ठन्ति भर्तृषु॥२२
दुष्टाचाराः पापरता असत्या मायया वृताः।
अदृष्टबुद्धिबहुलाः प्रायेणेत्यवगम्यताम्॥ २३
अलाभात्पुरुषाणां हि भयात्परिजनस्य च।
वधबन्धभयाच्चापि स्वयं गुप्ता भवन्ति ताः॥२४
चलस्वभावा दुःसेव्या दुर्ग्राह्या भावतस्तथा।
प्राज्ञस्य पुरुषस्येह यथाभावास्तथा स्त्रियः॥ २५
नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः।
नान्तकः सर्वभूतानां न पुंसां वामलोचनाः॥२६
इदमन्यच्च देवर्षे रहस्यं सर्वयोषिताम्।
दृष्ट्वैव पुरुषं ह्यन्यं योनिः प्रक्लिद्यते स्त्रियाः॥२७
कामानामपि दातारं कर्तारं मानसान्त्वयोः।
रक्षितारं न मृष्यन्ति स्वभर्तारमसत्स्त्रियः॥ २८
न कामभोगान्विपुलान्नालंकारार्थसंचयान्।
तथैव बहुमन्यन्ते यथा रत्यामनुग्रहम्॥ २९
अन्तकः शमनो मृत्युः पातालं बडबामुखम्।
क्षुरधारा विषं सर्पो वह्निरित्येकतः स्त्रियः॥ ३०
यतश्च भूतानि महान्ति पञ्च
यतश्च लोका विहिता विधात्रा।
यतः पुमांसः प्रमदाश्च निर्मिता-
स्ततश्च दोषाः प्रमदासु नारद॥ ३१

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि त्रिसप्ततितमोऽध्यायः॥ ७३॥

## चतुःसप्ततितमोऽध्यायः॥ ७४॥

भीष्मेण युधिष्ठिरंप्रति स्त्रीणां दुश्चरितकथनम्॥ १॥

युधिष्ठिर उवाच।
इमे वै मानवा लोके स्त्रीषु सज्जन्त्यभीक्ष्णशः।
मोहेन परमाविष्टा देवदृष्टेन कर्मणा॥ १
स्त्रियश्च पुरुषेष्वेव प्रत्यक्षं लोकसाक्षिकम्।

---

नियोक्तुं प्रश्न ईदृशे इति ट. थ. ध. पाठः॥ ८॥ कृतमतिः वक्ष्यामीति कृतनिश्चयाऽभवत्॥१०॥ गतिः प्राप्तिः। अन्योन्य कृत्रिमलिङ्गधारिण्यो भूत्वा मैथुनार्थं प्रवर्तन्ते। एतच्च लोकप्रसिद्धम्। भर्तृषु दूरस्थेषु इति शेषः। नहि तिष्ठन्ति धैर्ये इति शेषः॥ २२॥ भयात्परिभवस्य चेति थ. ध. पाठः॥ २४॥ काष्ठानां काष्ठैः॥ २६॥ त्रिसप्ततितमोऽध्यायः॥ ७३॥

अत्र मे संशयस्तात्रो हृदि सर्पारवनन ॥ २
कथमासां नराः सङ्गं कुर्वते कुरुनन्दन ।
स्त्रियो वातेषु रज्यन्ते विरज्यन्ते च ताः पुनः ॥ ३
इति ताः पुरुषव्याघ्र कथं शक्यास्तु रक्षितुम् ।
प्रमदाः पुरुषेणह तन्मे व्याख्यातुमर्हसि ॥ ४
भीष्म उवाच ।
एता हि स्त्रीयमायाभिर्वञ्चयन्तीह मानवान् ।
न चासां मुच्यते कश्चित्पुरुषो हस्तमागतः ॥ ५
गावो नवतृणानीव गृह्णन्त्येता नवंनवम् ॥ ६
शम्बरस्य च या माया माया या नमुचेरपि ।
बलेः कुम्भीनसेश्चैव सर्वास्ता योषितो विदुः ॥ ७
हसन्तं प्रहसन्त्येता रुदन्तं प्ररुदन्ति च ।
अप्रियं प्रियवाक्यैश्च गृह्णते कालयोगतः ॥ ८
'यदि जिह्वासहस्रं स्याज्जीवेच्च शरदां शतम् ।
अनन्यकर्मा स्त्रीदोषाननुक्त्वा निधनं व्रजेत् ॥' ९
उशना वेद यच्छास्त्रं यच्च वेद बृहस्पतिः ।
स्त्री बुद्ध्या न विशिष्येत तास्तु रक्ष्याः कथं नरैः ॥१
अनृतं सत्यमित्याहुः सत्यं चापि तथाऽनृतम् ।
इति यास्ताः कथं वीर संरक्ष्याः पुरुषैरिह ।
'दोषास्पदेऽशुचौ देहे ह्यासां सक्तास्त्वहो नराः' ॥
स्त्रीणां बुद्ध्यर्थनिष्कर्षादर्थशास्त्राणि शत्रुहन् ।
बृहस्पतिप्रभृतिभिर्मन्ये सद्भिः कृतानि वै ॥ १२
संपूज्यमानाः पुरुषैर्विकुर्वन्ति मनो नृषु ।
अपास्ताश्च तथा राजन्विकुर्वन्ति मनः स्त्रियः ॥१३
इमाः प्रजा महाबाहो धार्मिक्य इति नः श्रुतम् १४
सत्कृतासत्कृताश्चापि विकुर्वन्ति मनः सदा ।
कस्ताः शक्तो रक्षितुं स्यादिति मे संशयो महान् ॥
तथा ब्रूहि महाभाग कुरूणां वंशवर्धन ।
यदि शक्या कुरुश्रेष्ठ रक्षा तासां कदाचन ।
कर्तुं वा कृतपूर्वं वा तन्मे व्याख्यातुमर्हसि ॥१६

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

## पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

भीष्मेण युधिष्ठिरंप्रति स्त्रीणां पुरुषचित्तप्रमथनाय शक्तिशेषदानपूर्वकं ब्रह्मणा सृष्टतया तद्रक्षणस्य दुष्करत्वकथनम् ॥ १ ॥ स्त्रीणां रक्षणस्य दुश्शकत्वे दृष्टान्ततया विपुलोपाख्यानकथनारम्भः ॥ २ ॥ गुरुणा स्वभार्यारक्षणं नियुक्तेन विपुलनाम्ना तदर्थं योगेन तच्छरीरप्रवेशः ॥ ३ ॥

भीष्म उवाच ।
एवमेतन्महाबाहो नात्र मिथ्याऽस्ति किंचन ।
यथा ब्रवीषि कौरव्य नारीं प्रति जनाधिप ॥ १
अत्र ते वर्तयिष्यामि इतिहासं पुरातनम् ।
यथा रक्षा कृता पूर्वं विपुलेन महात्मना ॥ २
प्रमदाश्च यथा सृष्टा ब्रह्मणा भरतर्षभ ।
यदर्थं तच्च ते तात प्रवक्ष्यामि नराधिप ॥ ३
न हि स्त्रीभ्यः परं पुत्र पापीयः किंचिदस्ति वै ।
अग्निर्हि प्रमदा दीप्तो मायाश्च मयजा विभो ।
क्षुरधारा विषं सर्पो मृत्युरित्येकतः स्त्रियः ॥ ४
प्रजा इमा महाबाहो धार्मिक्य इति नः श्रुतम् ।
स्वयं गच्छन्ति देवत्वं ततो देवानियाद्भयम् ॥ ५
अथाभ्यगच्छन्देवास्ते पितामहमरिंदम ।
निवेद्य मानसं चापि तूष्णीमासन्नधोमुखाः ॥ ६
तेषामन्तर्गतं ज्ञात्वा देवानां स पितामहः ।
मानवानां प्रमोहार्थं कृत्या नार्योऽसृजत्प्रभुः ॥७
पूर्वसर्गे तु कौन्तेय साध्व्यो नार्य इहाभवन् ।
असाध्व्यस्तु समुत्पन्नाः कृत्याः सर्गात्प्रजापतेः ८
ताभ्यः कामान्यथाकामं प्रादाद्धि स पितामहः ।
ताः कामलुब्धाः प्रमदाः प्रामथ्नन्त नरान्सदा ९

---

कुहकानि च वार्ष्णेय सर्वास्ता इति ट. थ पाठः ॥ ७ ॥ एताः पूजिता धिक्कृता वा तुल्यवद्विकारं जनयन्तीत्यर्थः ॥ १३ ॥ इमाः स्त्रीरूपाः धार्मिक्य इति श्रुत सावित्र्यादिषु दृष्ट च ॥ १४ ॥ चतुः सप्ततितमोऽध्यायः ॥ ७४ ॥

• अस्ति हि प्रमदा दीप्तेति ट. थ. पाठः ॥ ४ ॥

क्रोधं कामस्य देवेशः सहायं चासृजत्प्रभुः ।
असज्जन्त प्रजाः सर्वाः कामक्रोधवशंगताः ॥१०
'द्विजानां च गुरूणां च महागुरुनृपादिनाम् ।
क्षणस्त्रीसङ्गकामोत्था यातनाहो निरन्तरा ॥ ११
अरक्तमनसां नित्यं ब्रह्मचर्यामलात्मनाम् ।
तपोदमार्चनाध्यानयुक्तानां शुद्धिरुत्तमा ॥' १२
न च स्त्रीणां क्रियाः काश्चिदिति धर्मो व्यवस्थितः।
निरिन्द्रिया ह्यशास्त्राश्च स्त्रियोऽनृतमिति श्रुतिः॥
शय्यासनमलंकारमन्नपानमनार्यताम् ।
दुर्वाग्भावं रतिं चैव ददौ स्त्रीभ्यः प्रजापतिः॥ १४
न तासां रक्षणं शक्यं कर्तुं पुंसां कथंचन ।
अपि विश्वकृता तात कुतस्तु पुरुषैरिह ॥ १५
वाचा च वधबन्धैर्वा क्लेशैर्वा विविधैस्तथा ।
न शक्या रक्षितुं नार्यस्ता हि नित्यमसंयताः ॥१६
इदं तु पुरुषव्याघ्र पुरस्ताच्छ्रुतवानहम् ।
यथा रक्षा कृता पूर्वं विपुलेन गुरुस्त्रियाः ॥ १७
ऋषिरासीन्महाभागो देवशर्मेति विश्रुतः ।
तस्य भार्या रुचिर्नाम रूपेणासदृशी भुवि ॥ १८
तस्या रूपेण संमत्ता देवगन्धर्वदानवाः ।
विशेषेण तु राजेन्द्र वृत्रहा पाकशासनः ॥ १९
नारीणां चरितज्ञश्च देवशर्मा महामतिः ।
यथाशक्ति यथोत्साहं भार्यां तामभ्यरक्षत ॥२०
पुरंदरं च जानंश्च परस्त्रीकामचारिणम् ।
तस्माद्यत्नेन भार्याया रक्षणं स चकार ह ॥ २१
स कदाचिदृषिस्तात यज्ञं कर्तुमनास्तदा ।
भार्यासंरक्षणं कार्यं कथं स्यादित्यचिन्तयत् ॥२२
रक्षाविधानं मनसा स संचिन्त्य महातपाः ।
आहूय दयितं शिष्यं विपुलं प्राह भार्गवम् ॥२३
यज्ञकारो गमिष्यामि रुचिं चेमां सुरेश्वरः ।
यतः प्रार्थयते नित्यं तां रक्षस्व यथाबलम् ॥२४
अप्रमत्तेन ते भाव्यं सदा प्रति पुरंदरम् ।
स हि रूपाणि कुरुते विविधानि भृगूत्तम ॥२५
भीष्म उवाच ।
इत्युक्तो विपुलस्तेन तपस्वी नियतेन्द्रियः ।

दरिद्राश्च ह्यमन्त्राश्च स्त्रियो नित्यमिति श्रुतिरिति ध. पाठः॥१३॥

सदैवोग्रतपा राजन्नग्न्यर्कसदृशद्युतिः ॥ २६
धर्मज्ञः सत्यवादी च तथेति प्रत्यभाषत ।
पुनश्चेदं महाराज पप्रच्छ प्रस्थितं गुरुम् ॥ २७
कानि रूपाणि शक्रस्य भवन्त्यागच्छतो मुने ।
वपुस्तेजश्च कीदृग्वै तन्मे व्याख्यातुमर्हसि ॥२८
भीष्म उवाच ।
ततः स भगवांस्तस्मै विपुलाय महात्मने ।
आचचक्षे यथातत्त्वं मायां शक्रस्य भारत ॥२९
बहुमायः स विप्रर्षे बलहा पाकशासनः ।
तांस्तान्विकुरुते भावान्बहूनथ मुहुर्मुहुः ॥ ३०
किरीटी वज्रधृग्धन्वी मुकुटी बद्धकुण्डलः ।
भवत्यथ मुहूर्तेन चण्डालसमदर्शनः ॥ ३१
शिखी जटी चीरवासाः पुनर्भवति पुत्रक ।
बृहच्छरीरश्च पुनश्चीरवासाः पुनः कृशः ॥ ३२
गौरं श्यामं च कृष्णं च वर्णं विकुरुते पुनः ।
विरूपो रूपवांश्चैव युवा वृद्धस्तथैव च ॥ ३३
'प्राज्ञो जडश्च मूकश्च ह्रस्वो दीर्घस्तथैव च ।'
ब्राह्मणः क्षत्रियश्चैव वैश्यः शूद्रस्तथैव च ॥ ३४
प्रतिलोमोऽनुलोमश्च भवत्यथ शतक्रतुः ।
शुकवायसरूपी च हंसकोकिलरूपवान् ॥ ३५
सिंहव्याघ्रगजानां च रूपं धारयते पुनः ।
दैवं दैत्यमथो राज्ञां वपुर्धारयतेऽपि च ॥ ३६
अकृशो वायुभग्नाङ्गः शकुनिर्विकृतस्तथा ।
चतुष्पाद्बहुरूपश्च पुनर्भवति बालिशः ॥ ३७
मक्षिकामशकादीनां वपुर्धारयतेऽपि च ।
न शक्यमस्य ग्रहणं कर्तुं विपुल केनचित् ॥ ३८
अपि विश्वकृता तात येन सृष्टमिदं जगत् ।
पुनरन्तर्हितः शक्रो दृश्यते ज्ञानचक्षुषा ॥ ३९
वायुभूतश्च स पुनर्देवराजो भवत्युत ।
एवंरूपाणि सततं कुरुते पाकशासनः ।
तस्माद्विपुल यत्नेन रक्षेमां तनुमध्यमाम् ॥ ४०
यथा रुचिं नावलिहेद्देवेन्द्रो भृगुसत्तम ।
क्रतावुपहिते न्यस्तं हविः श्वेव दुरात्मवान् ॥४१
एवमाख्याय स मुनिर्यज्ञकारोऽगमत्तदा ।

देवशर्मा महाभागस्ततो भरतसत्तम ॥ ४२
विपुलस्तु वचः श्रुत्वा गुरोश्चिन्तामुपेयिवान् ।
रक्षां च परमां चक्रे देवराजान्महाबलात् ॥ ४३
किंनु शक्यं मया कर्तुं गुरुदाराभिरक्षणे ।
मायावी हि सुरेन्द्रोसौ दुर्धर्षश्चापि वीर्यवान् ॥ ४४
नापिधायाश्रमं शक्यो रक्षितुं पाकशासनः ।
उटजं वा तथा ह्यस्य नानाविधसरूपता ॥ ४५
वायुरूपेण वा शक्रो गुरुपत्नीं प्रधर्षयेत् ।
तस्मादिमां संप्रविश्य रुचिं स्थास्येहमद्य वै ॥४६
अथवा पौरुषेणेयं न शक्या रक्षितुं मया ।
बहुरूपो हि भगवाञ्छ्रूयते पाकशासनः ॥ ४७
सोहं योगबलादेनां रक्षिष्ये पाकशासनात् ।
गात्राणि गात्रैरस्याहं संप्रवेक्ष्ये हि रक्षितुम् ॥४८
यद्युच्छिष्टामिमां पत्नीमद्य पश्यति मे गुरुः ।
शप्स्यत्यसंशयं कोपाद्दिव्यज्ञानो महातपाः ॥४९
न चेयं रक्षितुं शक्या यथाऽन्या प्रमदा नृभिः ।
मायावी हि सुरेन्द्रोसावहो प्राप्तोस्मि संशयम् ५०
अवश्यं करणीयं हि गुरोरिह हि शासनम् ।
यदि त्वेतदहं कुर्यामाश्चर्यं स्यात्कृतं मया ॥ ५१
योगेनाथ प्रविश्येदं गुरुपत्न्याः कलेवरम् ।
असक्तः पद्मपत्रस्थो जलबिन्दुर्यथा चलः ॥ ५२
एवमेव शरीरेऽस्या निवत्स्यामि समाहितः ।
निर्मुक्तस्य रजोरूपान्नापराधो भवेन्मम ॥ ५३
यथाहि शून्यां पथिकः सभामध्यावसेत्पथि ।
तथाऽद्यावासयिष्यामि गुरुपत्न्याः कलेवरम् ।
एवमेव शरीरेऽस्या निवत्स्यामि समाहितः ॥५४
इत्येवं धर्ममालोक्य वेदवेदांश्च सर्वशः ।
तपश्च विपुलं दृष्ट्वा गुरोरात्मन एव च ॥ ५५
इति निश्चित्य मनसा रक्षां प्रति स भार्गवः ।
अन्वतिष्ठत्परं यत्नं यथा तच्छृणु पार्थिव ॥ ५६
गुरुपत्नीं समासीनो विपुलः स महातपाः ।
उपासीनामनिन्द्याङ्गीं कथार्थैः समलोभयत् ॥५७
नेत्राभ्यां नेत्रयोरस्या रश्मिं संयोज्य रश्मिभिः ।
विवेश विपुलः कायमाकाशं पवनो यथा ॥५८
लक्षणं लक्षणेनैव वदनं वदनेन च ।
अविचेष्टन्नतिष्ठद्वै छायेवान्तर्गतो मुनिः ॥ ५९
ततो विष्टभ्य विपुलो गुरुपत्न्याः कलेवरम् ।
उवास रक्षणे युक्तो न च सा तमबुध्यत ॥ ६०
यं कालं नागतो राजन्गुरुस्तस्य महात्मनः ।
क्रतुं समाप्य स्वगृहं तं कालं सोऽभ्यरक्षत ॥६१

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

## षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

इन्द्रेण देवशर्ममुन्यसंनिधाने तद्भार्याविलोभनाय तदाश्रमाभिगमनम् ॥ १ ॥ तथा विपुलतपोऽभिभूतेन भयात्ततो निर्गमनम् ॥ २ ॥ विपुलेन शक्रवृत्तान्तनिवेदनतुष्टाद्गुरोर्वरग्रहणपूर्वकं तपश्चरणम् ॥ ३ ॥

भीष्म उवाच ।
ततः कदाचिद्देवेन्द्रो दिव्यरूपवपुर्धरः ।
इदमन्तरमित्येवमभ्यगात्तमथाश्रमम् ॥ १
रूपमप्रतिमं कृत्वा लोभनीयं जनाधिपः ।
दर्शनीयतमो भूत्वा प्रविवेश तमाश्रमम् ॥ २
स ददर्श समासीनं विपुलस्य कलेवरम् ।
निश्चेष्टं स्तब्धनयनं यथाऽऽलेख्यगतं तथा ॥ ३
रुचिं च रुचिरापाङ्गीं पीनश्रोणिपयोधराम् ।
पद्मपत्रविशालाक्षीं संपूर्णेन्दुनिभाननाम् ॥ ४
सा तमालोक्य सहसा प्रत्युत्थातुमियेष ह ।
रूपेण विस्मिता कोऽसीत्यथ वक्तुमिवेच्छती ॥५
उत्थातुकामा तु सती विष्टब्धा विपुलेन सा ।
निगृहीता मनुष्येन्द्र न शशाक विचेष्टितुम् ॥ ६
तामाबभाषे देवेन्द्रः साम्ना परमवल्गुना ।

अशक्यकरणीय हीति ध. पाठः ॥ ५१ ॥

पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

त्वदर्थमागतं विद्धि देवेन्द्रं मां शुचिस्मिते ॥ ७
क्लिश्यमानमनङ्गेन त्वत्संकल्पभवेन ह ।
तत्पर्याप्नुहि मां सुभ्रु पुरा कालोऽतिवर्तते ॥ ८
तमेवंवादिनं शक्रं शुश्राव विपुलो मुनिः ।
गुरुपत्न्याः शरीरस्थो ददर्श त्रिदशाधिपम् ॥ ९
न शशाक च सा राजन्प्रत्युत्थातुमनिन्दिता ।
वक्तुं च नाशकद्राजन्विष्टब्धा विपुलेन सा ॥ १०
आकारं गुरुपत्न्यास्तु स विज्ञाय भृगूद्वहः ।
निजग्राह महातेजा योगेन बलवत्प्रभो ।
बबन्ध योगबन्धैश्च तस्याः सर्वेन्द्रियाणि सः ॥ ११
तां निर्विकारां दृष्ट्वा तु पुनरेव शचीपतिः ।
उवाच व्रीडितो राजंस्तां योगबलमोहिताम् ॥ १२
एह्येहीति ततः सा तु प्रतिवक्तुमियेष तम् ।
स तां वाचं गुरोः पत्न्या विपुलः पर्यवर्तयत् ॥ १३
भोः किमागमने कृत्यमिति तस्यास्तु निःसृता ।
वक्त्राच्छशाङ्कसदृशाद्वाणी संस्कारभूषणा ॥ १४
व्रीडिता सा तु तद्वाक्यमुक्त्वा परवशा तदा ।
पुरन्दरश्च संत्रस्तो बभूव विमना भृशम् ॥ १५
स तद्वैकृतमालक्ष्य देवराजो विशांपते ।
अवैक्षत सहस्राक्षस्तदा दिव्येन चक्षुषा ॥ १६
स ददर्श मुनिं तस्याः शरीरान्तरगोचरम् ।
प्रतिबिम्बमिवादर्शे गुरुपत्न्याः शरीरगम् ॥ १७
स तं घोरेण तपसा युक्तं दृष्ट्वा पुरंदरः ।
प्रावेपत सुसंत्रस्तो व्रीडितश्च तदा विभो ॥ १८
विमुच्य गुरुपत्नीं तु विपुलः सुमहातपाः ।
स्वकलेवरमाविश्य शक्रं भीतमथाब्रवीत् ॥ १९
अजितेन्द्रिय दुर्बुद्धे पापात्मक पुरंदर ।
न चिरं पूजयिष्यन्ति देवास्त्वां मानुषास्तथा ॥ २०
किंनु तद्विस्मृतं शक्र न तन्मनसि ते स्थितम् ।
गौतमेनासि यन्मुक्तो भगाङ्कपरिचिह्नितः ॥ २१
जाने त्वां बालिशमतिमकृतात्मानमस्थिरम् ।
मयेयं रक्ष्यते मूढ गच्छ पाप यथागतम् ॥ २२
नाहं त्वामद्य मूढात्मन्दहेयं हि स्वतेजसा ।
कृपायमानस्तु न ते दग्धुमिच्छामि वासव ॥ २३
स च घोरतमो धीमान्गुरुर्मे पापचेतसम् ।
दृष्ट्वा त्वां निर्दहेदद्य क्रोधदीप्तेन चक्षुषा ॥ २४
नैवं तु शक्र कर्तव्यं पुनर्मान्याश्च ते द्विजाः ।
मा गमः ससुतामात्यः क्षयं ब्रह्मबलार्दितः ॥ २५
अमरोसीति यद्बुद्धिं समास्थाय प्रवर्तसे ।
मावमंस्था न तपसा न साध्यं नाम किंचन २६

भीष्म उवाच ।

तच्छ्रुत्वा वचनं शक्रो विपुलस्य महात्मनः ।
न किंचिदुक्त्वा व्रीडार्तस्तत्रैवान्तरधीयत ॥ २७
मुहूर्तयाते तस्मिंस्तु देवशर्मा महातपाः ।
कृत्वा यज्ञं यथाकाममाजगाम स्वमाश्रमम् ॥ २८
आगतेऽथ गुरौ राजन्विपुलः प्रियकर्मकृत् ।
रक्षितां गुरवे भार्यां न्यवेदयदनिन्दिताम् ॥ २९
अभिवाद्य च शान्तात्मा स गुरुं गुरुवत्सलः ।
विपुलः पर्युपातिष्ठद्यथापूर्वमशङ्कितः ॥ ३०
विश्रान्ताय ततस्तस्मै सहासीनाय भार्यया ।
निवेदयामास तदा विपुलः शक्रकर्म तत् ॥ ३१
तच्छ्रुत्वा स मुनिस्तुष्टो विपुलस्य प्रतापवान् ।
बभूव शीलवृत्ताभ्यां तपसा नियमेन च ॥ ३२
विपुलस्य गुरौ वृत्तिं भक्तिमात्मनि तत्प्रभुः ।
धर्मे च स्थिरतां दृष्ट्वा साधुसाध्वित्यभाषत ॥ ३३
प्रतिनन्द्य च धर्मात्मा शिष्यं धर्मपरायणम् ।
वरेण च्छन्दयामास देवशर्मा महामतिः ॥ ३४
स्थितिं च धर्मे जग्राह स तस्माद्गुरुवत्सलः ।
अनुज्ञातश्च गुरुणा चचारानुत्तमं तपः ॥ ३५
तथैव देवशर्मापि सभार्यः स महातपाः ।
निर्भयो बलवृत्रघ्नाच्चचार विजने वने ॥ ३६

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

कामात्मक पुरन्दरेति ध. पाठः ॥ २० ॥

षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

## सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

गुरुनियोगाद्दिव्यपुष्पनयनार्थं गतेन विपुलेन मध्येमार्गं नरवरमिथुनात्स्वगतिनिन्दाश्रवणम् ॥ १ ॥ निन्दितगतिप्रापक-स्वदुश्चरितं चिन्तयता तेन चिराय तदनुसरणम् ॥ २ ॥

भीष्म उवाच ।
विपुलस्त्वकरोत्तीव्रं तपः कृत्वा गुरोर्वचः ।
तपोयुक्तमथात्मानममन्यत स वीर्यवान् ॥ १
स तेन कर्मणा स्वर्गं पृथिवीं पृथिवीपते ।
चचार गतभीः प्रीतो लब्धकीर्तिवरो नृप ॥ २
उभौ लोकौ जितौ चापि तथैवामन्यत प्रभुः ।
कर्मणा तेन कौरव्य तपसा विपुलेन च ॥ ३
अथ काले व्यतिक्रान्ते कस्मिंश्चित्कुरुनन्दन ।
रुच्या भगिन्या आदानं प्रभूतधनधान्यवत् ॥ ४
एतस्मिन्नेव काले तु दिव्या काचिद्वराङ्गना ।
बिभ्रती परमं रूपं जगामाथ विहायसा ॥ ५
तस्याः शरीरात्पुष्पाणि पतितानि महीतले ।
तस्याश्रमस्याविदूरे दिव्यगन्धानि भारत ॥ ६
तान्यगृह्णात्ततो राजन्रुचिर्ललितलोचना ।
तदा निमन्त्रकस्तस्या अङ्गेभ्यः क्षिप्रमागमत् ॥ ७
तस्या हि भगिनी तात ज्येष्ठा नाम्ना प्रभावती ।
भार्या चित्ररथस्याथ बभूवाङ्गेश्वरस्य वै ॥ ८
पिनह्य तानि पुष्पाणि केशेषु वरवर्णिनी ।
आमन्त्रिता ततोऽगच्छद्रुचिरङ्गपतेर्गृहम् ॥ ९
पुष्पाणि तानि दृष्ट्वा तु तदाङ्गेन्द्रवराङ्गना ।
भगिनीं चोदयामास पुष्पार्थे चारुलोचना ॥ १०
सा भर्त्रे सर्वमाचष्ट रुचिः सुरुचिरानना ।
भगिन्या भाषितं सर्वमृषिस्तच्चाभ्यनन्दत ॥ ११
ततो विपुलमानाय्य देवशर्मा महातपाः ।
पुष्पार्थे चोदयामास गच्छगच्छेति भारत ॥ १२
विपुलस्तु गुरोर्वाक्यमविचार्य महातपाः ।
स तथेत्यब्रवीद्राजंस्तं च देशं जगाम ह ॥ १३
यस्मिन्देशे तु तान्यासन्पतितानि नभस्तलात् ।
अम्लानान्यपि तत्रासन्कुसुमान्यपराण्यपि ॥ १४
स ततस्तानि जग्राह दिव्यानि रुचिराणि च ।
प्राप्तानि स्वेन तपसा दिव्यगन्धानि भारत ॥ १५
संप्राप्य तानि प्रीतात्मा गुरोर्वचनकारकः ।
तदा जगाम तूर्णं च चम्पां चम्पकमालिनीम् ॥ १६
स वने निर्जने तात ददर्श मिथुनं नृणाम् ।
चक्रवत्परिवर्तन्तं गृहीत्वा पाणिना करम् ॥ १७
तत्रैकस्तूर्णमगमत्तत्पदे च विवर्तयन् ।
एकस्तु न तदा राजंश्चक्रतुः कलहं ततः ॥ १८
त्वं शीघ्रं गच्छसीत्येकोऽब्रवीन्नेति तथाऽपरः ।
पतितेति च तौ राजन्परस्परमथोचतुः ॥ १९
तयोर्विस्पर्धतोरेवं शपथोऽयमभूत्तदा ।
सहसोद्दिश्य विपुलं ततो वाक्यमथोचतुः ॥ २०
आवयोरनृतं प्राह यस्तस्याभूद्द्विजस्य वै ।
विपुलस्य परे लोके या गतिः सा भवेदिति ॥ २१
एतच्छ्रुत्वा तु विपुलो विषण्णवदनोऽभवत् ।
एवं तीव्रतपाश्चाहं कष्टश्चायं परिश्रमः ॥ २२
मिथुनस्यास्य किं मे स्यात्कृतं पापं यथा गतिः ।
अनिष्टा सर्वभूतानां कीर्तिताऽनेन मेऽद्य वै ॥ २३
एवं संचिन्तयन्नेव विपुलो राजसत्तम ।
अवाङ्मुखो दीनमना दध्यौ दुष्कृतमात्मनः ॥ २४
ततः षडन्यान्पुरुषानक्षैः काञ्चनराजतैः ।
अपश्यद्दीव्यमानान्वै लोभामर्षान्वितांस्तथा ॥ २५
कुर्वतः शपथं तेन यः कृतो मिथुनेन तु ।
विपुलं वै समुद्दिश्य तेऽपि वाक्यमथाब्रुवन् ॥ २६
लोभमास्थाय योऽस्माकं विषमं कर्तुमुत्सहेत् ।
विपुलस्य परे लोके या गतिस्तामवाप्नुयात् ॥ २७
एतच्छ्रुत्वा तु विपुलो नापश्यद्धर्मसंकरम् ।

आदीयतेऽस्मिन्बान्धवैर्दत्त उपायनादिक स आदान विवाहाद्युत्सवः । प्रभूत बहुधनादिक यत्र ॥ ४ ॥ निमन्त्रकः आकारणार्थं दूतः ॥ ७ ॥ तत्पदे इतरस्य पदे पांसुषु व्यक्ते आकर्षणेन विवर्तयन् विषमता नयन् ॥ १८ ॥

जन्मप्रभृति कौरव्य कृतपूर्वमथात्मनः ॥ २८
स प्रदध्यौ तथा राजन्नग्रावग्निरिवाहितः ।
दह्यमानेन मनसा शापं श्रुत्वा तथाविधम् ॥ २९
तस्य चिन्तयतस्तात बह्वीर्वाचो निशम्य तु ।
इदमासीन्मनसि च रुच्या रक्षणकारितम् ॥ ३०
लक्षणं लक्षणेनैव वदनं वदनेन च
विधाय न मया चोक्तं सत्यमेतद्गुरोस्तथा ॥ ३१
एतदात्मनि कौरव्य दुष्कृतं विपुलस्तदा
अमन्यत महाभाग तथा तच्च न संशयः ॥ ३२
स चम्पां नगरीमेत्य पुष्पाणि गुरवे ददौ ।
पूजयामास च गुरुं विधिवत्स गुरुप्रियः ॥ ३३

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

## अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

देवशर्मणा स्वशिष्यं विपुलंप्रति तद्दृष्टानां मिथुनानां षट्पुरुषाणां च क्रमेणाहोरात्रर्त्वभिमानिदेवतात्वकथनम् ॥ १ ॥ तथा स्वस्मिन्स्वदाररक्षणाय योगेन तच्छरीरप्रवेशानिवेदनस्य दुर्गतिहेतुत्वकथनम् ॥ २ ॥ तथा तत्कृतस्वदाररक्षणपरितोषेण तद्दुरितदूरीकरणपूर्वकं तेन स्वभार्यया च सह स्वर्गे सुखविहरणम् ॥ ३ ॥

भीष्म उवाच ।
तमागतमभिप्रेक्ष्य शिष्यं वाक्यमथाब्रवीत् ।
देवशर्मा महातेजा यत्तच्छृणु जनाधिप ॥ १
देवशर्मोवाच ।
किं त्वया मिथुनं दृष्टं तस्मिञ्शिष्य महावने ।
ते त्वां जानन्ति निपुणा आत्मा च रुचिरेव च ॥ २
विपुल उवाच ।
ब्रह्मर्षे मिथुनं किंतत्के च षट्पुरुषा विभो ।
ये मां जानन्ति तत्त्वेन यन्मां त्वं परिपृच्छसि ॥ ३
देवशर्मोवाच ।
यद्वै तन्मिथुनं ब्रह्मन्नहोरात्रं हि विद्धि तत् ।
चक्रवत्परिवर्तेत तत्ते जानाति दुष्कृतम् ॥ ४
ये च ते पुरुषा विप्र अक्षैर्दीव्यन्ति हृष्टवत् ।
ऋतूंस्तानभिजानीहि ते ते जानन्ति दुष्कृतम् ॥ ५
न मां कश्चिद्विजानीत इति कृत्वा न विश्वसेत् ।
नरो रहसि पापात्मा पापकं कर्म वै द्विज ॥ ६
कुर्वाणं हि नरं कर्म पापं रहसि सर्वदा ।
पश्यन्ति ऋतवश्चापि तथा दिननिशेऽप्युत ॥ ७
तथैव हि भवेयुस्ते लोकाः पापकृतो यथा ।
कृत्वाऽनाचक्षतः कर्म मम तच्च यथा कृतम् ॥ ८
ते त्वां हर्षस्मितं दृष्ट्वा गुरोः कर्मानिवेदकम् ।
स्मारयन्तस्तथा प्राहुस्ते यथा श्रुतवान्भवान् ॥ ९
अहोरात्रं विजानाति ऋतवश्चापि नित्यशः ।
पुरुषे पापकं कर्म शुभं वाऽशुभकर्मिणः ॥ १०
तत्त्वया मम यत्कर्म व्यभिचाराद्भयात्मकम् ।
नाख्यातमिति जानन्तस्ते त्वामाहुस्तथा द्विज ११
तेनैव हि भवेयुस्ते लोकाः पापकृतो यथा ।
कृत्वा नाचक्षतः कर्म मम यच्च त्वया कृतम् ॥ १२
तथाऽशक्याश्च दुर्वृत्ता रक्षितुं प्रमदा द्विज ।
न च त्वं कृतवान्किंचिदागः प्रीतोऽस्मि तेन ते ॥ १३
'मनोदोषविहीनानां न दोषः स्यात्तथा तव ।
अन्यथाऽऽलिङ्ग्यते कान्ता स्नेहेन दुहिताऽन्यथा ॥
यतेश्च कामुकानां च योषिद्रूपेऽन्यथा मतिः ।
अशिक्षयैव मनसः प्रायो लोकस्तु वञ्च्यते ॥ १५
लालेत्युद्विजते लोको वक्त्रासव इति स्पृहा ।
अबन्धायोग्यमनसामिति मन्त्रात्मदैवकम् ॥ १६
न रागस्नेहलोभान्धं कर्मिणां तन्महाफलम् ।
निष्कषायो विशुद्धस्त्वं रुच्यावेशान्न दूषितः ॥ १७

---

वचः श्रुत्वा तथाविधमिति ध. पाठ ॥ २९ ॥ रुच्या गुरुभार्यायाः ॥ ३० ॥ लक्षण स्त्रीपुंसयोरसाधारण चिह्न विधाय एकीकृत्य ॥ ३१ ॥ सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

हर्षस्मित हर्षेण गर्वितम् ॥ ९ ॥ तेनैव अनाख्यानेनैव ॥ १२ ॥ लाला वदनात्स्रुतो गलज्जलधारा ॥ १६ ॥

यदि त्वहं त्वां दुर्वृत्तमद्राक्षं द्विजसत्तम ।
शपेयं त्वामहं क्रोधान्न मेऽत्रास्ति विचारणा १८
सज्जन्ति पुरुषे नार्यः पुंसां सोऽर्थश्च पुष्कलः ।
अन्यथा रक्षतः शापोऽभविष्यत्ते मतिश्च मे ॥१९
रक्षिता च त्वया पुत्र मम चापि निवेदिता ।
अहं ते प्रीतिमांस्तात स्वस्थः स्वर्गं गमिष्यमि२०
इत्युक्त्वा विपुलं प्रीतो देवशर्मा महानृषिः ।
मुमोद स्वर्गमास्थाय सहभार्यः सशिष्यकः ॥२१
इदमाख्यातवांश्चापि ममाख्यानं महामुनिः ।
मार्कण्डेयः पुरा राजन्गङ्गाकूले कथान्तरे ॥ २२
तस्माद्ब्रवीमि पार्थ त्वां स्त्रियो रक्ष्याः सदैव च ।
उभयं दृश्यते तासु सततं साध्वसाधु च ॥ २३
स्त्रियः साध्व्यो महाभागाः संमता लोकमातरः।
धारयन्ति महीं राजन्निमां सवनकाननाम् ॥२४
असाध्व्यश्चापि दुर्वृत्ताः कुलघ्नाः पापनिश्चयाः ।
विज्ञया लक्षणदृष्टैः स्वगात्रसहजैर्नृप ॥ २५
एवमतासु रक्षा व शक्या कर्तु महात्मभिः ।
अन्यथा राजशार्दूल न शक्या रक्षितुं स्त्रियः २६
एता हि मनुजव्याघ्र तीक्ष्णास्तीक्ष्णपराक्रमाः ।
नासामस्ति प्रियो नाम मैथुने संगमेति यः॥२७
एताः कृत्याश्च कष्टाश्च कृतघ्ना भरतर्षभ ।
न चैकस्मिन्नमन्त्येताः पुरुषे पाण्डुनन्दन ॥ २८
नासु स्नेहो नरैः कार्यस्तथैवेर्प्या जनेश्वर ।
खेदमास्थाय भुञ्जीत धर्ममास्थाय चैव ह ।
'अनृताविह पर्वादिदोषवर्जं नराधिप ॥' २९
विहन्येतान्यथा कुर्वन्नरः कौरवनन्दन ।
सर्वथा राजशार्दूल युक्तः सर्वत्र युज्यते ॥ ३०
तेनैकेन तु रक्षा वै विपुलेन कृता स्त्रियाः ।
नान्यः शक्तस्त्रिलोकेऽस्मिन्रक्षितुं नृप योषितः३१

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

## एकोनाशीतितमोऽध्यायः ॥ ७९ ॥

भीष्मेण युधिष्ठिरंप्रति विवाहविभागकथनम् ॥ १ ॥ तथा कन्यानां भार्यात्वप्रापकविध्यादिनिरूपणम् ॥ २

युधिष्ठिर उवाच ।
यन्मूलं सर्वधर्माणां प्रजनस्य गृहस्य च ।
पितृदेवातिथीनां च तन्मे ब्रूहि पितामह ॥
अयं हि सर्वधर्माणां धर्मश्चिन्त्यतमो मतः ।
कीदृशाय प्रदेया स्यात्कन्येति वसुधाधिप ॥
भीष्म उवाच ।
शीलवृत्ते समाज्ञाय विद्यां योनिं च कर्म च
अद्भिरेव प्रदातव्या कन्या गुणवते भवेत् ।
ब्राह्मणानां सतामेष नित्यं धर्मो युधिष्ठिर ॥
आवाह्यमावहेदेवं यो दद्यादनुकूलतः ।
शिष्टानां क्षत्रियाणां च धर्म एष सनातनः ॥ ४
आत्माभिप्रेतमुत्सृज्य कन्याभिप्रेत एव यः ।
अभिप्रेता च या यस्य तस्मै देया युधिष्ठिर ।
गान्धर्वमिति तं धर्मं प्राहुर्वेदविदो जनाः ॥ ५
धनेन बहुधा क्रीत्वा संप्रलोभ्य च बान्धवान् ।
असुराणां नृपैतं वै धर्ममाहुर्मनीषिणः ॥ ६
हत्वा छित्त्वा च शीर्षाणि रुदतां रुदतीं गृहात् ।
प्रसह्य हरणं तात राक्षसो विधिरुच्यते ॥ ७

सहजैः पाणिपादरेखादिभिः ॥२५॥ कृत्याः प्राणग्राहिदेवतारूपाः ॥ २८ ॥ खेदमास्थायाऽप्रीत्या विष्टिगृहीतवत् भुञ्जीत ननु प्रीत्या । धर्मं ऋतुकालानुरोधम् ॥ २९ ॥ अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

योनिं मातृतः पितृतश्च शुद्धिम् । अथ ब्राह्मः प्रथमो विवाहः ॥ ३ ॥ एवं उक्तगुणवन्तं आवाह्यं विवाहयोग्यं आवहेत् आकारयेत् । ततश्च अनुकूलतो धनदानादिना अभिमुखीकृताय दद्यात् । अथ प्राजापत्यो नाम द्वितीयो विप्राणां क्षत्रियाणां च प्रशस्ततरः ॥ ४ ॥ आसुरं चतुर्थमाह धनेनेति ॥६॥ हत्वेति राक्षसः पञ्चमः । अत्रैव प्रमत्तानां बन्धूनां कन्याहरणात् पैशाचो हरणसामान्यादन्तर्भवति ॥ ७ ॥

'सुप्तां मत्तां प्रमत्तां वा रहो रात्रौ च गच्छति ।
स पापिष्ठो विवाहानां पैशाचः कथितोऽधमः॥८
पञ्चानां तु त्रयो धर्म्या द्वावधर्म्यौ युधिष्ठिर ।
पैशाचश्चासुरश्चैव न कर्तव्यौ कथंचन ॥ ९
ब्राह्मः क्षात्रोऽथ गान्धर्व एते धर्म्या नरर्षभ ।
पृथग्वा यदि वा मिश्राः कर्तव्या नात्र संशयः॥१०
तिस्रो भार्या ब्राह्मणस्य द्वे भार्ये क्षत्रियस्य तु ।
वैश्यः स्वजात्यां विन्देत तास्वपत्यं हिताय हि॥११
द्विजस्य ब्राह्मणी श्रेष्ठा क्षत्रिया क्षत्रियस्य तु ।
रत्यर्थमपि शूद्रा स्यान्नेत्याहुरपरे जनाः ॥ १२
अपत्यजन्म शूद्रायां न प्रशंसन्ति साधवः ।
शूद्रायां जनयन्विप्रः प्रायश्चित्ती विधीयते ॥१३
'नातिबालां वहन्त्यन्ये अनित्यत्वात्प्रजार्थिनः ।
वहन्ति कर्मिणस्तस्यामन्तः शुद्धिव्यपेक्षया ॥१४
अपरान्वयसंभूतां संस्वप्नादिविवर्जिताम् ।
कामो यस्यां निषिद्धश्च केचिदिच्छन्ति चापदि १५
त्रिंशद्वर्षो दशवर्षां भार्यां विन्देत नग्निकाम् ।
एकविंशतिवर्षो वा सप्तवर्षामवाप्नुयात् ॥ १६
यस्यास्तु न भवेद्भ्राता पिता वा भरतर्षभ ।
नोपयच्छेत तां जातु पुत्रिकाधर्मिणी हि सा ॥१७
त्रीणि वर्षाण्युदीक्षेत कन्या ऋतुमती सती ।
चतुर्थेऽत्वथ संप्राप्ते स्वयं भर्तारमर्जयेत् ॥ १८
प्रजा न हीयते तस्या रतिश्च भरतर्षभ ।
अतोऽन्यथा वर्तमाना भवेद्वाच्या प्रजापतेः॥१९
असपिण्डा च या मातुरसगोत्रा च या पितुः ।
इत्येतामुपयच्छेत तं धर्मं मनुरब्रवीत् ॥ २०
युधिष्ठिर उवाच ।
शुल्कमन्येन दत्तं स्याद्ददानीत्याह चापरः ।
बलादन्यः प्रभाषेत धनमन्यः प्रदर्शयेत् ॥ २१
पाणिग्रहीता चान्यः स्यात्कस्य भार्या पितामह ।
तत्त्वं जिज्ञासमानानां चक्षुर्भवतु नो भवान् २२
भीष्म उवाच ।
यत्किंचित्कर्म मानुष्यं संस्थानाय प्रदृश्यते ।
मन्त्रवन्मन्त्रितं तस्य मृषावादस्तु पातकः ॥ २३
भार्यापत्यृत्विगाचार्याः शिष्योपाध्याय एव च ।
मृषोक्ते दण्डमर्हन्ति नेत्याहुरपरे जनाः ॥ २४
नह्यकामेन संवादं मनुरेवं प्रशंसति ।
अयशस्यमधर्म्यं च यन्मृषा धर्मगोपनम् ॥ २५
नैकान्तो दोष एकस्मिंस्तदा केनोपपद्यते ।
धर्मतो यां प्रयच्छन्ति यां च क्रीणन्ति भारत ॥२६
बन्धुभिः समनुज्ञाते मन्त्रहोमौ प्रयोजयेत् ।
तथा सिध्यन्ति ते मन्त्रा नादत्तायाः कथंचन ॥२७
यस्त्वत्र मन्त्रसमयो भार्यापत्योर्मिथः कृतः ।
तमेवाहुर्गरीयांसं यश्चासौ ज्ञातिभिः कृतः ॥२८
देवदत्तां पतिर्भार्यां वेत्ति धर्मस्य शासनात् ।
स दैवीं मानुषीं वाचमनृतां पर्युदस्यति ॥ २९
युधिष्ठिर उवाच ।
कन्यायां प्राप्तशुल्कायां ज्यायांश्चेदाव्रजेद्वरः ।
धर्मकामार्थसंपन्नो वाच्यमत्रानृतं न वा ॥ ३०
तस्मिन्नुभयतो दोषे कुर्वञ्श्रेयः समाचरेत् ।
अयं नः सर्वधर्माणां धर्मश्चिन्त्यतमो मतः ॥३१
तत्त्वं जिज्ञासमानानां चक्षुर्भवतु नो भवान् ।
तदेतत्सर्वमाचक्ष्व न हि तृप्यामि कथ्यताम्॥३२
भीष्म उवाच ।
नैव निष्ठाकरं शुल्कं ज्ञात्वाऽऽसीत्तेन नानृतम् ।
न हि शुल्कपराः सन्तः कन्यां ददति कर्हिचित् ।

नग्निकां एकवाससम् । अजातस्त्रीव्यञ्जनामिति यावत् ॥ १६ ॥ पुत्रिकाधर्मिणी यस्याः पिता इयमेव दुहिता मम पुत्रस्थाने इत्यभिप्रायवान्न वेति न ज्ञायते सा ॥ १७ ॥ वाच्या निन्द्या । प्रजनो हीयते इति ध. पाठः ॥ १९ ॥ संस्थानाय व्यवस्थार्थं मन्त्रवन्मन्त्रित विचारवद्भिः सर्वैरेकीभूय मन्त्रितमियमस्मै देयेति विचारितम् । तस्य मृषाकरण पातकः पातयितृ भवतीत्यर्थः । मृषावादस्त्वपातकमिति थ. ध. पाठः ॥ २३ ॥ तत्र नेति पक्ष निन्दति नहीति ॥ २५ ॥ यद्यपि ज्ञातिभिः कृतः समयो गुरुस्तथापि मन्त्रपूर्वकः समयो गुरुतर इत्यर्थः ॥ २८ ॥ देवः प्राक्कर्म ईश्वरो वा । वेत्ति लभते ॥ २९ ॥ दोषे सति कुर्वन् कर्ता श्रेयः प्रशस्ततरं किं समाचरेदित्यध्याहृत्य योज्यम् ॥ ३१ ॥ कथ्यतामित्यादरसूचनार्था पुनरुक्तिः ॥ ३२ ॥

अन्यैर्गुणैरुपेतं तु शुल्कं याचन्ति बान्धवाः॥३३
अलंकृत्वा वहस्वेति यो दद्यादनुकूलतः ।
यच्च तां च ददत्येवं न शुल्कं विक्रयो न सः ।
प्रतिगृह्य भवेद्देयमेष धर्मः सनातनः ॥ ३४
दास्यामि भवते कन्यामिति पूर्वं नभाषितम् ।
ये चाहुर्ये च नाहुर्ये ये चावश्यं वदन्त्युत ॥३५
तस्मादाग्रहणात्पाणेर्याचयन्ति परस्परम् ।
कन्यावरः पुरा दत्तो मरुद्भिरिति नः श्रुतम्॥३६
नानिष्टाय प्रदातव्या कन्या इत्यृषिचोदितम् ।
तन्मूलं काममूलस्य प्रजनस्येति मे मतिः ॥ ३७
समीक्ष्य च बहून्दोषान्संवासाद्विद्धि षाणयोः ।
यथा निष्ठाकरं शुल्कं न जात्वासीत्तथा शृणु३८
अहं विचित्रवीर्यस्य द्वे कन्ये समुदावहम् ।
जित्वाऽङ्गमागधान्सर्वान्काशीनथ च कोसलान्॥
गृहीतपाणिरेकाऽऽसीत्प्राप्तशुल्काऽपराऽभवत् ।
कन्याऽगृहीता तत्रैव विसर्ज्या इति मे पिता ।
अब्रवीदितरां कन्यामावहेति स कौरवः ॥ ४०
अप्यन्याननुपप्रच्छ शङ्कमानः पितुर्वचः ।
अतीव ह्यस्य धर्मेच्छा पितुर्मेऽभ्यधिकाऽभवत्४१
ततोऽहमब्रवं राजन्नाचारेप्सुरिदं वचः ।
आचारं तत्त्वतो वेत्तुमिच्छामि च पुनःपुनः॥४२
ततो मयैवमुक्ते तु वाक्ये धर्मभृतांवरः ।
पिता मम महाराज बाह्लीको वाक्यमब्रवीत् ४३
यदि वः शुल्कतो निष्ठा न पाणिग्रहणात्तथा ।
लाजान्तरमुपासीत प्राप्तशुल्क इति स्मृतिः ॥४४
न हि धर्मविदः प्राहुः प्रमाणं वाक्यतः स्मृतम् ।
येषां वै शुल्कतो निष्ठा न पाणिग्रहणात्तथा॥४५
प्रसिद्धं भाषितं दाने तेषां प्रत्यायकं पुनः ।
ये मन्यन्ते क्रयं शुल्कं न ते धर्मविदो नराः४६
न चैतेभ्यः प्रदातव्या न वोढव्या तथाविधा ।
न ह्येव भार्या क्रेतव्या न विक्रय्या कथंचन४७
ये च क्रीणन्ति दासीवद्विक्रीणन्ति तथैव च ।
भवेत्तेषां तथा निष्ठा लुब्धानां पापचेतसाम् ४८
अस्मिन्नर्थे सत्यवन्तं पर्यपृच्छन्त वै जनाः ।
कन्यायाः प्राप्तशुल्कायाः शुल्कदः प्रशमं गतः ॥
पाणिग्रहीता वाऽन्यः स्यादत्र नो धर्मसंशयः ।
तन्नश्छिन्धि महाप्राज्ञ त्वं हि वै प्राज्ञसंमतः ५०
तत्त्वं जिज्ञासमानानां चक्षुर्भवतु नो भवान् ।
तानेवं ब्रुवतः सर्वान्सत्यवान्वाक्यमब्रवीत् ॥५१
यत्रेष्टं तत्र देया स्यान्नात्र कार्या विचारणा ।
कुर्वते जीवतोऽप्येवं मृते नैवास्ति संशयः ॥ ५२
देवरं प्रविशेत्कन्या तप्येद्वाऽपि तपः पुनः ।
तमेवानुगता भूत्वा पाणिग्राहस्य नाम सा ॥५३
लिखन्त्येव तु केषांचिदपरेषां शनैरपि ।

---

गुणैर्वयोधिकत्वादिभिः ॥ ३३ ॥ कन्यार्थालंकारग्रहणे न दोषोऽस्तीत्याह अलंकृत्वेति ॥ ३४ ॥ नभाषितमित्येकपदम् । ये पूर्वं दास्यामीत्याहुर्ये च नदास्यामीत्याहुर्ये च अवश्यं दास्यामीति वदन्ति तत्सर्वं नभाषित अनुक्तवदेवेत्यर्थः ॥ ३५ ॥ यस्मादेव तस्मात् आपाणिग्रहणात्कन्या याचेतेति मरुतां वरस्तेन ततः पूर्वं विशिष्टवरार्थमपहारेपि न दोष इति भावः ॥ ३६ ॥ तत्कन्या कामो मूल यस्य । तस्मादुत्तमदौहित्रार्थिना श्रेयसे एव कन्या प्रदेयेति भावः ॥ ३७ ॥ संवासाच्चिरपरिचयात् । पाणयोः क्रयविक्रयण्योः संवादे विद्विषाणयोरिति ध. पाठः ॥ ३८ ॥ वीर्यमपि शुल्कं भवतीत्यभिप्रायेणाह अहमिति । अम्बिकाम्बालिकयोरेकत्वविवक्षया द्वे इत्युक्तम् ॥ ३९ ॥ प्राप्तशुल्का वीर्येण निर्जितापि कन्या अगृहीता अप्राप्तपाणिग्रहेयं अम्बा विसर्ज्या उत्स्रष्टुं योग्या इति पिता पितृव्यो बाह्लीकोऽब्रवीत् ॥ ४० ॥ अनुपप्रच्छ अनुपृष्टवानहम् ॥ ४१ ॥ प्राप्त शुल्कं येन । पाठान्तरे यस्याः सा । कन्यापिता कन्या वा लाजान्तरं वरान्तरमुपासीत इति या स्मृतिस्तर्हि बाध्येतेत्यध्याहृत्य योजना । लाजा विद्यन्ते हौम्यद्रव्यमस्य स इति लाजशब्दोऽर्शआद्यच्प्रत्ययान्तः । लाजोत्तारमुपासीतेति थ. ध. पाठ. ॥ ४४ ॥ येषा शुल्कतो निष्ठा तेषां वाक्यतो वाक्यं प्रमाणं स्मृतमिति धर्मविदो नह्याहुरित्यन्वयः ॥ ४५ ॥ लोकविरोधमप्याहार्थेन । प्रसिद्धमिति कन्याया दानमित्येवोच्यते नतु क्रयो जयो वेति । एषां शुल्कवादिनां प्रत्यायक भार्यात्वज्ञापक किमपि नास्ति । परिणयनादेव भार्या भवति न शुल्कमात्रादिति लोकव्यवहारस्य स्पष्टत्वादित्यर्थः ॥ ४६ ॥ जीवत इत्यनादरे षष्ठी । जीवन्तमपि शुल्कदमनादृत्य शिष्टा एव यथेष्टदान कुर्वत इत्यर्थः ॥ ५२ ॥ देवरमिति युगान्तरधर्मः ॥ ५३ ॥ केषाचिन्मते देवरादयः अलिखितां भ्रातृभार्यां लिखन्त्येव सुरतेन योजयन्त्येव । अपरेषां मते

इति ये संवदन्त्यत्र त एतं निश्चयं विदुः ॥ ५४
तत्पाणिग्रहणात्पूर्वमन्तरं यत्र वर्तते ।
सर्वमङ्गलमन्त्रं वै मृषावादस्तु पातकः ॥ ५५
पाणिग्रहणमन्त्राणां निष्ठा स्यात्सप्तमे पदे ।
पाणिग्रहस्य भार्या स्याद्यस्य चाद्भिः प्रदीयते ॥५६
इति देयं वदन्त्यत्र त एतं निश्चयं विदुः ।
अनुकूलामनुवशां भ्रात्रा दत्तामुपाग्निकाम् ।
परिक्रम्य यथान्यायं भार्यां विन्देद्द्विजोत्तमः॥५७

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि एकोनाशीतितमोऽध्यायः ॥ ७९ ॥

## अशीतितमोऽध्यायः ॥ ८० ॥

भीष्मेण युधिष्ठिरंप्रति वैवाहिकविध्यादेर्दायार्हतादेश्च कथनम् ॥ १ ॥

युधिष्ठिर उवाच
कन्यायां प्राप्तशुल्कायां पतिश्चेन्नास्ति कश्चन ।
तत्र का प्रतिपत्तिः स्यात्तन्मे ब्रूहि पितामह ॥ १
भीष्म उवाच ।
या पुत्रकस्य ऋद्धस्य प्रतिपाल्या तदा भवेत् ।
अथवा सा हरेच्छुल्कं क्रीता शुल्कप्रदस्य सा ॥२
तस्यार्थेऽपत्यमीहेत येन न्यायेन शक्नुयात् ।
न तस्मान्मन्त्रवत्कार्यं कश्चित्कुर्वीत किंचन ॥ ३
स्वयंवृतेन साज्ञप्ता पित्रा वै प्रत्यपद्यत ।
तत्तस्यान्ये प्रशंसन्ति धर्मज्ञा नेतरे जनाः ॥ ४
एतत्तु नापरे चक्रुरपरे जातु साधवः ।
साधूनां पुनराचारो गरीयान्धर्मलक्षणः ॥ ५
अस्मिन्नेव प्रकारे तु सुक्रतुर्वाक्यमब्रवीत् ।
नप्ता विदेहराजस्य जनकस्य महात्मनः ॥ ६
असदाचरिते मार्गे कथं स्यादनुकीर्तनम् ।
अनुप्रश्नः संशयो वा सतामेवमुपालभेत् ॥ ७
असदेव हि धर्मस्य प्रदानं धर्म आसुरः ।
नानुशुश्रुम जात्वेतामिमां पूर्वेषु कर्मसु ॥ ८
भार्यापत्योर्हि संबन्धः स्त्रीपुंसोस्तुल्य एव तु ।
रतिः साधारणो धर्म इति चाह स पार्थिवः ॥ ९
युधिष्ठिर उवाच ।
अथ केन प्रमाणेन पुंसामादीयते धनम् ।
पुत्रवद्धि पितुस्तस्य कन्या भवितुमर्हति ॥ १०
भीष्म उवाच ।
यथैवात्मा तथा पुत्रः पुत्रेण दुहिता समा ।
तस्यामात्मनि तिष्ठन्त्यां कथमन्यो धनं हरेत् ॥११
मातुश्च यौतकं यत्स्यात्कुमारीभाग एव सः ।
दौहित्र एव तद्रिक्थमपुत्रस्य पितुर्हरेत् ॥ १२
ददाति हि स पिण्डान्वै पितुर्मातामहस्य च ।
पुत्रदौहित्रयोरेव विशेषो नास्ति धर्मतः ॥ १३
अन्यत्र जामया सार्धं प्रजानां पुत्र ईहते ।
दुहिताऽन्यत्र जातेन पुत्रेणापि विशिष्यते ॥ १४
दौहित्रकेण धर्मेण तत्र पश्यामि कारणम् ।
विक्रीतासु हि ये पुत्रा भवन्ति पितुरेव ते ॥ १५
असूयवस्त्वधर्मिष्ठाः परस्वादायिनः शठाः ।
आसुरादधिसंभूता धर्माद्विषमवृत्तयः ॥ १६
अत्र गाथा यमोद्गीताः कीर्तयन्ति पुराविदः ।
धर्मज्ञा धर्मशास्त्रेषु निबद्धा धर्मसेतुषु ॥ १७
यो मनुष्यः स्वकं पुत्रं विक्रीय धनमिच्छति ।
कन्यां वा जीवितार्थाय यः शुल्केन प्रयच्छति १८

---

शनैर्मन्थरा इय प्रवृत्तिः । ऐच्छिकी न तु वैधीत्यर्थः ॥ ५४ ॥ संकल्पपूर्वक दत्ताया अपि कन्याया योऽपहारस्तज्जन्यो मृषावादः पातको भवति दातुर्नतु तावन्मात्रेण तस्यां भार्यात्वमुत्पन्नमित्यर्थः ॥ ५५ ॥ एकोनाशीतितमोऽध्यायः ॥ ७९ ॥

शुल्कदश्चेत्प्रोषितस्तद्भयादन्यश्च न वृणुते तदा तत्पित्रा किं कर्तव्यमिति प्रश्नार्थः ॥ १ ॥ या कन्या पितुः प्रतिपाल्या पिता च यदि तत् शुल्क परपक्षीयेभ्यः परावृत्य न दद्यात्तर्हि सा कन्या शुल्कप्रदस्यैव ज्ञेया ॥ २ ॥ स्वयंवृतेति सावित्रीति धर्मज्ञानपरा जना इति च. ध. पाठः ॥ ४ ॥ धर्मस्य स्त्रीपुंसामस्वातन्त्र्यलक्षणस्य धर्मस्य प्रदान खण्डन यत्स आसुरो धर्मः एता पद्धतिम् । पूर्वेषु वृद्धेषु । कर्मसु विवाहेषु । जात्वेव तदिदं पूर्वजन्मस्विति ध. पाठः ॥ ८ ॥ जामया कन्ययापि तामपेक्ष्येत्यर्थः । अन्यत्र जायते सोपि प्रजया पुत्र ईयते इति ट. थ. ध. पाठः ॥ १४ ॥

सप्तावरे महाघोरे निरये कालसाह्वये ।
स्वेदं मूत्रं पुरीषं च तस्मिन्मूढः समश्नुते ॥ १९
आर्षे गोमिथुनं शुल्कं केचिदाहुर्मृषैव तत् ।
अल्पो वा बहु वा राजन्विक्रयस्तावदेव सः ॥२०
यद्यप्याचरितः कैश्चिन्नैष धर्मः सनातनः ।
अन्येषामपि दृश्यन्ते लोभतः संप्रवृत्तयः ॥ २१
वश्यां कुमारीं बलतो ये तां समुपभुञ्जते ।
एते पापस्य कर्तारस्तमस्यन्धे च शेरते ॥ २२
अन्योऽप्यथ न विक्रेयो मनुष्यः किं पुनः प्रजाः ।
अधर्ममूलैर्हि धनैस्तैर्न धर्मोऽथ कश्चन ॥ २३

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि अशीतितमोऽध्यायः ॥ ८० ॥

## एकाशीतितमोऽध्यायः ॥ ८१ ॥

भीष्मेण युधिष्ठिरंप्रति स्त्रीणां प्रशंसनम् ॥ १ ॥

भीष्म उवाच ।
प्राचेतसस्य वचनं कीर्तयन्ति पुराविदः ।
यस्याः किंचिन्नाददते ज्ञातयो न स विक्रयः ॥१
अर्हणं तत्कुमारीणामानृशंस्यं व्रतं च तत् ।
सर्वं च प्रतिदेयं स्यात्कन्यायै तदशेषतः ॥ २
पितृभिर्भ्रातृभिश्चापि श्वशुरैरथ देवरैः ।
पूज्या लालयितव्याश्च बहुकल्याणमीप्सुभिः ॥३
यदि वै स्त्री न रोचेत पुमांसं न प्रमोदयेत् ।
अप्रमोदात्पुनः पुंसः प्रजनो न प्रवर्धते ॥ ४
पूज्या लालयितव्याश्च स्त्रियो नित्यं जनाधिप ।
स्त्रियो यत्र च पूज्यन्ते रमन्ते तत्र देवताः ॥ ५
अपूजिताश्च यत्रैताः सर्वास्तत्राफलाः क्रियाः ।
तदा चैतत्कुलं नास्ति यदा शोचन्ति जामयः ॥ ६
जामीशप्तानि गेहानि निकृत्तानीव कृत्यया ।
नैव भान्ति न वर्धन्ते श्रिया हीनानि पार्थिव ॥ ७
स्त्रियः पुंसां परिददौ मनुर्जिगमिषुर्दिवम् ।
अबलाः स्वल्पकौपीनाः सुहृदः सत्यजिष्णवः ॥८
ईर्ष्यवो मानकामाश्च चण्डाश्च सुहृदोऽबुधाः ।
स्त्रियस्तु मानमर्हन्ति ता मानयत मानवाः ॥ ९
स्त्रीप्रत्ययो हि वै धर्मो रतिभोगाश्च केवलाः ।
परिचर्या नमस्कारास्तदायत्ता भवन्तु वः ॥ १०
उत्पादनमपत्यस्य जातस्य परिपालनम् ।
प्रीत्यर्थं लोकयात्रायाः पश्यत स्त्रीनिबन्धनम् ॥११
संमान्यमानाश्चैता हि सर्वकार्याण्यवाप्स्यथ ।
विदेहराजदुहिता चात्र श्लोकमगायत ॥ १२
नास्ति यज्ञः स्त्रियाः कश्चिन्न श्राद्धं नोपवासकम् ।
धर्मः स्वभर्तृशुश्रूषा तया स्वर्गं जयन्त्युत ॥ १३
पिता रक्षति कौमारे भर्ता रक्षति यौवने ।
पुत्राश्च स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति ॥ १४
श्रिय एताः स्त्रियो नाम सत्कार्या भूतिमिच्छता ।
लालिताऽनुगृहीता च श्रीः स्त्री भवति भारत ॥१५

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि एकाशीतितमोऽध्यायः ॥ ८१ ॥

कालसाह्वये कालसूत्राख्ये ॥ १९ ॥ बलतो वश्यां नतु स्वच्छन्दत इत्यर्थः ॥ २२ ॥ अन्योऽपि पशुरपि ॥ २३ ॥ अशीतितमोऽध्यायः ॥ ८० ॥

प्राचेतसस्य दक्षस्य । ज्ञातयः कन्यापक्षीयाः । स्वयं नाददतेऽथ च कन्यालंकारार्थमिच्छन्ति स विक्रयो न भवतीत्यर्थः ॥१॥ न रोचेत न कामयेत । न प्रमोदयेत्कामुकं न कुर्यात् । प्रजनः सन्ततिः ॥ ४ ॥ स्वल्प ईषदायासेन अपनेयः कौपीनो गुह्याच्छादनपटो यासाम् । सद्योहार्या इत्यर्थः । सुहृदः सौहार्दयुक्ताः ॥ ८ ॥ न बुध्यन्त इत्यबुधाः ॥ ९ ॥ स्त्रीप्रत्ययः स्त्रीहेतुकः ॥ १० ॥ अत्र स्त्रीधर्मविषये ॥ १२ ॥ एकाशीतितमोऽध्यायः ॥ ८१ ॥

## द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

भीष्मेण युधिष्ठिरंप्रति ब्राह्मणादीनां दायविभजनविधिनिरूपणम् ॥ १ ॥

युधिष्ठिर उवाच
सर्वशास्त्रविधानज्ञ राजधर्मविदुत्तम
अतीव संशयच्छेत्ता भवान्वै प्रथितः १
कश्चित्तु संशयो मेऽस्ति तन्मे ब्रूहि पितामह ।
'अस्यामापदि कष्टायामन्यं पृच्छाम कं वयम्' ॥
जातेऽस्मिन्संशये राजन्नान्यं पृच्छेम कंचन ॥ २
यथा नरेण कर्तव्यं धर्ममार्गानुवर्तिना ।
एतत्सर्वं महाबाहो भवान्व्याख्यातुमर्हति ॥ ३
चतस्रो विहिता भार्या ब्राह्मणस्य पितामह ।
ब्राह्मणी क्षत्रिया वैश्या शूद्रा च रतिमिच्छतः ४
तत्र जातेषु पुत्रेषु सर्वासां कुरुसत्तम ।
आनुपूर्व्येण कस्तेषां पित्र्यं दायाद्यमर्हति ॥ ५
केन वा किं ततो हार्यं पितृवित्तात्पितामह ।
एतदिच्छामि कथितं विभागस्तेषु कः स्मृतः ॥६
भीष्म उवाच ।
ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः ।
एतेषु विहितो धर्मो ब्राह्मणस्य युधिष्ठिर ॥ ७
वैषम्यादथवा लोभात्कामाद्वाऽपि परंतप ।
ब्राह्मणस्य भवेच्छूद्रा न तु दृष्टा न तु स्मृता ॥८
शूद्रां शयनमारोप्य ब्राह्मणो यात्यधोगतिम् ।
प्रायश्चित्तीयते चापि विधिदृष्टेन कर्मणा ॥ ९
तत्र जातेष्वपत्येषु द्विगुणं स्याद्युधिष्ठिर ।
अतस्ते नियमं वित्ते संप्रवक्ष्यामि भारत ॥ १०
लक्षण्यं गोवृषो यानं यत्प्रधानतमं भवेत् ।
ब्राह्मण्यास्तद्धरेत्पुत्र एकांशं वै पितुर्धनात् ॥ ११
शेषं तु दशधा कार्यं ब्राह्मणस्वं युधिष्ठिर ।
तत्र तेनैव हर्तव्याश्चत्वारोंशाः पितुर्धनात् ॥ १२
क्षत्रियायास्तु यः पुत्रो ब्राह्मणः सोप्यसंशयः ।
स तु मातुर्विशेषेण त्रीनंशान्हर्तुमर्हति ॥ १३
वर्णे तृतीये जातस्तु वैश्यायां ब्राह्मणादपि ।
द्विरंशस्तेन हर्तव्यो ब्राह्मणस्वाद्युधिष्ठिर ॥ १४
शूद्रायां ब्राह्मणाज्जातो नित्यादेयधनः स्मृतः ।
अल्पं चापि प्रदातव्यं शूद्रापुत्राय भारत ॥ १५
दशधा प्रविभक्तस्य धनस्यैष भवेत्क्रमः ।
सवर्णासु तु जातानां समान्भागान्प्रकल्पयेत् ॥१६
अब्राह्मणं तु मन्यन्ते शूद्रापुत्रमनैपुणात् ।
त्रिषु वर्णेषु जातो हि ब्राह्मणाद्ब्राह्मणो भवेत् ॥१७
स्मृताश्च वर्णाश्चत्वारः पञ्चमो नाधिगम्यते ।
हरेच्च दशमं भागं शूद्रापुत्रः पितुर्धनात् ॥ १८
तत्तु दत्तं हरेत्पित्रा नादत्तं हर्तुमर्हति ।
अवश्यं हि धनं देयं शूद्रापुत्राय भारत ॥ १९
आनृशंस्यं परो धर्म इति तस्मै प्रदीयते ।
यत्रतत्र समुत्पन्नं गुणायैवोपपद्यते ॥ २०
यद्यप्येष सुपुत्रः स्यादपुत्रो यदि वा भवेत् ।
नाधिकं दशमाद्दद्याच्छूद्रापुत्राय भारत ॥ २१
'स्मृत एकश्चतुर्भागः कन्याभागस्तु धर्मतः ।
अभ्रातृका समग्राहा चार्धास्येत्यपरे विदुः ॥'२२
त्रैवार्षिकाद्यदा भक्तादधिकं स्याद्विजस्य तु ।
यजेत तेन द्रव्येण न वृथा साधयेद्धनम् ॥ २३
त्रिसहस्रपरो दायः स्त्रियै देयो धनस्य वै ।
भर्त्रा तच्च धनं दत्तं यथार्हं भोक्तुमर्हति ॥ २४
स्त्रीणां तु पतिदायाद्यमुपभोगफलं स्मृतम् ।
नापहारं स्त्रियः कुर्युः पितृवित्तात्कथंचन ॥ २५
स्त्रियास्तु यद्भवेद्वित्तं पित्रा दत्तं युधिष्ठिर ।
ब्राह्मण्यास्तद्धरेत्कन्या यथा पुत्रस्तथाऽस्य सा ॥२६
सा हि पुत्रसमा राजन्विहिता कुरुनन्दन ।
एवमेव समुद्दिष्टो धर्मो वै भरतर्षभ ।

एवमृलिगात्मस्त्रीशुद्धिमुक्त्वा धनशुद्ध्यर्थं दायविभागं प्रस्तौति ॥ ३ ॥ रतिमिच्छत एव विहिता नतु धर्मम् ॥ ४ ॥ किं कियत्प्रमाणम् ॥ ६ ॥ प्रायश्चित्तमात्मन इच्छति प्रायश्चित्तीयते ॥ ९ ॥ द्विगुणं प्रायश्चित्तम् ॥ १० ॥ एकांशं मुख्यांशम् ॥ ११ ॥ तेनैव ब्राह्मणीपुत्रेणैव ॥ १२ ॥ समुत्पन्नं आनृशंस्यम् ॥ २० ॥ वृथा यज्ञादिप्रयोजनविना न साधयेत् ॥ २३ ॥ स्त्रियोऽधिको दायो न देय इत्यर्थः । तच्चतुर्धा धनं दत्त नादत्तभोक्तुमर्हतीति थ. ध. पाठः ॥ २४ ॥ कुर्युः पुत्रा इति शेषः । पतिवित्तात्कथ चनेति झ. पाठः । पतिवित्तात्पत्या दत्ताद्वित्तात् ॥ २५ ॥ धर्मो विभागप्रकारः । वृथा अन्यायेन

एवं धर्ममनुस्मृत्य न वृथा साधयेद्धनम् ।। २७
युधिष्ठिर उवाच ।
शूद्रायां ब्राह्मणाज्जातो यद्यदेयधनः स्मृतः ।
केन प्रतिविशेषेण दशमोऽप्यस्य दीयते ।। २८
ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणः स्यान्न संशयः ।
क्षत्रियायां तथैव स्याद्वैश्यायामपि चैव हि ।।२९
कस्मात्तु विषमं भागं भजेरन्नृपसत्तम ।
यदा सर्वे त्रयो वर्णास्त्वयोक्ता ब्राह्मणा इति ।।३०
भीष्म उवाच ।
दारा इत्युच्यते लोके नाम्नैकेन परंतप ।
प्रोक्तेन चैव नाम्नाऽयं विशेषः सुमहान्भवेत् ।। ३१
तिस्रः कृत्वा पुरो भार्याः पश्चाद्विन्देत ब्राह्मणीम् ।
सा ज्येष्ठा सा च पूज्या स्यात्सा च ताभ्यो गरीयसी
स्नानं प्रसाधनं भर्तुर्दन्तधावनमञ्जनम् ।
हव्यं कव्यं च यच्चान्यद्धर्मयुक्तं गृहे भवेत् ।। ३३
न तस्यां जातु तिष्ठन्त्यामन्या तत्कर्तुमर्हति ।
ब्राह्मणीत्वेव कुर्याद्वा ब्राह्मणस्य युधिष्ठिर ।। ३४
अन्नं पानं च माल्यं च वासांस्याभरणानि च ।
ब्राह्मण्यैतानि देयानि भर्तुः सा हि गरीयसी ।। ३५
मनुनाऽभिहितं शास्त्रं यच्चापि कुरुनन्दन ।
तत्राप्येष महाराज दृष्टो धर्मः सनातनः ।। ३६
अथ चेदन्यथा कुर्याद्यदि कामाद्युधिष्ठिर ।
यथा ब्राह्मणचाण्डालः पूर्वदृष्टस्तथैव सः ।। ३७
ब्राह्मण्याः सदृशः पुत्रः क्षत्रियायाश्च यो भवेत् ।
राजन्विशेषो यस्त्वत्र वर्णयोरुभयोरपि ।। ३८
न तु जात्या समा लोके ब्राह्मण्याः क्षत्रिया भवेत् ।
ब्राह्मण्याः प्रथमः पुत्रो भूयान्स्याद्राजसत्तम ।।३९
भूयोभूयोपि संहार्यः पितृवित्ताद्युधिष्ठिर ।
यथा न सदृशी जातु ब्राह्मण्याः क्षत्रिया भवेत् ४०
क्षत्रियायास्तथा वैश्या न जातु सदृशी भवेत् ।
श्रीश्च राज्यं च कोशश्च क्षत्रियाणां युधिष्ठिर ।। ४१
विहितं दृश्यते राजन्सागरान्तां च मेदिनीम् ।
क्षत्रियो हि स्वधर्मेण श्रियं प्राप्नोति भूयसीम् ।
राजा दण्डधरो राजन्रक्षा नान्यत्र क्षत्रियात् ।। ४२
ब्राह्मणा हि महाभागा देवानामपि देवताः ।
तेषु राजा प्रवर्तेत पूजया विधिपूर्वकम् ।। ४३
प्रणीतमृषिभिर्ज्ञात्वा धर्मं शाश्वतमव्ययम् ।
लुप्यमानं स्वधर्मेण क्षत्रियो रक्षति प्रजाः ।। ४४
दस्युभिर्ह्रियमाणं च धनं दारांश्च सर्वशः ।
सर्वेषामेव वर्णानां त्राता भवति पार्थिवः ।। ४५
भूयान्स्यात्क्षत्रियापुत्रो वैश्यापुत्रान्न संशयः ।
भूयस्तेनापि हर्तव्यं पितृवित्ताद्युधिष्ठिर ।। ४६
युधिष्ठिर उवाच ।
उक्तं ते विधिवद्राजन्ब्राह्मणस्य पितामह ।
इतरेषां तु वर्णानां कथं वै नियमो भवेत् ।। ४७
भीष्म उवाच ।
क्षत्रियस्यापि भार्ये द्वे विहिते कुरुनन्दन ।
तृतीया च भवेच्छूद्रा न तु दृष्टा न तु स्मृता ४८
एष एव क्रमो हि स्यात्क्षत्रियाणां युधिष्ठिर ।
अष्टधा तु भवेत्कार्यं क्षत्रियस्वं जनाधिप ।। ४९
क्षत्रियाया हरेत्पुत्रश्चतुरोंशान्पितुर्धनात् ।
युद्धावहारिकं यच्च पितुः स्यात्स हरेत्तु तत् ।।५०
वैश्यापुत्रस्तु भागांस्त्रीञ्शूद्रापुत्रस्तथाऽष्टमम् ।
सोपि दत्तं हरेत्पित्रा नादत्तं हर्तुमर्हति ।। ५१
एकैव हि भवेद्भार्या वैश्यस्य कुरुनन्दन ।
द्वितीया तु भवेच्छूद्रा न तु दृष्टा न तु स्मृता ।।५२
वैश्यस्य वर्तमानस्य वैश्यायां भरतर्षभ ।
शूद्रायां चापि कौन्तेय तयोर्विनियमः स्मृतः ।।५३
पञ्चधा तु भवेत्कार्यं वैश्यस्वं भरतर्षभ ।
तयोरपत्ये वक्ष्यामि विभागं च जनाधिप ।। ५४
वैश्यापुत्रेण हर्तव्याश्चत्वारोंशाः पितुर्धनात् ।
पञ्चमस्तु स्मृतो भागः शूद्रापुत्राय भारत ।।५५
सोपि दत्तं हरेत्पित्रा नादत्तं हर्तुमर्हति ।
त्रिभिर्वर्णैः सदा जातः शूद्रो देयधनो भवेत् ।।५६

।। २७ ।। आद्रियन्ते त्रिवर्गार्थिभिरिति दारपदप्रवृत्तिनिमित्तमादरः । यतश्च भर्त्रा आदरस्तासु वर्णक्रमेण यथायोग्यं तारतम्यक्रमेण क्रियत इति तत्पुत्राणां भागवैषम्य चास्तीत्यभिप्रायः ।। ३१ ।। भूयोभूयोपि अधिकमधिकम् ।। ४० ।। उक्तं दायविभागादि ।। ४७ ।। युद्धेऽवन्हियते तद्रथगजायुधकवचादिकं युद्धावहारिकम् ।। ५० ।।

शूद्रस्य स्यात्सवर्णैव भार्या नान्या कथंचन ।
समभागाश्च पुत्राः स्युर्यदि पुत्रशतं भवेत् ॥ ५७
जातानां समवर्णायाः पुत्राणामविशेषतः ।
सर्वेषामेव वर्णानां समभागो धनात्स्मृतः ॥ ५८
ज्येष्ठस्य भागो ज्येष्ठः स्यादेकांशो यः प्रधानतः ।
एष दायविधिः पार्थ पूर्वमुक्तः स्वयंभुवा ॥ ५९
समवर्णासु जातानां विशेषोऽस्त्यपरो नृप ।
विवाहवैशिष्ट्यकृतः पूर्वपूर्वो विशिष्यते ॥ ६०
ष्ठः प्रधानांशमकभार्यासुतेष्वाप
मध्यमो मध्यमं चैव कनीयांस्तु कनीयसम् ॥ ६१
एवं जातिषु सर्वासु सवर्णः श्रेष्ठतां गतः ।
महर्षिरपि चैतद्वै मारीचः काश्यपोऽब्रवीत् ॥ ६२

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

## त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

भीष्मेण युधिष्ठिरंप्रति संकरजातीनां शीलविभागादिनिरूपणम् ॥ १ ॥

युधिष्ठिर उवाच ।
अर्थाश्रयाद्वा कामाद्वा वर्णानां चाप्यनिश्चयात् ।
अज्ञानाद्वापि वर्णानां जायते वर्णसंकरः ॥ १
तेषामेतेन विधिना जातानां वर्णसंकरे ।
को धर्मः कानि कर्माणि तन्मे ब्रूहि पितामह ॥ २
भीष्म उवाच ।
चातुर्वर्ण्यस्य कर्माणि चातुर्वर्ण्यं च केवलम् ।
असृजत्स हि यज्ञार्थे पूर्वमेव प्रजापतिः ॥ ३
भार्याश्चतस्रो विप्रस्य द्वयोरात्मा प्रजायते ।
आनुपूर्व्याद्द्वयोर्हीनौ मातृजात्यौ प्रसूयतः ॥ ४
मरं शवाद्ब्राह्मणस्यैव पुत्रः
शूद्रापुत्रं पारशवं तमाहुः ।
शुश्रूषकः स्वस्य कुलस्य स स्या-
त्स्वचारित्रं नित्यमर्थो न जह्यात् ॥ ५
सर्वानुपायानथ संप्रधार्य
समुद्धरेत्स्वस्य कुलस्य तन्त्रम् ।
ज्येष्ठो यवीयानपि यो द्विजस्य
शुश्रूषया दानपरायणः स्यात् ॥ ६
तिस्रः क्षत्रियसंबन्धाद्द्वयोरात्माऽस्य जायते ।
हीनवर्णास्तृतीयायां शूद्रा उग्रा इति स्मृतिः ॥ ७
द्वे चापि भार्ये वैश्यस्य द्वयोरात्माऽस्य जायते ।
शूद्रा शूद्रस्य चाप्येका शूद्रमेव प्रजायते ॥ ८
अतोऽविशिष्टस्त्वधमो गुरुदारप्रधर्षकः ।
बाह्यं वर्णं जनयति चातुर्वर्ण्यविगर्हितम् ॥ ९
अयाज्यं क्षत्रियो व्रात्यं सूतं स्तोत्रक्रियापरम् ।
वैश्यो वैदेहकं चापि मौद्गल्यमपवर्जितम् ॥ १०
शूद्रश्चण्डालमत्युग्रं वध्यघ्नं बाह्यवासिनम् ।
ब्राह्मण्यां संप्रजायन्त इत्येते कुलपांसनाः ।
एते मतिमतांश्रेष्ठ वर्णसंकरजाः प्रभो ॥ ११
वन्दी तु जायते वैश्यान्मागधो वाक्यजीवनः ।
शूद्रान्निषादो मत्स्यघ्नः क्षत्रियायां व्यतिक्रमात् ॥
शूद्रादायोगवश्चापि वैश्यायां ग्राम्यधर्मिणः ।
ब्राह्मणैरप्रतिग्राह्यस्तक्षा स्वधनजीवनः ॥ १३
एतेऽपि सदृशान्वर्णाञ्जनयन्ति स्वयोनिषु ।
मातृजात्या प्रसूयन्ते ह्यवरा हीनयोनिषु ॥ १४
यथा चतुर्षु वर्णेषु द्वयोरात्माऽस्य जायते ।

---

सवर्णाज्येष्ठता गतेति थ. ध. पाठः ॥ ६२ ॥ द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

एतेन उक्तेन । विधिना प्रकारेण ॥ २ ॥ शूद्राणां सेवाद्वारा यज्ञार्थत्वं नतु साक्षात् ॥ ३ ॥ मातृजात्यौ वैश्यायां वैश्योऽम्बष्ठो नाम । शूद्रायां शूद्रो निषादो नाम पारशवाख्यो भवति ॥ ४ ॥ शवस्थानतुल्याच्छूद्रात्परमुत्कृष्टम् । परोशभान्ब्राह्मणस्यैव पुत्र इति थ. ध. पाठः ॥ ५ ॥ तन्त्रमुपकरणम् । वयसा ज्येष्ठोऽपि पारशवो द्विजस्य त्रिवर्णजस्य यवीयान् कनीयानेवेति सबन्धः ॥ ६ ॥ अतः स्वपितुरविशिष्टो नाधिकः सन्नधमः शूद्रो गुरूणां ब्राह्मणादीनां दारप्रधर्षकश्चेत् बाह्यं चाण्डालादिम् ॥ ९ ॥ विप्राया क्षत्रियो बाह्य सूत स्तोमक्रियापरमिति झ. पाठः ॥ १० ॥ वध्यानां चोरादीना शिरश्छेदादिकार्यकारिण वध्यघ्नम् ॥ ११ ॥

आनन्तर्यात्प्रजायन्ते यथा बाह्या प्रधानतः ॥ १५
ते चापि सदृशं वर्णं जनयन्ति स्वयोनिषु ।
परस्परस्य दारेषु जनयन्ति विगर्हितान् ॥ १६
यथा शूद्रोऽपि ब्राह्मण्यां जन्तुं बाह्यं प्रसूयते ।
एवं बाह्यतराद्बाह्यश्चातुर्वर्ण्यात्प्रजायते ॥ १७
प्रतिलोमं तु वर्धन्ते बाह्याद्बाह्यतरात्पुनः ।
हीनाद्धीनाः प्रसूयन्ते वर्णाः पञ्चदशैव तु ॥ १८
अगम्यागमनाच्चैव जायते वर्णसंकरः ।
बाह्यानामनुजायन्ते सैरन्ध्र्यां मागधेषु च ।
प्रसाधनोपचारज्ञमदासं दासजीवनम् ॥ १९
क्षत्रा ह्यायोगवं सूते वागुराबन्धजीवनम् ।
मैरेयकं च वैदेहः संप्रसूतेऽथ माधुकम् ॥ २०
निषादो मद्गुरं सूते दासं नावोपजीविनम् ।
मृतपं चापि चाण्डालः श्वपाकमिति विश्रुतम् २१
चतुरो मागधी सूते क्रूरान्मायोपजीविनः ।
मांसं स्वादुकरं क्षौद्रं सौगन्धमिति विश्रुतम् ॥२२
वैदेहकाच्च पापिष्ठा क्रूरं मायोपजीविनम् ।
निषादान्मद्रनाभं च खरयानप्रयायिनम् ॥ २३
चण्डालात्पुल्कसं चापि खराश्वगजभोजिनम् ।
मृतचैलप्रतिच्छन्नं भिन्नभाजनभोजिनम् ॥ २४
आयोगवीषु जायन्ते हीनवर्णास्तु ते त्रयः ।
क्षुद्रो वैदेहकादन्ध्रो बहिर्ग्रामप्रतिश्रयः ॥ २५
कारावरो निषाद्यां तु चर्मकारः प्रसूयते ।
चाण्डालात्पाण्डुसौपाकस्त्वक्सारव्यवहारवान् २६
आहिण्डको निषादेन वैदेह्यां संप्रसूयते ।
चण्डालेन तु सौपाकश्चण्डालसमवृत्तिमान् ॥२७
निषादी चापि चण्डालात्पुत्रमन्तेवसायिनम् ।
श्मशानगोचरं सूते बाह्यैरपि बहिष्कृतम् ॥ २८
इत्येते संकरे जाताः पितृमातृव्यतिक्रमात् ।
प्रच्छन्ना वा प्रकाशा वा वेदितव्याः स्वकर्मभिः २९
चतुर्णामेव वर्णानां धर्मो नान्यस्य विद्यते ।
वर्णानां धर्महीनेषु सङ्ख्या नास्तीह कस्यचित् ॥३०
यदृच्छयोपसंपन्नैर्यज्ञसाधुबहिष्कृतैः ।
बाह्या बाह्यैश्च जायन्ते यथावृत्ति यथाश्रयम् ॥३१
चतुष्पथश्मशानानि शैलांश्चान्यान्वनस्पतीन् ।
कार्ष्णायसमलंकारं परिगृह्य च नित्यशः ।
वसेयुरेते विज्ञाता वर्तयन्तः स्वकर्मभिः ॥ ३२
युञ्जन्तो वाऽप्यलंकारांस्तथोपकरणानि च ।
गोब्राह्मणाय साहाय्यं कुर्वाणा वै न संशयः ॥ ३३
आनृशंस्यमनुक्रोशः सत्यवाक्यं तथा क्षमा ।
स्वशरीरैरपि त्राणं बाह्यानां सिद्धिकारणम् ।
भवन्ति मनुजव्याघ्र तत्र मे नास्ति संशयः ॥३४
यथोपदेशं परिकीर्तितासु
नरः प्रजायेत विचार्य बुद्धिमान् ।
निहीनयोनिर्हि सुतोऽवसादये-
त्तितीर्षमाणं हि यथोपलो जले ॥ ३५
अविद्वांसमलं लोके विद्वांसमपि वा पुनः ।
नयन्ति ह्युत्पथं नार्यः कामक्रोधवशानुगम् ॥ ३६
स्वभावश्चैव नारीणां नराणामिह दूषणम् ।
अत्यर्थं न प्रसज्जन्ते प्रमदासु विपश्चितः ॥ ३७
युधिष्ठिर उवाच ।
वर्णापेतमविज्ञाय नरं कलुषयोनिजम् ।
आर्यरूपमिवानार्यं कथं विद्यामहे वयम् ॥ ३८
भीष्म उवाच
योनिसंकलुषे जातं नानाभावसमन्वितम् ।
कर्मभिः सज्जनाचीर्णैर्विज्ञेयाः शुद्धयोनिकाः ॥३९
अनार्यत्वमनाचारः क्रूरत्वं निष्क्रियात्मता ।
पुरुषं व्यञ्जयन्तीह लोके कलुषयोनिजम् ॥ ४०
पित्र्यं वा भजते शीलं मातृजं वा तथोभयम् ।
न कथंचन संकीर्णः प्रकृतिं स्वां नियच्छति ॥४१
यथैव सदृशो रूपे मातापित्रोर्हि जायते ।
व्याघ्रबिन्दोस्तथा योनिं पुरुषः स्वां नियच्छति४२

---

चातुर्वर्ण्यस्यैव धर्मो शास्त्रे विहिताः इतरेषां तु जातिभेदाना धर्मनियम इयत्ता च नास्ति ॥ ३० ॥ निहीनासु रेतःसेक न कुर्यादिति भावः ॥ ३५ ॥ कलुषयोनिज संकरयोनिजम् ॥ ३८ ॥ नानाभावैरार्येभ्य पृथग्भूताभिश्चेष्टाभिः समन्वित नरं संकरयोनिजं जानीयात् ॥ ३९ ॥ प्रकृतिं योनिम् । नियच्छति गूहितु न शक्नोतीत्यर्थः ॥ ४१ ॥ यथा तिर्यक्स्थावरादिक बीजगुणं न त्यजत्येव मनुष्योऽपीत्यर्थः ॥ ४२ ॥

कुले स्रोतसि संच्छन्ने यस्य स्याद्योनिसंकरः ।
संश्रयत्येव तच्छीलं नरोऽल्पमथवा बहु ॥ ४३
आर्यरूपसमाचारं चरन्तं कृतके पथि
सवर्णमन्यवर्णं वा स्वशीलं शास्ति निश्चये ॥ ४४
नानावृत्तेषु भूतेषु नानाकर्मरतेषु च ।
जन्मवृत्तसमं लोके सुश्लिष्टं न विरज्यते ॥ ४५
शरीरमिह सत्वेन न तस्य परिकृष्यते ।
ज्येष्ठमध्यावरं सत्वं तुल्यसत्वं प्रमोदते ॥ ४६
ज्यायांसमपि शीलेन विहीनं नैव पूजयेत् ।
अपि शूद्रं च धर्मज्ञं सद्वृत्तमभिपूजयेत् ॥ ४७
आत्मानमाख्याति हि कर्मभिर्नरः
सुशीलचारित्रकुलैः शुभाशुभैः ।
प्रनष्टमप्यात्मकुलं तथा नरः
पुनः प्रकाशं कुरुते स्वकर्मतः ॥ ४८
योनिष्वेतासु सर्वासु संकीर्णास्वितरासु च ।
यत्रात्मानं न जनयेद्बुधस्तां परिवर्जयेत् ॥ ४९

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

## चतुरशीतितमोऽध्यायः ॥ ८४ ॥

भीष्मेण युधिष्ठिरंप्रत्यौरसादिपुत्रनिरूपणम् ॥ १ ॥

युधिष्ठिर उवाच ।
ब्रूहि तात कुरुश्रेष्ठ वर्णानां त्वं पृथक् पृथक् ।
कीदृश्यां कीदृशाश्चापि पुत्राः कस्य च के च ते ॥ १
विप्रवादाः सुबहवः श्रूयन्ते पुत्रकारिणाम् ।
अत्र नो मुह्यतां राजन्संशयं छेत्तुमर्हसि ॥ २
भीष्म उवाच ।
'आत्मा पुत्रस्तु विज्ञेयः प्रथमो बहुधा परे ॥ ३
स्वे क्षेत्रे संस्कृते यस्तु पुत्रमुत्पादयेत्स्वयम् ।
तमौरसं विजानीयात्पुत्रं प्रथमकल्पितम् ॥ ४
अग्निं प्रजापतिं चेष्ट्वा वराय प्रतिपादिता ।
पुत्रिका स्याद्दुहितरि संकल्पे वाऽपि वा सुतः ॥ ५
तल्पे जातः प्रमीतस्य क्लीबस्य पतितस्य वा ।
स्वधर्मेण नियुक्तो यः स पुत्रः क्षेत्रजः स्मृतः ॥ ६
माता पिता च दद्यातां यमद्भिः पुत्रमापदि ।
सदृशप्रीतिसंयुक्तो विज्ञेयो दत्रिमः सुतः ॥ ७
सदृशं तु प्रकुर्याद्यं गुणदोषविचक्षणम् ।
पुत्रं पुत्रगुणैर्युक्तं विज्ञेयः स तु कृत्रिमः ॥ ८
उत्पद्यते यस्य गूढं न च ज्ञायेत कस्यचित् ।
स भवेद्गूढजो नाम तस्य स्याद्यस्य तल्पतः ॥ ९
मातापितृभ्यामुत्सृष्टस्तयोरन्यतरेण वा ।
यं पुत्रं प्रतिगृह्णीयादपविद्धः स उच्यते ॥ १०
पितृवेश्मनि कन्या तु यं पुत्रं जनयेद्रहः ।
तं कानीनं वदन्नाम्ना वोढुः कन्यासमुद्भवे ॥ ११
या गर्भिणी संस्क्रियते ज्ञाताऽज्ञातापि वा सती ।
वोढुः स गर्भो भवति सहोढ इति उच्यते ॥ १२
क्रीणीयाद्यस्त्वपत्यार्थं मातापित्रोर्यमन्तिकात् ।
स क्रीतकः सुतस्तस्य सदृशोऽसदृशोपि वा ॥ १३
या पत्या वा परित्यक्ता विधवा वा स्वकेच्छया ।
उत्पादयति पुनर्भूत्वा स पौनर्भव उच्यते ॥ १४
सा चेदक्षतयोनिः स्याद्गतप्रत्यागताऽपि वा ।
पौनर्भवेन भर्त्रा सा पुनःसंस्कारमर्हति ॥ १५
मातापितृहनो यः स्यात्त्यक्तो वा स्यादकारणम् ।
आत्मानं स्पर्शयेद्यस्तु स्वयंदत्तस्तु स स्मृतः ॥ १६
यं ब्राह्मणस्तु शूद्रायां कामादुत्पादयेत्सुतम् ।
स पावयन्नेव शवस्तस्मात्पारशवः स्मृतः ॥ १७
दास्यां वा दासदास्यां वा यः शूद्रस्य सुतो भवेत् ।
सोऽनुज्ञातो हरेदंशमिति धर्मो व्यवस्थितः ॥ १८
क्षेत्रजादीन्सुतानेतानेकादश यथोदितान् ।

सच्छन्ने सुगुप्तेऽपि यस्य जन्मनीति शेषः । सः तच्छील संकरकर्तुः स्वभावम् ॥ ४३ ॥ तस्य संकरजस्य शरीरं सत्वेन शास्त्रीयबुद्ध्या न परिकृष्यते न नीचमार्गादपकृष्यते । बीजगुणस्य प्राबल्यात् ॥ ४६ ॥ त्र्यशीतितमोऽध्याय ॥ ८३ ॥

विप्रवादाः विविधाः प्रवादाः पूर्वोक्ता एव ॥ २ ॥

तल्पे कलत्रे ॥ ६ ॥

पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः ॥१९
भ्रातृणामेकजातानामेकश्चेत्पुत्रवान्भवेत् ।
सर्वांस्तांस्तेन पुत्रेण पुत्रिणो मनुरब्रवीत् ॥ २०
सर्वासामेकपत्नीनामेका चेत्पुत्रिणी भवेत् ।
सर्वास्तास्तेन पुत्रेण प्राह पुत्रवतीर्मनुः ॥' २१
आत्मा पुत्रश्च विज्ञेयस्तस्यानन्तरजश्च यः ।
निरुक्तजश्च विज्ञेयः सुतः प्रसृतजस्तथा ॥ २२
पतितस्य तु भार्याया भर्त्रा सुसमवेतया ।
तथा दत्तकृतौ पुत्रावध्यूढश्च तथाऽपरः ॥ २३
षडपध्वंसजाश्चापि कानीनापसदास्तथा ।
इत्येते वै समाख्यातास्तान्विजानीहि भारत ॥२४
युधिष्ठिर उवाच ।
षडपध्वंसजाः के स्युः के वाऽप्यपसदास्तथा ।
एतत्सर्वं यथातत्त्वं व्याख्यातुं मे त्वमर्हसि ॥२५
भीष्म उवाच ।
त्रिषु वर्णेषु ये पुत्रा ब्राह्मणस्य युधिष्ठिर ।
वर्णयोश्च द्वयोः स्यातां यौ राजन्यस्य भारत ॥२६
एको द्विवर्ण एवाथ तथाऽत्रैवोपलक्षितः ।
षडपध्वंसजास्ते हि तथैवापसदाञ्शृणु ॥ २७
चाण्डालो व्रात्यवर्णौ तु ब्राह्मण्यां क्षत्रियासु च ।
वैश्यायां चैव शूद्रस्य लक्ष्यास्तेऽपसदास्त्रयः ॥२८
मागधो वामकश्चैव द्वौ वैश्यस्योपलक्षितौ ।
ब्राह्मण्यां क्षत्रियायां च क्षत्रियस्यैक एव तु ॥२९
ब्राह्मण्यां लक्ष्यते सूत इत्येतेऽपसदाः स्मृताः ।
पुत्रा ह्येते न शक्यन्ते मिथ्या कर्तुं नराधिप ॥३०
युधिष्ठिर उवाच ।
क्षेत्रजं केचिदेवाहुः सुतं केचित्तु शुक्रजम् ।
तुल्यावेतौ सुतौ कस्य तन्मे ब्रूहि पितामह ॥३१

भीष्म उवाच ।
रेतजो वा भवेत्पुत्रः पुत्रो वा क्षेत्रजो भवेत् ।
अध्यूढः समयं भित्त्वेत्येतदेव निबोध मे ॥ ३२
युधिष्ठिर उवाच ।
रेतजं विद्म वै पुत्रं क्षेत्रजस्यागमः कथम् ।
अध्यूढं विद्म वै पुत्रं भित्त्वा तु समयं कथम् ॥३३
भीष्म उवाच ।
आत्मजं पुत्रमुत्पाद्य यस्त्यजेत्कारणान्तरे ।
न तत्र कारणं रेतः स क्षेत्रस्वामिनो भवेत् ॥३४
पुत्रकामो हि पुत्रार्थे यां वृणीते विशांपते ।
तत्र क्षेत्रं प्रमाणं स्यान्न वै तत्रात्मजः सुतः॥ ३५
अन्यत्र क्षेत्रजः पुत्रो लक्ष्यते भरतर्षभ ।
न ह्यात्मा शक्यते हन्तुं दृष्टान्तोपगतो ह्यसौ ॥३६
कश्चिच्च कृतकः पुत्रः संग्रहादेव लक्ष्यते ।
न तत्र रेतः क्षेत्रं वा प्रमाणं स्याद्युधिष्ठिर ॥ ३७
युधिष्ठिर उवाच ।
कीदृशः कृतकः पुत्रः संग्रहादेव लक्ष्यते ।
शुक्रं क्षेत्रं प्रमाणं वा यत्र लक्ष्यं न भारत ॥ ३८
भीष्म उवाच ।
मातापितृभ्यां यस्त्यक्तः पथि यस्तं प्रकल्पयेत् ।
न चास्य मातापितरौ ज्ञायेतां स हि कृत्रिमः ॥ ३९
अस्वामिकस्य स्वामित्वं यस्मिन्संप्रतिलक्ष्यते ।
यो वर्णः पोषयेत्तं च तद्वर्णस्तस्य जायते ॥ ४०
युधिष्ठिर उवाच ।
कथमस्य प्रयोक्तव्यः संस्कारः कस्य वा कथम् ।
देया कन्या कथं चेति तन्मे ब्रूहि पितामह ॥ ४१
भीष्म उवाच ।
आत्मवत्तस्य कुर्वीत संस्कारं स्वामिवत्तथा ।
त्यक्तो मातापितृभ्यां यः सवर्णं प्रतिपद्यते ॥ ४२

---

अनन्तरजः औरसः । निरुक्तजः स्वक्षेत्रेऽन्यो रेतःसेकार्थमुक्तस्तज्जः । प्रसृतोऽनिरुक्तोऽपि यो लौल्यात्परक्षेत्रे रेतः सिञ्चति तज्जः प्रसृतजः ॥ २२ ॥ तथा पतितात्स्वभार्यायामेव जातः । भार्यायाः तृतीयार्थे षष्ठी । दत्तः पञ्चमः । कृतः क्रीतः स्वयमुपायगम्यो वा षष्ठः । अध्यूढः यस्य माता गर्भवत्येव ऊढा तादृशः सप्तमः ॥ २३ ॥ षडपध्वसजा वक्ष्यमाणाः । कानीनः कन्यायां विवाहात् प्रागुत्पन्नश्चतुर्दशः । अपसदा वक्ष्यमाणाः षट् । एते विंशतिः । तान्सर्वान् पुत्रानिति विजानीहि ॥ २४ ॥ कारणान्तरे लोकापवादादिभये सति ॥ ३४ ॥ या गर्भवती कन्यां वृणीते तत्र स पुत्रो वोढुरेव क्षेत्रजो नतु सेक्तुरात्मजः ॥ ३५ ॥ चतुरशीतितमोऽध्यायः ॥ ८४ ॥

तद्गोत्रबन्धुजं तस्य कुर्यात्संस्कारमच्युत ।
अथ देया तु कन्या स्यात्तद्वर्णस्य युधिष्ठिर ॥ ४३
संस्कर्तुं वर्णगोत्रं च मातृवर्णविनिश्चये ।
कानीनाध्यूढजौ वाऽपि विज्ञेयौ पुत्रकिल्बिषौ ॥ ४४
तावपि स्वाविव सुतौ संस्कार्याविति निश्चयः ।
क्षेत्रजो वाऽप्यपसदो येऽध्यूढास्तेषु चाप्युत ॥ ४५
आत्मवद्वै प्रयुञ्जीरन्संस्कारान्ब्राह्मणादयः'।
'स्वं जन्म मातृगोत्रेण संस्कारं ब्राह्मणादयः ॥' ४६
धर्मशास्त्रेषु वर्णानां निश्चयोऽयं प्रदृश्यते ।
एतत्ते सर्वमाख्यातं किं भूयः श्रोतुमिच्छसि ॥ ४७

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि चतुरशीतितमोऽध्यायः ॥ ८४ ॥

## पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

भीष्मेण युधिष्ठिरंप्रति महद्दर्शनसहवासयोर्गवां च प्रभावबोधनाय च्यवनोपाख्यानकथनारम्भः ॥ १ ॥ गङ्गायमुनासंगमेऽन्तर्जले निमज्य तपस्यतश्च्यवनस्य दाशैर्जालेन जलचरैः सह कूलप्रापणम् ॥ २ ॥ दाशैः प्रार्थितेन तेन तान्प्रति मत्स्यैः सह स्वस्य प्राणजालान्यतरस्मान्मोचनचोदना ॥ ३ ॥

युधिष्ठिर उवाच ।
दर्शने कीदृशः स्नेहः संवासे च पितामह ।
महाभाग्यं गवां चैव तन्मे व्याख्यातुमर्हसि ॥ १
भीष्म उवाच ।
हन्त ते कथयिष्यामि पुरावृत्तं महाद्युते ।
नहुषस्य च संवादं महर्षेश्च्यवनस्य च ॥ २
पुरा महर्षिश्च्यवनो भार्गवो भरतर्षभ ।
उदवासकृतारम्भो बभूव स महाव्रतः ॥ ३
निहत्य मानं क्रोधं च प्रहर्षं शोकमेव च ।
वर्षाणि द्वादश मुनिर्जलवासे धृतव्रतः ॥ ४
आदधत्सर्वभूतेषु विस्रम्भं परमं शुभम् ।
जलेचरेषु सर्वेषु शीतरश्मिरिव प्रभुः ॥ ५
स्थाणुभूतः शुचिर्भूत्वा दैवतेभ्यः प्रणम्य च ।
गङ्गायमुनयोर्मध्ये जलं संप्रविवेश ह ॥ ६
गङ्गायमुनयोर्वेगं सुभीमं भीमनिःस्वनम् ।
प्रतिजग्राह शिरसा वातवेगसमं जवे ॥ ७
गङ्गा च यमुना चैव सरितश्च सरांसि च ।
प्रदक्षिणमृषिं चक्रुर्न चैनं पर्यपीडयन् ॥ ८
अन्तर्जलेषु सुष्वाप काष्ठभूतो महामुनिः ।
ततश्चोर्ध्वस्थितो धीमानभवद्भरतर्षभ ॥ ९
जलौकसां ससत्वानां बभूव प्रियदर्शनः ।
उपाजिघ्रन्त च तदा मत्स्यास्तं हृष्टमानसाः ।
तत्र तस्यासतः कालः समतीतोऽभवन्महान् ॥ १०
ततः कदाचित्समये कस्मिंश्चिन्मत्स्यजीविनः ।
तं देशं समुपाजग्मुर्जालहस्ता महाद्युते ॥ ११
निषादा बहवस्तत्र मत्स्योद्धरणनिश्चयाः ।
व्यायता बलिनः शूराः सलिलेष्वनुवर्तिनः ।
अभ्याययुश्च तं देशं निश्चिता जालकर्मणि ॥ १२
जालं ते योजयामासुर्नवसूत्रकृतं दृढम् ।
मत्स्योद्धरणमाकर्षुस्तदा भरतसत्तम ॥ १३
ततस्ते बहुभिर्योगैः कैवर्ता मत्स्यकाङ्क्षिणः ।
गङ्गायमुनयोर्वारि जालेनावकिरन्ति ते ॥ १४
जालं सुविततं तेषां नवसूत्रकृतं तथा ।
विस्तारायामसंपन्नं यत्तत्र सलिले क्षमम् ॥ १५
ततस्ते सुमहच्चैव बलवच्च सुवर्तितम् ।
अवतीर्य ततः सर्वे जालं चकृषिरे तदा ॥ १६
अभीतरूपाः संहृष्टा अन्योन्यवशवर्तिनः ।
बबन्धुस्तत्र मत्स्यांश्च तथाऽन्याञ्जलचारिणः ॥ १७
तथा मत्स्यैः परिवृतं च्यवनं भृगुनन्दनम् ।
आकर्षयन्महाराज जालेनाथ यदृच्छया ॥ १८
नदीशैवलदिग्धाङ्गं हरिश्मश्रुजटाधरम् ।

परपीडादर्शने परैः सह संवासे च कीदृशः स्नेह आनृशंस्यं च कर्तव्यम् । गवां माहात्म्यं च ब्रूहीति प्रश्नद्वयम् ॥ १ ॥

सरितश्च तथानुगा इति ट. थ. ध. पाठः ॥ ८ ॥ ऊर्ध्वस्थितः उपविष्टः ॥ ९ ॥ आसतः आसीनस्य ॥ १० ॥

लग्नः शङ्खनखैर्गात्रे क्रोडैश्चित्रैरिवार्पितम् ॥ १९
तं जालेनोद्धृतं दृष्ट्वा ते तदा वेदपारगम् ।
सर्वे प्राञ्जलयो दाशाः शिरोभिः प्रापतन्भुवि ॥२०
परिखेदपरित्रासाज्जालस्याकर्षणेन च ।
मत्स्या बभूवुर्व्यापन्नाः स्थलसंस्पर्शनेन च ॥२१
स मुनिस्तत्तदा दृष्ट्वा मत्स्यानां कदनं कृतम् ।
बभूव कृपयाविष्टो निःश्वसंश्च पुनःपुनः ॥ २२
निषादा ऊचुः ।
अज्ञानाद्यत्कृतं पापं प्रसादं तत्र नः कुरु ।
करवाम प्रियं किं ते तन्नो ब्रूहि महामुने ॥ २३
इत्युक्तो मत्स्यमध्यस्थश्च्यवनो वाक्यमब्रवीत् ।
यो मेऽद्य परमः कामस्तं शृणुध्वं समाहिताः ॥२४
प्राणोत्सर्गं विसर्गं वा मत्स्यैर्यास्याम्यहं सह ।
संवासान्नोत्सहे त्यक्तुं सलिलेऽध्युषितानहम् ॥२५
इत्युक्तास्ते निषादास्तु सुभृशं भयकम्पिताः ।
सर्वे विवर्णवदना नहुषाय न्यवेदयन् ॥ २६

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

## षडशीतितमोऽध्यायः ॥ ८६ ॥

दाशैश्च्यवनवृत्तान्तं निवेदितेन नहुषेण तंप्रति तदभीष्टकरणप्रतिज्ञानम् ॥ १ ॥ च्यवनेन नहुषंप्रति दाशेभ्यः स्वोचितमूल्यदानेनात्ममोचनचोदना ॥ २ ॥ नहुषेण संपूर्णराज्यस्य मूल्यतापरिकल्पनेपि मुनिना तदनङ्गीकरणे गवि जातेन मुनिना गोः प्रतिनिधीकरणम् ॥ ३ ॥ च्यवनेन गोप्रतिग्रहणेन स्वसहवासिभिर्मत्स्यैः सह दाशानां स्वर्गप्रापणम् ॥ ४ ॥

भीष्म उवाच ।
नहुषस्तु ततः श्रुत्वा च्यवनं तं तथाऽऽगतम् ।
त्वरितः प्रययौ तत्र सहामात्यपुरोहितः ॥ १
शौचं कृत्वा यथान्यायं प्राञ्जलिः प्रयतो नृपः ।
आत्मानमाचचक्षे च च्यवनाय महात्मने ॥ २
अर्चयामास तं चापि तस्य राज्ञः पुरोहितः ।
सत्यव्रतं महात्मानं देवकल्पं विशांपते ॥ ३
नहुष उवाच ।
करवाणि प्रियं किं ते तन्मे ब्रूहि द्विजोत्तम ।
सर्वं कर्ताऽस्मि भगवन्यद्यपि स्यात्सुदुष्करम् ॥ ४
च्यवन उवाच ।
श्रमेण महता युक्ताः कैवर्ता मत्स्यजीविनः ।
मम मूल्यं प्रयच्छैभ्यो मत्स्यानां विक्रयैः सह ॥ ५
नहुष उवाच ।
सहस्रं दीयतां मूल्यं निषादेभ्यः पुरोहित ।
निष्क्रयार्थं भगवतो यथाऽऽह भृगुनन्दनः ॥ ६
च्यवन उवाच ।
आत्ममूल्यं न वक्तव्यं न तल्लोकः प्रशंसति ।
तस्मादहं प्रवक्ष्यामि न चात्मस्तुतिमाचरेत् ॥ ७
सहस्रं नाहमर्हामि किं वा त्वं मन्यसे नृप ।
सदृशं दीयतां मूल्यं स्वबुद्ध्या निश्चयं कुरु ॥ ८
नहुष उवाच
सहस्राणां शतं विप्र निषादेभ्यः प्रदीयताम् ।
स्यादिदं भगवन्मूल्यं किं वाऽन्यन्मन्यते भवान् ९
च्यवन उवाच ।
नाहं शतसहस्रेण निमेयः पार्थिवर्षभ ।
दीयतां सदृशं मूल्यममात्यैः सह चिन्तय ॥ १०
नहुष उवाच ।
कोटिः प्रदीयतां मूल्यं निषादेभ्यः पुरोहित ।
यदेतदपि नो मूल्यमतो भूयः प्रदीयताम् ॥ ११
च्यवन उवाच ।
राजन्नार्हाम्यहं कोटिं भूयो वाऽपि महाद्युते ।
सदृशं दीयतां मूल्यं ब्राह्मणैः सह चिन्तय ॥१२
नहुष उवाच
अर्धं राज्यं समग्रं वा निषादेभ्यः प्रदीयताम् ।
एतत्तुल्यमहं मन्ये किं वाऽन्यन्मन्यसे द्विज ॥ १३
च्यवन उवाच ।
अर्धं राज्यं समग्रं च मूल्यं नार्हामि पार्थिव ।

---

शङ्खानां जलजन्तुविशेषाणां नखानि तैः ॥ १९ ॥

पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

सदृशं दीयतां मूल्यमृषिभिः सह चिन्त्यताम् ॥१४
भीष्म उवाच ।
महर्षेर्वचनं श्रुत्वा नहुषो दुःखकर्शितः ।
स चिन्तयामास तदा सहामात्यपुरोहितः ॥ १५
तत्र त्वन्यो वनचरः कश्चिन्मूलफलाशनः ।
नहुषस्य समीपस्थो गविजातोऽभवन्मुनिः ॥ १६
स तमाभाष्य राजानमब्रवीद्द्विजसत्तमः ।
तोषयिष्याम्यहं क्षिप्रं यथा तुष्टो भविष्यति ॥१७
नाहं मिथ्यावचो ब्रूयां स्वैरेष्वपि कुतोऽन्यथा ।
भवतो यदहं ब्रूयां तत्कार्यमविशङ्कया ॥ १८
नहुष उवाच ।
ब्रवीतु भगवान्मूल्यं महर्षेः सदृशं भृगोः ।
परित्रायस्व मामस्माद्विषयं च कुलं च मे ॥ १९
हन्याद्धि भगवान्क्रुद्धस्त्रैलोक्यमपि केवलम् ।
किं पुनर्मां तपोहीनं बाहुवीर्यपरायणम् ॥ २०
अगाधाम्भसि मग्नस्य सामात्यस्य सऋत्विजः ।
प्लवो भव महर्षे त्वं कुरु मूल्यविनिश्चयम् ॥ २१
भीष्म उवच ।
नहुषस्य वचः श्रुत्वा गविजातः प्रतापवान् ।
उवाच हर्षयन्सर्वानमात्यान्पार्थिवं च तम् ॥ २२
'ब्राह्मणानां गवां चैव कुलमेकं द्विधा कृतम् ।
एकत्र मन्त्रास्तिष्ठन्ति हविरन्यत्र तिष्ठति ॥' २३
अनर्घेया महाराज द्विजा वर्णेषु चोत्तमाः ।
गावश्च पुरुषव्याघ्र गौर्मूल्यं परिकल्प्यताम् ॥ २४
नहुषस्तु ततः श्रुत्वा महर्षेर्वचनं नृप ।
हर्षेण महता युक्तः सहामात्यपुरोहितः ॥ २५
अभिगम्य भृगोः पुत्रं च्यवनं संशितव्रतम् ।
इदं प्रोवाच नृपते वाचा संतर्पयन्निव ॥ २६
उत्तिष्ठोत्तिष्ठ विप्रर्षे गवा क्रीतोसि भार्गव ।
एतन्मूल्यमहं मन्ये तव धर्मभृतांवर ॥ २७
च्यवन उवाच ।
उत्तिष्ठाम्येष राजेन्द्र सम्यक् क्रीतोसि तेऽनघ ।
गोभिस्तुल्यं न पश्यामि धनं किंचिदिहाच्युत ॥२८
कीर्तनं श्रवणं दानं दर्शनं चापि पार्थिव ।
गवां प्रशस्यते वीर सर्वपापहरं शिवम् ॥ २९
गावो लक्ष्म्याः सदा मूलं गोषु पाप्मा न विद्यते ।
अन्नमेव सदा गावो देवानां परमं हविः ॥ ३०
स्वाहाकारवषट्कारौ गोषु नित्यं प्रतिष्ठितौ ।
गावो यज्ञस्य नेत्र्यो वै तथा यज्ञस्य ता मुखम् ॥३१
अमृतं ह्यव्ययं दिव्यं क्षरन्ति च वहन्ति च ।
अमृतायतनं चैताः सर्वलोकनमस्कृताः ॥ ३२
तेजसा वपुषा चैव गावो वह्निसमा भुवि ।
गावो हि सुमहत्तेजः प्राणिनां च सुखप्रदाः ॥ ३३
निविष्टं गोकुलं यत्र श्वासं मुञ्चति निर्भयम् ।
विराजयति तं देशं पापं चास्यापकर्षति ॥ ३४
गावः स्वर्गस्य सोपानं गावः स्वर्गेऽपि पूजिताः ।
गावः कामदुहो देव्यो नान्यत्किंचित्परं स्मृतम् ३५
इत्येतद्गोषु मे प्रोक्तं माहात्म्यं भरतर्षभ ।
गुणैकदेशवचनं शक्यं पारायणं न तु ॥ ३६
निषादा ऊचुः ।
दर्शनं कथनं चैव सहास्माभिः कृतं मुने ।
सतां साप्तपदं मैत्रं प्रसादं नः कुरु प्रभो ॥ ३७
हवींषि सर्वाणि यथा ह्युपभुङ्क्ते हुताशनः ।
एवं त्वमपि धर्मात्मन्पुरुषाग्निः प्रतापवान् ॥ ३८
प्रसादयामहे विद्वन्भवन्तं प्रणता वयम् ।
अनुग्रहार्थमस्माकमियं गौः प्रतिगृह्यताम् ॥ ३९
'अत्यन्तापदि शक्तानां परित्राणं हि कुर्वताम् ।
या गतिर्विदिता त्वद्य नरके शरणं भवान् ॥ ४०
च्यवन उवाच ।
कृपणस्य च यच्चक्षुर्मुनेराशीविषस्य च ।
नरं समूलं दहति कक्षमग्निरिव ज्वलन् ॥ ४१
प्रतिगृह्णामि वो धेनुं कैवर्ता मुक्तकिल्बिषाः ।
दिवं गच्छत वै क्षिप्रं मत्स्यैर्जालोद्धृतैः सह ॥ ४२
भीष्म उवाच ।
ततस्तस्य प्रभावात्ते महर्षेर्भावितात्मनः ।
निषादास्तेन वाक्येन सह मत्स्यैर्दिवं ययुः ॥४३
ततः स राजा नहुषो विस्मितः प्रेक्ष्य धीवरान् ।
आरोहमाणांस्त्रिदिवं मत्स्यांश्च भरतर्षभ ॥ ४४

ततस्तौ गविजश्चैव च्यवनश्च भृगूद्वहः ।
वराभ्यामनुरूपाभ्यां छन्दयामासतुर्नृपम् ॥ ४५
ततो राजा महावीर्यो नहुषः पृथिवीपतिः ।
परमित्यब्रवीत्प्रीतस्तदा भरतसत्तम ॥ ४६
ततो जग्राह धर्मे स स्थितिमिन्द्रनिभो नृपः ।
तथेति चोदितः प्रीतस्तावृषी प्रत्यपूजयत् ॥ ४७
समाप्तदीक्षश्च्यवनस्ततोऽगच्छत्स्वमाश्रमम् ।
गविजश्च महातेजाः स्वमाश्रमपदं ययौ ॥ ४८
निषादाश्च दिवं जग्मुस्ते च मत्स्या जनाधिप ।
नहुषोऽपि वरं लब्ध्वा प्रविवेश स्वकं पुरम् ॥ ४९
एतत्ते कथितं तात यन्मां त्वं परिपृच्छसि ।
दर्शने यादृशः स्नेहः संवासे वा युधिष्ठिर ॥ ५०
महाभाग्यं गवां चैव तथा धर्मविनिश्चयम् ।
किं भूयः कथ्यतां वीर किं ते हृदि विवक्षितम् ॥ ५१

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि षडशीतितमोऽध्यायः ॥ ८६ ॥

## सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

भीष्मेण युधिष्ठिरंप्रति रामविश्वामित्रयोरुत्पत्तिप्रकारकथनारम्भः ॥ १ ॥ च्यवनेन कुशिकराजमेत्य सभार्यं तंप्रति स्वशुश्रूषाविधानम् ॥ २ ॥ सभार्येण कुशिकेन एकविंशतिदिवसाननवरतमेकपार्श्वेन प्रसुप्तस्य च्यवनस्य पादसंवाहनेन पर्युपासनम् ॥ ३ ॥ ततः शयनादुत्थितेन मुनिना किंचिद्दूरं गत्वा पुनरन्तर्धानम् ॥ ४ ॥

युधिष्ठिर उवाच ।
संशयो मे महाप्राज्ञ सुमहान्सागरोपम ।
तं मे शृणु महाबाहो श्रुत्वा व्याख्यातुमर्हसि ॥ १
कौतूहलं मे सुमहज्जामदग्न्यं प्रति प्रभो ।
रामं धर्मभृतां श्रेष्ठं तन्मे व्याख्यातुमर्हसि ॥ २
'ब्राह्मे बले सुपूर्णानामेतेषां च्यवनादिनाम् ।'
कथमेष समुत्पन्नो रामः सत्यपराक्रमः ।
कथं ब्रह्मर्षिवंशोऽयं क्षत्रधर्मा व्यजायत ॥ ३
तदस्य संभवं राजन्निखिलेनानुकीर्तय ।
कौशिकश्च कथं वंशात्क्षत्राद्वै ब्राह्मणोऽभवत् ॥ ४
अहो प्रभावः सुमहानासीद्वै सुमहात्मनोः ।
रामस्य च नरव्याघ्र विश्वामित्रस्य चैव हि ॥ ५
कथं पुत्रानतिक्रम्य तेषां नप्तृष्वथाभवत् ।
एष दोषो महाप्राज्ञ तत्त्वं व्याख्यातुमर्हसि ॥ ६
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
च्यवनस्य च संवादं कुशिकस्य च भारत ॥ ७
एतं दोषं पुरा दृष्ट्वा भार्गवश्च्यवनस्तदा ।
आगतमिनं महाबुद्धिः स्ववंशे मुनिसत्तमः ॥ ८
निश्चित्य मनसा सर्वं गुणदोषबलाबलम् ।
दग्धुकामः कुलं सर्वं कुशिकानां तपोधनः ॥ ९
च्यवनस्तमनुप्राप्य कुशिकं वाक्यमब्रवीत् ।
वस्तुमिच्छा समुत्पन्ना त्वया सह ममानघ ॥ १०
कुशिक उवाच ।
भगवन्सहधर्मोऽयं पण्डितैरिह चर्यते ।
प्रदानकाले कन्यानामुच्यते च सदा बुधैः ॥ ११
यत्तु तावदतिक्रान्तं धर्मद्वारं तपोधन ।
तत्कार्यं प्रकरिष्यामि तदनुज्ञातुमर्हसि ॥ १२
भीष्म उवाच ।
अथासनमुपादाय च्यवनस्य महामुनेः ।
कुशिको भार्यया सार्धमाजगाम यतो मुनिः ॥ १३
प्रगृह्य राजा भृङ्गारं पाद्यमस्मै न्यवेदयत् ।
कारयामास सर्वाश्च क्रियास्तस्य महात्मनः ॥ १४
ततः स राजा च्यवनं मधुपर्कं यथाविधि ।
ग्राहयामास चाव्यग्रो महात्मा नियतव्रतः ॥ १५
सत्कृत्य तं तथा विप्रमिदं पुनरथाब्रवीत् ।
भगवन्परवन्तौ स्वो ब्रूहि किं करवावहे ॥ १६
यदि राज्यं यदि धनं यदि गाः संशितव्रत ।
यज्ञदानानि च तथा ब्रूहि सर्वं ददामि ते ॥ १७
इदं गृहमिदं राज्यमिदं धर्मासनं च ते ।
राजा त्वमसि शाध्युर्वीं भृत्योऽहं परवांस्त्वयि ॥ १८

अतिथिसेवाधर्म एव सहधर्मः स्त्रीसहितधर्मः ॥ ११ ॥

एवमुक्ते ततो वाक्ये च्यवनो भार्गवस्तदा ।
कुशिकं प्रत्युवाचेदं मुदा परमया युतः ॥ १९
न राज्यं कामये राजन्न धनं न च योषितः ।
न च गा न च वै देशान्न यज्ञं श्रूयतामिदम् ॥ २०
नियमं किंचिदारप्स्ये युवयोर्यदि रोचते ।
परिचर्योऽस्मि यत्ताभ्यां युवाभ्यामविशङ्कया ॥ २१
एवमुक्ते तदा तेन दंपती तौ जहर्षतुः ।
प्रत्यब्रूतां च तमृषिमेवमस्त्विति भारत ॥ २२
अथ तं कुशिको हृष्टः प्रावेशयदनुत्तमम् ।
गृहोद्देशं ततस्तस्य दर्शनीयमदर्शयत् ॥ २३
इयं शय्या भगवतो यथाकाममिहोष्यताम्
प्रयतिष्यावहे प्रीतिमाहर्तुं ते तपोधन ॥ २४
अथ सूर्योऽतिचक्राम तेषां संवदतां तथा ।
अथर्षिश्चोदयामास पानमन्नं तथैव च ॥ २५
तमपृच्छत्ततो राजा कुशिकः प्रणतस्तदा ।
किमन्नजातमिष्टं ते किमुपस्थापयाम्यहम् ॥ २६
ततः स परया प्रीत्या प्रत्युवाच नराधिपम् ।
औपपत्तिकमाहारं प्रयच्छस्वेति भारत ॥ २७
तद्वचः पूजयित्वा तु तथेत्याह स पार्थिवः ।
यथोपपन्नमाहारं तस्मै प्रादाज्जनाधिप ॥ २८
ततः स भुक्त्वा भगवन्दंपती प्राह धर्मवित् ।
स्वप्तुमिच्छाम्यहं निद्रा बाधते मामिति प्रभो ॥२९
ततः शय्यागृहं प्राप्य भगवानृषिसत्तमः ।
संविवेश नरेशस्तु सपत्नीकः स्थितोऽभवत् ॥ ३०
न प्रबोध्योऽसि संसुप्त इत्युवाचाथ भार्गवः ।
संवाहितव्यौ मे पादौ जागर्तव्यं च वां निशि ३१
अविशङ्कस्तु कुशिकस्तथेत्येवाह धर्मवित् ।
न प्राबोधयतां तौ च दंपती रजनीक्षये ॥ ३२
यथादेशं महर्षेस्तु शुश्रूषापरमौ तदा ।
बभूवतुर्महाराज प्रयतावथ दंपती ॥ ३३
ततः स भगवान्विप्रः समादिश्य नराधिपम् ।
सुष्वापैकेन पार्श्वेन दिवसानेकविंशतिम् ॥ ३४
स तु राजा निराहारः सभार्यः कुरुनन्दन ।
पर्युपासत तं हृष्टश्च्यवनाराधने रतः ॥ ३५
भार्गवस्तु समुत्तस्थौ स्वयमेव तपोधनः ।
अकिंचिदुक्त्वा तु गृहान्निश्चक्राम महातपाः ॥३६
तमन्वगच्छतां तौ च क्षुधितौ श्रमकर्शितौ ।
भार्यापती मुनिश्रेष्ठस्तावेतौ नावलोकयत् ॥ ३७
तयोस्तु प्रेक्षतोरेव भार्गवाणां कुलोद्वहः ।
अन्तर्हितोऽभूद्राजेन्द्र ततो राजाऽपतत्क्षितौ ॥ ३८
ततो मुहूर्तादाश्वस्य सह देव्या महाद्युतिः ।
पुनरन्वेषणे यत्नमकरोत्स महीपतिः ॥ ३९

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

## अष्टाशीतितमोऽध्यायः ॥ ८८ ॥

पूर्वमन्तर्हितेन च्यवनेन कुशिकंप्रति पुनः शयने प्रस्वपत आत्मनः प्रदर्शनम् ॥ १ ॥ पुनरुत्थितेन मुनिना राजानंप्रति आत्मनस्तैलाभ्यञ्जननियोजनेन स्नानशालायां पुनरन्तर्धानम् ॥ २ ॥ पुनराविष्कृतात्मना तेन सभार्यस्य राज्ञो रथधुरि संयोजनपूर्वकं याचकेभ्यस्तदीयवित्तादिवितरणेन वीथ्यां रथेन निर्गमनम् ॥ ३ ॥ स्वीयप्रतोदताडनेऽप्यविकृतमानसे सभार्ये कुशिके प्रसीदता मुनिना वरदानेन तस्य स्वगृहप्रेषणम् ॥ ४ ॥

युधिष्ठिर उवाच ।
तस्मिन्नन्तर्हिते विप्रे राजा किमकरोत्तदा ।
भार्या चास्य महाभागा तन्मे ब्रूहि पितामह ॥१
भीष्म उवाच ।
अदृष्ट्वा स महीपालस्तमृषिं सह भार्यया ।
परिश्रान्तो निववृते व्रीडितो नष्टचेतनः ॥
स प्रविश्य पुरीं दीनो नाभ्यभाषत किंचन ।
तदेव चिन्तयामास च्यवनस्य विचेष्टितम् ॥
अथ शून्येन मनसा प्रविवेश गृहं नृपः ।
ददर्श शयने तस्मिञ्शयानं भृगुनन्दनम् ॥

नच तावभ्यवारयदिति ट. थ. ध. पाठः ॥ ३७ ॥

सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

विस्मितौ तमृषिं दृष्ट्वा तदाश्चर्यं विचिन्त्य च ।
दर्शनात्तस्य तु तदा विश्रान्तौ संबभूवतुः ॥ ५
यथास्थानं ततो गत्वा तत्पादौ संववाहतुः ।
अथापरेण पार्श्वेन सुष्वाप स महामुनिः ॥ ६
तेनैव च स कालेन प्रत्यबुध्यत वीर्यवान् ।
न च तौ चक्रतुः किंचिद्विकारं भयशङ्कितौ ॥७
प्रतिबुद्धस्तु स मुनिस्तौ प्रोवाच विशांपते ।
तैलाभ्यङ्गो दीयतां मे स्नास्येऽहमिति भारत ॥८
तौ तथेति प्रतिश्रुत्य क्षुधितौ श्रमकर्शितौ ।
शतपाकेन तैलेन महार्हेणोपतस्थतुः ॥ ९
ततः सुखासीनमृषिं वाग्यतौ संववाहतुः ।
न च पर्याप्तमित्याह भार्गवः सुमहातपाः ॥ १०
यदा तौ निर्विकारौ तु लक्षयामास भार्गवः ।
तत उत्थाय सहसा स्नानशालां विवेश ह ॥११
क्लृप्तमेव तु तत्रासीत्स्नानीयं पार्थिवोचितम् ।
असत्कृत्य च तत्सर्वं तत्रैवान्तरधीयत ॥ १२
स मुनिः पुनरेवाथ नृपतेः पश्यतस्तदा ।
नासूयां चक्रतुस्तौ च दंपती भरतर्षभ ॥ १३
अथ स्नातः स भगवान्सिंहासनगतः प्रभुः ।
दर्शयामास कुशिकं सभार्यं कुरुनन्दन ॥ १४
संहृष्टवदनो राजा सभार्यः कुशिको मुनिम् ।
सिद्धमन्नमिति प्रह्वो निर्विकारो न्यवेदयत् ॥ १५
आनीयतामिति मुनिस्तं चोवाच नराधिपम् ।
स राजा समुपाजह्रे तदन्नं सह भार्यया ॥ १६
मांसप्रकारान्विविधाञ्शाकानि विविधानि च ।
लेह्यपिष्टविकारांश्च पानकानि लघूनि च ॥ १७
रसालापूपकांश्चित्रान्मोदकानथ षाडवान् ।
रसान्नानाप्रकारांश्च वन्यं च मुनिभोजनम् ॥ १८
फलानि च विचित्राणि राजभोज्यानि भूरिशः ।
बदरेङ्गुदकाश्मर्यभल्लातकफलानि च ॥ १९
गृहस्थानां च यद्भोज्यं यच्चापि वनवासिनाम् ।
सर्वमाहारयामास राजा शापभयान्मुनेः ॥ २०
अथ सर्वमुपन्यस्तमग्रतश्च्यवनस्य तत् ।
ततः सर्वं समानीय तच्च शय्यासनं मुनिः ॥२१
वस्त्रैः शुभैरवच्छाद्य भोजनोपस्करैः सह ।
सर्वमादीपयामास च्यवनो भृगुनन्दनः ॥ २२
न च तौ चक्रतुः क्रोधं दंपती सुमहाव्रतौ ।
तयोः संप्रेक्षतोरेव पुनरन्तर्हितोऽभवत् ॥ २३
तथैव च स राजर्षिस्तस्थौ तां रजनीं तदा ।
सभार्यो वाग्यतः श्रीमान्न च कोपं समाविशत् ॥२४
नित्यसंस्कृतमन्नं तु विविधं राजवेश्मनि ॥
शयनानि च मुख्यानि परिषेकाश्च पुष्कलाः ॥२५
वस्त्रं च विविधाकारमभवत्समुपार्जितम् ।
न शशाक ततो द्रष्टुमन्तरं च्यवनस्तदा ॥ २६
पुनरेव च विप्रर्षिः प्रोवाच कुशिकं नृपम् ।
सभार्यो मां रथेनाशु वह यत्र ब्रवीम्यहम् ॥ २७
तथेति च प्राह नृपो निर्विशङ्कस्तपोधनम् ।
क्रीडारथोऽस्तु भगवन्नुत सांग्रामिको रथः ॥ २८
इत्युक्तः स मुनी राज्ञा तेन हृष्टेन तद्वचः ।
च्यवनः प्रत्युवाचेदं हृष्टः परपुरंजयम् ॥ २९
सज्जीकुरु रथं क्षिप्रं यस्ते सांग्रामिको मतः ।
सायुधः सपताकश्च शक्तीकनकयष्टिमान् ॥ ३०
किंकिणीस्वननिर्घोषो युक्तस्तोरणकल्पनैः ।
गदाखड्गनिबद्धश्च परमेषुशतान्वितः ॥ ३१
ततः स तं तथेत्युक्त्वा कल्पयित्वा महारथम् ।
भार्यां वामे धुरि तदा चात्मानं दक्षिणे तथा ॥ ३२
त्रिदण्डं वज्रसूच्यग्रं प्रतोदं तत्र चादधत् ।
सर्वमेतत्तथा दत्त्वा नृपो वाक्यमथाब्रवीत् ॥ ३३
भगवन्क्व रथो यातु ब्रवीतु भृगुनन्दन ।
यत्र वक्ष्यसि विप्रर्षे तत्र यास्यति ते रथः ॥ ३४
एवमुक्तस्तु भगवान्प्रत्युवाचाथ तं नृपम् ।
इतः प्रभृति यातव्यं पदकैपदकं शनैः ॥ ३५
श्रमो मम यथा न स्यात्तथा मच्छन्दचारिणौ ।
सुसुखं चैव वोढव्यो जनः सर्वश्च पश्यतु ॥ ३६
नोत्सार्याः पथिकाः केचित्तेभ्यो दास्ये वसु ह्यहम् ।
ब्राह्मणेभ्यश्च ये कामानर्थयिष्यन्ति मां पथि ॥३७

परिषेकाः परिषेचनपात्रविशेषाः॥ २५ ॥

अष्टाशीतितमोऽध्यायः ॥ ८८ ॥

सर्वान्दास्याम्यशेषेण धनं रत्नानि चैव हि ।
क्रियतां निखिलेनैतन्मा विचारय पार्थिव ॥ ३८
तस्य तद्वचनं श्रुत्वा राजा भृत्यांस्तथाऽब्रवीत् ।
यद्यद्ब्रूयान्मुनिस्तत्तत्सर्वं देयमशङ्कितैः ॥ ३९
ततो रत्नान्यनेकानि स्त्रियो युग्यमजाविकम् ।
कृताकृतं च कनकं गजेन्द्राश्चाचलोपमाः ॥ ४०
अन्वगच्छन्त तमृषिं राजामात्याश्च सर्वशः ।
हाहाभूतं च तत्सर्वमासीन्नगरमार्तवत् ॥ ४१
तौ तीक्ष्णाग्रेण सहसा प्रतोदेन प्रतोदितौ ।
पृष्ठे विद्धौ कटे चैव निर्विकारौ तमूहतुः ॥ ४२
वेपमानौ निराहारौ पञ्चाशद्रात्रकर्शितौ ।
कथंचिदूहतुर्धैर्याद्दंपती तं रथोत्तमम् ॥ ४३
बहुशो भृशविद्धौ तौ क्षरमाणौ क्षतोद्भवम् ।
ददृशाते महाराज पुष्पिताविव किंशुकौ ॥ ४४
तौ दृष्ट्वा पौरवर्गस्तु भृशं शोकसमाकुलः ।
अभिशापभयत्रस्तो न तं किंचिदुवाच ह ॥ ४५
द्वन्द्वशश्चाब्रुवन्सर्वे पश्यध्वं तपसो बलम् ।
क्रुद्धा अपि मुनिश्रेष्ठं वीक्षितुं नेह शक्नुमः ॥ ४६
अहो भगवतो वीर्यं महर्षेर्भावितात्मनः ।
राज्ञश्चापि सभार्यस्य धैर्यं पश्यत यादृशम् ॥ ४७
श्रान्तावपि हि कृच्छ्रेण रथमेनं समूहतुः ।
न चैतयोर्विकारं वै ददर्श भृगुनन्दनः ॥ ४८

भीष्म उवाच ।

ततः स निर्विकारौ तु दृष्ट्वा भृगुकुलोद्वहः ।
वसु विश्राणयामास यथा वैश्रवणस्तथा ॥ ४९
तत्रापि राजा प्रीतात्मा यथादिष्टमथाकरोत् ।
ततोऽस्य भगवान्प्रीतो बभूव मुनिसत्तमः ॥ ५०
अवतीर्य रथश्रेष्ठाद्दंपती तौ मुमोच ह ।
विमोच्य चैतौ विधिवत्ततो वाक्यमुवाच ह ॥ ५१
स्निग्धगम्भीरया वाचा भार्गवः सुप्रसन्नया ।
ददामि वां वरं श्रेष्ठं तं ब्रूतामिति भारत ॥ ५२
सुकुमारौ च तौ विद्धौ कराभ्यां मुनिसत्तमः ।
पस्पर्शामृतकल्पाभ्यां स्नेहाद्भरतसत्तम ॥ ५३
अथाब्रवीन्नृपो वाक्यं श्रमो नास्त्यावयोरिह ।
विश्रान्तौ स्वः प्रभावात्ते ध्यानेनैवेह भार्गव ॥ ५४
अथ तौ भगवान्प्राह प्रहृष्टश्च्यवनस्तदा ।
न वृथा व्याहृतं पूर्वं यन्मया तद्भविष्यति ॥ ५५
रमणीयः समुद्देशो गङ्गातीरमिदं शुभम् ।
किंचित्कालं व्रतपरो निवत्स्यामीह पार्थिव ॥ ५६
गम्यतां स्वपुरं पुत्र विश्रान्तः पुनरेष्यसि ।
इहस्थं मां सभार्यस्त्वं द्रष्टासि श्वो नराधिप ॥ ५७
न च मन्युस्त्वया कार्यः श्रेयस्त्वां समुपस्थितम् ।
यत्काङ्क्षितं हृदिस्थं ते तत्सर्वं हि भविष्यति ॥ ५८
इत्येवमुक्तः कुशिकः प्रहृष्टेनान्तरात्मना ।
प्रोवाच मुनिशार्दूलमिदं वचनमर्थवत् ॥ ५९
न मे मन्युर्महाभाग पूतौ स्वो भगवंस्त्वया ।
संवृत्तौ यौवनस्थौ स्वो वपुष्मन्तौ बलान्वितौ ॥ ६०
प्रतोदेन व्रणा ये मे सभार्यस्य त्वया कृताः ।
तान्न पश्यामि गात्रेषु स्वस्थोस्मि सह भार्यया ॥ ६१
इमां च देवीं पश्यामि वपुषाऽप्सरसोपमाम् ।
श्रिया परमया युक्ता तथा दृष्टा पुरा मया ॥ ६२
तव प्रसादसंवृत्तमिदं सर्वं महामुने ।
नैतच्चित्रं तु भगवंस्त्वयि सत्यपराक्रम ॥ ६३
इत्युक्तः प्रत्युवाचैनं कुशिकं च्यवनस्तदा ।
आगच्छेथाः सभार्यश्च त्वमिहेति नराधिप ॥ ६४
इत्युक्तः समनुज्ञातो राजर्षिरभिवाद्य तम् ।
प्रययौ वपुषा युक्तो नगरं देवराजवत् ॥ ६५
तत एनमुपाजग्मुरमात्याः सपुरोहिताः ।
बलस्था गणिकायुक्ताः सर्वाः प्रकृतयस्तथा ॥ ६६
तैर्वृतः कुशिको राजा श्रिया परमया ज्वलन् ।
प्रविवेश पुरं हृष्टः पूज्यमानोऽथ बन्दिभिः ॥ ६७
ततः प्रविश्य नगरं कृत्वा पौर्वाह्णिकीः क्रियाः ।
भुक्त्वा सभार्यो रजनीमुवास स महाद्युतिः ॥ ६८

ततस्तु तौ नवमभिवीक्ष्य यौवनं
परस्परं विगतजराविवामरौ ।
ननन्दतुः शयनगतौ वपुर्धरौ
श्रिया युतौ द्विजवरदत्तया तदा ॥ ६९

अथाप्यृषिर्भृगुकुलकीर्तिवर्धन-
स्तपोधनो वनमभिराममृद्धिमत् ।
मनोपमं बहुविधरत्नभूषितं
ममज्ज यत्र पुरि शतक्रतोरपि ॥ ६०

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि अष्टाशीतितमोऽध्यायः ॥ ८८ ॥

## एकोननवतितमोऽध्यायः ॥ ८९ ॥

परेद्युः प्रभाते सभार्येण कुशिकेन च्यवनावलोकनाय वनप्रवेशः ॥ १ ॥ च्यवनेन कुशिकंप्रति स्वयोगप्रभावसृष्टस्वर्गप्रदर्शनपूर्वकमभिमतवरवरणप्रेरणा ॥ २ ॥

भीष्म उवाच ।
ततः स राजा रात्र्यन्ते प्रतिबुद्धो महामनाः ।
कृतपूर्वाह्णिकः प्रायात्सभार्यस्तद्वनं प्रति ॥ १
ततो ददर्श नृपतिः प्रासादं सर्वकाञ्चनम् ।
मणिस्तम्भसहस्राढ्यं गन्धर्वनगरोपमम् ।
तत्र दिव्यानभिप्रायान्ददर्श कुशिकस्तदा ॥ २
पर्वतान्रूप्यसानूंश्च नलिनीश्च सपङ्कजाः ।
चित्रशालाश्च विविधास्तोरणानि च भारत ।
शाद्वलोपचितां भूमिं तथा काञ्चनकुट्टिमाम् ॥ ३
सहकारान्प्रफुल्लांश्च केतकोद्दालकान्वरान् ।
अशोकान्सहकुन्दांश्च फुल्लांश्चैवातिमुक्तकान् ॥ ४
चम्पकांस्तिलकान्भव्यान्पनसान्वञ्जुलानपि ।
पुष्पितान्कर्णिकारांश्च तत्रतत्र ददर्श ह ॥ ५
श्यामान्वारणपुष्पांश्च तथाऽष्टपदिका लताः ।
तत्रतत्र परिक्लृप्ता ददर्श स महीपतिः ॥ ६
रम्यान्पद्मोत्पलधरान्सर्वर्तुकुसुमांस्तथा ।
विमानप्रतिमांश्चापि प्रासादाञ्शैलसन्निभान् ॥ ७
शीतलानि च तोयानि क्वचिदुष्णानि भारत ।
आसनानि विचित्राणि शयनप्रवराणि च ॥ ८
पर्यङ्कान्रत्नसौवर्णान्परार्ध्यास्तरणास्तृतान् ।
भक्ष्यं भोज्यमनन्तं च तत्रतत्रोपकल्पितम् ॥ ९
वाणीवादाञ्छुकांश्चैव शारिका भृङ्गराजकान् ।
कोकिलाञ्छतपत्रांश्च सकोयष्टिककुक्कुभान् ॥ १०
मयूरान्कुक्कुटांश्चापि दात्यूहाञ्जीवजीवकान् ।
चकोरान्वानरान्हंसान्सारसांश्चक्रसाह्वयान् ॥ ११
समन्ततः प्रणदतो ददर्श सुमनोहरान् ।
क्वचिदप्सरसां सङ्घान्गन्धर्वाणां च पार्थिव ॥ १२
कान्ताभिरपरांस्तत्र परिष्वक्तान्ददर्श ह ।
न ददर्श च तान्भूयो ददर्श च पुनर्नृपः ॥ १३
गीतध्वनिं सुमधुरं तथैवाध्ययनध्वनिम् ।
हंसान्सुमधुरांश्चापि तत्र शुश्राव पार्थिवः ॥ १४
तं दृष्ट्वाऽत्यद्भुतं राजा मनसाऽचिन्तयत्तदा ।
स्वप्नोऽयं चित्तविभ्रंश उताहो सत्यमेव तु ॥ १५
अहो सह शरीरेण प्राप्तोऽसि परमां गतिम् ।
उत्तरान्वा कुरून्पुण्यानथवाऽप्यमरावतीम् ॥ १६
किंचेदं महदाश्चर्यं संपश्यामीत्यचिन्तयन् ।
एवं संचिन्तयन्नेव ददर्श मुनिपुङ्गवम् ॥ १७
तस्मिन्विमाने सौवर्णे मणिस्तंम्भसमाकुले ।
महार्हे शयने दिव्ये शयानं भृगुनन्दनम् ॥ १८
तमभ्ययात्प्रहर्षेण नरेन्द्रः सह भार्यया ।
अन्तर्हितस्ततो भूयश्च्यवनः शयनं च तत् ॥ १९
ततोऽन्यस्मिन्वनोद्देशे पुनरेव ददर्श तम् ।
कौश्यां बृस्यां समासीनं जपमानं महाव्रतम् ॥ २०
एवं योगबलाद्विप्रो मोहयामास पार्थिवम् ॥ २१
क्षणेन तद्वनं चैव ते चैवाप्सरसां गणाः ।
गन्धर्वाः पादपाश्चैव सर्वमन्तरधीयत ॥ २२
निःशब्दमभवच्चापि गङ्गाकूलं पुनर्नृप ।
कुशवल्मीकभूयिष्ठं बभूव च यथा पुरा ॥ २३
ततः स राजा कुशिकः सभार्यस्तेन कर्मणा ।
विस्मयं परमं प्राप्तस्तद्दृष्ट्वा महदद्भुतम् ॥ २४
ततः प्रोवाच कुशिको भार्यां हर्षसमन्वितः ।
पश्य भद्रे यथाभावाश्चित्रा दृष्टाः सुदुर्लभाः ।
प्रसादाद्भृगुमुख्यस्य किमन्यत्र तपोबलात् ॥ २५
तपसा तदवाप्यं हि यन्न शक्यं मनोरथैः ।

त्रैलोक्यराज्यादपि हि तप एव विशिष्यते ॥ २६
तपसा हि सुतप्तेन क्रीडत्येष तपोधनः ।
अहो प्रभावो ब्रह्मर्षेश्च्यवनस्य महात्मनः ॥ २७
इच्छयैष तपोवीर्यादन्याँल्लोकान्सृजेदपि ।
ब्राह्मणा एव जायेरन्पुण्यवाग्बुद्धिकर्मणा ॥ २८
उत्सहेदिह कृत्वैव कोऽन्यो वै च्यवनादृते ।
ब्राह्मण्यं दुर्लभं लोके राज्यं हि सुलभं नरैः ॥२९
ब्राह्मण्यस्य प्रभावाद्धि रथे युक्तौ स्वधुर्यवत् ।
इत्येवं चिन्तयानः स विदितश्च्यवनस्य वै ॥ ३०
संप्रेक्ष्योवाच नृपतिं क्षिप्रमागम्यतामिति ।
इत्युक्तः सहभार्यस्तु सोभ्यगच्छन्महामुनिम् ॥३१
शिरसा वन्दनीयं तमवन्दत च पार्थिवः
तस्याशिषः प्रयुज्याथ स मुनिस्तं नराधिपम् ।
निषीदेत्यब्रवीद्धीमान्सान्त्वयन्पुरुषर्षभः ॥ ३२
ततः प्रकृतिमापन्नो भार्गवो नृपते नृपम् ।
उवाच श्लक्ष्णया वाचा तर्पयन्निव भारत ॥ ३३
राजन्सम्यग्जितानीह पञ्चपञ्च स्वयं त्वया ।
मनःषष्ठानीन्द्रियाणि कृच्छ्रान्मुक्तोसि तेन वै॥३४
सम्यगाराधितः पुत्र त्वयाऽहं वदतांवर ।
न हि ते वृजिनं किंचित्सुसूक्ष्ममपि दृश्यते ॥३५
अनुजानीहि मां राजन्गमिष्यामि यथागतम् ।
प्रीतोस्मि तव राजेन्द्र वरश्च प्रतिगृह्यताम् ॥ ३६
कुशिक उवाच ।
अग्निमध्ये गतेनेव भगवन्सन्निधौ मया ।
वर्तितं भृगुशार्दूल यन्न दग्धोस्मि तद्बहु ॥ ३७
एष एव वरो मुख्यः प्राप्तो मे भृगुनन्दन ।
यत्प्रीतोसि ममाचारैः कुलं त्रातं च मेऽनघ ॥ ३८
एष मेऽनुग्रहो विप्र जीविते च प्रयोजनम् ।
एतद्राज्यफलं चैव तपसश्च फलं मम ॥ ३९
यदि त्वं प्रीतिमान्विप्र मयि वै भृगुनन्दन ।
अस्ति मे संशयः कश्चित्तन्मे व्याख्यातुमर्हसि ॥४०

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि एकोननवतितमोऽध्यायः ॥ ८९ ॥

## नवतितमोऽध्यायः ॥ ९० ॥

च्यवनेन कुशिकंप्रति स्वस्य तद्गृहे निवासादेः कारणकथनम् ॥ १ ॥ तथा तस्य ब्राह्मण्यप्राप्तीच्छावगमेन तत्पौत्रादेस्तल्लाभवरदानम् ॥ २ ॥

च्यवन उवाच ।
वरश्च गृह्यतां मत्तो यश्च ते संशयो हृदि ।
तं प्रब्रूहि नरश्रेष्ठ सर्वं संपादयामि ते ॥ १
कुशिक उवाच ।
यदि प्रीतोसि भगवंस्ततो मे वद भार्गव ।
कारणं श्रोतुमिच्छामि मद्गृहे वासकारितम् ॥ २
शयनं चैकपार्श्वेन दिवसानेकविंशतिम् ।
न किंचिदुक्त्वा गमनं बहिश्च मुनिपुङ्गव ॥ ३
अन्तर्धानमकस्माच्च पुनरेव च दर्शनम् ।
पुनश्च शयनं विप्र दिवसानेकविंशतिम् ॥ ४
तैलाभ्यक्तस्य गमनं भोजनं च गृहे मम ।
समुपानीय विविधं यद्दग्धं जातवेदसा ॥ ५
निर्याणं च रथेनाशु सहसा यत्कृतं त्वया ।
धनानां च विसर्गश्च वनस्यापि च दर्शनम् ॥ ६
प्रासादानां बहूनां च काञ्चनानां महामुने ।
मणिविद्रुमपादानां पर्यङ्काणां च दर्शनम् ॥ ७
पुनश्चादर्शनं तस्य श्रोतुमिच्छामि कारणम् ।
अतीव ह्यत्र मुह्यामि चिन्तयानो भृगूद्वह ॥ ८
न चैवात्राधिगच्छामि सर्वस्यास्य विनिश्चयम् ।
एतदिच्छामि कार्त्स्न्येन सत्यं श्रोतुं तपोधन ॥९
च्यवन उवाच ।
शृणु सर्वमशेषेण यदिदं येन हेतुना ।

कोऽन्यो वै च्यवनादृते । ब्राह्मण्य दुर्लभ लोके तल्लब्ध्वा दुर्लभ तपः । सिद्धिस्तत्रापि दुष्प्रापा सिद्धेरपि परा गतिः इति ध. पाठ. ॥ २९ ॥ एकोननवतितमोऽध्याय ॥ ८९ ॥

न हि शक्यमनाख्यातुमेवं पृष्टेन पार्थिव ॥ १०
पितामहस्य वदतः पुरा देवसमागमे ।
श्रुतवानसि यद्राजंस्तन्मे निगदतः शृणु ॥ ११
ब्रह्मक्षत्रविरोधेन भविता कुलसंकरः ।
पौत्रस्ते भविता राजंस्तेजोवीर्यसमन्वितः ॥ १२
ततः स्वकुलरक्षार्थमहं त्वां समुपागतः ।
चिकीर्षन्कुशिकोच्छेदं संदिधक्षुः कुलं तव ॥ १३
ततोऽहमागम्य पुरे त्वामवोचं महीपते ।
नियमं कंचिदारप्स्ये शुश्रूषा क्रियतामिति ॥ १४
न च ते दुष्कृतं किंचिदहमासादये गृहे ।
तेन जीवसि राजर्षे न भवेथास्त्वमन्यथा ॥ १५
एवं बुद्धिं समास्थाय दिवसानेकविंशतिम् ।
सुप्तोस्मि यदि मां कश्चिद्बोधयेदिति पार्थिव ॥१६
यदा त्वया सभार्येण संसुप्तो न प्रबोधितः ।
अहं तदैव ते प्रीतो मनसा राजसत्तम ॥ १७
उत्थाय चास्मि निष्क्रान्तो यदि मां त्वं महीपते ।
पृच्छेः क्व यास्यसीत्येवं शपेयं त्वामिति प्रभो ॥१८
अन्तर्हितः पुनश्चास्मि पुनरेव च ते गृहे ।
योगमास्थाय संसुप्तो दिवसानेकविंशतिम् ॥ १९
क्षुधितौ मामसूयेथां श्रमाद्वेति नराधिप ।
एतां बुद्धिं समास्थाय कर्शितौ वां क्षुधा मया ॥२०
न च तेऽभूत्सुसूक्ष्मोपि मन्युर्मनसि पार्थिव ।
सभार्यस्य नरश्रेष्ठ तेन ते प्रीतिमानहम् ॥ २१
भोजनं च समानाय्य यत्तदादीपितं मया ।
क्रुध्येथा यदि मात्सर्यादिति तन्मर्षितं च मे ॥२२
ततोऽहं रथमारुह्य त्वामवोचं नराधिप ।
सभार्यो मां वहस्वेति तच्च त्वं कृतवांस्तथा ॥ २३
अविशङ्को नरपते प्रीतोऽहं चापि तेन ह ।
धनोत्सर्गेऽपि च कृते न त्वां क्रोधोप्यधर्षयत् ॥२४
ततः प्रीतेन ते राजन्पुनरेतत्कृतं तव ।
सभार्यस्य वनं भूयस्तद्विद्धि मनुजाधिप ॥ २५
प्रीत्यर्थं तव चैतन्मे स्वर्गसंदर्शनं कृतम् ।
यत्ते वनेऽस्मिन्नृपते दृष्टं दिव्यं सुदर्शनम् ॥ २६
स्वर्गोद्देशस्त्वया राजन्सशरीरेण पार्थिव ।
मुहूर्तमनुभूतोऽसौ सभार्येण नृपोत्तम ॥ २७
निदर्शनार्थं तपसो धर्मस्य च नराधिप ।
तत्र नासीत्स्पृहा राजंस्तच्चापि विदितं मया ॥२८
ब्राह्मण्यं काङ्क्षसे हि त्वं तपश्च पृथिवीपते ।
अवमत्य नरेन्द्रत्वं देवेन्द्रत्वं च पार्थिव ॥ २९
एवमेतद्यथातत्त्वं ब्राह्मण्यं तात दुर्लभम् ।
ब्राह्मण्ये सति चर्षित्वमृषित्वे च तपस्विता ॥३०
भविष्यत्येष ते कामः कुशिकात्कौशिको द्विजः ३१
तृतीयं पुरुषं प्राप्य ब्राह्मणत्वं गमिष्यति ।
वंशस्ते पार्थिवश्रेष्ठ भृगूणामेव तेजसा ॥ ३२
पौत्रस्ते भविता विप्रस्तपस्वी पावकद्युतिः ।
'जमदग्नौ महाभाग तपसा भावितात्मनि ॥' ३३
यः स देवमनुष्याणां भयमुत्पादयिष्यति ।
त्रयाणामेव लोकानां सत्यमेतद्ब्रवीमि ते ॥ ३४
वरं गृहाण राजर्षे यस्ते मनसि वर्तते ।
तीर्थयात्रां गमिष्यामि पुरा कालोऽतिवर्तते ॥ ३५
कुशिक उवाच ।
एष एव वरो मेऽद्य यत्त्वं प्रीतो महामुने ।
भवत्वेतद्यथार्थत्वं भवेत्पौत्रो ममानघ ॥ ३६
ब्राह्मण्यं मे कुलस्यास्तु भगवन्नेष मे वरः ।
पुनश्चाख्यातुमिच्छामि भगवन्विस्तरेण वै ॥ ३७
कथमेष्यति विप्रत्वं कुलं मे भृगुनन्दन ।
कश्चासौ भविता बन्धुर्मम कश्चापि संमतः ॥ ३८

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि नवतितमोऽध्यायः ॥ ९० ॥

## एकनवतितमोऽध्यायः ॥ ९१ ॥

च्यवनेन कुशिकंप्रति स्वकुले जनिष्यत ऋचीकस्यानुभावेन तद्भार्याश्वश्र्वोः कुशिकपौत्रस्य गाधेः पुत्रीपत्न्योः क्रमेण पौत्रपुत्रभावेन परशुरामविश्वामित्रयोर्जन्मकथनम् ॥ १ ॥

च्यवन उवाच ।
अवश्यं कथनीयं मे तवैतन्नरपुङ्गव ।
यदर्थं त्वाहमुच्छेत्तुं संप्राप्तो मनुजाधिप ॥ १
भृगूणां क्षत्रिया याज्या नित्यमेतज्जनाधिप
ते च भेदं गमिष्यन्ति दैवयुक्तेन हेतुना ॥ २
क्षत्रियाश्च भृगून्सर्वान्वधिष्यन्ति नराधिप ।
आगर्भादनुकृन्तन्तो दैवदण्डनिपीडिताः ॥ ३
तत उत्पत्स्यतेऽस्माकं कुले गोत्रविवर्धनः ।
और्वो नाम महातेजा ज्वलितार्कसमद्युतिः ॥ ४
स त्रैलोक्यविनाशाय कोपाग्निं जनयिष्यति
महीं सपर्वतवनां यः करिष्यति भस्मसात् ॥ ५
कंचित्कालं तु वह्निं च स एव शमयिष्यति
समुद्रे वडवावक्रे प्रक्षिप्य मुनिसत्तमः ॥ ६
पुत्रं तस्य महाराज ऋचीकं भृगुनन्दनम् ।
साक्षात्कृत्स्नो धनुर्वेदः समुपस्थास्यतेऽनघ ॥ ७
क्षत्रियाणामभावाय दैवयुक्तेन हेतुना ।
स तु तं प्रतिगृह्यैव पुत्रे संक्रामयिष्यति ॥ ८
जमदग्नौ महाभागे तपसा भावितात्मनि ।
स चापि भृगुशार्दूलस्तं वेदं धारयिष्यति ॥ ९
कुलात्तु तव धर्मात्मन्कन्यां सोऽधिगमिष्यति ।
उद्भावनार्थं भवतो वंशस्य भरतर्षभ ॥ १०
'क्षत्रहन्ता भवेद्विप्र इति दैवं सनातनम् '
नारायणमुपास्यास्य वरात्तं पुत्रमृच्छति ॥' ११
गाधेर्दुहितरं प्राप्य पौत्रीं तव महातपाः ।
ब्राह्मणं क्षत्रधर्माणं पुत्रमुत्पादयिष्यति ॥ १२
क्षत्रियं विप्रधर्माणं बृहस्पतिमिवौजसा ।
विश्वामित्रं तव कुले गाधेः पुत्रं सुधार्मिकम् ।
तपसा महता युक्तं प्रदास्यति महाद्युते ॥ १३
स्त्रियौ तु कारणं तत्र परिवर्ते भविष्यतः ।
पितामहनियोगाद्वै नान्यथैतद्भविष्यति ॥ १४
तृतीये पुरुषे तुभ्यं ब्राह्मणत्वमुपैष्यति
भविता त्वं च संबन्धी भृगूणां भावितात्मनाम् ॥ १५
भीष्म उवाच
कुशिकस्तु मुनेर्वाक्यं च्यवनस्य महात्मनः ।
श्रुत्वा हृष्टोऽभवद्राजा वाक्यं चेदमुवाच ह ।
एवमस्त्विति धर्मात्मा तदा भरतसत्तम ॥ १६
च्यवनस्तु महातेजाः पुनरेव नराधिपम् ।
वरार्थं चोदयामास तमुवाच स पार्थिवः ॥ १७
बाढमेवं ग्रहीष्यामि कामांस्त्वत्तो महामुने ।
ब्रह्मभूतं कुलं मेऽस्तु धर्मे चास्य मनो भवेत् ॥ १८
एवमुक्तस्तथेत्येवं प्रत्युक्त्वा च्यवनो मुनिः ।
अभ्यनुज्ञाय नृपतिं तीर्थयात्रां ययौ तदा ॥ १९
एतत्ते कथितं सर्वमशेषेण मया नृप ।
भृगूणां कुशिकानां च अभिसंबन्धकारणम् ॥ २०
यथोक्तमृषिणा चापि तदा तदभवन्नृप ।
जन्म रामस्य च मुनेर्विश्वामित्रस्य चैव हि ॥ २१

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि एकनवतितमोऽध्यायः ॥ ९१ ॥

---

## द्विनवतितमोऽध्यायः ॥ ९२ ॥

भीष्मेण युधिष्ठिरंप्रति तत्तद्दानानां विशिष्यफलकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
मीति निशम्याद्य चिन्तयानः पुनःपुनः ।
हीनां पार्थिवसिंहैस्तैः श्रीमद्भिः पृथिवीमिमाम् ॥ १
प्राप्य राज्यानि शतशो महीं जित्वाऽपि भारत

---

तुभ्य तव । ब्राह्मणत्व कर्तृ ॥ १५ ॥

कोटिशः पुरुषान्हत्वा परितप्ये पितामह ॥ २
का नु तासां वरस्त्रीणामवस्थाऽद्य भविष्यति
या हीनाः पतिभिः पुत्रैर्मातुलैर्भ्रातृभिस्तथा ॥३
वयं हि तान्कुरून्हत्वा ज्ञातींश्च सुहृदोऽपि च ।
अवाक्शीर्षाः पतिष्यामो नरके नात्र संशयः ॥४
शरीरं योक्तुमिच्छामि तपसोग्रेण भारत ।
उपदिष्टमिहेच्छामि तत्त्वतोऽहं विशांपते ॥ ५
वैशंपायन उवाच ।
युधिष्ठिरस्य तद्वाक्यं श्रुत्वा भीष्मो महामनाः ।
परीक्ष्य निपुणं बुद्ध्या युधिष्ठिरमभाषत ॥ ६
रहस्यमद्भुतं चैव शृणु वक्ष्यामि भारत ।
या गतिः प्राप्यते येन प्रेत्यभावे विशांपते ॥ ७
तपसा प्राप्यते स्वर्गस्तपसा प्राप्यते यशः ।
आयुःप्रकर्षो भोगाश्च लभ्यन्ते तपसा विभो ॥ ८
ज्ञानं विज्ञानमारोग्यं रूपं संपत्तथैव च ।
सौभाग्यं चैव तपसा प्राप्यते भरतर्षभ ॥ ९
धनं प्राप्नोति तपसा मौनं ज्ञानं प्रयच्छति ।
उपभोगांस्तु दानेन ब्रह्मचर्येण जीवितम् ॥ १०
अहिंसायाः फलं रूपं दीक्षाया जन्म वै कुले ।
फलमूलाशनाद्राज्यं स्वर्गः पर्णाशनाद्भवेत् ॥ ११
पयोभक्षो दिवं याति दानेन द्रविणाधिकः ।
गुरुशुश्रूषया विद्या नित्यश्राद्धेन संततिः ॥ १२
गवाढ्यः शाकदीक्षाभिः स्वर्गमाहुस्तृणाशनात् ।
स्त्रियस्त्रिषवणस्नानाद्वायुं पीत्वा क्रतुं लभेत् ॥ १३
नित्यस्नायी दीर्घजीवी सन्ध्ये तु द्वे जपन्द्विजः ।
मन्त्रं साधयतो राजन्नाकपृष्ठमनाशने ॥ १४
स्थण्डिलेषु शयानानां गृहाणि शयनानि च ।
चीरवल्कलवासोभिर्वासांस्याभरणानि च ॥ १५
शय्यासनानि यानानि योगयुक्ते तपोधने ।
अग्निप्रवेशे नियतं ब्रह्मलोके महीयते ॥ १६
रसानां प्रतिसंहारात्सौभाग्यमिह विन्दति ।
आमिषप्रतिसंहारात्प्रजा ह्यायुष्मती भवेत् ॥ १७
उदवासं वसेद्यस्तु स नराधिपतिर्भवेत् ।
सत्यवादी नरश्रेष्ठ दैवतैः सह मोदते ॥ १८
कीर्तिर्भवति दानेन तथाऽऽरोग्यमहिंसया ।
द्विजशुश्रूषया राज्यं द्विजत्वं चापि पुष्कलम् ॥ १९
पानीयस्य प्रदानेन कीर्तिर्भवति शाश्वती
अन्नस्य तु प्रदानेन तृप्यन्ते कामभोगतः ॥ २०
सान्त्वदः सर्वभूतानां सर्वशोकैर्विमुच्यते ।
देवशुश्रूषया राज्यं दिव्यं रूपं नियच्छति ॥ २१
दीपालोकप्रदानेन चक्षुष्मान्बुद्धिमान्भवेत् ।
प्रेक्षणीयप्रदानेन स्मृतिं मेधां च विन्दति ॥ २२
गन्धमाल्यप्रदानेन कीर्तिर्भवति पुष्कला ।
केशश्मश्रू धारयतामग्र्या भवति संततिः ॥ २३
उपवासं च दीक्षां च अभिषेकं च पार्थिव
कृत्वा द्वादशवर्षाणि वीरस्थानाद्विशिष्यते ॥ २४
दासीदासमलंकारान्क्षेत्राणि च गृहाणि च ।
ब्रह्मदेयां सुतां दत्त्वा प्राप्नोति मनुजर्षभ ॥ २५
क्रतुभिश्चोपवासैश्च त्रिदिवं याति भारत ।
लभते च शिवं ज्ञानं फलपुष्पप्रदो नरः ॥ २६
सुवर्णशृङ्गैस्तु विराजितानां
गवां सहस्रस्य नरः प्रदानात् ।
प्राप्नोति पुण्यं दिवि देवलोक-
मित्येवमाहुर्दिवि देवसङ्घाः ॥ २७
प्रयच्छते यः कपिलां सवत्सां
कांस्योपदोहां कनकाग्रशृङ्गीम् ।
तैस्तैर्गुणैः कामदुघाऽस्य भूत्वा
नरं प्रदातारमुपैति सा गौः ॥ २८
यावन्ति रोमाणि भवन्ति धेन्वा-
स्तावत्फलं प्राप्य स गोप्रदानात् ।
पुत्रांश्च पौत्रांश्च कुलं च सर्व-
मासप्तमं तारयते परत्र ॥ २९
सदक्षिणां काञ्चनचारुशृङ्गीं
कांस्योपदोहां द्रविणोत्तरीयाम् ।

---

या गतिः फल, येन साधनेन, प्रेत्यभावे मरणानन्तरम् ॥ ७ ॥ जीवित आयुः ॥ १० ॥ क्रतु प्रजापतिम् । प्रणायामैः प्रजापतिलोक प्राप्नोतीत्यर्थः ॥ १३ ॥ अनाशन अनाहारः । नित्यस्नायी भवेद्दक्ष इति झ. पाठ. ॥ १४ ॥ प्रतिसहारात्त्यागात ॥ १७ ॥ उपवासः सर्वभोगत्यागः । दीक्षा जपादिनियमस्वीकारः । अभिषेकस्त्रिषवण स्नानम् ॥ २४ ॥

धेनुं तिलानां ददतो द्विजाय
लोका वसूनां सुलभा भवन्ति ॥ ३०
स्वकर्मभिर्मानवं संनिरुद्धं
तीव्रान्धकारे नरके पतन्तम् ।
महार्णवे नौरिव वायुयुक्ता
दानं गवां तारयते परत्र ॥ ३१
यो ब्रह्मदेयां तु ददाति कन्यां
भूमिप्रदानं च करोति विप्रे ।
ददाति चान्नं विधिवच्च यश्च
स लोकमाप्नोति पुरंदरस्य ॥ ३२
नैवेशिकं सर्वगुणोपपन्नं
ददाति वै यस्तु नरो द्विजाय ।
स्वाध्यायचारित्र्यगुणान्विताय
तस्यापि लोकाः कुरुषूत्तरेषु ॥ ३३
धुर्यप्रदानेन गवां तथा वै
लोकानवाप्नोति नरो वसूनाम् ।
स्वर्गाय चाहुस्तु हिरण्यदानं
ततो विशिष्टं कनकप्रदानम् ॥ ३४
छत्रप्रदानेन गृहं वरिष्ठं
यानं तथोपानहसंप्रदाने ।
वस्त्रप्रदानेन फलं सुरूपं
गन्धप्रदानात्सुरभिर्नरः स्यात् ॥ ३५
पुष्पोपगं वाऽथ फलोपगं वा
यः पादपं स्पर्शयते द्विजाय ।
सश्रीकमृद्धं बहुरत्नपूर्णं
लभत्ययत्नोपगतं गृहं वै ॥ ३६
भक्ष्यान्नपानीयरसप्रदाता
सर्वान्समाप्नोति रसान्प्रकामम् ।
प्रतिश्रयाच्छादनसंप्रदाता
प्राप्नोति तान्येव न संशयोऽत्र ॥ ३७
स्रग्धूपगन्धाननुलेपनानि
स्नानानि माल्यानि च मानवो यः ।
दद्याद्द्विजेभ्यः स भवेदरोग-
स्तथाऽभिरूपश्च नरेन्द्रलोके ॥ ३८
बीजैरशून्यं शयनैरुपेतं
दद्याद्गृहं यः पुरुषो द्विजाय ।
पुण्याभिरामं बहुरत्नपूर्णं
लभत्यधिष्ठानवरं स राजन् ॥ ३९
सुगन्धचित्रास्तरणोपधानं
दद्यान्नरो यः शयनं द्विजाय ।
रूपान्वितां पक्षवतीं मनोज्ञां
भार्यामयत्नोपगतां लभेत्सः ॥ ४०
पितामहस्यानवरो वीरशायी भवेन्नरः ।
नाधिकं विद्यते यस्मादित्याहुः परमर्षयः ॥ ४१
वैशंपायन उवाच ।
तस्य तद्वचनं श्रुत्वा प्रीतात्मा कुरुनन्दनः ।
नाश्रमेऽरोचयद्वासं वीरमार्गाभिकाङ्क्षया ॥ ४२
ततो युधिष्ठिरः प्राह पाण्डवान्पुरुषर्षभ ।
पितामहस्य यद्वाक्यं तद्वो रोचत्विति प्रभुः ॥४३
ततस्तु पाण्डवाः सर्वे द्रौपदी च यशस्विनी ।
युधिष्ठिरस्य तद्वाक्यं बाढमित्यभ्यपूजयन् ॥ ४४

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि द्विनवतितमोऽध्यायः ॥ ९२ ॥

## त्रिनवतितमोऽध्यायः ॥ ९३ ॥

भीष्मेण युधिष्ठिरंप्रति तटाकादिप्रतिष्ठाया वृक्षाद्यारोपणस्य च फलनिरूपणम् ॥ १ ॥

उवाच ।
आरामाणां तटाकानां यत्फलं कुरुपुङ्गव ।
तदहं श्रोतुमिच्छामि त्वत्तोऽद्य भरतर्षभ ॥ १
भीष्म उवाच ।

नैवेशिकं गृहोपस्कर शय्यादि ॥ ३३ ॥ पक्षवती महाकुलोद्भवाम् ॥ ४० ॥ अनवरः समानः । यस्मात् पितामहात् ॥ ४१ ॥ द्विनवतितमोऽध्यायः ॥ ९२ ॥

सुप्रदर्शा बलवती चित्रा धातुविभूषिता ।
उपेता सर्वभूतैश्च श्रेष्ठा भूमिरिहोच्यते ॥ २
तस्याः क्षेत्रविशेषाश्च तटाकानां च बन्धनम् ।
औदकानि च सर्वाणि प्रवक्ष्याम्यनुपूर्वशः ॥ ३
तटाकानां च वक्ष्यामि कृतानां चापि ये गुणाः ।
त्रिषु लोकेषु सर्वत्र पूजनीयस्तटाकवान् ॥ ४
अथवा मित्रसदनं मैत्रं मित्रविवर्धनम् ।
कीर्तिसंजननं श्रेष्ठं तटाकानां निवेशनम् ॥ ५
धर्मस्यार्थस्य कामस्य फलमाहुर्मनीषिणः ।
तटाकसुकृतं देशे क्षेत्रमेकं महाश्रयम् ॥ ६
चतुर्विधानां भूतानां तटाकमुपलक्षयेत् ।
तटाकानि च सर्वाणि दिशन्ति श्रियमुत्तमाम् ॥७
देवा मनुष्यगन्धर्वाः पितरोरगराक्षसाः ।
स्थावराणि च भूतानि संश्रयन्ति जलाशयम् ॥ ८
तस्मात्तांस्ते प्रवक्ष्यामि तटाके ये गुणाः स्मृताः ।
या च तत्र फलावाप्तिर्ऋषिभिः समुदाहृता ॥ ९
वर्षाकाले तटाके तु सलिलं यस्य तिष्ठति ।
अग्निहोत्रफलं तस्य फलमाहुर्मनीषिणः ॥ १०
शरत्काले तु सलिलं तटाके यस्य तिष्ठति ।
गोसहस्रस्य स प्रेत्य लभते फलमुत्तमम् ॥ ११
हेमन्तकाले सलिलं तटाके यस्य तिष्ठति ।
स वै बहुसुवर्णस्य यज्ञस्य लभते फलम् ॥ १२
यस्य वै शैशिरे काले तटाके सलिलं भवेत् ।
तस्याग्निष्टोमयज्ञस्य फलमाहुर्मनीषिणः ॥ १३
तटाकं सुकृतं यस्य वसन्ते तु महाश्रयम् ।
अतिरात्रस्य यज्ञस्य फलं स समुपाश्नुते ॥ १४
निदाघकाले पानीयं तटाके यस्य तिष्ठति ।
वाजिमेधफलं तस्य फलं वै मुनयो विदुः ॥ १५
स कुलं तारयेत्सर्वं यस्य खाते जलाशये ।
गावः पिबन्ति सलिलं साधवश्च नराः सदा ॥१६
तटाके यस्य गावस्तु पिबन्ति तृषिता जलम् ।
मृगपक्षिमनुष्याश्च सोऽश्वमेधफलं लभेत् ॥ १७
यत्पिबन्ति जलं तत्र स्नायन्ते विश्रमन्ति च ।
तटाके यस्य तत्सर्वं प्रेत्यानन्त्याय कल्पते ॥ १८
दुर्लभं सलिलं तात विशेषेण परत्र वै ।
पानीयस्य प्रदानेन प्रीतिर्भवति शाश्वती ॥ १९
तिलान्ददत पानीयं दीपान्ददत जागृत ।
ज्ञातिभिः सह मोदध्वमेतत्प्रेत्य सुदुर्लभम् ॥ २०
सर्वदानैर्गुरुतरं सर्वदानैर्विशिष्यते ।
पानीयं नरशार्दूल तस्माद्दातव्यमेव हि ॥ २१
एवमेतत्तटाकस्य कीर्तितं फलमुत्तमम् ।
अत ऊर्ध्वं प्रवक्ष्यामि वृक्षाणामवरोपणम् ॥ २२
स्थावराणां च भूतानां जातयः षट् प्रकीर्तिताः ।
वृक्षगुल्मलतावल्ल्यस्त्वक्सारास्तृणजातयः ॥ २३
एता जात्यस्तु वृक्षाणां तेषां रोपे गुणास्त्विमे ।
कीर्तिश्च मानुषे लोके प्रेत्य चैव फलं शुभम् ॥२४
लभते नाम लोके च पितृभिश्च महीयते ।
देवलोके गतस्यापि नाम तस्य न नश्यति ॥२५
अतीतानागते चोभे पितृवंशं च भारत ।
तारयेद्वृक्षरोपी च तस्माद्वृक्षांश्च रोपयेत् ॥ २६
तस्य पुत्रा भवन्त्येते पादपा नात्र संशयः ।
परलोकगतः स्वर्गं लोकांश्चाप्नोति सोऽव्ययान् ॥२७
पुष्पैः सुरगणान्वृक्षाः फलैश्चापि तथा पितॄन् ।
छायया चातिथिं तात पूजयन्ति महीरुहः ॥२८
किन्नरोरगरक्षांसि देवगन्धर्वमानवाः ।
तथा ऋषिगणाश्चैव संश्रयन्ति महीरुहान् ॥ २९
पुष्पिताः फलवन्तश्च तर्पयन्तीह मानवान् ।
वृक्षदं पुत्रवद्वृक्षास्तारयन्ति परत्र तु ॥ ३०
तस्मात्तटाके सद्वृक्षा रोप्याः श्रेयोर्थिना सदा ।
पुत्रवत्परिपाल्याश्च पुत्रास्ते धर्मतः स्मृताः ॥३१
तटाककृद्वृक्षरोपी इष्टयज्ञश्च यो द्विजः ।
एते स्वर्गे महीयन्ते ये चान्ये सत्यवादिनः ॥३२

---

बलवती बहुसस्योत्पादिका ॥ २ ॥ औदकानि खातानि तटाकानि ॥ ३ ॥ तटाकवान् तटाककृत् ॥ ४ ॥ मित्राणां सदनमिवोपकारक सस्योत्पादनादिना । मैत्रं मित्रस्य सूर्यस्येद प्रीतिकरम् । मित्राणां देवाना विवर्धन पोषकम् ॥ ५ ॥

त्रिनवतितमोऽध्यायः ॥ ९३ ॥

तस्मात्तटाकं कुर्वीत आरामांश्चैव रोपयेत् । यजेच्च विविधैर्यज्ञैः सत्यं च सततं वदेत् ॥ ३३

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि त्रिनवतितमोऽध्यायः ॥ ९३ ॥

## चतुर्नवतितमोऽध्यायः ॥ ९४ ॥

भीष्मेण युधिष्ठिरंप्रति ब्राह्मणप्रशंसनपूर्वकं तदाराधनविधानम् ॥ १ ॥

उवाच ।
यानीमानि बहिर्वेद्यां दानानि परिचक्षते ।
तेभ्यो विशिष्टं किं दानं मतं ते कुरुपुङ्गव ॥ १
कौतूहलं हि परमं तत्र मे विद्यते प्रभो ।
दातारं दत्तमन्वेति यद्दानं तत्प्रचक्ष्व मे ॥ २
भीष्म उवाच ।
अभयं सर्वभूतेभ्यो व्यसने चाप्यनुग्रहः ।
यच्चाभिलषितं दद्यात्तृषितायाभियाचते ॥ ३
भरणे पुत्रदाराणां तद्दानं श्रेष्ठमुच्यते ।
दत्तं दातारमन्वेति तद्दानं भरतर्षभ ॥ ४
हिरण्यदानं गोदानं पृथिवीदानमेव च ।
एतानि वै पवित्राणि तारयन्त्यपि दुष्कृतात् ॥५
एतानि पुरुषव्याघ्र साधुभ्यो देहि नित्यदा ।
दानानि हि नरं पापान्मोक्षयन्ति न संशयः ॥ ६
यद्यदिष्टतमं लोके यच्चास्य दयितं गृहे ।
तत्तद्गुणवते देयं तदेवाक्षयमिच्छता ॥ ७
प्रियाणि लभते नित्यं प्रियदः प्रियकृत्तथा
प्रियो भवति भूतानामिह चैव परत्र च ॥ ८
याचमानमभीमानादनासक्तमकिंचनम् ।
यो नार्चति यथाशक्ति स नृशंसो युधिष्ठिर ॥ ९
अमित्रमपि चेद्दीनं शरणैषिणमागतम् ।
व्यसने योऽनुगृह्णाति स वै पुरुषसत्तमः ॥ १०
कृशाय कृतविद्याय वृत्तिक्षीणाय सीदते ।
अपहन्यात्क्षुधां यस्तु न तेन पुरुषः समः ॥ ११
क्रियानियमितान्साधून्पुत्रदारैश्च कर्शितान् ।
अयाचमानान्कौन्तेय सर्वोपायैर्निमन्त्रयेत् ॥ १२
आशिषं ये न देवेषु न च मर्त्येषु कुर्वते ।
अर्हन्तो नित्यसत्वस्था यथालब्धोपजीविनः ॥ १३
आशीविषसमेभ्यश्च तेभ्यो रक्षस्व भारत ।
तान्युक्तैरुपजिज्ञास्य भोगैर्निर्वप रक्ष च ॥ १४
कृतैरावसथैर्नित्यं सप्रेष्यैः सपरिच्छदैः ।
निमन्त्रयेथाः कौरव्य सर्वभूतसुखावहैः ॥ १५
यदि ते प्रतिगृह्णीयुः श्रद्धापूतं युधिष्ठिर ।
कार्यमित्येव मन्वाना धार्मिकाः पुण्यकर्मिणः ॥१६
विद्यास्नाता व्रतस्नाता धर्ममाश्रित्य जीविनः ।
गूढस्वाध्यायतपसो ब्राह्मणाः संशितव्रताः ॥ १७
तेषु शुद्धेषु दान्तेषु स्वदारनिरतेषु च ।
यत्करिष्यसि कल्याणं तत्ते लोके युधांपते ॥ १८
यथाऽग्निहोत्रं सुहुतं सायंप्रातर्द्विजातिना ।
तथा भवति दत्तं वै विद्वद्भ्यो यत्कृतात्मना ॥ १९
एष ते विततो यज्ञः श्रद्धापूतः सदक्षिणः ।
विशिष्टः सर्वयज्ञेभ्यो ददतस्तात वर्तताम् ॥ २०
निवापो दानसदृशः सदृशेषु युधिष्ठिर ।
निवेदयन्पूजयन्वै तेष्वानृण्यं निगच्छति ॥ २१
य एवं नैव कुप्यन्ते न लुभ्यन्ति तृणेष्वपि ।
त एव नः पूज्यतमा ये चापि प्रियवादिनः ॥ २२
ये नो न बहुमन्यन्ते न प्रवर्तन्ति याचने ।
पुत्रवत्परिपाल्यास्ते नमस्तेभ्यस्तथाऽभयम् ॥ २३
ऋत्विक्पुरोहिताचार्या मृदुधर्मपरा हि ये ।
क्षात्रेणापि हि संसृष्टं तेजः शाम्यति तेष्वपि ॥२४

---

अभीमानादतिसमर्थोऽयमित्यभिमान स्वमनस्येव कृत्वा याचमानम् । याचमानावमानाच्च आशावन्तमकिंचनमिति थ. ध. पाठः ॥ ९ ॥ कृशायेत्यादिचतुर्थी षष्ठ्यर्थे । कृशाय ह्रीमते तातेति ट. थ. ध. पाठः ॥ ११ ॥ क्रियानियमितान् स्वधर्मयन्त्रितान् । ह्रिया तु नियतानिति थ. ध. पाठः ॥ १२ ॥ धर्मार्थमेव धर्मं कुर्वन्ति नतु फलान्तरार्थमिति भावः ॥ १६ ॥ ददतः दातुस्तव वर्तता सर्वदास्तु ॥ २० ॥ निवापः पितृतर्पणम् । दानसदृशः इह्यत्र दानं महादानम् ॥ २१ ॥

ईश्वरो बलवानस्मि राजाऽस्मीति युधिष्ठिर ।
ब्राह्मणान्मास्म पर्यासीर्वासोभिरशनेन च ॥ २५
यच्छोभार्थं बलार्थं वा वित्तमस्ति तवानघ ।
तेन ते ब्राह्मणाः पूज्याः स्वधर्ममनुतिष्ठता ॥ २६
नमस्कार्यास्तथा विप्रा वर्तमाना यथातथम् ।
यथासुखं यथोत्साहं ललन्तु त्वयि पुत्रवत् ॥ २७
को ह्यक्षयप्रसादानां सुहृदामल्पतोषिणाम् ।
वृत्तिमर्हत्युपक्षेप्तुं त्वदन्यः कुरुसत्तम ॥ २८
यथाऽपत्याश्रयो धर्मः स्त्रीणां लोके सनातनः ।
सदैव सा गतिर्नान्या तथाऽस्माकं द्विजातयः ॥२९
यदि नो ब्राह्मणास्तात संत्यजेयुरपूजिताः ।
पश्यन्तो दारुणं कर्म सततं क्षत्रिये स्थितम् ॥३०
अवेदानामकीर्तीनामलोकानामयज्विनाम् ।
को नु स्याज्जीवितेनार्थस्तद्धि नो ब्राह्मणाश्रयम् ॥३१
अत्र ते वर्तयिष्यामि यथा धर्मं सनातनम् ।
राजन्यो ब्राह्मणात्राजन्पुरा परिचचार ह ।
वैश्यो राजन्यमित्येव शूद्रो वैश्यमिति श्रुतिः ॥३२
दूराच्छूद्रेणोपचर्यो ब्राह्मणोऽग्निरिव ज्वलन् ।
संस्पर्शपरिचर्यस्तु वैश्येन क्षत्रियेण च ॥ ३३
मृदुभावान्सत्यशीलान्सत्यधर्मानुपालकान् ।
आशीविषानिव क्रुद्धांस्तानुपाचरत द्विजान् ॥३४
अपरेषां परेषां च परेभ्यश्चापि ये परे ।
क्षत्रियाणां प्रतपतां तेजसा च बलेन च ।
ब्राह्मणेष्वेव शाम्यन्ति तेजांसि च तपांसि च ॥३५
न मे पिता प्रियतरो न त्वं तात तथा प्रियः ।
न मे पितुः पिता राजन्न चात्मा न च जीवितम् ३६
त्वत्तश्च मे प्रियतरः पृथिव्यां नास्ति कश्चन ।
त्वत्तोऽपि मे प्रियतरा ब्राह्मणा भरतर्षभ ॥ ३७
ब्रवीमि सत्यमेतच्च यथाऽहं पाण्डुनन्दन ।
तेन सत्येन गच्छेयं लोकान्यत्र स शान्तनुः ॥३८
पश्येयं च सतां लोकाञ्छुचीन्ब्रह्मपुरस्कृतान् ।
तत्र मे तात गन्तव्यमह्नाय च चिराय च ॥ ३९
सोऽहमेतादृशाँल्लोकान्दृष्ट्वा भरतसत्तम ।
यन्मे कृतं ब्राह्मणेषु न तप्ये तेन पार्थिव ॥ ४०

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि चतुर्नवतितमोऽध्यायः ॥ ९४ ॥

---

## पञ्चनवतितमोऽध्यायः ॥ ९५ ॥

भीष्मेण युधिष्ठिरंप्रति ब्राह्मणमहिमानुवर्णनम् ॥ १ ॥

युधिष्ठिर उवाच ।
यौ च स्यातां चरणेनोपपन्नौ
यौ विद्यया सदृशौ जन्मना च ।
ताभ्यां दानं कतरस्मै विशिष्ट-
मयाचमानाय च याचते च ॥ १
भीष्म उवाच ।
श्रेयो वै याचतः पार्थ दानमाहुरयाचते ।
अर्हत्तमो वै धृतिमान्कृपणादकृतात्मनः ॥ २
क्षत्रियो रक्षणधृतिर्ब्राह्मणोऽनर्थनाधृतिः ।
ब्राह्मणो धृतिमान्विद्वान्देवान्प्रीणाति तुष्टिमान् ॥३
याच्यमाहुरनीशस्य अतिहारं च भारत ।
उद्वेजयन्ति याचन्ति यदा भूतानि दस्युवत् ॥ ४
म्रियते याचमानो वै तमनु म्रियतेऽददत् ।
ददत्संजीवयत्येनमात्मानं च युधिष्ठिर ॥ ५
आनृशंस्यं परो धर्मो याचते यत्प्रदीयते ।
अयाचतः सीदमानान्सर्वोपायैर्निमन्त्रयेत् ॥ ६

---

ते त्वया ॥ २६ ॥ ललन्तु रमन्ताम् ॥ २७ ॥ उपक्षेप्तु समर्पितुम् ॥ २८ ॥ अवेदानामिति । तर्हि ब्राह्मणैरस्मत्त्यागे तत एव अवेदादीनामस्माक जीवितेन कोर्थः । तत् जीवितं ॥३१॥ क्षत्रियाणां प्रभावं च तेजांसि च तपासि च । ब्राह्मणेष्वेव मन्यन्ते श्रीरायुर्बलमेव चेति ट. थ. ध. पाठः ॥ ३५ ॥

चतुर्नवतितमोऽध्यायः ॥ ९४ ॥

चरणेनाचरणेन ॥ १ ॥ याचतः याचकात् तद्दानादित्यर्थः ॥ २ ॥ अनर्थना अयाञ्चा ॥ ३ ॥ याच्य याचनारूप कर्म । अनीशस्य दरिद्रस्यातिहारं तिरस्कारमाहुः । यदा यतः याचन्ति याचमानानि भूतानि दस्युवल्लोकानुद्वेजयन्ति ॥ ४ ॥

यदि वै तादृशा राष्ट्रे वसेयुस्ते द्विजोत्तमाः ।
भस्मच्छन्नानिवाग्नींस्तान्बुध्येथास्त्वं प्रयत्नतः ॥ ७
तपसा दीप्यमानास्ते दहेयुः पृथिवीमपि ।
अपूज्यमानाः कौरव्य पूजार्हास्तु तथाविधाः ॥८
पूज्या हि ज्ञानविज्ञानतपोयोगसमन्विताः ।
तेभ्यः पूजां प्रयुञ्जीथा ब्राह्मणेभ्यः परंतप ॥ ९
ददद्बहुविधान्देयानुपच्छन्दयते च तान् ॥ १०
यदग्निहोत्रे सुहुते सायंप्रातर्भवेत्फलम् ।
विद्यावेदव्रतवति तद्दानफलमुच्यते ॥ ११
विद्यावेदव्रतस्नाता न व्यपाश्रयजीविनः ।
गूढस्वाध्यायतपसो ब्राह्मणान्संशितव्रतान् ॥ १२
कृतैरावसथैर्हृद्यैः सप्रेष्यैः सपरिच्छदैः ।
निमन्त्रयेथाः कौरव्य कामैश्चान्यैर्द्विजोत्तमान् ॥१३
अपि ते प्रतिगृह्णीयुः श्रद्धोपेतं युधिष्ठिर ।
कार्यमित्येव मन्वाना धर्मज्ञाः सूक्ष्मदर्शिनः ॥१४
अपि ते ब्राह्मणा भुक्त्वा गताः सोद्धरणान्गृहान् ।
येषां दाराः प्रतीक्षन्ते पर्जन्यमिव कर्षकाः ॥१५
अन्नानि प्रातःसवने नियता ब्रह्मचारिणः ।
ब्राह्मणास्तात भुञ्जानास्त्रेताग्निं प्रीणयन्त्युत ॥१६
माध्यंदिनं ते सवनं ददतस्तात वर्तताम् ।
गोहिरण्यानि वासांसि तेनेन्द्रः प्रीयतां तव ॥१७
तृतीयं सवनं ते वै वैश्वदेवं युधिष्ठिर ।
यद्देवेभ्यः पितृभ्यश्च विप्रेभ्यश्च प्रयच्छसि ॥ १८
अहिंसा सर्वभूतेभ्यः संविभागश्च सर्वशः ।
दमस्त्यागो धृतिः सत्यं भवत्ववभृथाय ते ॥१९
एष ते विततो यज्ञः श्रद्धापूतः सदक्षिणः ।
विशिष्टः सर्वयज्ञानां नित्यं तात प्रवर्तताम् ॥२०

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि पञ्चनवतितमोऽध्यायः ॥ ९५ ॥

---

## षण्णवतितमोऽध्यायः ॥ ९६ ॥

भीष्मेण युधिष्ठिरंप्रति ब्राह्मणप्रशंसनपूर्वकं ब्राह्मणानां प्रजानां च रक्षणस्यावश्यकर्तव्यत्वकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
दानं यज्ञः क्रिया चेह किंस्वित्प्रेत्य महाफलम् ।
कस्य ज्यायः फलं प्रोक्तं कीदृशेभ्यः कथं कदा ॥ १
एतदिच्छामि विज्ञातुं याथातथ्येन भारत ।
विद्वज्जिज्ञासमानाय दानधर्मान्प्रचक्ष्व मे ॥ २
अन्तर्वेद्यां च यद्दत्तं श्रद्धया चानृशंस्यतः ।
किंस्विन्नैःश्रेयसं तात तन्मे ब्रूहि पितामह ॥ ३
भीष्म उवाच ।
रौद्रं कर्म क्षत्रियस्य सततं तात वर्तते ।
नास्य वैतानिकफलं विना दानं सुपावनम् ॥ ४
न तु पापकृतां राज्ञां याजका द्विजसत्तमाः ।
धने सत्यप्रदातॄणां प्रतिगृह्णन्ति साधवः ॥ ५
प्रतिगृह्णन्ति न तु चेद्यद्दोषादाप्तदक्षिणैः ।
एतस्मात्कारणाद्यज्ञैर्यजेद्राजाऽऽप्तदक्षिणैः ॥ ६
अथ चेत्प्रतिगृह्णीयुर्दद्यादहरहर्नृपः ।
श्रद्धामास्थाय परमां पावनं ह्येतदुत्तमम् ॥ ७
ब्राह्मणांस्तर्पयन्द्रव्यैः स वै यज्ञोऽनुपद्रवः ।
मैत्रान्साधून्वेदविदः शीलवृत्ततपोर्जितान् ॥ ८
यत्ते ते न करिष्यन्ति कृतं ते न भविष्यति ।
यज्ञान्साधय साधुभ्यः स्वाद्वन्नान्दक्षिणावतः ॥९
इष्टं दत्तं च मन्येथा आत्मानं दानकर्मणा ।
पूजयेथा यायजूकांस्तवाप्यंशो भवेद्यथा ॥ १०

---

उपच्छन्दयते उपच्छन्दयेत । ददद्बहुविधान्दायानुपागच्छन्नयाचतामिति झ. पाठः । अयाचता अयाचमानानाम् । उपागच्छन्समीपमुपसर्पन् दायान्धनादीन्ददत् दाता भवेति शेषः ॥ १० ॥ सोद्धरणान्स्वामिन्यागते दास्यामीति याचमानेभ्यो बालकेभ्य आशाप्रदर्शनमुद्धरण तत्सहितान् ॥ १५ ॥ पञ्चनवतितमोऽध्यायः ॥ ९५ ॥

यज्ञ- क्रिया यज्ञरूपाक्रियेत्यर्थः । कीदृशेभ्यो दान कथ यज्ञक्रियेति । कदेत्युभयत्र संबन्धः ॥ १ ॥ एतद्दानम् ॥ ७ ॥ यद्यदि ते ब्राह्मणास्ते तव न करिष्यन्ति प्रतिग्रहमिति शेषः । तर्हि कृत सुकृत ते तव न भविष्यति । तदा सुकृतोत्पत्त्यर्थं यज्ञान्साधय ॥ ९ ॥ दाने यज्ञादिकमन्तर्भवतीत्यर्थः ॥ १० ॥

'विद्वद्भ्यः संप्रदानेन तत्राप्यंशोऽस्य पूजया ।
यज्वभ्यश्चाथ विद्वद्भ्यो दत्त्वा लोकं प्रदापयेत् ।
प्रदद्याज्ज्ञानदातॄणां ज्ञानदानांशभाग्भवेत्॥' ११
प्रजावतो भरेथाश्च ब्राह्मणान्बहुभारिणः ।
प्रज्ञावांस्तेन भवति यथा जनयिता तथा ॥ १२
यावतः साधुधर्मान्वै सन्तः संवर्धयन्त्युत ।
सर्वस्वैश्चापि भर्तव्या नरा ये बहुकारिणः ॥ १३
समृद्धः संप्रयच्छ त्वं ब्राह्मणेभ्यो युधिष्ठिर ।
धेनूरनडुहोऽन्नानि च्छत्रं वासांस्युपानहौ ॥ १४
आज्यानि यजमानेभ्यस्तथाऽन्नानि च भारत ।
अश्ववन्ति च यानानि वेश्मानि शयनानि च॥१५
एते देयाः पुष्टिमद्भिर्लघूपायाश्च भारत ।
अजुगुप्सांश्च विज्ञाय ब्राह्मणान्वृत्तिकर्शितान्॥१६
प्रकाशं वा वृत्त्या तान्प्रतिपालय ।
राजसूयाश्वमेधाभ्यां श्रेयस्तत्क्षत्रियान्प्रति ॥ १७
एवं पापैर्विनिर्मुक्तस्त्वं पूतः स्वर्गमाप्स्यसि ।
संचयित्वा पुनः कोशं यद्राष्ट्रं पालयिष्यसि॥१८
तेन त्वं ब्रह्मभूयत्वमवाप्स्यसि धनानि च ।
आत्मनश्च परेषां च वृत्तिं संरक्ष भारत ॥ १९
पुत्रवच्चापि भृत्यान्स्वान्प्रजाश्च परिपालय ।
[योगः क्षेमश्च ते नित्यं ब्राह्मणेष्वस्तु भारत॥२०
तदर्थं जीवितं तेऽस्तु मा तेभ्योऽप्रतिपालनम् ।
अनर्थो ब्राह्मणस्यैष यद्वित्तनिचयो महान् ॥ २१
श्रिया ह्यभीक्ष्णं संवासो दर्पयेत्संप्रमोहयेत् ।
ब्राह्मणेषु प्रमूढेषु धर्मो विप्रणशेद्ध्रुवम् ।
धर्मप्रणाशे भूतानामभावः स्यान्न संशयः ॥ २२
यो रक्षिभ्यः संप्रदाय राजा राष्ट्रं विलुम्पति ।
यज्ञे राष्ट्राद्धनं तस्मादानयध्वमिति ब्रुवन् ॥ २३
यच्चादाय तदाज्ञप्तं भीतं दत्तं सुदारुणम् ।
यजेद्राजा न तं यज्ञं प्रशंसन्त्यस्य साधवः ॥ २४
अपीडिताः सुसंवृद्धा ये ददत्यनुकूलतः
तादृशेनाप्युपायेन यष्टव्यं नोद्यमाहृतैः ॥ २५
यदा परिनिषिच्येत निहितो वै यथाविधि ।
तदा राजा महायज्ञैर्यजेत बहुदक्षिणैः ॥ २६
वृद्धबालधनं रक्ष्यमन्धस्य कृपणस्य च ।
न खातपूर्वं कुर्वीत न रुदन्तीधनं हरेत् ॥ २७
हृतं कृपणवित्तं हि राष्ट्रं हन्ति नृप श्रियम्
दद्याच्च महतो भोगान्क्षुद्भयं प्रणुदेत्सताम् ॥२८
येषां स्वादूनि भोज्यानि समवेक्ष्यन्ति बालकाः ।
नाश्नन्ति विधिवत्तानि किंनु पापतरं ततः ॥२९
यदि ते तादृशो राष्ट्रे विद्वान्सीदेत्क्षुधा द्विजः ।
भ्रूणहत्यां च गच्छेथाः कृत्वा पापमिवोत्तमम् ३०
धिक्तस्य जीवितं राज्ञो राष्ट्रे यस्यावसीदति ।
द्विजोऽन्यो वा मनुष्योपि शिबिराह वचो यथा ॥
यस्य स विषये राज्ञः स्नातकः सीदति क्षुधा ।
अवृद्धिमेति तद्राष्ट्रं विन्दते सह राजकम् ॥ ३२
क्रोशन्त्यो यस्य वै राष्ट्राद्ध्रियन्ते तरसा स्त्रियः ।
क्रोशतां पतिपुत्राणां मृतोऽसौ न च जीवति]३३
अरक्षितारं हर्तारं विलोप्तारमनायकम् ।
तं वै राजकलिं हन्युः प्रजाः सन्नह्य निर्घृणं ॥३४
अहं वो रक्षितेत्युक्त्वा यो न रक्षति भूमिपः ।
स संहत्य निहन्तव्यः श्वेव सोन्माद आतुरः ३५
पापं कुर्वन्ति यत्किंचित्प्रजा राज्ञा ह्यरक्षिताः ।
चतुर्थं तस्य पापस्य राजा विन्दति भारत ॥ ३६
अथाहुः सर्वमेवैति भूयोऽर्धमिति निश्चयः ।
चतुर्थं मतमस्माकं मनोः श्रुत्वानुशासनम् ॥ ३७

---

जनयिता प्रजापतिः ॥ १२ ॥ तस्य राज्ञस्ते सन्तो बहुकारिणोऽत्यन्तमुपकर्तारो भवन्ति १ नरा ये बहुभाषिण इति त. थ. पाठः ॥ १३ ॥ ब्रह्मणो भूय भावोऽस्यास्ति स ब्राह्मणो ब्रह्मभूयस्तस्य भावो ब्रह्मभूयत्व ब्राह्मणत्वम् ॥ १९ ॥ यो राजा रक्षिभ्यः संग्रहपरेभ्यो धनं दत्त्वा यज्ञे यज्ञार्थं धनमानयध्वमिति ब्रुवन् यजेत् तर्हि राष्ट्रं विलुम्पति ॥ २३ ॥ यच्चासौ तद्धनिभिर्भीत भययुक्त यथास्यात्तथा दत्तं प्रजाभ्य आदाय सुदारुण यथास्यात्तथा यजेत्त यज्ञ न प्रशसन्ति ॥ २४ ॥ उद्यमः प्रजापीडनात्मकोऽतियत्नः ॥ २५ ॥ निहितः प्रजानां नितरां हितो राजा यदा प्रजाभिर्निषिच्येत धनैरभिषिच्येत ॥ २६ ॥ खातपूर्वं धन न कुर्वीत स्वाधीन न कुर्वीतेत्यर्थः ॥ २७ ॥ समवेक्ष्यन्त्येव नतु लभन्ते ॥ २९ ॥ सह युगपत् । राजक राजसमूहं प्रतिपक्षभूत विन्दते ॥ ३२ ॥ सर्व पाप एति राजानम् ॥ ३७ ॥ षण्णवतितमोऽध्यायः॥९६॥

शुभं वा यच्च कुर्वन्ति प्रजा राज्ञा सुरक्षिताः ।
चतुर्थं तस्य पुण्यस्य राजा चाप्नोति भारत ॥३८
जीवन्तं त्वानुजीवन्तु प्रजाः सर्वा युधिष्ठिर ।
पर्जन्यमिव भूतानि महाद्रुममिवाण्डजाः ॥ ३९
कुबेरमिव रक्षांसि शतक्रतुमिवामराः ।
ज्ञातयस्त्वाऽनुजीवन्तु सुहृदश्च परंतप ॥ ४०

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि षण्णवतितमोऽध्यायः ॥ ९६ ॥

## सप्तनवतितमोऽध्यायः ॥ ९७ ॥

भीष्मेण युधिष्ठिरंप्रति सेन्द्रबृहस्पतिसंवादानुवादं भूमिदानप्रशंसनम् ॥ १ ॥

युधिष्ठिर उवाच ।
इदं देयमिदं देयमितीयं श्रुतिचोदनात् ।
बहुदेयाश्च राजानः किंस्विद्देयमनुत्तमम् ॥ १
भीष्म उवाच ।
अति दानानि सर्वाणि पृथिवीदानमुच्यते ।
अचला ह्यक्षया भूमिर्दोग्ध्री कामानिहोत्तमान् २
दोग्ध्री वासांसि रत्नानि पशून्व्रीहियवांस्तथा ।
भूमिदः सर्वभूतेषु शाश्वतीरेधते समाः ॥ ३
यावद्भूमेरायुरिह तावद्भूमिद एधते ।
न भूमिदानादस्तीह परं किंचिद्युधिष्ठिर ॥ ४
अप्यल्पं प्रददुः सर्वे पृथिव्या इति नः श्रुतम् ।
भूमिमेव ददुः सर्वे भूमिं ते भुञ्जते जनाः ॥ ५
स्वकर्मैवोपजीवन्ति नरा इह परत्र च ।
भूमिः पतिं महादेवी दातारं कुरुते प्रियम् ॥ ६
य एतां दक्षिणां दद्यादक्षयां राजसत्तम
पुनर्नरत्वं संप्राप्य भवेत्स पृथिवीपतिः ॥ ७
यथा दानं तथा भोग इति धर्मेषु निश्चयः ।
संग्रामे वा तनुं जह्याद्दद्याच्च पृथिवीमिमाम् ।
इत्येतत्क्षत्रबन्धूनां वदन्ति परमाशिषः ।
पुनाति दत्ता पृथिवी दातारमिति शुश्रुम ॥ ९
अपि पापसमाचारं ब्रह्मघ्नमपि चानृतम् ।
सैव पापं प्लावयति सैव पापात्प्रमोचयेत् ॥ १०
अपि पापकृतां राज्ञां प्रतिगृह्णन्ति साधवः ।
पृथिवीं नान्यदिच्छन्ति पावनं जगती यतः॥११
नामास्याः प्रियदत्तेति गुह्यं देव्याः सनातनम् ।
दानं वाऽप्यथवाऽदानं नामास्याः प्रथमप्रियम्१२
य एतां विदुषे दद्यात्पृथिवीं पृथिवीपतिः ।
पृथिव्यामेतदिष्टं स राजा राज्यमितो व्रजेत् ॥१३
पुनश्चासौ जनिं प्राप्य राजवत्स्यान्न संशयः ।
तस्मात्प्राप्यैव पृथिवीं दद्याद्विप्राय पार्थिवः ॥१४
नाभूमिपतिना भूमिरधिष्ठेया कथंचन ।
न च वस्त्रेण वा गूहेदन्तर्धानेन वा चरेत् ॥ १५
ये चान्ये भूमिमिच्छेयुः कुर्युरेवं न संशयः ।
यः साधोर्भूमिमादत्ते न भूमिं विन्दते तु सः १६
भूमिं दत्त्वा तु साधुभ्यो विन्दते भूमिमुत्तमाम् ।
प्रेत्य चेह च धर्मात्मा संप्राप्नोति महद्यशः ॥१७
'एकाहारकरीं दत्त्वा षष्टिसाहस्रमूर्ध्वगः ।
तावत्या हरणे पृथ्व्या नरकं द्विगुणोत्तरम् ॥'१८
यस्य विप्रास्तु शंसन्ति साधोर्भूमिं सदैव हि ।
न तस्य शत्रवो राजन्प्रशंसन्ति वसुंधराम् ॥ १९
यत्किंचित्पुरुषः पापं कुरुते वृत्तिकर्शितः ।
अपि गोचर्ममात्रेण भूमिदानेन पूयते ॥ २०
येऽपि संकीर्णकर्माणो राजानो रौद्रकर्मिणः ।
तेभ्यः पवित्रमाख्येयं भूमिदानमनुत्तमम् ॥ २१
अल्पान्तरमिदं शश्वत्पुराणा मेनिरे जनाः ।
यो यजेताश्वमेधेन दद्याद्वा साधवे महीम् ॥ २२
अपि चेत्सुकृतं कृत्वा शंकेरन्नपि पण्डिताः ।
अशंक्यमेकमेवैतद्भूमिदानमनुत्तमम् ॥ २३

प्रिय स्वपतिम् ॥ ६ ॥ प्रियेण प्रियाय वा दत्तेति योगात्तस्या दानमदान वा कुर्वन् प्रियदत्ताया अस्याः प्रियो भवतीत्यर्थः । दान वाप्यथ वा ज्ञान नामास्याः परमप्रियम् इति ट. ध. पाठः ॥ १२ ॥ शसन्त्यमुकदत्ते गृहे तिष्ठाम इति कथयन्ति ॥ १९ ॥ अर्पितदानान्तरवद्भूमिदाने पुण्योत्पत्तौ शङ्कैव नास्तीत्यर्थः ॥ २३ ॥

सुवर्णं रजतं वस्त्रं मणिमुक्तावसूनि च ।
सर्वमेतन्महाप्राज्ञो ददाति वसुधां ददत् ॥ २४
तपो यज्ञः श्रुतं शीलमलोभः सत्यसन्धता ।
गुरुदैवतपूजा च एता वर्तन्ति भूमिदम् ॥ २५
भर्तृनिःश्रेयसे युक्तास्त्यक्तात्मानो रणे हताः ।
ब्रह्मलोकगताः सिद्धा नातिक्रामन्ति भूमिदम् २६
यथा जनित्री स्वं पुत्रं क्षीरेण भरते सदा ।
अनुगृह्णाति दातारं तथा सर्वरसैर्मही ॥ २७
मृत्युर्वैकिंकरो दण्डस्तापो वह्नेः सुदारुणः ।
घोराश्च वारुणाः पाशा नोपसर्पन्ति भूमिदम् २८
पितॄंश्च पितृलोकस्थान्देवलोके च देवताः ।
संतर्पयति शान्तात्मा यो ददाति वसुंधराम् ॥२९
कृशाय म्रियमाणाय वृत्तिग्लानाय सीदते ।
भूमिं वृत्तिकरीं दत्त्वा सत्री भवति मानवः ॥३०
यथा धावति गौर्वत्सं स्रवन्ती वत्सला पयः ।
एवमेव महाभाग भूमिर्भवति भूमिदम् ॥ ३१
हलकृष्टां महीं दत्त्वा सबीजां सफलामपि ।
सोदकं वाऽपि शरणं तथा भवति कामदः ॥३२
ब्राह्मणं वृत्तसंपन्नमाहिताग्निं शुचिव्रतम् ।
नरः प्रतिग्राह्य महीं न याति यमसादनम् ॥३३
यथा चन्द्रमसो वृद्धिरहन्यहनि जायते ।
तथा भूमिकृतं दानं सस्ये सस्ये विवर्धते ॥ ३४
अत्र गाथा भूमिगीताः कीर्तयन्ति पुराविदः ।
याः श्रुत्वा जामदग्न्येन दत्ता भूः काश्यपाय वै ॥
मामेवादत्त मां दत्त मां दत्त्वा मामवाप्स्यथ ।
अस्मिँल्लोके परे चैव तद्दत्तं जायते पुनः ॥ ३६
य इमां व्याहृतिं वेद ब्राह्मणो वेदसंमिताम् ।
श्राद्धस्य हूयमानस्य ब्रह्मभूयं स गच्छति ॥ ३७
कृत्यानामभिशस्तानामरिष्टशमनं महत् ।
प्रायश्चित्तं महीं दत्त्वा पुनात्युभयतो दश ॥ ३८
पुनाति य इदं वेद वेदवादं तथैव च ।
प्रकृतिः सर्वभूतानां भूमिर्वै शाश्वती मता ॥३९
अभिषिच्यैव नृपतिं श्रावयेदिममागमम् ।
यथा श्रुत्वा महीं दद्यान्नादद्यात्साधुतश्च तां ४०
सोऽयं कृत्स्नो ब्राह्मणार्थो राजार्थश्चाप्यसंशयः ।
राजा हि धर्मकुशलः प्रथमं भूतिलक्षणम् ॥ ४१
अथ येषामधर्मज्ञो राजा भवति नास्तिकः ।
न ते सुखं प्रबुध्यन्ति न सुखं प्रस्वपन्ति च ४२
सदा भवन्ति चोद्विग्नास्तस्य दुश्चरितैर्नराः ।
योगक्षेमा हि बहवो राष्ट्रं नास्याविशन्ति तत् ४३
अथ येषां पुनः प्राज्ञो राजा भवति धार्मिकः ।
सुखं ते प्रतिबुध्यन्ते सुसुखं प्रस्वपन्ति च ॥ ४४
तस्य राज्ञः शुभै राज्ये कर्मभिर्निर्वृता नराः ।
योगक्षेमेण वृष्ट्या च विवर्धन्ते स्वकर्मभिः ॥ ४५
स कुलीनः स पुरुषः स बन्धुः स च पुण्यकृत् ।
स दाता स च विक्रान्तो यो ददाति वसुंधराम् ४६
आदित्या इव दीप्यन्ते तेजसा भुवि मानवाः ।
ददन्ति वसुधां स्फीतां ये वेदविदुषि द्विजे ॥४७
यथा सस्यानि रोहन्ति प्रकीर्णानि महीतले ।
तथा कामाः प्ररोहन्ति भूमिदानसमार्जिताः ४८
आदित्यो वरुणो विष्णुर्ब्रह्मा सोमो हुताशनः ।
शूलपाणिश्च भगवान्प्रतिनन्दन्ति भूमिदम् ॥४९
भूमौ जायन्ति पुरुषा भूमौ निष्ठां व्रजन्ति च ।
चतुर्विधो हि लोकोऽयं योऽयं भूमिगुणात्मकः ५०
एषा माता पिता चैव जगतः पृथिवीपते ।
नानया सदृशं भूतं किंचिदस्ति जनाधिप ॥ ५१
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
बृहस्पतेश्च संवादमिन्द्रस्य च युधिष्ठिर ॥ ५२

एता एतानि । सुपो डादेशः । वर्तन्त्यनुसरन्ति । नातिक्रामन्ति भूमिदमिति थ. ध. पाठः ॥ २५ ॥ वैकिंकरः विपरीत कुत्सितं च करोतीति विकिंकरः कालस्तत्संबन्धी कालमृत्युरित्यर्थः ॥ २८ ॥ सत्री सत्रकृत् ॥ ३० ॥ उदीर्णं इति पाठे महत् । शरण गृहम् ॥ ३१ ॥ ततश्च जनने पुनरिति थ पाठः ॥ ३६ ॥ ब्रह्मभूय बृहत्त्वं फलमिति यावत् । गच्छति प्राप्नोति । ब्राह्मणो ब्रह्मसंश्रित इति ट. ध. पाठः ॥ ३७ ॥ कृत्याना मन्त्रमयीनां मारणार्थशक्तीना संबन्धि यदरिष्ट तच्छमनम् ॥ ३८ ॥ इदं भूमिदान यो वेद । वाद भूमिवाक्य यो वेद । सोऽपि पुनाति दशपुरुषानिति शेषः ॥ ३९ ॥ भूतिलक्षणं ऐश्वर्यसूचकम् ॥ ४१ ॥

इष्ट्वा क्रतुशतेनाथ महता दक्षिणावता ।
मघवा वाग्विदां श्रेष्ठं पप्रच्छेदं बृहस्पतिम् ॥ ५३
भगवन्केन दानेन स्वर्गतः सुखमेधते ।
यदक्षयमहार्यं च तद्ब्रूहि वदतांवर ॥ ५४
भीष्म उवाच ।
इत्युक्तः स सुरेन्द्रेण ततो देवपुरोहितः ।
बृहस्पतिर्बृहत्तेजाः प्रत्युवाच शतक्रतुम् ॥ ५५
सुवर्णदानं गोदानं भूमिदानं च वृत्रहन् ।
'विद्यादानं च कन्यानां दानं पापहरं परम् ।'
दददेतान्महाप्राज्ञः सर्वपापैः प्रमुच्यते ॥ ५६
न भूमिदानाद्देवेन्द्र परं किंचिदिति प्रभो ।
विशिष्टमिति मन्येऽहं यथा प्राहुर्मनीषिणः ॥५७
'ब्राह्मणार्थे गवार्थे वा राष्ट्रघातेऽथ स्वामिनः ।
कुलस्त्रीणां परिभवे मृतास्ते भूमिपैः समाः ॥' ५८
ये शूरा निहता युद्धे स्वर्याता रणगृद्धिनः ।
सर्वे ते विबुधश्रेष्ठ नातिक्रामन्ति भूमिदम् ॥ ५९
भर्तुर्निःश्रेयसे युक्तास्त्यक्तात्मानो रणे हताः ।
ब्रह्मलोकगता युक्ता नातिक्रामन्ति भूमिदम् ॥६०
पञ्च पूर्वा हि पुरुषाः षडन्ये वसुधां गताः ।
एकादश ददद्भूमिं परित्रातीह मानवः ॥ ६१
रत्नोपकीर्णां वसुधां यो ददाति पुरंदर ।
स मुक्तः सर्वकलुषैः स्वर्गलोके महीयते ॥ ६२
महीं स्फीतां ददद्राजन्सर्वकामगुणान्विताम् ।
राजाधिराजो भवति तद्धि दानमनुत्तमम् ॥ ६३
सर्वकामसमायुक्तां काश्यपीं यः प्रयच्छति ।
सर्वभूतानि मन्यन्ते मां ददातीति वासव ॥६४
सर्वकामदुघां धेनुं सर्वकामगुणान्विताम् ।
ददाति यः सहस्राक्ष स्वर्गं याति स मानवः ॥६५
मधुसर्पिःप्रवाहिण्यः पयोदधिवहास्तथा ।
सरितस्तर्पयन्तीह सुरेन्द्र वसुधाप्रदम् ॥ ६६
भूमिप्रदानान्नृपतिर्मुच्यते सर्वकिल्बिषात्
न हि भूमिप्रदानेन दानमन्यद्विशिष्यते ॥ ६७
ददाति यः समुद्रान्तां पृथिवीं शस्त्रनिर्जिताम् ।
तं जनाः कथयन्तीह यावद्धरति गौरियम् ॥६८
पुण्यामृद्धिरसां भूमिं यो ददाति पुरंदर ।
न तस्य लोकाः क्षीयन्ते भूमिदानगुणान्विताः ॥६९
सर्वदा पार्थिवेनेह सततं भूतिमिच्छता ।
भूर्देया विधिवच्छक्र पात्रे सुखमभीप्सुना ॥ ७०
अपि कृत्वा नरः पापं भूमिं दत्त्वा द्विजातये ।
समुत्सृजति तत्पापं जीर्णां त्वचमिवोरगः ॥७१
सागरान्सरितः शैलान्काननानि च सर्वशः ।
सर्वमेतन्नरः शक्र ददाति वसुधां ददत् ॥ ७२
तटाकान्युदपानानि स्रोतांसि च सरांसि च ।
स्नेहान्सर्वरसांश्चैव ददाति वसुधां ददत् ॥ ७३
ओषधीर्वीर्यसंपन्नानगान्पुष्पफलान्वितान् ।
काननोपलशैलांश्च ददाति वसुधां ददत् ॥ ७४
अग्निष्टोमप्रभृतिभिरिष्ट्वा च स्वाप्तदक्षिणैः ।
न तत्फलमवाप्नोति भूमिदानाद्यदश्नुते ॥ ७५
दाता दशानुगृह्णाति दश हन्ति तथा क्षिपन् ।
पूर्वदत्तां हरन्भूमिं नरकायोपगच्छति ॥ ७६
न ददाति प्रतिश्रुत्य दत्त्वाऽपि च हरेत्तु यः ।
स बद्धो वारुणैः पाशैस्तप्यते मृत्युशासनात् ॥७७
आहिताग्निं सदायज्ञं कृशवृत्तिं प्रियातिथिम् ।
ये भरन्ति द्विजश्रेष्ठं नोपसर्पन्ति ते यमम् ॥ ७८
ब्राह्मणेष्वनृणीभूतः पार्थिवः स्यात्पुरंदर ।
इतरेषां तु वर्णानां तारयेत्कृशदुर्बलान् ॥ ७९
नाच्छिन्द्यात्स्पर्शितां भूमिं परेण त्रिदशाधिप ।
ब्राह्मणस्य सुरश्रेष्ठ कृशवृत्तेः कदाचन ॥ ८०
यथाश्रु पतितं तेषां दीनानामथ सीदताम् ।
ब्राह्मणानां हृते क्षेत्रे हन्यात्त्रिपुरुषं कुलम् ॥ ८१
भूमिपालं च्युतं राष्ट्राद्यस्तु संस्थापयेत्पुनः ।
तस्य वासः सहस्राक्ष नाकपृष्ठे महीयते ॥ ८२
'सुनिर्मितां सुविक्रीतां सुभृतां स्थापयेन्नृप ।'
इक्षुभिः संततां भूमिं यवगोधूमशालिनीम् ॥८३
गोश्ववाहनपूर्णां वा यो ददाति वसुंधराम् ।
विमुक्तः सर्वपापेभ्यः स्वर्गलोके महीयते ॥'८४

क्षिपन् हरन् ॥ ७६ ॥

स्पर्शितां दत्ताम् ॥ ८० ॥

निधिगर्भा ददद्भूमिं सर्वरत्नपरिच्छदाम् ।
अक्षयाँल्लभते लोकान्भूमिसत्रं हि तस्य तत् ॥८५
विधूय कलुषं सर्वं विरजाः संमतः सताम् ।
लोके महीयते सद्भिर्यो ददाति वसुंधराम् ॥ ८६
यथाऽप्सु पतितः शक्र तैलबिन्दुर्विसर्पति ।
तथा भूमिकृतं दानं सस्येसस्ये विवर्धते ॥ ८७
ये रणाग्रे महीपालाः शूराः समितिशोभनाः ।
वध्यन्तेऽभिमुखाः शक्र ब्रह्मलोकं व्रजन्ति ते ८८
नृत्तगीतपरा नार्यो दिव्यमाल्यविभूषिताः
उपतिष्ठन्ति देवेन्द्र तथा भूमिप्रदं दिवि ॥ ८९
मोदते च सुखं स्वर्गे देवगन्धर्वपूजितः ।
यो ददाति महीं सम्यग्विधिनेह द्विजातये ॥९०
शतमप्सरसश्चैव दिव्यमाल्यविभूषिताः ।
उपतिष्ठन्ति देवेन्द्र ब्रह्मलोके धराप्रदम् ॥ ९१
उपतिष्ठन्ति पुण्यानि सदा भूमिप्रदं नरम् ।
भद्रासनं छत्रं वराश्वा वरवाहनम् ॥ ९२
भूमिप्रदानात्पुष्पाणि हिरण्यनिचयास्तथा ।
आज्ञा सदाऽप्रतिहता जयशब्दा वसूनि च ॥९३
भूमिदानस्य पुण्यानि फलं स्वर्गः पुरंदर ।
हिरण्यपुष्पाश्चौषध्यः कुशकाञ्चनशाद्वलाः ॥ ९४
अमृतप्रसवां भूमिं प्राप्नोति पुरुषो ददत् ॥ ९५
नास्ति भूमिसमं दानं नास्ति मातृसमो गुरुः ।
नास्ति सत्यसमो धर्मो नास्ति दानसमो निधिः ॥
भीष्म उवाच
एतदाङ्गिरसाच्छ्रुत्वा वासवो वसुधामिमाम् ।
वसुरत्नसमाकीर्णां ददावाङ्गिरसे तदा ॥ ९७
य इदं श्रावयेच्छ्राद्धे भूमिदानस्य संस्तवम् ।
न तस्य रक्षसां भागो नासुराणां भवत्युत ॥ ९८
अक्षयं च भवेद्दत्तं पितृभ्यस्तन्न संशयः ।
तस्माच्छ्राद्धेष्विदं विद्वान्भुञ्जतः श्रावयेद्द्विजान् ॥
इत्येतत्सर्वदानानां श्रेष्ठमुक्तं तवानघ ।
मया भरतशार्दूल किं भूयः श्रोतुमिच्छसि ॥१००

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि सप्तनवतितमोऽध्यायः ॥ ९७ ॥

## अष्टनवतितमोऽध्यायः ॥ ९८ ॥

भीष्मेण युधिष्ठिरंप्रत्यन्नदानप्रशंसनपूर्वकं तत्फलकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
कानि दानानि लोकेऽस्मिन्दातुकामो महीपतिः ।
गुणाधिकेभ्यो विप्रेभ्यो दद्याद्भरतसत्तम ॥ १
केन तुष्यन्ति ते सद्यः किं तुष्टाः प्रदिशन्ति च ।
शंस मे तन्महाबाहो फलं पुण्यकृतं महत् ॥ २
दत्तं किं फलवद्राजन्निह लोके परत्र च ।
भवतः श्रोतुमिच्छामि तन्मे विस्तरतो वद ॥ ३
भीष्म उवाच ।
इममर्थं पुरा पृष्टो नारदो देवदर्शनः ।
यदुक्तवानसौ वाक्यं तन्मे निगदतः शृणु ॥ ४
नारद उवाच ।
अन्नमेव प्रशंसन्ति देवा ऋषिगणास्तथा ।
लोकतन्त्रं हि यज्ञाश्च सर्वमन्ने प्रतिष्ठितम् ॥ ५
अन्नेन सदृशं दानं न भूतं न भविष्यति ।
तस्मादन्नं विशेषेण दातुमिच्छन्ति मानवाः ॥ ६
अन्नमूर्जस्करं लोके प्राणाश्चान्ने प्रतिष्ठिताः ।
अन्नेन धार्यते सर्वं विश्वं जगदिदं प्रभो ॥ ७
अन्नाद्गृहस्था लोकेऽस्मिन्भिक्षवस्तापसास्तथा ।
अन्नाद्भवन्ति वै प्राणाः प्रत्यक्षं नात्र संशयः ॥८
कुटुम्बिने सीदते च ब्राह्मणाय महात्मने ।
दातव्यं भिक्षवे चान्नमात्मनो भूतिमिच्छता ॥९
ब्राह्मणायाभिरूपाय यो दद्यादन्नमर्थिने ।
निदधाति निधिं श्रेष्ठं पारलौकिकमात्मनः ॥ १०
श्रान्तमध्वनि वर्तन्तं वृद्धमर्हमुपस्थितम् ।

वराश्वा वरवारणा इति थ. पाठः ॥ ९२ ॥ सप्तनवतितमोऽध्यायः ॥ ९७ ॥

* कुटुम्ब पीडयित्वापि ब्राह्मणायेति ट. ध. पाठ. ॥*९ ॥

अर्चयेद्भुतिमन्विच्छन्गृहस्थो गृहमागतम् ॥ ११
क्रोधमुत्पतितं हित्वा सुशीलो वीतमत्सरः ।
अन्नदः प्राप्नुते राजन्दिवि चेह च यत्सुखम् १२
नावमन्येदभिगतं न प्रणुद्यात्कदाचन ।
अपि श्वपाके शुनि वा नान्नदानं प्रणश्यति ॥१३
यो दद्यादपरिक्लिष्टमन्नमध्वनि वर्तते ।
आर्तायाद्दृष्टपूर्वाय स महद्धर्ममाप्नुयात् ॥ १४
पितृन्देवानृषीन्विप्रानतिथींश्च जनाधिप ।
यो नरः प्रीणयत्यन्नैस्तस्य पुण्यफलं महत् ॥ १५
कृत्वाऽतिपातकं कर्म यो दद्यादन्नमर्थिने ।
ब्राह्मणाय विशेषेण न स पापेन मुह्यते ॥ १६
ब्राह्मणेष्वक्षयं दानमन्नं शूद्र महाफलम् ।
अन्नदानं हि शूद्रे च ब्राह्मणे च विशिष्यते ॥१७
न पृच्छेद्गोत्रचरणं स्वाध्यायं देशमेव च ।
भिक्षितो ब्राह्मणेनान्नं दद्यादेवाविचारतः ॥ १८
अन्नदस्यान्नदा वृक्षाः सर्वकामफलप्रदाः ।
भवन्ति चेह चामुत्र नृपते नात्र संशयः ॥ १९
आशंसन्ते हि पितरः सुवृष्टिमिव कर्षकाः ।
अस्माकमपि पुत्रो वा पौत्रो वाऽन्नं प्रदास्यति ॥
ब्राह्मणो हि महद्भूतं स्वयं देहीति याचते ।
अकामो वा सकामो वा दत्त्वा पुण्यमवाप्नुयात्॥
ब्राह्मणः सर्वभूतानामतिथिः प्रसृताग्रभुक् ।
विप्रा यदधिगच्छन्ति भिक्षमाणा गृहं सदा॥२२
सत्कृताश्च निवर्तन्ते तदतीव प्रवर्धते
महाभागे कुले प्रेत्य जन्म चाप्नोति भारत ॥२३
दत्त्वा त्वन्नं नरो लोके तथा स्थानमनुत्तमम् ।
स्विष्टमृष्टान्नदायी तु स्वर्गे वसति सत्कृतः ॥२४
अन्नं प्राणा नराणां हि सर्वमन्ने प्रतिष्ठिम् ।
अन्नदः पशुमान्पुत्री धनवान्भोगवानपि ॥ २५
प्राणवांश्चापि भवति रूपवांश्च तथा नृप ।
अन्नदः प्राणदो लोके सर्वदः प्रोच्यते तु सः२६
अन्नं हि दत्त्वाऽतिथये ब्राह्मणाय यथाविधि
प्रदाता सुखमाप्नोति दैवतैश्चापि पूज्यते ॥ २७
ब्राह्मणो हि महद्भूतं क्षेत्रभूतं युधिष्ठिर ।
उप्यते तत्र यद्बीजं तद्धि पुण्यफलं महत् ॥ २८
प्रत्यक्षं प्रीतिजननं भोक्तुर्दातुर्भवत्युत ।
सर्वाण्यन्यानि दानानि परोक्षफलवन्त्युत ॥ २९
अन्नाद्धि प्रसवं यान्ति रतिरन्नाद्धि भारत ।
धर्मार्थावन्नतो विद्धि रोगनाशं तथाऽन्नतः ॥३०
अन्नं ह्यमृतमित्याह पुरा कल्पे प्रजापतिः ।
अन्नं भुवं दिवं खं च सर्वमन्ने प्रतिष्ठितम् ॥ ३१
अन्नप्रणाशे भिद्यन्ते शरीरे पञ्च धातवः ।
बलं बलवतोपीह प्रणश्यत्यन्नहानितः ॥ ३२
आवाहाश्च विवाहाश्च यज्ञाश्चान्नमृते तथा ।
निवर्तन्ते नरश्रेष्ठ ब्रह्म चात्र प्रलीयते ॥ ३३
अन्नतः सर्वमेतद्धि यत्किंचित्स्थाणु जङ्गमम् ।
त्रिषु लोकेषु धर्मार्थमन्नं देयमतो बुधैः ॥ ३४
अन्नदस्य मनुष्यस्य बलमोजो यशांसि च ।
कीर्तिश्च वर्धते शश्वत्त्रिषु लोकेषु पार्थिव ॥ ३५
मेघेष्वूर्ध्वं सन्निधत्ते प्राणानां पवनः पतिः ।
तच्च मेघगतं वारि शक्रो वर्षति भारत ॥ ३६
आदत्ते च रसान्भौमानादित्यः स्वगभस्तिभिः
वायुरादित्यतस्तांश्च रसान्देवः प्रवर्षति ॥ ३७
तद्यदा मेघतो वारि पतितं भवति क्षितौ ।
तदा वसुमती देवी स्निग्धा भवति भारत ॥ ३८
ततः सस्यानि रोहन्ति येन वर्तयते जगत्
मांसमेदोस्थिशुक्राणां प्रादुर्भावस्ततः पुनः ॥३९
संभवन्ति ततः शुक्रात्प्राणिनः पृथिवीपते ।
अग्नीषोमौ हि तच्छुक्रं सृजतः पुष्यतश्च ह ॥४०
एवमन्नाद्धि सूर्यश्च पवनः शुक्रमेव च
एक एव स्मृतो राशिस्ततो भूतानि जज्ञिरे ॥४१
प्राणान्ददाति भूतानां तेजश्च भरतर्षभ ।
गृहमभ्यागतायाथ यो दद्यादन्नमर्थिने ॥ ४२
भीष्म उवाच
नारदेनैवमुक्तोऽहमन्नदानं सदा नृप ।
अनसूयुस्त्वमप्यन्नं तस्माद्देहि गतज्वरः ॥ ४३

अन्नदस्यान्नवृक्षाश्चेति झ. पाठः ॥ १९ ॥ क्षेत्र चरति पादवत् इति थ. ध. पाठः ॥ २८ ॥ ब्रह्म वेदः ॥ ३३ ॥ मेघेषूदकमादत्ते प्राणाना पवनः शिव इति थ. पाठ. ॥ ३६ ॥ अष्टनवतितमोऽध्यायः ॥ ९८ ॥

दत्त्वाऽन्नं विधिवद्राजन्विप्रेभ्यस्त्वमपि प्रभो ।
यथावदनुरूपेभ्यस्ततः स्वर्गमवाप्स्यसि ॥ ४४
अन्नदानां हि ये लोकास्तांस्त्वं शृणु जनाधिप ।
भवनानि प्रकाशन्ते दिवि तेषां महात्मनाम् ॥४५
नानासंस्थानि रूपाणि नानास्तम्भान्वितानि च ।
चन्द्रमण्डलशुभ्राणि किंकिणीजालवन्ति च ॥४६
तरुणादित्यवर्णानि स्थावराणि चराणि च ।
अनेकशतभौमानि सान्तर्जलचराणि च ॥ ४७
वैदूर्यार्कप्रकाशानि रौप्यरुक्ममयानि च ।
सर्वकामफलाश्चापि वृक्षा भवनसंस्थिताः ॥ ४८
वाप्यो वीथ्यः सभाः कूपा दीर्घिकाश्चैव सर्वशः ।
घोषवन्ति च यानानि युक्तान्यथ सहस्रशः ॥ ४९
भक्ष्यभोज्यमयाः शैला वासांस्याभरणानि च ।
क्षीरं स्रवन्ति सरितस्तथा चैवान्नपर्वताः ॥ ५०
प्रासादाः पाण्डुराभ्राभाः शय्याश्च कनकोज्ज्वलाः ।
तान्यन्नदाः प्रपद्यन्ते तस्मादन्नप्रदो भव ॥ ५१
एते लोकाः पुण्यकृता अन्नदानां महात्मनाम् ।
तस्मादन्नं प्रयत्नेन दातव्यं मानवैर्भुवि ॥ ५२

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि अष्टनवतितमोऽध्यायः ॥ ९८ ॥

## एकोनशततमोऽध्यायः ॥ ९९ ॥

भीष्मेण युधिष्ठिरंप्रत्यश्विन्यादिनक्षत्रयोगेऽन्नदानफलप्रतिपादकनारददेवकीसंवादानुवादः ॥ १ ॥

युधिष्ठिर उवाच ।
श्रुतं मे भवतो वाक्यमन्नदानस्य यो विधिः ।
नक्षत्रयोगस्येदानीं दानकल्पं ब्रवीहि मे ॥ १
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
देवक्याश्चैव संवादं महर्षेर्नारदस्य च ॥ २
द्वारकामनुसंप्राप्तं नारदं देवदर्शनम् ।
पप्रच्छेदं वचः प्रश्नं देवकी धर्मदर्शिनी ॥ ३
तस्याः संपृच्छमानाया देवर्षिर्नारदस्ततः ।
आचष्ट विधिवत्सर्वं तच्छृणुष्व विशांपते ॥ ४
नारद उवाच ।
कृत्तिकासु महाभागे पायसेन ससर्पिषा ।
संतर्प्य ब्राह्मणान्साधूँल्लोकानाप्नोत्यनुत्तमान् ॥ ५
रोहिण्यां प्रसृतैर्मार्गैर्मांसैरन्नेन सर्पिषा ।
पयोऽन्नपानं दातव्यमनृणार्थं द्विजातये ॥ ६
दोग्ध्रीं दत्त्वा सवत्सां तु नक्षत्रे सोमदैवते ।
गच्छन्ति मानुषाल्लोकात्स्वर्गलोकमनुत्तमम् ॥ ७
आर्द्रायां कृसरं दत्त्वा तिलमिश्रमुपोषितः ।
नरस्तरति दुर्गाणि क्षुरधारांश्च पर्वतान् ॥ ८
पूपान्पुनर्वसौ दत्त्वा तथैवान्नानि शोभने ।
यशस्वी रूपसंपन्नो बह्वन्नो जायते कुले ॥ ९
पुष्येण कनकं दत्त्वा कृतं वाऽकृतमेव च ।
अनालोकेषु लोकेषु सोमवत्स विराजते ॥ १०
आश्लेषायां तु यो रूप्यमृषभं वा प्रयच्छति ।
स सर्पभयनिर्मुक्तः संभवानधितिष्ठति ॥ ११
मघासु तिलपूर्णानि वर्धमानानि मानवः ।
प्रदाय पुत्रपशुमानिह प्रेत्य च मोदते ॥ १२
फल्गुनीपूर्वसमये ब्राह्मणानामुपोषितः ।
भक्ष्यान्फाणितसंयुक्तान्दत्त्वा सौभाग्यमृच्छति ॥
घृतक्षीरसमायुक्तं विधिवत्षष्टिकौदनम् ।
उत्तराविषये दत्त्वा स्वर्गलोके महीयते ॥ १४
यद्यत्प्रदीयते दानमुत्तराविषये नरैः ।
महाफलमनन्तं तद्भवतीति विनिश्चयः ॥ १५
हस्ते हस्तिरथं दत्त्वा चतुर्युक्तमुपोषितः ।
प्राप्नोति परमाँल्लोकान्पुण्यकामसमन्वितान् ॥१६
चित्रायां वृषभं दत्त्वा पुण्यगन्धांश्च भारत ।
चरन्त्यप्सरसां लोके रमन्ते नन्दने तथा ॥ १७
स्वात्यामथ धनं दत्त्वा यदिष्टतममात्मनः ।

मार्गैर्मृगसंबन्धिभिः ॥ ६ ॥ सौम्यनक्षत्रे मृगशिरसि ॥७॥ पूपान् पिष्टमयान् घृतपाचितपिण्डान् ॥ ९ ॥ अनालोकेषु आलोकान्तरवर्जितेषु स्वयप्रकाशेष्वित्यर्थः ॥ १० ॥ फाणितं गोरसविकारः ॥ १३ ॥

प्राप्नोति लोकान्स शुभानिह चैव महद्यशः ॥१८
विशाखायामनड्वाहं धेनुं दत्त्वा च दुग्धदाम् ।
सप्रासङ्गं च शकटं सधान्यं वस्त्रसंयुतम् ॥ १९
पितॄन्देवांश्च प्रीणाति प्रेत्य चानन्त्यमश्नुते ।
न च दुर्गाण्यवाप्नोति स्वर्गलोकं च गच्छति २०
दत्त्वा यथोक्तं विप्रेभ्यो वृत्तिमिष्टां स विन्दति ।
नरकादींश्च संक्लेशान्नाप्नोतीति विनिश्चयः ॥ २१
अनुराधासु प्रावारं वरान्नं समुपोषितः ।
दत्त्वा युगशतं चापि नरः स्वर्गे महीयते ॥ २२
कालशाकं तु विप्रेभ्यो दत्त्वा मर्त्यः समूलकम् ।
ज्येष्ठायामृद्धिमिष्टां वै गतिमिष्टां स गच्छति॥२३
मूले मूलफलं दत्त्वा ब्राह्मणेभ्यः समाहितः ।
पितॄन्प्रीणयते चापि गतिमिष्टां च गच्छति॥२४
अथ पूर्वास्वषाढासु दधिपात्राण्युपोषितः ।
कुलवृत्तोपसंपन्ने ब्राह्मणे वेदपारगे ॥ २५
प्रदाय जायते प्रेत्य कुले सुबहुगोधने ।
उदमन्थं ससर्पिष्कं प्रभूतमधुफाणितम् ॥ २६
दत्त्वोत्तरास्वषाढासु सर्वकामानवाप्नुयात् ।
दुग्धं त्वभिजिते योगे दत्त्वा मधुघृतप्लुतम् ।
धर्मनित्यो मनीषिभ्यः स्वर्गलोके महीयते ॥२७
श्रवणे कम्बलं दत्त्वा वस्त्रान्तरितमेव वा ।
श्वेतेन याति यानेन स्वर्गलोकानसंवृतान् ॥ २८
गोप्रयुक्तं धनिष्ठासु यानं दत्त्वा समाहितः ।
वस्त्रराशिधनं सद्यः प्रेत्य राज्यं प्रपद्यते ॥ २९
गन्धाञ्शतभिषग्योगे दत्त्वा सागरुचन्दनान् ।
प्राप्नोत्यप्सरसां सङ्घान्प्रेत्य गन्धांश्च शाश्वतान् ।
पूर्वप्रोष्ठपदायोगे राजमाषान्प्रदाय तु ।
सर्वभक्षफलोपेतः स वै प्रेत्य सुखी भवेत् ॥ ३१
औरभ्रमुत्तरायोगे यस्तु मांसं प्रयच्छति ।
स पितॄन्प्रीणयति वै प्रेत्य चानन्त्यमश्नुते ॥ ३२
कांस्योपदोहनां धेनुं रेवत्यां यः प्रयच्छति ।
सा प्रेत्य कामानादाय दातारमुपतिष्ठति ॥ ३३
रथमश्वसमायुक्तं दत्त्वाऽश्विन्यां नरोत्तमः
हस्त्यश्वरथसंपन्ने वर्चस्वी जायते कुले ॥ ३४
भरणीषु द्विजातिभ्यस्तिलधेनुं प्रदाय वै ।
गाः सुप्रभूताः प्राप्नोति नरः प्रेत्य यशस्तथा ३५
भीष्म उवाच ।
इत्येष लक्षणोद्देशः प्रोक्तो नक्षत्रयोगतः
देवक्या नारदेनेह सा स्नुषाभ्योऽब्रवीदिदम् ३६

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि एकोनशततमोऽध्यायः ॥ ९९ ॥

## शततमोऽध्यायः ॥ १०० ॥

भीष्मेण युधिष्ठिरंप्रति जलादिदानफलप्रतिपादनम् ॥ १ ॥

भीष्म उवाच ।
सर्वान्कामान्प्रयच्छन्ति ये प्रयच्छन्ति काञ्चनम् ।
इत्येवं भगवानत्रिः पितामहसुतोऽब्रवीत् ॥ १
पवित्रं शुच्यथायुष्यं पितॄणामक्षयं च तत् ।
सुवर्णं मनुजेन्द्रेण हरिश्चन्द्रेण कीर्तितम् ॥ २
पानीयपरमं दानं दानानां मनुरब्रवीत् ।
तस्मात्कूपांश्च वापीश्च तटाकानि च खानयेत् ॥३
सर्वं विनाशयेत्पापं पुरुषस्येह कर्मणः ।
कूपः प्रवृत्तपानीयः सुप्रवृत्तश्च नित्यशः ॥ ४
सर्वं तारयते वंशं यस्य खाते जलाशये ।
गावः पिबन्ति विप्राश्च साधवश्च नराः सदा ॥५
निदाघकाले पानीयं यस्य तिष्ठत्यवारितम् ।
स दुर्गं विषमं कृत्स्नं न कदाचिदवाप्नुते ॥ ६
बृहस्पतेर्भगवतः पूष्णश्चैव भगस्य च ।
अश्विनोश्चैव वह्नेश्च प्रीतिर्भवति सर्पिषा ॥ ७
परमं भेषजं ह्येतद्यज्ञानामेतदुत्तमम् ।

प्रासङ्गो धान्यादिपिधानयोग्य चतुरश्रम् ॥ १९ ॥ उदमन्थ उदकुम्भयुक्तं सक्तुविकारम् ॥ २६ ॥ पूर्वप्रोष्ठपदायोगे छागमांसमिति थ. पाठः ॥ ३१ ॥ उरभ्रः अजो वा ॥ ३२ ॥ एकोनशततमोऽध्यायः ॥ ९९ ॥

रसानामुत्तमं चैतत्फलानां चैतदुत्तमम् ॥ ८
फलकामो यशस्कामः पुष्टिकामश्च नित्यदा ।
घृतं दद्याद्विजातिभ्यः पुरुषः शुचिरात्मवान् ॥ ९
घृतं मासे आश्वयुजि विप्रेभ्यो यः प्रयच्छति ।
तस्मै प्रयच्छतो रूपं प्रीतौ देवाविहाश्विनौ ॥ १०
पायसं सर्पिषा मिश्रं द्विजेभ्यो यः प्रयच्छति ।
गृहं तस्य न रक्षांसि धर्षयन्ति कदाचन ॥ ११
पिपासया न म्रियते सोपच्छन्दश्च जायते ।
न प्राप्नुयाच्च व्यसनं करकान्यः प्रयच्छति ॥ १२
प्रयतो ब्राह्मणाग्रे यः श्रद्धया परया युतः ।
उपस्पर्शनषड्भागं लभते पुरुषः सदा ॥ १३
यः साधनार्थं काष्ठानि ब्राह्मणेभ्यः प्रयच्छति ।
प्रतापनार्थं राजेन्द्र वृत्तवद्भ्यः सदा नरः ॥ १४
सिद्ध्यन्त्यर्थाः सदा तस्य कार्याणि विविधानि च ।
उपर्युपरि शत्रूणां वपुषा दीप्यते च सः ॥ १५
भगवांश्चापि संप्रीतो वह्निर्भवति नित्यशः ।
न तं त्यजन्ति पशवः संग्रामे च जयत्यपि ॥ १६
पुत्राञ्छ्रियं च लभते यश्छत्रं संप्रयच्छति ।
न चक्षुर्व्याधिं लभते यज्ञभागमथाश्नुते ॥ १७
निदाघकाले वर्षे वा यश्छत्रं संप्रयच्छति ।
नास्य कश्चिन्मनोदाहः कदाचिदपि जायते ।
कृच्छ्रात्स विषमाच्चैव क्षिप्रं मोक्षमवाप्नुते ॥ १८
प्रदानं सर्वदानानां शकटस्य विशांपते ।
एवमाह महाभागः शाण्डिल्यो भगवानृषिः ॥ १९

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि शततमोऽध्यायः ॥ १०० ॥

## एकाधिकशततमोऽध्यायः ॥ १०१ ॥

भीष्मेण युधिष्ठिरंप्रति जलतिलभूम्यन्नगोदानादिफलकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
दह्यमानाय विप्राय यः प्रयच्छत्युपानहौ ।
यत्फलं तस्य भवति तन्मे ब्रूहि पितामह ॥ १
भीष्म उवाच ।
उपानहौ प्रयच्छेद्यो ब्राह्मणेभ्यः समाहितः ।
मर्दते कण्टकान्सर्वान्विषमान्निस्तरत्यपि ॥ २
स शत्रूणामुपरि च संतिष्ठति युधिष्ठिर ।
यानं चाश्वतरीयुक्तं तस्य शुभ्रं विशांपते ॥ ३
उपतिष्ठति कौन्तेय रौप्यकाञ्चनभूषितम् ।
शकटं दम्यसंयुक्तं दत्तं भवति चैव हि ॥ ४
युधिष्ठिर उवाच ।
यत्फलं तिलदाने च भूमिदाने च कीर्तितम् ।
गोदाने चान्नदाने च भूयस्तद्ब्रूहि कौरव ॥ ५
भीष्म उवाच ।
शृणुष्व मम कौन्तेय तिलदानस्य यत्फलम् ।
निशम्य च यथान्यायं प्रयच्छ कुरुसत्तम ॥ ६
पितॄणां प्रथमं भोज्यं तिलाः सृष्टाः स्वयंभुवा ।
तिलदानेन वै तस्मात्पितृपक्षः प्रमोदते ॥ ७
माघमासे तिलान्यस्तु ब्राह्मणेभ्यः प्रयच्छति ।
सर्वसत्वसमाकीर्णं नरकं स न पश्यति ॥ ८
सर्वसत्रैश्च यजते यस्तिलैर्यजते पितॄन् ।
न चाकामेन दातव्यं तिलैः श्राद्धं कदाचन ॥ ९
महर्षेः कश्यपस्यैते गात्रेभ्यः प्रसृतास्तिलाः ।
ततो दिव्यं गता भावं प्रदानेषु तिलाः प्रभो १०
पौष्टिका रूपदाश्चैव तथा पापविनाशनाः ।
तस्मात्सर्वप्रदानेभ्यस्तिलदानं विशिष्यते ॥ ११
आपस्तम्बश्च मेधावी शङ्खश्च लिखितस्तथा ।
महर्षिर्गौतमश्चापि तिलदानैर्दिवं गताः ॥ १२
तिलहोमरता विप्राः सर्वे संयतमैथुनाः ।
समा गव्येन हविषा प्रवृत्तिषु च संस्थिताः ॥ १३

---

सोपच्छन्दः सोपकरणः । करकान्पात्रविशेषान् ॥ १२ ॥ अग्र वृत्तिक्षेत्रादि तदर्थम् । उत्कोच विना । उपस्पर्शन दानम् ॥ १३ ॥ शततमोऽध्यायः ॥ १०० ॥

वै पुण्य पितृलोके महीयते इति ध. पाठः ॥७॥ सर्वकामैश्च जयति यस्तिलैरिति नच कामेन दातव्यमिति च ध. पाठः ॥ ९ ॥

सर्वेषामिति दानानां तिलदानं विशिष्यते ।
अक्षयं सर्वदानानां तिलदानमिहोच्यते ॥ १४
उच्छिन्ने तु पुरा हव्ये कुशिकर्षिः परंतपः ।
तिलैरग्नित्रयं हुत्वा प्राप्तवान्गतिमुत्तमाम् ॥ १५
इति प्रोक्तं कुरुश्रेष्ठ तिलदानमनुत्तमम् ।
विधानं येन विधिना तिलानामिह शस्यते ॥१६
अत ऊर्ध्वं निबोधेदं देवानां यष्टुमिच्छताम् ।
समागमे महाराज ब्रह्मणा वै स्वयंभुवा ॥ १७
देवाः समेत्य ब्रह्माणं भूमिभागे यियक्षवः ।
शुभं देशमयाचन्त यजेम इति पार्थिव ॥ १८
देवा ऊचुः ।
भगवंस्त्वं प्रभुर्भूमेः सर्वस्य त्रिदिवस्य च ।
यजेम हि महाभाग यज्ञं भवदनुज्ञया ॥ १९
नाननुज्ञातभूमिर्हि यज्ञस्य फलमश्नुते ।
त्वं हि सर्वस्य जगतः स्थावरस्य चरस्य च ।
प्रभुर्भवसि तस्मात्त्वं समनुज्ञातुमर्हसि ॥ २०
ब्रह्मोवाच ।
ददानि मेदिनीभागं भवद्भ्योऽहं सुरर्षभाः ।
यस्मिन्देशे करिष्यध्वं यज्ञान्काश्यपनन्दनाः २१
देवा ऊचुः ।
भगवन्कृतकामाः स्म यक्ष्महे स्वाप्तदक्षिणैः ।
इमं तु देशं मुनयः पर्युपासन्ति नित्यदा ॥ २२
ततोऽगस्त्यश्च कण्वश्च भृगुरत्रिर्वृषाकपिः ।
असितो देवलश्चैव देवयज्ञमुपागमन् ॥ २३
ततो देवा महात्मान ईजिरे यज्ञमच्युतम् ।
तथा समापयामासुर्यथाकालं सुरर्षभाः ॥ २४
त इष्टयज्ञास्त्रिदशा हिमवत्यचलोत्तमे ।
षष्ठमंशं क्रतोस्तस्य भूमिदानं प्रचक्रिरे ॥ २५
प्रादेशमात्रं भूमेस्तु यो दद्यादनुपस्कृतम् ।
न सीदति स कृच्छ्रेषु न च दुर्गाण्यवाप्नुते ॥२६
शीतवातातपसहां यागभूमिं सुसंस्कृताम् ।
प्रदाय सुरलोकस्थः पुण्यान्तेऽपि न चाल्यते २७
मुदितो वसति प्राज्ञः शक्रेण सह पार्थिव ।
प्रतिश्रयप्रदानाच्च सोऽपि स्वर्गे महीयते ॥ २८
अध्यापककुले जातः श्रोत्रियो नियतेन्द्रियः ।
गृहे यस्य वसेत्तुष्टः प्रधानं लोकमश्नुते ॥ २९
तथा गवार्थे शरणं शीतवर्षसहं दृढम् ।
आसप्तमं तारयति कुलं भरतसत्तम ॥ ३०
क्षेत्रभूमिं ददल्लोके शुभां श्रियमवाप्नुयात् ।
रत्नभूमिं प्रदद्यात्तु कुलवंशं प्रवर्धयेत् ॥ ३१
न चोषरां न निर्दग्धां महीं दद्यात्कथंचन ।
न श्मशानपरीतां च न च पापनिषेविताम् ॥३२
पारक्ये भूमिदेशे तु पितॄणां निर्वपेत्तु यः ।
तद्भूमिं वाऽपि पितृभिः श्राद्धकर्म विहन्यते ॥३३
तस्मात्क्रीत्वा महीं दद्यात्स्वल्पामपि विचक्षणः ।
पिण्डः पितृभ्यो दत्तो वै तस्यां भवति शाश्वतः ३४
अटवी पर्वताश्चैव नद्यस्तीर्थानि यानि च ।
सर्वाण्यस्वामिकान्याहुर्न हि तत्र परिग्रहः ॥ ३५
इत्येतद्भूमिदानस्य फलमुक्तं विशांपते ।
अतः परं तु गोदानं कीर्तयिष्यामि तेऽनघ ॥ ३६
गावोऽधिकास्तपस्विभ्यो यस्मात्सर्वेभ्य एव च ।
तस्मान्महेश्वरो देवस्तपस्ताभिः सहास्थितः ॥ ३७
ब्राह्मे लोके वसन्त्येताः सोमेन सह भारत ।
यां तां ब्रह्मर्षयः सिद्धाः प्रार्थयन्ति परां गतिम् ३८
पयसा हविषा दध्ना शकृता चाथ चर्मणा ।
अस्थिभिश्चोपकुर्वन्ति शृङ्गैर्वालैश्च भारत ॥ ३९
नासां शीतातपौ स्यातां सदैताः कर्म कुर्वते ।
न वर्षविषयं वाऽपि दुःखमासां भवत्युत ॥ ४०
ब्राह्मणैः सहिता यान्ति तस्मात्पारमकं पदम् ।
एकं गोब्राह्मणं तस्मात्प्रवदन्ति मनीषिणः ॥ ४१
रन्तिदेवस्य यज्ञे ताः पशुत्वेनोपकल्पिताः ।
अतश्चर्मण्वती राजन्गोचर्मभ्यः प्रवर्तिता ।
पशुत्वाच्च विनिर्मुक्ताः प्रदानायोपकल्पिताः॥४२
ता इमा विप्रमुख्येभ्यो यो ददाति महीपते ।

---

इमं हिमवत्सन्निहितम् ॥ २२ ॥ प्रतिश्रयो वासार्थं स्थलम् ॥ २८ ॥ तद्भूमिं परकीयां भूमिं वा यो निर्वपेत् पितृभिः पितृभ्यो दद्यात्तर्हि तच्छ्राद्धं तद्भूमिदानाख्यं कर्म चोभयं विहन्यते वृथा भवति ॥ ३३ ॥ तस्यां क्रीतायाम् ॥ ३४ ॥

निस्तरेदापदं कृच्छ्रां विषमस्थोऽपि पार्थिव ॥ ४३
गवां सहस्रदः प्रेत्य नरकं न प्रपद्यते ।
सर्वत्र विजयं चापि लभते मनुजाधिप ॥ ४४
अमृतं वै गवां क्षीरमित्याह त्रिदशाधिपः ।
तस्माद्ददाति यो धेनुममृतं स प्रयच्छति ॥ ४५
अग्नानामव्ययं ह्येतद्धौम्यं वेदविदो विदुः
तस्माद्ददाति यो धेनुं स हौम्यं संप्रयच्छति ॥ ४६
स्वर्गो वै मूर्तिमानेष वृषभं यो गवां पतिम् ।
विप्रे गुणयुते दद्यात्स वै स्वर्गे महीयते ॥ ४७
प्राणा वै प्राणिनामेते प्रोच्यन्ते भरतर्षभ ।
तस्माद्ददाति यो धेनुं प्राणानेष प्रयच्छति ॥ ४८
गावः शरण्या भूतानामिति वेदविदो विदुः ।
तस्माद्ददाति यो धेनुं शरणं संप्रयच्छति ॥ ४९
न वधार्थं प्रदातव्या न कीनाशे न नास्तिके ।
गोजीविने न दातव्या तथा गौर्भरतर्षभ ।
'गोरसानां न विक्रेतू रसं च यजनस्य च ॥' ५०
ददत्स तादृशानां वै नरो गां पापकर्मणाम् ।
अक्षयं नरकं यातीत्येवमाहुर्महर्षयः ॥ ५१
न कृशां नापवत्सां वा वन्ध्यां रोगान्वितां तथा ।
न व्यङ्गां न परिश्रान्तां दद्याद्गां ब्राह्मणाय वै ५२
दशगोसहस्रदः सम्यक् शक्रेण सह मोदते ।
अक्षयाँल्लभते लोकान्नरः शतसहस्रशः ॥ ५३
इत्यनड्वत्प्रदानं च तिलदानं च कीर्तितम् ।
तथा भूमिप्रदानं च शृणुष्वान्ने च भारत ॥ ५४
अन्नदानं प्रधानं हि कौन्तेय परिचक्षते ।
अन्नस्य हि प्रदानेन रन्तिदेवो दिवं गतः ॥ ५५
श्रान्ताय क्षुधितायान्नं यः प्रयच्छति भूमिप
स्वायंभुवं महत्स्थानं स गच्छति नराधिप ॥ ५६
न हिरण्यैर्न वासोभिर्नान्यदानेन भारत ।
प्राप्नुवन्ति नराः श्रेयो यथा ह्यन्नप्रदाः प्रभो ५७
अन्नं वै प्रथमं द्रव्यमन्नं श्रीश्च परा मता ।
अन्नात्प्राणः प्रभवति तेजो वीर्यं बलं तथा ॥ ५८
सद्यो ददाति यश्चान्नं सदैकाग्रमना नरः ।
न स दुर्गाण्यवाप्नोतीत्येवमाह पराशरः ॥ ५९
अर्चयित्वा यथान्यायं देवेभ्योऽन्नं निवेदयेत् ।
यदन्ना हि नरा राजंस्तदन्नास्तस्य देवताः ॥ ६०
कौमुद्यां शुक्लपक्षे तु योऽन्नदानं करोत्युत ।
स संतरति दुर्गाणि प्रेत्य चानन्त्यमश्नुते ॥ ६१
अभुक्त्वाऽतिथये चान्नं प्रयच्छेद्यः समाहितः ।
स वै ब्रह्मविदां लोकान्प्राप्नुयाद्भरतर्षभ ॥ ६२
सुकृच्छ्रामापदं प्राप्तश्चान्नदः पुरुषस्तरेत् ।
पापं तरति चैवेह दुष्कृतं चापकर्षति ॥ ६३
इत्येतदन्नदानस्य तिलदानस्य चैव ह ।
भूमिदानस्य च फलं गोदानस्य च कीर्तितम् ६४

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि एकाधिकशततमोऽध्यायः ॥ १०१ ॥

## द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥

भीष्मेण युधिष्ठिरंप्रति जलप्रभाववर्णनपूर्वकं तद्दानप्रशंसनम् ॥ १ ॥

युधिष्ठिर उवाच ।
श्रुतं दानफलं तात यत्त्वया परिकीर्तितम् ।
अन्नदानं विशेषेण प्रशस्तमिह भारत ॥ १
पानीयदानमेवैतत्कथं चेह महाफलम् ।
इत्येतच्छ्रोतुमिच्छामि विस्तरेण पितामह ॥ २
भीष्म उवाच ।
हन्त ते वर्तयिष्यामि यथावद्भरतर्षभ ।
गदतस्तन्ममाद्येह शृणु सत्यपराक्रम ।
पानीयदानात्प्रभृति सर्वं वक्ष्यामि तेऽनघ ॥ ३
यदन्नं यच्च पानीयं संप्रदायाश्नुते फलम् ।
न ताभ्यां परमं दानं किंचिदस्तीति मे मनः ॥ ४
अन्नात्प्राणभृतस्तात प्रवर्तन्ते हि सर्वशः ।
तस्मादन्नं परं लोके सर्वदानेषु कथ्यते ॥ ५
अन्नाद्बलं च तेजश्च प्राणिनां वर्धते सदा ।

आकुञ्चितमपि ह्येतद्धव्य वेदविदो विदुरिति ध. पाठः ॥ ४६ ॥
स्वयमुवं महाभाग स पश्यति नराधिपेति ध. पाठः ॥ ५६ ॥
अन्नं वै परम दैवमिति ध. पाठः ॥ ५८ ॥ एकोत्तरशततमोऽध्यायः ॥ १०१ ॥

अन्नदानमतस्तस्माच्छ्रेष्ठमाह प्रजापतिः ॥ ६
सावित्र्या ह्यपि कौन्तेय श्रूयते वचनं शुभम् ।
यच्चेदं नान्यथा चैतदेव सत्रे महामखे ॥ ७
अन्ने दत्ते नरेणेह प्राणा दत्ता भवन्त्युत ।
प्राणदानाद्धि परमं न दानमिह विद्यते ॥ ८
श्रुतं हि ते महाबाहो लोमशस्यापि तद्वचः ।
प्राणान्दत्त्वा कपोताय यत्प्राप्तं शिबिना पुरा ॥ ९
यां गतिं लभते दत्त्वा द्विजस्यान्नं विशांपते ।
ततो विशिष्टां गच्छन्ति प्राणदा इति नः श्रुतं १०
अन्नं चापि प्रभवति पानीयात्कुरुसत्तम
नीरजातेन हि विना न किंचित्संप्रवर्तते ॥ ११
नीरजातश्च भगवान्सोमो ग्रहगणेश्वरः ।
अमृतं च सुधा चैव सुधा चैवामृतं तथा ॥ १२
अन्नौषध्यो महाराज वीरुधश्च जलोद्भवाः ।
यतः प्राणभृतां प्राणाः संभवन्ति विशांपते ॥ १३
देवानाममृतं ह्यन्नं नागानां च सुधा तथा ।
पितॄणां च स्वधा प्रोक्ता पशूनां चापि वीरुधः १४
अन्नमेव मनुष्याणां प्राणानाहुर्मनीषिणः ।
तच्च सर्वं नरव्याघ्र पानीयात्संप्रवर्तते ॥ १५
तस्मात्पानीयदानाद्वै न परं विद्यते क्वचित् ।
तच्च दद्यान्नरो नित्यं यदीच्छेद्भूतिमात्मनः ॥ १६
धन्यं यशस्यमायुष्यं जलदानमिहोच्यते
शत्रूंश्चाप्यधि कौन्तेय सदा तिष्ठति तोयदः ॥ १७
सर्वकामानवाप्नोति कीर्तिं चैव हि शाश्वतीम् ।
प्रेत्य चानन्त्यमश्नाति पापेभ्यश्च प्रमुच्यते ॥ १८
तोयदो मनुजव्याघ्र स्वर्गं गत्वा महाद्युते ।
अक्षयान्समवाप्नोति लोकानित्यब्रवीन्मनुः ॥ १९

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥

## त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥

भीष्मेण युधिष्ठिरंप्रति तिलजलदीपादिदानप्रशंसापरयमब्राह्मणसंवादानुवादः ॥ १ ॥

उवाच ।
तिलानां कीदृशं दानमथ दीपस्य चैव हि ।
अन्नानां वाससां चैव भूय एव ब्रवीहि मे ॥ १
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
ब्राह्मणस्य च संवादं यमस्य च युधिष्ठिर ॥ २
मध्यदेशे महान्ग्रामो ब्राह्मणानां बभूव ह ।
गङ्गायमुनयोर्मध्ये यामुनस्य गिरेरधः ॥ ३
पर्णशालेति विख्यातो रमणीयो नराधिप ।
विद्वांसस्तत्र भूयिष्ठा ब्राह्मणाश्चावसंस्तथा ॥ ४
अथ प्राह यमः कंचित्पुरुषं कृष्णवाससम् ।
रक्ताक्षमूर्ध्वरोमाणं काकजङ्घाक्षिनासिकम् ॥ ५
गच्छ त्वं ब्राह्मणग्रामं ततो गत्वा तमानय ।
अगस्त्यं गोत्रतश्चापि नामतश्चापि शर्मिणम् ॥ ६
शमे निविष्टं विद्वांसमध्यापकमनावृतम् ।
मा चान्यमानयेथास्त्वं सगोत्रं तस्य पार्श्वतः ॥ ७
स हि तादृग्गुणस्तेन तुल्योऽध्ययनजन्मना ।
अपत्येषु तथा वृत्ते समस्तेनैव धीमता ।
तमानय यथोद्दिष्टं पूजा कार्या हि तस्य मे ॥ ८
स गत्वा प्रतिकूलं तच्चकार यमशासनम् ।
तमाक्रम्यानयामास प्रतिषिद्धो यमेन यः ॥ ९
तस्मै यमः समुत्थाय पूजां कृत्वा च वीर्यवान् ।
प्रोवाच नीयतामेष सोऽन्य आनीयतामिति ॥ १०
एवमुक्ते तु वचने धर्मराजेन स द्विजः ।
उवाच धर्मराजानं निर्विण्णोऽध्ययनेन वै ।
यो मे कालो भवेच्छेषस्तं वसेयमिहाच्युत ॥ ११

नीरजातेन जलोद्भवेन धान्यादिना ॥ ११ ॥ स्वधा चैव सुरा तथेति ध. पाठः ॥ १२ ॥ द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥

अध्यापकमनानृतमिति थ. पाठः । अध्यापकमनारतमिति ध. पाठः ॥ ७ ॥ चकारच्चयमाश्रय इति थ. ध. पाठः ॥ ९ ॥ इह यमलोके ॥ ११ ॥

यम उवाच ।
नाहं कालस्य विहितं प्राप्नोमीह कथंचन ।
यो हि धर्मं चरति वै तं तु जानामि केवलम् ॥१२
गच्छ विप्र त्वमद्यैव आलयं स्वं महाद्युते ।
ब्रूहि सर्वं यथा स्वैरं करवाणि किमच्युत ॥ १३
ब्राह्मण उवाच ।
शुद्धदानं च सुमहत्पुण्यं स्यात्तद्ब्रवीहि मे ।
सर्वस्य हि प्रमाणं त्वं त्रैलोक्यस्यापि सत्तम ॥ १४
यम उवाच ।
शृणु तत्त्वेन विप्रर्षे प्रदानविधिमुत्तमम् ।
तिलाः परमकं दानं पुण्यं चैवेह शाश्वतम् ॥१५
तिलाश्च संप्रदातव्या यथाशक्ति द्विजर्षभ ।
नित्यदानात्सर्वकामांस्तिला निर्वर्तयन्त्युत ॥१६
तिलाञ्श्राद्धे प्रशंसन्ति दानमेतद्ध्यनुत्तमम् ।
तान्प्रयच्छस्व विप्रेभ्यो विधिदृष्टेन कर्मणा ॥ १७
वैशाख्यां पौर्णमास्यां तु तिलान्दद्याद्द्विजातिषु ।
तिला भक्षयितव्याश्च सदा त्वालम्भनं च तैः १८
कार्यं सततमिच्छद्भिः श्रेयः सर्वात्मना गृहे ।
तथाऽऽपः सर्वदा देयाः पेयाश्चैव न संशयः ॥१९
पुष्करिण्यस्तटाकानि कूपांश्चैवात्र खानयेत् ।
एतत्सुदुर्लभतरमिह लोके द्विजोत्तम ॥ २०
आपो नित्यं प्रदेयास्ते पुण्यं ह्येतदनुत्तमम् ।
प्रपाश्च कार्या दानार्थं नित्यं ते द्विजसत्तम ।
भुक्तेऽप्यथ प्रदेयं तु पानीयं वै विशेषतः ॥ २१
'पानीयाभ्यर्थिनं दृष्ट्वा प्रीत्या दत्त्वा त्वरान्वितः
वस्त्रे तन्तुप्रमाणेन दीपे निमिषवत्सरम् ॥ २२
गवां रोमप्रमाणेन स्वर्गभोगमुपाश्नुते ।
जलबिन्दुप्रमाणेन नदेनान्युपवनेत ॥' २३
भीष्म उवाच ।
इत्युक्तः स तदा तेन यमदूतेन वै गृहान् ।
नीतश्च कारयामास सर्वं तद्यमशासनम् ॥ २४
नीत्वा तं यमदूतोऽपि गृहीत्वा शर्मिणं तदा ।
ययौ स धर्मराजाय न्यवेदयत चापि तम् ॥ २५
तं धर्मराजो धर्मज्ञं पूजयित्वा प्रतापवान् ।
कृत्वा च संविदं तेन विससर्ज यथागतम् ॥ २६
तस्यापि च यमः सर्वमुपदेशं चकार ह ।
प्रेत्येत्य च ततः सर्वं चकारोक्तं यमेन तत् ॥२७
तथा प्रशंसते दीपान्यमः पितृहितेप्सया ।
तस्माद्दीपप्रदो नित्यं संतारयति वै पितॄन् ॥ २८
दातव्याः सततं दीपास्तस्माद्भरतसत्तम ।
देवतानां पितॄणां च चक्षुष्यं चात्मनां विभो ॥२९
रत्नदानं च सुमहत्पुण्यमुक्तं जनाधिप ।
यस्तान्विक्रीय यजते ब्राह्मणो ह्यभयंकरम् ॥ ३०
यद्वै ददाति विप्रेभ्यो ब्राह्मणः प्रतिगृह्य वै ।
उभयोः स्यात्तदक्षय्यं दातुरादातुरेव च ॥ ३१
यो ददाति स्थितः स्थित्यां तादृशाय प्रतिग्रहम् ।
उभयोरक्षयं धर्मं तं मनुः प्राह धर्मवित् ॥ ३२
वाससां संप्रदानेन स्वदारनिरतो नरः ।
सुवस्त्रश्च सुवेषश्च भवतीत्यनुशुश्रुम ॥ ३३
गावः सुवर्णं च तथा तिलाश्चैवानुवर्णिताः ।
बहुशः पुरुषव्याघ्र वेदप्रामाण्यदर्शनात् ॥ ३४
विवाहांश्चैव कुर्वीत पुत्रानुत्पादयेत च ।
पुत्रलाभो हि कौरव्य सर्वलाभाद्विशिष्यते ॥ ३५

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥

कालस्य विहितं आयुःप्रमाणं न प्राप्नोमि न जानामि । कालेनाप्रवर्तितं त्वामिह स्थापयितुं न शक्नोमीत्यर्थः । विहितं प्रापयामीह कंचनेति थ॰ पाठः ॥ १३ ॥ ब्रूहि पृच्छ ॥ १४ ॥ निर्वर्तयन्ति साधयन्ति ॥ १७ ॥ आलम्भनं सर्वतः स्पर्शनं उद्वर्तनमित्यर्थः ॥ १८ ॥ एतद्धि तस्याऽभयंकरं प्रतिग्रहविक्रयजदोषघ्नम् ॥ ३२ ॥ त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥

## चतुरधिकशततमोऽध्यायः ॥ १०४ ॥

भीष्मेण युधिष्ठिरंप्रति गोभूविद्यादानप्रशंसनम् ॥ १ ॥

युधिष्ठिर उवाच ।
भूय एव कुरुश्रेष्ठ दानानां विधिमुत्तमम् ।
कथयस्व महाप्राज्ञ भूमिदानं विशेषतः ॥ १
पृथिवीं क्षत्रियो दद्याद्ब्राह्मणायेष्टिकर्मिणे ।
विधिवत्प्रतिगृह्णीयान्न त्वन्यो दातुमर्हति
सर्ववर्णैस्तु यच्छक्यं प्रदातुं फलकाङ्क्षिभिः ।
वेदे वा यत्समाख्यातं तन्मे व्याख्यातुमर्हसि ॥३
भीष्म उवाच ।
तुल्यनामानि देयानि त्रीणि तुल्यफलानि च ।
सर्वकामफलानीह गावः पृथ्वी सरस्वती ॥ ४
यो ब्रूयाच्चापि शिष्याय धर्म्यां ब्राह्मीं सरस्वतीम् ।
पृथिवीगोप्रदानाभ्यां तुल्यं स फलमश्नुते ॥ ५
तथैव गाः प्रशंसन्ति न तु देयं ततः परम् ।
सन्निकृष्टफलास्ता हि लघ्वर्थाश्च युधिष्ठिर ॥ ६
मातरः सर्वभूतानां गावः सर्वसुखप्रदाः ।
वृद्धिमाकाङ्क्षता नित्यं गावः कार्याः प्रदक्षिणाः ७
संताड्या न तु पादेन गवां मध्ये न च व्रजेत् ।
मङ्गलायतनं देव्यस्तस्मात्पूज्याः सदैव गाः ॥ ८
प्रचोदनं देवकृतं गवां कर्मसु वर्तताम् ।
पूर्वमेवाक्षरं चान्यदभिधेयं ततः परम् ॥ ९
प्रचारे वा निवाते वा बुधो नोद्वेजयेत गाः ।
तृषिता ह्यभिवीक्षन्त्यो नरं हन्युः सबान्धवम्१०
पितृसद्मानि सततं देवतायतनानि च ।
पूयन्ते शकृता यासां पूतं किमधिकं ततः ॥११
घासमुष्टिं परगवे दद्यात्संवत्सरं तु यः ।
अकृत्वा स्वयमाहारं व्रतं तत्सार्वकामिकम् ॥१२
स हि पुत्रान्यशोऽर्थं च श्रियं चाप्यधिगच्छति ।
नाशयत्यशुभं चैव दुःस्वप्नं चाप्यपोहति ॥ १३
युधिष्ठिर उवाच ।
देयाः किंलक्षणा गावः काश्चापि परिवर्जयेत् ।
कीदृशाय प्रदातव्या न देयाः कीदृशाय च १४
भीष्म उवाच ।
असद्वृत्ताय पापाय लुब्धायानृतवादिने ।
हव्यकव्यव्यपेताय न देया गौः कथंचन ॥ १५
भिक्षवे बहुपुत्राय श्रोत्रियायाहिताग्नये ।
दत्त्वा दशगवां दाता लोकानाप्नोत्यनुत्तमान्१६
'जुहोति यद्भोजयति यद्ददाति गवां रसैः ।
सर्वस्यैवांशभाग्दाता तन्निमित्तं प्रवर्तितः ॥' १७
यश्चैव धर्मं कुरुते तस्य धर्मफलं च यत् ।
सर्वस्यैवांशभाग्दाता तन्निमित्तं प्रवृत्तयः ॥ १८
यश्चैनमुत्पादयते यश्चैनं त्रायते भयात् ।
यश्चास्य कुरुते वृत्तिं सर्वे ते पितरस्त्रयः ॥ १९
कल्मषं गुरुशुश्रूषा हन्ति मानो महद्यशः ।
अपुत्रतां त्रयः पुत्रा अवृत्तिं दश धेनवः ॥ २०
वेदान्तनिष्ठस्य बहुश्रुतस्य
प्रज्ञानतृप्तस्य जितेन्द्रियस्य ।
शिष्टस्य दान्तस्य यतस्य चैव
भूतेषु नित्यं प्रियवादिनश्च ॥ २१
यः क्षुद्भयाद्वै न विकर्म कुर्या-
न्मृदुश्च शान्तो ह्यतिथिप्रियश्च ।
वृत्तिं द्विजायातिसृजेत तस्मै
यस्तुल्यशीलश्च सपुत्रदारः ॥ २२
शुभे पात्रे ये गुणा गोप्रदाने
तावान्दोषो ब्राह्मणस्वापहारे ।

---

इष्टिकर्मिणे याज्ञिकाय ॥ २ ॥ तुल्यनामानि गोपदवाच्यानि ॥ ४ ॥ देयं दानयोग्यम् । परं श्रेष्ठम् ॥ ६ ॥ गवां बलीवर्दाना कर्मसु यज्ञाद्यर्थेषु कृष्याद्यर्थेषु कर्षणादिषु वर्ततां प्रचोदनं प्रतोदेन प्रेरण देवैः कृतमिति न तत्र दोष इति भावः । तथापि पूर्वं यज्ञार्थमेव चोदनमक्षरं श्रेयस्करम् । अन्यत्कृष्याद्यर्थं तु ततः परं वैदिककर्षणमनुप्रवृत्तमभिधेय वाच्य निन्द्यमित्यर्थः ॥ ९ ॥ प्रचारे पलायने । निवाते कठिनोपवेशने । अभिवीक्षन्त्यो जलमलभमानाः ॥ १० ॥ आहारं तदीयतक्राद्याहरणमकृत्वा ॥१२॥ वेदान्तनिष्ठस्य वृत्ति अतिसृजेतेत्युत्तरेणान्वयः । चतुर्थ्यर्थे षष्ठी ॥२१॥ चतुरधिकशततमोऽध्यायः१०४

सर्वावस्थं ब्राह्मणस्वापहारं
दाराश्चैषां दूरतो वर्जनीयाः ॥ २३
विप्रदारं परिहृतं तद्धनं ऽपहृतं च तु ।
परित्रायन्ति शक्तास्तु नमस्तेभ्यो मृताश्च ये ॥ २४
न पालयन्ति निहतान्ये तान्वैवस्वतो यमः
दण्डयन्भगयस्त्रित्यं निरयेभ्यो न मुञ्चति ॥ २५
तथा गवां परित्राणे पीडने च शुभाशुभम् ।
विप्रगोषु विशेषेण रक्षितेषु गृहेषु वा ॥ २६

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि चतुरधिकशततमोऽध्यायः ॥ १०४ ॥

## पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥

भीष्मेण युधिष्ठिरंप्रति ब्राह्मणस्वापहारस्यानर्थहेतुतायां दृष्टान्ततया नृगोपाख्यानकथनम् ॥ १ ॥

भीष्म उवाच ।
अत्रैव कीर्त्यते सद्भिर्ब्राह्मणस्वाभिमर्शने ।
नृगेण सुमहत्कृच्छ्रं यदवाप्तं कुरूद्वह ॥ १
निविशन्त्यां पुरा पार्थ द्वारवत्यामिति श्रुतिः ।
अदृश्यत महाकूपस्तृणवीरुत्समावृतः ॥ २
प्रयत्नं तत्र कुर्वाणास्तस्मात्कूपाज्जलार्थिनः ।
श्रमेण महता युक्तास्तस्मिंस्तोये सुसंवृते ॥ ३
ददृशुस्ते महाकायं कृकलासमवस्थितम् ।
तस्य चोद्धरणे यत्नमकुर्वंस्ते सहस्रशः ॥ ४
प्रग्रहैश्चर्मपट्टैश्च तं बद्ध्वा पर्वतोपमम् ।
नाशक्नुवन्समुद्धर्तुं ततो जग्मुर्जनार्दनम् ॥
खमावृत्योदपानस्य कृकलासः स्थितो महान्
तस्य नास्ति समुद्धर्तेत्येतत्कृष्णे न्यवेदयन् ॥
स वासुदेवेन समुद्धृतश्च
पृष्टश्च कामान्निजगाद राजा ।
नृगस्तदाऽऽत्मानमथो न्यवेदय-
त्पुरातनं यज्ञसहस्रयाजिनम् ॥ ७
तथा ब्रुवाणं तु तमाह माधवः
शुभं त्वया कर्म कृतं न पापकम् ।
कथं भवान्दुर्गतिमीदृशीं गतो
नरेन्द्र तद्ब्रूहि किमेतदीदृशम् ॥
शतं सहस्राणि गवां शतं पुनः
पुनः शतान्यष्टशतायुतानि ।
त्वया पुरा दत्तमितीह शुश्रुम
नृप द्विजेभ्यः क्व नु तद्गतं तव ॥
नृगस्ततोऽब्रवीत्कृष्णं ब्राह्मणस्याग्निहोत्रिणः ।
प्रोषितस्य परिभ्रष्टा गौरेका मम गोधने ॥ १०
गवां सहस्रे संख्याता तदा सा पशुपैर्मम ।
सा ब्राह्मणाय मे दत्ता प्रेत्यार्थमभिकाङ्क्षता ॥ ११
अपश्यत्परिमार्गंश्च तां गां परगृहे द्विजः ।
ममेयमिति चोवाच ब्राह्मणो यस्य साऽभवत् ॥ १२
तावुभौ समनुप्राप्तौ विवदन्तौ भृशज्वरौ ।
भवान्दाता भवान्हर्तेत्यथ तौ मामवोचताम् ॥ १३
शतेन शतसङ्ख्येन गवां विनिमयेन वै ।
याचे प्रतिग्रहीतारं स तु मामब्रवीदिदम् ॥ १४
देशकालोपसंपन्ना दोग्ध्री शान्ताऽतिवत्सला ।
स्वादुक्षीरप्रदा धन्या मम नित्यं निवेशने ॥ १५
कृशं च भरते सा गौर्मम पुत्रमपस्तनम् ।
न सा शक्या मया दातुमित्युक्त्वा स जगाम ह ॥ १६
ततस्तमपरं विप्रं याचे विनिमयेन वै ।
गवां शतसहस्रं हि तत्कृते गृह्यतामिति ॥ १७
ब्राह्मण उवाच ।
न राज्ञां प्रतिगृह्णामि शक्तोऽहं स्वस्य मार्गणे ।
सैव गौर्दीयतां शीघ्रं ममेति मधुसूदन ॥ १८
रुक्ममश्वांश्च ददतो रजतस्यन्दनांस्तथा ।
न जग्राह ययौ चापि तदा स ब्राह्मणर्षभः ॥ १९
एतस्मिन्नेव काले तु चोदितः कालधर्मणा ।
पितृलोकमहं प्राप्य धर्मराजमुपागमम् ॥ २०
यमस्तु पूजयित्वा मां ततो वचनमब्रवीत् ।
नान्तः सङ्ख्यायते राजंस्तव पुण्यस्य कर्मणः ॥ २१
अस्ति चैव कृतं पापमज्ञानात्तदपि त्वया ।
चरस्व पापं पश्चाद्वा पूर्वं वा त्वं यथेच्छसि ॥ २२

रक्षितास्मीति चोक्तं ते प्रतिज्ञा चानृता तव ।
ब्राह्मणस्वस्य चादानं द्विविधस्ते व्यतिक्रमः ॥२३
पूर्वं कृच्छ्रं चरिष्येऽहं पश्चाच्छुभमिति प्रभो ।
धर्मराजं ब्रुवन्नेवं पतितोस्मि महीतले ॥ २४
अश्रौषं पतितश्चाहं यमस्योच्चैः प्रभाषतः !
वासुदेवः समुद्धर्ता भविता ते जनार्दनः ॥ २५
पूर्णे वर्षसहस्रान्ते क्षीणे कर्मणि दुष्कृते ।
प्राप्स्यसे शाश्वताँल्लोकाञ्जितान्स्वेनैव कर्मणा॥२६
कूपेऽऽत्मानमधःशीर्षमपश्यं पतितं च ह ।
तिर्यग्योनिमनुप्राप्तं न च मामजहात्स्मृतिः ॥२७
त्वया तु तारितोऽस्म्यद्य किमन्यत्र तपोबलात् ।
अनुजानीहि मां कृष्ण गच्छेयं दिवमद्य वै ॥२८
अनुज्ञातः स कृष्णेन नमस्कृत्य जनार्दनम् ।
विमानं दिव्यमास्थाय ययौ दिवमरिन्दमः ॥२९
ततस्तस्मिन्दिवं याते नृगे भरतसत्तम ।
वासुदेव इमाञ्श्लोकाञ्जगाद कुरुनन्दन ॥ ३०
ब्राह्मणस्वं न हर्तव्यं पुरुषेण विजानता ।
ब्राह्मणस्वं हृतं हन्ति नृगं ब्राह्मणगौरिव ॥ ३१
सतां समागमः सद्भिर्नाफलः पार्थ विद्यते ।
विमुक्तं नरकात्पश्य नृगं साधुसमागमात् ॥ ३२
प्रदानं फलवत्तत्र द्रोहस्तत्र तथाऽफलः ।
अपहारं गवां तस्माद्वर्जयेत युधिष्ठिर ॥ ३३

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥

## षडधिकशततमोऽध्यायः ॥ १०६ ॥

भीष्मेण युधिष्ठिरंप्रति गोदानप्रशंसापरनाचिकेतोपाख्यानकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
दत्तानां फलसंप्राप्तिं गवां
विस्तरेण महाबाहो न हि तृप्यामि कथ्यताम् ॥१
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
ऋषेरौद्दालकेर्वाक्यं नाचिकेतस्य चोभयोः ॥ २
ऋषिरौद्दालकिर्दीक्षामुपगम्य ततः सुतम् ।
त्वं मामुपचरस्वेति नाचिकेतमभाषत ॥ ३
समाप्ते नियमे तस्मिन्महर्षिः पुत्रमब्रवीत् ।
उपस्पर्शनसक्तस्य स्वाध्यायाभिरतस्य च ॥ ४
इध्मा दर्भाः सुमनसः कलशश्चाभितो जलम् ।
विस्मृतं मे तदादाय नदीतीरादिहाव्रज ॥ ५
गत्वानवाप्य तत्सर्वं नदीवेगसमाप्लुतम् ।
न पश्यामि तदित्येवं पितरं सोऽब्रवीन्मुनिः ॥ ६
क्षुत्पिपासाश्रमाविष्टो मुनिरौद्दालकिस्तदा ।
यमं पश्येति तं पुत्रमशपत्क्रोधमूर्च्छितः ॥ ७
तथा स पित्राऽभिहतो वाग्वज्रेण कृताञ्जलिः ।
प्रसीदेति ब्रुवन्नेव गतसत्त्वोऽपतद्भुवि ॥ ८
नाचिकेतं पिता दृष्ट्वा पतितं दुःखमूर्च्छितः ।
किं मया कृतमित्युक्त्वा निपपात महीतले ॥ ९
तस्य दुःखपरीतस्य स्वं पुत्रमनुशोचतः ।
व्यतीतं तदहःशेषं सा चोग्रा तत्र शर्वरी ॥ १०
पित्र्येणाश्रुप्रपातेन नाचिकेतः कुरूद्वह ।
प्रास्पन्दच्छयने कौश्ये वृष्ट्या सस्यमिवाप्लुतम्॥११
स पर्यपृच्छत्तं पुत्रं श्लाघ्यं पर्यागतं पुनः ।
दिव्यैर्गन्धैः समादिग्धं क्षीणस्वप्नमिवोत्थितम् १२
अपि पुत्र जिता लोकाः शुभास्ते स्वेन कर्मणा ।
दिष्ट्या चासि पुनः प्राप्तो न हि ते मानुषं वपुः॥१३
प्रत्यक्षदर्शी सर्वस्य पित्रा पृष्टो महात्मना ।
अभ्युत्थाय पितुर्मध्ये महर्षीणां न्यवेदयत् ॥ १४

---

प्रतिज्ञा च कृता त्वयेति, त्रिविधस्ते व्यतिक्रम इति च. थ. ध. पाठः ॥ २३ ॥ कृच्छ्रं चरिष्ये पापफलं भोक्ष्ये ॥ २४ ॥ न हर्तव्य क्षत्रियेण विशेषत इति थ. ध. पाठ. ॥ ३१ ॥ पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥

कलशश्चातिभोजनम् इति झ. पाठः। तत्रं अतिभोजन भोजनसामग्रिक शाकादि ॥ ५ ॥ गतसत्त्वो मृतः ॥ ८ ॥ सस्य शुष्यमाणम् ॥ ११ ॥

न्भवच्छासनमाशु यातो
ह्यहं विशालां रुचिरप्रभामाम् ।
वैवस्वतीं प्राप्य सभामवश्यं
सहस्रशो योजनहैमभौमाम् ॥ १५
दृष्ट्वैव मामभिमुखमापतन्तं
गृहं निवेद्यासनमादिदेश ।
वैवस्वतोऽर्घ्यादिभिरर्हणैश्च
भवत्कृते पूजयामास मां सः ॥ १६
ततस्त्वहं तं शनकैरवोचं
वृतः सदस्यैरभिपूज्यमानः ।
प्राप्तोऽस्मि ते विषयं धर्मराज
लोकानर्हो यानहं तान्विधत्स्व ॥ १७
यमोऽब्रवीन्मां न मृतोसि सौम्य
यमं पश्येत्याह स त्वां तपस्वी ।
पिता प्रदीप्ताग्निसमानतेजा
न तच्छक्यमनृतं विप्र कर्तुम् ॥ १८
दृष्टस्तेऽहं प्रतिगच्छस्व तात
शोचत्यसौ तव देहस्य कर्ता ।
ददानि किंचापि मनःप्रणीतं
प्रियातिथेस्तव कामान्वृणीष्व ॥ १९
तेनैवमुक्तस्तमहं प्रत्यवोचं
प्राप्तोस्मि ते विषयं दुर्निवर्त्यम् ।
इच्छाम्यहं पुण्यकृतां समृद्धाँ-
ल्लोकान्द्रष्टुं यदि तेऽहं वरार्हः ॥ २०
यानं समारोप्य तु मां स देवो
वाहैर्युक्तं सुप्रभं भानुमत्तत् ।
संदर्शयामास तदाऽऽत्मलोका-
न्सर्वांस्तथा पुण्यकृतां द्विजेन्द्र ॥ २१
अपश्यं तत्र वेश्मानि तैजसानि महात्मनाम् ।
नानासंस्थानरूपाणि सर्वरत्नमयानि च ॥ २२
चन्द्रमण्डलशुभ्राणि किंकिणीजालवन्ति च ।
अनेकशतभौमानि सान्तर्जलवनानि च ॥ २३
वैडूर्यार्कप्रकाशानि रूप्यरुक्ममयानि च ।
तरुणादित्यवर्णानि स्थावराणि चराणि च ॥ २४
भक्ष्यभोज्यमयाञ्शैलान्वासांसि शयनानि च ।
सर्वकामफलांश्चैव वृक्षान्भवनसंस्थितान् ॥ २५
नद्यो वीथ्यः सभा वाप्यो दीर्घिकाश्चैव सर्वशः ।
घोषवन्ति च यानानि युक्तान्यथ सहस्रशः ॥ २६
क्षीरस्रवा वै सरितो गिरींश्च
सर्पिस्तथा विमलं चापि तोयम् ।
वैवस्वतस्यानुमतांश्च देशा-
नदृष्टपूर्वान्सुबहूनपश्यम् ॥ २७
सर्वान्दृष्ट्वा तदहं धर्मराज-
मवोचं वै सर्वदेवं महिष्णुम् ।
क्षीरस्यैताः सर्पिषश्चैव नद्यः
शश्वत्स्रोताः कस्य भोज्याः प्रवृत्ताः ॥ २८
यमोऽब्रवीद्विद्धि भोज्यांस्त्वमेता-
न्ये दातारः साधवो गोरसानाम् ।
अन्ये लोकाः शाश्वता वीतशोकाः
समाकीर्णा गोप्रदाने रतानाम् ॥ २९
न त्वेतासां दानमात्रं प्रशस्तं
पात्रं कालो गोविशेषो विधिश्च ।
ज्ञात्वा देयं विप्र गवान्तरं हि
दुःखं ज्ञातुं पावकादित्यभूतम् ॥ ३०
स्वाध्यायवान्योऽतिमात्रं तपस्वी
वैतानस्थो ब्राह्मणः पात्रमासाम् ।
गोषु क्षान्तं गोशरण्यं कृतज्ञं
वृत्तिग्लानं तादृशं पात्रमाहुः ॥ ३१
कृच्छ्रोत्सृष्टाः पोषणाभ्यागताश्च
द्वारैरेतैर्गोविशेषाः प्रशस्ताः ।
अन्तर्जाताः सुक्रयज्ञानलब्धाः
प्राणक्रीताः सोदकाः सोद्वहाश्च ॥ ३२
तिस्रो रात्र्यस्त्वद्भिरुपोष्य भूमौ
तृप्ता गावस्तर्पितेभ्यः प्रदेयाः ।

---

योजनेति लुप्ततृतीयान्तं पदम् । योजनैः सहस्रशः समितामिति शेषः ॥ १५॥ अनेकशतानि भौमानि उपर्युपरि भूमिसमूहा येषु तानि प्रासादमण्डलानि ॥ २३ ॥ गवामन्तरमन्योन्यतारतम्य । अवड् ॥ ३० ॥ कृच्छ्रोत्सृष्टाः सङ्कटात् निरोधात् मुक्ताः । पोषणार्थं दरिद्रागारादागताः । तादृशीनां पालनं प्रशस्ततरमित्यर्थः ॥ ३१ ॥ त्र्यहमम्मात्राहारो भूमिशायी

वत्सैः प्रीताः सुप्रजाः सोपचारा-
स्त्र्यहं दत्त्वा गोरसैर्वर्तितव्यम् ॥ ३३
दत्त्वा धेनुं सुव्रतां साधुदोहां
कल्याणवत्सामपलायिनीं च ।
यावन्ति रोमाणि भवन्ति तस्या-
स्तावद्वर्षाण्यश्नुते स्वर्गलोकम् ॥ ३४
तथाऽनड्वाहं ब्राह्मणेभ्यः प्रदाय
दान्तं धुर्यं बलवन्तं युवानम् ।
कुलानुजीव्यं वीर्यवन्तं बृहन्तं
भुङ्क्ते लोकान्संमितान्धेनुदस्य ॥ ३५
वृद्धे ग्लाने संभ्रमे वा महार्थे
कृष्यर्थं वा होम्यहेतोः प्रसूत्याम् ।
गुर्वर्थं वा यज्ञसमाप्तये वा
गां वै दातुं देशकालोऽविशिष्टः ॥ ३६
नाचिकेत उवाच ।
श्रुत्वा वैवस्वतवचस्तमहं पुनरब्रवम् ।
अगोमी गोप्रदातॄणां कथं लोकान्हि गच्छति ॥ ३७
ततोऽब्रवीद्यमो धीमान्गोप्रदानं ततो गतिम् ।
गोप्रदानानुकल्पात्तु गामृते सन्तु गोप्रदाः ॥ ३८
अलाभे यो गवां दद्याद्घृतधेनुं यतव्रतः ।
तस्यैता घृतवाहिन्यः क्षरन्ते वत्सला इव ॥ ३९
घृतालाभे तु यो दद्यात्तिलधेनुं यतव्रतः ।
स दुर्गात्तारितो धेन्वा क्षीरनद्यां प्रमोदते ॥ ४०
तिलालाभे तु यो दद्याज्जलधेनुं यतव्रतः ।
स कामप्रवहां शीतां नदीमेतामुपाश्नुते ॥ ४१
एवमेतानि मे तत्र धर्मराजो न्यदर्शयत् ।
दृष्ट्वा च परमं हर्षमवापमहमच्युत ॥ ४२
निवेदये चाहमिमं प्रियं ते
क्रतुर्महानल्पधनप्रचारः ।
प्राप्तो मया तात स मत्प्रसूतः
प्रपत्स्यते वेदविधिप्रवृत्तः ॥ ४३
शापो ह्ययं भवतोऽनुग्रहाय
प्राप्तो मया यत्र दृष्टो यमो वै ।
दानव्युष्टिं तत्र दृष्ट्वा महात्म-
न्निःसंदिग्धान्दानधर्मांश्चरिष्ये ॥ ४४
इदं च मामब्रवीद्धर्मराजः
पुनः पुनः संप्रहृष्टो महर्षे ।
दानेन यः प्रयतोऽभूत्सदैव
विशेषतो गोप्रदानं च कुर्याम् ॥ ४५
शुद्धो ह्यर्थो नावमन्यस्व धर्मा-
न्पात्रे देयं देशकालोपपन्ने ।
तस्माद्गावस्ते नित्यमेव प्रदेया
मा भूच्च ते संशयः कश्चिदत्र ॥ ४६
एताः पुरा ह्यददन्नित्यमेव
शान्तात्मानो दानपथे निविष्टाः ।
तपांस्युग्राण्यप्रतिशङ्कमाना-
स्ते वै दानं प्रददुश्चैव शक्त्या ॥ ४७
काले च शक्त्या मत्सरं वर्जयित्वा
शुद्धात्मानः श्रद्धिनः पुण्यशीलाः ।
दत्त्वा गा वै लोकममुं प्रपन्ना
देदीप्यन्ते पुण्यशीलास्तु नाके ॥ ४८
एतद्दानं न्यायलब्धं द्विजेभ्यः
पात्रे दत्तं प्रापणीयं परीक्ष्य ।
काम्याष्टम्यां वर्तितव्यं दशाहं
रसैर्गवां शकृता प्रस्नवैर्वा ॥ ४९
देवव्रती स्याद्वृषभप्रदानै-
र्वेदावाप्तिर्गोयुगस्य प्रदाने ।
तीर्थावाप्तिर्गोप्रयुक्तप्रदाने
पापोत्सर्गः कपिलायाः प्रदाने ॥ ५०
गामप्येकां कपिलां संप्रदाय
न्यायोपेतां कलुषाद्विप्रमुच्येत् ।
गवां रसात्परमं नास्ति किंचि-
द्गवां प्रदानं सुमहद्वदन्ति ॥ ५१

भूत्वा चतुर्थं दिनमारभ्य त्र्यहमेकैकां गां दत्त्वा गोरसैर्वृत्तिं कुर्यात् । एव व्रतपूर्वक गोत्रयं ददत उक्तं वक्ष्यमाण च फल भवतीत्यर्थः ॥ ३३ ॥ वृद्धे ग्लाने रोगिणि पथ्याशनार्थं संभ्रमे दुर्भिक्षे । महार्थे यज्ञाद्यर्थे च । प्रसूत्या पुत्रजन्मनि ॥ ३६ ॥

क्रतुः गोदानरूपः ॥ ४३ ॥ प्रापणीय गोः आहारादि । कामे इच्छापूरणे साधुः काम्या या अष्टमी शुक्लकृष्णान्यतरा तस्यां ॥ ४९ ॥ गोप्रयुक्त रथशकटादि ॥ ५० ॥

गावो लोकांस्तारयन्ति क्षरन्त्यो
गावश्चान्नं संजनयन्ति लोके।
यस्तं जानन्न गवां हार्दमेति
स वै गन्ता निरयं पापचेताः॥ ५२
यस्तद्दत्तं गोसहस्रं शतं वा
दशार्धं वा दश वा साधुवत्सम्।
अप्येका वै साधवे ब्राह्मणाय
सास्यामुष्मिन्पुण्यतीर्था नदी वै॥ ५३
प्राप्त्या पुष्ट्या लोकसंरक्षणेन
गावस्तुल्याः सूर्यपादैः पृथिव्याम्।
शब्दश्चैकः संनतिश्चोपभोगा-
स्तस्माद्गोदः सूर्य इवात्रभाति॥ ५४
गुरुं शिष्यो वरयेद्गोप्रदाने
स वै गन्ता नियतं स्वर्गमेव।
विधिज्ञानां सुमहान्धर्म एष
विधिं ह्याद्यं विधयः संविशन्ति॥ ५५
इदं दानं न्यायलब्धं द्विजेभ्यः
पात्रे दत्त्वा प्रापयेथाः परीक्ष्य।
त्वय्याशंसन्त्यमरा दानवाश्च
वयं चापि प्रसृते पुण्यशीले॥ ५६
इत्युक्तोऽहं धर्मराजं द्विजर्षे
धर्मात्मानं शिरसाऽभिप्रणम्य।
अनुज्ञातस्तेन वैवस्वतेन
प्रत्यागमं भगवत्पादमूलम्॥ ५७

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि षडधिकशततमोऽध्यायः॥ १०६॥

## सप्ताधिकशततमोऽध्यायः॥ १०७॥

युधिष्ठिरंप्रति भीष्मेण गोदानफलविशेषविषयकेन्द्रप्रश्नानुवादः॥ १॥

युधिष्ठिर उवाच।
उक्तं ते गोप्रदानं वै नाचिकेतमृषिं प्रति।
माहात्म्यमपि चैवोक्तमुद्देशेन गवां प्रभो॥ १
नृगेण च महद्दुःखमनुभूतं महात्मना।
एकापराधादज्ञानात्पितामह महामते॥ २
द्वारवत्यां यथा चासौ निविशन्त्यां समुद्धृतः।
मोक्षहेतुरभूत्कृष्णस्तदप्यवधृतं मया॥ ३
किं त्वस्ति मम संदेहो गवां लोकं प्रति प्रभो।
तत्त्वतः श्रोतुमिच्छामि गोदा यत्र वसन्त्युत॥४
भीष्म उवाच।
अत्राप्युदाहरन्तीममितिहासं पुरातनम्।
यथाऽपृच्छत्पद्मयोनिमेतदेव शतक्रतुः॥ ५
शक्र उवाच।
स्वर्लोकवासिनां लक्ष्मीमभिभूय स्वयाऽर्चिषा।
गोलोकवासिनः पश्ये व्रजतो संशयोऽत्र मे॥ ६
कीदृशा भगवँल्लोका गवां तद्ब्रूहि मेऽनघ।
यानावसन्ति दातार एतदिच्छामि वेदितुम्॥ ७
कीदृशाः किंफलाः किंस्वित्परमस्तत्र को गुणः।
कथं च पुरुषास्तत्र गच्छन्ति विगतज्वराः॥ ८
कियत्कालं प्रदानस्य दाता च फलमश्नुते।
कथं बहुविधं दानं स्यादल्पमपि वा कथम्॥ ९
बह्वीनां कीदृशं दानमल्पानां वाऽपि कीदृशम्।
अदत्त्वा गोप्रदाः सन्ति केन वा तच्च शंस मे॥१०
कथं वा बहुदाता स्यादल्पदात्रा समः प्रभो।
अल्पप्रदाता बहुदः कथं स्वित्स्यादिहेश्वर॥ ११
कीदृशी दक्षिणा चैव गोप्रदाने विशिष्यते।
एतत्तथ्येन भगवन्मम शंसितुमर्हसि॥ १२

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि सप्ताधिकशततमोऽध्यायः॥ १०७॥

---

हार्दं हृत्स्थम्। भक्ष्यपानकण्डूयनादिकं कर्तुं न एति नानुसरति॥ ५२॥ विधिं गुर्वाराधनपरम्। विधयो गोदानविधयः॥ ५५॥ षडधिकशततमोऽध्यायः॥ १०६॥

एकापराधादज्ञानान्नृगस्ता दुर्गतिं गतः। इति ट. थ. पाठः॥ २॥ सप्ताधिकशततमोऽध्यायः॥ १०७॥

## अष्टाधिकशततमोऽध्यायः ॥ १०८ ॥

इन्द्रंप्रति ब्रह्मणा गोदानफलप्रशंसनम् ॥ १ ॥

पितामह उवाच ।
योऽयं प्रश्नस्त्वया पृष्टो गोप्रदानादिकारितः ।
नान्यः प्रष्टास्ति लोकेस्मिंस्त्वत्तोन्यो हि शतक्रतो १
सन्ति नानाविधा लोका यांस्त्वं शक्र न पश्यसि ।
पश्यामि यानहं लोकानेकपत्न्यश्च याः स्त्रियः ॥२
कर्मभिश्चापि सुशुभैः सुव्रता ऋषयस्तथा ।
सशरीरा हि तान्यान्ति ब्राह्मणाः शुभबुद्धयः॥३
शरीरन्यासमोक्षेण मनसा निर्मलेन च ।
स्वप्नभूतांश्च ताँल्लोकान्पश्यन्तीहापि सुव्रताः ॥४
ते तु लोकाः सहस्राक्ष शृणु यादृग्गुणान्विताः ।
न तत्र क्रमते कालो न जरा न च पावकः ॥५
तथा नास्त्यशुभं किंचिन्न व्याधिस्तत्र न क्लमः ।
यद्यच्च गावो मनसा तस्मिन्वाञ्छन्ति वासव ॥ ६
तत्सर्वं प्रापयन्ति स्म मम प्रत्यक्षदर्शनात् ।
कामगाः कामचारिण्यः कामात्कामांश्च भुञ्जते ॥७
वाप्यः सरांसि सरितो विविधानि वनानि च ।
गृहाणि पर्वताश्चैव यावद्द्रव्यं च किंचन ॥ ८
मनोज्ञं सर्वभूतेभ्यस्तद्वनं तत्र दृश्यते ।
ईदृशान्विद्धि ताँल्लोकान्नास्ति लोकस्तथाविधः॥९
तत्र सर्वसहाः क्षान्ता वत्सला गुरुवर्तिनः ।
अहंकारैर्विरहिता यान्ति शक्र नरोत्तमाः ॥ १०

य: सर्वमांसानि न भक्षयीत
पुमान्सदा भावितो धर्मयुक्तः ।
मातापित्रोरर्चिता सत्ययुक्तः
शुश्रूषिता ब्राह्मणानामनिन्द्यः ॥ ११
अक्रोधनो गोषु तथा द्विजेषु
धर्मे रतो गुरुशुश्रूषकश्च ।
यावज्जीवं सत्यवृत्ते रतश्च
दाने रतो यः क्षमी चापराधे ॥ १२
मृदुर्दान्तो देवपरायणश्च
सर्वातिथिश्चापि यथा दयावान् ।
ईदृग्गुणो मानवस्तं प्रयाति
लोकं गवां शाश्वतं चाव्ययं च ॥ १३
न पारदारी पश्यति लोकमेतं
न वै गुरुघ्नो न मृषा संप्रलापी ।
सदापवादी ब्राह्मणेष्वात्तवैरो
दोषैरन्यैर्यश्च युक्तो दुरात्मा ॥ १४
न मित्रध्रुङ्नैकृतिकः कृतघ्नः
शठोऽनृजुर्धर्मविद्वेषकश्च ।
न ब्रह्महा मनसाऽपि प्रपश्ये-
द्गवां लोकं पुण्यकृतां निवासम् ॥ १५

एतत्ते सर्वमाख्यातं नैपुण्येन सुरेश्वर ।
गोप्रदानरतानां तु फलं शृणु शतक्रतो ॥ १६
दायाद्यलब्धैरर्थैर्यो गाः क्रीत्वा संप्रयच्छति ।
धर्मार्जितान्धनैः क्रीतान्स लोकानाप्नुतेऽक्षयान् ॥
यो वै द्यूते धनं जित्वा गाः क्रीत्वा संप्रयच्छति ।
स दिव्यमयुतं शक्र वर्षाणां फलमश्नुते ॥ १८
दायाद्याद्याः स्म वै गावो न्यायपूर्वैरुपार्जिताः ।
प्रदद्यात्ताः प्रदातॄणां संभवन्त्यपि च ध्रुवाः॥१९
प्रतिगृह्य तु यो दद्याद्गाः संशुद्धेन चेतसा ।
तस्यापीहाक्षयाँल्लोकान्ध्रुवान्विद्धि शचीपते ॥२०
जन्मप्रभृति सत्यं च यो ब्रूयान्नियतेन्द्रियः ।
गुरुद्विजसहः क्षान्तस्तस्य गोभिः समा गतिः २१
न जातु ब्राह्मणो वाच्यो यदवाच्यं शचीपते ।
मनसा गोषु न द्रुह्येद्गोवृत्तिर्गोनुकम्पकः ॥ २२
सत्ये धर्मे च निरतस्तस्य शक्र फलं शृणु ।
गोसहस्रेण समिता तस्य धेनुर्भवत्युत ॥ २३
क्षत्रियस्य गुणैरेतैरन्वितस्य फलं शृणु ।
सप्तार्धशततुल्या गौर्भवतीति विनिश्चयः ॥ २४

---

शरीरस्य न्यासः समाधिकाले । मोक्षः मरणे ॥ ४ ॥ नैकृतिको वञ्चकः । शठः समर्थोऽपि दारिद्र्यभाषी ॥ १५ ॥ गुरूणा द्विजाना वापराध सहते इति गुरुद्विजसहः ॥ २१ ॥ गोवृत्तिरसंग्रहपरः ॥ २२ ॥ सप्तार्धशत पञ्चाशदधिकसप्तशत

वैश्यस्यैते यदि गुणास्तस्य पञ्चशतं भवेत् ।
शूद्रस्यापि विनीतस्य चतुर्भागफलं स्मृतम् ॥ २५

एतच्चैनं योऽनुतिष्ठेत युक्तः
सत्ये रतो गुरुशुश्रूषया च ।
दक्षः क्षान्तो देवतार्थी प्रशान्तः
शुचिर्बुद्धो धर्मशीलोऽनहंवाक् ॥ २६
महत्फलं प्राप्यते सद्द्विजाय
दत्त्वा दोग्ध्रीं विधिनाऽनेन धेनुम् ।
नित्यं दद्यादेकभक्तः सदा च
सत्ये स्थितो गुरुशुश्रूषिता च ॥ २७
वेदाध्यायी गोषु यो भक्तिमांश्च
नित्यं दत्त्वा योऽभिनन्देत गाश्च ।
आजातितो यश्च गवां नमेत
इदं फलं शक्र निबोध तस्य ॥ २८
यत्स्यादिष्ट्वा राजसूये फलं तु
यत्स्यादिष्ट्वा बहुना काञ्चनेन ।
एतत्तुल्यं फलमप्याहुरग्र्यं
सर्वे सन्तस्त्वृषयो ये च सिद्धाः ॥ २९
योऽग्रं भक्तं किंचिदप्राश्य दद्या-
द्गोभ्यो नित्यं गोव्रती सत्यवादी ।
शान्तोऽलुब्धो गोसहस्रस्य पुण्यं
संवत्सरेणाप्नुयात्सत्यशीलः ॥ ३०

यदेकभक्तमश्नीयाद्दद्यादेकं गवां च यत् ।
दशवर्षाण्यनन्तानि गोव्रती गोनुकम्पकः ॥ ३१
एकेनैव च भक्तेन यः क्रीत्वा गां प्रयच्छति ।
यावन्ति तस्या रोमाणि संभवन्ति शतक्रतो ॥३२
तावच्छतानां स गवां फलमाप्नोति शाश्वतम् ।
ब्राह्मणस्य फलं हीदं क्षत्रियस्य तु वै शृणु ॥ ३३
पञ्चवार्षिकमेवं तु क्षत्रियस्य फलं स्मृतम् ।
ततोऽर्धेन तु वैश्यस्य शूद्रो वैश्यार्धतः स्मृतः ॥३४
यश्चात्मविक्रयं कृत्वा गाः क्रीत्वा संप्रयच्छति ।
यावत्संदर्शयेद्गां वै स तावत्फलमश्नुते ॥ ३५
रोम्णि रोम्णि महाभाग लोकाश्चास्याक्षयाः स्मृताः
संग्रामेष्वर्जयित्वा तु यो वै गाः संप्रयच्छति ।
आत्मविक्रयतुल्यास्ताः शाश्वता विद्धि कौशिक ॥
अभावे यो गवां दद्यात्तिलधेनुं यतव्रतः ।
दुर्गात्स तारितो धेन्वा क्षीरनद्यां प्रमोदते ॥ ३७

न त्वेवासां दानमात्रं प्रशस्तं
पात्रं कालो गोविशेषो विधिश्च ।
कालज्ञानं विप्रगवान्तरं हि
दुःखं ज्ञातुं पावकादित्यभूतम् ॥ ३८
स्वाध्यायाढ्यं शुद्धयोनिं प्रशान्तं
वैतानस्थं पापभीरुं बहुज्ञम् ।
गोषु क्षान्तं नातितीक्ष्णं शरण्यं
वृत्तिग्लानं तादृशं पात्रमाहुः ॥ ३९
वृत्तिग्लाने सीदति चातिमात्रं
कृष्यर्थं वा होम्यहेतोः प्रसूतेः ।
गुर्वर्थं वा बालसंवृद्धये वा
धेनुं दद्याद्देशकाले विशिष्टे ॥ ४०
अन्तर्ज्ञाताः सक्रयज्ञानलब्धाः
प्राणैः क्रीतास्तेजसा यौतकाश्च ।
कृच्छ्रोत्सृष्टाः पोषणाभ्यागताश्च
द्वारैरेतैर्गोविशेषाः प्रशस्ताः ॥ ४१
बलान्विताः शीलवयोपपन्नाः
सर्वाः प्रशंसन्ति सुगन्धवत्यः ।
यथा हि गङ्गा सरितां वरिष्ठा
तथाऽर्जुनीनां कपिला वरिष्ठा ॥ ४२
तिस्रो रात्रीस्त्वद्भिरुपोष्य भूमौ
तृप्ता गावस्तर्पितेभ्यः प्रदेयाः ।
वत्सैः पुष्टैः क्षीरपैः सुप्रचारा-
स्त्र्यहं दत्त्वा गोरसैर्वर्तितव्यम् ॥ ४३
दत्त्वा धेनुं सुव्रतां साधुदोहां
कल्याणवत्सामपलायिनीं च ।

॥ २४ ॥ दशवर्षाणि च फल वाजपेयस्य विन्दतीति ध. पाठः ॥ ३१ ॥ यावन्ति तस्य प्रोक्तानि दिवसानि शतक्रतो इति ध. पाठः ॥ ३२ ॥ संदर्शयेत्पश्येत् । यावद्ब्रह्माण्डे गोजातीयमस्ति तावत्तत्र वसेदित्यर्थः ॥ ३५ ॥ अलाभे यो गवामिति ध. पाठः ॥ ३७ ॥ अन्तर्जाताः सुक्रयज्ञानलब्धाः प्राणक्रीताः सोदकाः सोद्वहाश्चेति ध. पाठः ॥ ४१ ॥ अर्जुनीनां

यावन्ति रोमाणि भवन्ति तस्या-
स्तावन्ति वर्षाणि भवन्त्यमुत्र ॥ ४४
तथाऽनड्वाहं ब्राह्मणाय प्रदाय
धुर्यं युवानं बलिनं विनीतम् ।
हलस्य वोढारमनन्तवीर्यं
प्राप्नोति लोकान्दशधेनुदस्य ॥ ४५
कान्ताराद्ब्राह्मणान्गाश्च यः परित्राति कौशिक ।
क्षेमेण स विमुच्येत तस्य पुण्यफलं शृणु ॥ ४६
अश्वमेधक्रतोस्तुल्यं फलं भवति शाश्वतम् ।
मृत्युकाले सहस्राक्ष यां वृत्तिमनुकाङ्क्षते ॥ ४७
लोकान्बहुविधान्दिव्यान्यच्चास्य हृदि वर्तते ।
तत्सर्वं समवाप्नोति कर्मणैतेन मानवः ॥ ४८
गोभिश्च समनुज्ञातः सर्वत्र च महीयते ।
यस्त्वेतेनैव कल्पेन गां वनेष्वनुगच्छति ॥ ४९
तृणगोमयपर्णाशी निस्पृहो नियतः शुचिः ।
अकामं तेन वस्तव्यं मुदितेन शतक्रतो ॥ ५०
मम लोके वसति स लोके वा यत्र चेच्छति॥५१

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि अष्टाधिकशततमोऽध्यायः ॥ १०८ ॥

## नवाधिकशततमोऽध्यायः ॥ १०९ ॥

भीष्मेण युधिष्ठिरंप्रति ब्रह्मणा इन्द्रायोक्तगोविक्रयापहारफलानुवादः ॥ १ ॥ तथा सुवर्णस्य गोदाने दक्षिणात्वप्रशंसनानुवादः ॥ २ ॥

इन्द्र उवाच ।
अनन्यो गामपहरेद्विक्रीयाच्चार्थकारणात् ।
एतद्विज्ञातुमिच्छामि कानु तस्य गतिर्भवेत् ॥ १
पितामह उवाच ।
भक्तार्थं विक्रयार्थं वा येऽपहारं हि कुर्वते ।
दानार्थं ब्राह्मणार्थाय तत्रेदं श्रूयतां फलम् ॥ २
विक्रयार्थं हि यो हिंस्याद्भक्षयेद्वा निरङ्कुशः ।
घातयानं हि पुरुषं येऽनुमन्येयुरर्थिनः ॥ ३
घातकः खादको वाऽपि तथा यश्चानुमन्यते ।
यावन्ति तस्या रोमाणि तावद्वर्षाणि मज्जति ॥४
ये दोषा यादृशाश्चैव द्विजयज्ञोपघातके
विक्रये चापहारे च ते दोषा वै स्मृता गवाम् ५
अपहृत्य तु यो गां वै ब्राह्मणाय प्रयच्छति ।
यावद्दाने फलं तस्यास्तावन्निरयमृच्छति ॥ ६
सुवर्णं दक्षिणामाहुर्गोप्रदाने महाद्युते ।
सुवर्णं परमित्युक्तं दक्षिणार्थमसंशयम् ॥ ७
गोप्रदानात्तारयते सप्त पूर्वांस्तथाऽपरान्
सुवर्णं दक्षिणां कृत्वा तावद्द्विगुणमुच्यते ॥ ८
सुवर्णं परमं दानं सुवर्णं दक्षिणा परा ।
सुवर्णं पावनं शक्र पावनानां परं स्मृतम् ॥ ९
कुलानां पावनं प्राहुर्जातरूपं शतक्रतो ।
एषा मे दक्षिणा प्रोक्ता समासेन महाद्युते ॥१०
भीष्म उवाच ।
एतत्पितामहेनोक्तमिन्द्राय भरतर्षभ ।
इन्द्रो दशरथायाह रामायाह पिता तथा ॥ ११
राघवोपि प्रियभ्रात्रे लक्ष्मणाय यशस्विने ।
ऋषिभ्यो लक्ष्मणेनोक्तमरण्ये वसता प्रभो ॥ १२
पारम्पर्यागतं चेदमृषयः संशितव्रताः ।
दुर्धरं धारयामासू राजानश्चैव धार्मिकाः ॥ १३
उपाध्यायेन गदितं मम चेदं युधिष्ठिर ॥ १४
य इदं ब्राह्मणो नित्यं वदेद्ब्राह्मणसंसदि ।
यज्ञेषु गोप्रदानेषु द्वयोरपि समागमे ॥ १५
तस्य लोकाः किलाक्षय्या दैवतैः सह नित्यदा ।
इति ब्रह्मा स भगवानुवाच परमेश्वरः ॥ १६

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि नवाधिकशततमोऽध्यायः ॥ १०९ ॥

गवाम् ॥ ४२ ॥ कुलस्य कर्तारमनन्तवीर्यमिति ध. पाठः ॥ ४५ ॥ अष्टोत्तरशततमोऽध्यायः ॥ १०८ ॥

विक्रयार्थं यो नियुङ्क्ते इति शेष. ॥ ३ ॥ सुवर्णं प्राहुरित्यत्र जातरूपमिति ध. पाठः ॥१०॥ नवाधिकशततमोऽध्यायः १०९

## दशाधिकशततमोऽध्यायः ॥ ११० ॥

भीष्मेण युधिष्ठिरंप्रति सत्यदमादिप्रशंसनम् ॥ १ ॥

उवाच ।
विस्रम्भितोऽहं भवता धर्मान्प्रवदता विभो ।
प्रवक्ष्यामि तु संदेहं तन्मे ब्रूहि पितामह ॥ १
व्रतानां किं फलं प्रोक्तं कीदृशं वा महाद्युते ।
नियमानां फलं किं च स्वधीतस्य च किं फलम् ॥२
दमस्येह फलं किं च वेदानां धारणे च किम् ।
अध्यापने फलं किं च सर्वमिच्छामि वेदितुम् ॥ ३
अप्रतिग्राहके किं च फलं लोके पितामह ।
तस्य किंच फलं दृष्टं श्रुतं यस्तु प्रयच्छति ॥ ४
स्वकर्मनिरतानां च शूराणां चापि किं फलम् ।
सत्ये च किं फलं प्रोक्तं ब्रह्मचर्ये च किं फलम् ॥५
पितृशुश्रूषणे किंच मातृशुश्रूषणे तथा ।
आचार्यगुरुशुश्रूषा स्वनुक्रोशानुकम्पने ॥ ६
एतत्सर्वमशेषेण पितामह यथातथम् ।
वेत्तुमिच्छामि धर्मज्ञ परं कौतूहलं हि मे ॥ ७
भीष्म उवाच ।
यो व्रतं वै यथोद्दिष्टं तथा संप्रतिपद्यते ।
अखण्डं सम्यगारभ्य तस्य लोकाः सनातनाः ८
नियमानां फलं राजन्प्रत्यक्षमिह दृश्यते ।
नियमानां क्रतूनां च त्वयाऽवाप्तमिदं फलम् ॥९
स्वधीतस्यापि च फलं दृश्यतेऽमुत्र चेह च ।
इह लोकेऽर्थवान्नित्यं ब्रह्मलोके च मोदते ॥ १०
दमस्य तु फलं राजञ्शृणु त्वं विस्तरेण मे ।
दान्ताः सर्वत्र सुखिनो दान्ताः सर्वत्र निर्वृताः ।
यत्रेच्छागामिनो दान्ताः सर्वशत्रुनिषूदनाः ॥११
प्रार्थयन्ति च यद्दान्ता लभन्ते तन्न संशयः ।
युज्यन्ते सर्वकामैर्हि दान्ताः सर्वत्र पाण्डव ॥१२
स्वर्गे यथा प्रमोदन्ते तपसा विक्रमेण च ।
दानैर्यज्ञैश्च विविधैस्तथा दान्ताः क्षमान्विताः १३
दानाद्दमो विशिष्टो हि ददत्किंचिद्द्विजातये ।
दाता कुप्यति नो दान्तस्तस्माद्दानात्परं दमः ॥१४
यस्तु दद्यादकुप्यन्हि तस्य लोकाः सनातनाः ।
क्रोधो हन्ति हि यद्दानं तस्माद्दानाद्वरो दमः ॥१५
अदृश्यानि महाराज स्थानान्ययुतशो दिवि ।
ऋषीणां सर्वलोकेषु यानि ते यान्ति देवताः १६
दमेन यानि नृपते गच्छन्ति परमर्षयः ।
कामयाना महत्स्थानं तस्माद्दानात्परं दमः ॥ १७
'विद्यादानाद्वरं नास्ति वेदविद्या महाफलाः ।'
अध्यापकः परिक्लेशादक्षयं फलमश्नुते ॥ १८
विधिवत्पावकं हुत्वा ब्रह्मलोके नराधिप ।
अधीत्यापि हि यो वेदान्न्यायविद्भ्यः प्रयच्छति ।
गुरुकर्मप्रशंसी तु सोपि स्वर्गे महीयते ॥ १९
क्षत्रियोऽध्ययने युक्तो यजने दानकर्मणि ।
युद्धे यश्च परित्राता सोपि स्वर्गे महीयते ॥ २०
वैश्यः स्वकर्मनिरतः प्रदानाल्लभते महत् ।
शूद्रः स्वकर्मनिरतः स्वर्गं शुश्रूषयाऽऽर्च्छति ॥२१
शूरा बहुविधाः प्रोक्तास्तेषामर्थांस्तु मे शृणु ।
शूरान्वयानां निर्दिष्टं फलं शूरस्य चैव हि ॥ २२
यज्ञशूरा दमे शूराः सत्यशूरास्तथा परे ।
युद्धशूरास्तथैवोक्ता दानशूराश्च मानवाः ॥ २३
'बुद्धिशूरास्तथैवान्ये क्षमाशूरास्तथा परे ।'
सांख्यशूराश्च बहवो योगशूरास्तथा परे ।
अरण्ये गृहवासे च त्यागे शूरास्तथा परे ॥ २४
आर्जवे च तथा शूराः शमे वर्तन्ति मानवाः ।
तैस्तैश्च नियमैः शूरा बहवः सन्ति चापरे ।
वेदाध्ययनशूराश्च शूराश्चाध्यापने रताः ॥ २५
गुरुशुश्रूषया शूराः पितृशुश्रूषया परे ।
मातृशुश्रूषया शूरा भैक्ष्यशूरास्तथा परे ॥ २६
अरण्ये गृहवासे च शूराश्चातिथिपूजने ।
सर्वे यान्ति पराँल्लोकान्स्वकर्मफलनिर्जितान् ॥२७

दशाधिकशततमोऽध्यायः ॥ ११० ॥

---

अनुक्रोशः परदुःखेन दुःखितत्वम् । अनुकम्पा तत्प्रतीकारकरणम् ॥ ६ ॥ फलमैश्वर्यमेव प्रत्यक्षम् ॥ ९ ॥

धारणं सर्ववेदानां सर्वतीर्थावगाहनम् ।
सत्यं च ब्रुवतो नित्यं समं वा स्यान्नवा समम् ॥ २८
अश्वमेधसहस्रं च सत्यं च तुलया धृतम् ।
अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते ॥ २९
सत्येन सूर्यस्तपति सत्येनाग्निः प्रदीप्यते ।
सत्येन मरुतो वान्ति सर्वं सत्ये प्रतिष्ठितम् ॥ ३०
सत्येन देवाः प्रीयन्ते पितरो ब्राह्मणास्तथा ।
सत्यमाहुः परो धर्मस्तस्मात्सत्यं न लोपयेत् ॥ ३१
मुनयः सत्यनिरता मुनयः सत्यविक्रमाः ।
मुनयः सत्यशपथास्तस्मात्सत्यं विशिष्यते ॥ ३२
सत्यवन्तः सत्यलोके मोदन्ते भरतर्षभ ।
दमः सत्यफलावाप्तिरुक्ता सर्वात्मना मया ॥ ३३
असंशयं विनीतात्मा स वै स्वर्गे महीयते ।
ब्रह्मचर्यस्य च गुणं शृणु त्वं वसुधाधिप ॥ ३४
आजन्ममरणाद्यस्तु ब्रह्मचारी भवेदिह ।
न तस्य किंचिदप्राप्यमिति विद्धि नराधिप ॥ ३५
बह्वयः कोट्यस्त्वृषीणां तु ब्रह्मलोके वसन्त्युत ।
सत्ये रतानां सततं दान्तानामूर्ध्वरेतसाम् ॥ ३६
ब्रह्मचर्यं दहेद्राजन्सर्वपापान्युपासितम् ।
ब्राह्मणेन विशेषेण ब्राह्मणो ह्यग्निरुच्यते ॥ ३७
प्रत्यक्षं हि तथा ह्येतद्ब्राह्मणेषु तपस्विषु ।
बिभेति हि यथा शक्रो ब्रह्मचारिप्रधर्षितः ॥ ३८
तद्ब्रह्मचर्यस्य फलमृषीणामिह दृश्यते ।
मातापित्रोः पूजने यो धर्मस्तमपि मे शृणु ॥ ३९
शुश्रूषते यः पितरं न चासूयेत्कदाचन ।
मातरं भ्रातरं वाऽपि गुरुमाचार्यमेव च ॥ ४०
तस्य राजन्फलं विद्धि स्वर्लोके स्थानमर्चितम् ।
न च पश्येत नरकं गुरुशुश्रूषयाऽऽत्मवान् ॥ ४१

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि दशाधिकशततमोऽध्यायः ॥ ११० ॥

## एकादशाधिकशततमोऽध्यायः ॥ १११ ॥

भीष्मेण युधिष्ठिरंप्रति गोदानविधिफलादिकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
विधिं गवां परं श्रोतुमिच्छामि नृप तत्त्वतः ।
येन ताञ्शाश्वताँल्लोकानर्थिनां प्राप्नुयादिह ॥ १
भीष्म उवाच ।
न गोदानात्परं किंचिद्विद्यते वसुधाधिप ।
गौर्हि न्यायागता दत्ता सद्यस्तारयते कुलम् ॥ २
सतामर्थे सम्यगुत्पादितो यः
स वै क्लृप्तः सम्यगाभ्यः प्रजाभ्यः ।
तस्मात्पूर्वं ह्यादिकालप्रवृत्तं
गोदानार्थं शृणु राजन्विधिं मे ॥ ३
पुरा गोष्ठे निलीनासु गोषु संदिग्धदर्शिना ।
मांधात्रा प्रकृतं प्रश्नं बृहस्पतिरभाषत ॥ ४
द्विजानामन्त्र्य सत्कृत्य प्रोक्तं कालमुपोष्य च ।
गोदानार्थे प्रयुञ्जीत रोहिणीं नियतव्रतः ॥ ५
आह्वानं च प्रयुञ्जीत समङ्गे बहुलेति च ।
प्रविश्य च गवां मध्यमिमां श्रुतिमुदाहरेत् ॥ ६
गौर्मे माता वृषभः पिता मे
दिवं गर्भं जगती मे प्रतिष्ठा ।
प्रपद्यैवं शर्वरीमुष्य गोषु
पुनर्वाणीमुत्सृजेद्गोप्रदाने ॥ ७
स तामेकां निशां गोभिः समसख्यः समव्रतः ।
ऐकात्म्यगमनात्सद्यः कलुषाद्विप्रमुच्यते ॥ ८
उत्सृष्टवृषवत्सा हि प्रदेया सूर्यदर्शने ।
त्रिदिवं प्रतिपत्तव्यमर्थवादाशिषस्तव ॥ ९
ऊर्जस्विन्य ऊर्जमेधाश्च यज्ञे
गर्भोऽमृतस्य जगतश्च प्रतिष्ठा ।

---

यो विधिरुत्पादित. । सम्यगिज्याः प्रजाभ्य इति थ. ध. पाठः ॥ ३ ॥ द्विजातिमतिसत्कृत्य श्वः कालमभिवेद्य चेति झ. पाठः । रोहिणी लोहितवर्णाम् ॥ ५ ॥ समसंख्यो गा अनिवारयन् । समव्रतः भूतलशायित्वदंशाद्यनिवारकत्वादिगुणयुक्तः ॥ ८ ॥ उत्सृष्टः वृषवत्सो यया सार्धं सा उत्सृष्टवृषवत्सा । त्वया प्रदेया त्रिदिवं च प्रतिपत्तव्यं गन्तव्यम् । अर्थवादमन्त्रोक्ता आशिषश्च तव भविष्यन्तीति योज्यम् ॥ ९ ॥ आशिषमेवाह ऊर्जस्विन्य इति । बलवत्य उत्साहवत्यो वा ऊर्जस्विन्यः । ऊर्जमेधा उपग-

क्षिते रोहः प्रवहः शश्वदेव
प्राजापत्याः सर्वमित्यर्थवादाः ॥ १०
गावो ममैनः प्रणुदन्तु सौर्या-
स्तथा सौम्याः स्वर्गयानाय सन्तु ।
आत्मानं मे मातृवच्चाश्रयन्तु
तथाऽनुक्ताः सन्तु सर्वाशिषो मे ॥ ११
शेषोत्सर्गे कर्मभिर्देहमोक्षे
सरस्वत्यः श्रेयसे संप्रवृत्ताः ।
यूयं नित्यं सर्वपुण्योपवाह्या
दिशध्वं मे गतिमिष्टां प्रसन्नाः ॥ १२
या वै यूयं सोऽहमद्यैव भावो
युष्मान्दत्त्वा चाहमात्मप्रदाता ।
मनश्च्युता मन एवोपपन्नाः
संधुक्षध्वं सौम्यरूपोग्ररूपाः ॥ १३
दानस्याग्रे पूर्वमेतद्वदेत
गवां दाता विधिवत्पूर्वदृष्टम् ।
प्रतिब्रूयाच्छेषमर्धं द्विजातिः
प्रतिगृह्णन्वै गोप्रदाने विधिज्ञः ॥ १४
गां ददानीति वक्तव्यमर्घ्यमुत्सृज्य सुव्रतः ।
ऊढव्या भरितव्या च वैष्णवीति च चोदयेत् ॥१५
नाम संकीर्तयेत्तस्या यथासंख्योत्तरं स वै ।
फलं षट्त्रिंशदष्टौ च सहस्राणि च विंशतिः॥१६
एवमेतान्गुणान्विद्याद्गवादीनां यथाक्रमम् ।
गोप्रदाता समाप्नोति समस्तानष्टमे क्रमे ॥ १७
गोदः शीली निर्भयश्चार्घदाता
न स्याद्दुःखी वसुदाता च कामम् ।
उपस्योढा भारते यश्च विद्वा-
न्विख्यातास्ते वैष्णवाश्चन्द्रलोकाः ॥ १८
गा वै दत्त्वा गोव्रती स्यात्त्रिरात्रं
निशां चैकां संवसेतेह ताभिः ।
काम्याष्टम्यां वर्तितव्यं त्रिरात्रं
रसैर्वा गोः शकृता प्रस्नवैर्वा ॥ १९
देवव्रती स्याद्वृषभप्रदाने
वेदावाप्तिर्गोयुगस्य प्रदाने ।
तथा गवां विधिमासाद्य यज्वा
लोकानग्र्यान्विन्दते गोविधिज्ञः ॥ २०
कामान्सर्वान्पार्थिवानेकसंस्था-
न्यो वै दद्यात्कामदुघां च धेनुम् ।
सम्यक्ताः स्युर्हव्यकव्यौघवत्य-
स्तासामुक्ष्णां ज्यायसां संप्रदानम् ॥ २१
न चाशिष्यायाव्रतायोपकुर्या-
न्नाश्रद्दधानाय न वक्रबुद्धये ।
गुह्यो ह्ययं सर्वलोकस्य धर्मो
नेमं धर्मं यत्र तत्र प्रजल्पेत् ॥ २२
सन्ति लोके श्रद्दधाना मनुष्याः
सन्ति क्षुद्रा राक्षसमानुषेषु ।
एषामेतद्दीयमानं ह्यनिष्टं
ये नास्तिक्यं चाश्रयन्तेऽल्पपुण्याः ॥ २३
बार्हस्पत्यं वाक्यमेतन्निशम्य
ये राजानो गोप्रदानानि दत्त्वा ।
लोकान्प्राप्ताः पुण्यशीलाः प्रवृत्ता-
स्तान्मे राजन्कीर्त्यमानान्निबोध ॥ २४

---

तप्रज्ञा.। यज्ञे अमृतस्य तत्साधनस्य हविषो गर्भ इव गर्भः क्षेत्रभूताः। क्षितेः ऐश्वर्यस्य रोहः। शश्वत् शाश्वतः क्षितेः प्रहवः प्रवाहरूपाश्च। प्राजापत्यः सर्वविद्याप्रवाद इति थ. ध. पाठः ॥ १०॥ अनुक्ताः मन्त्रद्वयेन उक्ता आशिषो मे सन्तु। आम्नातायामनधीताः श्रयन्तु इति थ. पाठः ॥ ११ ॥ शेषोत्सर्गे क्षयरोगोपतापापनये क्षयरोगादिनिवृत्तौ देहमोक्षे च कर्मभिः पञ्चगव्यादिभिः सेविताः सत्यः सरस्वत्यो नद्य इव श्रेयसे सम्प्रवृत्ताः ॥ १२ ॥ मनश्च्युताः दातुर्ममत्वाभिमानाच्च्युता। मनएव उपपन्नाः मदीयममतास्पदीभूताः। संधुक्षध्व दातारं मां च इष्टैर्भोगैः प्रकाशयध्वम् ॥ १३ ॥ गवादीना गोप्रतिनिधीना एव तत्फलम्। प्रत्यक्षगोदाने गोप्रतिग्रहीतुर्गृहं गच्छन्त्या अष्टमे पदे भवन्ति किमु तद्गृहगमनादिष्विति भावः। गुणान्वृद्धान्भावनीय यथाक्रममिति थ. ध. पाठः। शीली शीलवान् अर्घदाता निर्भय इति संबन्ध.। उपस्य प्रातःस्नानादिकर्म ऊढ प्राप्त यैः। भारते विद्वान् भारतवेत्ता। वैष्णवाः विष्णुभक्ताः। चन्द्रवत् लोक आलोको येषा एव विख्याताः कथिता.॥ १८ ॥ एकसंस्थान् एकीकृतान्। तासा ताभ्योऽधिकमिति शेषः। उक्ष्णा वृषभाणाम् ॥ २१ ॥ उपकुर्यात् एतत्कथनेन ॥ २२ ॥ एकादशाधिकशततमोऽध्यायः ॥ १११ ॥

उशीनरो विश्वगश्वो नृगश्च
भगीरथो विश्रुतो यौवनाश्वः ।
मांधाता वै मुचुकुन्दश्च राजा
भूरिद्युम्नो नैषधः सोमकश्च ॥ २५
पुरूरवा भरतश्चक्रवर्ती
यस्यान्ववाये भरताः सर्व एव ।
तथा वीरो दाशरथिश्च रामो
ये चाप्यन्ये विश्रुताः कीर्तिमन्तः ॥ २६
तथा राजा पृथुकर्मा दिलीपो
दिवं प्राप्तो गोप्रदानैर्विधिज्ञः ।
यज्ञैर्दानैस्तपसा राजधर्मै-
र्मांधाताऽभूद्गोप्रदानैश्च युक्तः २७
तस्मात्पार्थ त्वमपीमां मयोक्तां
बार्हस्पतीं भारतीं धारयस्व
द्विजाग्र्येभ्यः संप्रयच्छस्व प्रीतो
गाः पुण्या वै प्राप्य राज्यं कुरूणाम् ॥ २८
वैशंपायन उवाच ।
तथा सर्वं कृतवान्धर्मराजो
भीष्मेणोक्तो विधिवद्गोप्रदाने ।
स मांधातुर्वेद देवोपदिष्टं
सम्यग्धर्मं धारयामास राजा ॥ २९
इति नृप सततं गवां प्रदाने
यवशकलान्सह पिबानः ।
क्षितितलशयनः शिखी यतात्मा
वृष इव राजवृषस्तदा बभूव ॥ ३०
नरपतिरभवत्सदैव ताभ्यः
प्रयतमनास्त्वभिसंस्तुवंश्च गा वै
नृपतिधुरि च गामयुक्त भूप-
स्तुरगवरैरगमच्च यत्र तत्र ॥ ३१

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि एकादशाधिकशततमोऽध्यायः ॥ १११ ॥

---

## द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥

भीष्मेण युधिष्ठिरंप्रति गोसामान्योत्पत्तिप्रकारकथनपूर्वकं कपिलोत्पत्तिप्रकारकथनम् ॥ १ ॥

वैशंपायन उवाच ।
ततो युधिष्ठिरो राजा भूयः शान्तनवं नृपम् ।
गोदानविस्तरं धीमान्पप्रच्छ विनयान्वितः ॥ १
गोप्रदानगुणान्सम्यक् पुनर्मे ब्रूहि भारत ।
न हि तृप्याम्यहं वीर शृण्वानोऽमृतमीदृशम् ॥ २
इत्युक्तो धर्मराजेन तदा शान्तनवो नृपः ।
सम्यगाह गुणांस्तस्मै गोप्रदानस्य केवलान् ॥ ३
भीष्म उवाच ।
वत्सलां गुणसंपन्नां तरुणीं वस्त्रसंयुताम् ।
दत्त्वेदृशीं गां विप्राय सर्वपापैः प्रमुच्यते ॥ ४
असुर्या नाम ते लोका गां दत्त्वा तान्न गच्छति ५
पीतोदकां जग्धतृणां नष्टक्षीरां निरिन्द्रियाम् ।
जरारोगोपसंपन्नां जीर्णां वापीमिवाजलाम् ।
दत्त्वा तमः प्रविशति द्विजं क्लेशेन योजयेत् ॥ ६
रुष्टा दुष्टा व्याधिता दुर्बला वा
नो दातव्या याश्च मूल्यैरदत्तैः ।
क्लेशैर्विप्रं योऽफलैः संयुनक्ति
तस्याऽवीर्याश्चाफलाश्चैव लोकाः ॥ ७
बलान्विताः शीलवीर्योपपन्नाः
सर्वे प्रशंसन्ति सुगन्धवत्यः ।
यथा हि गङ्गा सरितां वरिष्ठा
तथाऽर्जुनीनां कपिला वरिष्ठा ॥
युधिष्ठिर उवाच ।
कस्मात्समाने बहुलाप्रदाने
सद्भिः प्रशस्तं कपिलाप्रदानम् ।
विशेषमिच्छामि महाप्रभावं
त्वं समर्थोऽसि भवान्प्रवक्तुम् ॥

अनन्ता नाम ते लोका गा दत्त्वा यत्र गच्छतीति थ. ध. पाठः ॥ ५ ॥ पीतोदकां त्यक्ततृणामिति थ. ध. पाठः ॥ ६ ॥

भीष्म उवाच ।
वृद्धानां ब्रुवतां श्रुत्वा कपिलानामथोद्भवम् ।
वक्ष्यामि तदशेषेण रोहिण्यो निर्मिता यथा ॥१०
प्रजाः सृजेति चादिष्टः पूर्वं दक्षः स्वयंभुवा ।
नासृजद्वृत्तिमेवाग्रे प्रजानां हितकाम्यया ॥ ११
यथा ह्यमृतमाश्रित्य वर्तयन्ति दिवौकसः ।
तथा वृत्तिं समाश्रित्य वर्तयन्ति प्रजा विभो ॥१२
अचरेभ्यश्च भूतेभ्यश्चराः श्रेष्ठास्ततो नराः ।
ब्राह्मणाश्च ततः श्रेष्ठास्तेषु यज्ञाः प्रतिष्ठिताः ॥ १३
यज्ञैराप्यायते सोमः स च गोषु प्रतिष्ठितः ।
ताभ्यो देवाः प्रमोदन्ते प्रजानां वृत्तिरासु च १४
ततः प्रजासु सृष्टासु दक्षाद्यैः क्षुधिताः प्रजाः ।
प्रजापतिमुपाधावन्विनिश्चित्य चतुर्मुखम् ॥ १५
प्रजातान्येव भूतानि प्राक्रोशन्वृत्तिकाङ्क्षया ।
वृत्तिदं चान्वपद्यन्त तृषिताः पितृमातृवत् ॥ १६
इतीदं मनसा गत्वा प्रजासर्गार्थमात्मनः ।
प्रजापतिर्बलाधानममृतं प्रापिबत्तदा ।
शंसतस्तस्य तृप्तिं तु गन्धात्सुरभिरुत्थिता ॥ १७
मुखजा साऽसृजद्धातुः सुरभिर्लोकमातरम् ।
दर्शनीयरसं वृत्तिं सुरभिं मुखजां सुताम् ॥ १८
साऽसृजत्सौरभेयीस्तु सुरभिर्लोकमातृकाः ।
सुवर्णवर्णाः कपिलाः प्रजानां वृत्तिधेनवः ॥ १९
तासाममृतवर्णीनां क्षरन्तीनां समन्ततः ।
बभूवामृतजः फेनः स्रवन्तीनामिवोर्मिजः ॥ २०
स वत्समुखविभ्रष्टो भवस्य भुवि तिष्ठतः ।
शिरस्यवापतत्क्रुद्धः स तदैक्षत च प्रभुः ।
ललाटप्रभवेणाक्ष्णा रोहिणीं प्रदहन्निव ॥ २१
तत्तेजस्तु ततो रौद्रं कपिलां गां विशांपते ।
नानावर्णत्वमनयन्मेघानिव दिवाकरः ॥ २२
यास्तु तस्मादपक्रम्य सोममेवाभिसंश्रिताः ।
यथोत्पन्नाः स्ववर्णस्था न नीताश्चान्यवर्णतां २३
अथ क्रुद्धं महादेवं प्रजापतिरभाषत ।
अमृतेनावसिक्तस्त्वं नोच्छिष्टं विद्यते गवाम् २४
यथा ह्यमृतमादाय सोमो विष्यन्दते पुनः ।
तथा क्षीरं क्षरन्त्येता रोहिण्योऽमृतसंभवाः ॥२५
न दुष्यत्यनिलो नाग्निर्न सुवर्णं न चोदधिः ।
नामृतेनामृतं पीतं न वत्सैर्दुष्यते पयः ॥ २६
इमाँल्लोकान्भरिष्यन्ति हविषा प्रस्रवेण च ।
आसामैश्वर्यमिच्छन्ति सर्वेऽमृतमयं शुभम् ॥२७
वृषभं च ददौ तस्मै भगवाँल्लोकभावनः ।
प्रसादयामास मनस्तेन रुद्रस्य भारत ॥ २८
प्रीतश्चापि महादेवश्चकार वृषभं तदा ।
ध्वजं च वाहनं चैव तस्मात्स वृषभध्वजः ॥२९
ततो देवैर्महादेवस्तदा पशुपतिः कृतः ।
ईश्वरः स गवां मध्ये वृषभाङ्कः प्रकीर्तितः ॥३०
एवमव्यग्रवर्णानां कपिलानां महौजसाम् ।
प्रदाने प्रथमः कल्पः सर्वासामेव कीर्तितः ॥३१

लोकज्येष्ठा लोकवृत्तिप्रवृत्ता
रुद्रोद्भूताः सोमविष्यन्दभूताः ।
सौम्याः पुण्याः कामदाः प्राणदाश्च
गा वै दत्त्वा सर्वकामप्रदः स्यात् ॥ ३२
इदं गवां प्रभवविधानमुत्तमं
पठन्सदा शुचिरपि मङ्गलप्रियः ।
विमुच्यते कलिकलुषेण मानवः
प्रियान्सुतान्धनपशुमाप्नुयात्सदा ॥ ३३
हव्यं कव्यं तर्पणं शान्तिकर्म
यानं वासो वृद्धबालस्य तुष्टिः ।
एतान्सर्वान्गोप्रदाने गुणान्वै
दाता राजन्नाप्नुयाद्वै सदैव ॥ ३४

वैशंपायन उवाच ।
पितामहस्याथ निशम्य वाक्यं
राजा सह भ्रातृभिराजमीढः ।
सुवर्णवर्णानडुहस्तथा गाः
पार्थो ददौ ब्राह्मणसत्तमेभ्यः ॥ ३५

---

असृजद्वृत्तिमेवाग्र इति झ. पाठः ॥ ११ ॥ स्रवन्तीनां नदीना ॥ २० ॥ ता श्वेता नान्यवर्णगा इति ट. थ. ध. पाठ ॥ २३ ॥ न सुवर्णं घृतं दधीति थ. पाठः ॥ २६ ॥ सुवर्णकांस्योपदुहा-स्ततो गा इति थ. पाठ ॥ ३५ ॥ द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥

तथैव तेभ्योपि ददौ द्विजेभ्यो
गवां सहस्राणि शतानि चैव
यज्ञान्समुद्दिश्य च दक्षिणार्थे
लोकान्विजेतुं परमां च कीर्तिम् ॥ ३६

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥

---

## त्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥

भीष्मेण युधिष्ठिरंप्रति गोमहिमप्रतिपादकवसिष्ठसौदाससंवादानुवादः ॥ १ ॥

वैशंपायन उवाच
एवमुक्त्वा ततो भीष्मः पुनर्धर्मसुतं नृपम् ।
जनमेजयभूपाल उवाचेदं सहेतुकम् ॥ १
एतस्मिन्नेव काले तु वसिष्ठमृषिसत्तमम् ।
इक्ष्वाकुवंशजो राजा सौदासो वदतां वरः ॥ २
सर्वलोकचरं सिद्धं ब्रह्मकोशं सनातनम् ।
पुरोहितमभिप्रष्टुमभिवाद्योपचक्रमे ॥ ३
त्रैलोक्ये भगवन्किंस्वित्पवित्रं कथ्यतेऽनघ ।
यत्कीर्तयन्सदा मर्त्यः प्राप्नुयात्पुण्यमुत्तमम् ॥ ४
भीष्म उवाच ।
तस्मै प्रोवाच वचनं प्रणताय हितं तदा ।
गवामुपनिषद्विद्वान्नमस्कृत्य गवां शुचिः ॥ ५
गावः सुरभिगन्धिन्यस्तथा गुग्गुलुगन्धयः ।
गावः प्रतिष्ठा भूतानां गावः स्वस्त्ययनं महत् ॥६
गावो भूतं च भव्यं च गावः पुष्टिः सनातनी ।
गावो लक्ष्म्यास्तथा मूलं गोषु दत्तं न नश्यति॥७
अन्नं हि परमं गावो देवानां परमं हविः ।
स्वाहाकारवषट्कारौ गोषु नित्यं प्रतिष्ठितौ ॥ ८
गावो यज्ञस्य हि फलं गोषु यज्ञाः प्रतिष्ठिताः ।
गावो भविष्यं भूतं च गोषु यज्ञाः प्रतिष्ठिताः॥९
सायं प्रातश्च सततं होमकाले महाद्युते ।
गावो ददति वै हौम्यमृषिभ्यः पुरुषर्षभ ॥ १०
यानि कानि च दुर्गाणि दुष्कृतानि कृतानि च ।
तरन्ति चैव पाप्मानं धेनुं ये ददति प्रभो ॥ ११
एकां च दशगुर्दद्याद्दश दद्याच्च गोशती ।
शतं सहस्रगुर्दद्यात्सर्वे तुल्यफला हि ते ॥ १२
अनाहिताग्निः शतगुरयज्वा च सहस्रगुः ।
समृद्धो यश्च कीनाशो नार्घमर्हन्ति ते त्रयः ॥१३
कपिलां ये प्रयच्छन्ति सवत्सां कांस्यदोहनाम् ।
सुव्रतां वस्त्रसंवीतामुभौ लोकौ जयन्ति ते ॥ १४
युवानमिन्द्रियोपेतं शतेन सहयूथपम् ।
गवेन्द्रं ब्राह्मणेन्द्राय भूरिशृङ्गमलंकृतम् ॥ १५
वृषभं ये प्रयच्छन्ति श्रोत्रियाय परंतप ।
ऐश्वर्यं तेऽधिगच्छन्ति जायमानाः पुनःपुनः॥१६
नाकीर्तयित्वा गाः सुप्यात्तासां संस्मृत्य चोत्पतेत्
सायं प्रातर्नमस्येच्च गास्ततः पुष्टिमाप्नुयात् ॥ १७
गवां मूत्रपुरीषस्य नोद्विजेत कथंचन ।
न चासां मांसमश्नीयाद्गवां पुष्टिं तथाऽऽप्नुयात्१८
गाश्च संकीर्तयन्नित्यं नावमन्येत तास्तथा ।
अनिष्टं स्वप्नमालक्ष्य गां नरः संप्रकीर्तयेत् ॥ १९
गोमयेन सदा स्नायाद्गोकरीषे च संविशेत् ।
श्लेष्ममूत्रपुरीषाणि प्रतिघातं च वर्जयेत् ॥ २०
सार्द्रे चर्मणि भुञ्जीत निरीक्षेद्वारुणीं दिशम् ।
वाग्यतः सर्पिषा भूमौ गवां व्युष्टिं सदाऽऽश्नुते २१
घृतेन जुहुयादग्निं घृतेन स्वस्ति वाचयेत् ।
घृतं दद्याद्घृतं प्राशेद्गवां व्युष्टिं सदाऽऽश्नुते ॥२२
गोमत्या विद्यया धेनुं तिलानामभिमन्त्र्य यः ।
सर्वरत्नमयीं दद्यान्न स शोचेत्कृताकृते ॥ २३
गावो मामुपतिष्ठन्तु हेमशृङ्ग्यः पयोमुचः ।
सुरभ्यः सौरभेय्यश्च सरितः सागरं यथा ॥ २४

---

कीनाशः कर्षकः कृपणो वा । अर्घं पूजाम् ॥ १३ ॥ सौम्ये चर्मणीति ध. पाठः ॥ २१ ॥ गोमॉं अग्नेविमॉं अश्वीति मन्त्रो गोमती ॥ २३ ॥ त्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥

गा वै पश्याम्यहं नित्यं गावः पश्यन्तु मां सदा ।
गावोऽस्माकं वयं तासां यतो गावस्ततो वयम् २५
एवं रात्रौ दिवा चापि समेषु विषमेषु च ।
महाभयेषु च नरः कीर्तयन्मुच्यते भयात् ॥ २६

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि त्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥

## चतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥

भीष्मेण युधिष्ठिरंप्रति गवां चिरचीर्णतपःप्रसादिताच्चतुर्मुखाल्लोकश्रेष्ठ्यपावित्र्यादिवरलाभकथनम् ॥ १ ॥ तथा गोविशेषदानस्य फलविशेषकथनम् ॥ २ ॥

वसिष्ठ उवाच ।
शतं वर्षसहस्राणां तपस्तप्तं सुदुष्करम् ।
गोभिः पूर्वं विसृष्टाभिर्गच्छेम श्रेष्ठतामिति ॥ १
लोकेऽस्मिन्दक्षिणानां च सर्वासां वयमुत्तमाः ।
भवेम न च लिप्येम दोषेणेति परंतप ॥ २
अस्मत्पुरीषस्नानेन जनः पूयेत सर्वदा ।
शकृता च पवित्रार्थं कुर्वीरन्देवमानुषाः ॥ ३
तथा सर्वाणि भूतानि स्थावराणि चराणि च ।
प्रदातारश्च लोकान्नो गच्छेयुरिति मानद ॥ ४
ताभ्यो वरं ददौ ब्रह्मा तपसोऽन्ते स्वयं प्रभुः ।
एवं भवत्विति विभुर्लोकांस्तारयतेति च ॥ ५
उत्तस्थुः सिद्धकामास्ता भूतभव्यस्य मातरः ।
तपसोऽन्ते महाराज गावो लोकपरायणाः ॥ ६
तस्माद्गावो महाभागाः पवित्रं परमुच्यते ।
तथैव सर्वभूतानां समतिष्ठन्त मूर्धनि ॥ ७
समानवत्सां कपिलां धेनुं दत्त्वा पयस्विनीम् ।
सुव्रतां वस्त्रसंवीतां ब्रह्मलोके महीयते ॥ ८
लोहितां तुल्यवत्सां तु धेनुं दत्त्वा पयस्विनीम् ।
सुव्रतां वस्त्रसंवीतां सूर्यलोके महीयते ॥ ९
समानवत्सां शबलां धेनुं दत्त्वा पयस्विनीम् ।
सुव्रतां वस्त्रसंवीतां सोमलोके महीयते ॥ १०
समानवत्सां श्वेतां तु धेनुं दत्त्वा पयस्विनीम् ।
सुव्रतां वस्त्रसंवीतामिन्द्रलोके महीयते ॥ ११
समानवत्सां कृष्णां तु धेनुं दत्त्वा पयस्विनीम् ।
सुव्रतां वस्त्रसंवीतामग्निलोके महीयते ॥ १२
समानवत्सां धूम्रां तु धेनुं दत्त्वा पयस्विनीम् ।
सुव्रतां वस्त्रसंवीतां याम्यलोके महीयते ॥ १३
अपां फेनसवर्णां तु सवत्सां कांस्यदोहनाम् ।
प्रदाय वस्त्रसंवीतां वारुणं लोकमाप्नुते ॥ १४
वातरेणुसवर्णां तु सवत्सां कांस्यदोहनाम् ।
प्रदाय वस्त्रसंवीतां वायुलोके महीयते ॥ १५
हिरण्यवर्णां पिङ्गाक्षीं सवत्सां कांस्यदोहनाम् ।
प्रदाय वस्त्रसंवीतां कौबेरं लोकमश्नुते ॥ १६
पलालधूम्रवर्णां तु सवत्सां कांस्यदोहनाम् ।
प्रदाय वस्त्रसंवीतां पितृलोके महीयते ॥ १७
सवत्सां पीवरीं दत्त्वा दृतिकण्ठामलंकृताम् ।
वैश्वदेवमसंबाधं स्थानं श्रेष्ठं प्रपद्यते ॥ १८
समानवत्सां गौरीं तु धेनुं दत्त्वा पयस्विनीम् ।
सुव्रतां वस्त्रसंवीतां वसूनां लोकमाप्नुयात् ॥ १९
पाण्डुकम्बलवर्णाभां सवत्सां कांस्यदोहनाम् ।
प्रदाय वस्त्रसंवीतां साध्यानां लोकमाप्नुते ॥ २०
वैराटपृष्ठमुक्षाणं सर्वरत्नैरलंकृतम् ।
प्रददन्मरुतां लोकान्स राजन्प्रतिपद्यते ॥ २१
वत्सोपपन्नां नीलां गां सर्वरत्नसमन्विताम् ।
गन्धर्वाप्सरसां लोकान्दत्त्वा प्राप्नोति मानवः ॥ २२
दृतिकण्ठमनड्वाहं सर्वरत्नैरलंकृतम् ।
दत्त्वा प्रजापतेर्लोकान्विशोकः प्रतिपद्यते ॥ २३
गोप्रदानरतो याति भित्त्वा जलदसंचयान् ।
विमानेनार्कवर्णेन दिवि राजन्विराजता ॥ २४

---

गच्छामः शङ्कितामितीति क. ध. पाठः ॥ १ ॥ दृतिकण्ठां प्रलम्बगलकम्बलाम् । शितिकण्ठामलङ्कृतामिति क. थ. ध. पाठः ॥ १८ ॥ वैराटं वृद्धं पृष्ठं यस्य । वैतानस्थितमुक्षाणमिति क. ध. पाठः ॥ २१ ॥ चतुर्दशाधिकशततमोऽध्यायः ॥११४॥

तं चोरुवेषाः सुश्रोण्यः सहस्रं वारयोषितः ।
रमयन्ति नरश्रेष्ठं गोप्रदानरतं नरम् ॥ २५
वीणानां वल्लकीनां च नूपुराणां च शिञ्जितैः ।
हासैश्च हरिणाक्षीणां सुप्तः सुप्रतिबोध्यते ॥ २६
यावन्ति रोमाणि भवन्ति धेन्वा-
स्तावन्ति वर्षाणि महीयते सः ।
स्वर्गच्युतश्चापि ततो नृलोके
कुले प्रसूतो विपुले विशोकः ॥ २७

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि चतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥

## पञ्चदशाधिकशततमोऽध्यायः ॥ ११५ ॥

भीष्मेण गोदानफलप्रशंसनपूर्वकं वसिष्ठवचनाद्गोमहिमावगमेन तद्दातुः सौदासस्य पुण्यलोकप्राप्तिकथनम् ॥ १ ॥

उवाच ।
घृतक्षीरप्रदा गावो घृतयोन्यो घृतोद्भवाः ।
घृतनद्यो घृतावर्तास्ता मे सन्तु सदा गृहे ॥ १
घृतं मे हृदये नित्यं घृतं नाभ्यां प्रतिष्ठितम् ।
घृतं सर्वेषु गात्रेषु घृतं मे मनसि स्थितम् ॥ २
गावो ममाग्रतो नित्यं गावः पृष्ठत एव च ।
गावो मे सर्वतश्चैव गवां मध्ये वसाम्यहम् ॥ ३
इत्याचम्य जपेत्सायं प्रातश्च पुरुषः सदा ।
यदह्ना कुरुते पापं तस्मात्स परिमुच्यते ॥ ४
प्रासादा यत्र सौवर्णा वसोर्धाराश्च कामदाः ।
गन्धर्वाप्सरसो यत्र तत्र यान्ति सहस्रदाः ॥ ५
नवनीतपङ्काः क्षीरोदा दधिशैवलसंकुलाः ।
वहन्ति यत्र वै नद्यस्तत्र यान्ति सहस्रदाः ॥ ६
गवां शतसहस्रं तु यः प्रच्छेद्यथाविधि ।
परां वृद्धिमवाप्याथ स्वर्गलोके महीयते ॥ ७
दश चोभयतः प्रेत्य मातापित्रोः पितामहान् ।
दधाति सुकृताँल्लोकान्पुनाति च कुलं नरः ॥ ८
धेन्वाः प्रमाणेन समप्रमाणां
धेनुं तिलानामपि च प्रदाय ।
पानीयवापीः स यमस्य लोके
न यातनां कांचिदुपैति तत्र ॥ ९
पवित्रमग्र्यं जगतः प्रतिष्ठा
दिवौकसां मातरोऽथाप्रमेयाः ।
अन्वालभेद्दक्षिणतो व्रजेच्च
दद्याच्च पात्रे प्रसमीक्ष्य कालम् ॥ १०
धेनुं सवत्सां कपिलां भूरिशृङ्गीं
कांस्योपदोहां वसनोत्तरीयाम् ।
प्रदाय तां गाहति दुर्विगाह्यां
याम्यां सभां वीतभयो मनुष्यः ॥ ११
सुरूपा बहुरूपाश्च विश्वरूपाश्च मातरः ।
गावो मामुपतिष्ठन्तामिति नित्यं प्रकीर्तयेत् ॥ १२
नातः पुण्यतरं दानं नातः पुण्यतरं फलम् ।
नातो विशिष्टं लोकेषु भूतं भवितुमर्हति ॥ १३
त्वचा लोम्नाऽथ शृङ्गैर्वा वालैः क्षीरेण मेदसा ।
यज्ञं वहति संभूय किमस्त्यभ्यधिकं ततः ॥ १४
यया सर्वमिदं व्याप्तं जगत्स्थावरजङ्गमम् ।
तां धेनुं शिरसा वन्दे भूतभव्यस्य मातरम् ॥ १५
गुणवचनसमुच्चयैकदेशो
नृवर मयैष गवां प्रकीर्तितस्ते ।
न च परमिह दानमस्ति गोभ्यो
भवति न चापि परायणं ततोऽन्यत् ॥ १६
भीष्म उवाच ।
वरमिदमिति भूमिपो विचिन्त्य
प्रवरमृषेर्वचनं ततो महात्मा ।
व्यसृजत नियतात्मवान्द्विजेभ्यः
सुबहु च गोधनमाप्तवांश्च लोकान् ॥ १७

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि पञ्चदशाधिकशततमोऽध्यायः ॥ ११५ ॥

## षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥

भीष्मेण युधिष्ठिरंप्रति गवां तपःप्रसन्नाद्ब्रह्मणः शृङ्गप्राप्त्यादिकथनम् ॥ १ ॥ तथा गोदानप्राप्यपुण्यलोकवर्णनम् ॥ २ ॥

युधिष्ठिर उवाच ।
पवित्राणां पवित्रं यच्छ्रेष्ठं लोके च यद्भवेत् ।
पावनं परमं चैव तन्मे ब्रूहि पितामह ॥ १
भीष्म उवाच ।
गावो महार्थाः पुण्याश्च तारयन्ति च मानवान् ।
धारयन्ति प्रजाश्चेमा हविषा पयसा तथा ॥ २
न हि पुण्यतमं किंचिद्गोभ्यो भरतसत्तम ।
एताः पुण्याः पवित्राश्च त्रिषु लोकेषु सत्तमाः ३
देवानामुपरिष्टाच्च गावः प्रतिवसन्ति वै ।
दत्त्वा चैतास्तारयते यान्ति स्वर्गं मनीषिणः ॥४
मान्धाता यौवनाश्वश्च ययातिर्नहुषस्तथा ।
गा वै ददन्तः सततं सहस्रशतसंमिताः ॥ ५
गताः परमकं स्थानं देवैरपि सुदुर्लभम् ।
अपि चात्र पुरावृत्तं कथयिष्यामि तेऽनघ ॥ ६
ऋषीणामुत्तमं धीमान्कृष्णद्वैपायनं शुकः ।
अभिवाद्याह्निकं कृत्वा शुचिः प्रयतमानसः ॥ ७
पितरं परिपप्रच्छ दृष्टलोकपरावरम् ।
को यज्ञः सर्वयज्ञानां वरिष्ठोऽभ्युपलक्ष्यते ॥ ८
किंच कृत्वा परं स्थानं प्राप्नुवन्ति मनीषिणः ।
केन देवाः पवित्रेण स्वर्गमश्नन्ति वा विभो ॥ ९
किंच यज्ञस्य यज्ञत्वं क च यज्ञः प्रतिष्ठितः ।
दानानामुत्तमं किंच किंच सत्रमितः परम् ।
पवित्राणां पवित्रं च यत्तद्ब्रूहि महामुने ॥ १०
एतच्छ्रुत्वा तु वचनं व्यासः परमधर्मवित् ।
पुत्रायाकथयत्सर्वं तत्त्वेन भरतर्षभ ॥ ११
गावः प्रतिष्ठा भूतानां तथा गावः परायणम् ।
गावः पुण्याः पवित्राश्च गोधनं पावनं तथा॥१२
पूर्वमासन्नशृङ्गा वै गाव इत्यनुशुश्रुम ।
शृङ्गार्थे समुपासन्त ताः किल प्रभुमव्ययम्॥१३
ततो ब्रह्मा तु गाः सत्रमुपविष्टाः समीक्ष्य ह ।
ईप्सितं प्रददौ ताभ्यो गोभ्यः प्रत्येकशः प्रभुः ॥
तासां शृङ्गाण्यजायन्त यस्या यादृङ्मनोगतम् ।
नानावर्णाः शृङ्गवन्त्यस्ता व्यरोचन्त पुत्रक ॥१५
ब्रह्मणा वरदत्तास्ता हव्यकव्यप्रदाः शुभाः ।
पुण्याः पवित्राः सुभगा दिव्यसंस्थानलक्षणाः१६
गात्रस्तेजो महद्दिव्यं गवां दानं प्रशस्यते ।
ये चैताः संप्रयच्छन्ति साधवो वीतमत्सराः ॥१७
ते वै सुकृतिनः प्रोक्ताः सर्वदानप्रदाश्च ते ।
गवां लोकं तथा पुण्यमाप्नुवन्ति च तेऽनघ ॥१८
यत्र वृक्षा मधुफला दिव्यपुष्पफलोपगाः ।
पुष्पाणि च सुगन्धीनि दिव्यानि द्विजसत्तम१९
सर्वा मणिमयी भूमिः सर्वकाञ्चनवालुका ।
सर्वर्तुसुखसंस्पर्शा निष्पङ्का निरजाः शुभाः ॥२०
रक्तोत्पलवनैश्चैव मणिखण्डैर्हिरण्मयैः ।
तरुणादित्यसंकाशैर्भान्ति तत्र जलाशयाः ॥ २१
महार्हमणिपत्रैश्च काञ्चनप्रभकेसरैः ।
नीलोत्पलविमिश्रैश्च सरोभिर्बहुपङ्कजैः ॥ २२
करवीरवनैः फुल्लैः सहस्रावर्तसंवृतैः ।
संतानकवनैः फुल्लैर्वृक्षैश्च समलंकृताः ॥ २३
निर्मलाभिश्च मुक्ताभिर्मणिभिश्च महाप्रभैः ।
उद्धूतपुलिनास्तत्र जातरूपैश्च निम्नगाः ॥ २४
सर्वरत्नमयैश्चित्रैरवगाढा द्रुमोत्तमैः ।
जातरूपमयैश्चान्यैर्हुताशनसमप्रभैः ॥ २५
सौवर्णा गिरयस्तत्र मणिरत्नशिलोच्चयाः ।
सर्वरत्नमयैर्भान्ति शृङ्गैश्चारुभिरुच्छ्रितैः ॥ २६
नित्यपुष्पफलास्तत्र नगाः पत्ररथाकुलाः ।
दिव्यगन्धरसैः पुष्पैः फलैश्च भरतर्षभ ॥ २७
रमन्ते पुण्यकर्माणस्तत्र नित्यं युधिष्ठिर ।
सर्वकामसमृद्धार्था निःशोका गतमन्यवः ॥ २८
विमानेषु विचित्रेषु रमणीयेषु भारत ।

---

अशृङ्गा इत्यखुरा इत्यस्याप्युपलक्षणम् ॥ १३ ॥ गाः प्रायमुपविष्टा इति झ. पाठः ॥ १४ ॥ नगाः वृक्षाः । पत्ररथाः पक्षिणः ॥ २७ ॥

मोदन्ते पुण्यकर्माणो विहरन्तो यशस्विनः ॥२९
उपक्रीडन्ति तान्राजञ्शुभाश्चाप्सरसां गणाः
एतान्लोकानवाप्नोति गां दत्त्वा वै युधिष्ठिर॥ ३०
यासामधिपतिः पूषा मारुतो बलवान्बले ।
ऐश्वर्ये वरुणो राजा ता मां पान्तु युगन्धराः॥३१
सुरूपा बहुरूपाश्च विश्वरूपाश्च मातरः ।
प्राजापत्या इति ब्रह्मञ्जपेन्नित्यं यतव्रतः ॥ ३२
गाश्च शुश्रूषते यश्च समन्वेति च सर्वशः ।
तस्मै तुष्टाः प्रयच्छन्ति वरानपि सुदुर्लभान् ॥३३
द्रुह्येन्न मनसा वाऽपि गोषु ता हि सुखप्रदाः ।
अर्चयेत सदा चैव नमस्कारैश्च पूजयेत् ॥ ३४
दान्तः प्रीतमना नित्यं गवां व्युष्टिं तथाऽश्नुते ।
त्र्यहमुष्णं पिबेन्मूत्रं त्र्यहमुष्णं पिबेत्पयः ॥ ३५
गवामुष्णं पयः पीत्वा त्र्यहमुष्णं घृतं पिबेत् ।
त्र्यहमुष्णं घृतं पीत्वा वायुभक्षो भवेत्र्यहम् ॥ ३६
येन देवाः पवित्रेण भुञ्जते लोकमुत्तमम् ।
यत्पवित्रं पवित्राणां तद्घृतं शिरसा वहेत् ॥ ३७
घृतेन जुहुयादग्निं घृतेन स्वस्ति वाचयेत् ।
घृतं प्राशेद्घृतं दद्याद्गवां पुष्टिं तथाऽश्नुते ॥ ३८
निर्हृतैश्च यवैर्गोभिर्मासं प्रश्रितयावकः
ब्रह्महत्यासमं पापं सर्वमेतेन शुध्यते ॥ ३९
पराभवार्थं दैत्यानां देवैः शौचमिदं कृतम् ।
ते देवत्वमपि प्राप्ताः संसिद्धाश्च महाबलाः ॥ ४०
गावः पवित्राः पुण्याश्च पावनं परमं महत् ।
ताश्च दत्त्वा द्विजातिभ्यो नरः स्वर्गमुपाश्नुते ॥४१
गवां मध्ये शुचिर्भूत्वा गोमतीं मनसा जपेत् ।
पूताभिरद्भिराचम्य शुचिर्भवति निर्मलः ॥ ४२
अग्निमध्ये गवां मध्ये ब्राह्मणानां च संसदि ।
विद्यावेदव्रतस्नाता ब्राह्मणाः पुण्यकर्मिणः ॥४३
अध्यापयेरञ्शिष्यान्वै गोमतीं यज्ञसंमिताम् ।
त्रिरात्रोपोषितो भूत्वा गोमतीं लभते वरम् ॥४४
पुत्रकामश्च लभते पुत्रं धनमथापि वा ।
पतिकामा च भर्तारं सर्वकामांश्च मानवः ॥ ४५
गावस्तुष्टाः प्रयच्छन्ति सेविता वै न संशयः ।
एवमेता महाभागा यज्ञियाः सर्वकामदाः ।
रोहिण्य इति जानीहि नैताभ्यो विद्यते परम्॥४६
इत्युक्तः स महातेजाः शुकः पित्रा महात्मना
पूजयामास तां नित्यं तस्मात्त्वमपि पूजय ॥ ४७

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥

## सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥

भीष्मेण युधिष्ठिरंप्रति गोलोकस्य ब्रह्मलोकादप्युपरितनत्वे ब्रह्मणो वरदानस्य कारणत्वकथनम् ॥ १ ॥

उवाच ।
सुराणामसुराणां च भूतानां च पितामह ।
प्रभुः स्रष्टा च भगवान्मुनिभिः स्तूयते भुवि ॥ १
तस्योपरि कथं ह्येष गोलोकः स्थानतां गतः ।
संशयो मे महानेष तन्मे व्याख्यातुमर्हसि ॥ २
भीष्म उवाच ।
मनोवाग्बुद्धयस्तावदेकस्थाः कुरुसत्तम ।
ततो मे शृणु कार्त्स्न्येन गोमहाभाग्यमुत्तमम् ॥ ३
पुण्यं यशस्यमायुष्यं तथा स्वस्त्ययनं महत् ।
कीर्तिर्विहरतां लोके गवां यो गोषु भक्तिमान्॥४
श्रूयते हि पुराणेषु महर्षीणां महात्मनाम् ।
संस्थाने सर्वलोकानां देवानां चापि संभवे ॥ ५
देवतार्थेऽमृतार्थे च यज्ञार्थे चैव भारत ।
सुरभिर्नाम विख्याता रोहिणी कामरूपिणी ॥ ६
संकल्प्य मनसा पूर्वं रोहिणी ह्यमृतात्मना ।
घोरं तपः समास्थाय निर्मिता विश्वकर्मणा ॥ ७

गोमयनिर्गतैः ॥ ३९ ॥ गोमती गोमत्या ऋचा प्रकाशितमर्थं वरं लभते ॥ ४४ ॥ षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥

मनोवाग्बुद्धयः मनोवाग्बुद्धीरेकस्थाः कुरु ॥ ३

* एतदाद्येकादशाध्याया दाक्षिणात्यकोशेष्वेव दृश्यन्ते ।

पुरुषं चासृजद्भूयस्तेजसा तपसा च ह ।
देदीप्यमानं वपुषा समिद्धमिव पावकम् ॥ ८
सोऽपश्यदिष्टरूपां तां सुरभिं रोहिणीं तदा ।
दृष्ट्वैव चातिविमनाः सोऽभवत्काममोहितः ॥ ९
तं कामार्तमथो ज्ञात्वा स्वयंभूर्लोकभावनः ।
माऽऽर्तो भव तथा चैष भगवानभ्यभाषत ॥ १०
ततः स भगवांस्तत्र मार्ताण्ड इति विश्रुतः ।
चकार नाम त दृष्ट्वा तस्यातिमानवमुत्तमम् ॥ ११
सोऽददाद्भगवांस्तस्मै मार्ताण्डाय महात्मने ।
सुरूपां सुरभिं कन्यां तपस्तेजोमयीं शुभाम् ॥ १२
यथा मयैष चोद्भूतस्त्वं चैवैषा च रोहिणी ।
मैथुनं गतवन्तौ च तथा चोत्पत्स्यति प्रजा ॥ १३
प्रजा भविष्यते पुण्या पवित्रं परमं च वाम् ।
न चाप्यगम्यागमनाद्दोषं प्राप्स्यसि कर्हिचित् ॥ १४
त्वत्प्रजासंभवं क्षीरं भविष्यति परं हविः ।
यज्ञेषु चाज्यभागानां त्वत्प्रजामूलजो विधिः ॥ १५
प्रजाशुश्रूषवश्चैव ये भविष्यन्ति रोहिणि ।
तव तेनैव पुण्येन गोलोकं यान्तु मानवाः ॥ १६
इदं पवित्रं परममृषभं नाम कर्हिचित् ।
यद्वै ज्ञात्वा द्विजा लोके मोक्ष्यन्ते योनिसंकरात् ॥ १७
एतत्क्रियाः प्रवर्तन्ते मन्त्रब्राह्मणसंस्कृताः ।
देवतानां पितॄणां च हव्यकव्यपुरोगमाः ॥ १८
तव एवैन पुण्येन प्रजास्तव तु रोहिणि ।
ऊर्ध्वं ममापि लोकस्य वत्स्यन्ते निरुपद्रवाः ॥ १९
भद्रं तेभ्यश्च भद्रं ते ये प्रजासु भवन्ति वै ।
युगंधराश्च ते पुत्राः सन्तु लोकस्य धारणे ॥ २०
यान्यान्कामयसे लोकांस्ताँल्लोकाननुयास्यसि ।
सर्वदेवगणाश्चैव तव यास्यन्ति पुत्रताम् ।
तव स्तनसमुद्भूतं पिबन्तोऽमृतमुत्तमम् ॥ २१
एवमेतान्वरान्सर्वानगृह्णात्सुरभिस्तदा ।
ब्रुवतः सर्वलोकेशाच्चिर्वृतिं चागमत्पराम् ॥ २२
सृष्ट्वा प्रजाश्च विपुला लोकसंधारणाय वै ।
ब्रह्मणा समनुज्ञाता सुरभिर्लोकमाविशत् ॥ २३
एवं वरप्रदानेन स्वयंभोरेव भारत ।
उपरिष्टाद्गवां लोकः प्रोक्तस्ते सुरसत्तमादितः ॥ २४

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥

## अष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥

भीष्मेण युधिष्ठिरंप्रति विस्तरेण गवोत्पत्तिप्रकारकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
सुरभेः काः प्रजाः पूर्वं मार्ताण्डादभवन्पुरा ।
एतन्मे शंस तत्त्वेन गोषु मे प्रीयते मनः ॥ १
भीष्म उवाच ।
शृणु नामानि दिव्यानि गोमातॄणां विशेषतः ।
याभिर्व्याप्तास्त्रयो लोकाः कल्याणीभिर्जनाधिप ॥ २
सुरभ्यः प्रथमोद्भूता याश्च स्युः प्रथमाः प्रजाः ।
मयोच्यमानाः शृणु ताः प्राप्स्यसे विपुलं यशः ॥ ३
तस्या तपो घोरतपाः सुरभिर्दीप्ततेजसः ।
सुषावैकादश सुतान्रुद्रा ये च्छन्दसि स्तुताः ॥ ४
अजैकपादहिर्बुध्न्यस्त्र्यम्बकश्च महायशाः ।
वृषाकपिश्च शंभुश्च कपाली रैवतस्तथा ॥ ५
हरश्च बहुरूपश्च उग्र उग्रोऽथ वीर्यवान् ।
तस्य चैवात्मजः श्रीमान्विश्वरूपो महायशाः ॥ ६
एकादशैते कथिता रुद्रास्ते नाम नामतः ।
महात्मानो महायोगास्तेजोयुक्ता महाबलाः ॥ ७
एते वरिष्ठजन्मानो देवानां ब्रह्मवादिनाम् ।
विप्राणां प्रकृतिर्लोके एत एव हि विश्रुताः ॥ ८
एत एकादश प्रोक्ता रुद्रास्त्रिभुवनेश्वराः ।
शतं त्वेतत्समाख्यातं शतरुद्रं महात्मनाम् ॥ ९
सुषुवे प्रथमां कन्यां सुरभिः पृथिवीं तदा ।
विश्वकामदुघा धेनुर्या धारयति देहिनः ॥ १०

---

आर्तो मा भवेत्यभ्यभाषत ॥ १० ॥

सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥

सुतं गोब्राह्मणं राजन्नेकमित्यभिधीयते ।
गोब्राह्मणस्य जननी सुरभिः परिकीर्त्यते ॥ ११
सृष्ट्वा तु प्रथमं रुद्रान्वरदान्रुद्रसंभवान् ।
पश्चात्प्रसुं ग्रहपतिं सुषुवे लोकसंमतम् ॥ १२
सोमराजानममृतं यज्ञसर्वस्वमुत्तमम् ।
ओषधीनां रसानां च देवानां जीवितस्य च ॥१३
ततः श्रियं च मेधां च कीर्तिं देवीं सरस्वतीम् ।
चतस्रः सुषुवे कन्या योगेषु नियताः स्थिताः ॥१४
एताः सृष्ट्वा प्रजा एषा सुरभिः कामरूपिणी ।
सुषुवे परमं भूयो दिव्या गोमातरः शुभाः ॥१५
पुण्यां मायां मधुश्च्योतां शिवां शीघ्रां सरिद्वराम् ।
हिरण्यवर्णां सुभगां गव्यां पृश्नीं कुथावतीम् ॥ १६
अङ्गावतीं घृतवतीं दधिक्षीरपयोवतीम् ।
अमोघां सुरसां सत्यां रेवतीं मारुतीं रसाम् ॥१७
अजां च सिकतां चैव शुद्धधूमामधारिणीम् ।
जीवां प्राणवतीं धन्यां शुद्धां धेनुं धनावहाम् ॥१८
इन्द्रसमृद्धिं च शान्तिं च शान्तपापां सरिद्वराम् ।
चत्वारिंशतिमेकां च धन्यास्ता दिवि पूजिताः १९
भूयो जज्ञे सुरभ्याश्च श्रीमांश्चन्द्रांशुसप्रभः ।
वृषो दक्ष इति ख्यातः कण्ठे मणितलप्रभः ॥२०
स्रग्वी ककुद्मान्द्युतिमान्मृणालसदृशप्रभः ।
सुरभ्यनुमते दत्तो ध्वजो माहेश्वरस्तु सः ॥ २१
सुरभ्यः कामरूपिण्यो गावः पुण्यार्थमुत्कटाः ।
आदित्येभ्यो वसुभ्यश्च विश्वेभ्यश्च ददौ वरान्२२
सुरभिस्तु तपस्तप्त्वा सुषुवे गास्तवः पुनः ।
या दत्ता लोकपालानामिन्द्रादीनां युधिष्ठिर॥२३
सुष्टुतां कपिलां चैव रोहिणीं च यशस्विनीम् ।
सर्वकामदुघां चैव मरुतां कामरूपिणीम् ॥ २४
गावो मृष्टदुघा ह्येतास्ताश्चतस्रोऽत्र संस्तुताः ।
यासां भूत्वा पुरा वत्साः पिबन्त्यमृतमुत्तमम्॥२५
सुष्टुतां देवराजाय वासवाय महात्मने
कपिलां धर्मराजाय वरुणाय च रोहिणीम् ॥२६
सर्वकामदुघां राज्ञे वैश्रवणाय च
इत्येता लोकमहिता विश्रुताः सुरभेः प्रजाः॥ २७
एतासां प्रजया पूर्णा पृथिवी मुनिपुङ्गव ।
गोभ्यः प्रभवते सर्वं यत्किंचिदिह शोभनम्॥२८
सुरभ्यपत्यमित्येतन्नामतस्तेऽनुपूर्वशः ।
कीर्तितं ब्रूहि राजेन्द्र किं भूयः कथयामि ते॥'२९

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि अष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥

## एकोनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥

भीष्मेण युधिष्ठिरंप्रति इन्द्रस्य वत्सभावेन सुरभ्याः क्षीरपानादमरत्वादिलाभकथनम् ॥ १ ॥ तथा इन्द्रादिदेवानां वासार्थं सुरभेरनुमत्या तदीयमुखाद्यवयवसमाश्रयणकथनम् ॥ २ ॥

'युधिष्ठिर उवाच ।
सुरभ्यास्तु तदा देव्याः कीर्तिर्लक्ष्मीः सरस्वती ।
मेधा च प्रवरा देवी याश्चतस्रोऽभिविश्रुताः ॥ १
पृथग्गोभ्यः किमेताः स्युरुताहो गोषु संश्रिताः ।
देवाः के वाऽऽश्रिता गोषु तन्मे ब्रूहि पितामह ॥२
भीष्म उवाच ।
यं देवं संश्रिता गावस्तं देवं देवसंज्ञितम् ।
यद्यद्देवाश्रितं दैवं तत्तद्दैवं द्विजा विदुः ॥ ३
सर्वेषामेव देवानां पूर्वं किल समुद्भवे ।
अमृतार्थे सुरपतिः सुरभिं समुपस्थितः ॥ ४
इन्द्र उवाच ।
इच्छेयममृतं दत्तं त्वया देवि रसाधिकम् ।
त्वत्प्रसादाच्छिवं मह्यममरत्वं भवेदिति ॥ ५
सुरभिरुवाच ।
वत्सो भूत्वा सुरपते पिबस्व प्रस्रवं मम ।
ततोऽमरत्वमपि तत्स्थानमैन्द्रमवाप्स्यसि ॥ ६
न च ते वृत्रहन्युद्धे व्यथाऽरिभ्यो भविष्यति ।
बलार्थमात्मनः शक्र प्रस्रवं पिब मे विभो ॥ ७
भीष्म उवाच ।
ततोऽपिबत्स्तनं तस्याः सुरभ्याः सुरसत्तमः ।

अमरत्वं सुरूपत्वं बलं चापदनुत्तमम् ॥ ८
पुरंदरोऽमृतं पीत्वा प्रहृष्टः समुपस्थितः ।
पुत्रोऽहं तव भद्रं ते ब्रूहि किं करवाणि ते ॥ ९
सुरभिरुवाच ।
कृतं पुत्र त्वया सर्वमुपयाहि त्रिविष्टपम्
पालयस्व सुरान्सर्वाञ्जहि ये सुरशत्रवः ॥ १०
न च गोब्राह्मणेऽवज्ञा कार्या ते शान्तिमिच्छता ।
गोब्राह्मणस्य निश्वासः शोषयेदपि देवताः ॥ ११
गोब्राह्मणप्रियो नित्यं स्वस्तिशब्दमुदाहरन् ।
पृथिव्यामन्तरिक्षे च नाकपृष्ठे च विक्रमेत् ॥ १२
यच्च तेऽन्यद्भवेत्कृत्यं तन्मे ब्रूयाः समाहितः
तत्ते सर्वं करिष्यामि सत्येनैतद्ब्रवीमि ते ॥ १३
इन्द्र उवाच ।
इच्छेयं गोषु नियतं वस्तुं देवि ब्रवीमि ते ।
एभिः सुरगणैः सार्धं ममानुग्रहमाचर ॥ १४
सुरभिरुवाच ।
गवां शरीरं प्रत्यक्षमेतत्कौशिक लक्षये ।
यो यत्रोत्सहते वस्तुं स तत्र वसतां सुरः ॥ १५
सर्वं पवित्रं परमं गवां गात्रं सुपूजितम् ।
तथा कुरुष्व भद्रं ते यथा त्वं शक्र मन्यसे ॥ १६
भीष्म उवाच ।
तस्यास्तद्वचनं श्रुत्वा सुरभ्याः सुरसत्तमः ।
सह सर्वैः सुरगणैरभजन्सौरभीं प्रजाम् ॥ १७
शृङ्गे वक्त्रे च जिह्वायां देवराजः समाविशत ।
सर्वच्छिद्रेषु पवनः पादेषु मरुतां गणाः ॥ १८
ककुदं सर्वगा रुद्रः कुक्षौ चैव हुताशनः ।
सरस्वती स्तनेष्वस्या श्रीः पुरीषे जगत्प्रिया ॥ १९
मूत्रे कीर्तिश्च गङ्गा च मेधा पयसि शाश्वती
वक्त्रे सोमश्च वै देवो हृदये भगवान्स्वतः ॥ २०
धर्मः पुच्छे क्रिया लोम्नि भास्करश्चक्षुषी श्रितः ।
सिद्धाः सौधेषु सिद्धिश्च तपस्तेजश्च चेष्टने ॥ २१
एवं सर्वे सुरगणा नियता गात्रवर्त्मसु ।
महती देवता गावो ब्राह्मणैः परिसंस्कृताः ॥ २२
गामाश्रयन्ति महिता देवा हि प्रभविष्णवः ।
किमासां सर्वभावेन विदध्याद्भगवान्प्रियम् ॥ २३
भवांश्च परया भक्त्या पूजयस्व नरर्षभ ।
गावस्तु परमं लोके पवित्रं पावनं हविः ॥ २४
निपात्य भक्षितः स्वर्गाद्भार्गवः फेनपः किल ।
स च प्राणान्पुनर्लब्ध्वा ततो गोलोकमाश्रितः ॥

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि एकोनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥

## विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥

भीष्मेण युधिष्ठिरंप्रति फेनपोपाख्यानकथनारम्भः ॥ १ ॥ त्रिशिखरगिर्याश्रमवासिने सुमित्रनाम्ने विप्रवराय आङ्गिरसेनैकस्या गोर्दानम् ॥ २ ॥ तस्या वंशेऽसङ्ख्येयानां गवां संभवः ॥ ३ ॥ सुमित्रेण वत्समुखोद्गतक्षीरफेनपानात्फेनप इति नामाधिगमः ॥ ४ ॥

'युधिष्ठिर उवाच ।
कः फेनपेति नाम्नाऽसौ कथं वा भक्षितः पुरा ।
मृत उज्जीवितः कस्मात्कथं गोलोकमाश्रितः ॥ १
विरुद्धे मानुषे लोके तथा समयवर्त्मसु ।
ऋते दैवं हि दुष्प्रापं मानुषेषु विशेषतः ।
संशयो मे महानत्र तन्मे व्याख्यातुमर्हसि ॥ २
भीष्म उवाच ।
श्रूयते भार्गवे वंशे सुमित्रो नाम भारत ।
वेदाध्ययनसंपन्नो विपुले तपसि स्थितः ॥
वानप्रस्थाश्रमे युक्तः स्वकर्मनिरतः सदा ।
विनयाचारतत्त्वज्ञः सर्वधर्मार्थकोविदः ॥
यतात्रिषवणस्नायी संध्योपासनतत्परः ।
अग्निहोत्ररतः क्षान्तो जपञ्जुहृच्च नित्यदा ॥
पितृदेवांश्च नियतमतिथींश्च स पूजयन् ।
प्राणसंधारणार्थं च यत्किंचिदुपहारयन् ॥
गिरिस्त्रिशिखरो नाम यतः प्रभवते नदी ।

कुलजेति पुराणेषु विश्रुता रुद्रनिर्मिता ॥ ७
तस्यास्तीरे समे देशे पुष्पमालासमाकुले ।
वन्यौषधिद्रुमोपेते नानापक्षिमृगायुते ॥
व्यपेतदंशमशके ध्वाङ्क्षगृध्रैरसेविते ।
कृष्णदर्भतृणप्राये सुरम्ये ज्योतिरश्मिनि ॥
सर्वोन्नतैः समैः श्यामैर्याज्ञीयैस्तरुभिर्वृते ।
तत्राश्रमपदं पुण्यं भृगूणामभवत्पुरा
उवास तत्र नियतः सुमित्रो नाम भार्गवः ।
यथोद्दिष्टेन पूर्वेषां भृगूणां साधुवर्त्मना ॥ ११
तस्मा आङ्गिरसः कश्चिद्ददौ गां शर्करीं शुभाम् ।
वर्षासु पश्चिमे मासि पौर्णमास्यां शुचिव्रतः ॥ १२
स तां लब्ध्वा धर्मशीलश्चिन्तयामास तत्परः ।
सुमित्रः परया भक्त्या जननीमिव मातरम् ॥ १३
तेन संधुक्ष्यमाणा सा रोहिणी कामरूपिणी ।
प्रवृद्धिमगमच्छ्रेष्ठा प्राणतश्च सुदर्शना ॥ १४
सिराविमुक्तपार्श्वान्ता विपुलां कान्तिमुद्वहत् ।
श्यामपार्श्वान्तपृष्ठा सा सुरभिर्मधुपिङ्गला ॥ १५
बृहती सूक्ष्मरोमान्ता रूपोदग्रा तनुत्वचा ।
कृष्णपुच्छा श्वेतवक्त्रा समवृत्तपयोधरा ॥ १६
पृष्ठोन्नता पूर्वनता शङ्कुकर्णा सुलोचना ।
दीर्घजिह्वा ह्रस्वशृङ्गी संपूर्णदशनान्तरा ॥ १७
मांसाधिकगलान्ता सा प्रसन्ना शुभदर्शना ।
नित्यं शमयुता स्निग्धा संपूर्णोदात्तनिस्वना ॥ १८
प्राजापत्यैर्गवां नित्यं प्रशस्तैर्लक्षणैर्युता ।
यौवनस्थेव वनिता शुशुभे रूपशोभया ॥ १९
दृपेणोपगता सा तु कल्या मधुरदर्शना ।
मिथुनं जनयामास तुल्यरूपमिवात्मनः ॥ २०
संवर्धयामास स तां सवत्सां भार्गवो मुनिः ।
तयोः प्रजाधिसंसर्गात्सहस्रं च गवामभूत् ॥ २१
गवां जातिसहस्राणि संभूतानि परस्परम् ।
ऋषभाणां च राजेन्द्र नैवान्तः प्रतिदृश्यते ॥ २२
तैराश्रमपदं रम्यमरण्यं चैव सर्वशः ।
समाकुलं समभवन्मेघैरिव नभस्थलम् ॥ २३
कानि चित्पद्मवर्णानि किंशुकाभानि कानिचित् ।
रुक्मवर्णानि चान्यानि चन्द्रांशुसदृशानि च ॥ २४
तथा राजतवर्णानि कानिचिल्लोहितानि वै ।
नीललोहितताम्राणि कृष्णानि कपिलानि च ।
नानारागविचित्राणि यूथानि कुलयूथप ॥ २५
न च क्षीरं सुतस्नेहाद्वत्सानामुपजीवति ।
भार्गवः केवलं चासीद्गवां प्राणायने रतः ॥ २६
तथा शुश्रूषतस्तस्य गवां हितमवेक्षतः ।
व्यतीयात्सुमाहान्कालो वत्सोच्छिष्टेन वर्ततः ॥ २७
क्षुत्पिपासापरिश्रान्तः सततं प्रस्रवं गवाम् ।
वत्सैरुच्छिष्टमुदितं बहुक्षीरतया बहु ॥ २८
पीतवांस्तेन नामास्य फेनपेत्यभिविश्रुतम् ।
गौतमस्याभिनिष्पन्नमेवं नाम युधिष्ठिर ॥ २९

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥

## एकविंशत्यधिकशततमोऽध्यायः ॥ १२१ ॥

फेनपस्य गोभिः कदाचन गोलोकादेत्य गिरिह्रदे स्त्रीरूपधारणेन विहरमाणानां गवामवलोकनम् ॥ १ ॥ फेनपस्य गोभिः स्वेषां गोलोकप्राप्त्युपायं पृष्टाभिस्ताभिस्ताः प्रति रन्तिदेवस्य सत्रे आत्मनां पशुत्वोपकल्पनस्य तदुपायत्वोक्तिः ॥ २ ॥ फेनपस्य स्वेष्वतिवत्सलतया यागीयपशुत्वे तदभ्यनुज्ञानस्य दुःसंपादतां चिन्तयन्तीषु तासु कपिलाभिस्ताभ्यः स्वेषामेव गोषु श्रैष्ठ्यप्राप्तिरूपवराधिगमेन फेनपवधप्रतिज्ञानम् ॥ ३ ॥

भीष्म उवाच ।
कदाचित्कामरूपिण्यो गावः स्त्रीवेषमाश्रिताः ।
ह्रदे क्रीडन्ति संहृष्टा गायन्त्यः पुण्यलक्षणाः ॥ १
ददृशुस्तस्य गावो वै विस्मयोत्फुल्ललोचनाः ।
ऊचुश्च का यूयमिति स्त्रियो मानुषया गिरा ॥ २
स्त्रिय ऊचुः ।

कुलहेति पुराणेष्विति ट. ध. पाठः ॥ ७ ॥ विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥

तस्य फेनपस्य स्त्रिय. प्रति ॥ २ ॥

गाव एव वयं सर्वकर्मभिः शोभनैर्युताः ।
सर्वाः स्त्रीवेषधारिण्यो यथाकामं चरामहे ॥ ३
गाव ऊचुः ।
गवां गावः परं दैवं गवां गावः परा गतिः ।
कथयध्वमिहास्माकं केन वः सुकृतां गतिः ॥ ४
स्त्रिय ऊचुः ।
अस्माकं हावेषा देवा ब्राह्मणास्तर्पितास्तथा ।
कव्येन पितरश्चैव हव्येनाग्निश्च तर्पितः ॥ ५
प्रजया च तथाऽस्माकं कृपिरभ्युद्धृता सदा
शकटैश्चापि संयुक्ता दशवाहशतेन वै ॥
तदेतैः सुकृतैः स्फीतैर्वयं याश्चैव नः प्रजाः
गोलोकमनुसंप्राप्ता यः परं कामगोचरः ॥ ७
यूयं तु सर्वा रोहिण्यः सप्रजाः सहपुंगवाः ।
अधोगामिन्य इत्येव पश्यामो दिव्यचक्षुपा ॥ ८
गाव ऊचुः ।
एवं गवां परं दैवं गाव एव परायणम् ।
स्वपक्ष्यास्तारणीया वः शरणाय गता वयम् ॥ ९
किमस्माभिः करणीयं वर्तितव्यं कथंचन ।
प्राप्नुयाम च गोलोकं भवाम न च गर्हिताः ॥ १०
स्त्रिय ऊचुः ।
वर्तते रन्तिदेवस्य सत्रं वर्षसहस्रकम् ।
तत्र तस्य नृपस्याशु पशुत्वमुपगच्छत ॥ ११
ततस्तस्योपयोगेन पशुत्वे यज्ञसंस्कृताः ।
गोलोकान्प्राप्स्यथ शुभांस्तेन पुण्येन संयुताः ॥ १२

भीष्म उवाच ।
एतत्तासां वचः श्रुत्वा गवां संहृष्टमानसाः ।
गमनाय मनश्चक्रुरौत्सुक्यं चागमन्परम् ॥ १३
न हि नो भार्गवो दाता पशुत्वेनोपयोजनम् ।
यज्ञस्तस्य नरेन्द्रस्य वर्तते धर्मवत्तथा ॥ १४
वयं न चाननुज्ञाताः शक्ता गन्तुं कथंचन
अवोचन्नथ तत्रत्या भार्गवो वध्यतामयम् ॥ १५
एतन्मत्वा गोचयत न हि शक्यमतोऽन्यथा ।
लोकान्प्राप्तुं महास्माभिर्भानश्वयः क्रियतामयम् १६
न तु तासां ममेतानां काचिद्घोरेण चक्षुपा ।
शक्नोति भार्गवं द्रष्टुं मन्कृतेनोपसंयुना ॥ १७
अथ पद्मसवर्णाभा भास्करांशुसमप्रभाः ।
जपालोहितताम्राक्ष्यो निर्मामकठिनाननाः ॥ १८
रोहिण्यः कपिलाः प्राहुः सर्वासां वै समक्षतः ।
मेघस्तनितनिर्घोषास्तेजोभिरभिरञ्जिताः ॥ १९
वय इह त बाधिष्यामः सुमत्र नात्र संशयः ।
सुकृतं पृष्ठतः कृत्वा किं नः श्रेयो विधास्यथ ॥ २०
गाव ऊचुः ।
कपिलाः सर्ववर्णेषु प्रधानत्वमवाप्स्यथ ।
गवां शतफला चैकां दत्त्वा फलमवाप्स्यति ॥ २१
भीष्म उवाच ।
एतद्गवां वचः श्रुत्वा कपिला हृष्टमानसाः ।
चक्रुः सर्वा भार्गवस्य सुमित्रस्य वधे मतिम् ॥ २२

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि एकविंशत्यधिकशततमोऽध्यायः ॥ १२१ ॥

## द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥

फेनपस्य गोभक्त्युद्रेकसंतुष्टाभिर्गोलोकादागतगोमातृभिः योगप्रभावेण शरीराद्वियोजनेन स्वलोकप्रापणपूर्वकं तस्मिन्कपिलानिश्चयनिवेदनम् ॥ १ ॥ ततः कपिलाभिर्यथाप्रतिज्ञं शृङ्गाघातादिना फेनपस्य कुणपशरीरविभेदनम् ॥ २ ॥

'भीष्म उवाच ।
यास्तु गोमातरस्तस्य कामचारिण्य आगताः ।
समीपं हि सुमित्रस्य कृतज्ञाः समुपस्थिताः ॥ १
अभिप्रशस्य चैवाहुस्तमृषिं पुण्यदर्शनाः ।
गोलोकादागता वेद वृषगोमातरो वयम् ॥ २
सुप्रीताः स वरं गृह्ण यमिच्छसि महामुने ।

सुकृता ॥ ४ ॥ शक्ताश्चापि तथा युक्ता इति थ. ध. पाठः ॥ ६ ॥ एकविंशत्यधिकशततमोऽध्यायः॥१२१॥

वेद विद्धि । ऋषे गोमातरो वयमिति थ. पाठः ॥ २ ॥

यद्वि गोषु परां बुद्धिं कृतवानसि नित्यदा ॥ ३
सुमित्र उवाच ।
प्रीतोस्म्यनुगृहीतोस्मि यन्मां गोमातरः शुभाः ।
सुप्रीतमनसः सर्वास्तिष्ठन्ते च वरप्रदाः ॥ ४
भवेद्गोष्वेव मे भक्तिर्यथैवाद्य तथा सदा ।
गोघ्नाश्चैवावसीदन्तु नरा ब्रह्मद्विषश्च ये ॥ ५
गोमातर ऊचुः ।
एवमेतदृषिश्रेष्ठ हितं वदसि नः प्रियम् ।
एहि गच्छ सहाऽस्माभिर्गोलोकमृषिसत्तम ॥ ६
सुमित्र उवाच ।
यूयमिष्टां गतिं यान्तु न ह्यहं गन्तुमुत्सहे ।
इमा गावः समुत्सृज्य तपस्विन्यो मम प्रियाः॥७
भीष्म उवाच ।
तास्तु तस्य वचः श्रुत्वा कपिलानां सुदारुणम्
निन्युस्तमृषिमुत्क्षिप्य भार्गवं नभ उद्वहन् ॥ ८
कलेवरं तु तत्रैव तस्य संन्यस्य मातरः ।
निष्कृष्य करणं योगादानयन्भार्गवस्य वै ॥ ९
सर्वं चास्य तदाचख्युः कपिलानां विचेष्टितम् ।
यदर्थं हरणं गोभिर्गोलोकं लोकमातरः ॥ १०
ततस्तु कपिलास्तत्र तस्य दृष्ट्वा कलेवरम् ।
तथाप्रतिज्ञं शृङ्गैश्च खुरैश्चाप्यवचूर्णयन् ॥ ११
ततः संछिद्य बहुधा भार्गवं नृपसत्तम ।
युयुर्यत्रेतरा गावस्तच्च सर्वं न्यवेदयन् ॥ १२
अथ गोमातृभिः शप्तास्ता गावः पृथिवीचराः ।
अमेध्यवदनाः क्षिप्रं भवध्वं ब्रह्मघातकाः ॥ १३
एवं कृतज्ञा गावो हि यथा गोमातरो नृप ।
ऋषिश्च प्राप्तवाँल्लोकं गावश्च परिमोक्षिताः ॥ १४

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥

## त्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३ ॥

फेनपस्य गोभी रन्तिदेवं प्रति तत्सत्रे स्वेषां पशुत्वेन विनियोगप्रार्थना ॥ १ ॥ तेन गवां मध्ये कस्याश्चिदपि सकामत्वज्ञाने सत्रविरामरूपसमयकरणेन सत्रारम्भः ॥ २ ॥ कदाजन कस्याश्चिद्गोर्वत्सस्नेहाद्विशसने दुःखावगमेन यागोपरमः ॥३ ॥

भीष्म उवाच ।
ता गावो रन्तिदेवस्य गत्वा यज्ञं मनीषिणः ।
आत्मानं ज्ञापयामासुर्महर्षीणां समक्षतः ॥ १
रन्तिदेवस्ततो राजा प्रयतः प्राञ्जलिः शुचिः ।
उवाच गावः प्रणतः किमागमनमित्यपि ॥ २
गाव ऊचुः ।
इच्छामस्तव राजेन्द्र सत्रेऽस्मिन्विनियोजनम् ।
पशुत्वमुपसंप्राप्तुं प्रसादं कर्तुमर्हसि ॥ ३
रन्तिदेव उवाच ।
नास्मि शक्तो गवां घातं कर्तुं शतसहस्रशः ।
घातयित्वा त्वहं युष्मान्कथमात्मानमुत्तरे ॥ ४
यः पशुत्वेन संयोज्य युष्मान्स्वर्गं नयेदिह ।
आत्मानं चैव तपसा गावः समुपगम्यताम् ॥ ५
गाव ऊचुः ।
अस्माकं तारणे युक्तो धर्मात्मा तपसि स्थितः ।
श्रुतोऽस्माभिर्भवान्राजंस्ततस्तु स्वयमागताः ॥ ६
रन्तिदेव उवाच ।
मम सत्रे पशुत्वं वो यद्येवं हि मनीषितम् ।
समयेनाहमेतेन जुहुयां वो हुताशने ॥ ७
कदाचिद्यदि वः काचिदकामा विनियुज्यते ।
तदा समाप्तिः सत्रस्य गवां स्यादिति नैष्ठिकी ॥८
गाव ऊचुः ।
एवमस्तु महाराज यथा त्वं प्रब्रवीषि नः ।
अकामाः स्युर्यदा गावस्तदा सत्रं समाप्यताम् ॥ ९
भीष्म उवाच ।
ततः प्रवृत्ते गोसत्रे रन्तिदेवस्य धीमतः ।

कपिलाना सुदारुण सुमित्रवधप्रतिज्ञान च श्रुत्वा ॥ ८ ॥
द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥

कदाचित् कदापि । काचित् कापि ॥ ८ ॥

गोसहस्राण्यहरहर्नियुज्यन्ते शमीतृभिः ॥ १०
एवं बहूनि वर्षाणि व्यतीतानि नराधिप ।
गवां वै वध्यमानानां न चान्तः प्रत्यदृश्यत ११
गवां चर्मसहस्रैस्तु राशयः पर्वतोपमाः ।
बभूवुः कुरुशार्दूल बहुधा मेघसंनिभाः ॥ १२
मेदःक्लेदवहा चैव प्रावर्तत महानदी ।
अद्यापि भुवि विख्याता नदी चर्मण्वती शुभा १३
ततः कदाचित्स्वं वत्सं गौरुपामन्त्र्य दुःखिता ।
एहि वत्स स्तनं पाहि मा त्वं पश्चात्क्षुधार्दितः १४
तप्स्यसे विमना दुःखं घातितायां मयि ध्रुवम् ।
एते ह्यायान्ति चण्डालाः सशस्त्रा मां जिघांसवः।
अथ शुश्राव तां वाणीं मानुषीं समुदाहृताम् ।
रन्तिदेवो महाराज ततस्तां समवारयत् ॥ १६
स्थापयामास गोसत्रमथ तं पार्थिवर्षभ
मत्रोत्सृष्टाः परित्यक्ता गावोऽन्याः समुपाश्रिताः॥
यास्तस्य राज्ञो निहता गावो यज्ञे महात्मनः ।
ता गोलोकमुपाजग्मुः प्रेक्षिता ब्रह्मवादिभिः॥१८
रन्तिदेवोपि राजर्षिरिष्ट्वा यज्ञं यथाविधि
ततः सख्यं सुरपतेस्त्रिदिवं चाक्षयं ययौ ॥ १९
फेनपो दिवि गोलोके मुमुदे शाश्वतीः समाः।
अवशिष्टाश्च या गावस्ता बभूवुर्वनेचराः ॥ २०
फेनपाख्यानमेतत्ते गवां माहात्म्यमेव च ।
कथितं पावनं पुण्यं कृष्णद्वैपायनेरितम् ॥ २१
नारायणोऽपि भगवान्दृष्ट्वा गोषु परं यशः ।
शुश्रूषां परमां चक्रे भक्तिं च भरतर्षभ ॥ २२
तस्मात्त्वमपि राजेन्द्र गा वै पूजय भारत
द्विजेभ्यश्चैव सततं प्रयच्छ कुरुसत्तम ॥ २३

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि त्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३ ॥

## चतुर्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥

भीष्मेण युधिष्ठिरंप्रति गोमाहात्म्यप्रतिपादकव्यासशुकसंवादानुवादः ॥ १ ॥

युधिष्ठिर उवाच ।
पवित्राणां पवित्रं यच्छ्रेष्ठं लोकेषु पूजितम् ।
महाव्रतं महाभाग तन्मे ब्रूहि पितामह ॥ १
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
पितुः पुत्रस्य संवादं व्यासस्य च शुकस्य च ॥ २
ऋषीणामुत्तमं कृष्णं भावितात्मानमच्युतम् ।
पारम्पर्यविशेषज्ञं सर्वशास्त्रार्थकोविदम् ॥ ३
कृतशौचः शुकस्तत्र कृतजप्यः कृताह्निकः ।
परं नियममास्थाय परं धर्ममुपाश्रितः ॥ ४
प्रणम्य शिरसा व्यासं सूक्ष्मतत्वार्थदर्शिनम् ।
शुकः पप्रच्छ वै प्रश्नं दानधर्मकुतूहलः ॥ ५
बहुचित्राणि दानानि बहुशः शंससे मुने ।
महार्थं पावनं पुण्यं किंस्विद्दानं महाफलम् ॥ ६
केन दुर्गाणि तरति केन लोकानवाप्नुते ।
केन वा महदाप्नोति इह लोके परत्र च ॥ ७
के वा यज्ञस्य वोढारः केषु यज्ञः प्रतिष्ठितः ।
किंच यज्ञस्य यज्ञत्वं किंच यज्ञस्य भेषजम् ।
यज्ञानामुत्तमं किंच तद्भवान्प्रब्रवीतु मे ॥ ८
स तस्मै भजमानाय जातकौतूहलाय च ।
व्यासो व्रतनिधिः प्राह गवामिदमनुत्तमम् ॥ ९
धन्यं यशस्यमायुष्यं लोके श्रुतिसुखावहम् ।
यत्पवित्रं पवित्राणां मङ्गलानां च मङ्गलम् ॥ १०
सर्वपापप्रशमनं तत्समासेन मे शृणु ।
यदिदं तिष्ठते लोके जगत्स्थावरजङ्गमम् ।
गावस्तत्प्राप्य तिष्ठन्ति गोलोके पुण्यदर्शनाः ११
मातरः सर्वभूतानां विश्वस्य जगतश्च ह ।
रुद्राणामिह साध्यानां गाव एव तु मातरः॥१२

शमीतृभिः शमितृभिः । दीर्घ आर्षः ॥ १० ॥ त्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३ ॥

देवव्रत महाभागेति क. पाठः ॥ १ ॥

रुद्राणां मातरो ह्येता ह्यादित्यानां स्वसा स्मृताः।
वसूनां च दुहितरस्ता ब्रह्मसंतानमूलजाः ॥ १३
यासामधिपतिः पूषा मरुतो बालबन्धनाः।
ऐश्वर्यं वरुणो राजा विश्वेदेवाः समाश्रिताः ॥१४
य एवं वेद ता गावो मातरो देवपूजिताः।
स विप्रो ब्रह्मलोकाय गवां लोकाय वा ध्रुवः १५
गावस्तु नावमन्येत कर्मणा मनसा गिरा।
गवां स्थानं परं लोके प्रार्थयेद्यः परां गतिम् १६
न पद्भ्यां ताडयेद्गा वै न दण्डेन न मुष्टिना।
इमां विद्यामुपाश्रित्य पावनीं ब्रह्मनिर्मिताम् १७
मातॄणामन्ववाये च न गोमध्ये न गोव्रजे।
नरो मूत्रपुरीषस्य दृष्ट्वा कुर्याद्विसर्जनम् ॥ १८
शुद्धाश्चन्दनशीताङ्ग्यश्चन्द्ररश्मिसमप्रभाः।
सौम्याः सुरभ्यः सुभगा गावो गुग्गुलुगन्धयः १९
सर्वे देवाऽविशन्गा वै समुद्रमिव सिन्धवः।
दिवं चैवान्तरिक्षं च गवां व्युष्टिं समश्नुते ॥२०
दधिना जुहुयादग्निं दधिना स्वस्ति वाचयेत्।
दधि दद्याच्च प्राश्नेत गवां व्युष्टिं समश्नुते ॥२१
घृतेन जुहुयादग्निं घृतेन स्वस्ति वाचयेत्।
घृतमालभ्य प्राश्नीयाद्गवां व्युष्टिं समश्नुते ॥२२
गावः संजीवना यास्तु गावो दानमनुत्तमम्।
ताः पुण्यगोधाः सुफला भजमानं भजन्तु माम् २३
येन देवाः पवित्रेण स्वर्गलोकमितो गताः।
तत्पवित्रं पवित्राणां मम मूर्ध्नि प्रतिष्ठितम् ॥२४
वीणामृदङ्गपणवा गवां गात्रे प्रतिष्ठिताः।
क्रीडारतिविहारार्थे त्रिषु लोकेषु वर्तते ॥ २५
न तत्र देवा वर्तन्ते नाग्निहोत्राणि जुह्वति।
न यज्ञैरिज्यते चात्र यत्र गौर्वै न दृश्यते ॥ २६
ं दधि घृतं यासां रसानामुत्तमो रसः।
अमृतप्रभवा गावस्त्रैलोक्यं येन जीवति ॥ २७
इमामाहूय धनु च सवत्सा यज्ञमातरम्।
उपाह्वयन्ति यां विप्रा गावो यज्ञहविष्कृतम् ॥२८

या मेध्या प्रथमं कर्म इयं धेनुः सरस्वती।
पौर्णमासेन वत्सेन कामं कामगुणान्विता ॥२९
यत्र सर्वमिदं प्रोतं यत्किंचिज्जङ्गमं जगत्।
सा गौर्वै प्रथमा पुण्या सर्वभूतहिते रता ॥ ३०
धारणाः पावनाः पुण्या भावना भूतभावनाः।
गावो मामभिरक्षन्तु इह लोके परत्र च ॥ ३१
एष यज्ञः सहोपाङ्ग एष यज्ञः सनातनः।
वेदाः सहोपनिषदो गवां रूपाः प्रतिष्ठिताः ॥३२
एतत्तात मया प्रोक्तं गवामिह परं मतम्।
सर्वतः श्रावयेन्नित्यं प्रयतो ब्रह्मसंसदि ॥ ३३
श्रुत्वा लभेत ताँल्लोकान्ये मया परिकीर्तिताः।
श्रावयित्वाऽपि प्रीतात्मा लोकांस्तान्प्रतिपद्यते ३४
धेनुमेकां समादद्यादहन्यहनि पावनीम्।
तत्तथा प्राप्नुयाद्विप्रः पठन्वै गोमतीं सदा ॥ ३५
अथ धेनुर्न विद्येत तिलधेनुमनुत्तमाम्।
दद्याद्गोमतिकल्पेन तां धेनुं सर्वपावनीम् ॥ ३६
आह्निकं गोमतीं नित्यं यः पठेत सदा नरः।
सर्वपापात्प्रमुच्येत प्रयतात्मा य आचरेत् ॥ ३७
घृतं वा नित्यमालभ्य प्राश्य वा गोमतीं जपेत्।
स्नात्वा वा गोकरीषेण पठन्पापात्प्रमुच्यते ॥ ३८
मनसा गोमतीं जप्येद्गोमत्या नित्यमाह्निकम्।
न त्वेव दिवसं कुर्याद्व्यर्थं गोमत्यपाठकः ॥ ३९
गोमतीं जपमाना हि देवा देवत्वमाप्नुवन्
ऋषित्वमृषयश्चापि गोमत्या सर्वमाप्नुवन् ॥ ४०
बद्धो बन्धात्प्रमुच्येत कृच्छ्रान्मुच्येत संकटात्।
गोमतीं सेवते यस्तु लभते प्रियसंगमम् ॥ ४१
एतत्पवित्रं कार्त्स्न्येन एतद्व्रतमनुत्तमम्।
एतत्तु पृथिवीपाल पावनं शृण्वतां सदा ॥ ४२
पुत्रकामाश्च ये केचिद्धनकामाश्च मानवाः।
अध्वाने चोरवैरिभ्यो मुच्यते गोमतीं पठन् ॥४३
पूर्ववैरानुबन्धेषु रणे चाप्याततायिनः।
लभेत जयमेवाशु सदा गोमतिपाठकः ॥ ४४

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि चतुर्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥

---

मातॄणामनुपाते चेति थ. पाठः ॥१८॥ यत्र गौर्वै न दुह्यते इति थ. पाठः ॥ २६ ॥ चतुर्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥

## पञ्चविंशत्यधिकशततमोऽध्यायः ॥ १२५ ॥

व्यासेन शुकंप्रति ब्राह्मणेतरवर्णानां कपिलाक्षीरोपजीवनार्हत्वादिकथनम् ॥ १ ॥

'शुक उवाच ।
क्षत्रियाश्चैव शूद्राश्च मन्त्रहीनाश्च ये द्विजाः ।
कपिलामुपजीवन्ति कथमेतत्पितर्भवेत् ॥ १
श्रीव्यास उवाच ।
क्षत्रियाश्चैव शूद्राश्च मन्त्रहीनाश्च ये द्विजाः ।
कपिलामुपजीवन्ति तेषां वक्ष्यामि निर्णयम् ॥ २
कपिलास्तूत्तमा लोके गोषु चैवोत्तमा मताः ।
तासां दाता लभेत्स्वर्गं विधिना यश्च सेवते ॥ ३
स्पृशेत कपिलां यस्तु दण्डेन चरणेन वा ।
स तेन स्पर्शमात्रेण नरकायोपपद्यते ॥ ४
मन्त्रेण युञ्ज्यात्कपिलां मन्त्रेणैव प्रमुञ्चते ।
मन्त्रहीनं तु यो युञ्ज्यात्क्रमियोनौ प्रसूयते ॥ ५
प्रहाराहतमर्माङ्गा दुःखेन च जडीकृता ।
पदानि यावद्गच्छेत तावल्लोकान्क्रमिर्भवेत् ॥ ६
यावन्तो बिन्दवस्तस्याः शोणितस्य क्षितिं गताः ।
तावद्वर्षसहस्राणि नरकं प्रतिपद्यते ॥ ७
मन्त्रेण युञ्ज्यात्कपिलां मन्त्रेण विनियोजयेत् ।
मन्त्रहीनैरनुयुतो मज्जयेत्तमसि प्रभो ॥ ८
कपिलां येऽपि जीवन्ति बुद्धिमोहान्विता नराः ।
तेऽपि वर्षसहस्राणि पतन्ति नरके नृप ॥ ९
अथ न्यायेन ये विप्राः कपिलामुपयुञ्जते ।
तस्मिँल्लोके प्रमोदन्ते लोकाश्चैषामनामयाः ॥ १०
विधिना ये न कुर्वन्ति शूद्रास्तानुपधारय ॥' ११

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि पञ्चविंशत्यधिकशततमोऽध्यायः ॥ १२५ ॥

## षड्विंशत्यधिकशततमोऽध्यायः ॥ १२६ ॥

व्यासेन शुकंप्रति कपिलानां गवां स्वाङ्गप्रवेशनेन देवेभ्यः प्रच्छन्नमात्मनोगोपनात्परितुष्टस्याग्नेर्वरात्सर्वश्रैष्ठ्यप्राप्तिकथनम् ॥ १

'शुक उवाच ।
नानावर्णैरुपेतानां गवां किं मुनिसत्तम ।
कपिलाः सर्ववर्णेषु वरिष्ठत्वमवाप्नुवन् ॥ १
व्यास उवाच ।
शृणु पुत्र यथा गोषु वरिष्ठाः कपिलाः स्मृताः ।
कपिलत्वं च संप्राप्ताः पूज्याश्च सततं नृषु ॥ २
अग्निः पुरापचक्राम देवेभ्य इति नः श्रुतम्
देवेभ्यो मां छादयत शरण्याः शरणं गतम् ॥ ३
ऊचुस्ताः सहितास्तत्र स्वागतं तव पावक ।
इह गुप्तस्त्वमस्माभिर्न देवैरुपलप्स्यसे ॥
अथ देवा विवित्सन्तः पावकं परिचक्रमुः ।
गोषु गुप्तं च विज्ञाय ताः क्षिप्रमुपतस्थिरे ॥
युष्मासु निवसत्यग्निरिति गाः समचूचुदन् ।
प्रकाश्यतां हुतवहो लोकान्न च्छेत्तुमर्हथ ॥ ६
एवमस्त्वित्यनुज्ञाय पावकं समदर्शयन् ॥ ७
अधिगम्य पावकं तुष्टास्ते देवाः सद्य एव तु ।
अग्निं प्रचोदयामासुः क्रियतां गोष्वनुग्रहः ॥ ८
गवां तु यासां गात्रेषु पावकः समवस्थितः ।
कपिलत्वमनुप्राप्ताः सर्वश्रेष्ठत्वमेव च ॥ ९
महाफलत्वं लोके च ददौ तासां हुताशनः
तस्माद्धि सर्ववर्णानां कपिलां गां प्रदापय ।
श्रोत्रियाय प्रशान्ताय प्रयतायाग्निहोत्रिणे ॥ १०
यावन्ति रोमाणि भवन्ति धेन्वा
युगानि तावन्ति पुनाति दातॄन् ।
प्रतिग्रहीतॄंश्च पुनाति दत्ता
शिष्टे तु गौर्वै प्रतिपादनेन ॥ ११

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि षड्विंशत्यधिकशततमोऽध्यायः ॥ १२६ ॥

## सप्तविंशत्यधिकशततमोऽध्यायः ॥ १२७ ॥

व्यासेन शुकंप्रति कपिलालक्षणविभागादिकथनम् ॥ १ ॥

शुक उवाच ।
केन वर्णविभागेन विज्ञेया कपिला भवेत् ।
कति वा लक्षणान्यस्या दृष्टानि मुनिभिः पुरा ॥ १
श्रीव्यास उवाच ।
शृणु तात यथा गोषु विज्ञेया कपिला भवेत् ।
नेत्रयोः शृङ्गयोश्चैव खुरेषु वृषणेषु च ।
कर्णतो घ्राणतश्चापि षड्विधाः कपिलाः स्मृताः २
एतेषां लक्षणानां तु यद्येकमपि दृश्यते ।
कपिलां तां विजानीयादेवमाहुर्मनीषिणः ॥ ३.
आग्नेयी नेत्रकपिला खुरैर्माहेश्वरी भवेत् ।
ग्रीवायां वैष्णवी ज्ञेया पूष्णो घ्राणादजायत ॥ ४
कर्णतस्तु वसन्तेन स्वयोनिमभिजायते ।
गायत्र्याश्च वृषणयोरुत्पत्तिः षङ्गुणा स्मृता ॥ ५
एवं गावश्च विप्राश्च गायत्री सत्यमेव च ।
वसन्तिश्च सुवर्णश्च एकतः समजायत ॥ ६
नेत्रयोः कपिलां यस्तु वाहयेत दुहेत वा ।
स पापकर्मा नरकं प्रतिष्ठां प्रतिपद्यते ॥ ७
नरकाद्विप्रमुक्तस्तु तिर्यग्योनिं निषेवते ।
यदा लभेत मानुष्यं जात्यन्धो जायते नरः ॥ ८
शृङ्गयोः कपिलां यस्तु वाहयेत दुहेत वा ।
तिर्यग्योनिं स लभते जायमानः पुनः पुनः ॥ ९
खुरेषु कपिलां यस्तु वाहयेत दुहेत वा ।
तमस्यपारे मज्जेत धनहीनो नराधमः ॥ १०
कपिलां वालधानेषु वाहयेत दुहेत वा ।
निराश्रयः सदा चैव जायते यदि चेत्कृमिः ॥ ११
कर्णेन कपिलां यस्तु जानन्नप्युपजीवति ।
सहस्रशः शुचिर्भूत्वा मानुष्यं प्राप्नुयादथ ।
चण्डालः पापयोनिश्च जायते स नराधमः ॥ १२
घ्राणेन कपिलां यस्तु प्रमादादुपजीवति ।
सोऽपि वर्षसहस्राणि तिर्यग्योनौ प्रजायते ॥ १३
व्याधिग्रस्तो जडो रोगी भवेन्मानुष्यमागतः ॥ १४
मधुसर्पिस्सुगन्धास्तु कपिलाः शास्त्रतः स्मृताः ।
एताः समुपजीवेत सोऽपि तिर्यक्षु जायते ॥ १५
स्थावरत्वमनुप्राप्तो यदि मानुष्यतां लभेत् ।
अल्पायुः स भवेज्जातो हीनवर्णकुलोद्भवः ॥ १६
ये तु पापा ह्यसूयन्ते कपिलां वाहयन्ति च ।
निरयेषु प्रतिष्ठन्ते यावदाभूतसंप्लवम् ॥ १७

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि सप्तविंशत्यधिकशततमोऽध्यायः ॥ १२७ ॥

## अष्टाविंशत्यधिकशततमोऽध्यायः ॥ १२८ ॥

भीष्मेण युधिष्ठिरंप्रति श्रियो बलात्कारेण स्वप्रार्थनया गोमूत्रपुरीषयोर्निवासस्य कथनम् ॥ १

युधिष्ठिर उवाच ।
मया गवां पुरीषं वै श्रिया जुष्टमिति श्रुतम् ।
एतदिच्छाम्यहं श्रोतुं संशयोऽत्र हि मे महान् ॥ १
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
गोभिर्नृपेह संवादं श्रिया भारतसत्तम ॥ २
श्रीः कृत्वेह वपुः कान्तं गोमध्येषु विवेश ह ।
गावोऽथ विस्मितास्तस्या दृष्ट्वा रूपस्य संपदम् ॥ ३
गाव ऊचुः ।
काऽसि देवि कुतो वा त्वं रूपेणाप्रतिमा भुवि ।
विस्मिताः स्म महाभागे तव रूपस्य संपदा ॥ ४
इच्छामस्त्वां वयं ज्ञातुं का त्वं क्व च गमिष्यसि ।

वह्येत दमेत वेति थ. पाठ. ॥ ७ ॥ सप्तविंशत्यधिकशततमोऽध्यायः ॥ १२७ ॥

विस्मिता अभवन्निति शेषः ॥ ३ ॥

तत्त्वेन हि सुवर्णाभे सर्वमेतद्ब्रवीहि नः ॥ ५
श्रीरुवाच ।
लोकस्य कान्तिर्भद्रं वः श्रीर्नामाहं परिश्रुता ।
मया दैत्याः परित्यक्ता विनष्टाः शाश्वतीः समाः ६
मयाऽभिपन्ना देवाश्च मोदन्ते शाश्वतीः समाः ।
इन्द्रो विवस्वान्सोमश्च विष्णुरापोऽग्निरेव च ॥ ७
मयाऽभिपन्ना दीप्यन्ते ऋषयो देवतास्तथा ।
यान्नाविशाम्यहं गावस्ते विनश्यन्ति सर्वशः ॥ ८
धर्मश्चार्थश्च कामश्च मया जुष्टाः सुखान्विताः ।
एवंप्रभावां मां गावो विजानीत सुखप्रदाम् ॥ ९
इच्छामि चापि युष्मासु वस्तुं सर्वासु नित्यदा ।
आगत्य प्रार्थये युष्मान्श्रीजुष्टा भवताऽनघाः ॥ १०
गाव ऊचुः ।
अध्रुवा चपला च त्वं सामान्या बहुभिः सह ।
न त्वामिच्छाम भद्रं ते गम्यतां यत्र रोचते ॥ ११
वपुष्मन्त्यो वयं सर्वाः किमस्माकं त्वयाऽद्य वै ।
यथेष्टं गम्यतां तत्र कृतकार्या वयं त्वया ॥ १२
श्रीरुवाच ।
किमेतद्वः क्षमं गावो यन्मां नेहाभिनन्दथ
न मां संप्रतिगृह्णीध्वं कस्माद्वै दुर्लभां सतीम् ॥ १३
सत्यश्च लोकवादोऽयं लोके चरति सुव्रताः ।
स्वयं प्राप्ते परिभवो भवतीति विनिश्चयः ॥ १४
महदुग्रं तपः कृत्वा मां निषेवन्ति मानवाः ।
देवदानवगन्धर्वाः पिशाचोरगराक्षसाः ॥ १५
क्षममेतद्धि वो गावः प्रतिगृह्णीत मामिह ।
नावमन्या ह्यहं सौम्यास्त्रैलोक्ये सचराचरे ॥ १६
गाव ऊचुः ।
नावमन्यामहे देवि न त्वां परिभवामहे ।
अध्रुवा चलचित्तासि ततस्त्वां वर्जयामहे ॥ १७
बहुना च किमुक्तेन गम्यतां यत्र वाञ्छसि ।
वपुष्मन्त्यो वयं सर्वाः किमस्माकं त्वयाऽनघे १८
श्रीरुवाच ।
अवज्ञाता भविष्यामि सर्वलोकेषु मानदाः ।
प्रत्याख्यातेति युष्माभिः प्रसादः क्रियतां मम १९
महाभागा भवत्यो वै शरण्याः शरणागताम् ।
परित्रायन्तु मां नित्यं भजमानामनिन्दिताम् २०
माननामहमिच्छामि भवत्यः सततं शिवाः ।
अप्येकाङ्गेष्वधो वस्तुमिच्छामि च सुकुत्सिते २१
न वोऽस्ति कुत्सितं किंचिदङ्गेष्वालक्ष्यतेऽनघाः ।
पुण्याः पवित्राः सुभगा अवाग्देशं प्रयच्छथ ।
वसेयं यत्र वो देहे तन्मे व्याख्यातुमर्हथ ॥ २२
एवमुक्तास्तु ता गावः शुभाः करुणवत्सलाः ।
संमान्य सहिताः सर्वाः श्रियमूचुर्नराधिप ॥ २३
अवश्यं मानना कार्या तवास्माभिर्यशस्विनि ।
शकृन्मूत्रे निवसतां पुण्यमेतद्धि नः शुभे ॥ २४
श्रीरुवाच ।
दिष्ट्या प्रसादो युष्माभिः कृतो मेऽनुग्रहात्मकः ।
एवं भवतु भद्रं वः पूजिताऽस्मि सुखप्रदाः ॥ २५
भीष्म उवाच ।
एवं कृत्वा तु समयं श्रीर्गोभिः सह भारत ।
पश्यन्तीनां ततस्तासां तत्रैवान्तरधीयत ॥ २६
एवं गोशकृतः पुत्र माहात्म्यं तेऽनुवर्णितम् ।
माहात्म्यं च गवां भूयः श्रूयतां गदतो मम २७

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि अष्टाविंशत्यधिकशततमोऽध्यायः ॥ १२८ ॥

## एकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥

भीष्मेण युधिष्ठिरंप्रति गोलोकस्य देवलोकादप्युपरितनत्वे निमित्तप्रतिपादकब्रह्मशक्रसंवादानुवादः ॥ १ ॥

भीष्म उवाच ।
ये च गाः संप्रयच्छन्ति हुतशिष्टाशिनश्च ये ।
तेषां सत्राणि यज्ञाश्च नित्यमेव युधिष्ठिर ॥ १
ऋते दधिघृतेनेह न यज्ञः संप्रवर्तते ।

---

एका अहम् । अङ्गेषु मध्ये कुत्सिते । सुप्रीताङ्गेषु वो वस्तुमिच्छामीह न कुत्सिते इति ध. पाठः ॥ २१ ॥ संमन्त्र्य सहिता इति झ. पाठः ॥ २३ ॥ अष्टाविंशत्यधिकशततमोऽध्यायः ॥ १२८

तेन यज्ञस्य यज्ञत्वमतो मूलं च लक्ष्यते ॥ २
दानानामपि सर्वेषां गवां दानं प्रशस्यते ।
गावः श्रेष्ठाः पवित्राश्च पावनं ह्येतदुत्तमम् ॥ ३
पुष्ट्यर्थमेताः सेवेत शान्त्यर्थमपि चैव ह ।
पयो दधि घृतं चासां सर्वपापप्रमोचनम् ॥ ४
गावस्तेजः परं प्रोक्तमिह लोके परत्र च ।
न गोभ्यः परमं किंचित्पवित्रं भरतर्षभ ॥ ५
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
पितामहस्य संवादमिन्द्रस्य च युधिष्ठिर ॥ ६
पराभूतेषु दैत्येषु शक्रस्त्रिभुवनेश्वरः ।
प्रजाः समुदिताः सर्वाः सत्यधर्मपरायणाः ॥ ७
अथर्षयः सगन्धर्वाः किन्नरोरगराक्षसाः ।
देवासुरसुपर्णाश्च प्रजानां पतयस्तथा ।
पर्युपासत कौन्तेय कदाचिद्वै पितामहम् ॥ ८
नारदः पर्वतश्चैव विश्वावसुहहाहुहूः ।
दिव्यतानेषु गायन्तः पर्युपासत तं प्रभुम् ॥ ९
तत्र दिव्यानि पुष्पाणि प्रावहत्पवनस्तदा ।
आजह्रुर्ऋतवश्चापि सुगन्धीनि पृथक्पृथक् ॥१०
तस्मिन्देवसमावाये सर्वभूतसमागमे ।
दिव्यवादित्रसंघुष्टे दिव्यस्त्रीचारणावृते ।
इन्द्रः पप्रच्छ देवेशमभिवाद्य प्रणम्य च ॥ ११
देवानां भगवन्कस्माल्लोकेशानां पितामह ।
उपरिष्टाद्गवां लोक एतदिच्छामि वेदितुम् ॥ १२
किं तपो ब्रह्मचर्यं वा गोभिः कृतमिहेश्वर ।
देवानामुपरिष्टाद्यद्वसन्त्यरजसः सुखम् ॥ १३
ततः प्रोवाच ब्रह्मा तं शक्रं बलनिषूदनम् ।
अवज्ञातास्त्वया नित्यं गावो बलनिषूदन ॥ १४
तेन त्वमासां माहात्म्यं न वेत्सि शृणु यत्प्रभो ।
गवां प्रभावं परमं माहात्म्यं च सुरर्षभ ॥ १५
यज्ञाङ्गं कथिता गावो यज्ञ एव च वासव ।
एताभिश्च विना यज्ञो न वर्तेत कथंचन ॥ १६
धारयन्ति प्रजाश्चैताः पयसा हविषा तथा ।
एतासां तनयाश्चापि कृषियोगमुपासते ॥ १७
जनयन्ति च धान्यानि बीजानि विविधानि च ।
ततो यज्ञाः प्रवर्तन्ते हव्यं कव्यं च सर्वशः ॥ १८
पयो दधि घृतं चैव पुण्याश्चैताः सुराधिप ।
वहन्ति विविधान्भोगान्क्षुत्तृष्णापरिपीडिताः १९
मुनींश्च धारयन्तीह प्रजाश्चैवापि कर्मणा ।
वासवाऽकूटवाहिन्यः कर्मणा सुकृतेन च ॥ २०
उपरिष्टात्ततोऽस्माकं वसन्त्येताः सदैव हि ।
एतत्ते कारणं शक्र निवासकृतमद्य वै ।
गावो देवोपरिष्टाद्धि समाख्याताः शतक्रतो ॥२१
एता हि वरदत्ताश्च वरदाश्चापि वासव ।
सुरभ्यः पुण्यकर्मिण्यः पावनाः शुभलक्षणाः॥२२
यदर्थं गां गताश्चैव सुरभ्यः सुरसत्तम ।
तच्च मे शृणु कार्त्स्न्येन वदतो बलसूदन ॥ २३
पुरा देवयुगे तात दैत्येन्द्रेषु महात्मसु ।
त्रीँल्लोकाननुशासत्सु विष्णौ गर्भत्वमागते ॥२४
अदित्यां तप्यमानायां तपो घोरं सुदुश्चरम् ।
पुत्रार्थममरश्रेष्ठ पादेनैकेन नित्यदा ॥ २५
तां तु दृष्ट्वा महादेवीं तप्यमानां महत्तपः ।
दक्षस्य दुहिता देवी सुरभिर्नाम नामतः ॥ २६
अतप्यत तपो घोरं हृष्टा धर्मपरायणा ।
कैलासशिखरे रम्ये देवगन्धर्वसेविते ॥ २७
व्यतिष्ठदेकपादेन परमं योगमास्थिता ।
दशवर्षसहस्राणि दशवर्षशतानि च ॥ २८
संतप्तास्तपसा तस्या देवाः सर्षिमहोरगाः ।
तत्र गत्वा मया सार्धं पर्युपासत तां शुभाम् ॥२९
अथाहमब्रवं तत्र देवीं तां तपसाऽन्विताम् ।
किमर्थं तप्यसे देवि तपो घोरमनिन्दिते ॥ ३०
प्रीतस्तेऽहं महाभागे तपसाऽनेन शोभने ।
वरयस्व वरं देवि दातास्मीति पुरंदर ॥ ३१
सुरभिरुवाच ।
वरेण भगवन्मह्यं कृतं लोकपितामह ।
एष एव वरो मेऽद्य यत्प्रीतोसि ममानघ ॥ ३२
ब्रह्मोवाच ।
तामेवं ब्रुवतीं देवीं सुरभिं त्रिदशेश्वर ।

वासव अवृ अमायाव्यवहारिण्यः ॥ २० ॥ निवासार्थं कृत निवासकृतम् ॥ २१ ॥

प्रत्यब्रवं यद्देवेन्द्र तन्निबोध शचीपते ॥ ३३
अलोभकाम्यया देवि तपसा शुचिना च ते ।
प्रसन्नोऽहं वरं तस्मादमरत्वं ददामि ते ॥ ३४
त्रयाणामपि लोकानामुपरिष्टान्निवत्स्यसि ।
मत्प्रसादाच्च विख्यातो गोलोकः संभविष्यति ३५
मानुषेषु च कुर्वाणाः प्रजाः कर्म शुभास्तव ।
निवत्स्यन्ति महाभागे सर्वा दुहितरश्च ते ॥ ३६
मनसा चिन्तिता भोगास्त्वया वै दिव्यमानुषाः ।
यच्च स्वर्गसुखं देवि तत्ते संपत्स्यते शुभे ॥ ३७
तस्या लोकाः सहस्राक्ष सर्वकामसमन्विताः ।
न तत्र क्रमते मृत्युर्न जरा न च पावकः ।
न दैन्यं नाशुभं किंचिद्विद्यते तत्र वासव ॥ ३८
तत्र दिव्यान्यरण्यानि दिव्यानि भवनानि च ।
विमानानि सुयुक्तानि कामगानि च वासव ॥३९
ब्रह्मचर्येण तपसा सत्येन च दमेन च ।
दानैश्च विविधैः पुण्यैस्तथा तीर्थानुसेवनात् ॥४०
तपसा महता चैव सुकृतेन च कर्मणा ।
शक्यः समासादयितुं गोलोकः पुष्करेक्षण ॥४१
एतत्ते सर्वमाख्यातं मया शक्रानुपृच्छते ।
न ते परिभवः कार्यो गवामसुरसूदन ॥ ४२
भीष्म उवाच ।
एतच्छ्रुत्वा सहस्राक्षः पूजयामास नित्यदा ।
गाश्चक्रे बहुमानं च तासु नित्यं युधिष्ठिर ॥ ४३
एतत्ते सर्वमाख्यातं पावनं च महाद्युते ।
पवित्रं परमं चापि गवां माहात्म्यमुत्तमम् ॥४४
तं पुरुषव्याघ्र सर्वपापविमोचनम् ।
य इदं कथयेन्नित्यं ब्राह्मणेभ्यः समाहितः ॥४५
हव्यकव्येषु यज्ञेषु पितृकार्येषु चैव ह ।
सार्वकामिकमक्षय्यं पितॄंस्तस्योपतिष्ठते ॥ ४६
गोषु भक्तश्च लभते यद्यदिच्छति मानवः ।
स्त्रियोऽपि भक्ता या गोषु ताश्च काममवाप्नुयुः ॥४७
पुत्रार्थी लभते पुत्रं कन्यार्थी तामवाप्नुयात् ।
धनार्थी लभते वित्तं धर्मार्थी धर्ममाप्नुयात् ॥४८
विद्यार्थी चाप्नुयाद्विद्यां सुखार्थी प्राप्नुयात्सुखम् ।
न किंचिद्दुर्लभं चैव गवां भक्तस्य भारत ॥ ४९

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि एकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥

## त्रिंशदधिकशततमोऽध्यायः ॥ १३० ॥

युधिष्ठिरेण सुवर्णोत्पत्तिप्रकारं पृष्टेन भीष्मेण तत्प्रतिपादकवसिष्ठपरशुरामसंवादानुवादारम्भः ॥ १ ॥ भवस्य भवान्या सह रतियोगे तद्वीर्यभीरुभिर्देवैः प्रार्थितेन देवेन वीर्यस्योर्ध्वनिरोधने प्रजोच्छेदकुपितया देव्या देवानामनपत्यत्वशापदानम् ॥ २ ॥

युधिष्ठिर उवाच ।
उक्तं पितामहेनेदं गवां दानमनुत्तमम् ।
विशेषेण नरेन्द्राणामिह धर्ममवेक्षताम् ॥ १
राज्यं हि सततं दुःखमाश्रमाश्च सुदुर्विदाः ।
परिचारेषु वै दुःखं दुर्धरं चाकृतात्मभिः ।
भूयिष्ठं च नरेन्द्राणां विद्यते न शुभा गतिः ॥२
पूयन्ते तत्र नियतं प्रयच्छन्तो वसुंधराम् ।
सर्वे च कथिता धर्मास्त्वया मे कुरुनन्दन ॥ ३
एवमेव गवामुक्तं प्रदानं ते नृगेण ह ।
ऋषिणा नाचिकेतेन पूर्वमेव निदर्शितम् ॥ ४
वेदोपनिषदे चैव सर्वकर्मसु दक्षिणाः ।
सर्वक्रतुषु चोद्दिष्टा भूमिर्गावोऽथ काञ्चनम् ॥५
तत्र श्रुतिस्तु परमा सुवर्णं दक्षिणेति वै ।
एतदिच्छाम्यहं श्रोतुं पितामह यथातथम् ॥ ६
किं सुवर्णं कथं जातं कस्मिन्काले किमात्मकम् ।
किंदैवं किंफलं चैव कस्माच्च परमुच्यते ॥ ७

कन्या पतिमवाप्नुयादिति क. थ. ध. पाठः ॥ ४८ ॥ एकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥

पूयन्ते शुध्यन्ति ॥ ३ ॥

कस्माद्दानं सुवर्णस्य पूजयन्ति मनीषिणः ।
कस्माच्च दक्षिणार्थं तद्यज्ञकर्मसु शस्यते ॥ ८
कस्माच्च पावनं श्रेष्ठं भूमेर्गोभ्यश्च काञ्चनम् ।
परमं दक्षिणार्थे च तद्ब्रवीहि पितामह ॥ ९
भीष्म उवाच ।
शृणु राजन्नवहितो बहुकारणविस्तरम् ।
जातरूपसमुत्पत्तिमनुभूतं च यन्मया ॥ १०
पिता मम महातेजाः शन्तनुर्निधनं गतः ।
तस्य दित्सुरहं श्राद्धं गङ्गाद्वारमुपागमम् ॥ ११
तत्रागम्य पितुः पुत्र श्राद्धकर्म समारभम् ।
माता मे जाह्नवी चात्र साहाय्यमकरोत्तदा ॥१२
तत्रागतांस्तपस्सिद्धानुपवेश्य बहूनृषीन् ।
तोयप्रदानात्प्रभृति कार्याण्यहमथारभम् ॥ १३
तत्समाप्य यथोद्दिष्टं पूर्वकर्म समाहितः ।
दातुं निर्वपणं सम्यग्यथावदहमारभम् ॥ १४
ततस्तं दर्भविन्यासं भित्त्वा सुरुचिराङ्गदः ।
प्रलम्बाभरणो बाहुरुदतिष्ठद्विशांपते ॥ १५
मुहूर्तमपि तं दृष्ट्वा परं विस्मयमागमम् ।
प्रतिग्रहीता साक्षान्मे पितेति भरतर्षभ ॥ १६
ततो मे पुनरेवासीत्संज्ञा संचिन्त्य शास्त्रतः ।
नायं वेदेषु विहितो विधिर्हस्त इति प्रभो ।
पिण्डो देयो नरेणेह ततो मतिरभून्मम ॥ १७
साक्षान्नेह मनुष्यस्य पिण्डं हि पितरः क्वचित् ।
गृह्णन्ति विहितं चेत्थं पिण्डो देयः कुशेष्विति॥१८
ततोऽहं तदनादृत्य पितुर्हस्तनिदर्शनम् ।
शास्त्रप्रामाण्यसूक्ष्मं तु विधिं पिण्डस्य संस्मरन्॥१९
ततो दर्भेषु तत्सर्वमददं भरतर्षभ ।
शास्त्रमार्गानुसारेण तद्विद्धि मनुजर्षभ ॥ २०
ततः सोऽन्तर्हितो बाहुः पितुर्मम जनाधिप ।
ततो मां दर्शयामासुः स्वप्नान्ते पितरस्तथा ॥२१
प्रीयमाणास्तु मामूचुः प्रीताः स्म भरतर्षभ ।
विज्ञानेन तवानेन यन्न मुह्यसि धर्मतः ॥ २२
त्वया हि कुर्वता शास्त्रं प्रमाणमिह पार्थिव
आत्मा धर्मः श्रुतं वेदाः पितरश्चर्षिभिः सह ॥२३
साक्षात्पितामहो ब्रह्मा गुरवोऽथ प्रजापतिः ।
प्रमाणमुपनीता वै स्थिताश्च न विचालिताः ॥२४
तदिदं सम्यगारब्धं त्वयाऽद्य भरतर्षभ ।
किंतु भूमेर्गवां चार्थे सुवर्णं दीयतामिति ॥ २५
एवं वयं च धर्मश्च सर्वे चास्मत्पितामहाः ।
पाविता वै भविष्यन्ति पावनं हि परं हि तत् ॥२६
दश पूर्वान्दशैवान्यांस्तथा संतारयन्ति ते ।
सुवर्णं ये प्रयच्छन्ति एवं मत्पितरोऽब्रुवन् ॥ २७
ततोऽहं विस्मितो राजन्प्रतिबुद्धो विशांपते ।
सुवर्णदानेऽकरवं मतिं च भरतर्षभ ॥ २८
इतिहासमिमं चापि शृणु राजन्पुरातनम् ।
जामदग्न्यं प्रति विभो धन्यमायुष्यमेव च ॥ २९
जामदग्न्येन रामेण तीव्ररोषान्वितेन वै ।
त्रिःसप्तकृत्वः पृथिवी कृता निःक्षत्रिया पुरा ॥३०
ततो जित्वा महीं कृत्स्नां रामो राजीवलोचनः ।
आजहार क्रतुं वीरो ब्रह्मक्षत्रेण पूजितम् ॥ ३१
वाजिमेधं महाराज सर्वकामसमन्वितम् ।
पावनं सर्वभूतानां तेजोद्युतिविवर्धनम् ॥ ३२
विपाप्मा च स तेजस्वी तेन क्रतुफलेन च ।
नैवात्मनोऽथ लघुतां जामदग्न्योऽध्यगच्छत ॥३३
स तु क्रतुवरेणेष्ट्वा महात्मा दक्षिणावता ।
पप्रच्छागमसंपन्नानृषीन्देवांश्च भारत ॥ ३४
पावनं यत्परं नृणामुग्रे कर्मणि वर्तताम् ।
तदुच्यतां महाभागा इति जातघृणोऽब्रवीत् ॥३५
इत्युक्ता वेदशास्त्रज्ञास्तमूचुस्ते महर्षयः ।
राम विप्राः सत्क्रियन्तां वेदप्रामाण्यदर्शनात् ॥३६
भूयश्च विप्रर्षिगणाः प्रष्टव्याः पावनं प्रति ।
ते यद्ब्रूयुर्महाप्राज्ञास्तच्चैव समुदाचर ॥ ३७
ततो वसिष्ठं देवर्षिमगस्त्यमथ काश्यपम् ।
तमेवार्थं महातेजाः पप्रच्छ भृगुनन्दनः ॥ ३८

तृप्तास्ते पितरस्तथेति थ. ध. पाठः ॥ २१ ॥ नवपूर्वानधश्चान्यान्नव संतारयन्ति ते इति थ. ध. पाठः ॥ २७ ॥ लघुतां निष्पापताम् ॥ ३३ ॥ त्रिंशदधिकशततमोऽध्यायः ॥ १३० ॥

जाता मतिर्मे विप्रेन्द्राः कथं पूयेयमित्युत ।
केन वा कर्मयोगेन प्रदानेनेह केन वा ॥ ३९
यदि वोऽनुग्रहकृता बुद्धिर्मां प्रति सत्तमाः ।
प्रब्रूत पावनं किं मे भवेदिति तपोधनाः ॥ ४०
ऋषय ऊचुः ।
गाश्च भूमिं च वित्तं च दत्त्वेह भृगुनन्दन ।
पापकृत्पूयते मर्त्य इति भार्गव शुश्रुम ॥ ४१
अन्यद्दानं तु विप्रर्षे श्रूयतां पावनं महत् ।
दिव्यमत्यद्भुताकारमपत्यं जातवेदसः ॥ ४२
दग्ध्वा लोकान्पुरा वीर्यात्संभूतमिह शुश्रुम ।
सुवर्णमिति विख्यातं तद्ददत्सिद्धिमेष्यसि ॥ ४३
ततोऽब्रवीद्वसिष्ठस्तं भगवान्संशितव्रतः ।
शृणु राम यथोत्पन्नं सुवर्णमनलप्रभम् ॥ ४४
फलं दास्यति ते यत्तु दाने परमिहोच्यते ।
सुवर्णं यच्च यस्माच्च यथा च गुणवत्तमम् ॥ ४५
तन्निबोध महाबाहो सर्वं निगदतो मम ।
अग्नीषोमात्मकमिदं सुवर्णं विद्धि निश्चये ॥ ४६
अजोऽग्निर्वरुणो मेषः सूर्योऽश्व इति दर्शनम् ।
कुञ्जराश्च मृगा नागा महिषाश्चासुरा इति ॥ ४७
कुक्कुटाश्च वराहाश्च राक्षसा भृगुनन्दन ।
इडा गावः पयः सोमो भूमिरित्येव च स्मृतिः ॥ ४८
जगत्सर्वं च निर्मथ्य तेजोराशिः समुत्थितः ।
सुवर्णमेभ्यो विप्रर्षे रत्नं परममुत्तमम् ॥ ४९
एतस्मात्कारणाद्देवा गन्धर्वोरगराक्षसाः ।
मनुष्याश्च पिशाचाश्च प्रयता धारयन्ति तत् ॥ ५०
मुकुटैरङ्गदयुतैरलंकारैः पृथग्विधैः ।
सुवर्णविकृतैस्तत्र विराजन्ते भृगूत्तम ॥ ५१
तस्मात्सर्वपवित्रेभ्यः पवित्रं परमं स्मृतम् ।
भूमेर्गोभ्योऽथ रत्नेभ्यस्तद्विद्धि मनुजर्षभ ने। ५२
पृथिवीं गाश्च दत्त्वेह यच्चान्यदपि किंचन ।
विशिष्यते सुवर्णस्य दानं परमकं विभो ॥ ५३
अक्षयं पावनं चैव सुवर्णममरद्युते ।
प्रयच्छ द्विजमुख्येभ्यः पावनं ह्येतदुत्तमम् ॥ ५४
सुवर्णमेव सर्वासु दक्षिणासु विधीयते ।
सुवर्णं ये प्रयच्छन्ति सर्वदास्ते भवन्त्युत ॥ ५५
देवतास्ते प्रयच्छन्ति ये सुवर्णं ददत्यथ ।
अग्निर्हि देवताः सर्वाः सुवर्णं च तदात्मकम् ॥ ५६
तस्मात्सुवर्णं ददता दत्ताः सर्वाः स्म देवताः ।
भवन्ति पुरुषव्याघ्र न ह्यतः परमं विदुः ॥ ५७
भूय एव च माहात्म्यं सुवर्णस्य निबोध मे ।
गदतो मम विप्रर्षे सर्वशस्त्रभृतांवर ॥ ५८
मया श्रुतमिदं पूर्वं पुराणे भृगुनन्दन ।
प्रजापतेः कथयतो मनोः स्वायंभुवस्य वै ॥ ५९
शूलपाणेर्भगवतो रुद्रस्य च महात्मनः ।
गिरौ हिमवति श्रेष्ठे तदा भृगुकुलोद्वह ॥ ६०
देव्या विवाहे निर्वृत्ते रुद्राण्या भृगुनन्दन ।
समागमे भगवतो देव्या सह महात्मनः ॥ ६१
ततः सर्वे समुद्विग्ना देवा रुद्रमुपागमन् ॥ ६२
ते महादेवमासीनं देवीं च वरदामुमाम् ।
प्रसाद्य शिरसा सर्वे रुद्रमूचुर्भृगूद्वह ॥ ६३
अयं समागमो देव देव्या सह तवानघ ।
तपस्विनस्तपस्विन्या तेजस्विन्याऽतितेजसः ॥ ६४
अमोघतेजास्त्वं देव देवी चेयमुमा तथा ।
अपत्यं युवयोर्देव बलवद्भविता विभो ।
तन्नूनं त्रिषु लोकेषु न किंचिच्छेषयिष्यति ॥ ६५
तदेभ्यः प्रणतेभ्यस्त्वं देवेभ्यः पृथुलोचन ।
वरं प्रयच्छ लोकेश त्रैलोक्यहितकाम्यया ॥ ६६
अपत्यार्थं निगृह्णीष्व तेजः परमकं विभो ।
[त्रैलोक्यसारौ हि युवां लोकं संतापयिष्यथ ॥ ६७
तदपत्यं हि युवयोर्देवानभिभवेद्ध्रुवम् ।
न हि ते पृथिवी देवी न च द्यौर्न दिवं विभो ॥ ६८
नेदं धारयितुं शक्ताः समस्ता इति मे मतिः ।
तेजःप्रभावनिर्दग्धं तस्मात्सर्वमिदं जगत् ॥ ६९
तस्मात्प्रसादं भगवन्कर्तुमर्हसि नः प्रभो ।
न देव्यां संभवेत्पुत्रो भवतः सुरसत्तम ।
धैर्यादेव निगृह्णीष्व तेजो ज्वलितमुत्तमम् ॥ ७०
इति तेषां कथयतां भगवान्वृषभध्वजः ] ।
एवमस्त्विति देवांस्तान्विप्रर्षे प्रत्यभाषत ॥ ७१

इत्युक्त्वा चोर्ध्वमनयद्रेतो वृषभवाहनः ।
ऊर्ध्वरेताः समभवत्ततः प्रभृति चापि सः ॥७२
रुद्राणीति ततः क्रुद्धा प्रजोच्छेदे तदा कृते ।
देवानथाब्रवीत्तत्र स्त्रीभावात्परुषं वचः ॥ ७३
यस्मादपत्यकामो वै भर्ता मे विनिवर्तितः ।
तस्मात्सर्वे सुरा यूयमनपत्या भविष्यथ ॥ ७४
प्रजोच्छेदो मम कृतो यस्माद्युष्माभिरद्य वै ।
तस्मात्प्रजा वः खगमाः सर्वेषां न भविष्यति ॥ ७५
पावकस्तु न तत्रासीच्छापकाले भृगूद्वह ।
देवा देव्यास्तथा शापादनपत्यास्ततोऽभवन् ॥७६
रुद्रस्तु तेजोऽप्रतिमं धारयामास वै तदा ।
प्रस्कन्नं तु ततस्तस्मात्किंचित्तत्रापतद्भुवि ॥ ७७
उत्पपात तदा वह्नौ ववृधे चाद्भुतोपमम् ।
तेजस्तेजसि संयुक्तमेकयोनित्वमागतम् ॥ ७८
एतस्मिन्नेव काले तु देवाः शक्रपुरोगमाः ।
असुरस्तारको नाम तेन संतापिता भृशम् ॥ ७९
आदित्या वसवो रुद्रा मरुतोऽथाश्विनावपि ।
साध्याश्च सर्वे संत्रस्ता दैतेयस्य पराक्रमात् ॥८०
स्थानानि देवतानां हि विमानानि पुराणि च ।
ऋषीणां चाश्रमाश्चैव बभूवुरसुरैर्हृताः ॥ ८१
ते दीनमनसः सर्वे देवता ऋषयश्च ये ।
प्रजग्मुः शरणं देवं ब्रह्माणमजरं विभुम् ॥ ८२

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि त्रिंशदधिकशततमोऽध्यायः ॥ १३० ॥

## एकत्रिंशदधिकशततमोऽध्यायः ॥ १३१ ॥

तारकासुरबाधितैर्देवैर्ब्रह्माणं प्रति स्वेषां पार्वतीशापेनानपत्यत्वकथनपूर्वकमसुरवधोपायकथनप्रार्थना ॥ १ ॥ ब्रह्मणा देवान्प्रति अग्नेरसंनिहितत्वेन देवीशापाविषयतया देवेन स्ववीर्यनिरोधकाले भुवि प्रस्कन्नकिंचिद्वीर्यांशस्य तस्मिन्संसृष्टतया च तेन गङ्गायां कुमारोत्पादनकथनेनाग्न्यन्वेषणचोदना ॥ २ ॥ अग्निना देवानां प्रार्थनया गङ्गायां स्वयंसृष्टरुद्रवीर्याधानम् ॥३॥ गङ्गयाऽग्निना स्वस्मिन्नाहितगर्भस्य मेरुगिरौ समुत्सर्जने तदीयतेजोव्याप्तयावद्वस्तूनां काञ्चनीभावप्राप्तिः ॥४॥ एवं भीष्मेण सुवर्णोत्पत्तिप्रकारकथनम् ॥ ५ ॥

देवा ऊचुः ।
असुरस्तारको नाम त्वया दत्तवरः प्रभो ।
सुरानृषींश्च क्लिश्नाति वधस्तस्य विधीयताम् ॥ १
तस्माद्भयं समुत्पन्नमस्माकं वै पितामह ।
परित्रायस्व नो देव न ह्यन्या गतिरस्ति नः ॥ २
ब्रह्मोवाच ।
समोऽहं सर्वभूतानामधर्मं नेह रोचये ।
हन्यतां तारकः क्षिप्रं सुरर्षिगणबाधिता ॥ ३
वेदा धर्माश्च नोच्छेदं गच्छेयुः सुरसत्तमाः ।
विहितं पूर्वमेवात्र मया वै व्येतु वो ज्वरः ॥ ४
देवा ऊचुः ।
वरदानाद्भगवतो दैतेयो बलगर्वितः ।
देवैर्न शक्यते हन्तुं स कथं प्रशमं व्रजेत् ॥ ५
स हि नैव स्म देवानां नासुराणां न रक्षसाम् ।
वध्यः स्यामिति जग्राह वरं त्वत्तः पितामह ॥ ६
देवाश्च शप्ता रुद्राण्या प्रजोच्छेदे पुरा कृते ।
न भविष्यति वोऽपत्यमिति सर्वे जगत्पते ॥ ७
ब्रह्मोवाच ।
हुताशनो न तत्रासीच्छापकाले सुरोत्तमाः ।
स उत्पादयिताऽपत्यं वधाय त्रिदशद्विषाम् ॥ ८
तद्वै सर्वानतिक्रम्य देवदानवराक्षसान् ।
मानुषानथ गन्धर्वान्नागानथ च पक्षिणः ॥ ९
अस्त्रेणामोघपातेन शक्त्या तं घातयिष्यति ।
यतो वो भयमुत्पन्नं ये चान्ये सुरशत्रवः ॥ १०
सनातनो हि संकल्पः काम इत्यभिधीयते ।
रुद्रस्य तेजः प्रस्कन्नमग्नौ निपतितं च यत् ॥११
तत्तेजोऽग्निर्महद्भूतं द्वितीयमिव पावकम् ।
वधार्थं देवशत्रूणां गङ्गायां जनयिष्यति ॥ १२
स तु नावाप तं शापं नष्टः स हुतभुक्तदा ।
तस्माद्वो भयहृद्देवाः समुत्पत्स्यति पावकिः ॥ १३
अन्विष्यतां वै ज्वलनस्तथा चाद्य नियुज्यताम् ।

नष्टः अदर्शनं गतः ॥ १३ ॥

तारकस्य वधोपायः कथितो वै मयाऽनघाः ॥१४
न हि तेजस्विनां शापास्तेजःसु प्रभवन्ति वै ।
बलान्यतिबलं प्राप्य दुर्बलानि भवन्ति वै ॥ १५
हन्यादवध्यान्वरदानपि चैव तपस्विनः ।
संकल्पाभिरुचिः कामः सनातनतमोऽभवत् ॥१६
जगत्पतिरनिर्देश्यः सर्वगः सर्वभावनः ।
हृच्छयः सर्वभूतानां ज्येष्ठो रुद्रादपि प्रभुः ॥ १७
अन्विष्यतां स तु क्षिप्रं तेजोराशिर्हुताशनः ।
स वो मनोगतं कामं देवः संपादयिष्यति ॥ १८
एतद्वाक्यमुपश्रुत्य ततो देवा महात्मनः ।
जग्मुः संसिद्धसंकल्पाः पर्येषन्तो विभावसुम् ॥१९
ततस्त्रैलोक्यमृषयो व्यचिन्वन्त सुरैः सह ।
काङ्क्षन्तो दर्शनं वह्नेः सर्वे तद्गतमानसाः ॥ २०
परेण तपसा युक्ताः श्रीमन्तो लोकविश्रुताः ।
लोकानन्वचरन्सिद्धाः सर्व एव भृगूत्तम ।
नष्टमात्मनि संलीनं नाभिजग्मुर्हुताशनम् ॥ २१
ततः संजातसंत्रासानग्निदर्शनलालसान् ।
जलेचरः क्लान्तमनास्तेजसाऽग्नेः प्रदीपितः ।
उवाच देवान्मण्डूको रसातलतलोत्थितः ॥ २२
रसातलतले देवा वसत्यग्निरिति प्रभो ।
संतापादिह संप्राप्तः पावकप्रभवादहम् ॥ २३
स संसुप्तो जले देवा भगवान्हव्यवाहनः ।
अपः संसृज्य तेजोभिस्तेन संतापिता वयम् ॥ २४
तस्य दर्शनमिष्टं वो यदि देवा विभावसोः ।
तत्रैवमधिगच्छध्वं कार्यं वो यदि वह्निना ॥ २५
गम्यतां साधयिष्यामो वयं ह्यग्निभयात्सुराः ।
एतावदुक्त्वा मण्डूकस्त्वरितो जलमाविशत् ॥२६
हुताशनस्तु बुबुधे मण्डूकस्य च पैशुनम् ।
शशाप स तमासाद्य न रसान्वेत्स्यसीति वै ॥ २७
तं वै संयुज्य शापेन मण्डूकं त्वरितो ययौ ।
अन्यत्र वासाय विभुर्न चात्मानमदर्शयत् ॥ २८

देवास्त्वनुग्रहं चक्रुर्मण्डूकानां भृगूत्तम ।
यत्तच्छृणु महाबाहो गदतो मम सर्वशः ॥ २९
देवा ऊचुः ।
अग्निशापादजिह्वाऽपि रसज्ञानबहिष्कृताः ।
सरस्वतीं बहुविधां यूयमुच्चारयिष्यथ ॥ ३०
बिलवासं गतांश्चैव निराहारानचेतसः ।
गतासूनपि वः शुष्कान्भूमिः संधारयिष्यति ॥३१
तमोघनायामपि वै निशायां विचरिष्यथ ।
इत्युक्त्वा तांस्ततो देवाः पुनरेव महीमिमाम् ॥३२
परीयुर्ज्वलनस्यार्थे न चाविन्दन्हुताशनम् ।
अथ तान्द्विरदः कश्चित्सुरेन्द्रद्विरदोपमः ॥ ३३
अश्वत्थस्थोऽग्निरित्येवमाह देवान्भृगूद्वह ।
शशाप ज्वलनः सर्वान्द्विरदान्क्रोधमूर्च्छितः॥ ३४
प्रतीपा भवतां जिह्वा भवित्रीति भृगूद्वह ।
इत्युक्त्वा निःसृतोऽश्वत्थादग्निर्वारणसूचितः ।
प्रविवेश शमीगर्भमथ वह्निः सुषुप्सया ॥ ३५
अनुग्रहं तु नागानां यं चक्रुः शृणु तं प्रभो ।
देवा भृगुकुलश्रेष्ठ प्रीत्या सत्यपराक्रमाः ॥ ३६
देवा ऊचुः ।
प्रतीपया जिह्वयाऽपि सर्वाहारान्हरिष्यथ ।
वाचं चोच्चारयिष्यध्वमुच्चैरव्यञ्जिताक्षराम् ।
इत्युक्त्वा पुनरेवाग्निमनुसस्रुर्दिवौकसः ॥ ३७
अश्वत्थान्निःसृतश्चाग्निः शमीगर्भमुपाविशत् ।
शुकेन ख्यापितो विप्र तं देवाः समुपाद्रवन् ॥ ३८
शशाप शुकमग्निस्तु वाग्विहीनो भविष्यसि ।
जिह्वामावर्तयामास तस्यापि हुतभुक्तदा ॥ ३९
दृष्ट्वा तु ज्वलनं देवाः शुकमूचुर्दयान्विताः ।
भविता न त्वमत्यन्तं शुकत्वे नष्टवागिति ॥४०
आवृत्तजिह्वस्य सतो वाक्यं कान्तं भविष्यति ।
बालस्येव प्रवृद्धस्य कलमव्यक्तमद्भुतम् ॥ ४१
इत्युक्त्वा तं शमीगर्भे वह्निमालक्ष्य देवताः ।

कामः काम्यमानो वह्निः ॥ १६ ॥ नष्ट अदर्शनं गतम् । आत्मनि जले जलस्य तेजोजन्यत्वात् ॥ २१ ॥ मृग्यतां साधयिष्याम इति थ. ध. पाठः ॥ २६ ॥ न रसानिति । रसनेन्द्रियहीनो भविष्यसीत्यर्थः ॥ २७ ॥ नच देवानदर्शयदिति थ. ध. पाठः ॥ २८ ॥ अजिह्वा अपीति च्छेदः ॥ ३० ॥ जिह्वां च कर्तयामासेति ड. पाठः ॥ ३९ ॥ बालस्येव प्रवृत्तस्येति ड. थ. ध. पाठः ॥ ४१ ॥

तदेवायतनं चक्रुः पुण्यं सर्वक्रियास्वपि ॥ ४२
तदाप्रभृति चाप्यग्निः शमीगर्भेषु दृश्यते ।
उत्पादने तथोपायमभिजग्मुश्च मानवाः ॥ ४३
आपो रसातले यास्तु संस्पृष्टाश्चित्रभानुना ।
ताः पर्वतप्रस्रवणैरूष्मां मुञ्चन्ति भार्गव ।
पावकेनाधिशयता संतप्तास्तस्य तेजसा ॥ ४४
अथाग्निर्देवता दृष्ट्वा बभूव व्यथितस्तदा ।
किमागमनमित्येवं तानपृच्छत पावकः ॥ ४५
तमूचुर्विबुधाः सर्वे ते चैव परमर्षयः ।
त्वां नियोक्ष्यामहे कार्ये तद्भवान्कर्तुमर्हति ।
कृते च तस्मिन्भविता तवापि सुमहान्गुणः ॥ ४६
अग्निरुवाच ।
ब्रूत यद्भवतां कार्यं कर्तास्मि तदहं सुराः ।
भवतां तु नियोज्योस्मि मावोत्रास्तु विचारणा ४७
देवा ऊचुः ।
असुरस्तारको नाम ब्रह्मणो वरदर्पितः ।
अस्मान्प्रबाधते वीर्याद्वधस्तस्य विधीयताम् ॥ ४८
इमान्देवगणांस्तात प्रजापतिगणांस्तथा ।
ऋषींश्चापि महाभाग परित्रायस्व पावक ॥ ४९
अपत्यं तेजसा युक्तं प्रवीरं जनय प्रभो ।
यद्भयं नोऽसुरात्तस्मान्नाशयेद्धव्यवाहन ॥ ५०
शप्तानां नो महादेव्या नान्यदस्ति परायणम् ।
अन्यत्र भवतो वीर तस्मात्त्रायस्व नः प्रभो ॥ ५१
इत्युक्तः स तथेत्युक्त्वा भगवान्हव्यवाहनः ।
जगामाथ दुराधर्षो गङ्गां भागीरथीं प्रति ॥ ५२
तया चाप्यभवन्मिश्रो गर्भं चास्यां दधे तदा ।
ववृधे स तदा गर्भः कक्षे कृष्णगतिर्यथा ॥ ५३
तेजसा तस्य देवस्य गङ्गा विह्वलचेतना ।
संतापमगमत्तीव्रं वोढुं सा न शशाक ह ॥ ५४
आहिते ज्वलनेनाथ गर्भे तेजःसमन्विते ।
गङ्गायामसुरः कश्चिद्भैरवं नादमानदत् ॥ ५५
अबुद्धिपतितेनाथ नादेन विपुलेन सा ।
वित्रस्तोद्भ्रान्तनयना गङ्गा विप्लुतलोचना ॥ ५६
विसंज्ञा नाशकद्गर्भं वोढुमात्मानमेव च ।
सा तु तेजःपरीताङ्गी कम्पमाना च जाह्नवी ॥ ५७
उवाच ज्वलनं विप्र तदा गर्भबलोद्धुता ।
न ते शक्ताऽस्मि भगवंस्तेजसोऽस्य विधारणे ॥ ५८
विमूढाऽस्मि कृताऽनेन न मे स्वास्थ्यं यथा पुरा ।
विह्वला चास्मि भगवंश्चेतो नष्टं च मेऽनघ ॥ ५९
धारणे नास्य शक्ताऽहं गर्भस्य तपतांवर ।
उत्स्रक्ष्येऽहमिमं दुःखान्न तु कामात्कथंचन ॥ ६०
न तेजसाऽस्ति संस्पर्शो मम देव विभावसो ।
आपदर्थे हि संबन्धः सुसूक्ष्मोऽपि महाद्युते ॥ ६१
यदत्र गुणसंपन्नमितरद्वा हुताशन ।
त्वय्येव तदहं मन्ये धर्माधर्मौ च केवलौ ॥ ६२
तामुवाच ततो वह्निर्धार्यतां धार्यतामिति ।
गर्भो मत्तेजसा युक्तो महागुणफलोदयः ॥ ६३
शक्ता ह्यसि महीं कृत्स्नां वोढुं धारयितुं तथा ।
न हि ते किंचिदप्राप्यमन्यतो धारणादृते ॥ ६४
'एवमुक्ता तु सा देवी तत्रैवान्तरधीयत ।
पावकश्चापि तेजस्वी कृत्वा कार्यं दिवौकसाम् ।
जगामेष्टं तदा देशं ततो भार्गवनन्दन ॥' ६५
सा वह्निना वार्यमाणा देवैरपि सरिद्वरा ।
समुत्ससर्ज तं गर्भं मेरौ गिरिवरे तदा ॥ ६६
समर्था धारणे चापि रुद्रतेजःप्रधर्षिता ।
नाशकत्सा तदा गर्भं संधारयितुमोजसा ।
समुत्ससर्ज तं दुःखाद्दीप्तवैश्वानरप्रभम् ॥ ६७
दर्शयामास चाग्निस्तां तदा गङ्गां भृगूद्वह ।
पप्रच्छ सरितां श्रेष्ठां कच्चिद्गर्भः सुखोदयः ॥ ६८
कीदृग्गुणोपि वा देवि कीदृग्रूपश्च दृश्यते ।
तेजसा केन वा युक्तः सर्वमेतद्ब्रवीहि मे ॥ ६९
वाच ।
जातरूपः स गर्भो वै तेजसा त्वमिवानघ ।
सुवर्णो विमलो दीप्तः पर्वतं चावभासयन् ॥ ७०

ऊष्मा ऊष्माणम् । अधिशयता अधिशयानेन । पावकेनाधिशयिता इति ट. थ. पाठः ॥ ४४ ॥ दधे आदधे । गर्भश्चास्याभवत्तदेति थ. पाठः ॥ ५३ ॥ सोढुं सा न शशाक हेति थ. पाठ. ॥ ५४ ॥ अबुद्धिपतितेन अकस्माज्जातेन ॥ ५६ ॥ न चेतसास्ति संस्पर्श इति थ. पाठः ॥ ६१ ॥

पद्मोत्पलविमिश्राणां ह्रदानामिव शीतलः ।
गन्धोस्य स कदम्बानां तुल्यो वै तपतांवर ॥७१
तेजसा तस्य गर्भस्य भास्करस्येव रश्मिभिः ।
यद्द्रव्यं परिसंसृष्टं पृथिव्यां पर्वतेषु च ।
तत्सर्वं काञ्चनीभूतं समन्तात्प्रत्यदृश्यत ॥ ७२
पर्यधावत शैलांश्च नदीः प्रस्रवणानि च ।
व्यादीपयत्तेजसा च त्रैलोक्यं सचराचरम् ॥ ७३
एवंरूपः स भगवान्पुत्रस्ते हव्यवाहन ।
सूर्यवैश्वानरसमः कान्त्या सोम इवापरः ॥ ७४
वसिष्ठ उवाच ।
एवमुक्त्वा तु सा देवी तत्रैवान्तरधीयत ।
पावकश्चापि तेजस्वी कृत्वा कार्यं दिवौकसाम् ।
जगामेष्टं ततो देशं तदा भार्गवनन्दन ॥ ७५
एतैः कर्मगुणैर्लोके नामाग्नेः परिगीयते ।
हिरण्यरेता इति वै ऋषिभिर्विबुधैस्तथा ।
पृथिवी च तदा देवी ख्याता वसुमतीति वै ॥ ७६
स तु गर्भो महातेजा गाङ्गेयः पावकोद्भवः ।
दिव्यं शरवणं प्राप्य ववृधेऽद्भुतदर्शनः ॥ ७७
ददृशुः कृत्तिकास्तं तु बालार्कसदृशद्युतिम् ।
जातस्नेहास्तु तं बालं पुपुषुः स्तन्यविस्रवैः ॥७८
ततः स कार्तिकेयत्वमवाप परमद्युतिः ।
स्कन्नत्वात्स्कन्दतां चापि गुहावासाद्गुहोऽभवत् ॥
एवं सुवर्णमुत्पन्नमपत्यं जातवेदसः ।
तत्र जाम्बूनदं श्रेष्ठं देवानामपि भूषणम् ॥ ८०
ततःप्रभृति चाप्येतज्जातरूपमुदाहृतम् ।
रत्नानामुत्तमं रत्नं भूषणानां तथैव च ॥ ८१
पवित्रं च पवित्राणां मङ्गलानां च मङ्गलम् ।
यत्सुवर्णं स भगवानग्निरीशः प्रजापतिः ॥ ८२
पवित्राणां पवित्रं हि कनकं द्विजसत्तमाः ।
अग्नीषोमात्मकं चैव जातरूपमुदाहृतम् ॥ ८३

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि एकत्रिंशदधिकशततमोऽध्यायः ॥ १३१ ॥

## द्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥

वसिष्ठेन परशुरामंप्रति सुवर्णप्रभावकथनप्रसङ्गेन रुद्रयज्ञे भृग्वङ्गिरःप्रभृतिप्रभावादिकथनम् ॥ १ ॥

वसिष्ठ उवाच ।
अपि चेदं पुरा राम श्रुतं मे ब्रह्मदर्शनम् ।
पितामहस्य यद्वृत्तं ब्रह्मणः परमात्मनः ॥ १
देवस्य महतस्तात वारुणीं बिभ्रतस्तनुम् ।
ऐश्वर्ये वारुणेवाऽथ रुद्रस्येशस्य वै प्रभो ॥ २
आजग्मुर्मुनयः सर्वे देवाश्चाग्निपुरोगमाः ।
यज्ञाङ्गानि च सर्वाणि वषट्कारश्च मूर्तिमान् ॥ ३
मूर्तिमन्ति च सामानि यजूंषि च सहस्रशः ।
ऋग्वेदश्चागमत्तत्र पदक्रमविभूषितः ॥ ४
लक्षणानि स्वरास्तोभा निरुक्ताः स्वरभक्तयः ।
ओंकारश्छन्दसां नेत्रं निग्रहप्रग्रहौ तथा ॥ ५
वेदाश्च सोपनिषदो विद्या सावित्र्यथापि च ।
भूतं भव्यं भविष्यच्च दधार भगवाञ्छिवः ॥ ६
संजुहावात्मनाऽऽत्मानं स्वयमेव तदा प्रभो ।
यज्ञं च शोभयामास बहुरूपं पिनाकधृत् ॥ ७
द्यौर्नभः पृथिवी खं च तथा चैवैष भूपतिः ।
सर्वविद्येश्वरः श्रीमानेष चापि विभावसुः ॥ ८
एष ब्रह्मा शिवो रुद्रो वरुणोऽग्निः प्रजापतिः ।
कीर्त्यते भगवान्देवः सर्वभूतपतिः शिवः ॥ ९
तस्य यज्ञः पशुपतेस्तपः क्रतव एव च ।
दीक्षा दीप्तव्रता देवी दिशश्च सदिगीश्वराः ॥ १०
देवपत्न्यश्च कन्याश्च देवानां चैव मातरः ।
आजग्मुः सहितास्तत्र तदा भृगुकुलोद्वह ।
यज्ञं पशुपतेः प्रीता वरुणस्य महात्मनः ॥ ११
स्वयंभुवस्तु ता दृष्ट्वा रेतः समपतद्भुवि ॥ १२
तस्य शुक्रस्य निष्यन्दात्पांसून्संगृह्य भूमितः ।

कदम्बाना कदम्बपुष्पाणाम् ॥ ७१ ॥ अग्निष्टोमात्मकं चैवेति थ. ध. पाठः ॥ ८३ ॥ एकत्रिंशदधिकशततमोऽध्यायः ॥१३१॥

ऋग्वेदोऽथर्ववेदश्चेति क. ङ. थ. पाठः ॥ ४ ॥

ग्रास्थत्पूषा कराभ्यां वै तस्मिन्नेव हुताशने ॥ १३
ततस्तस्मिन्संप्रवृत्ते सत्रे ज्वलितपावके ।
ब्रह्मणो जुह्वतस्तत्र प्रादुर्भावो बभूवह ॥ १४
स्कन्नमात्रं च तच्छुक्रं स्रुवेण परिगृह्य सः ।
आज्यवन्मन्त्रतश्चापि सोऽजुहोद्भृगुनन्दन ॥ १५
ततः स जनयामास भूतग्रामं च वीर्यवान् ।
तस्य तत्तेजसस्तस्माज्जज्ञे लोकेषु तैजसम् ॥ १६
तमसस्तामसा भावा व्यापि सत्वं तथोभयम् ।
स गुणस्तेजसो नित्यं तमस्याकाशमेव च ।
सर्वभूतेषु च तथा सत्वं तेजस्तथोत्तमम् ॥ १७
शुक्रे हुतेऽग्नौ तस्मिंस्तु प्रादुरासंस्त्रयः प्रभो ।
पुरुषा वपुषा युक्ताः स्वैः स्वैः प्रसवजैर्गुणैः ॥ १८
भर्जनाद्भृगुरित्येवमङ्गारेभ्योऽङ्गिराऽभवत् ।
अङ्गारसंश्रयाच्चैव कविरित्यपरोऽभवत् ।
सह ज्वालाभिरुत्पन्नो भृगुस्तस्माद्भृगुः स्मृतः॥१९
मरीचिभ्यो मरीचिस्तु मारीचः कश्यपो ह्यभूत् ।
अङ्गारेभ्योऽङ्गिरास्तात वालखिल्याः कुशोच्चयात्॥
अत्रैवात्रेति च विभो जातमत्रिं वदन्त्यपि ॥ २१
तथा भस्मव्यपोहेभ्यो ब्रह्मर्षिगणसंमताः ।
वैखानसाः समुत्पन्नास्तपःश्रुतगुणेप्सवः ॥ २२
अश्रुतोऽस्य समुत्पन्नावश्विनौ रूपसंमतौ ।
शेषाः प्रजानां पतयः स्रोतोभ्यस्तस्य जज्ञिरे ।
ऋषयो रोमकूपेभ्यः स्वेदाच्छन्दो बलान्मनः ॥२३
एतस्मात्कारणादाहुरग्निः सर्वास्तु देवताः ।
ऋषयः श्रुतसंपन्ना वेदप्रामाण्यदर्शनात् ॥ २४
यानि दारूणि निर्यासास्ते मासाः पक्षसंज्ञिताः ।
अहोरात्रा मुहूर्ताश्च वीतज्योतिश्च वारुणम् ॥२५
रौद्रं लोहितमित्याहुर्लोहितात्कनकं स्मृतम् ।
तन्मैत्रमिति विज्ञेयं धूमाच्च वसवः स्मृताः ॥ २६
अर्चिषो याश्च ते रुद्रास्तथाऽऽदित्या महाप्रभाः ।
उद्दीप्तास्ते तथाऽङ्गारा ये धिष्ण्येषु दिवि स्थिताः॥२७
अग्निर्नाथश्च लोकस्य तत्परं ब्रह्म तद्ध्रुवम् ।
सर्वकामदमित्याहुस्तत्र हव्यमुपावहन् ॥ २८
ततोऽब्रवीन्महादेवो वरुणः पवनात्मकः ।
मम सत्रमिदं दिव्यमहं गृहपतिस्त्विह ॥ २९
त्रीणि पूर्वाण्यपत्यानि मम तानि न संशयः ।
इति जानीत खगमा मम यज्ञफलं हि तत् ॥ ३०
अग्निरुवाच ।
मदङ्गेभ्यः प्रसूतानि मदाश्रयकृतानि च ।
ममैव तान्यपत्यानि मम शुक्रं हुतं हि तत् ॥३१
अथाब्रवील्लोकगुरुर्ब्रह्मा लोकपितामहः ।
ममैव तान्यपत्यानि मम शुक्रं हुतं हि तत् ॥ ३२
अहं वक्ता च मन्त्रस्य होता शुक्रस्य चैव ह ।
यस्य बीजं फलं तस्य शुक्रं चेत्कारणं मतम् ॥३३
ततोऽब्रुवन्देवगणाः पितामहमुपेत्य वै ।
कृताञ्जलिपुटाः सर्वे शिरोभिरभिवन्द्य च ॥ ३४
वयं च भगवन्सर्वे जगच्च सचराचरम् ।
तवैव प्रसवाः सर्वे तस्मादग्निर्विभावसुः ।
वरुणश्चेश्वरो देवो लभतां काममीप्सितम् ॥ ३५
निसर्गाद्ब्रह्मणश्चापि वरुणो यादसांपतिः ।
जग्राह वै भृगुं पूर्वमपत्यं सूर्यवर्चसम् ॥ ३६
ईश्वरोऽङ्गिरसं चाग्नेरपत्यार्थमकल्पयत् ।
पितामहस्त्वपत्यं वै कविं जग्राह तत्त्ववित् ॥ ३७
तदा स वारुणिः ख्यातो भृगुः प्रसवकर्मकृत् ।
आग्नेयस्त्वङ्गिराः श्रीमान्कविर्ब्राह्मो महायशाः ।
भार्गवाङ्गिरसौ लोके लोकसंतानलक्षणौ ॥ ३८

---

प्रादुर्भावश्चरमधातुः ॥ १४ ॥ भूतग्राम चतुर्विधं तत्तेजसस्तस्य गुणमयस्य रेतसः संबन्धी यस्तेजोंशो रजोंशस्तस्मात्तैजसप्रधानं जङ्गममभूत् ॥ १६ ॥ तमसस्तमोंशात्तामसं स्थावरम् । सत्वांशस्तूभयत्रानुगतः ॥ १७ ॥ प्रसवजैः कारणजैर्गुणैः ॥ १८ ॥ सहज्वभिरुत्पन्न इति ध. पाठः ॥ १९ ॥ वालखिल्याः शरोच्चयादिति ध. पाठः ॥ २० ॥ अत्रैव कुशोच्चये । अत्र अत्रैवेति संबन्धः । अत्रैवात्रिं च हि विभो इति ध. पाठः ॥ २१ ॥ व्यपोहेभ्यः समूहेभ्यः । तथाग्नेस्तस्य भस्मभ्य इति ध. पाठः ॥ २२ ॥ अश्रुतः अश्रुसकाशात् । स्रोतोभ्यः श्रोत्रादीन्द्रियेभ्यः । बलात् वीर्यात् । बलान्मख इति क. ट. ध. पाठः ॥ २३ ॥ एतस्मादग्निजत्वात् ॥ २४ ॥ निर्यासा दारुगता लाक्षादयो वृक्षरसाः ॥ २५ ॥ दिविस्थिताः ग्रहतारादयः धिष्ण्येषु स्थानेषु ॥ २७ ॥ त्रीणि भृग्वङ्गिरःकविसंज्ञानि ॥ ३० ॥

एते विप्रवराः सर्वे प्रजानां पतयस्त्रयः ।
सर्वं संतानमेतेषामिदमित्युपधारय ॥ ३९
भृगोस्तु पुत्राः सप्तासन्सर्वे तुल्या भृगोर्गुणैः ।
च्यवनो वज्रशीर्षश्च शुचिरौर्वस्तथैव च ॥ ४०
शुक्रो वरेण्यश्च विभुः सवनश्चेति सप्त ते ।
भार्गवा वारुणाः सर्वे येषां वंशे भवानपि ॥४१
अष्टौ चाङ्गिरसः पुत्रा वारुणास्तेऽप्यवारुणाः ।
बृहस्पतिरुचथ्यश्च वयस्यः शान्तिरेव च ॥ ४२
घोरो विरूपः संवर्तः सुधन्वा चाष्टमः स्मृतः ।
एतेऽष्टौ वह्निजाः सर्वे ज्ञाननिष्ठा निरामयाः ॥४३
ब्राह्मणाश्च कवेः पुत्रा वारुणास्तेऽप्युदाहृताः ।
अष्टौ प्रसवजैर्युक्ता गुणैर्ब्रह्मविदः शुभाः ॥ ४४
कविः काव्यश्च विष्णुश्च बुद्धिमानुशना तथा ।
भृगुश्च वरुणश्चैव काश्यपोऽग्निश्च धर्मवित् ॥ ४५
अष्टौ कविसुता ह्येते सर्वमेभिर्जगत्ततम् ।
प्रजापतय एते हि प्रजानां यैरिमाः प्रजाः ॥४६
एवमङ्गिरसश्चैव कवेश्च प्रसवान्वयैः ।
भृगोश्च भृगुशार्दूल वंशजैः सततं जगत् ॥ ४७
वरुणश्चादितो विप्र जग्राह प्रभुरीश्वरः ।
कविं तात भृगुं चापि तस्मात्तौ वारुणौ स्मृतौ ४८
जग्राहाङ्गिरसं देवः शिखी तस्माद्धुताशनः ।
तस्मादाङ्गिरसा ज्ञेयाः सर्व एव तदन्वयाः ॥४९
ब्रह्मा पितामहः पूर्वं देवताभिः प्रसादितः ।
इमे नः संतरिष्यन्ति प्रजाभिर्जगदीश्वराः ॥ ५०
सर्वे प्रजानां पतयः सर्वे चातितपस्विनः ।
त्वत्प्रसादादिमं लोकं धारयिष्यन्ति शाश्वतं ॥५१
तथैव वंशकर्तारस्तव तेजोविवर्धनाः ।
भवेयुर्वेदविदुषः सर्वे च कृतिनस्तथा ॥ ५२
देवपक्षचराः सौम्याः प्राजापत्या महर्षयः ।
अनन्तं ब्रह्म सत्यं च तपश्च परमं भुवि ॥ ५३
सर्वे हि वयमेते च तवैव प्रसवाः प्रभो ।
देवानां ब्राह्मणानां च त्वं हि कर्ता पितामह ॥५४
मारीचमादितः कृत्वा सर्वे चैवाथ भार्गवाः ।
अपत्यानीति संप्रेक्ष्य क्षमयाम पितामह ॥ ५५
अथ स्वेनैव रूपेण प्रजनिष्यन्ति वै प्रजाः ।
स्थापयिष्यन्ति चात्मानं युगादिनिधने तथा ॥५६
इत्युक्तः स तदा तैस्तु ब्रह्मा लोकपितामहः ।
तथेत्येवाब्रवीत्प्रीतस्तेऽपि जग्मुर्यथागतम् ॥ ५७
एवमेतत्पुरावृत्तं तस्य यज्ञे महात्मनः ।
देवश्रेष्ठस्य लोकादौ वारुणीं बिभ्रतस्तनुम् ॥ ५८
अग्निर्ब्रह्मा पशुपतिः शर्वो रुद्रः प्रजापतिः ।
अग्नेरपत्यमेतद्वै सुवर्णमिति धारणा ॥ ५९
अग्न्यभावे च कुरुते वह्निस्थानेषु काञ्चनम् ।
जामदग्न्यप्रमाणज्ञो वेदश्रुतिनिदर्शनात् ॥ ६०
कुशस्तम्बे जुहोत्यग्निं सुवर्णे तत्र च स्थिते ।
वल्मीकस्य वपायां च कर्णे वाजस्य दक्षिणे ॥६१
शकटोर्व्यां परस्याप्सु ब्राह्मणस्य करे तथा ।
हुते प्रीतिकरीमृद्धिं भगवांस्तत्र मन्यते ॥ ६२
तस्मादग्निपराः सर्वे देवता इति शुश्रुम ।
ब्रह्मणो हि प्रभूतोऽग्निरग्नेरपि च काञ्चनम् ॥ ६३
तस्माद्ये वै प्रयच्छन्ति सुवर्णं धर्मदर्शिनः ।
देवतास्ते प्रयच्छन्ति समस्ता इति नः श्रुतम् ॥ ६४
तस्य वा तपसो लोकान्गच्छतः परमां गतिम् ।
स्वर्लोके राजराज्येन सोभिषिच्येत भार्गव ॥ ६५
आदित्योदयने प्राप्ते विधिमन्त्रपुरस्कृतम् ।
ददाति काञ्चनं यो वै दुःस्वप्नं प्रतिहन्ति सः ॥६६
ददात्युदितमात्रे यस्तस्य पाप्मा विधूयते ।
मध्याह्ने ददतो रुक्मं हन्ति पापमनागतम् ॥६७
ददाति पश्चिमां सन्ध्यां यः सुवर्णं यतव्रतः ।
ब्रह्मवाय्वग्निसोमानां सालोक्यमुपयाति सः ॥ ६८
सेन्द्रेषु चैव लोकेषु प्रतिष्ठां विन्दते शुभाम् ।
इह लोके यशः प्राप्य शान्तपाप्मा च मोदते ॥ ६९

कवेः पुत्रा वारुणा इत्यनेन स्वीयभागोपि कविर्ब्रह्मणा वरुणाय समर्पित इत्युन्नेयम् ॥ ४४ ॥ नोऽस्मान् संतरिष्यन्ति संतारयिष्यन्ति ॥ ५० ॥ विदुषो विद्वांसः ॥ ५२ ॥ आदिनिधने उत्पत्तिप्रलययोरन्तराले ॥ ५६ ॥ देवश्रेष्ठस्य रुद्रस्य ॥ ५८ ॥ धारणा निश्चयः ॥ ५९ ॥ ब्राह्मणपाण्यजकर्णदर्भस्तम्बाप्सु काष्ठेष्विवेतानि श्रुतौ दृश्यन्ते । वपायां रन्ध्रे ॥ ६१ ॥ शकटोर्वी तु शैलन्तरात् ज्ञेया । परस्य तीर्थादेरप्सु ॥ ६२ ॥ सुवर्णं ये प्रयच्छन्ति नराः शुद्धेन चेतसेति ध. पाठः ॥ ६४ ॥

ततः संपद्यतेऽन्येषु लोकेष्वप्रतिमः सदा ।
अनावृतगतिश्चैव कामचारो भवत्युत ॥ ७०
न च क्षरति तेभ्यश्च यशश्चैवाप्नुते महत् ।
सुवर्णमक्षयं दत्त्वा लोकांश्चाप्नोति पुष्कलान् ॥ ७१
यस्तु संजनयित्वाऽग्निमादित्योदयनं प्रति ।
दद्याद्वै व्रतमुद्दिश्य सर्वकामान्समश्नुते ॥ ७२
अग्निरित्येव तत्प्राहुः प्रदानं च सुखावहम् ।
यथेष्टगुणसंवृत्तं प्रवर्तकमिति स्मृतम् ॥ ७३
एषा सुवर्णस्योत्पत्तिः कथिता ते मयाऽनघ ।
कार्तिकेयस्य च विभो तद्विद्धि भृगुनन्दन ॥ ८४
कार्तिकेयस्तु संवृद्धः कालेन महता तदा ।
देवैः सेनापतित्वेन वृतः सेन्द्रैर्भृगूद्वह ॥ ७५
जघान तारकं चापि दैत्यमन्यांस्तथाऽसुरान् ।
त्रिदशेन्द्राज्ञया ब्रह्मँल्लोकानां हितकाम्यया ॥ ७६
सुवर्णदाने च मया कथितास्ते गुणा विभो ।
तस्मात्सुवर्णं विप्रेभ्यः प्रयच्छ ददतांवर ॥ ७७
भीष्म उवाच ।
इत्युक्तः स वसिष्ठेन जामदग्न्यः प्रतापवान् ।
ददौ सुवर्णं विप्रेभ्यो व्यमुच्यत च किल्बिषात् ॥ ७८
एतत्ते सर्वमाख्यातं सुवर्णस्य महीपते ।
प्रदानस्य फलं चैव जन्म चास्य युधिष्ठिर ॥ ७९
तस्मात्त्वमपि विप्रेभ्यः प्रयच्छ कनकं बहु ।
ददत्सुवर्णं नृपते किल्बिषाद्विप्रमोक्ष्यसि ॥ ८०

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि द्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥

## त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥ १३३ ॥

भीष्मेण युधिष्ठिरंप्रति कुमारोत्पत्तिप्रकारस्य देवादिभिस्तस्मै क्रीडनकादिदानस्य तारकासुरवधादेश्च कथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
उक्ताः पितामहेनेह सुवर्णस्य विधानतः ।
विस्तरेण प्रदानस्य ये गुणाः श्रुतिलक्षणाः ॥ १
यत्तु कारणमुत्पत्तेः सुवर्णस्य प्रकीर्तितम् ।
स कथं तारकः प्राप्तो निधनं तद्ब्रवीहि मे ॥ २
उक्तः स दैवतानां हि अवध्य इति पार्थिव ।
कथं तस्याभवन्मृत्युर्विस्तरेण प्रकीर्तय ॥ ३
एतदिच्छाम्यहं श्रोतुं त्वत्तः कुरुकुलोद्वह ।
कार्त्स्न्येन तारकवधं परं कौतूहलं हि मे ॥ ४
भीष्म उवाच ।
विपन्नकृत्या राजेन्द्र देवता ऋषयस्तथा ।
कृत्तिकाश्चोदयामासुरपत्यभरणाय वै ॥ ५
न देवतानां काचिद्धि समर्था जातवेदसः ।
एता हि शक्तास्तं गर्भं संधारयितुमोजसा ॥ ६
षण्णां तासां ततः प्रीतः पावको गर्भधारणात् ।
स्वेन तेजोविसर्गेण वीर्येण परमेण च ॥ ७
तास्तु षट् कृत्तिका गर्भं पुपुषुर्जातवेदसः ।
षट्सु वर्त्मसु तेजोऽग्नेः सकलं निहितं प्रभो ॥ ८
ततस्ता वर्धमानस्य कुमारस्य महात्मनः ।
तेजसाऽभिपरीताङ्ग्यो न क्वचिच्छर्म लेभिरे ॥ ९
ततस्तेजःपरीताङ्ग्यः सर्वाः काल उपस्थिते ।
समं गर्भं सुषुविरे कृत्तिकास्ता नरर्षभ ॥ १०
ततस्तं षडधिष्ठानं गर्भमेकत्वमागतम् ।
पृथिवी प्रतिजग्राह कृत्तिकानां समीपतः ॥ ११
स गर्भो दिव्यसंस्थानो दीप्तिमान्पावकप्रभः ।
दिव्यं शरवणं प्राप्य ववृधे प्रियदर्शनः ॥ १२
ददृशुः कृत्तिकास्तं तु बालमर्कसमद्युतिम् ।
जातस्नेहाश्च सौहार्दात्पुपुषुः स्तन्यविस्रवैः ॥ १३

---

तेभ्यो लोकेभ्यो न च क्षरति ॥ ७१ ॥ द्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥

श्रुतिर्वेदो लक्षण ज्ञापकं येषां ते श्रुतिलक्षणाः । श्रुत्युक्ता इत्यर्थः ॥ १ ॥ विपन्नं कृत्यं येषां ते गङ्गया गर्भे त्यक्ते सति नष्टकार्याः ॥ ५ ॥ गर्भं संधारयितुमित्यपकृष्यते पूर्वार्धेपि ॥ ६ ॥ प्रीतस्ताभिर्गरुडीरूपेण तद्रेतः पीत्वा षोढा गर्भे धृते सतीति शेषः ॥ ७ ॥ वर्त्मसु गर्भागमनमार्गेषु योनिष्वित्यर्थः ॥ ८ ॥

अभवत्कार्तिकेयः स त्रैलोक्ये सचराचरे ।
स्कन्नत्वात्स्कन्दतां प्राप्तो गुहावासाद्गुहोऽभवत् १४
ततो देवास्त्रयस्त्रिंशद्दिशश्च सदिगीश्वराः ।
रुद्रो धाता च विष्णुश्च यमः पूषाऽर्यमा भगः ॥१५
अंशो मित्रश्च साध्याश्च वासवो वसवोऽश्विनौ ।
आपो वायुर्नभश्चन्द्रो नक्षत्राणि ग्रहा रविः ॥ १६
पृथग्भूतानि चान्यानि यानि देवगणानि वै ।
आजग्मुस्तेऽद्भुतं द्रष्टुं कुमारं ज्वलनात्मजम् ॥ १७
ऋषयस्तुष्टुवुश्चैव गन्धर्वाश्च जगुस्तथा
षडाननं कुमारं तु द्विषडक्षं द्विजप्रियम् ॥ १८
पीनांसं द्वादशभुजं पावकादित्यवर्चसम्
शयानं शरगुल्मस्थं दृष्ट्वा देवाः सहर्षिभिः
लेभिरे परमं हर्षं मेनिरे चासुरं हतम् ॥ १९
ततो देवाः प्रियाण्यस्य सर्व एव समाहरन्
क्रीडतः क्रीडनीयानि ददुः पक्षिगणांश्च ह ॥२०
सुपर्णोऽस्य ददौ पुत्रं मयूरं चित्रबर्हिणम्
राक्षसाश्च ददुस्तस्मै वराहमहिषावुभौ ॥ २१
कुक्कुटं चाग्निसंकाशं प्रददावरुणः स्वयम् ।
चन्द्रमाः प्रददौ मेषमादित्यो रुचिरां प्रभाम् २२
गवां माता च गा देवी ददौ शतसहस्रशः ।
छागमग्निर्गुणोपेतमिला पुष्पफलं बहु ॥ २३
सुधन्वा शकटं चैव रथं चाक्षितकूबरम् ।
वरुणो वारुणान्दिव्यान्सगजान्प्रददौ शुभान् २४
सिंहान्सुरेन्द्रो व्याघ्रांश्च द्विपानन्यांश्च दंष्ट्रिणः ।
श्वापदांश्च बहून्घोरान्शस्त्राणि विविधानि च॥२५
राक्षसासुरसङ्घाश्च अनुजग्मुस्तमीश्वरम् ॥ २६
वर्धमानवधोपायं प्रार्थयामास तारकः ।
उपायैर्बहुभिर्हन्तुं नाशकच्चापि तं विभुम् ॥ २७
सैनापत्येन तं देवाः पूजयित्वा गुहालयम् ।
शशंसुर्विप्रकारं तं तस्मै तारककारितम् ॥ २८
स विवृद्धो महावीर्यो देवसेनापतिः प्रभुः ।
जघानामोघया शक्त्या दानवं तारकं गुहः ॥२९
तेन तस्मिन्कुमारेण क्रीडता निहतेऽसुरे
सुरेन्द्रः स्थापितो राज्ये देवानां पुनरीश्वरः ॥३०
स सेनापतिरेवाथ बभौ स्कन्दः प्रतापवान् ।
ईशो गोप्ता च देवानां प्रियकृच्छङ्करस्य च ॥ ३१
हिरण्यमूर्तिर्भगवानेष एव च पावकिः ।
सदा कुमारो देवानां सैनापत्यमवाप्तवान् ॥ ३२
तस्मात्सुवर्णं मङ्गल्यं रत्नमक्षय्यमुत्तमम् ।
सहजं कार्तिकेयस्य वह्नेस्तेजः परं मतम् ॥ ३३
एवं रामाय कौरव्य वसिष्ठोऽकथयत्पुरा ।
तस्मात्सुवर्णदानाय प्रयतस्व नराधिप ॥ ३४
रामः सुवर्णं दत्त्वा हि विमुक्तः सर्वकिल्बिषैः ।
त्रिविष्टपे महत्स्थानमवापासुलभं नरैः ॥ ३५

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥ १३३ ॥

## चतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥

भीष्मेण युधिष्ठिरंप्रति प्रतिपदादितिथिषु श्राद्धकरणस्य प्रत्येकं फलकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
चातुर्वर्ण्यस्य धर्मात्मन्धर्माः प्रोक्ता यथा त्वया ।
तथैव मे श्राद्धविधिं कृत्स्नं प्रब्रूहि पार्थिव ॥ १
वैशंपायन उवाच ।
युधिष्ठिरेणैवमुक्तो भीष्मः शान्तनवस्तदा ।
इमं श्राद्धविधिं कृत्स्नं वक्तुं समुपचक्रमे ॥ २
भीष्म उवाच ।
शृणुष्वावहितो राजञ्श्राद्धकर्मविधिं शुभम् ।
धन्यं यशस्यं पुत्रीयं पितृयज्ञं परंतप ॥ ३
देवासुरमनुष्याणां गन्धर्वोरगरक्षसाम् ।
पिशाचकिन्नराणां च पूज्या वै पितरः सदा ॥४
पितॄन्पूज्यादितः पश्चाद्देवतास्तर्पयन्ति वै ।

दिव्यान्भुजङ्गानिति थ. ध. पाठः ॥ २४ ॥ त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥ १३३ ॥

• आदितः अमावास्यायां । पश्चात्प्रतिपदि ॥ ५ ॥

तस्मात्तान्सर्वयत्नेन पुरुषः पूजयेत्सदा ॥ ५
अन्वाहार्यं महाराज पितॄणां श्राद्धमुच्यते ।
तस्माद्विशेषविधिना विधिः प्रथमकल्पितः ॥ ६
सर्वेष्वहःसु प्रीयन्ते कृते श्राद्धे पितामहाः ।
'पिण्डान्वाहार्यकं श्राद्धं कुर्यान्मासानुमासिकम् ।
पितृयज्ञं तु निर्वर्त्य विप्रश्चन्द्रक्षयेऽग्निमान् ॥ ७
पिण्डानां मासिकश्राद्धमन्वाहार्यं विदुर्बुधाः ।
तदामिषेण कुर्वीत प्रयतः प्राञ्जलिः शुचिः ॥'८
प्रवक्ष्यामि तु ते सर्वास्तिथ्यांतिथ्यां दिने गुणान् ।
येष्वहःसु कृतैः श्राद्धैर्यत्फलं प्राप्यतेऽनघ ।
तत्सर्वं कीर्तयिष्यामि यथावत्तन्निबोध मे ॥ ९
पितॄनर्च्य प्रतिपदि प्राप्नुयात्स्वगृहे स्त्रियः ।
अभिरूपप्रजायिन्यो दर्शनीया बहुप्रजाः ॥ १०
स्त्रियो द्वितीयां जायन्ते तृतीयायां तु वाजिनः ।
चतुर्थ्यां क्षुद्रपशवो भवन्ति बहवो गृहे ॥ ११
पञ्चम्यां बहवः पुत्रा जायन्ते कुर्वतां नृप ।
कुर्वाणास्तु नराः षष्ठ्यां भवन्ति द्युतिभागिनः १२
कृषिभागी भवेच्छ्राद्धं कुर्वाणः सप्तमीं नृप
अष्टम्यां तु प्रकुर्वाणो वाणिज्ये लाभमाप्नुयात् १३
नवम्यां कुर्वतः श्राद्धं भवत्येकशफं बहु ।
विवर्धन्ते तु दशमीं गावः श्राद्धानि कुर्वतः ॥१४
कुप्यभागी भवेन्मर्त्यः कुर्वन्नेकादशीं नृप ।
ब्रह्मवर्चस्विनः पुत्रा जायन्ते तस्य वेश्मनि ॥ १५
द्वादश्यामीहमानस्य नित्यमेव प्रदृश्यते ।
रजतं बहुवित्तं च सुवर्णं च मनोरमम् ॥ १६
ज्ञातीनां तु भवेच्छ्रेष्ठः कुर्वञ्श्राद्धं त्रयोदशीम् ॥१७
अवश्यं तु युवानोऽस्य प्रमीयन्ते नरा गृहे ।
युद्धभागी भवेन्मर्त्यः कुर्वञ्श्राद्धं चतुर्दशीम् ॥ १८
अमावास्यां तु निवपन्सर्वकामानवाप्नुयात् ॥ १९
कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीम् ।
श्राद्धकर्मणि तिथ्यस्तु प्रशस्ता न तथेतराः ॥ २०
यथा चैवापरः पक्षः पूर्वपक्षाद्विशिष्यते ।
तथा श्राद्धस्य पूर्वाह्णादपराह्णो विशिष्यते ॥ २१

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि चतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥

## पञ्चत्रिंशदधिकशततमोऽध्यायः ॥ १३५ ॥

भीष्मेण युधिष्ठिरंप्रति श्राद्धे तिलमांसविशेषदानस्य फलविशेषकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
किंस्विद्दत्तं पितृभ्यो वै भवत्यक्षयमीश्वर ।
किंस्विद्बहुफलं प्रोक्तं किमानन्त्याय कल्पते ॥ १
भीष्म उवाच ।
हवींषि श्राद्धकल्पे तु यानि श्राद्धविदो विदुः ।
तानि मे शृणु काम्यानि फलं चैषां युधिष्ठिर ॥ २
तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलैस्तथा ।
दत्तेन मासं प्रीयन्ते श्राद्धेन पितरो नृप ॥ ३
वर्धमानतिलं श्राद्धमक्षयं मनुरब्रवीत् ।
सर्वेष्वेव तु भोज्येषु तिलाः प्राधान्यतः स्मृताः ॥४
द्वौ मासौ तु भवेत्तृप्तिर्मत्स्यैः पितृगणस्य ह ।
त्रीन्मासानाविकेनाहुश्चतुर्मासं शशेन ह ॥ ५
आजेन मासान्प्रीयन्ते पञ्चैव पितरो नृप ।
वाराहेण तु षण्मासान्सप्त वै शाकुलेन तु ॥ ६
मासानष्टौ पार्षतेन रौरवेण नव प्रभो ।
गवयस्य तु मांसेन तृप्तिः स्याद्दशमासिकी ॥ ७
मांसेनैकादश प्रीतिः पितॄणां माहिषेण तु ।
गव्येन दत्ते श्राद्धे तु संवत्सरमिहोच्यते ॥ ८

तच्चामिषेण विधिनेति क. ट. थ. ध. पाठः ॥ ६ ॥ गृहे स्त्रियो भार्याः ॥ १० ॥ स्त्रियो दुहितरः ॥ ११ ॥ भवन्ति द्यूतभागिन इति ट. थ. ध. पाठः ॥ १२ ॥ कुप्य वस्त्रपात्रादि ॥ १५ ॥ चतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥

पृषतश्चित्रमृगस्तदीयं पार्षतम् । रुरुः कृष्णमृगस्तदीयं रौरवम् ॥ ७ ॥

यथा गव्यं तथा युक्तं पायसं सर्पिषा सह ।
वाध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी ॥ ९
आनन्त्याय भवेद्दत्तं खड्गमांसं पितृक्षये ।
कालशाकं च लौहं चाप्यानन्त्यं छाग उच्यते॥१०
गाथाश्चाप्यत्र गायन्ति पितृगीता युधिष्ठिर ।
सनत्कुमारो भगवान्पुरा मय्यभ्यभाषत ॥ ११
अपि नः स्वकुले जायाद्यो नो दद्यात्त्रयोदशीम् ।
मघासु सर्पिःसंयुक्तं पायसं दक्षिणायने ॥ १२
आजेन वाऽपि लौहेन मघास्वेव यतव्रतः ।
हस्तिच्छायासु विधिवत्कर्णव्यजनवीजितम् ॥ १३
एष्टव्या बहवः पुत्रा यद्येकोपि गयां व्रजेत् ।
यत्रासौ प्रथितो लोकेष्वक्षय्यकरणो वटः ॥ १४
आपो मूलं फलं मांसमन्नं वाऽपि पितृक्षये ।
यत्किंचिन्मधुसंमिश्रं तदानन्त्याय कल्पते ॥ १५

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि पञ्चत्रिंशदधिकशततमोऽध्यायः ॥ १३५ ॥

---

## षट्त्रिंशदधिकशततमोऽध्यायः ॥ १३६ ॥

भीष्मेण युधिष्ठिरंप्रत्यश्विन्यादिनक्षत्रेषु श्राद्धकरणस्य फलविशेषकथनम् ॥ १ ॥

भीष्म उवाच ।
यमस्तु यानि श्राद्धानि प्रोवाच शशबिन्दवे ।
तानि मे शृणु काम्यानि नक्षत्रेषु पृथक्पृथक् ॥ १
श्राद्धं यः कृत्तिकायोगे कुर्वीत सततं नरः ।
अग्नीनाधाय सापत्यो यजेत विगतज्वरः ॥ २
अपत्यकामो रोहिण्यां तेजस्कामो मृगोत्तमे ।
क्रूरकर्मा ददच्छ्राद्धमार्द्रायां मानवो भवेत् ॥ ३
कृषिभागी भवेन्मर्त्यः कुर्वञ्श्राद्धं पुनर्वसौ ।
पुष्टिकामोऽथ पुष्येण श्राद्धमीहेत मानवः ॥ ४
आश्लेषायां ददच्छ्राद्धं धीरान्पुत्रान्प्रजायते ।
ज्ञातीनां तु भवेच्छ्रेष्ठो मघासु श्राद्धमावपन् ॥ ५
फल्गुनीषु ददच्छ्राद्धं सुभगः श्राद्धदो भवेत् ।
अपत्यभागुत्तरासु हस्तेन फलभाग्भवेत् ॥ ६
चित्रायां तु ददच्छ्राद्धं लभेद्रूपवतः सुतान् ।
स्वातियोगे पितॄनर्च्य वाणिज्यमुपजीवति ॥ ७
बहुपुत्रो विशाखासु पुत्रमीहन्भवेन्नरः ।
अनुराधासु कुर्वाणो राज्यचक्रं प्रवर्तयेत् ॥ ८
आधिपत्यं व्रजेन्मर्त्यो ज्येष्ठायामपवर्जयन् ।
नरः कुरुकुलश्रेष्ठ ऋद्धो दमपुरःसरः ॥ ९
मूले त्वारोग्यमृच्छेत यशोऽषाढासु चोत्तमम् ।
उत्तरासु त्वषाढासु वीतशोकश्चरेन्महीम् ॥ १०
श्राद्धं त्वभिजितौ कुर्वन्विद्यां श्रेष्ठामवाप्नुयात् ।
श्रवणेषु ददच्छ्राद्धं प्रेत्य गच्छेत्स तद्गतिम् ॥११
राज्यभागी धनिष्ठायां भवेत नियतं नरः ।
नक्षत्रे वारुणे कुर्वन्भिषक्सिद्धिमवाप्नुयात् ॥ १२
पूर्वप्रोष्ठपदाः कुर्वन्बहून्विन्दत्यजाविकान् ।
उत्तरासु प्रकुर्वाणो विन्दते गाः सहस्रशः ॥ १३
बहुकुप्यकृतं वित्तं विन्दते रेवतीं श्रितः ।
अश्विनीष्वश्वान्विन्देत भरणीष्वायुरुत्तमम् ॥ १४
इमं श्राद्धविधिं श्रुत्वा शशबिन्दुस्तथाऽकरोत् ।
अक्लेशेनाजयच्चापि महीं सोऽनुशशास ह ॥ १५

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि षट्त्रिंशदधिकशततमोऽध्यायः ॥ १३६ ॥

---

वाध्रीणसः वध्र्या स्यूतनासिको महोक्षः । पक्षिविशेषोऽजविशेषश्चेत्यन्ये ॥ ९ ॥ पितृक्षये मृततिथौ । लौहं काञ्चनवृक्षजं पुष्पादिशाकम् ॥ १० ॥ वीजितं पायसादिकं दद्यादिति पूर्वेणान्वयः ॥ १३ ॥ पञ्चत्रिंशदधिकशततमोऽध्यायः ॥ १३५ ॥

आर्द्रायां मानदो भवेदिति थ. पाठः ॥ ३ ॥ फलभाक् इष्टार्थभाक् ॥ ६ ॥ वारुणे शतभिषजि ॥ १२ ॥ अश्वाश्चाश्वयुजे चेतीति ध. पाठः ॥ १४ ॥ षट्त्रिंशदधिकशततमोऽध्यायः ॥ १३६ ॥

## सप्तत्रिंशदधिकशततमोऽध्यायः ॥ १३७ ॥

भीष्मेण युधिष्ठिरंप्रति श्राद्धे निमन्त्रणार्हानर्हाणां लक्षणनिरूपणम् ॥ १ ॥

युधिष्ठिर उवाच ।
कीदृशेभ्यः प्रदातव्यं भवेच्छ्राद्धं पितामह ।
द्विजेभ्यः कुरुशार्दूल तन्मे व्याख्यातुमर्हसि ॥ १
भीष्म उवाच ।
ब्राह्मणान्न परीक्षेत क्षत्रियो दानधर्मवित् ।
दैवे कर्मणि पित्र्ये तु न्याय्यमाहुः परीक्षणम् ॥ २
देवताः पावयन्तीह दैवेनैवेह तेजसा ।
उपेत्य तस्माद्देवेभ्यः सर्वेभ्यो दापयेन्नरः ॥ ३
श्राद्धे त्वथ महाराज परीक्षेद्ब्राह्मणान्बुधः ।
कुलशीलवयोरूपैर्विद्ययाऽभिजनेन च ॥ ४
तेषामन्ये पङ्क्तिदूष्यास्तथाऽन्ये पङ्क्तिपावनाः ।
अपाङ्क्त्यास्तु ये राजन्कीर्तयिष्यामि ताञ्शृणु ॥५
कितवो भ्रूणहा यक्ष्मी पशुपालो निराकृतिः ।
ग्रामप्रेष्यो वार्धुषिको गायनः सर्वविक्रयी ॥ ६
अगारदाही गरदः कुण्डाशी सोमविक्रयी ।
सामुद्रिको राजभृत्यस्तैलिकः कूटकारकः ॥ ७
पित्रा विभजमानश्च यस्य चोपपतिर्गृहे ।
अभिशस्तस्तथा स्तेनः शिल्पं यश्चोपजीवति ॥ ८
पर्वकारश्च सूची च मित्रध्रुक् पारदारिकः ।
अव्रतानामुपाध्यायः काण्डपृष्ठस्तथैव च ॥ ९
श्वभिश्च यः परिक्रामेद्यः शुना दष्ट एव च ।
परिवित्तिश्च यश्च स्यादुश्चर्मा गुरुतल्पगः ।
कुशीलवो देवलको नक्षत्रैर्यश्च जीवति ॥ १०
ईदृशैर्ब्राह्मणैर्भुक्तमपाङ्क्त्यैर्युधिष्ठिर ।
रक्षांसि गच्छते हव्यमित्याहुर्ब्रह्मवादिनः ॥ ११
श्राद्धं भुक्त्वा त्वधीयीत वृषलीतल्पगश्च यः ।
पुरीषे तस्य ते मासं पितरस्तस्य शेरते ॥ १२
सोमविक्रयिणे विष्ठा भिषजे पूयशोणितम् ॥ १३
नष्टं देवलके दत्तमप्रतिष्ठं च वार्धुषे ।
यत्तु वाणिजके दत्तं नेह नामुत्र तद्भवेत् ।
भस्मनीव हुतं हव्यं तथा पौनर्भवे द्विजे ॥ १४
ये तु धर्मव्यपेतेषु चारित्रापगतेषु च ।
हव्यं कव्यं प्रयच्छन्ति येषां तत्प्रेत्य नश्यति ॥ १५
ज्ञानपूर्वं तु ये तेभ्यः प्रयच्छन्त्यल्पबुद्धयः ।
पुरीषं भुञ्जते तस्य पितरः प्रेत्य निश्चयः ॥ १६
एतानिमान्विजानीयादपाङ्क्त्यान्द्विजाधमान् ।
शूद्राणामुपदेशं च ये कुर्वन्त्यल्पचेतसः ॥ १७
षष्टिं काणः शतं षण्ढः श्वित्री यावत्प्रपश्यति ।
पङ्क्त्यां समुपविष्टायां तावद्दूषयते नृप ॥ १८
यद्वेष्टितशिरा भुङ्क्ते यद्भुङ्क्ते दक्षिणामुखः ।
सोपानत्कश्च यद्भुङ्क्ते सर्वं विद्यात्तदासुरम् ॥ १९
असूयता च यद्दत्तं यच्च श्रद्धाविवर्जितम् ।
सर्वं तदसुरेन्द्राय ब्रह्मा भागमकल्पयत् ॥ २०
श्वानश्च पङ्क्तिदूषाश्च नावेक्षेरन्कथंचन ।
तस्मात्परिसृते दद्यात्तिलांश्चान्ववकीरयेत् ॥ २१
तिलैर्विरहितं श्राद्धं कृतं क्रोधवशेन च ।
यातुधानाः पिशाचाश्च विप्रलुम्पन्ति तद्धविः ॥२२
अपाङ्क्तो यावतः पाङ्क्तान्भुञ्जानाननुपश्यति ।
तावत्फलाद्भ्रंशयति दातारं तस्य बालिशम् ॥ २३
इमे तु भरतश्रेष्ठ विज्ञेयाः पङ्क्तिपावनाः ।
हेतुतस्तान्प्रवक्ष्यामि परीक्षस्वेह तान्द्विजान् ॥२४
विद्यावेदव्रतस्नाता ब्राह्मणाः सर्व एव हि ।
सदाचारपराश्चैव विज्ञेयाः सर्वपावनाः ॥ २५
पाङ्क्त्यांस्तु प्रवक्ष्यामि ज्ञेयास्ते पङ्क्तिपावनाः ।

---

देवेभ्यो देवानुद्दिश्य । सर्वेभ्यो विप्रेभ्यः ॥ ३ ॥ तेषामन्ये पङ्क्तिदूषा इति झ. पाठः ॥ ५ ॥ निराकृतिरध्ययनादिशून्यः । वार्धुषिको वृद्ध्यर्थं धनप्रयोक्ता ॥ ६ ॥ कुण्डाशी भगभक्षः । तैलिकस्तत्कर्मकृत् । कूटसाक्षिक इति ट. पाठः ॥ ७ ॥ पित्रा विवदमानश्चेति झ. पाठः ॥ ८ ॥ पर्वकारो वेषान्तरधारी । सूची पिशुनः । अव्रताना शूद्राणाम् । काण्डपृष्ठः शस्त्राजीवी ॥ ९ ॥ श्वभिः परिक्रामेन्मृगयां कुर्वन् ॥ १० ॥ षष्टिंशतं पुरुषानिति शेषः ॥ १८ ॥ असुरेन्द्राय बलये ॥ २० ॥ परिसृते आवृतदेशे ॥ २१ ॥ तिलदानेप्यदायादा ये च क्रोधवशा गणाः । यातुधानाः पिशाचाश्च न प्रलुंपन्ति तद्धविरिति थ. ध. पाठः ॥ २२ ॥

त्रिणाचिकेतः पञ्चाग्निस्त्रिसुपर्णः षडङ्गवित् ॥ २६
ब्रह्मदेयानुसंतानश्छन्दोगो ज्येष्ठसामगः ।
मातापित्रोर्यश्च वश्यः श्रोत्रियो दशपूरुषः ॥ २७
ऋतुकालाभिगामी च धर्मपत्नीषु यः सदा ।
वेदविद्याव्रतस्नातो विप्रः पङ्क्तिं पुनात्युत ॥ २८
अथर्वशिरसोऽध्येता ब्रह्मचारी यतव्रतः ।
सत्यवादी धर्मशीलः स्वकर्मनिरतश्च सः ॥ २९
ये च पुण्येषु तीर्थेषु अभिषेककृतश्रमाः ।
मखेषु च समन्त्रेषु भवन्त्यवभृथप्लुताः ॥ ३०
अक्रोधना ह्यचपलाः क्षान्ता दान्ता जितेन्द्रियाः ।
सर्वभूतहिता ये च श्राद्धेष्वेतान्निमन्त्रयेत् ॥ ३१
एतेषु दत्तमक्षय्यमेते वै पङ्क्तिपावनाः ।
इमे परे महाभागा विज्ञेयाः पङ्क्तिपावनाः ॥ ३२
यतयो मोक्षधर्मज्ञा योगिनश्चरितव्रताः
'पञ्चरात्रविदो मुख्यास्तथा भागवताः परे ॥३३
वैखानसाः कुलश्रेष्ठा वैदिकाचारचारिणः ।'
ये चेतिहासं प्रयताः श्रावयन्ति द्विजोत्तमान् ॥३४
ये च भाष्यविदः केचिद्ये च व्याकरणे रताः ।
अधीयते पुराणं ये धर्मशास्त्राण्यथापि च ॥ ३५
अधीत्य च यथान्यायं विधिवत्तस्य कारिणः ।
उपपन्नो गुरुकुले सत्यवादी सहस्रशः ॥ ३६
अग्र्याः सर्वेषु वेदेषु सर्वप्रवचनेषु च ।
यावदेते प्रपश्यन्ति पङ्क्त्यास्तावत्पुनन्त्युत ॥ ३७
ततो हि पावनात्पङ्क्त्याः पङ्क्तिपावन उच्यते ।
क्रोशादर्धतृतीयाच्च पावयेदेक एव हि ।
ब्रह्मदेयानुसंतान इति ब्रह्मविदो विदुः ॥ ३८
अनृत्विगनुपाध्यायः स चेदग्रासनं व्रजेत् ।
ऋत्विग्भिरभ्यनुज्ञातः पङ्क्त्या हरति दुष्कृतम् ॥३९
अथ चेद्वेदवित्सर्वैः पङ्क्तिदोषैर्विवर्जितः ।
न च स्यात्पतितो राजन्पङ्क्तिपावन एव सः ॥४०

तस्मात्सर्वप्रयत्नेन परीक्ष्यामन्त्रयेद्द्विजान् ।
स्वकर्मनिरतान्दान्तान्कुले जातान्बहुश्रुतान् ॥ ४१
यस्य मित्रप्रधानानि श्राद्धानि च हवींषि च ।
न प्रीणन्ति पितॄन्देवान्स्वर्गं च न स गच्छति ॥४२
यश्च श्राद्धे कुरुते संगतानि
न देवयानेन पथा स याति ।
स वै मुक्तः पिप्पलं बन्धनाद्वा
स्वर्गाल्लोकाच्च्यवते श्राद्धमित्रः ॥ ४३
तस्मान्मित्रं श्राद्धकृन्नाद्रियेत
दद्यान्मित्रेभ्यः संग्रहार्थं धनानि ।
यन्मन्यते नैव शत्रुं न मित्रं
तं मध्यस्थं भोजयेद्धव्यकव्ये ॥ ४४
यथोषरे बीजमुप्तं न रोहे-
न्नचावप्ता प्राप्नुयाद्बीजभागम् ।
एवं श्राद्धं भुक्तमनर्हमाणै-
र्न चेह नामुत्र फलं ददाति ॥ ४५
ब्राह्मणो ह्यनधीयानस्तृणाग्निरिव शाम्यति ।
तस्मै श्राद्धं न दातव्यं न हि भस्मनि हूयते ॥ ४६
संभोजनी नाम पिशाचदक्षिणा
सा नैव देवान्न पितॄनुपैति ।
इहैव सा भ्राम्यति हीनपुण्या
शालान्तरे गौरिव नष्टवत्सा ॥ ४७
यथाऽग्नौ शान्ते घृतमाजुहोति
तन्नैव देवान्न पितॄनुपैति ।
तथा दत्तं नर्तके गायके च
यां चानृते दक्षिणामावृणोति ॥ ४८
उभौ हिनस्ति न भुनक्ति चैषा
या चानृते दक्षिणा दीयते वै ।
आघातिनी गर्हितैषा पतन्ती
तेषां प्रेतान्पातयेद्देवयानात् ॥ ४९

त्रिसुपर्णं चतुष्कपर्दा युवतिः सुपेशा इति बह्वृचानां मन्त्रत्रयं वा ब्रह्ममेतुमाम् इत्यादितैत्तिरीयप्रसिद्धं वा । षडङ्गानि शिक्षादीनि ॥ २६ ॥ ब्रह्म देवः परविद्या वा तदेव देयं येषां तेषामनुसंतानः परंपरायामुत्पन्नः ब्रह्मदेयानुसंतानः ॥ २७ ॥ मुखेषु च सहस्रेष्विति थ. पाठः ॥ ३० ॥ मित्रमेव प्रधानं न योग्यत्वादिकं येषु तानि ॥ ४२ ॥ श्राद्धेन निमित्तेन संगतानि सख्यानि ॥ ४३ ॥ संभोजनी अन्योन्य दीयमाना ॥ ४७ ॥ यां च दक्षिणामनृते अपात्रे आवृणोति प्रयच्छति ॥ ४८ ॥ न भुनक्ति न पालयति । आघातिनी हन्त्री ॥ ४९ ॥
सप्तत्रिंशदधिकशततमोऽध्यायः ॥ १३७ ॥

ऋषीणां सभये नित्यं ये चरन्ति युधिष्ठिर ।
निश्चिताः सर्वधर्मज्ञास्तान्देवा ब्राह्मणान्विदुः॥५०
स्वाध्यायनिष्ठा ऋषयो ज्ञाननिष्ठास्तथैव च ।
तपोनिष्ठाश्च बोद्धव्याः कर्मनिष्ठाश्च भारत ॥ ५१
कव्यानि ज्ञाननिष्ठेभ्यः प्रतिष्ठाप्यानि भारत ।
तत्र ये ब्राह्मणान्केचिन्न सीदन्ति हि ते नराः ॥५२
ये तु निन्दन्ति जल्पेषु न ताञ्श्राद्धेषु भोजयत् ।
ब्राह्मणा निन्दिता राजन्हन्युस्त्रैपुरुषं कुलम् ॥५३
वैखानसानां वचनमृषीणां श्रूयते नृप ।
दूरादेव परीक्षेत ब्राह्मणान्वेदपारगान् ॥ ५४
प्रियो वा यदि वा द्वेष्यस्तेषां तु श्राद्धमावपेत् ॥५५
यः सहस्रं सहस्राणां भोजयदनृचो नरः ।
एकस्तान्मन्त्रवित्प्रीतः सर्वानर्हति भारत ॥ ५६

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि सप्तत्रिंशदधिकशततमोऽध्यायः ॥ १३७ ॥

## अष्टत्रिंशदधिकशततमोऽध्यायः ॥ १३८ ॥

भीष्मेण युधिष्ठिरंप्रति श्राद्धे वर्जनीयधान्यशाकादिप्रतिपादकात्रिनिमिसंवादानुवादः ॥ १ ॥

युधिष्ठिर उवाच ।
केन संकल्पितं श्राद्धं कस्मिन्काले किमात्मकम् ।
भृग्वङ्गिरसिके काले मुनिना कतरेण वा ॥ १
'येन संकल्पितं चैव तन्मे ब्रूहि पितामह ।'
कानि श्राद्धेषु वर्ज्यानि कानि मूलफलानि च ।
धान्यजात्यश्च का वर्ज्यास्तन्मे ब्रूहि पितामह ॥ २
भीष्म उवाच ।
यथा श्राद्धं संप्रवृत्तं यस्मिन्काले सदात्मकम् ।
येन संकल्पितं चैव तन्मे शृणु जनाधिप ॥ ३
स्वायंभुवोऽत्रिः कौरव्य परमर्षिः प्रतापवान् ।
तस्य वंशे महाराज दत्तात्रेय इति स्मृतः ॥ ४
दत्तात्रेयस्य पुत्रोऽभून्निमिर्नाम तपोधनः ।
निमेश्चाप्यभवत्पुत्रः श्रीमान्नाम श्रिया वृतः ॥५
पूर्णे वर्षसहस्रान्ते स कृत्वा दुष्करं तपः ।
कालधर्मपरीतात्मा निधनं समुपागतः ॥ ६
निमिस्तु कृत्वा शौचानि विधिदृष्टेन कर्मणा ।
संतापमगमत्तीव्रं पुत्रशोकपरायणः ॥ ७
अथ कृत्वोपकार्याणि चतुर्दश्यां महामतिः ।
तमेव गणयञ्शोकं विरात्रे प्रत्यबुध्यत ॥ ८
तस्यासीत्प्रतिबुद्धस्य शोकेन व्यथितात्मनः ।
मनः संहृत्य विषये बुद्धिर्विस्तारगामिनी ॥ ९
ततः संचिन्तयामास श्राद्धकल्पं समाहितः ।
यानि तस्यैव भोज्यानि मूलानि च फलानि च१०
उक्तानि यानि चान्यानि यानि चेष्टानि तस्य ह ।
तानि सर्वाणि मनसा विनिश्चित्य तपोधनः ॥११
अमावास्यां महाप्राज्ञो विप्रानानाय्य पूजितान्
दक्षिणावर्तिकाः सर्वा बृसीः स्वयमथाकरोत् ॥१२
सप्त विप्रांस्ततो भोज्ये युगपत्समुपानयत् ।
ऋते च लवणं भोज्यं श्यामाकान्नं ददौ प्रभुः॥१३
दक्षिणाग्रास्ततो दर्भा विष्टरेषु निवेशिताः ।
पादयोश्चैव विप्राणां ये त्वन्नमुपभुञ्जते ॥ १४
कृत्वा च दक्षिणाग्रान्वै दर्भान्स प्रयतः शुचिः ।
प्रददौ श्रीमते पिण्डान्नामगोत्रमुदाहरन् ॥ १५
तत्कृत्वा स मुनिश्रेष्ठो धर्मसंकरमात्मनः ।
पश्चात्तापेन महता तप्यमानोऽभ्यचिन्तयत् ॥१६
अकृतं मुनिभिः पूर्वं किं मयेदमनुष्ठितम् ।
कथं नु शापेन न मां दहेयुर्ब्राह्मणा इति ॥ १७
ततः संचिन्तयामास वंशकर्तारमात्मनः ।

भृग्वङ्गिरसके यदा भृगवोऽङ्गिरसश्च वर्तन्ते नान्ये ॥ १ ॥ श्राद्धेषु कानि कर्माणि वर्ज्यानि ॥ २ ॥ कृत्वा उपकल्प्य । उपकार्याणि मृष्टान्नकशिपूपबर्हणादीनि । विरात्रे प्रभाते ॥ ८ ॥ विषये मनःसंहृत्य शोकं त्यक्त्वेत्यर्थः ॥ ९ ॥ दक्षिणावर्तिकाः प्रदक्षिणावर्तिताः । बृसीः आसनानि ॥ १२ ॥ श्रौते, पित्राद्युद्देशेन दृष्टो धर्मो लोके पुत्रोद्देशेनापि स्वेच्छया कल्पित इति संकरः ॥ १६ ॥

'बुद्ध्वाऽत्रिं मनसा दध्यौ भगवन्तं समाहितः।'
ध्यातमात्रस्तथा चात्रिराजगाम तपोधनः ॥ १८
अथात्रिस्तं तथा दृष्ट्वा पुत्रशोकेन कर्शितम्।
भृशमाश्वासयामास वाग्भिरिष्टाभिरव्ययः ॥ १९
निमे संकल्पितस्तेऽयं पितृयज्ञस्तपोधन।
मतो मे पूर्वदृष्टोऽत्र धर्मोऽयं ब्रह्मणा स्वयम्॥२०
सोयं स्वयंभुविहितो धर्मः संकल्पितस्त्वया।
ऋते स्वयंभुवः कोऽन्यः श्राद्धे संविधिमाहरेत्॥२१
अथाख्यास्यामि ते पुत्र श्राद्धे यं विधिमुत्तमम्।
स्वयंभुविहितं पुत्र तत्कुरुष्व निबोध मे ॥ २२
कृत्वाऽग्निशरणं पूर्वं मन्त्रपूर्वं तपोधन।
ततोऽग्नयेऽथ सोमाय वरुणाय च नित्यशः ॥२३
विश्वेदेवाश्च ये नित्यं पितृभिः सह गोचराः।
तेभ्यः संकल्पिता भागाः स्वयमेव स्वयंभुवा ॥२४
स्तोतव्या चेह पृथिवी लोकस्यैव तु धारिणी।
वैष्णवी काश्यपी चेति तथैवेहाक्षयेति च ॥ २५
उदकानयने चैव स्तोतव्यो वरुणो विभुः।
ततोऽग्निश्चैव सोमश्च आराध्याविह तेऽनघ ॥ २६
देवास्तु पितरो नाम निर्मिता ये स्वयंभुवा।
ऊष्मपा ये महाभागास्तेषां भागः प्रकल्पितः॥२७
ते श्राद्धेनार्च्यमाना वै विमुच्यन्ते ह किल्बिषात्।
सप्तकाः पितृवंशास्तु पूर्वदृष्टाः स्वयंभुवा ॥ २८
विश्वे चाग्निमुखा देवाः संख्याताः पूर्वमेव ते।
तेषां नामानि वक्ष्यामि भागार्हाणां महात्मनाम्॥२९
सहः कृतिर्विपाप्मा च पुण्यकृत्पावनस्तथा।
ग्राम्यः क्षेम्यः समूहश्च दिव्यसानुस्तथैव च ॥३०
विवस्वान्वीर्यवाञ्श्रीमान्कीर्तिमान्कृत एव च।
जितात्मा मुनिवीर्यश्च दीप्तरोमा भयंकरः ॥ ३१
अनुकर्मा प्रतीतश्च प्रदाताऽप्यंशुमांस्तथा।
शैलाभः परमक्रोधी धीरोष्णी भूपतिस्तथा ॥३२
स्रजो वज्रीवरी चैव विश्वेदेवाः सनातनाः।
विद्युद्वर्चाः सोमवर्चाः सूर्यश्रीश्चेति नामतः॥ ३३
सोमपः सूर्यसावित्रो दत्तात्मा पुण्डरीयकः।
उष्णीनाभो नभोदश्च विश्वायुर्दीप्तिरेव च ॥ ३४
चमूहरः सुरेशश्च व्योमारिः शंकरो भवः।
ईशः कर्ता कृतिर्दक्षो भुवनो दिव्यकर्मकृत् ॥ ३५
गणितः पञ्चवीर्यश्च आदित्यो रश्मिवांस्तथा।
सप्तकृत्सोमवर्चाश्च विश्वकृत्कविरेव च ॥ ३६
अनुगोप्ता सुगोप्ता च नप्ता चेश्वर एव च।
कीर्तितास्ते महाभागाः कालस्य गतिगोचराः॥३७
अश्राद्धेयानि धान्यानि कोद्रवाः पुलकास्तथा।
हिङ्गुद्रव्येषु शाकेषु मूलानां लशुनं तथा ॥ ३८
पलाण्डुः सोभाञ्जनकस्तथा गृञ्जनकादयः।
कूश्माण्डजात्यलाबुं च कृष्णं लवणमेव च ॥३९
ग्राम्यवाराहमांसं च यच्चैवाप्रोक्षितं भवेत्।
कृष्णाजं जीरकं चैव शीतपाकी तथैव च।
अङ्कुराद्यास्तथा वर्ज्या इह शृङ्गाटकानि च ॥ ४०
वर्जयेल्लवणं सर्वं तथा जम्बूफलानि च।
अवक्षुतावरुदितं तथा श्राद्धे च वर्जयेत् ॥ ४१
निवापे हव्यकव्ये वा गर्हितं च सुदर्शनम्।
पितरश्च हि देवाश्च नाभिनन्दन्ति तद्धविः ॥४२
चण्डालश्वपचौ वर्ज्यौ निवापे समुपस्थिते।
काषायवासाः कुष्ठी वा पतितो ब्रह्महाऽपि वा ॥४३
संकीर्णयोनिर्विप्रश्च संबन्धी पतितश्च यः।
वर्जनीया बुधैरेते निवापे समुपस्थिते ॥ ४४
इत्येवमुक्त्वा भगवान्स्ववंश्यं तमृषिं पुरा।
पितामहसभां दिव्यां जगामात्रिस्तपोधनः ॥४५

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि अष्टत्रिंशदधिकशततमोऽध्यायः ॥ १३८ ॥

---

तत्रार्यम्णे च सोमायेति ट. थ. पाठः ॥ २३ ॥ ते प्रसिद्धाः पित्रादयः। विमुच्यन्ते किल्बिषात् नरकादिरूपात् ॥ २८ ॥ पुलकाः असंपूर्णतण्डुलयुक्तधान्यानि। हिङ्गुद्रवेषु शाकादिसंस्कारकद्रव्येषु ॥३८॥ सौभाञ्जनकः शिग्रुः ॥ ३९ ॥ शीतपाकी शाकविशेषः॥४०॥ सुदर्शनं शाकविशेषः ॥ ४२ ॥ अष्टत्रिंशदधिकशततमोऽध्यायः ॥ १३८ ॥

## एकोनचत्वारिंशदधिकशततमोऽध्यायः ॥ १३९

भीष्मेण युधिष्ठिरंप्रति निमिकृतश्राद्धप्रकारानुवादेन श्राद्धविधिकथनम् ॥ १ ॥

भीष्म उवाच ।
तथा विधौ प्रवृत्ते तु सर्व एव महर्षयः ।
पितृयज्ञानकुर्वन्त विधिदृष्टेन कर्मणा ॥ १
ऋषयो धर्मनित्यास्तु कृत्वा निवपनान्युत ।
तर्पणं चापि कुर्वन्त तीर्थांभोभिर्यतव्रताः ॥ २
निवापैर्दीयमानैश्च चातुर्वर्ण्येन भारत ।
तर्पिताः पितरो देवास्तत्रान्नं जरयन्ति वै ॥ ३
अजीर्णैस्त्वभिहन्यन्ते ते देवाः पितृभिः सह ।
सोममेवाभ्यपद्यन्त तदा ह्यन्नाभिपीडिताः ॥ ४
तेऽब्रुवन्सोममासाद्य पितरोऽजीर्णपीडिताः ।
निवापान्नेन पीड्यामः श्रेयो नोत्र विधीयताम् ॥ ५
तान्सोमः प्रत्युवाचाथ श्रेयश्चेदीप्सितं सुराः ।
स्वयंभूसदनं यात स वः श्रेयोऽभिधास्यति ॥ ६
ते सोमवचनाद्देवाः पितृभिः सह भारत ।
मेरुशृङ्गे समासीनं पितामहमुपागमन् ॥ ७
पितर ऊचुः ।
निवापान्नेन भगवन्भृशं पीड्यामहे वयम् ।
प्रसादं कुरु नो देव श्रेयो नः संविधीयताम् ॥ ८
इति तेषां वचः श्रुत्वा स्वयंभूरिदमब्रवीत् ।
एष मे पार्श्वतो वह्निर्युष्मच्छ्रेयो विधास्यति ॥ ९
अग्निरुवाच ।
सहितास्तस्य भोक्ष्यामो निवापे समुपस्थिते ।
जरयिष्यथ चाप्यन्नं मया सार्धं न संशयः ॥ १०
एतच्छ्रुत्वा तु पितरस्ततस्ते विज्वराऽभवन् ।
एतस्मात्कारणाच्चाग्नेः प्राग्भागो दीयते नृप ॥ ११
निवापे चाग्निपूर्वे वै निवृत्ते पुरुषर्षभ ।
न ब्रह्मराक्षसास्तं वै निवापं धर्षयन्त्युत ॥ १२
रक्षांसि नाभिवर्धन्ते स्थिते देवे हुताशने ।
पूर्वं पिण्डं पितुर्दद्यात्ततो दद्यात्पितामहे ॥ १३
प्रपितामहाय च तत एष श्राद्धविधिः स्मृतः ।
ब्रूयाच्छ्राद्धे च सावित्रीं पिण्डे पिण्डे समाहितः ।
सोमायेति च वक्तव्यं तथा पितृमतेति च ॥ १४
रजस्वला च या नारी व्यङ्गिता कर्णयोश्च या ।
निवापे नोपतिष्ठेत संग्राह्या नान्यवंशजा ॥ १५
जलं प्रतरमाणश्च कीर्तयेत पितामहान् ।
नदीमासाद्य कुर्वीत पितॄणां पितृतर्पणम् ॥ १६
पूर्वं स्ववंशजानां तु कृत्वाऽद्भिस्तर्पणं पुनः ।
सुहृत्संबन्धिवर्गाणां ततो दद्याज्जलाञ्जलिम् ॥ १७
कल्माषगोयुगेनाथ युक्तेन तरतो जलम् ।
पितरोऽभिलषन्ते वै नावं चाप्यधिरोहिताः ॥ १८
सदा नावि जलं तज्ज्ञाः प्रयच्छन्ति समाहिताः ।
मासार्धे कृष्णपक्षस्य कुर्यान्निर्वपणानि वै ॥ १९
पुष्टिरायुस्तथा वीर्यं श्रीश्चैव पितृभक्तितः ॥ २०
पितामहः पुलस्त्यश्च वसिष्ठः पुलहस्तथा ।
अङ्गिराश्च क्रतुश्चैव कश्यपश्च महानृषिः ।
एते कुरुकुलश्रेष्ठ महायोगेश्वराः स्मृताः ॥ २१
एते च पितरो राजन्नेष श्राद्धविधिः परः ।
प्रेतास्तु पिण्डसंबन्धान्मुच्यन्ते तेन कर्मणा ॥ २२
इत्येषा पुरुषश्रेष्ठ श्राद्धोत्पत्तिर्यथागमम् ।
व्याख्याता पूर्वनिर्दिष्टा किं ते वक्ष्याम्यतः परम् ॥ २३

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि एकोनचत्वारिंशदधिकशततमोऽध्यायः ॥ १३९ ॥

तथानिमौ प्रवृत्ते इति झ. पाठः । तथा पित्र्ये प्रवृत्ते इति ध. पाठः ॥ १ ॥ अन्यवंशजापि पाकार्थं न संग्राह्या । न ग्राह्याश्चाप्यवंशजा इति ट. थ. पाठः ॥ १५ ॥ युक्तेन शकटेन ॥ १८ ॥ मासार्धे अमावास्यायाम् । कृष्णपक्ष नोत्र शुक्लादिमासो विवक्षितः ॥ १९ ॥ एकोनचत्वारिंशदधिकशततमोऽध्यायः ॥ १३९ ॥

## चत्वारिंशदधिकशततमोऽध्यायः ॥ १४० ॥

भीष्मेण युधिष्ठिरंप्रत्युपवासब्रह्मचर्यादीनां लक्षणकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
द्विजातयो व्रतोपेता हविस्ते यदि भुञ्जते
अन्नं ब्राह्मणकामाय कथमेतत्पितामह ॥ १
भीष्म उवाच ।
अवेदोक्तव्रताश्चैव भुञ्जानाः कामकारणे ।
वेदोक्तेषु तु भुञ्जाना व्रतलुप्ता युधिष्ठिर ॥ २
युधिष्ठिर उवाच ।
यदिदं तप इत्याहुरुपवासं पृथग्जनाः ।
तपः स्यादेतदेवेह तपोऽन्यद्वाऽपि किं भवेत् ॥ ३
भीष्म उवाच ।
मासार्धमासोपवासाद्यत्तपो मन्यते जनः ।
आत्मतन्त्रोपघाती यो न तपस्वी न धर्मवित् ॥ ४
त्यागस्य चापि संपत्तिः शिष्यते तप उत्तमम् ।
सदोपवासी च भवेद्ब्रह्मचारी तथैव च ॥ ५
मुनिश्च स्यात्सदा विप्रो देवांश्चैव सदा यजेत् ।
कुटुम्बिको धर्मकामः सदाऽस्वप्नश्च मानवः ॥ ६
अमृताशी सदा च स्यात्पवित्रं च सदा पठेत् ।
ऋतवादी सदा च स्यान्नियतश्च सदा भवेत् ॥ ७
विघसाशी कथं च स्यात्सदा चैवातिथिप्रियः ।
अमृताशी सदा च स्यात्पवित्री च सदा भवेत् ॥ ८
युधिष्ठिर उवाच ।
कथं सदोपवासी स्याद्ब्रह्मचारी च पार्थिव ।
विघसाशी कथं च स्यात्कथं चैवातिथिप्रियः ॥ ९
भीष्म उवाच ।
अन्तरा सायमाशं च प्रातराशं च यो नरः ।
सदोपवासी भवति यो न भुङ्क्तेऽन्तरा पुनः ॥ १०
भार्यां गच्छन्ब्रह्मचारी ऋतौ भवति चैव ह ।
ऋतवादी सदा च स्याद्दानशीलस्तु मानवः ॥ ११
अभक्षयन्वृथा मांसममांसाशी भवत्युत ।
दानं ददत्पवित्री स्यादस्वप्नश्च दिवाऽस्वपन् ॥ १२
भृत्यातिथिषु यो भुङ्क्ते भुक्तवत्सु नरः सदा ।
अमृतं केवलं भुङ्क्ते इति विद्धि युधिष्ठिर ॥ १३
अभुक्तवत्सु नाश्नाति ब्राह्मणेषु तु यो नरः ।
अभोजनेन तेनास्य जितः स्वर्गो भवत्युत ॥ १४
देवेभ्यश्च पितृभ्यश्च संश्रितेभ्यस्तथैव च ।
अवशिष्टानि यो भुङ्क्ते तमाहुर्विघसाशिनम् ॥ १५
तेषां लोका ह्यपर्यन्ताः सदने ब्रह्मणः स्मृताः ।
उपस्थिता ह्यप्सरसो गन्धर्वैश्च जनाधिप ॥ १६
देवतातिथिभिः सार्धं पितृभिश्चोपभुञ्जते ।
रमन्ते पुत्रपौत्रैश्च तेषां गतिरनुत्तमा ॥ १७

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि चत्वारिंशदधिकशततमोऽध्यायः ॥ १४० ॥

---

## एकचत्वारिंशदधिकशततमोऽध्यायः ॥ १४१ ॥

भीष्मेण युधिष्ठिरंप्रत्यसाधुभ्यः प्रतिग्रहस्य निन्द्यत्वे प्रमाणतया सप्तर्षिवृषादर्भिसंवादानुवादः ॥ १ ॥ वृषादर्भिणा राज्ञा कश्यपादिसप्तर्षिभिः स्वस्मात्प्रतिग्रहनिराकरणे तज्जिघांसया कृत्योत्पादनम् ॥ २ ॥ तन्नामार्थपरिज्ञानेन तद्वधं चोदितया कृत्यया वने तत्समीपंप्रति गमनम् ॥ ३ ॥

युधिष्ठिर उवाच
ब्राह्मणेभ्यः प्रयच्छन्ति दानानि विविधानि च ।
दातृप्रतिग्रहीत्रोर्वै को विशेषः पितामह ॥ १
भीष्मउवाच ।
साधोर्यः प्रतिगृह्णीयात्तथैवासाधुतो द्विजः ।
गुणवत्यल्पदोषः स्यान्निर्गुणे तु निमज्जति ॥ २

---

कामकारणे इच्छया हेतुना भुञ्जाना भोजनं कुर्वन्तु नाम ॥ २ ॥ आत्मतन्त्रं शरीररूपं कुटुम्बरूपं वा तदुपघाती ॥ ४ ॥ अस्वप्नः स्वधर्मे जागरूकः । वेदांश्चैव सदा जपेदिति झ. पाठः ॥ ६ ॥ सदा च स्यादस्वप्नश्च तथैव चेति ड. पाठः ॥ ८ ॥ वृथा यज्ञादि-निमित्तं विना ॥ १२ ॥ चत्वारिंशदधिकशततमोऽध्यायः ॥ १४० ॥

गुणवति दातरि प्रतिग्रहीतुरल्पो दोषः ॥ २ ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
वृषादर्भेश्च संवादं सप्तर्षीणां च भारत ॥ ३
कश्यपोऽत्रिर्वसिष्ठश्च भरद्वाजोऽथ गौतमः ।
विश्वामित्रो जमदग्निः साध्वी चैवाप्यरुन्धती ॥४
सर्वेषामथ तेषां तु गण्डाभूत्परिचारिका ।
शूद्रः पशुसखश्चैव भर्ता चास्या बभूव ह ॥ ५
ते च सर्वे तपस्यन्तः पुरा चेरुर्महीमिमाम् ।
समाधिना प्रतीक्षन्तो ब्रह्मलोकं सनातनम् ॥ ६
अथाभवदनावृष्टिर्महती कुरुनन्दन ।
कृच्छ्रप्राणोऽभवद्यत्र लोकोऽयं वै क्षुधान्वितः ॥७
कस्मिंश्चिच पुरा यज्ञे याज्येन शिबिसूनुना ।
दक्षिणार्थेऽथ ऋत्विग्भ्यो दत्तः पुत्रोऽनिलः किल
अस्मिन्कालेऽथ सोऽल्पायुर्दिष्टान्तमगमत्प्रभुः ।
ते तं क्षुधाभिसंतप्ताः परिवार्योपतस्थिरे ॥ ९
याज्यात्मजमथो दृष्ट्वा गतासुमृषिसत्तमाः ।
अपचन्त तदा स्थाल्यां क्षुधार्ताः किल भारत १०
नाजीव्ये मर्त्यलोकेऽस्मिन्नात्मानं ते परीप्सवः ।
कृच्छ्रामापेदिरे वृत्तिमन्नहेतोस्तपस्विनः ॥ ११
अटमानोऽथ तान्मार्गे पचमानान्महीपतिः ।
राजा शैब्यो वृषादर्भिः क्लिश्यमानान्ददर्श ह १२
वृषादर्भिरुवाच ।
प्रतिग्रहस्तारयति पुष्टिर्वै प्रतिगृह्णताम् ।
मयि यद्विद्यते वित्तं तद्वृणुध्वं तपोधनाः ॥ १३
'प्रतिग्रहो ब्राह्मणानां सृष्टा वृत्तिरनिन्दिता ।
तस्माद्ददामि वो वित्तं तद्वृणुध्वं तपोधनाः ॥'१४
प्रियो हि मे ब्राह्मणो याचमानो
दद्यामहं वोऽश्वतरीसहस्रम् ।
धेनूनां दद्यामयुतं समग्र-
मेकैकशः सवृषाः संप्रसूताः ॥ १५
अश्वांस्तथा शीघ्रगाञ्श्वेतरूपा-
न्मनोजवान्प्रददाम्यर्बुदानि ।
कुलंभराननडुहः शतं शता-
न्धुर्यांञ्श्वेतान्सर्वशोऽहं ददामि ।
प्रष्ठौहीनां पीवराणां च ताव-
दग्र्या गृष्टीर्धेनवः सुव्रताश्च ॥ १६
वरान्ग्रामान्व्रीहिरसं यवांश्च
रत्नं चान्यद्दुर्लभं किं ददानि ।
नास्मिन्नभक्ष्ये भावमेवं कुरुध्वं
पुष्ट्यर्थं वः किं प्रयच्छाम्यहं वै ॥ १७
ऋषय ऊचुः ।
राजन्प्रतिग्रहो राज्ञां मध्वास्वादो विषोपमः ।
तज्जानमानः कस्मात्त्वं कुरुषे नः प्रलोभनम् ॥१८
'दशसूनासमश्चक्री दशचक्रिसमो ध्वजी ।
दशध्वजिसमा वेश्या दशवेश्यासमो नृपः ॥ १९
दशसूनासहस्राणि यो वाहयति सौनिकः ।
तेन तुल्यो भवेद्राजा घोरस्तस्य प्रतिग्रहः ॥' २०
क्षेत्रं हि दैवतमिव ब्राह्मणान्समुपाश्रितम् ।
अमलो ह्येष तपसा प्रीतः प्रीणाति देवताः ॥२१
अह्नायेह तपो जातु ब्राह्मणस्योपजायते ।
तद्दाव इव निर्दह्यात्प्राप्तो राजप्रतिग्रहः ॥ २२
कुशलं सह दानेन राजन्नस्तु सदा तव ।
अर्थिभ्यो दीयतां सर्वमित्युक्त्वा तेऽन्यतो ययुः२३
अपक्वमेव तन्मांसमभूत्तेषां महात्मनाम् ।
अथ हित्वा ययुः सर्वे वनमाहारकाङ्क्षिणः ॥ २४
ततः प्रचोदिता राज्ञा वनं गत्वाऽस्य मन्त्रिणः ।
प्रचीयोदुम्बराणि स दातुं तेषां प्रचक्रिरे ॥ २५
'दृष्ट्वा फलानि मुनयस्ते ग्रहीतुमुपाद्रवन् ॥' २६
उदुम्बराण्यथान्यानि हेमगर्भाण्युपाहरन् ।
भृत्यास्तेषां ततस्तानि प्रग्राहितुमुपाद्रवन् ॥ २७
गुरूणीति विदित्वाऽथ न ग्राह्याण्यत्रिरब्रवीत् ।
नास्मेह मन्दविज्ञाना नास्म मानुषबुद्धयः ॥ २८
हैमानीमानि जानीमः प्रतिबुद्धाः स्म जागृम ।
इह ह्येतदुपादत्तं प्रेत्य स्यात्कटुकोदयम् ।

---

वृषादर्भेश्च संवादमिति थ. ध. पाठः ॥३॥ गण्डाभूत्कर्मकारिकेति झ. पाठः । गण्डा नामतः ॥ ५ ॥ दिष्टान्तं मरणम् ॥ ९ ॥ आत्मानं शरीरं परीप्सवः रक्षितुकामाः । निरन्ने मर्त्यलोकेऽस्मि-न्निति झ. पाठः ॥ ११ ॥ पुष्टिः पुष्टिहेतुः । तच्छृणुध्व तपोधना इति ठ. थ. ध. पाठः ॥ १३ ॥

अप्रातग्राह्यमेवैतत्प्रेत्येह च सुखेप्सुना ॥ २९

वसिष्ठ उवाच ।

शतेन निष्कगुणितं सहस्रेण च संमितम्

तथा बहु प्रतीच्छन्वै पापिष्ठां लभते गतिम् ॥ ३०

कश्यप उवाच ।

यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ।

सर्वं तन्नालमेकस्य तस्माद्विद्वाञ्शमं व्रजेत् ॥ ३१

भरद्वाज उवाच ।

उत्पन्नस्य रुरोः शृङ्गं वर्धमानस्य वर्धते ।

प्रार्थना पुरुषस्येव तस्य मात्रा न विद्यते ॥ ३२

गौतम उवाच

न तल्लोके द्रव्यमस्ति यल्लोभं प्रतिपूरयेत्

समुद्रकल्पः पुरुषो न कदाचन पूर्यते ॥ ३३

विश्वामित्र उवाच ।

कामं कामयमानस्य यदा कामः समृध्यते

अथैनमपरः काम इष्टो विध्यति बाणवत् ॥ ३४

अत्रिरुवाच ।

न जातु कामः कामानामुपभोगेन शाम्यति ।

हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ ३५

जमदग्निरुवाच ।

प्रतिग्रहे संयमो वै तपो धारयते ध्रुवम् ।

तद्धनं ब्राह्मणस्येह लुभ्यमानस्य विस्रवेत् ॥ ३६

अरुन्धत्युवाच

धर्मार्थं संचयो यो वै द्रव्याणां पक्षसंमतः ।

तपःसंचय एवेह विशिष्टो द्रव्यसंचयात् ॥ ३७

चण्डोवाच ।

उग्रादितो भयाद्यस्माद्बिभ्यतीमे ममेश्वराः ।

बलीयसो दुर्बलवद्बिभेम्यहमतः परम् ॥ ३८

पशुसख उवाच ।

यद्वै धर्मात्परं नास्ति तादृशं ब्राह्मणा विदुः ।

विनयात्साधु विद्वांसमुपासेयं यथातथम् ॥ ३९

ऋषय ऊचुः ।

कुशलं सह दानेन तस्मै यस्य प्रजा इमाः ।

फलान्युपधियुक्तानि य एवं नः प्रयच्छति ॥ ४०

भीष्म उवाच ।

इत्युक्त्वा हेमगर्भाणि हित्वा तानि फलानि ते ।

ऋषयो जग्मुरन्यत्र सर्व एव दृढव्रताः ॥ ४१

अथ त मात्रिणः सव राजानामदमब्रुवन् ।

उपधिं शङ्कमानास्ते हित्वा तानि फलानि वै ।

ततोऽन्यत्रैव गच्छन्ति विदितं तेऽस्तु पार्थिव ॥ ४२

इत्युक्तः स तु भृत्यैस्तैर्वृषादर्भिश्चुकोप ह ।

तेषां वै प्रतिकर्तुं च सर्वेषामगमद्गृहम् ॥ ४३

स गत्वाऽऽहवनीयेऽग्नौ तीव्रं नियममास्थितः ।

जुहाव संस्कृतैर्मन्त्रैरेकैकामाहुतिं नृपः ॥ ४४

तस्मादग्नेः समुत्तस्थौ कृत्या लोकभयंकरी

तस्या नाम वृषादर्भिर्यातुधानीत्यथाकरोत् ॥ ४५

सा कृत्या कालरात्रीव कृताञ्जलिरुपस्थिता ।

वृषादर्भि नरपतिं किं करोमीति चाब्रवीत् ॥ ४६

वृषादर्भिरुवाच ।

ऋषीणां गच्छ सप्तानामरुन्धत्यास्तथैव च ।

दासीभर्तुश्च दास्याश्च मनसा नाम धारय ॥ ४७

ज्ञात्वा नामानि चैवैषां सर्वानेतान्विनाशय ।

विनष्टेषु तथा स्वैरं गच्छ यत्रेप्सितं तव ॥ ४८

सा तथेति प्रतिश्रुत्य यातुधानी स्वरूपिणी ।

जगाम तद्वनं यत्र विचेरुस्ते महर्षयः ॥ ४९

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि एकचत्वारिंशदधिकशततमोऽध्यायः ॥ १४१ ॥

प्रतीच्छन् प्रतिगृह्णन् ॥ ३० ॥ तस्य लाभसुखस्य मात्रा इयत्ता ॥ ३२ ॥ तद्धनं तपोधनम् ॥ ३६ ॥ पक्षसंमतः पाक्षिकत्वेन मतः ॥ ३७ ॥ यद्वै धर्मे परं नास्ति ब्राह्मणास्तद्धन विदुरिति झ. पाठः । यत् यतो हेतोः । वैधर्मे विधर्म एव वैधर्मः तस्मिँलोभादिदोषे सति परं उत्कृष्ट पद नास्ति न लभ्यतेऽतस्तदलोभाख्यमेव धन ब्राह्मणा विदुः ॥ ३९ ॥ उपधिश्छलम् । कश्मलाधमदानाय प्रतियत्नः प्रजाधमाः । फलान्युपधियुक्तानि यत्र यः संप्रयच्छतीति थ. ध. पाठः ॥ ४० ॥ नाम नाम्नोर्थम् ॥ ४७ ॥ ज्ञात्वा नामानुरूपं तेषां सामर्थ्यं परीक्ष्य तान् विनाशय । अन्यथा त्वामेव ते विनाशयिष्यन्तीति भावः ॥ ४८ ॥ एकचत्वारिंशदधिकशततमोऽध्यायः ॥ १४१ ॥

## द्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥

वने विचरतां सप्तर्षीणां परिव्राड्रूपधारिणेन्द्रेण समागमः ॥ १ ॥ अरुन्धत्या तस्यातिपीनाङ्गत्वे कारणं पृष्टैस्तैस्तत्कथनम् ॥ २ ॥ तथा कामपि पद्मिनीमवलोकितवद्भिस्तैर्बिसग्रहणाय तत्समीपगमनम् ॥ ३ ॥ तत्र तद्रक्षिण्या वृषादर्भिनिर्मितकृत्यया स्वस्वनामनिर्वचनेन सरःप्रवेशं चोदितैस्तांप्रति तन्निर्वचनम् ॥ ४ ॥ भिक्षुरूपिणेन्द्रेण सकृत्स्वनामनिर्वचनेऽपि पुनः पृच्छन्त्याः कृत्याया दण्डेन मारणपूर्वकमृषीन्प्रति स्वस्वरूपप्रकटनम् ॥ ५ ॥

भीष्म उवाच ।
अथात्रिप्रमुखा राजन्वने तस्मिन्महर्षयः ।
व्यचरन्भक्षयन्तो वै मूलानि च फलानि च ॥१
अथापश्यन्सुपीनांसपाणिपादमुखोदरम् ।
परिव्रजन्तं स्थूलाङ्गं परिव्राजं शुनस्सखम् ॥ २
अरुन्धती तु तं दृष्ट्वा सर्वाङ्गोपचितं शुभम् ।
भवितारो भवन्तो वै नैवमित्यब्रवीदृषीन् ॥ ३
वसिष्ठ उवाच ।
नैतस्येह यथाऽस्माकमग्निहोत्रमनिर्हुतम् ।
सायं प्रातश्च होतव्यं तेन पीवाञ्शुनस्सखः ॥ ४
अत्रिरुवाच ।
नैतस्येह यथाऽस्माकं क्षुधया वीर्यमाहतम् ।
कृच्छ्राधीतं प्रनष्टं च तेन पीवाञ्छुनस्सखः ॥ ५
विश्वामित्र उवाच ।
नैतस्येह यथाऽस्माकं शश्वच्छास्त्रकृतो ज्वरः ।
अलसः क्षुत्परो मूर्खस्तेन पीवाञ्शुनस्सखः ॥ ६
जमदग्निरुवाच ।
नैतस्येह यथाऽस्माकं भक्तमिन्धनमेव च ।
संचिन्त्यं वार्षिकं चित्ते तेन पीवाञ्शुनस्सखः ॥७
कश्यप उवाच ।
नैतस्येह यथाऽस्माकं चत्वारश्च सहोदराः ।
देहिदेहीति भिक्षन्ति तेन पीवाञ्शुनस्सखः ॥८
भरद्वाज उवाच ।
नैतस्येह यथाऽस्माकं ब्रह्मबन्धोरचेतसः ।
शोको भार्यापवादेन तेन पीवाञ्शुनस्सखः ॥ ९
गौतम उवाच ।
नैतस्येह यथाऽस्माकं त्रिकौशेयं च राङ्कवम् ।
एकैकं वै त्रिवर्षीयं तेन पीवाञ्शुनस्सखः ॥ १०
भीष्म उवाच ।
अथ दृष्ट्वा परिव्राट् स तान्महर्षीञ्शुनस्सखः ।
अभिवाद्य यथान्यायं पाणिस्पर्शमथाचरत् ॥ ११
परिचर्यां वने तां तु क्षुत्प्रतीकारकाङ्क्षिणः ।
अन्योन्येन निवेद्याथ प्रातिष्ठन्त सहैव ते ॥ १२
एकनिश्चयकार्याश्च व्यचरन्त वनानि ते ।
आददानाः समुद्धृत्य मूलानि च फलानि च ॥१३
कदाचिद्विचरन्तस्ते वृक्षैरविरलैर्वृताम् ।
शुचिपूर्णप्रसन्नोदां ददृशुः पद्मिनीं शुभाम् ॥१४
बालादित्यवपुःप्रख्यैः पुष्करैरुपशोभिताम् ।
वैडूर्यवर्णसदृशैः पद्मपत्रैरथावृताम् ॥ १५
नानाविधैश्च विहगैर्जलप्रवरसेविभिः ।
एकद्वारामनादेयां सूपतीर्थामकर्दमाम् ॥ १६
वृषादर्भिप्रयुक्ता तु कृत्या विकृतदर्शना ।
यातुधानीति विख्याता पद्मिनीं तामरक्षत ॥ १७
शुनस्सखसहायास्तु बिसार्थं ते महर्षयः ।
पद्मिनीमभिजग्मुस्ते सर्वे कृत्याभिरक्षिताम् ॥१८
ततस्ते यातुधानीं तां दृष्ट्वा विकृतदर्शनाम् ।
स्थितां कमलिनीतीरे कृत्यामूचुर्महर्षयः ॥ १९
एका तिष्ठसि का च त्वं कस्यार्थे किं प्रयोजनम् ।
पद्मिनीतीरमाश्रित्य ब्रूहि त्वं किं चिकीर्षसि॥२०
यातुधान्युवाच ।
याऽसि काऽस्म्यनुयोगो मे न कर्तव्यः कथंचन ।

परिव्राजं शुना सहेति झ. पाठः ॥ २ ॥ तेन पीवाञ्शुना सहेति झ. पाठः ॥ ४ ॥ भार्यापवादः कृत्तिकाखभिशापात् ॥ ९ ॥ त्रिकौशेयं कुशा रज्जुस्तया निर्वृत्तं कौशेयं पाटितसंधानम् । त्रीणि कौशेयानि यस्मिन् । राङ्कवं रङ्कोर्मृगविशेषस्य चर्म तदपि त्रिवर्षीयमतिजीर्णम् ॥ १० ॥ परिचर्यां करिष्यामि कुर्विलन्योन्यमुक्त्वेत्यर्थः ॥ १२ ॥ एकरूप एव निश्चयः कार्यं च येषां ते ॥ १३ ॥ उपतीर्थमवतरणमार्गः ॥ १६ ॥

आरक्षिणीं मां पद्मिन्या वित्त सर्वे तपोधनाः॥२१
ऋषय ऊचुः ।
सर्व एव क्षुधार्ताः स्म न चान्यत्किंचिदस्ति नः ।
भवत्याः संमते सर्वे गृह्णीयाम बिसान्युत ॥ २२
यातुधान्युवाच ।
समयेन बिसानीतो गृह्णीध्वं कामकारतः ।
एकैको नाम मे प्रोक्त्वा ततो गृह्णीत माचिरम्॥२३
भीष्म उवाच ।
विज्ञाय यातुधानीं तां कृत्यामृषिवधैषिणीम् ।
अत्रिः क्षुधा परीतात्मा ततो वचनमब्रवीत्॥२४
अत्रिरुवाच ।
अरात्रिरत्रिः सा रात्रिर्यां नाधीते त्रिरद्य वै ।
अरात्रिरत्रिरित्येव नाम मे विद्धि शोभने ॥ २५
यातुधान्युवाच ।
यथोदाहृतमेतत्ते त्वया नाम महाद्युते ।
दुर्धार्यमेतन्मनसा गच्छाऽवतर पद्मिनीम् ॥ २६
वसिष्ठ उवाच ।
वसिष्ठोऽस्मि वरिष्ठोऽस्मि वसे वासगृहेष्वपि ।
वरिष्ठत्वाच्च वासाच्च वसिष्ठ इति विद्धि माम् २७
यातुधान्युवाच ।
नाम नैरुक्तमेतत्ते दुःखव्याभाषिताक्षरम् ।
नैतद्धारयितुं शक्यं गच्छाऽवतर पद्मिनीम् ॥ २८
कश्यप उवाच ।
कुलंकुलं च कुवमः कुवमः कश्यपो द्विजः ।
काश्यः काशनिकाशत्वादेतन्मे नाम धारय ॥२९
यातुधान्युवाच ।
यथोदाहृतमेतत्ते मयि नाम महाद्युते ।
दुर्धार्यमेतन्मनसा गच्छाऽवतर पद्मिनीम् ॥ ३०
भरद्वाज उवाच ।
भरेऽसुतान्भरे पोष्यान्भरे देवान्भरे द्विजान् ।
भरे भार्यामहं व्याजाद्भरद्वाजोऽस्मि शोभने ॥३१
यातुधान्युवाच ।
नाम नैरुक्तमेतत्ते दुःखव्याभाषिताक्षरम् ।
नैतद्धारयितुं शक्यं गच्छाऽवतर पद्मिनीम् ॥ ३२
गौतम उवाच ।
गोदमो दमतोऽधूमोऽदमस्ते समदर्शनात् ।
विद्धि मां गोतमं कृत्ये यातुधानि निबोध मां ३३
यातुधान्युवाच ।
यथोदाहृतमेतत्ते मयि नाम महामुने ।
नैतद्धारयितुं शक्यं गच्छाऽवतर पद्मिनीम् ॥ ३४
विश्वामित्र उवाच ।
विश्वेदेवाश्च मे मित्रं मित्रमसि गवां तथा ।

---

नामार्थद्वारा सामर्थ्यं ज्ञात्वा अस्माकं वधैषिणीयमिति विज्ञायेत्यर्थ. ॥ २४ ॥ अरात्रिः अरयः कामादयः सन्त्यस्मिन्नित्यर पापं अर्शआदिभ्योऽजित्यच् । तस्मात्त्रायत इत्यरात्रिः । अरशब्दादलुप्तपञ्चमीकात् परस्य त्रायतेरुपरि क्विप्प्रत्ययः । यस्मादरात्रिस्तस्मादत्रिः । अत्तीत्यद् मृत्युस्तस्मात्त्रायत इत्यत्रिः । मृत्युशब्दस्य पाप्मनि प्रयोगदर्शनात् ॥ २५॥ मयि नाम महामुने इति झ. पाठः ॥ २६ ॥ वायुश्च पृथिवी चेति श्रुतिप्रसिद्धा वाय्वादयो वसवस्ते यस्य स्वाधीना भवन्ति स वसुमान्प्राप्ताणिमाद्यैश्वर्यो महायोगी । अतिशयेन वसुमानिति वसिष्ठस्तादृशोऽहमस्मि। वसुमच्छब्दादिष्ठन्प्रत्यये परे मतुब्लोपे टिलोपे च वसिष्ठः । वासगृहेषु वासयोग्येषु गृहस्थाश्रमेषु सर्वेषामुपजीव्येषु वसे वसामि अतोऽहं वस्तूणां मध्ये अतिश्रेष्ठ इति वसिष्ठोऽस्मि ॥ २७ ॥ कशा अश्वताडनरज्जुस्तामर्हन्ति ते कश्या अश्वाः । इन्द्रियाण्येवाश्वाः कश्यास्तदाश्रयत्वाच्छरीराण्यपि कश्यानि । कुलकुलमिति वीप्साया द्विर्वचनम् । सर्वशरीरेष्वहमेवैकः कश्यपो नाम द्विजोऽस्मि । कश्यानि शरीराणि पाति रक्षति पिबति भुङ्क्ते पाययति शोषयति वा कश्यप इति योगात् । कुवमः कुवम इति । कुः पृथिवी तस्यां वमति वर्षतीति कुवम आदित्यः पूर्ववद्द्विवचनम् । सर्वोऽप्यादित्योऽहमेव । मत्पुत्रत्वात्सर्वेषामादित्यानामित्यर्थः । काश्यो दीप्तिमान् । तत्र हेतुः । काशनिकाशत्वात् बहुकालीनत्वेन काशपुष्पसदृशः सर्वतः पलितश्चिरंतनस्तपसा दीप्तोऽस्मीत्यर्थः । कुल कुलं च कुशलः कुपयः काश्यपो द्विजः । काश्यपः काशनीकाश एतन्मे नाम धारयेति क. ड. थ. पाठः ॥ २९ ॥ प्रजा वै वाजस्ता एष बिभर्तीति श्रुत्यनुसारेण स्वनामाह भरे इति । असुतान् अपुत्रानुदासीनानपि दीनानदीनान्पालयामि । भरे सुतान्भरे शिष्यानिति झ. पाठः ॥ ३१ ॥ गोपदार्थं स्वर्गं भूमिं च दमयति वशीकरोतीति गोदमः । तत्र हेतुः दमत इति । दमेन इन्द्रियजयेन दमयतीति जितेन्द्रियत्वात् गां द्यां च दमितुं शक्तोस्मीत्यर्थः । अधूमः निर्धूमाग्नितुल्यः । अत एवादमः अन्येन दमितुमयोग्यः । तत्र हेतुः । ते त्वयि । समदर्शनात्समस्य ब्रह्मणो दर्शनात् ब्रह्मज्ञानित्वादित्यर्थ । अत्र दकारस्थाने तकारः । गौतमो दमगोधूमो धूमो दुर्दर्शनश्च ते इति थ. ध. पाठ ॥ ३३ ॥ मित्रे चर्षौ इति विश्वपदान्तस्य दीर्घः ।

विश्वामित्र इति ख्यातं यातुधानि निबोध मां ३५
यातुधान्युवाच ।
नाम नैरुक्तमेतत्ते दुःखव्याभाषिताक्षरम् ।
नैतद्धारयितुं शक्यं गच्छाऽवतर पद्मिनीम् ॥ ३६
जमदग्निरुवाच ।
जाजमद्यजजानेऽहं जिजाहीह जिजायिषि ।
जमदग्निरिति ख्यातं ततो मां विद्धि शोभने ॥३७
यातुधान्युवाच ।
यथोदाहृतमेतत्ते मयि नाम महामुने ।
नैतद्धारयितुं शक्यं गच्छाऽवतर पद्मिनीम् ॥ ३८
अरुन्धत्युवाच ।
धरान्धरित्रीं वसुधां भर्तुस्तिष्ठाम्यनन्तरम् ।
मनोऽनुरुन्धती भर्तुरिति मां विद्ध्यरुन्धतीम् ३९
यातुधान्युवाच ।
नामनैरुक्तमेतत्ते दुःखव्याभाषिताक्षरम् ।
नैतद्धारयितुं शक्यं गच्छाऽवतर पद्मिनीम् ॥४०
गण्डोवाच ।
वक्त्रैकदेशे गण्डेति धातुमेतं प्रचक्षते ।
तेनोन्नतेन गण्डेति विद्धि माऽनलसंभवे ॥ ४१
यातुधान्युवाच ।
नामनैरुक्तमेतत्ते दुःखव्याभाषिताक्षरम् ।
नैतद्धारयितुं शक्यं गच्छावतर पद्मिनीम् ॥ ४२
पशुसख उवाच ।
पशून्रञ्जामि दृष्ट्वाऽहं पशूनां च सदा सखा ।
गौणं पशुसखेत्येवं विद्धि मामग्निसंभवे ॥ ४३
यातुधान्युवाच ।
नामनैरुक्तमेतत्ते दुःखव्याभाषिताक्षरम् ।
नैतद्धारयितुं शक्यं गच्छाऽवतर पद्मिनीम् ॥४४
शुनःसख उवाच ।
एभिरुक्तं यथा नाम नाहं वक्तुमिहोत्सहे ।
शुनःसखसखायं मां यातुधान्युपधारय ॥ ४५
यातुधान्युवाच ।
नाम न व्यक्तमुक्तं वै वाक्यं संदिग्धया गिरा ।
तस्मात्सकृदिदानीं त्वं ब्रूहि यन्नाम ते द्विज ॥४६
शुनःसख उवाच ।
सकृदुक्तं मया नाम न गृहीतं त्वया यदि ।
तस्मात्त्रिदण्डाभिहता गच्छ भस्मेति माचिरम् ४७
भीष्म उवाच ।
सा ब्रह्मदण्डकल्पेन तेन मूर्ध्नि हता तदा ।
कृत्या पपात मेदिन्यां भस्म साच जगाम ह ॥४८
शुनःसखश्च हत्वा तां यातुधानीं महाबलाम् ।
भुवि त्रिदण्डं विष्टभ्य शाद्वले समुपाविशत् ॥४९
ततस्ते मुनयः सर्वे पुष्कराणि बिसानि च ।
यथाकाममुपादाय समुत्तस्थुर्मुदाऽन्विताः ॥ ५०
श्रमेण महता युक्तास्ते बिसानि कलापशः ।
तीरे निक्षिप्य पद्मिन्यास्तर्पणं चक्रुरम्भसा ॥ ५१
अथोत्थाय जलात्तस्मात्सर्वे ते समुपागमन् ।
नापश्यंश्चापि ते तानि बिसानि पुरुषर्षभाः ॥ ५२

---

गवां इन्द्रियाणाम् ॥ ३५ ॥ जजामाद्य जजामाय जजामाहं जजायुषीति क. थ. ध. पाठः । भूयोभूयोऽतिशयेन जमन्ति युगपदनेकेषु यज्ञादिष्वनेकवारं पुनःपुनर्भक्षयन्ति हवींषि ते जाजमन्तो देवाः । 'जमु भक्षणे' यङ्लुकि शत्रन्तस्य रूपम् । इज्यन्ते देवता अस्मिन्निति यजोऽग्निः । तेषां जान आविर्भावस्तस्मिन् जिज्ञायिषि जातोऽस्मि इहलोके अतो मां जिजाहि जानीहि । ततो योगात् मां जमदग्निरिति नामतो विद्धि । जाजमदित्यत्राद्यपदे प्रथमाक्षरलोपे द्वितीयस्याग्नित्वे जमदग्निरिति सिद्धम् । ततो जाजमन्तोऽग्निश्चास्मिन् सन्तीति जमदग्निमान् । ततो मतुब्लोपेन जमदग्निरिति पदम् । एतेनापि स्वस्याधर्षणीयत्वमुक्तम् ॥ ३७ ॥ धरान्पर्वतान् । धरित्रीं भुवम् । वसून्देवान्धत्ते इति व्युत्पत्त्या वसुधां दिवं च तिष्ठामि अधितिष्ठामि । भर्तुर्वसिष्ठस्यानन्तरं अव्यवधानेन अनुरुन्धतीत्यत्र नुकारलोपः । सारं धरित्रीवसुधा नेच्छे भर्तुरनन्तरम् । इति ध. पाठः । वसुधामिच्छे भर्तुरिति क. थ. पाठः ॥ ३९ ॥ गडि वदनैकदेश इति धातोः गण्डेति नुमा सहितस्यानुकरणम् । मा माम् । वृषादर्भिणाऽग्नौ हुत्वाऽस्या उत्पादितत्वादनलसंभवत्वम् । गण्ड गतवती गण्ड गण्डा गण्डेति संज्ञिता । गण्ड गण्डेति गण्डैतीति ध. पाठः । चण्ड गतवती चण्डा चण्डाचण्डेति संज्ञिता । चण्डाचण्डेति चण्डेतीति थ. पाठः ॥ ४१ ॥ पशून् जीवान् रञ्जामि रञ्जयामि । मां मम नामेत्यर्थः । सखे सखायौ सख्येय इति थ. पाठः । सहेऽपराधं सख्येय इति ड. पाठः ॥ ४३ ॥ श्वा धर्मः तत्सखायो मुनयः तेषां सखा शुनःसखसखः तम् । शुनां सदा सखाय मामिति ड. थ. पाठः ॥ ४५ ॥ भस्म भस्मताम् ॥ ४८ ॥ कलापशः सङ्घशः ॥ ५१ ॥

ऋषय ऊचुः ।
केन क्षुधाभिभूतानामस्माकं पापकर्मणाम् ।
नृशंसेनापनीतानि बिसान्याहारकाङ्क्षिणाम् ॥५३
भीष्म उवाच ।
ते शङ्कमानास्त्वन्योन्यं पप्रच्छुर्द्विजसत्तमाः ।
त ऊचुः शपथं सर्वे कुर्म इत्यरिकर्शन ॥ ५४
त उक्त्वा बाढमित्येव सर्वं एव तदा समम् ।
क्षुधार्ताः सुपरिश्रान्ताः शपथायोपचक्रमुः ॥ ५५
अत्रिरुवाच ।
स गां स्पृशतु पादेन सूर्यं च प्रतिमेहतु ।
अनध्यायेष्वधीयीत बिसस्तैन्यं करोति यः ॥ ५६
वसिष्ठ उवाच ।
अनध्याये पठेल्लोके शुनः स परिकर्षतु ।
परिव्राट् कामवृत्तिस्तु बिसस्तैन्यं करोति यः ॥ ५७
शरणागतं हन्तु मित्रं स्वसुतां चोपजीवतु ।
अर्थान्काङ्क्षतु कीनाशाद्बिसस्तैन्यं करोति यः ॥५८
कश्यप उवाच ।
'विष्णुं ब्रह्मण्यदेवेशं देवदेवं जगद्गुरुम् ।
आधातारं विधातारं संधातारं जगद्गुरुम् ।
विहाय स भजत्वन्यं बिसस्तैन्यं करोति यः ॥'५९
सर्वत्र सर्वं लपतु न्यासलोपं करोतु च ।
कूटसाक्षित्वमभ्येतु बिसस्तैन्यं करोति यः ॥ ६०
वृथा मांसाशनश्चास्तु वृथा दानं करोतु च ।
यातु स्त्रियं दिवा चैव बिसस्तैन्यं करोति यः ॥६१
भरद्वाज उवाच ।
नृशंसस्त्यक्तधर्माऽस्तु स्त्रीषु ज्ञातिषु गोषु च ।
ब्राह्मणं चापि जयतां बिसस्तैन्यं करोति यः ॥६२
उपाध्यायमधः कृत्वा ऋचोऽध्येतु यजूंषि च ।
जुहोतु च स कक्षाग्नौ बिसस्तैन्यं करोति यः ॥६३
जमदग्निरुवाच ।
पुरीषमुत्सृजत्वप्सु हन्तु गां चैव दुह्यतु ।
अनृतौ मैथुनं यातु बिसस्तैन्यं करोति यः ॥ ६४
द्वेष्यो भार्योपजीवी स्याद्दूरबन्धुश्च वैरवान् ।
अन्योन्यस्यातिथिश्चास्तु बिसस्तैन्यं करोति यः ६५
गौतम उवाच ।
अधीत्य वेदांस्त्यजतु त्रीनग्नीनपविध्यतु ।
विक्रीणातु तथा सोमं बिसस्तैन्यं करोति यः॥६६
उदपानोदके ग्रामे ब्राह्मणो वृषलीपतिः ।
तस्य सालोक्यतां यातु बिसस्तैन्यं करोति यः॥६७
विश्वामित्र उवाच ।
जीवतो वै गुरून्भृत्यान्भरन्त्वस्य परे जनाः ।
दरिद्रो बहुपुत्रः स्याद्बिसस्तैन्यं करोति यः ॥६८
अशुचिर्ब्रह्मकूटोऽस्तु मिथ्या चैवाप्यहंकृतः ।
कर्षको मत्सरी चास्तु बिसस्तैन्यं करोति यः ॥६९
हर्षं करोतु भृतको राज्ञश्चास्तु पुरोहितः ।
अयाज्यस्य भवेद्दृत्विक् बिसस्तैन्यं करोति यः ७०
अरुन्धत्युवाच ।
नित्यं परिभवेच्छ्वश्रूं भर्तुर्भवतु दुर्मनाः ।
एका स्वादु समश्नातु बिसस्तैन्यं करोति या॥ ७१
ज्ञातीनां गृहमध्यस्था सक्तूनत्तु दिनक्षये ।
अभोग्या वीरसूरस्तु बिसस्तैन्यं करोति या ॥ ७२
गण्डोवाच ।
अनृतं भाषतु सदा बन्धुभिश्च विरुध्यतु ।
ददातु कन्यां शुल्केन बिसस्तैन्यं करोति या ॥७३
साधयित्वा स्वयं प्राशेद्दास्ये जीर्यतु चैव ह ।
विकर्मणा प्रमीयेत बिसस्तैन्यं करोति या ॥ ७४

---

सर्व एव शुनस्सखमिति थ. ध. पाठः ॥ ५५ ॥ शुनः सारमेयान्परिकर्षतु क्रीडार्थं मृगयार्थं वा । परिव्राट् कर्मवृत्तिस्त्विति थ. ध. पाठः ॥ ५७ ॥ स्वसुतां शुल्कग्रहणेन । कीनाशात् कर्षकात् ॥ ५८ ॥ सर्वत्र सर्वं पणतु न्यासलोभं करोतु चेति ट. थ. पाठः ॥ ६० ॥ वृथा यागादिनिमित्तं विना । वृथा नटनर्तकादौ ॥ ६१ ॥ जयतां युद्धे वादे वा । मातरं चापि जह्वत्विति क. पाठः ॥ ६२ ॥ कक्षाग्नौ । तत्र हि हुतं भस्मीभावमप्राप्य होतुर्दोषकरमित्याशयः ॥ ६३ ॥ निर्गुणान्बिभृयाद्भृत्यानिति क. ट. थ. पाठः ॥६८ ॥ ऋद्ध्या चैवाप्यहंकृत इति झ. पाठः ॥ ६९ ॥ वर्षाचरोऽस्तु भृतक इति झ. पाठः ॥ ७० ॥ ज्ञातीनां अनादरे षष्ठी । ज्ञातीननादृत्येत्यर्थः । अभोग्या योनिदूषिता ॥ ७२ ॥ साधुभिश्च विरुध्यत्विति ट. थ. पाठः ॥७३॥ साधयित्वा अन्नं पक्त्वा ॥ ७४ ॥

पशुसख उवाच ।
दाम एव प्रजायेतामप्रसूतिरकिंचनः ।
देवतेष्वनमस्कारो बिसस्तैन्यं करोति यः ॥ ७५
शुनःसख उवाच ।
अध्वर्यवे दुहितरं वा ददातु
च्छन्दोगे वाऽऽचरितब्रह्मचर्ये ।
आथर्वणं वेदमधीत्य विप्रः
स्नायीत वा यो हरते बिसानि ॥ ७६
ऋषय ऊचुः ।
इष्टमेतद्द्विजातीनां योऽयं ते शपथः कृतः ।
त्वया कृतं बिसस्तैन्यं सर्वेषां नः शुनःसख ॥ ७७
शुनःसख उवाच ।
न्यस्तमद्यं न पश्यद्भिर्यदुक्तं कृतकर्मभिः ।
सत्यमेतन्न मिथ्यैतद्बिसस्तैन्यं कृतं मया ॥ ७८
मया ह्यन्तर्हितानीह बिसानीमानि पश्यत ।
परीक्षार्थं भगवतां कृतमेवं मयाऽनघाः ॥ ७९
रक्षणार्थं च सर्वेषां भवतामहमागतः ।
यातुधानी ह्यतिक्रूरा कृत्यैषा वो वधैषिणी ॥ ८०
वृषादर्भिप्रयुक्तैषा निहता मे तपोधनाः ।
दुष्टा हिंस्यादियं पापा युष्मान्प्रत्यग्निसंभवा ॥ ८१
तस्मादस्म्यागतो विप्रा वासवं मां निबोधत ।
अलोभादक्षया लोकाः प्राप्ता वः सार्वकामिकाः ।
उत्तिष्ठध्वमितः क्षिप्रं तानवाप्नुत वै द्विजाः ॥ ८२
भीष्म उवाच ।
ततो महर्षयः प्रीतास्तथेत्युक्त्वा पुरंदरम् ।
सहैव त्रिदशेन्द्रेण सर्वे जग्मुस्त्रिविष्टपम् ॥ ८३
एवमेते महात्मानो योगैर्बहुविधैरपि ।
क्षुधा परमया युक्ताश्छन्द्यमाना महात्मभिः ।
नैव लोभं तदा चक्रुस्ततः स्वर्गमवाप्नुवन् ॥ ८४
तस्मात्सर्वास्ववस्थासु नरो लोभं विवर्जयेत् ।
एष धर्मः परो राजंस्तस्माल्लोभं विवर्जयेत् ॥ ८५
इदं नरः सुचरितं समवायेषु कीर्तयन् ।
अर्थभागी च भवति न च दुर्गाण्यवाप्नुते ॥ ८६
प्रीयन्ते पितरश्चास्य ऋषयो देवतास्तथा ।
यशोधर्मार्थभागी च भवति प्रेत्य मानवः ॥ ८७

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि द्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥

## त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥ १४३ ॥

संभूय तीर्थयात्रां कुर्वद्भिर्द्विजर्षिभी राजर्षिभिश्च क्रमेण ब्रह्मसरःप्रति गमनम् ॥ १ ॥ तत्रागस्त्येन ह्रदात्समुद्धृतपद्मस्य धर्मशुश्रूषुणेन्द्रेण गूढमपहारे ऋषिभी राजभिश्च स्वेषु पुष्करस्तेयं शङ्कमानमगस्त्यंप्रति प्रत्येकशो नानाशपथकरणम् ॥ २ ॥ पश्चादिन्द्रेण स्वस्वरूपप्रकाशनपूर्वकं स्वेन पुष्करापहारस्य प्रयोजननिवेदनेन तत्प्रसादनम् ॥ ३ ॥

भीष्म उवाच ।
अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
यद्वृत्तं तीर्थयात्रायां शपथं प्रति तच्छृणु ॥ १
पुष्करार्थं कृतं स्तैन्यं पुरा भरतसत्तम ।
राजर्षिभिर्महाराज तथैव च द्विजर्षिभिः ॥ २
पुरा प्रभासे ऋषयः समग्राः
समेता वै मन्त्रममन्त्रयन्त ।
चराम सर्वां पृथिवीं पुण्यतीर्थां
तन्नः कामं हन्त गच्छाम सर्वे ॥
शुक्रोऽङ्गिराश्चैव कविश्च विद्वां-
स्तथा ह्यगस्त्यो नारदपर्वतौ च ।
भृगुर्वसिष्ठः कश्यपो गौतमश्च
विश्वामित्रो जमदग्निश्च राजन् ॥

अद्य - भक्ष्यम् ॥ ७८ ॥ अन्तर्हितानि अन्तर्धानं प्रापितानि ॥७९॥ राजन्ब्राह्मणस्य प्रकीर्तित इति क. थ. पाठ. ॥ ८५ ॥ द्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥

अत्र शपथेनैव निषिद्धार्थप्रकाशने ॥ १ ॥ पुष्करार्थं इन्द्रेण स्तैन्य कृतम् । मुनिभिः शपथाः कृता इत्यर्थः ॥ २ ॥

ऋषिस्तथा गालवोऽथाष्टकश्च
भरद्वाजोऽरुन्धती वालखिल्याः ।
शिबिर्दिलीपो नहुषोऽम्बरीषो
राजा ययातिर्धुन्धुमारोऽथ पूरुः ॥

जग्मुः पुरस्कृत्य महानुभावं
शतक्रतुं वृत्रहणं नरेन्द्राः ।
तीर्थानि सर्वाणि परिभ्रमन्तो
माध्यां ययुः कौशिकीं पुण्यतीर्थाम् । ६

सर्वेषु तीर्थेष्ववधूतपापा
जग्मुस्ततो ब्रह्मसरः सुपुण्यम् ।
देवस्य तीर्थे जलमग्निकल्पा
विगाह्य ते भुक्तविसप्रसूनाः ॥ ७

केचिद्बिसान्यखनंस्तत्र राजन्न-
न्ये मृणालान्यखनंस्तत्र विप्राः ।
अथापश्यन्पुष्करं ते ह्रियन्तं
ह्रदादगस्त्येन समुद्धृतं तत् ॥

तानाह सर्वानृषिमुख्यानगस्त्यः
केनाहृतं पुष्करं मे सुजातम् ।
युष्माञ्शङ्के पुष्करं दीयतां मे
न वै भवन्तो हर्तुमर्हन्ति पद्मम् ॥

शृणोमि कालो हिंसते धर्मवीर्यं
सेयं प्राप्ता वर्तते धर्मपीडा ।
पुराऽधर्मो वर्तते नेह याव-
त्तावद्गच्छामः सुरलोकं चिराय ॥ १०

पुरा वेदान्ब्राह्मणा ग्राममध्ये
घुष्टस्वरा वृषलाञ्श्रावयन्ति ।
पुरा राजा व्यवहारानधर्मा-
न्पश्यत्यहं परलोकं व्रजामि ॥ ११

पुरा राजा प्रत्यवरान्गरीयसो
मंस्यत्यथैनमनुयास्यन्ति सर्वे ।
धर्मोत्तरं यावदिदं न
तावद्व्रजामि परलोकं चिराय ॥' १२

पुरा प्रपश्यामि परेण मर्त्या-
न्बलीयसा दुर्बलान्भुज्यमानान् ।
तस्माद्यास्यामि परलोकं चिराय
न ह्युत्सहे द्रष्टुमीदृङ्गलोके ॥ १३

तमाहुरार्ता ऋषयो महर्षि
न ते वयं पुष्करं चोरयामः ।
मिथ्याभिशंसा भवता न कार्या
शपाम तीक्ष्णैः शपथैर्महर्षे ॥ १४

ते निश्चितास्तत्र महर्षयस्तु
संपश्यन्तो धर्ममेतं नरेन्द्राः ।
ततोऽशपन्त शपथान्पर्ययेण
सहैव ते पार्थिव पुत्रपौत्रैः ॥ १५

भृगुरुवाच ।

प्रत्याक्रोशेदिहाक्रुष्टस्ताडितः प्रतिताडयेत् ।
खादेच्च पृष्ठमांसानि यस्ते हरति पुष्करम् ॥ १६

वसिष्ठ उवाच ।

अस्वाध्यायपरो लोके श्वानं च परिकर्षतु ।
पुरे च भिक्षुर्भवतु यस्ते हरति पुष्करम् ॥ १७

कश्यप उवाच ।

सर्वत्र सर्वं पणतु न्यासे लोभं करोतु च ।
कूटसाक्षित्वमभ्येतु यस्ते हरति पुष्करम् ॥ १८

गौतम उवाच ।

जीवत्वहंकृतो बुद्ध्या विषमेणासमेन सः ।
कर्षको मत्सरी चास्तु यस्ते हरति पुष्करम् ॥ १९

अङ्गिरा उवाच ।

अशुचिर्ब्रह्मकूटोऽस्तु श्वानं च परिकर्षतु ।
ब्रह्महाऽनिकृतिश्चास्तु यस्ते हरति पुष्करम् ॥ २०

धुन्धुमार उवाच ।

अकृतज्ञस्तु मित्राणां शूद्रायां च प्रजायतु ।

---

बिसमृणालयो कमलकुमुदवदवान्तरभेदो ज्ञेयः । ह्रियन्त ह्रियमाणम् ॥ ८ ॥ प्रत्यवरान्मध्यमान् । तमोत्तरं यावदिद न वर्तत इति झ. पाठः ॥ १२ ॥ पृष्ठमांसानि पृष्ठवाहाना हयवृषभोष्ट्रादीनां मासानि । खादेच्च ब्रह्ममासानीति ङ. पाठः ॥ १६ ॥ भिक्षुः संन्यासी ॥ १७ ॥ पणतु क्रयविक्रय करोतु । सर्वं अपण्यमपि ॥ १८ ॥ विगत समभावो यस्मात्तेनासमेन कामक्रोधादिना । कृपणत्व समेतु स इति ट.ध.पाठः ॥ १९ ॥ अनिकृतिः अकृतप्रायश्चित्तः । मानं च परिकर्षत्विति ट, ध. पाठः ॥ २० ॥

एकः संपन्नमश्नातु यस्ते हरति पुष्करम् ॥ २१
पुरूरवा उवाच ।
चिकित्सायां प्रचरतु भार्यया चैव पुष्यतु ।
श्वशुरात्तस्य वृत्तिः स्याद्यस्ते हरति पुष्करम् ॥ २२
दिलीप उवाच ।
उदपानप्लवे ग्रामे ब्राह्मणो वृषलीपतिः ।
तस्य लोकान्स व्रजतु यस्ते हरति पुष्करम् ॥ २३
शुक्र उवाच ।
वृथा मांसं समश्नातु दिवा गच्छतु मैथुनम् ।
प्रेष्यो भवतु राज्ञश्च यस्ते हरति पुष्करम् ॥ २४
जमदग्निरुवाच ।
अनध्यायेष्वधीयीत मित्रं श्राद्धे च भोजयेत् ।
श्राद्धे शूद्रस्य चाश्नीयाद्यस्ते हरति पुष्करम् ॥ २५
शिबिरुवाच ।
अनाहिताग्निर्म्रियतां यज्ञे विघ्नं करोतु च ।
तपस्विभिर्विरुध्येच्च यस्ते हरति पुष्करम् ॥ २६
ययातिरुवाच ।
अनृतौ व्रतनियतायां भार्यायां स प्रजायतु ।
निराकरोतु वेदांश्च यस्ते हरति पुष्करम् ॥ २७
नहुष उवाच ।
अतिथिर्गृहसंस्थोऽस्तु कामवृत्तस्तु दीक्षितः ।
विद्यां प्रयच्छतु भृतो यस्ते हरति पुष्करम् ॥ २८
अम्बरीष उवाच ।
नृशंसस्त्यक्तधर्मोऽस्तु स्त्रीषु ज्ञातिषु गोषु च ।
निहन्तु ब्राह्मणं चापि यस्ते हरति पुष्करम् ॥ २९
नारद उवाच ।
गृहज्ञानी बहिःशास्त्रं पठतां विस्वरं पदम् ।
गरीयसोऽवजानातु यस्ते हरति पुष्करम् ॥ ३०
नाभाग उवाच ।
अनृतं भाषतु सदा सद्भिश्चैव विरुध्यतु ।
शुल्केन ददतु कन्यां यस्ते हरति पुष्करम् ॥ ३१
कविरुवाच
पदा च गां संस्पृशतु सूर्यं च प्रति मेहतु ।
शरणागतं संत्यजतु यस्ते हरति पुष्करम् ॥ ३२
विश्वामित्र उवाच ।
करोतु भृतकोऽवर्षी राज्ञश्चास्तु पुरोहितः ।
ऋत्विगस्तु ह्ययाज्यस्य यस्ते हरति पुष्करम् ॥ ३३
पर्वत उवाच ।
ग्रामे चाधिकृतः सोऽस्तु खरयानेन गच्छतु ।
शुनः कर्षतु वृत्त्यर्थे यस्ते हरति पुष्करम् ॥ ३४
भरद्वाज उवाच ।
सर्वपापसमादानं नृशंसे चानृते च यत् ।
तत्तस्यास्तु सदा पापं यस्ते हरति पुष्करम् ॥ ३५
अष्टक उवाच ।
स राजास्त्वकृतप्रज्ञः कामवृत्तश्च पापकृत् ।
अधर्मेणाभिशास्तूर्वीं यस्ते हरति पुष्करम् ॥ ३६
गालव उवाच ।
पापिष्ठेभ्यो ह्यनर्घार्हः स नरोऽस्तु स्वपापकृत् ।
दत्त्वा दानं कीर्तयतु यस्ते हरति पुष्करम् ॥ ३७
अरुन्धत्युवाच ।
श्वश्र्वाऽपवादं वदतु भर्तुर्भवतु दुर्मनाः ।
एका स्वादु समश्नातु या ते हरति पुष्करम् ॥ ३८
वालखिल्या ऊचुः ।
एकपादेन वृत्त्यर्थं ग्रामद्वारे स तिष्ठतु ।
धर्मज्ञस्त्यक्तधर्मास्तु यस्ते हरति पुष्करम् ॥ ३९
पशुसख उवाच ।
अग्निहोत्रमनादृत्य स सुखं स्वपतु द्विजः ।
परिव्राट् कामवृत्तोऽस्तु यस्ते हरति पुष्करम् ॥ ४०
सुरभ्युवाच ।
वालजेन निदानेन कांस्यं भवतु दोहनम् ।
दुह्येत परवत्सेन या ते हरति पुष्करम् ॥ ४१

चोरकार्ये प्रचरतु इति ट. ध. पाठः । भार्या स्वा चैव दूष्यतु इति थ. पाठः । भार्या वाचैव तुष्यत्विति ध. पाठ. ॥ २२ ॥ उदपाने प्लव आप्लवः स्नानं यस्मिन् ॥ २३ ॥ यतिर्गच्छतु मैथुनमिति ट. ध. पाठः ॥ २४ ॥ अतिथिर्यतिः । गृहसंस्थो गृहवासी । अतिथिं गृहस्थस्त्यजत्विति थ. पाठः भृतो वित्तेन क्रीतः ॥ २८ ॥ गूढो ज्ञातु बहिरशास्त्रमिति थ. ध. पाठः ॥ ३० ॥ भृतको धान्यविक्रीतः सन् अवर्षः वृष्टिनिबन्ध करोतु ॥ ३३ ॥ पापिष्ठा एव अनर्घार्हाः अपूज्याः । अय तु ततोप्यपूज्योस्तु । स्वपापकृत् स्वेषु ज्ञातिषु पापकृत् ॥ ३७ ॥ निदान दोहनकाले गवा पादबन्धनी रज्जुस्तेन ॥४१॥

भीष्म उवाच ।
ततस्तु तैः शपथैः शप्यमानै-
र्नानाविधैर्बहुभिः कौरवेन्द्र ।
सहस्राक्षो देवराट् संप्रहृष्टः
समीक्ष्य तं कोपनं विप्रमुख्यम् ॥ ४२
अथाब्रवीन्मघवा प्रत्ययं स्वं
स्वयं समागत्य तमृषिं जातरोषम् ।
ब्रह्मर्षिदेवर्षिनृपर्षिमध्ये
यं तं निबोधेह ममाद्य राजन् ॥ ४३
शक्र उवाच ।
अध्वर्यवे दुहितरं ददातु
छन्दोगे वाऽऽचरितब्रह्मचर्ये ।
अथर्वणं वेदमधीत्य विप्रः
स्नायीत यः पुष्करमाददाति ॥ ४४
सर्वान्वेदानधीयीत पुण्यशीलोऽस्तु धार्मिकः ।
ब्रह्मणः सदनं यातु यस्ते हरति पुष्करम् ॥ ४५
अगस्त्य उवाच ।
आशीर्वादस्त्वया प्रोक्तः शपथो बलसूदन ।
दीयतां पुष्करं मह्यमेष धर्मः सनातनः ॥ ४६
इन्द्र उवाच ।
न मया भगवँल्लोभाद्धृतं पुष्करमद्य वै ।
धर्मांस्तु श्रोतुकामेन हृतं न क्रोद्धुमर्हसि ॥ ४७
धर्मश्रुतिसमुत्कर्षो धर्मसेतुरनामयः ।
आर्षो वै शाश्वतो नित्यमव्ययोऽयं मया श्रुतः ॥ ४८
तदिदं गृह्यतां विद्वन्पुष्करं द्विजसत्तम ।
अतिक्रमं मे भगवन्क्षन्तुमर्हस्यनिन्दित ॥ ४९
इत्युक्तः स महेन्द्रेण तपस्वी कोपनो भृशम् ।
जग्राह पुष्करं धीमान्प्रसन्नश्चाभवन्मुनिः ॥ ५०
प्रययुस्ते ततो भूयस्तीर्थानि वनगोचराः ।
पुण्येषु तीर्थेषु तथा गात्राण्याप्लावयन्त ते ॥ ५१
आख्यानं य इदं युक्तः पठेत्पर्वणिपर्वणि ।
न मूर्खं जनयेत्पुत्रं न भवेच्च निराकृतिः ॥ ५२
न तमापत्स्पृशेत्काचिद्विज्वरो न जरावहः ।
विरजाः श्रेयसा युक्तः प्रेत्य स्वर्गमवाप्नुयात् ॥ ५३
यश्च शास्त्रमधीयीत ऋषिभिः परिपालितम् ।
स गच्छेद्ब्रह्मणो लोकमव्ययं च नरोत्तम ॥ ५४

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥ १४३ ॥

---

## चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४४ ॥

भीष्मेण युधिष्ठिरंप्रति छत्रोपानत्प्रवृत्तिप्रदाननिदानकथनाय सूर्यजमदग्निसंवादानुवादः ॥ १ ॥ जमदग्निना रेणुकायाः स्वधनुर्निस्सृतशराणां पुनःपुनरादाने नियोजनेन बाणक्रीडारम्भः ॥ २ ॥ रेणुकया सूर्यतेजःप्रतप्तशिरःपादतया तरुच्छायाश्रयणेन शरानयनविलम्बने रुष्टेन मुनिना तत्कारणप्रश्नः ॥ ३ ॥ रेणुकया तन्निवेदने मुनिना कोपाच्छस्त्रेण भूमौ सूर्यनिपातनोद्यमनम् ॥ ४ ॥ भयात्सूर्येण विप्ररूपधारणेन भुवमेत्य तत्प्रसादनम् ॥ ५ ॥

युधिष्ठिर उवाच ।
यदिदं श्राद्धकृत्येषु दीयते भरतर्षभ ।
छत्रं चोपानहौ चैव केनैतत्संप्रवर्तितम् ॥ १
कथं चैतत्समुत्पन्नं किमर्थं चैव दीयते ।
न केवलं श्राद्धकृत्ये पुण्यकेष्वपि दीयते ॥ २
बहुष्वपि निमित्तेषु पुण्यमाश्रित्य दीयते ।
एतद्विस्तरतो ब्रह्मञ्श्रोतुमिच्छामि तत्त्वतः ॥ ३
भीष्म उवाच ।
शृणु राजन्नवहितश्छत्रोपानहविस्तरम् ।
यथैतत्प्रथितं लोके यथा चैतत्प्रवर्तितम् ॥ ४
यथा चाक्षय्यतां प्राप्तं पुण्यतां च यथागतम् ।
सर्वमेतदशेषेण प्रवक्ष्यामि नराधिप ॥ ५

प्रत्ययम्अभिप्रायम् ॥ ४३ ॥ धर्मश्रुतीना सम्यगुत्कर्षः । धर्म एव सेतुस्तरणोपायः ॥ ४८ ॥ त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥ १४३ ॥

पुण्यकेषु स्त्रीणा व्रतोत्सवेषु ॥ २ ॥ ज्येष्ठामूले दक्षिणावर्ते भ्रममाणे भचक्रे ज्येष्ठानां समसूत्रे पतित रोहिणीनक्षत्र तदेव ज्येष्ठानां मूल । यथाश्रुतार्थग्रहण तु न । ज्येष्ठामूलस्थेऽर्के हेमन्ते शिरःपाददाहस्यानवसरात् । लोके येन चैव प्रकीर्तितमिति ध. पाठः ॥ ४ ॥

'इतिहासं पुरावृत्तमिदं शृणु नराधिप ।'
जमदग्नेश्च संवादं सूर्यस्य च महात्मनः ॥ ६
पुरा स भगवान्साक्षाद्धनुषा क्रीडति प्रभो ।
संधायसंधाय शरांश्चिक्षेप किल भार्गवः ॥ ७
तान्क्षिप्तान्रेणुका सर्वांस्तस्येषून्दीप्ततेजसः ।
आनीय सा तदा तस्मै प्रादादसकृदच्युत ॥ ८
अथ तेन स शब्देन ज्यायाश्चैव शरस्य च ।
प्रहृष्टः संप्रचिक्षेप सा च प्रत्याजहार तान् ॥ ९
ततो मध्याह्नमारूढे ज्येष्ठामूले दिवाकरे
स सायकान्द्विजो मुक्त्वा रेणुकामिदमब्रवीत् ॥ १०
गच्छानय विशालाक्षि शरानेतान्धनुश्च्युतान् ।
यावदेतान्पुनः सुभ्रु क्षिपामीति जनाधिप ॥ ११
सा गच्छन्त्यन्तरा छायां वृक्षमाश्रित्य भामिनी ।
तस्थौ तस्या हि संतप्तं शिरः पादौ तथैव च ॥ १२
स्थिता सा तु मुहूर्तं वै भर्तुः शापभयाच्छुभा ।
ययावानयितुं भूयः सायकानसितेक्षणा ।
प्रत्याजगाम च शरांस्तानादाय यशस्विनी ॥ १३
सा वै प्रस्विन्नसर्वाङ्गी पद्भ्यां दुःखं नियच्छती ।
उपाजगाम भर्तारं भयाद्भर्तुः प्रवेपती ॥ १४
स तामृषिस्तदा क्रुद्धो वाक्यमाह शुभाननाम् ।
रेणुके किं चिरेण त्वमागतेति पुनःपुनः ॥ १५
रेणुकोवाच ।
शिरस्तप्तं प्रदीप्तौ मे पादौ चैव तपोधन ।
सूर्यतेजोनिरुद्धाऽहं वृक्षच्छायां समाश्रिता ॥ १६
एतस्मात्कारणाद्ब्रह्मंश्चिरायैतत्कृतं मया ।
एतच्छ्रुत्वा मम विभो मा क्रुधस्त्वं तपोधन ॥ १७
जमदग्निरुवाच ।
अद्यैनं दीप्तकिरणं रेणुके तव दुःखदम् ।
शरैर्निपातयिष्यामि सूर्यमस्त्राग्नितेजसा ॥ १८
भीष्म उवाच ।
स विस्फार्य धनुर्दिव्यं गृहीत्वा च शरान्बहून् ।
अतिष्ठत्सूर्यमभितो यतो याति ततोमुखः ॥ १९
अथ तं प्रेक्ष्य संनद्धं सूर्योऽभ्येत्य वचोऽब्रवीत् ।
द्विजरूपेण कौन्तेय किं ते सूर्योऽपराध्यति ॥ २०
आदत्ते रश्मिभिः सूर्यो दिवि तिष्ठंस्ततस्ततः ।
रसं हृतं वै वर्षासु प्रवर्षति दिवाकरः ॥ २१
ततोऽन्नं जायते विप्र मनुष्याणां सुखावहम् ।
अन्नं प्राणा इति यथा वेदेषु परिपठ्यते ॥ २२
अथाऽभ्रेषु निगूढश्च रश्मिभिः परिवारितः ।
सप्तद्वीपानिमान्ब्रह्मन्वर्षेणाभिप्रवर्षति ॥ २३
ततस्तदौषधीनां च वीरुधां पुष्पपत्रजम् ।
सर्वं वर्षाभिनिर्वृत्तमन्नं संभवति प्रभो ॥ २४
जातकर्माणि सर्वाणि व्रतोपनयनानि च ।
गोदानानि विवाहाश्च तथा यज्ञसमृद्धयः ॥ २५
सत्राणि दानानि तथा संयोगा वित्तसंचयाः ।
अन्नतः संप्रवर्तन्ते यथा त्वं वेत्थ भार्गव ॥ २६
रमणीयानि यावन्ति यावदारम्भिकाणि च ।
सर्वमन्नात्प्रभवति विदितं कीर्तयामि ते ॥ २७
सर्वं हि वेत्थ विप्र त्वं यदेतत्कीर्तितं मया ।
प्रसादये त्वां विप्रर्षे किं ते सूर्यो निपात्यते ॥ २८

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४४ ॥

## पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥ १४५ ॥

जमदग्निना सौरातप्रतापनिवारणोपायकल्पनं चोदितेन सूर्येण तस्मै छत्रोपानत्प्रदानम् ॥ १ ॥ एवं भीष्मेण युधिष्ठिरंप्रति तत्प्रवृत्तिकथनपूर्वकं तद्दानप्रशंसनम् ॥ २ ॥

युधिष्ठिर उवाच ।
एवं प्रयाचति तदा भास्करे मुनिसत्तमः ।
जमदग्निर्महातेजाः किं कार्यं प्रत्यपद्यत ॥ १
भीष्म उवाच ।
स तथा याचमानस्य मुनिरग्निसमप्रभः ।
जमदग्निः शमं नैव जगाम कुरुनन्दन ॥ २

द्विजो विक्रेतिट. ध. पाठः ॥ १० ॥ किं ते सूर्यं निपात्य वै इति झ. पाठः ॥ २८ ॥ चतुश्चत्वारिंशदधिकशततमोऽध्यायः १४४

ततः सूर्यो मधुरया वाचा तमिदमब्रवीत् ।
कृताञ्जलिर्विप्ररूपी प्रणम्यैनं विशांपते ॥ ३
चलं निमित्तं विप्रर्षे सदा सूर्यस्य गच्छतः ।
कथं चलं भेत्स्यसि त्वं सदा यान्तं दिवाकरम् ॥४
जमदग्निरुवाच ।
स्थिरं चापि चलं चापि जाने त्वां ज्ञानचक्षुषा ।
अवश्यं विनयाधानं कार्यमद्य मया तव ॥ ५
मध्याह्ने वै निमेषार्धं तिष्ठसि त्वं दिवाकर ।
तत्र भेत्स्यामि सूर्य त्वां न मेऽत्रास्ति विचारणा ॥६
उवाच ।
असंशयं मां विप्रर्षे भेत्स्यसे धन्विनांवर ।
अपकारिणं मां विद्धि भगवञ्शरणागतम् ॥ ७
भीष्म उवाच ।
ततः प्रहस्य भगवाञ्जमदग्निरुवाच तम् ।
न भीः सूर्य त्वया कार्या प्रणिपातगतो ह्यसि ॥८
ब्राह्मणेष्वार्जवं यच्च स्थैर्यं च धरणीतले ।
सौम्यतां चैव सोमस्य गाम्भीर्यं वरुणस्य च ॥९
दीप्तिमग्नेः प्रभां मेरोः प्रतापं धनदस्य च ।
एतान्यतिक्रमेद्यो वै स हन्याच्छरणागतम् ॥ १०
भवेत्स गुरुतल्पी च ब्रह्महा च स वै भवेत् ।
सुरापानं स कुर्याच्च यो हन्याच्छरणागतम् ॥ ११
एतस्य त्वपनीतस्य समाधिं तात चिन्तय ।
यथा सुखगमः पन्था भवेत्त्वद्रश्मितापितः ॥१२
भीष्म उवाच ।
एतावदुक्त्वा स तदा तूष्णीमासीद्भृगूत्तमः ।
अथ सूर्योऽददत्तस्मै छत्रोपानहमाशु वै ॥ १३
सूर्य उवाच ।
महर्षे शिरसस्त्राणं छत्रं मद्रश्मिवारणम् ।
प्रतिगृह्णीष्व पद्भ्यां च त्राणार्थं चर्मपादुके ॥ १४
अद्यप्रभृति चैवेह लोके संप्रचरिष्यति ।
पुण्यकेषु च सर्वेषु परमक्षय्यमेव च ॥ १५
भीष्म उवाच ।
उपानहौ च च्छत्रं च सूर्येणैतत्प्रवर्तितम् ।
पुण्यमेतदभिख्यातं त्रिषु लोकेषु भारत ॥ १६
तस्मात्प्रयच्छ विप्रेषु छत्रोपानहमुत्तमम् ।
धर्मस्ते सुमहान्भावी न मेऽत्रास्ति विचारणा ॥१७
छत्रं हि भरतश्रेष्ठ यः प्रदद्याद्द्विजातये ।
शुभ्रं शतशलाकं वै स प्रेत्य सुखमेधते ॥ १८
स शक्रलोके वसति पूज्यमानो द्विजातिभिः ।
अप्सरोभिश्च सततं देवैश्च भरतर्षभ ॥ १९
उपानहौ च यो दद्याच्छ्लक्ष्णौ स्नेहसमन्वितौ ।
स्नातकाय महाबाहो संशिताय द्विजातये ॥ २०
सोपि लोकानवाप्नोति दैवतैरभिपूजितान् ।
गोलोके स मुदा युक्तो वसति प्रेत्य भारत ॥ २१
एतत्ते भरतश्रेष्ठ मया कार्त्स्न्येन कीर्तितम् ।
छत्रोपानहदानस्य फलं भरतसत्तम ॥ २२

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥ १४५ ॥

## षट्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४६ ॥

भीष्मेण युधिष्ठिरंप्रति शूद्रधर्माणां मृत्तिकाशौचादीनां च निरूपणम् ॥ १ ॥

युधिष्ठिर उवाच ।
शूद्राणामिह शुश्रूषा नित्यमेवानुवर्णिता ।
कैः कारणैः कतिविधा शुश्रूषा समुदाहृता ॥ १
के च शुश्रूषया लोका विहिता भरतर्षभ ।
शूद्राणां भरतश्रेष्ठ ब्रूहि मे धर्मलक्षणम् ॥ २
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
शूद्राणामनुकम्पार्थं यदुक्तं ब्रह्मवादिना ॥ ३

निमित्त लक्ष्यम् ॥ ४ ॥ ब्राह्मणेष्वपि यज्ज्ञानमिति ट. ध. पाठः ॥९॥ अपनीतस्यापनयस्य संतापनरूपस्य समाधिं समाधानम् ॥१२॥ पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥ १४५ ॥

शुश्रूषां भरतश्रेष्ठेति ट. पाठः ॥ २ ॥

* एतदाद्यष्टाध्याया दाक्षिण्यत्वकोशेष्वेव दृश्यन्ते ।

वृद्धः पराशरः प्राह धर्मं शुभ्रमनामयम् ।
अनुग्रहार्थं वर्णानां शौचाचारसमन्वितम् ॥ ४
धर्मोपदेशमखिलं यथावदनुपूर्वशः ।
शिष्यानध्यापयामास शास्त्रमर्थवदर्थवित् ॥ ५
क्षान्तेन्द्रियेण मानेन शुचिनाऽचापलेन-वै ।
अदुर्बलेन धीरेण शान्तेनोत्तरवादिना ॥ ६
अलुब्धेनानृशंसेन ऋजुना ब्रह्मवादिना ।
चारित्रतत्परेणैव सर्वभूतहितात्मना ॥ ७
अरयः षड्विजेतव्या नित्यं स्वं देहमाश्रिताः ।
कामक्रोधौ च लोभश्च मानमोहौ मदस्तथा ॥ ८
विधिना धृतिमास्थाय शुश्रूषुरनहंकृतः ।
वर्णत्रयस्यानुमतो यथाशक्ति यथाबलम् ॥ ९
कर्मणा मनसा वाचा चक्षुषा च चतुर्विधम् ।
आस्थाय नियमं धीमाञ्शान्तो दान्तो जितेन्द्रियः॥
रक्षोयक्षजनद्वेषी शेषान्नकृतभोजनः ।
वर्णत्रयान्मधु यथा भ्रमरो धर्ममाचरेत् ॥ ११
यदि शूद्रस्तपः कुर्याद्वेददृष्टेन कर्मणा ।
इह चास्य परिक्लेशः प्रेत्य चास्याशुभा गतिः ॥ १२
अधर्म्यमयशस्यं च तपः शूद्रे प्रतिष्ठितम् ।
अमार्गेण तपस्तप्त्वा म्लेच्छेषु फलमश्नुते ॥ १३
अन्यथा वर्तमानो हि न शूद्रो धर्ममर्हति ।
अमार्गेण प्रयातानां प्रत्यक्षादुपलभ्यते ।
चातुर्वर्ण्यव्यपेतानां जातिमूर्तिपरिग्रहः ॥ १४
तथा ते हि शकाश्चीनाः काम्भोजाः पारदास्तथा ।
शबराः पह्लवाश्चैव तुषारयवनास्तथा ॥ १५
दार्वाश्च दरदाश्चैव उज्जिहानास्तथेतराः ।
वेणाश्च कङ्कणाश्चैव सिंहला मद्रकास्तथा ॥ १६
किष्किन्धकाः पुलिन्दाश्च कहाश्चान्ध्राः सनीरगाः।
गन्धिका द्रमिडाश्चैव बर्बराश्चुचुकास्तथा ॥ १७
किराताः पार्वतेयाश्च कोलाश्चीलाः सखापकाः ।
आरूकाश्चैव दोहाश्च याश्चान्या म्लेच्छजातयः॥ १८
विकृता विकृताचारा दृश्यन्ते क्रूरबुद्धयः ।
अमार्गेणाश्रिता धर्मं ततो जात्यन्तरं गताः ॥ १९
अमार्गोपार्जितस्यैतत्तपसो विदितं फलम् ।
न नश्यति कृतं कर्म शुभं वा यदि वाऽशुभम् ॥ २०
अत्राप्येते वसु प्राप्य विकर्म तपसार्जितम् ।
पाषण्डानर्चयिष्यन्ति धर्मकामा वृथा श्रमाः ॥ २१
एवं चतुर्णां वर्णानामाश्रमाणां च पार्थिव ।
विपरीतं वर्तमाना म्लेच्छा जायन्त्यबुद्धयः ॥ २२
अध्यायधनिनो विप्राः क्षत्रियाणां बलं धनम् ।
वणिक्कृषिश्च वैश्यानां शूद्राणां परिचारिका ॥ २३
व्युच्छेदात्तस्य धर्मस्य निरयायोपपद्यते ।
ततो म्लेच्छा भवन्त्येते निर्घृणा धर्मवर्जिताः ।
पुनश्च निरयं तेषां तिर्यग्योनिश्च शाश्वती ॥ २४
ये तु सत्पथमास्थाय वर्णाश्रमकृतं पुरा ।
सर्वान्विमार्गानुत्सृज्य स्वधर्मविधिमाश्रिताः ॥ २५
सर्वभूतदयावन्तो दैवतद्विजपूजकाः ।
शास्त्रदृष्टेन विधिना श्रद्धया जितमन्यवः ॥ २६
तेषां विधिं प्रवक्ष्यामि यथावदनुपूर्वशः ।
उपादानविधिं कृत्स्नं शुश्रूषाधिगमं तथा ॥ २७
शिष्टोपनयनं चैव मन्त्राणि विविधानि च ।
तथा शिष्यपरीक्षां च शास्त्रप्रामाण्यदर्शनात् ॥ २८
प्रवक्ष्यामि यथातत्त्वं यथावदनुपूर्वशः ।
शौचकृत्यस्य शौचार्थान्सर्वानेव विशेषतः ॥ २९
महाशौचप्रभृतयो दृष्टास्तत्त्वार्थदर्शिभिः ।
तत्रापि शूद्रो भिक्षूणामिदं शेषं च कल्पयेत् ॥ ३०
भिक्षुभिः सुकृतप्रज्ञैः केवलं धर्ममाश्रितैः ।
सम्यग्दर्शनसंपन्नैर्गताध्वनि हितार्थिभिः ।
अवकाशमिमं मेध्यं निर्मितं कामवीरुधम् ॥ ३१
निर्जनं संवृतं बुद्ध्वा नियतात्मा जितेन्द्रियः ।
सजलं भाजनं स्थाप्य मृत्तिकां च परीक्षिताम् ३२
परीक्ष्य भूमिं मूत्रार्थी तत आसीत वाग्यतः ।
उदङ्मुखो दिवा कुर्याद्रात्रौ चेद्दक्षिणामुखः ॥ ३३
अन्तर्हितायां भूमौ तु अन्तर्हितशिरास्तथा ।
असमाप्ते तथा शौचे न वाचं किंचिदीरयेत् ॥ ३४
कृतकृत्यस्तथाऽऽचम्य गच्छन्नोदीरयेद्वचः ।

निल्य रक्ष जनाद्वेषीति क. पाठः ॥ ११ ॥ विकृताकारा इति थ. पाठः ॥ १९ ॥ स्वधर्मपथमाश्रिताः इति क. ट. थ. पाठः ॥ २५ ॥

शौचार्थमुपविष्टस्तु मृद्भाजनपुरस्कृतः ॥ ३५
स्थाप्यं कमण्डलुं गृह्य पार्श्वोरुभ्यामथान्तरे ।
शौचं कुर्याच्छनैर्वीरो बुद्धिपूर्वमसंकरम् ॥ ३६
पाणिना शुद्धमुदकं संगृह्य विधिपूर्वकम् ।
विप्रुषश्च यथा न स्युर्यथा चोरू न संस्पृशेत् ॥३७
अपाने मृत्तिकास्तिस्रः प्रदेयास्त्वनुपूर्वशः ।
हस्ताभ्यां च तथा विप्रो हस्तं हस्तेन संस्पृशेत् ३८
अपाने नव देयाः स्युरिति वृद्धानुशासनम् ।
मृत्तिका दीयमाना हि शोधयेद्देशमञ्जसा ॥ ३९
तस्मात्पाणितले देया मृत्तिकास्तु पुनः पुनः ।
बुद्धिपूर्वं प्रयत्नेन यथा नैव स्पृशेत्स्फिजौ ॥ ४०
यथा घातो हि न भवेत्क्लेदजः परिधानके ।
तथा गुदं प्रमार्जेत शौचार्थं तु पुनःपुनः ॥ ४१
प्रतिपादं व्रतस्त्यक्त्वा शौचमुत्थाय कारयेत् ।
सव्ये द्वादश देयाः स्युस्तिस्रस्तिस्रः पुनः पुनः ।
देया कूर्परके हस्ते पृष्ठे बन्धे पुनः पुनः ॥ ४२
तथैवादर्शके दद्याच्चतस्रस्तूभयोरपि ।
उभयोर्हस्तयोरेवं सप्तसप्त प्रदापयेत् ॥ ४३
ततोऽन्यां मृत्तिकां गृह्य कार्यं शौचं पुनस्तयोः ।
हस्तयोरेवमेतद्धि महाशौचं विधीयते
ततोऽन्यथा न कुर्वीत विधिरेष सनातनः ॥ ४४
उपस्थे मूत्रशौचं स्यादत ऊर्ध्वं विधीयते ।
अतोऽन्यथा तु यः कुर्यात्प्रायश्चित्तीयते तु सः ४५
मलोपहतचेलस्य द्विगुणं तु विधीयते ।
सहपादमथोरुभ्यां हस्तशौचमसंशयम् ॥ ४६
अवधीरयमाणस्य संदेह उपजायते ।
यथायथा विशुद्ध्येत तत्तथा तदुपक्रमे ॥ ४७
सकर्दमं तु वर्षासु गृहमाविश्य संकटम् ।
हस्तयोर्मृत्तिकास्तिस्रः पादयोः षट् प्रदापयेत् ॥४८
कामं दत्त्वा गुदे दद्यात्तिस्रः पद्भ्यां तथैव च ।
हस्तशौचं प्रकर्तव्यं मूत्रशौचविधेस्तथा ॥ ४९
मूत्रशौचे तथा हस्तौ पादाभ्यां चानुपूर्वशः ।
नैष्ठिके स्नानशौचे तु महाशौचं विधीयते ॥ ५०
क्षारोपराभ्यां वस्त्रस्य कुर्याच्छौचं मृदा सह ।
लेपगन्धापनयनममेध्यस्य विधीयते ॥ ५१
स्नानशम्याां मृदस्तिस्रो हस्ताभ्यां चानुपूर्वशः ।
शौचं प्रयत्नतः कृत्वा कम्पमानः समुद्धरेत् ॥५२
देयाश्चतस्रस्तिस्रो वा द्वे वाऽप्येकां तथाऽऽपदि ।
कालमासाद्य देशं च शौचस्य गुरुलाघवम् ॥५३
विधिनाऽनेन शौचं तु नित्यं कुर्यादतन्द्रितः
अविप्रेक्षन्नसंभ्रान्तः पादौ प्रक्षाल्य तत्परः ॥५४
अप्रक्षालितपादस्तु पाणिमामणिबन्धनात् ।
अधस्तादुपरिष्टाच्च ततः पाणिमुपस्पृशेत् ॥ ५५
मनोगतास्तु निश्शब्दा निश्शब्दं त्रिरपः पिबेत् ।
द्विर्मुखं परिमृज्याच्च खानि चोपस्पृशेद्बुधः ॥५६
ऋग्वेदं तेन प्रीणाति प्रथमं यः पिबेदपः ।
द्वितीयं तु यजुर्वेदं तृतीयं साम एव च ॥ ५७
मृज्यते प्रथमं तेन अथर्वा प्रीतिमाप्नुयात् ।
द्वितीयेनेतिहासं च पुराणस्मृतिदेवताः ॥ ५८
यच्चक्षुषि समाधत्ते तेनादित्यं तु प्रीणयेत्
प्रीणाति वायुं घ्राणं च दिशश्चाप्यथ श्रोत्रयोः ॥५९
ब्रह्माणं तेन प्रीणाति यन्मूर्धनि समापयेत् ।
समुत्क्षिपति चापोर्ध्वमाकाशं तेन प्रीणयेत् ॥६०
प्रीणाति विष्णुः पद्भ्यां तु सलिलं वै समादधत् ॥६१
प्राङ्मुखोदङ्मुखो वाऽपि अन्तर्जानुरुपस्पृशेत् ।
सर्वत्र विधिरित्येष भोजनादिषु नित्यशः ॥ ६२
अन्नेषु दन्तलग्नेषु उच्छिष्टः पुनराचमेत् ।
विधिरेष समुद्दिष्टः शौचे चाभ्युक्षणं स्मृतम् ॥६३
शूद्रस्यैष विधिर्दृष्टो गृहान्निष्क्रमतस्ततः ।
नित्यं त्वलुप्तशौचेन वर्तितव्यं कृतात्मना ।
यशस्कामेन भिक्षुभ्यः शूद्रेणात्महितार्थिना ॥६४

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि षट्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४६ ॥

पदमाविश्य सङ्कटम् इति थ. पाठः ॥ ४८

षट्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४६ ॥

## सप्तचत्वारिंशदधिकशततमोऽध्यायः ॥ १४७ ॥

भीष्मेण युधिष्ठिरंप्रति ब्राह्मणादिधर्मनिरूपणपूर्वकं शूद्रस्य यतिशुश्रूषाप्रकारनिरूपणम् ॥ १ ॥

'पराशर उवाच ।
क्षत्रा आरम्भयज्ञास्तु वीर्ययज्ञा विशः स्मृताः ।
शूद्रा परिचरयज्ञा जपयज्ञास्तु ब्राह्मणाः ॥ १
शुश्रूषाजीविनः शूद्रा वैश्या विपणिजीविनः ।
अनिष्टनिग्रहाः क्षत्रा विप्राः स्वाध्यायजीविनः ॥२
तपसा शोभते विप्रो राजन्यः पालनादिभिः ।
आतिथ्येन तथा वैश्यः शूद्रो दास्येन शोभते ॥ ३
यतात्मना तु शूद्रेण शुश्रूषा नित्यमेव च ।
कर्तव्या त्रिषु वर्णेषु प्रायेणाश्रमवासिषु ॥ ४
अशक्तेन त्रिवर्गस्य सेव्या ह्याश्रमवासिनः ।
यथाशक्त्यं यथाप्रज्ञं यथाधर्मं यथाश्रुतम् ॥ ५
विशेषेणैव कर्तव्या शुश्रूषा भिक्षुकाश्रमे ॥ ६
आश्रमाणां तु सर्वेषां चतुर्णां भिक्षुकाश्रमम् ।
प्रधानमिति वर्ण्यन्ते शिष्टाः शास्त्रविनिश्चये ॥ ७
यच्चोपदिश्यते शिष्टैः श्रुतिस्मृतिविधानतः ।
तथाऽऽस्थेयमशक्तेन स धर्म इति निश्चितः ॥ ८
अतोऽन्यथा तु कुर्वाणः श्रेयो नाप्नोति मानवः ।
तस्माद्भिक्षुषु शूद्रेण कार्यमात्महितं सदा ॥ ९
इह यत्कुरुते श्रेयस्तत्प्रेत्य समुपाश्नुते ।
तच्चानसूयता कार्यं कर्तव्यं यद्धि मन्यते ॥ १०
असूयता तु तस्येह फलं दुःखादवाप्यते ।
प्रियवादी जितक्रोधो वीततन्द्रीरमत्सरः ॥ ११
क्षमावाञ्शीलसंपन्नः सत्यधर्मपरायणः ।
आपद्भावेन कुर्याद्धि शुश्रूषां भिक्षुकाश्रमे ॥ १२
अयं मे परमो धर्मस्त्वनेनेदं सुदुष्करम् ।
संसारसागरं घोरं तरिष्यामि न संशयः ॥ १३
विभयो देहमुत्सृज्य यास्यामि परमां गतिम् ।
नातः परं ममाप्यन्य एष धर्मः सनातनः ॥ १४
एवं संचिन्त्य मनसा शूद्रो बुद्धिसमाधिना ।
कुर्यादविमना नित्यं शुश्रूषाधर्ममुत्तमम् ॥ १५
शुश्रूषानियमेनेह भाव्यं शिष्टाशिना सदा ।
शमान्वितेन दान्तेन कार्याकार्यविदा सदा ॥ १६
सर्वकार्येषु कृत्यानि कृतान्येव तु दर्शयेत् ।
यथा प्रियो भवेद्भिक्षुस्तथा कार्यं प्रसाधयेत् ॥१७
यदकल्प्यं भवेद्भिक्षोर्न तत्कार्यं समाचरेत् ।
यथाऽऽश्रमस्याविरुद्धं धर्ममात्राभिसंहितम् ॥ १८
तत्कार्यमविचारेण नित्यमेव शुभार्थिना ।
मनसा कर्मणा वाचा नित्यमेव प्रसादयेत् ॥ १९
स्थातव्यं तिष्ठमानेषु गच्छमानाननुव्रजेत् ।
आसीनेष्वासितव्यं च नित्यमेवानुवर्तता ॥ २०
धर्मलब्धेन स्नेहेन पादौ संपीडयेत्सदा ।
उद्वर्तनादींश्च तथा कुर्यादप्रतिचोदितः ॥ २१
नैजकार्याणि कृत्वा तु नित्यं चैवानुचोदितः ।
यथाविधिरुपस्पृश्य संन्यस्य जलभाजनम् ॥ २२
भिक्षूणां निलयं गत्वा प्रणम्य विधिपूर्वकम् ।
ब्रह्मपूर्वान्गुरूंस्तत्र प्रणम्य नियतेन्द्रियः ॥ २३
तथाऽऽचार्यपुरोगाणामनुकुर्यान्नमस्क्रियाम् ।
स्वधर्मचारिणां चापि सुखं पृष्ट्वाऽभिवाद्य च ॥२४
यो भवेत्पूर्वसंसिद्धस्तुल्यकर्मा भवेत्सदा ।
तस्मै प्रणामः कर्तव्यो नेतरेषु कदाचन ॥ २५
अनुक्त्वा तेषु चोत्थाय नित्यमेव यतव्रतः ।
संमार्जनमथो गत्वा कृत्वा चाप्युपलेपनम् ॥२६
ततः पुष्पबलिं दद्यात्पुष्पाण्यादाय धर्मतः ।
निष्क्रम्यावसथात्तूर्णमन्यत्कर्म समाचरेत् ॥ २७
यथोपघातो न भवेत्स्वाध्यायेऽऽश्रमिणां तथा ।
उपघातं तु कुर्वाण एनसा संप्रयुज्यते ।
तथाऽऽत्मा प्रणिधातव्यो यथा ते प्रीतिमाप्नुयुः२८
परिचारकोऽहं वर्णानां त्रयाणां धर्मतः स्मृतः ।
किमुताश्रमवृद्धानां यथालब्धोपजीविनाम् ॥ २९
भिक्षूणां गतरागाणां केवलं ज्ञानदर्शिनाम् ।

हविर्यज्ञा विशः स्मृता इति ड. थ. पाठः ॥ १ ॥

सप्तचत्वारिंशदधिकशततमोऽध्यायः ॥ १४७ ॥

विशेषेण मया कार्या शुश्रूषा नियतात्मना ॥३० एवमेतद्विनिश्चित्य यदि सेवेत भिक्षुकान् ।
तेषां प्रसादात्तपसा प्राप्स्यामीष्टां शुभां गतिम् । विधिना स्वोपदिष्टेन प्राप्नोति परमां गतिम् ॥' ३१

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि सप्तचत्वारिंशदधिकशततमोऽध्यायः ॥ १४७ ॥

## अष्टचत्वारिंशदधिकशततमोऽध्यायः ॥ १४८ ॥

भीष्मेण युधिष्ठिरंप्रति यतिशुश्रूषाप्रशंसनम् ॥ १ ॥

'पराशर उवाच ।
न तथा संप्रदानेन नोपवासादिभिस्तथा ।
इष्टां गतिमवाप्नोति यथा शुश्रूषकर्मणा ॥ १
यादृशेन तु तोयेन शुद्धिं प्रकुरुते नरः ।
तादृग्भवति तद्धौतमुदकस्य प्रभावतः ॥ २
शूद्रोप्येतेन मार्गेण यादृशं सेवते जनम् ।
तादृग्भवति संसर्गादचिरेण न संशयः ॥ ३
तस्मात्प्रयत्नतः सेव्या भिक्षवो नियतात्मना ।
उदकग्रहणाद्येन स्नपनोद्वर्तनैस्तथा ॥ ४
अध्वना कर्शितानां च व्याधितानां तथैव च ।
शुश्रूषां नियतं कुर्यात्तेषामापदि यत्नतः ॥ ५
दर्भाजिनान्यवेक्षेत भैक्षभाजनमेव च ।
यथाकामं च कार्याणि सर्वाण्येवोपसाधयेत् ।
प्रायश्चित्तं यथा न स्यात्तथा सर्वं समाचरेत् ॥ ६
व्याधितानां तु भिक्षूणां चेलप्रक्षालनादिभिः ।
प्रतिकर्मक्रिया कार्या भेषजानयनैस्तथा ॥ ७
पिंपणालेपनं चूर्णं कषायमथ साधनम् ।
नान्यस्य प्रतिचारेषु सुखार्थमुपपादयेत् ॥ ८
भिक्षाटनोऽभिगच्छेत भिषजश्च विपश्चितः ।
ततो विनिष्क्रियार्थानि द्रव्याणि समुपार्जयेत् ॥ ९
यश्च प्रीतमना दद्यादाद्याद्भेषजं नरः ।
अश्रद्धया हि दत्तानि तान्यभोक्ष्याणि भिक्षुभिः ॥
श्रद्धया यदुपादत्तं श्रद्धया चोपपादितम् ।
तस्योपभोगाद्धर्मः स्याद्व्याधिभिश्च निवर्त्यते ॥ ११
आदेहपतनादेवं शुश्रूषेद्विधिपूर्वकम् ।
न त्वेवं धर्ममुत्सृज्य कुर्यात्तेषां प्रतिक्रियाम् ॥ १२
स्वभावतो हि द्वन्द्वानि विप्रयान्त्युपयान्ति च ।
स्वभावतः सर्वभावा भवन्ति नभवन्ति च
सागरस्योर्मिसदृशा विज्ञातव्या गुणात्मकाः ॥ १३
विद्यादेवं हि यो धीमांस्तत्त्ववित्तत्त्वदर्शनः ।
न स लिप्येत पापेन पद्मपत्रमिवाम्भसा ॥' १४

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि अष्टचत्वारिंशदधिकशततमोऽध्यायः ॥ १४८ ॥

## एकोनपञ्चाशदधिकशततमोऽध्यायः ॥ १४९ ॥

भीष्मेण युधिष्ठिरंप्रति यतिशुश्रूषादिनानाधर्मकथनम् ॥ १ ॥

'पराशर उवाच ।
एवं प्रयतितव्यं हि शुश्रूषार्थमतन्द्रितैः ।
सर्वाभिरुपसेवाभिस्तुष्यन्ति यतयो यथा ॥ १
नापराध्येत भिक्षोस्तु न चैनमवधीरयेत् ।
उत्तरं च न संदद्यात्क्रुद्धं चैव प्रसादयेत् ॥
श्रेय एवाभिधातव्यं कर्तव्यं च प्रहृष्टवत् ।
तूष्णींभावेन वै तत्र न क्रुद्धमभिसंवदेत् ॥
नाददीत परस्वानि न गृह्णीयादयाचितम् ।
लब्धालब्धेन जीवेत तथैव परितोषयेत् ॥ ४
कौपिनं तु न याचेत ज्ञानविद्वेषकारितः ।
स्थावरेषु दयां कुर्याज्जङ्गमेषु च प्राणिषु ॥ ५
यथाऽऽत्मनि तथाऽन्येषु समां दृष्टिं निपातयेत् ।
सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ।
संपश्यमानो विचरन्ब्रह्मभूयाय कल्पते ॥ ६

हिंसां वा यदि वाऽहिंसां न कुर्यादात्मकारणात् ।
यत्रेतरो भवेन्नित्यं दोषं तत्र न कारयेत् ॥ ७
एवं स मुच्यते दोषात्परानाश्रित्य वर्तयन्
आत्माश्रयेण दोषेण लिप्यते ह्यल्पबुद्धिमान् ॥ ८
जरायुजाण्डजाश्चैव उद्भिज्जाः स्वेदजाश्च ये ।
अवध्याः सर्व एवैते बुधैः समनुवर्णिताः ॥ ९
निश्चयार्थं विबुद्धानां प्रायश्चित्तं विधीयते ।
हिंसा यथाऽन्या विहिता तथा दोषं प्रयोजयेत् ।
तथोपदिष्टं गुरुणा शिष्यस्य चरतो विधिम् ॥१०
न हि लोभः प्रभवति हिंसा वाऽपि तदात्मिका
शास्त्रदर्शनमेतद्धि विहितं विश्वयोनिना ॥ ११
यद्येतदेवं मन्येत शूद्रो ह्यपि च बुद्धिमान् ।
कृतं कृतवतां गच्छेत्किं पुनर्यो निषेवते ॥ १२
न शूद्रः पतते कश्चिन्न च संस्कारमर्हति ।
नास्याधिकारो धर्मेऽस्ति न धर्मात्प्रतिषेधनम्॥१३
अनुग्रहार्थं मनुना सर्ववर्णेषु वर्णितम् ॥ १४
यद्यपवादस्तु भवेत्स्त्रीकृतः परिचारके ।
अभ्रावकाशशयनं तस्य संवत्सरं स्मृतम् ।
तेन तस्य भवेच्छान्तिस्ततो भूयोप्युपाव्रजेत् ॥१५
सवर्णाया भवेदेतद्धीनायास्त्वर्धमर्हति ।
वर्षत्रयं तु वैश्यायाः क्षत्रियायास्तु षट् समाः ।
ब्राह्मण्या तु समेतस्य समा द्वादश कीर्तिताः॥१६
कटाग्निना वा दग्धव्यस्तस्मिन्नेव क्षणे भवेत्
शिश्नावपातनाद्वाऽपि विशुद्धिं समवाप्नुयात्॥१७
अनस्थिबन्धमेकं तु यदि प्राणैर्वियोजयेत् ।
उपोष्यैकाहमादद्यात्प्राणायामांस्तु द्वादश ॥ १८
त्रिः स्नानमुदके कृत्वा तस्मात्पापात्प्रमुच्यते ।
अस्थिबन्धेषु द्विगुणं प्रायश्चित्तं विधीयते ॥ १९
अनेन विधिना वाऽपि स्थावरेषु न संशयः ।
कायेन पद्भ्यां हस्ताभ्यामपराधात्तु मुच्यते ॥ २०
अदुष्टं क्षपयेद्यस्तु सर्ववर्णेषु यश्चरेत्
तस्याप्यष्टगुणं विद्यात्प्रायश्चित्तं तदेव तु ॥ २१
चतुर्गुणं कर्मकृते द्विगुणं वाक्प्रदूषिते ।
कृत्वा तु मानसं पापं तथैवैकगुणं स्मृतम् ॥ २२
तस्मादेतानि सर्वाणि विदित्वा न समाचरेत् ।
सर्वभूतहितार्थं हि कुशलानि समाचरेत् ॥ २३
एवं समाहितमनाः सेवते यदि सत्तमान् ।
तद्गतिस्तत्समाचारस्तन्मनास्तत्परायणः ॥ २४
नाभिनन्देत मरणं नाभिनन्देत जीवितम् ।
कालमेव प्रतीक्षेत निर्वेशं भृतको यथा ॥ २५
एवं प्रवर्तमानस्तु विनीतः प्रयतात्मवान् ।
निर्णयं पुण्यपापाभ्यामचिरेणोपगच्छति' ॥ २६

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि एकोनपञ्चाशदधिकशततमोऽध्यायः ॥ १४९ ॥

---

## पञ्चाशदधिकशततमोऽध्यायः ॥ १५० ॥

भीष्मेण युधिष्ठिरंप्रति पुरुषस्य मृतिसूचकलिङ्गैः स्वमरणनिश्चयेन भगवत्स्मरणादिपूर्वकं देहत्यागे स्वर्गभोगप्रकारस्य सुकृतशेषेण पुनर्भूलोके जननादिप्रकारादेश्च कथनम् ॥ १ ॥

'पराशर उवाच ।
शुश्रूषानिरतो नित्यमरिष्टान्युपलक्षयेत् ।
त्रैवार्षिकं द्विवार्षिकं वा वार्षिकं वा समुत्थितम्॥१
षाण्मासिकं मासिकं वा साप्तरात्रिकमेव वा ।
सर्वांस्तदर्थान्वा विद्यात्तेषां चिह्नानि लक्षयेत् ॥ २
पुरुषं हिरण्मयं यस्तु तिष्ठन्तं दक्षिणामुखम् ।
लक्षयेदुत्तरेणैव मृत्युस्त्रैवार्षिको भवेत् ॥ ३
शुद्धमण्डलमादित्यमरश्मिं संप्रपश्यतः ।
संवत्सरद्वयेनैव तस्य मृत्युं समादिशेत् ॥ ४
ज्योत्स्नायामात्मनश्छायां सच्छिद्रां यः प्रपश्यति ।
मृत्युं संवत्सरेणैव जानीयात्सुविचक्षणः ॥
विशिरस्कां यदा छायां पश्येत्पुरुष आत्मनः ।
जानीयादात्मनो मृत्युं षाण्मासेनेह बुद्धिमान्॥६
कर्णौ पिधाय हस्ताभ्यां शब्दं न शृणुते यदि ।
जानीयादात्मनो मृत्युं मासेनैव विचक्षणः ॥ ७
शवगन्धमुपाघ्राति अन्यद्वा सुरभिं नरः ।

देवतायतनस्थो वै सप्तरात्रेण मृत्युभाक् ॥ ८
कर्णनासापनयनं दन्तदार्ष्ट्यविरागता ।
लुप्तसंज्ञं हि करणं सद्यो मृत्युं समादिशेत् ॥ ९
एवमेषामरिष्टानां पश्येदन्यतमं यदि
न तं कालं परीक्षेत यथाऽरिष्टं प्रकल्पितम् ॥१०
अभ्यासेन तु कालस्य गच्छेत पुलिनं शुचि ।
तत्र प्राणान्प्रमुञ्चेत तमीशानमनुस्मरन् ॥ ११
ततोऽन्यदहमासाद्य गान्धर्वं स्थानमाप्नुयात् ।
तत्रस्थो वसते विंशत्पद्मानि सुमहाद्युतिः ॥ १२
गन्धर्वैश्चित्रसेनाद्यैः सहितः सत्कृतस्तथा
नीलवैडूर्यवर्णेन विमानेनावभासयन् ॥ १३
नभस्थलमदीनात्मा सार्धमप्सरसां गणैः
छन्दकामानुसारी च तत्रतत्र महीयते ॥ १४
मोदतेऽमरतुल्यात्मा सदाऽमरगणैः सह ।
पतितश्च क्षये काले क्षणेन विमलद्युतिः ॥ १५
वैश्यस्य बहुवित्तस्य कुलेऽग्र्ये बहुगोधने ।
अवाप्य तत्र वै जन्म स पूतो देवकर्मणा ॥ १६
छन्दसा जागतेनैव प्राप्तोपनयनं ततः ।
क्षौमवस्त्रोपकरणं द्विजत्वं समवाप्य तु ॥ १७
अधीयमानो वेदार्थान्गुरुशुश्रूषणे रतः ।
ब्रह्मचारी जितक्रोधस्तपस्वी जायते ततः ॥ १८
अधीत्य दक्षिणां दत्त्वा गुरवे विधिपूर्वकम् ।
कृतदारः समुपैति गृहस्थव्रतमुत्तमम् ॥ १९
ददाति यजते चैव यज्ञैर्विपुलदक्षिणैः ।
अग्निहोत्रमुपासन्वै जुह्वच्चैव यथाविधि ॥ २०
धर्मं संचिनुते नित्यं मृदुगामी जितेन्द्रियः ।
स कालपरिणामात्तु मृत्युना संप्रयुज्यते ॥ २१
सत्कृतश्चाग्निहोत्रेण कृतपात्रोपधानवान्
संस्कृतो देहमुत्सृज्य मरुद्भिरुपपद्यते ॥ २२
मरुद्भिः सहितश्चापि तुल्यतेजा महाद्युतिः ।
बालार्कसमवर्णेन विमानेन विराजता ॥ २३
सुखं चरति तत्रस्थो गन्धर्वाप्सरसां गणैः
विरजोम्बरसंवीतस्तप्तकाञ्चनभूषणः ॥ २४
छन्दकामानुसारी च द्विगुणं कालमावसेत् ।
संनिवर्तेत कालेन स्थानादस्मात्परिच्युतः ॥ २५
अवितृप्तविहारार्थी दिव्यभोगान्विहाय तु
संजायते नृपकुले गजाश्वरथसंकुले ॥ २६
पार्थिवीं श्रियमापन्नः श्रीमान्धर्मपतिर्यथा ।
जन्मप्रभृति संस्कारं चौलोपनयनानि च ॥ २७
प्राप्य राजकुले तत्र यथावद्विधिपूर्वकम् ।
छन्दसा त्रैष्टुभेनेह द्विजत्वमुपनीयते ॥ २८
अधीत्य वेदमखिलं च मुख्यशः ।
समावृत्तस्ततः पित्रा यौवराज्येऽभिषिच्यते ॥२९
कृतदारक्रियः श्रीमान्राज्यं संप्राप्य धर्मतः ।
प्रजाः पालयते सम्यक् षड्भागकृतसंविधिः ॥३०
यज्ञैर्बहुभिरीजानः सम्यगाप्तार्थदक्षिणैः ।
प्रशास्ति महीं श्रीमान्राज्यमिन्द्रसमद्युतिः ॥३१
स्वधर्मनिरतो नित्यं पुत्रपौत्रसहायवान् ।
कालस्य वशमापन्नः प्राणांस्त्यजति संयुगे ॥ ३२
देवराजस्य भवनमिन्द्रलोकमवाप्नुते ।
संपूज्यमानस्त्रिदिवैर्विचचार यथासुखम् ॥ ३३
राजर्षिभिः पुण्यकृद्भिर्यथा देवपतिस्तथा ।
तैः स्तूयते वन्दिभिस्तु नानावाद्यैः प्रबोध्यते ३४
दिव्यजाम्बूनदमयं भ्राजमानं समन्ततः ।
वराप्सरोभिः संपूर्णं देवगन्धर्वसेवितम् ॥ ३५
यानमारुह्य विचरेद्यथा शक्रः शचीपतिः ।
स तत्र वसते षष्टिं पद्मानीह मुदान्वितः ॥ ३६
सर्वाँल्लोकाननुचरन्महर्द्धिरवभासयन् ।
अथ पुण्यक्षयात्तस्मात्स्थाप्यते भुवि भारत ।
जायते च द्विजकुले वेदवेदाङ्गपारगे ॥ ३७

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि पञ्चाशदधिकशततमोऽध्यायः ॥ १५० ॥

## एकपञ्चाशदधिकशततमोऽध्यायः ॥ १५१ ॥

भीष्मेण युधिष्ठिरंप्रति पुरुषस्य पुण्यविशेषेण पुनःपुनः स्वर्गभूम्यादिषु परिवर्तनेन जातवैराग्यस्य ब्रह्मज्ञानेनापुनरावृत्तिशाश्वतपदप्राप्त्यादिप्रकारप्रतिपादनम् ॥ १ ॥

'पराशर उवाच ।
ततः श्रुतिसमापन्नः संस्कृतश्च यथाविधि ।
चौलोपनयनं तस्य यथावत्क्रियते द्विजैः ॥ १
ततोऽष्टमे स वर्षे तु व्रतोपनयनादिभिः ।
क्रियाभिर्विधिदृष्टाभिर्ब्रह्मत्वमुपनीयते ॥ २
गायत्रेण छन्दसा तु संस्कृतश्चरितव्रतः ।
अधीयमानो मेधावी शुद्धात्मा नियतव्रतः ॥ ३
अचिरेणैव कालेन साङ्गान्वेदानवाप्नुते ।
समावृत्तः स धर्मात्मा समावृत्तक्रियस्तथा ॥ ४
याजनाध्यापनरतः कुशले कर्मणि स्थितः ।
अग्निहोत्रपरो नित्यं देवतातिथिपूजकः ॥ ५
यजते विविधैर्यज्ञैर्जपयज्ञैस्तथैव च ।
न्यायागतधनान्वेषी न्यायवृत्तस्तपोधनः ॥ ६
सर्वभूतहितश्चैव सर्वशास्त्रविशारदः ।
स्वदारपरितुष्टात्मा ऋतुगामी जितेन्द्रियः ॥ ७
परापवादविरतः सत्यव्रतपरः सदा ।
स कालपरिणामात्तु संयुतः कालधर्मणा ॥ ८
संस्कृतश्चाग्निहोत्रेण यथावद्विधिपूर्वकम् ।
सोमलोकमवाप्नोति देहन्यासान्न संशयः ॥ ९
तत्र सोमप्रभैर्देवैरग्निष्वात्तैश्च भास्वरैः ।
तथा बर्हिषदैश्चैव देवैराङ्गिरसैरपि ॥ १०
विश्वेभिश्चैव देवैश्च तथा ब्रह्मर्षिभिः पुनः ।
देवर्षिभिश्चाप्रतिमैस्तथैवाप्सरसां गणैः ।
साध्यैः सिद्धैश्च सततं सत्कृतस्तत्र मोदते ॥ ११
जातरूपमयं दिव्यमर्कतुल्यं मनोजवम् ।
देवगन्धर्वसंकीर्णं विमानमधिरोहति ॥ १२
सौम्यरूपा मनःकान्तास्तप्तकाञ्चनभूषणाः ।
सोमकन्या विमानस्थं रमयन्ति मुदान्विताः ॥ १३
स तत्र रमते प्रीतः सह देवैः सहर्षिभिः ।
लोकान्सर्वाननुचरन्दीप्ततेजा मनोजवः ॥ १४
सभां कामजवीं चापि नित्यमेवाभिगच्छति ।
सर्वलोकेश्वरमृषिं नमस्कृत्य पितामहम् ॥ १५
परमेष्ठिरनन्तश्रीर्लोकानां प्रभवाप्ययः ।
यतः सर्वाः प्रवर्तन्ते सर्गप्रलयविक्रियाः ।
स तत्र वर्तते श्रीमान्द्विशतं द्विजसत्तम ॥ १६
अथ कालक्षयात्तस्मात्स्थानादावर्तते पुनः ।
जातिधर्मास्तथा सर्वान्सर्गादावर्तनानि च ॥ १७
अशाश्वतमिदं सर्वमिति चिन्त्योपलभ्य च ।
शाश्वतं दिव्यमचलमदीनमपुनर्भवम् ॥ १८
आस्थास्यत्यभयं नित्यं यत्रावृत्तिर्न विद्यते ।
यत्र गत्वा न म्रियते जन्म चापि न विद्यते ॥ १९
गर्भक्लेशामयाः प्राप्ता जायता च पुनः पुनः ।
कायक्लेशाश्च विविधा द्वन्द्वानि विविधानि च ॥ २०
शीतोष्णसुखदुःखानि ईर्ष्याद्वेषकृतानि च ।
तत्रतत्रोपभुक्तानि न क्वचिच्छाश्वती स्थितिः ॥ २१
एवं स निश्चयं कृत्वा निर्मुच्य ग्रहबन्धनात् ।
छित्त्वा भार्यामयं पाशं तथैवापत्यसंभवम् ॥ २२
यतिधर्ममुपाश्रित्य गुरुशुश्रूषणे रतः ।
अचिरेणैव कालेन श्रेयः समभिगच्छति ॥ २३
योगशास्त्रं च साङ्ख्यं च विदित्वा सोऽर्थतत्वतः ।
अनुज्ञातश्च गुरुणा यथाशास्त्रमवस्थितः ॥ २४
पुण्यतीर्थानुसेवी च नदीनां पुलिनाश्रयः ।
शून्यागारनिकेतश्च वनवृक्षगुहाशयः ॥ २५
अरण्यानुचरो नित्यं देवारण्यनिकेतनः ।
एकरात्रं द्विरात्रं वा न क्वचित्सज्जते द्विजः ॥ २६
शीर्णपर्णभुगेवापि वने चरति भिक्षुकः ।
न भोगार्थमनुप्रेत्य यात्रामात्रं समश्नुते ॥ २७
धर्मलब्धं समश्नाति न कामात्किंचिदश्नुते ।
युगमात्रदृगध्वानं क्रोशादूर्ध्वं न गच्छति ॥ २८
समो मानावमानाभ्यां समलोष्टाश्मकाञ्चनः ।
सर्वभूताभयकरस्तथैवाभयदक्षिणः ॥ २९
निर्द्वन्द्वो निर्नमस्कारो निरानन्दपरिग्रहः ।

निर्ममो निरहंकारः सर्वभूतनिराश्रयः ॥ ३०
परिसङ्ख्यानतत्त्वज्ञस्तदा सत्यरतः सदा ।
ऊर्ध्वं नाधो न तिर्यक्च न किंचिदभिकामयेत् ॥३१
एवं हि रममाणस्तु यतिधर्मं यथाविधि ।
कालस्य परिणामात्तु यथा पक्वफलं तथा ॥ ३२
स विसृज्य स्वकं देहं प्रविशेद्ब्रह्म शाश्वतम् ।
निरामयमनाद्यन्तं गुणसौम्यमचेतनम् ॥ ३३
निरक्षरमबीजं च निरिन्द्रियमजं तथा ।
अजय्यमक्षयं यत्तदभेद्यं सूक्ष्ममेव च ॥ ३४
निर्गुणं च प्रकृतिमन्निर्विकारं च सर्वशः ।
भूतभव्यभविष्यस्य कालस्य परमेश्वरम् ।
अव्यक्तं पुरुषं क्षेत्रमानन्त्याय प्रपद्यते ॥' ३५

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि एकपञ्चाशदधिकशततमोऽध्यायः ॥ १५१ ॥

## द्विपञ्चाशदधिकशततमोऽध्यायः ॥ १५२ ॥

भीष्मेण युधिष्ठिरंप्रति चातुर्वर्ण्यस्य श्रेयस्साधनोपायप्रतिपादकपराशरवचनानुवादः ॥ १ ॥

'पराशर उवाच
एवं स भिक्षुर्निर्वाणं प्राप्नुयाद्दग्धकिल्बिषः
इहस्थो देहमुत्सृज्य नीडं शकुनिवद्यथा ॥ १
सत्पथालम्बनादेव शूद्रः प्राप्नोति सद्गतिम् ।
ब्रह्मणः स्थानमचलं स्थानात्स्थानमवाप्नुयात् ॥ २
यथा खनन्खनित्रेण जाङ्गले वारि विन्दति ।
अनिर्वेदात्ततः स्थानमीप्सितं प्रतिपद्यते ॥ ३
सैषा गतिरनाद्यन्ता सर्वैरप्युपधारिता ।
तस्माच्छूद्रैरनिर्वेदाच्छ्रद्दधानैस्तु नित्यदा ।
वर्तितव्यं यथाशक्त्या यथा प्रोक्तं मनीषिभिः ॥४
यत्करोति तदश्नाति शुभं वा यदि वाऽशुभम् ।
नाकृतं भुज्यते कर्म न कृतं नश्यते फलम् ॥ ५
तथा शुभसमाचारः शुभमेवाप्नुते फलम् ।
तथाऽशुभसमाचारो ह्यशुभं समवाप्नुते ।
शुभान्येव समादद्याद्य इच्छेद्भूतिमात्मनः ॥ ६
भूतिश्च नान्यतः शक्त्या शूद्राणामिति निश्चयः ।
ऋते यतीनां शुश्रूषामिति सन्तो व्यवस्थिताः ॥७
तस्मादागमसंपन्नो भवेत्सुनियतेन्द्रियः ।
शक्यते ह्यागमादेव गतिं प्राप्तुमनामयाम् ॥ ८
वरा चैषा गतिर्दृष्टा यामन्वेषन्ति साधवः ।
यत्रामृतत्वं लभते त्यक्त्वा दुःखमनन्तरम् ॥ ९
इमं हि धर्ममास्थाय येऽपि स्युः पापयोनयः ।
स्त्रियो वैश्याश्च शूद्राश्च प्राप्नुयुः परमां गतिम् ।
किं पुनर्ब्राह्मणो विद्वान्क्षत्रियो वा बहुश्रुतः ॥१०
न चाप्यक्षीणपापस्य ज्ञानं भवति देहिनः ।
ज्ञानोपलब्धिर्भवति कृतकृत्यो यदा भवेत् ॥ ११
उपलभ्य तु विज्ञानं ज्ञानं वाऽप्यनसूयकः ।
तथैव वर्तेद्गुरुषु भूयांसं वा समाहितः ॥ १२
अथावमन्येत गुरुं तथा तेषु प्रवर्तते ।
व्यर्थमस्य श्रुतं भवति ज्ञानमज्ञानतां व्रजेत् ॥ १३
गतिं चाप्यशुभां गच्छेन्निरयाय न संशयः ।
प्रक्षीयते तस्य पुण्यं ज्ञानमस्य विरुध्यते ॥ १४
अदृष्टपूर्वकल्याणो यथा दृष्ट्वा विधिं नरः ।
उत्सेकान्मोहमापद्य तत्वज्ञानमवाप्तवान् ॥ १५
एवमेव हि नोत्सेकः कर्तव्यो ज्ञानसंभवः ।
फलं ज्ञानस्य हि शमः प्रशामाय यतेत्सदा ॥ १६
उपशान्तेन दान्तेन क्षमायुक्तेन सर्वदा ।
शुश्रूषा प्रतिपत्तव्या नित्यमेवानसूयता ॥ १७
धृत्वा शिश्नोदरं रक्षेत्पाणिपादं च चक्षुषा ।
इन्द्रियार्थांश्च मनसा मनो बुद्धौ समादधेत् ॥ १८
धृत्याऽऽसीत ततो गत्वा शुद्धदेशं सुसंवृतम् ।
लब्धासनं यथा दृष्टं विधिपूर्वं समाचरेत् ॥ १९
ज्ञानयुक्तस्तथा देवं हृदिस्थमुपलक्षयेत् ।
आदीप्यमानं वपुषा विधूममनलं यथा ॥ २०
रश्मिमन्तमिवादित्यं वैद्युताग्निमिवाम्बरे ।
संस्थितं हृदये पश्येदीशं शाश्वतमव्ययम् ॥ २१

गुणसाम्यमचेतनमिति क. थ. पाठः ॥ ३३ ॥ निर्गुणं चाप्रकृतिमदिति थ. पाठः ॥ ३५ ॥

एकपञ्चाशदधिकशततमोऽध्यायः ॥ १५१ ॥

न चायुक्तेन शक्येत द्रष्टुं देहे महेश्वरः ।
युक्तस्तु पश्यते बुद्ध्या संनिवेश्य मनो हृदि॥२२
अथ त्वेवं न शक्नोति कर्तुं हृदयधारणम् ।
यथासांख्यमुपासीत यथावद्योगमास्थितः ॥ २३
पञ्च बुद्धीन्द्रियाणीह पञ्च कर्मेन्द्रियाणि वै ।
पञ्च भूतविशेषाश्च मनश्चैव तु षोडश ॥ २४
तन्मात्राण्यपि पञ्चैव मनोऽहंकार एव च ।
अष्टमं चाप्यथाव्यक्तमेताः प्रकृतिसंज्ञिताः ।
एताः प्रकृतयश्चाष्टौ विकाराश्चापि षोडश ॥ २५
एवमेतादिहस्थेन विज्ञेयं तत्वबुद्धिना ।
एवं वर्त्म समुत्तीर्य तीर्णो भवति नान्यथा ॥२६
परिसंख्यानमेवैतन्मन्तव्यं ज्ञानबुद्धिना ॥ २७
अहन्यहनि शान्तात्मा पावनाय हिताय च ।
एवमेव प्रसंख्याय तत्वबुद्धिर्विमुच्यते ।
निष्कलं केवलं भवति शुद्धतत्वार्थतत्ववित्॥२८
भिक्षुकाश्रममास्थाय शुश्रूषानिरतो बुधः ।
शूद्रो निर्मुच्यते सत्वसंसर्गादेव नान्यथा ॥ २९
सत्संनिकर्षे परिवर्तितव्यं
विद्याधिकाश्चापि निषेवितव्याः ।
सवर्णतां गच्छति संनिकर्षा-
न्नीलः खगो मेरुमिवाश्रयन्वै ॥ ३०
भीष्म उवाच
इत्येवमाख्याय महामुनिस्तदा
चतुर्षु वर्णेषु विधानमर्थवित् ।
शुश्रूषया वृत्तगतिं समाधिना
समाधियुक्तः प्रययौ स्वमाश्रमम् ॥' ३१

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि द्विपञ्चाशदधिकशततमोऽध्यायः ॥ १५२॥

## त्रिपञ्चाशदधिकशततमोऽध्यायः ॥ १५३ ॥

'भीष्मेण युधिष्ठिरंप्रति सकलसेव्यताप्रयोजकगुणप्रतिपादकेन्द्रमातलिसंवादानुवादः ॥ १ ॥

'युधिष्ठिर उवाच ।
केषां देवा महाभागाः संनमन्ते महात्मनाम् ।
लोकेऽस्मिंस्तानृषीन्सर्वाञ्श्रोतुमिच्छामि सत्तम॥१
भीष्म उवाच ।
इतिहासमिमं विप्राः कीर्तयन्ति पुराविदः ।
अस्मिन्नर्थे महाप्राज्ञास्तं निबोध युधिष्ठिर ॥ २
वृत्रं हत्वाऽप्युपावृत्तं त्रिदशानां पुरस्कृतम् ।
महेन्द्रमनुसंप्राप्तं स्तूयमानं महर्षिभिः ॥ ३
श्रिया परमया युक्तं रथस्थं हरिवाहनम् ।
मातलिः प्राञ्जलिर्भूत्वा देवमिन्द्रमुवाच ह ॥ ४
नमस्कृतानां सर्वेषां भगवंस्त्वं पुरस्कृतः ।
येषां लोके नमस्कुर्यात्तान्ब्रवीतु भवान्मम ॥ ५
तस्य तद्वचनं श्रुत्वा देवराजः शचीपतिः ।
यन्तारं परिपृच्छन्तं तमिन्द्रः प्रत्युवाच सः॥ ६
धर्मं चार्थं च कामं च येषां चिन्तयतां मतिः ।
नाधर्मे वर्तते नित्यं तान्नमस्यामि मातले ॥ '७
ये रूपगुणसंपन्नाः प्रमदाहृदयंगमाः ।
निवृत्ताः कामभोगेषु तान्नमस्यामि मातले ॥ ८
स्वेषु भोगेषु संतुष्टाः सुवाचो वचनक्षमाः ।
अमानकामाश्चार्घार्हास्तान्नमस्यामि मातले ॥ ९
धनं विद्यास्तथैश्वर्यं येषां न चलयेन्मतिम् ।
चलितां ये निगृह्णन्ति तान्नित्यं पूजयाम्यहम्१०
इष्टैर्दारैरुपेतानां शुचीनामग्निहोत्रिणाम् ।
चतुष्पादकुटुम्बानां मातले प्रणमाम्यहम् ॥ ११
महतस्तपसा प्राप्तौ धनस्य विपुलस्य च ।
त्यागस्तस्य न वै कार्यो योऽऽत्मानं नावबुध्यते॥
येषामर्थस्तथा कामो धर्ममूलविवर्धितः ।
धर्मार्थौ तस्य नियतौ तान्नमस्यामि मातले॥१३
धर्ममूलार्थकामानां ब्राह्मणानां गवामपि ।
पतिव्रतानां नारीणां प्रणामं प्रकरोम्यहम् ॥ १४
ये भुक्त्वा मानुषान्भोगान्पूर्वे वयसि मातले ।
तपसा स्वर्गमायान्ति शश्वत्तान्पूजयाम्यहम्॥१५
असंभोगानचासक्तान्धर्मनित्याञ्जितेन्द्रियान् ।
संन्यस्तानचलप्रख्यान्मनसा पूजयामि तान् १६

ज्ञानप्रसन्नावद्याना ानरूढ धर्ममीप्सितम् । परैः कीर्तितशौचानां मातले तान्नमम्म्यहम् १७

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि त्रिपञ्चाशदधिकशततमोऽध्यायः ॥ १५३ ॥

## चतुःपञ्चाशदधिकशततमोऽध्यायः ॥ १५४ ॥

भीष्मेण युधिष्ठिरंप्रति गृहस्थधर्मप्रतिपादकपृथिवीवासुदेवसंवादानुवादः ॥ १ ॥

युधिष्ठिर उवाच ।
गार्हस्थ्यं धर्ममखिलं प्रब्रूहि भरतर्षभ ।
ऋद्धिमाप्नोति किं कृत्वा मनुष्य इह पार्थिव ॥ १
भीष्म उवाच ।
अत्र ते वर्तयिष्यामि पुरावृत्तं जनाधिप ।
वासुदेवस्य संवादं पृथिव्याश्चैव भारत ॥ २
संस्तुत्य पृथिवीं देवीं वासुदेवः प्रतापवान् ।
पप्रच्छ भरतश्रेष्ठ मां त्वं यत्पृच्छसेऽद्य वै ॥ ३
वासुदेव उवाच ।
गार्हस्थ्यं धर्ममाश्रित्य मया वा मद्विधेन वा ।
किमवश्यं धरे कार्यं किं वा कृत्वा सुखं भवेत् ॥ ४
पृथिव्युवाच ।
ऋषयः पितरो देवा मनुष्याश्चैव माधव ।
पूज्याश्चैवार्चनीयाश्च यथा चैव निबोध मे ॥ ५
सदा यज्ञेन देवांश्च सदाऽऽतिथ्येन मानुषान् ।
छन्दतस्तर्पणेनापि पितॄन्युञ्जन्ति नित्यशः ॥ ६
तेन ह्यृषिगणाः प्रीता ब्रह्मचर्येण चानघ ।
नित्यमग्निं परिचरेदभुक्त्वा बलिकर्म च ॥ ७
कुर्यात्तथैव देवान्वै प्रियं मे मधुसूदन ।
कुर्यादहरहः श्राद्धमन्नाद्येनोदकेन च ॥ ८
पयोमूलफलैर्वाऽपि पितॄणां प्रीतिमावहेत् ।
सिद्धान्नाद्वैश्वदेवं वै कुर्यादग्नौ यथाविधि ॥ ९
आग्नीषोमं वैश्वदेवं धान्वन्तर्यमनन्तरम् ।
प्रजानां पतये चैव पृथग्घोमो विधीयते ॥ १०
तथैव चानुपूर्व्येण बलिकर्म प्रयोजयेत् ।
दक्षिणायां यमायेति प्रतीच्यां वरुणाय च ॥ ११
सोमाय चाप्युदीच्यां वै वास्तुमध्ये प्रजापतेः ।
धन्वन्तरेः प्रागुदीच्यां प्राच्यां शक्राय माधव १२
मनुष्येभ्य इति प्राहुर्बलिं द्वारि गृहस्य वै ।
मरुद्भ्यो दैवतेभ्यश्च बलिमन्तर्गृहे हरेत् ॥ १३
तथैव विश्वेदेवेभ्यो बलिमाकाशतो हरेत् ।
निशाचरेभ्यो भूतेभ्यो बलिं नक्तं यथा हरेत् ॥ १४
एवं कृत्वा बलिं सम्यग्दद्याद्भिक्षां द्विजाय वै ।
अलाभे ब्राह्मणस्याग्रावग्रमुद्धृत्य निक्षिपेत् ॥ १५
यदा श्राद्धं पितृभ्योपि दातुमिच्छेत मानवः ।
तदा पश्चात्प्रकुर्वीत निवृत्ते श्राद्धकर्मणि ॥ १६
पितॄन्संतर्पयित्वा तु बलिं कुर्याद्विधानतः ।
वैश्वदैवं ततः कुर्यात्पश्चाद्ब्राह्मणभोजनम् ॥ १७
ततोऽन्नेनावशेषेण भोजयेदतिथीनपि ।
अर्घ्यपूर्वं महाराज ततः प्रीणाति मानवान् ।
अनित्यं हि स्थितो यस्मात्तस्मादतिथिरुच्यते १८
आचार्यस्य पितुश्चैव सख्युराप्तस्य चातिथेः ।
इदमस्ति गृहे मह्यमिति नित्यं निवेदयेत् ॥ १९
ते यद्वदेयुस्तत्कुर्यादिति धर्मो विधीयते ।
गृहस्थः पुरुषः कृष्ण शिष्टाशी च सदा भवेत् २०
राजर्त्विजं स्नातकं च गुरुं श्वशुरमेव च ।
अर्चयेन्मधुपर्केण परिसंवत्सरोषितान् ॥ २१
श्वभ्यश्च श्वपचेभ्यश्च वयोभ्यश्चावपेद्भुवि ॥ २२
वैश्वदेवं हि नामैतत्सायं प्रातर्विधीयते ॥ २३
एतांस्तु धर्मान्गार्हस्थ्यान्यः कुर्यादनसूयकः ।
स इहर्द्धिं परां प्राप्य प्रेत्य लोके महीयते ॥ २४
भीष्म उवाच ।
इति भूमेर्वचः श्रुत्वा वासुदेवः प्रतापवान् ।
तथा चकार सततं त्वमप्येवं सदाऽऽचर ॥ २५

॥ १५ ॥ चतुःपञ्चाशदधिकशततमोऽध्यायः ॥ १५४ ॥

गार्हस्थ्य गृहस्थयोग्यम् ॥ १ ॥ बलिकर्म वैश्वदेवः । तत्र प्रागन्नमेव ग्राह्यम् ॥ ७ ॥ भिक्षाद्वयं तथेति थ. ध. पाठः

एतद्गृहस्थधर्मं त्वं चेष्टमानो जनाधिप । इह लोके यशः प्राप्य प्रेत्य स्वर्गमवाप्स्यसि ॥२६

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि चतुःपञ्चाशदधिकशततमोऽध्यायः ॥ १५४ ॥

## पञ्चपञ्चाशदधिकशततमोऽध्यायः ॥ १५५ ॥

भीष्मेण युधिष्ठिरंप्रति पुष्पधूपदीपदानादिप्रशंसापरबलिशुक्रसंवादानुवादः ॥ १ ॥

युधिष्ठिर उवाच ।
आलोकदानं नामैतत्कीदृशं भरतर्षभ ।
कथमेतत्समुत्पन्नं फलं वा तद्ब्रवीहि मे ॥ १
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
मनोः प्रजापतेर्वादं सुवर्णस्य च भारत ॥ २
तपस्वी कश्चिदभवत्सुवर्णो नाम भारत ।
वर्णतो हेमवर्णः स सुवर्ण इति विश्रुतः ॥ ३
कुलशीलगुणोपेतः स्वाध्यायोपरमं गतः ।
बहून्सुवंशप्रभवान्समतीतः स्वकैर्गुणैः ॥ ४
स कदाचिन्मनुं विप्रो ददर्शोपससर्प च ।
कुशलप्रश्नमन्योन्यं तौ चोभौ तत्र चक्रतुः ॥ ५
ततस्तौ सत्यसंकल्पौ मेरौ काञ्चनपर्वते ।
देवर्षिभिः सदा जुष्टे सहितौ संन्यषीदताम् ॥ ६
तत्र तौ कथयन्तौ स्तां कथा नानाविधाश्रयाः ।
ब्रह्मर्षिदेवदैत्यानां पुराणानां महात्मनाम् ॥ ७
सुवर्णस्त्वब्रवीद्वाक्यं मनुं स्वायंभुवं प्रति ।
हितार्थं सर्वभूतानां प्रश्नं मे वक्तुमर्हसि ॥ ८
सुमनोगन्धधूपाद्यैरिज्यन्ते दैवतानि च ।
किमेतत्कथमुत्पन्नं फलं योगं च शंस मे ॥ ९
मनुरुवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
शुक्रस्य च बलेश्चैव संवादं वै महात्मनोः ॥ १०
बलेर्वैरोचनस्येह त्रैलोक्यमनुशासतः ।
समीपमाजगामाशु शुक्रो भृगुकुलोद्वहः ॥ ११
तमर्घ्यादिभिरभ्यर्च्य भार्गवं सोऽसुराधिपः ।
निषसादासने पश्चाद्विधिवद्भूरिदक्षिणः ॥ १२
कथेयमभवत्तत्र त्वया या परिकीर्तिता ।
सुमनोधूपदीपानां संप्रदाने फलं प्रति ॥ १३
ततः पप्रच्छ दैत्येन्द्रः कवीन्द्रं प्रश्नमुत्तमम् ॥१४
सुमनोधूपदीपानां किं फलं ब्रह्मवित्तम ।
प्रदानस्य द्विजश्रेष्ठ तद्भवान्वक्तुमर्हति ॥ १५
शुक्र उवाच ।
अग्नीषोमादिसृष्टौ तु विष्णोः सर्वात्मनः प्रभोः ।
तपः पूर्वं समुत्पन्नं धर्मस्तस्मादनन्तरम् ॥ १६
एतस्मिन्नन्तरे चैव वीरुदोषध्य एव च ।
सोमस्यात्मा च बहुधा संभूतः पृथिवीतले ।
अमृतं च विषं चैव याश्चान्यास्तृणजातयः ॥१७
अमृतं मनसः प्रीतिं सद्यस्तृप्तिं ददाति च ।
मनो ग्लपयते तीव्रं विषं गन्धेन सर्वशः ॥ १८
अमृतं मङ्गलं विद्धि महद्विषममङ्गलम् ।
ओषध्यो ह्यमृतं सर्वा विषं तेजोग्निसंभवम् ॥ १९
अमृतं मनो ह्लादयते श्रियं चापि ददाति च ।
तस्मात्सुमनसः प्रोक्ता नरैः सुकृतकर्मभिः ॥२०
देवताभ्यः सुमनसो यो ददाति नरः शुचिः ।
तस्मै सुमनसो देवास्तस्मात्सुमनसः स्मृताः ॥२१
यंयमुद्दिश्य दीयेरन्देवं सुमनसः प्रभोः ।
मङ्गलार्थं स तेनास्य प्रीतो भवति दैत्यप ॥ २२
ज्ञेयास्तूग्राश्च सौम्याश्च तेजस्विन्यश्च ताः पृथक् ।
ओषध्यो बहुवीर्या हि बहुरूपास्तथैव च ॥ २३
यज्ञियानां च वृक्षाणामयज्ञीयान्निबोध मे ।
आसुराणि च माल्यानि दैवतेभ्यो हितानि च २४
रक्षसामुरगाणां च यक्षाणां च तथा प्रियाः ।
मनुष्याणां पितॄणां च कान्ता यास्त्वनुपूर्वशः ॥२५

---

रमणीये शिलापृष्ठ इति झ. पाठः ॥ ६ ॥ स्ता अभवताम् ॥ ७ ॥ तपः वर्णाश्रमधर्मः । धर्मो दयादिः ॥ १६ ॥ वीरुधो लताः । ओषध्यो व्रीह्यादयः ॥ १७ ॥

वन्या ग्राम्याश्चेह तथा कृष्टोप्ताः पर्वताश्रयाः ।
अकण्टकाः कण्टकिनो गन्धरूपरसान्विताः ॥ २६
द्विविधो हि स्मृतो गन्ध इष्टोऽनिष्टश्च पुष्पजः ।
इष्टगन्धानि देवानां पुष्पाणीति विभावय ॥ २७
अकण्टकानां वृक्षाणां श्वेतप्रायाश्च वर्णतः ।
तेषां पुष्पाणि देवानामिष्टानि सततं प्रभो ॥ २८
'पद्मं च तुलसी जातिरपि सर्वेषु पूजिता ।'
जलजानि च माल्यानि पद्मादीनि च यानि वै ।
गन्धर्वनागयक्षेभ्यस्तानि दद्याद्विचक्षणः ॥ २९
ओषध्यो रक्तपुष्पाश्च कटुकाः कण्टकान्विताः ।
शत्रूणामभिचारार्थमथर्वसु निदर्शिताः ॥ ३०
तीक्ष्णवीर्यास्तु भूतानां दुरालम्भाः सकण्टकाः ।
रक्तभूयिष्ठवर्णाश्च कृष्णाश्चैवोपहारयेत् ॥ ३१
मनोहृदयनन्दिन्यो विमर्दे मधुराश्च याः ।
चारुरूपाः सुमनसो मानुषाणां स्मृता विभो ॥ ३२
न तु श्मशानसंभूता न देवायतनोद्भवाः ।
सन्नयेत्पुष्टियुक्तेषु विवाहेषु रहःसु च ॥ ३३
गिरिसानुरुहाः सौम्या देवानामुपधारयेत् ।
प्रोक्षिताभ्युक्षिताः सौम्या यथायोगं यथास्मृति ॥
गन्धेन देवास्तुष्यन्ति दर्शनाद्यक्षराक्षसाः ।
नागाः समुपभोगेन त्रिभिरेतैस्तु मानुषाः ॥ ३५
सद्यः प्रीणाति देवान्वै ते प्रीता भावयन्त्युत ।
संकल्पसिद्धा मर्त्यानामीप्सिताश्च मनोरथाः ॥ ३६
देवाः प्रीणन्ति सततं मानिता मानयन्ति च ।
अवज्ञातावधूताश्च निर्दहन्त्यधमान्नरान् ॥ ३७
अत ऊर्ध्वं प्रवक्ष्यामि धूपदानविधेः फलम् ।
धूपांश्च विविधान्साधूनसाधूंश्च निबोध मे ॥ ३८
निर्यासाः सरलाश्चैव कृत्रिमाश्चैव ते त्रयः ।
इष्टोऽनिष्टो भवेद्गन्धस्तन्मे विस्तरशः शृणु ॥ ३९
निर्यासाः सल्लकीवर्ज्या देवानां दयितास्तु ते ।
गुग्गुलुः प्रवरस्तेषां सर्वेषामिति निश्चयः ॥ ४०
अगुरुः सारिणां श्रेष्ठो यक्षराक्षसभोगिनाम् ।
दैत्यानां सल्लकीजश्च काङ्क्षितो यश्च तद्विधः ॥ ४१
अथ सर्जरसादीनां गन्धैः पार्थिवदारवैः ।
फाणितासवसंयुक्तैर्मनुष्याणां विधीयते ॥ ४२
देवदानवभूतानां सद्यस्तुष्टिकरः स्मृतः ।
येऽन्ये वैहारिकास्तत्र मानुषाणामिति स्मृताः ॥ ४३
य एवोक्ताः सुमनसां प्रदाने गुणहेतवः ।
धूपेष्वपि परिज्ञेयास्त एव प्रीतिवर्धनाः ॥ ४४
दीपदाने प्रवक्ष्यामि फलयोगमनुत्तमम् ।
यथा येन यदा चैव प्रदेया यादृशाश्च ते ॥ ४५
ज्योतिस्तेजः प्रकाशं वाऽप्यूर्ध्वगं चापि वर्धते ।
प्रदानं तेजसां तस्मात्तेजो वर्धयते नृणाम् ॥ ४६
अन्धंतमस्तमिस्रं च दक्षिणायनमेव च ।
उत्तरायणमेतस्माज्ज्योतिर्दानं प्रशस्यते ॥ ४७
यस्मादूर्ध्वगमेतत्तु तमसश्चैव भेषजम् ।
तस्मादूर्ध्वगतेर्दाता भवेदत्रेति निश्चयः ॥ ४८
देवास्तेजस्विनो यस्मात्प्रभावन्तः प्रकाशकाः ।
तामसा राक्षसाश्चैव तस्माद्दीपः प्रदीयते ॥ ४९
आलोकदानाच्चक्षुष्मान्प्रभायुक्तो भवेन्नरः ।
तान्दत्त्वा नोपहिंसेत न हरेन्नोपनाशयेत् ॥ ५०
दीपहर्ता भवेदन्धस्तमोगतिरसुप्रभः ।
दीपप्रदः स्वर्गलोके दीपमाली विराजते ॥ ५१
हविषा प्रथमः कल्पो द्वितीयश्चौषधीरसैः ।
वसामेदोस्थिनिर्यासैर्न कार्यः पुष्टिमिच्छता ॥ ५२
देवालये सभायां च गिरौ चैत्यचतुष्पथे ।
दीपदाता भवेन्नित्यं य इच्छेद्भूतिमात्मनः ॥ ५३
कुलोद्योतो विशुद्धात्मा प्रकाशत्वं च गच्छति ।
ज्योतिषां चैव सालोक्यं दीपदाता भवेन्नरः ॥ ५४
बलिकर्मसु वक्ष्यामि गुणान्कर्मफलोदयान् ।
देवयक्षोरगनृणां भूतानामथ रक्षसाम् ॥ ५५
येषां नाग्रभुजो विप्रा देवतातिथिबालकाः ।

---

प्रवरस्तेषां० घृतमिश्रोऽथ कुञ्जर इति थ० पाठः ॥ ४० ॥ ज्योतिर्दीपादि । तेजः कान्तिः । प्रकाशः कीर्तिः ॥ ४६ ॥ तमिस्रं अन्धकारः । अन्धं तमो नाम नरकरूपम् । तथा दक्षिणायनमप्यन्धं तम एव । अत उत्तरायणे रात्रौ तमोनाशक ज्योतिर्देयं नरकनिवृत्त्यर्थं ॥ ४७ ॥ हविषा घृतेन ओषधीरसैः तिलसर्षपादिस्नेहैः । वसामेदोस्थीनि प्राण्यवयवास्तेषां निर्यासाः स्नेहाः । वसादयः पृथग्वा निर्यासात् ॥ ५२ ॥

राक्षसानेव तान्विद्धि निर्वषट्कारमङ्गलान् ॥ ५६
तस्मादग्रं प्रयच्छेत देवेभ्यः प्रतिपूजितम् ।
शिरसा प्रणतश्चापि हरेद्बलिमतन्द्रितः ॥ ५७
गृह्णन्ति देवता नित्यमाशंसन्ति सदा गृहान् ।
बाह्याश्चागन्तवो येऽन्ये यक्षराक्षसपन्नगाः ॥ ५८
इतो दत्तेन जीवन्ति देवताः पितरस्तथा ।
ते प्रीताः प्रीणयन्त्येनमायुषा यशसा धनैः ॥५९
बलयः सह पुष्पैस्तु देवानामुपहारयेत् ।
दधिदुग्धमयाः पुण्याः सुगन्धाः प्रियदर्शनाः ६०
कार्या रुधिरमांसाढ्या बलयो यक्षरक्षसाम् ।
सुरासवपुरस्कारा लाजोल्लापिकभूषिताः ॥ ६१
नागानां दयिता नित्यं पद्मोत्पलविमिश्रिताः ।
तिलान्गुडसुसंपन्नान्भूतानामुपहारयेत् ॥ ६२
अग्रदाताऽग्रभोगी स्याद्बलवीर्यसमन्वितः ।
तस्मादग्रं प्रयच्छेत देवेभ्यः प्रतिपूजितम् ॥ ६३
ज्वलन्त्यहरहो वेश्म याश्चास्य गृहदेवताः ।
ताः पूज्या भूतिकामेन प्रसृताग्रप्रदायिना ॥ ६४
इत्येतदसुरेन्द्राय काव्यः प्रोवाच भार्गवः ।
सुवर्णाय मनुः प्राह सुवर्णो नारदाय च ॥ ६५
नारदोऽपि मयि प्राह गुणानेतान्महाद्युते ।
त्वमप्येतद्विदित्वेह सर्वमाचर पुत्रक ॥ ६६

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि पञ्चपञ्चाशदधिकशततमोऽध्यायः ॥ १५५ ॥

## षट्पञ्चाशदधिकशततमोऽध्यायः ॥ १५६ ॥

भीष्मेण युधिष्ठिरंप्रति बलिदीपप्रदानकथनोपयोगितया नहुषचरितकथनारम्भः ॥ १ ॥ देवैर्वरदानपूर्वकमिन्द्रपदं प्रापितेन नहुषेण दर्पात्सप्तर्ष्यादिभिः पर्यायेण स्वयानवाहनम् ॥ २ ॥ अगस्त्यस्य तद्यानवहनपर्याये भृगुणाऽगस्त्यंप्रति स्वेन नहुषस्याधःपातनप्रतिज्ञानम् ॥ ३ ॥

युधिष्ठिर उवाच ।
श्रुतं मे भरतश्रेष्ठ पुष्पधूपप्रदायिनाम् ।
फलं बलिविधाने च तद्भूयो वक्तुमर्हसि ॥ १
धूपप्रदानस्य फलं प्रदीपस्य तथैव च ।
बलयश्च किमर्थं वै क्षिप्यन्ते गृहमेधिभिः ॥ २
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
नहुषस्य च संवादमगस्त्यस्य भृगोस्तथा ॥ ३
नहुषो हि महाराज राजर्षिः सुमहातपाः ।
देवराज्यमनुप्राप्तः सुकृतेनेह कर्मणा ॥ ४
तत्रापि प्रयतो राजन्नहुषस्त्रिदिवे वसन् ।
मानुषीश्चैव दिव्याश्च कुर्वाणो विविधाः क्रियाः ५
मानुष्यस्तत्र सर्वाः स्म क्रियास्तस्य महात्मनः ।
प्रवृत्तास्त्रिदिवे राजन्दिव्याश्चैव सनातनाः ॥ ६
अग्निकार्याणि समिधः कुशाः सुमनसस्तथा ।
बलयश्चान्नलाजाभिर्धूपनं दीपकर्म च ॥ ७
सर्वं तस्य गृहे राज्ञः प्रावर्तत महात्मनः ।
जपयज्ञान्मनोयज्ञांस्त्रिदिवेऽपि चकार सः ॥ ८
देवानभ्यर्चयच्चापि विधिवत्स सुरेश्वरः ।
सर्वानेव यथान्यायं यथापूर्वमरिंदम ॥ ९
अथेन्द्रोऽहमिति ज्ञात्वा अहंकारं समाविशत् ।
सर्वाश्चैव क्रियास्तस्य पर्यहीयन्त भूपतेः ॥ १०
सप्तर्षीन्वाहयामास वरदानमदान्वितः ।
परिहीनक्रियश्चैव दुर्बलत्वमुपेयिवान् ॥ ११
तस्य वाहयतः कालो मुनिमुख्यांस्तपोधनान् ।
अहंकाराभिभूतस्य सुमहानत्यवर्तत ॥ १२
अथ पर्यायशः सर्वान्वाहनायोपचक्रमे ।
पर्यायश्चाप्यगस्त्यस्य समपद्यत भारत ॥ १३

दधिद्रप्सयुताः पुण्या इति ध. पाठः ॥ ६० ॥ लाजोल्लापिकभूषिताः । उल्लापिक उपरिलापनम् ॥ ६१ ॥ पञ्चपञ्चाशदधिकशततमोऽध्यायः ॥ १५५ ॥

लाजाभिः । आर्षं स्त्रीत्वम् ॥ ७ ॥ अथेन्द्रस्य भविष्यत्वादहङ्कारः समाविशत् इति ध. पाठः ॥ १० ॥

अथागत्य महातेजा भृगुर्ब्रह्मविदांवरः
अगस्त्यमाश्रमस्थं वै समुपेत्यदमब्रवीत् ॥ १४
एवं वयमसत्कारं देवेन्द्रस्यास्य दुर्मतेः ।
नहुषस्य किमर्थं वै मर्षयाम महामुने ॥ १५
अगस्त्य उवाच ।
कथमेष मया शक्यः शप्तुं यस्य महामुने ।
वरदेन वरो दत्तो भवतो विदितश्च सः ॥ १६
यो मे दृष्टिपथं गच्छेत्स मे वश्यो भवेदिति ।
इत्यनेन वरं देवो याचितो गच्छता दिवम् ॥ १७
एवं न दग्धः स मया भवता च न संशयः ।
अन्येनाप्यृषिमुख्येन न दग्धो न च पातितः ॥ १८
अमृतं चैव पानाय दत्तमस्मै पुरा विभो ।
महात्मना तदर्थं च नास्माभिर्विनिपात्यते ॥ १९
प्रायच्छत वरं देवः प्रजानां दुःखकारणम् ।
द्विजेष्वधर्मयुक्तानि स करोति नराधमः ॥ २०
तत्र यत्प्राप्तकालं नस्तद्ब्रूहि वदतांवर
भवांश्चापि यथा ब्रूयात्तत्कर्तास्मि न संशयः ॥ २१
भृगुरुवाच ।
पितामहनियोगेन भवन्तं सोऽहमागतः ।
प्रतिकर्तुं बलवति नहुषे दर्पमोहिते ॥ २२
अद्य हि त्वां सुदुर्बुद्धी रथे योक्ष्यति देवराट् ।
अद्यैनमहमुद्वृत्तं करिष्येऽनिन्द्रमोजसा ॥ २३
अद्येन्द्रं स्थापयिष्यामि पश्यतस्ते शतक्रतुम् ।
संचाल्य पापकर्माणमैन्द्रात्स्थानात्सुदुर्मतिम् २४
अद्य चासौ कुदेवेन्द्रस्त्वां पदा धर्षयिष्यति ।
दैवोपहतचित्तत्वादात्मनाशाय मन्दधीः ॥ २५
व्युत्क्रान्तधर्मं तमहं धर्षणामर्षितो भृशम् ।
अहिर्भवस्वेति रुषा शप्स्ये पापं द्विजद्रुहम् ॥ २६
तत एनं सुदुर्बुद्धिं धिक्शब्दाभिहतत्विषम् ।
धरण्यां पातयिष्यामि पश्यतस्ते महामुने ॥ २७
नहुषं पापकर्माणमैश्वर्यबलमोहितम् ।
यथा च रोचते तुभ्यं तथा कर्तास्म्यहं मुने॥२८
एवमुक्तस्तु भृगुणा मैत्रावरुणिरव्ययः ।
अगस्त्यः परमप्रीतो बभूव विगतज्वरः ॥ २९

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि षट्पञ्चाशदधिकशततमोऽध्यायः ॥ १५६ ॥

## सप्तपञ्चाशदधिकशततमोऽध्यायः ॥ १५७ ॥

नहुषेणागस्त्यस्य स्वयाने योजनम् ॥१॥ तथा तेन सह श्रुतिप्रामाण्यविवादे स्वविरुद्धभाषिणोऽगस्त्यस्य मस्तके स्वपादेन ताडनम् ॥ २ ॥ तदा तज्जटान्तर्निगूढेन भृगुणा शापदानेन तस्याधःपातनम् ॥३॥ ततो देवैरिन्द्रस्य स्वपदेऽभिषेचनम् ॥४॥ नहुषस्य स्वकृतपूर्वबलिदीपदानादिजसुकृतमहिम्ना पुनः स्वर्गप्राप्तिः ॥ ५ ॥

युधिष्ठिर उवाच ।
कथं वै स विपन्नश्च कथं वै पातितो भुवि ।
कथं देवेन्द्रतां प्राप्तस्तद्भवान्वक्तुमर्हति ॥ १
भीष्म उवाच ।
एवं तयोः संवदतोः क्रियास्तस्य महात्मनः ।
सर्वा एव प्रवर्तन्ते या दिव्या याश्च मानुषाः ॥ २
तथैव दीपदानानि सर्वोपकरणानि वै ।
बलिकर्म च यच्चान्यद्वत्सकाश्च पृथग्विधाः ॥ ३
सर्वास्तस्य समुत्पन्ना देवेन्द्रस्य महात्मनः ।
देवलोके नृलोके च सदाचारपुरस्कृताः ॥ ४
ताश्चोद्भवन्ति राजेन्द्र समृद्ध्यै गृहमेधिनः ।
धूपप्रदानैर्दीपैश्च नमस्कारैस्तथैव च ॥ ५
यथा सिद्धस्य चान्नस्य गृह्य चाग्रं प्रदीयते ।
बलयश्च गृहोद्देशे ततः प्रीयन्ति देवताः ॥ ६
यथा च गृहिणस्तोषो भवेद्वै बलिकर्मणि ।
तथा शतगुणा प्रीतिर्देवतानां प्रजायते ॥ ७
एवं धूपप्रदानं च दीपदानं च साधवः ।
प्रयच्छति नमस्कारैर्युक्तमात्मगुणावहम् ॥ ८

न शप्तो विनिपातित इति थ. ध. पाठः ॥ १८ ॥ शपिष्ये पापमोहितमिति थ. ध. पाठः ॥ २६ ॥ षट्पञ्चाशदधिकशततमोऽध्यायः ॥ १५६ ॥

वत्सकाः पुत्रादेर्वार्षिकोत्सवाः । यच्चान्यदुत्सेकाश्चेति थ. ध. पाठः ॥ ३ ॥

स्नानेनाद्भिश्च यत्कर्म क्रियते वै विपश्चिता ।
नमस्कारप्रयुक्तेन तेन प्रीणन्ति देवताः ॥ ९
पितरश्च महाभागा ऋषयश्च तपोधनाः ।
गृह्याश्च देवताः सर्वाः प्रीयन्ते विधिनाऽर्चिताः॥
इत्येतां बुद्धिमास्थाय नहुषः स नरेश्वरः ।
सुरेन्द्रत्वं महत्प्राप्य कृतवानेतदद्भुतम् ॥ ११
कस्य चित्त्वथ कालस्य भाग्यक्षय उपस्थिते ।
सर्वमेतदवज्ञाय न चकार यथाविधि ॥ १२
ततः स परिहीणोऽभूत्सुरेन्द्रो बलदर्पतः ।
धूपदीपादिकविधिं न यथावच्चकार ह ।
ततोऽस्य यज्ञविषयो रक्षोभिः परिबाध्यते ॥ १३
अथागस्त्यमृषिश्रेष्ठं वाहनायाजुहाव ह ।
द्रुतं सरस्वतीकूलात्स्मयन्निव महाबलः ॥ १४
ततो भृगुर्महातेजा मैत्रावरुणिमब्रवीत् ।
निमीलयस्व नयने जटां यावद्विशामि ते ।
'सुरेन्द्रपतनायेति स च नेत्रे न्यमीलयत् ॥' १५
त्वोऽगस्त्यस्याथ जटां दृष्ट्वा प्राविशदच्युतः ।
भृगुः स सुमहत्तेजाः पातनाय नृपस्य च ॥ १६
ततः स देवराट् प्राप्तस्तमृषिं वाहनाय वै ।
ततोऽगस्त्यः सुरपतिं वाक्यमाह विशांपते ।
योजयस्वेति मां क्षिप्रं कं च देशं वहामि ते॥१७
यत्र वक्ष्यसि तत्र त्वां नयिष्यामि सुराधिप ।
इत्युक्तो नहुषस्तेन योजयामास तं मुनिम् ॥ १८
भृगुस्तस्य जटान्तस्थो बभूव हृषितो भृशम् ।
न चापि दर्शनं तस्य चकार स भृगुस्तदा ।
वरदानप्रभावज्ञो नहुषस्य महात्मनः ॥ १९
न चुकोप तदाऽगस्त्यो युक्तोऽपि नहुषेण वै ।
तं तु राजा पदैकेन चोदयामास भारत ।
'श्रुतिः स्मृतिः प्रमाणं वा नेतिवादेन देवराट् ॥'
न चुकोप स धर्मात्मा ततः पादेन देवराट् ।
अगस्त्यस्य तदा क्रुद्धो वामेनाभ्यहनच्छिरः॥२१
तस्मिञ्छिरस्यभिहते स जटान्तर्गतो भृगुः ।
शशाप बलवत्क्रुद्धो नहुषं पापचेतसम् ॥ २२
यस्मात्पदाऽवधीः क्रोधाच्छिरसीमं महामुनिम् ।
तस्मादाशु महीं गच्छ सर्पो भूत्वा सुदुर्मते ॥२३
शप्तोऽथ स तदा तेन सर्पो भूत्वा पपात ह ।
अदृष्टेनाथ भृगुणा भूतले भरतर्षभ ॥ २४
भृगुं हि यदि सोऽद्राक्षीन्नहुषः पृथिवीपते ।
स शक्तो नाभविष्यद्वै पातने तस्य तेजसा ॥२५
स तु तैस्तैः प्रदानैश्च तपोभिर्नियमैस्तथा ।
पतितोऽपि महाराज भूतले स्मृतिमानभूत् ॥२६
प्रसादयामास भृगुं शापान्तो मे भवेदिति ।
ततोऽगस्त्यः कृपाविष्टः प्रासादयत तं भृगुम् ।
शापान्तार्थे महाराज स च प्रादात्कृपान्वितः॥२७
भृगुरुवाच ।
राजा युधिष्ठिरो नाम भविष्यति कुरूद्वहः ।
स त्वां मोक्षयिता शापादित्युक्त्वाऽन्तरधीयत॥
अगस्त्योऽपि महातेजाः कृत्वा कार्यं शतक्रतोः ।
स्वमाश्रमपदं प्रायात्पूज्यमानो द्विजातिभिः ॥२९
नहुषोऽपि त्वया राजंस्तस्माच्छापात्समुद्धृतः ।
जगाम ब्रह्मभवनं पश्यतस्ते जनाधिप ॥ ३०
तदा स पातयित्वा तं नहुषं भूतले भृगुः ।
जगाम ब्रह्मभवनं ब्रह्मणे च न्यवेदयत् ॥ ३१
ततः शक्रं समानाय्य देवानाह पितामहः ।
वरदानान्मम सुरा नहुषो राज्यमाप्तवान् ।
स चागस्त्येन क्रुद्धेन भ्रंशितो भूतलं गतः ॥३२
न च शक्यं विना राज्ञा सुखं वर्तयितुं क्वचित् ।
तस्मादयं पुनः शक्रो देवराज्येऽभिषिच्यताम्३३
एवं संभाषमाणं तु देवाः पार्थ पितामहम् ।
एवमस्त्विति संहृष्टाः प्रत्यूचुस्तं नराधिप ॥ ३४
सोऽभिषिक्तो भगवता देवराज्ये च वासवः ।
ब्रह्मणा राजशार्दूल यथापूर्वं व्यरोचत ॥ ३५
एवमेतत्पुरावृत्तं नहुषस्य व्यतिक्रमात् ।
स च तैरेव संसिद्धो नहुषः कर्मभिः पुनः ॥३६
तस्माद्दीपाः प्रदातव्याः सायं वै गृहमेधिभिः ।

तं तु राजा प्रतोदेनेति झ. पाठः ॥ २० ॥

भवनं तेन पुण्येन कर्मणेति थ. ध. पाठः ॥ ३० ॥

दिव्यं चक्षुरवाप्नोति प्रेत्य दीपस्य दायकः ।
पूर्णचन्द्रप्रतीकाशा दीपदाश्च भवन्त्युत ॥ ३७
यावदक्षिनिमेषाणि ज्वलन्ते तावतीः समाः ।
रूपवान्बलवांश्चापि नरो भवति दीपदः ॥ ३८
य इदं शृणुयाद्वापि पठेत यो द्विजोत्तमः ।
ब्रह्मलोकमवाप्नोति स च वै नात्र संशयः ॥ ३९

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि सप्तपञ्चाशदधिकशततमोऽध्यायः ॥ १५७ ॥

## अष्टपञ्चाशदधिकशततमोऽध्यायः ॥ १५८ ॥

भीष्मेण युधिष्ठिरं प्रति ब्रह्मस्वापहारस्यानर्थहेतुताया प्रमाणतया नृपचण्डालसंवादानुवादः ॥ १ ॥

उवाच ।
ब्राह्मणस्वानि ये मन्दा हरन्ति भरतर्षभ ।
नृशंसकारिणो योनिं कां ते गच्छन्ति मानवाः॥१
भीष्म उवाच ।
पातकानां परं ह्येतद्ब्रह्मस्वहरणं बलात् ।
सान्वयास्ते विनश्यन्ति चण्डालाः प्रेत्य चेह च॥२
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
चण्डालस्य च संवादं क्षत्रबन्धोश्च भारत ॥ ३
राजोवाच ।
वृद्धरूपोऽसि चण्डाल बालवच्च विचेष्टसे ।
श्वखराणां रजःसेवी कस्मादुद्विजसे गवाम् ॥ ४
साधुभिर्गर्हितं कर्म चण्डालस्य विधीयते ।
कस्माद्गोरजसा ध्वस्तमङ्गं तोयेन सिञ्चसि ॥ ५
चण्डाल उवाच ।
ब्राह्मणस्य गवां राजन्प्रयान्तीनां रजः पुरा ।
सोममुद्ध्वंसयामास तं सोममपिबन्द्विजाः ॥ ६
भृत्यानामपि राज्ञस्तु रजसा ध्वंसितं मखे ।
तत्पानाच्च द्विजाः सर्वे क्षिप्रं नरकमाविशन् ॥ ७
दीक्षितश्च स राजाऽपि क्षिप्रं नरकमाविशत् ।
सह तैर्याजकैः सर्वैर्ब्रह्मस्वमुपजीव्य तत् ॥ ८
येऽपि तत्रापिबन्क्षीरं घृतं दधि च मानवाः ।
ब्राह्मणाः सहराजन्याः सर्वे नरकमाविशन् ॥ ९
जघ्नुस्ताः पयसा पुत्रांस्तथा पौत्रान्विधूय तान् ।
पशूनवेक्षमाणश्च साधुवृत्तेन दंपती ॥ १०
अहं तत्रावसं राजन्ब्रह्मचारी जितेन्द्रियः ।
तासां मे रजसा ध्वस्तं भैक्षमासीन्नराधिप ॥ ११
चण्डालोऽहं ततो राजन्भुक्त्वा तदभवं नृप ।
ब्रह्मस्वहारी च नृपः सोऽप्रतिष्ठां गतिं ययौ ॥१२
तस्माद्धरेन्न विप्रस्वं कदाचिदपि किंचन ।
न पश्येन्नानुमोदेच्च न हर्तुं किंचिदाहरेत् ॥ १३
ब्रह्मस्वं रजसा ध्वस्तं भुक्त्वा मां पश्य यादृशम् ।
तस्मात्सोमोऽप्यविक्रेयः पुरुषेण विपश्चिता ॥१४
एतद्धि धनमुत्कृष्टं द्विजानामविशेषतः ।
विक्रयं त्विह सोमस्य गर्हयन्ति मनीषिणः ॥१५
ये चैनं क्रीणते तात ये च विक्रीणते जनाः ।
ते तु वैवस्वतं प्राप्य रौरवं यान्ति सर्वशः ॥ १६
सोमं तु रजसा ध्वस्तं विक्रीणन्विधिपूर्वकम् ।
श्रोत्रियो वार्धुषी भूत्वा नचिरं स विनश्यति ॥१७
नरकं त्रिंशतं प्राप्य स्वविष्ठामुपजीवति ।
ब्रह्मस्वहारी नरकान्यातनाश्चानुभूय तु ।
मलेषु च कृमिर्भूत्वा श्वविष्ठामुपजीवति ॥ १८
श्वचर्यामतिमानं च सखिदारेषु विप्लवम् ।
तुलयाधारयद्धर्मो ह्यतिमानोऽतिरिच्यते ॥ १९
म्लानं मां विकलं पश्य विवर्णं हरिणं कृशम् ।

---

रूपवान्धर्मवांश्वाप्नोति ध. पाठः ॥ ३८ ॥ सप्तपञ्चाशदधिकशततमोऽध्यायः ॥ १५७ ॥

रजःसेवी रजोगुण्ठित. ॥ ४ ॥ गोरजसा गोपरागेण प्रचलत्या धेनोरूधसः सकाशात्प्रसरन्त्यः क्षीरविप्रुषोऽत्र परागपर्यायेण रज·पदेनोच्यन्ते। ध्वस्त व्याप्त विप्रुण्मात्रेणापि ब्रह्मस्वेन देहस्निग्धत्व माभूदिति भावः ॥ ५ ॥ रजः क्षीरं कर्तृ मार्गस्थवल्लीरूप सोममुद्धसयामास नाशितवत् ॥ ६ ॥ ता गावः परैः पीतेन स्वपयसा तेषा पुत्रपौत्रान् पशून् दम्पती च जघ्नुः सद्योऽल्पायुषश्चक्रुः ॥ १० ॥ एन ब्रह्मस्वसृष्टम् ॥ १६ ॥ श्वचर्या नीचसेवाम् । अतिमानी इतरद्वयापेक्षया अत्यन्त पापीयसर्थः । स्वस्वदारेषु विप्लवमिति ध. पाठः ॥ १९ ॥

अतिमानेन मां पश्य पापां गतिमुपागतम् ॥२०
अहं वै विपुले तात कुले धनसमन्विते ।
योगणे जन्मनि विभो ज्ञानविज्ञानपारगः ॥ २१
अभवं तत्र जानानो ह्येतान्दोषान्मदात्सदा ।
संरब्ध एव भूतानां पृष्ठमांसमभक्षयम् ॥ २२
सोऽहं वै विदितः सर्वैर्दुर्गो वनिनो वने ।
साधूनां परिभावेप्सुर्विप्राणां गर्वितो धनैः ।
इमामवस्थां संप्राप्तः पश्य कालस्य पर्ययम् ॥२३
आदीप्तमिव चैलान्तं भ्रमरैरिव चार्दितम् ।
धावमानं सुसंरब्धं पश्य मां रजसाऽन्वितम्॥२४
स्वाध्यायैस्तु महत्पापं हरन्ति गृहमेधिनः ।
दानैः पृथग्विधैश्चापि विप्रजात्यां मनीषिणः २५
तथा पापकृतं विप्रमाश्रमस्थं महीपते ।
सर्वसङ्गविनिर्मुक्तं छन्दांस्युत्तारयन्त्युत ॥ २६
अहं हि पापयोन्यां वै प्रसूतः क्षत्रियर्षभ ।
निश्चयं नाधिगच्छामि कथं मुच्येयमित्युत ॥२७
जातिस्मरत्वं च मम केनचित्पूर्वकर्मणा ।
शुभेन येन मोक्षं वै प्राप्तुमिच्छाम्यहं नृप ॥ २८
त्वमिमं संप्रपन्नाय संशयं ब्रूहि पृच्छते ।
चण्डालत्वात्कथमहं मुच्येयमिति सत्तम ॥ २९
राजोवाच ।
चण्डाल प्रतिजानीहि येन मोक्षमवाप्स्यसि ।
ब्राह्मणार्थे त्यजन्प्राणान्गतिमिष्टामवाप्स्यसि ॥३०
दत्त्वा शरीरं क्रव्याद्भ्यो रणाग्नौ द्विजहेतुकम् ।
हित्वा प्राणान्प्रमोक्षस्ते नान्यथा मोक्षमर्हसि ॥३१
भीष्म उवाच ।
इत्युक्तः स तदा तेन ब्रह्मस्वार्थे परंतप ।
हित्वा रणमुखे प्राणान्गतिमिष्टामवाप ह ॥ ३२
तस्माद्रक्ष्यं त्वया पुत्र ब्रह्मस्वं भरतर्षभ ।
यदीच्छसि महाबाहो शाश्वतीं गतिमात्मनः ३३

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि अष्टपञ्चाशदधिकशततमोऽध्यायः ॥ १५८ ॥

## एकोनषष्ट्यधिकशततमोऽध्यायः ॥ १५९ ॥

भीष्मेण युधिष्ठिरंप्रति पुण्यपापकर्मफलभेदस्य पुण्यकर्मणां च तरतमभावस्य च बोधनाय तादृश कर्मविशेषसाध्यफलविशेषप्रतिपादकशक्रगौतमसंवादानुवादः ॥ १ ॥

उवाच ।
एको लोकस्तु कृतिनां स्वर्गे लोके पितामह ।
उत तत्रापि नानात्वं सर्वं ब्रूहि पितामह ॥ १
भीष्म उवाच ।
कर्मभिः पार्थ नानात्वं लोकानां यान्ति मानवाः ।
पुण्यान्पुण्यकृतो यान्ति पापान्पापकृतो नराः॥२
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
गौतमस्य मुनेस्तात संवादं वासवस्य च ॥ ३
ब्राह्मणो गौतमः कश्चिन्मृदुर्दान्तो जितेन्द्रियः ।
महावने हस्तिशिशुं परिद्यूनममातृकम् ॥ ४
तं दृष्ट्वा जीवयामास सानुक्रोशो धृतव्रतः ।
स तु दीर्घेण कालेन बभूवातिबलो महान् ॥ ५
तं प्रपन्नं महादीर्घं प्रभूतं सर्वतोमदम् ।
धृतराष्ट्रस्वरूपेण शक्रो जग्राह हस्तिनम् ॥ ६
ह्रियमाणं तु तं दृष्ट्वा गौतमः संशितव्रतः ।
अभ्यभाषत राजानं धृतराष्ट्रं महातपाः ॥ ७
मामाहार्षीर्हस्तिनं पुत्रमेनं
दुःखात्पुष्टं धृतराष्ट्रात्कृतज्ञ ।
मैत्रं सतां सप्तपदं वदन्ति
मित्रद्रोहो नेह राजन्स्पृशेत्त्वाम् ॥ ८
इध्मोदकप्रदातारं शून्यपालं ममाश्रमे ।
विनीतमाचार्यकुले सुयुक्तं गुरुकर्मणि ॥ ९

भूतानामुपरि सदा संरब्ध एव कुपित एवेत्यन्वयः ॥ २२ ॥ भ्रमरैस्तीक्ष्णतुण्डैरर्द्यमानमिव चेलान्तवद्दह्यमानमिव क्लिश्यन्त मा पश्य । आदीप्तमिव चालातमिति थ. पाठः ॥ २४ ॥ रक्ष्यमेव न तु भक्ष्यम् ॥ ३३ ॥ अष्टपञ्चाशततमोऽध्यायः॥१५८॥

पुण्यपापयोरिव पुण्यानामवान्तरभेदोऽस्तीत्यर्थः ॥ २ ॥

शिष्टं दान्तं कृतज्ञं च प्रियं च सततं मम ।
न मे विक्रोशतो राजन्हर्तुमर्हसि कुञ्जरम् ॥ १०

धृतराष्ट्र उवाच ।

गवां सहस्रं भवते ददानि
शतानि निष्कस्य ददानि पञ्च ।
अन्यच्च वित्तं विविधं महर्षे
किं ब्राह्मणस्येह गजेन कृत्यम् ॥ ११

गौतम उवाच ।

तवैव गावो हि भवन्तु राज-
न्दास्यः सनिष्का विविधं च रत्नम् ।
अन्यच्च वित्तं विविधं नरेन्द्र
किं ब्राह्मणस्येह धनेन कृत्यम् ॥ १२

धृतराष्ट्र उवाच ।

ब्राह्मणानां हस्तिभिर्नास्ति कृत्यं
राजन्यानां नागकुलानि विप्र ।
स्वं वाहनं नयतो नास्त्यधर्मो
नागश्रेष्ठं गौतमास्मान्निवर्त ॥ १३

गौतम उवाच ।

यत्र प्रेतो नन्दति पुण्यकर्मा
यत्र प्रेतः शोचते पापकर्मा ।
वैवस्वतस्य सदने महात्मन-
स्तत्र त्वाऽहं हस्तिनं यातयिष्ये ॥ १४

धृतराष्ट्र उवाच ।

ये निष्क्रिया नास्तिकाः श्रद्दधानाः
पापात्मान इन्द्रियार्थे निसृष्टाः ।
यमस्य ते यातनां प्राप्नुवन्ति
परं गन्ता धृतराष्ट्रो न तत्र ॥ १५

गौतम उवाच ।

वैवस्वती संयमनी जनानां
यत्रानृतं नोच्यते यत्र सत्यम् ।
यत्राबलान्बलिनो घातयन्ति
तत्र त्वाऽहं हस्तिनं यातयिष्ये ॥ १६

धृतराष्ट्र उवाच ।

ज्येष्ठां स्वसारं पितरं मातरं च
गुरून्यथाऽमानयन्तश्चरन्ति ।
तथाविधानामेष लोको महर्षे
परं गन्ता धृतराष्ट्रो न तत्र ॥ १७

गौतम उवाच ।

मन्दाकिनी वैश्रवणस्य राज्ञो
महाभागा भोगिजनप्रवेश्या ।
गन्धर्वयक्षैरप्सरोभिश्च जुष्टा
तत्र त्वाऽहं हस्तिनं यातयिष्ये ॥ १८

धृतराष्ट्र उवाच ।

अतिथिव्रताः सुव्रता ये जना वै
प्रतिश्रयं ददति ब्राह्मणेभ्यः ।
शिष्टाशिनः संविभज्याश्रितेभ्यो
मन्दाकिनीं तेऽपि हि भूषयन्ति ॥ १९

गौतम उवाच ।

मेरोरग्रे यद्वनं भाति रम्यं
सुपुष्पितं किन्नरीगीतजुष्टम् ।
सुदर्शना यत्र जम्बूर्विशाला
तत्र त्वाऽहं हस्तिनं यातयिष्ये ॥ २०

धृतराष्ट्र उवाच ।

ये ब्राह्मणा मृदवः सत्यशीला
बहुश्रुताः सर्वभूताभिरामाः ।
येऽधीयते सेतिहासं पुराणं
मध्वाहुत्या जुह्वति वै द्विजेभ्यः ॥ २१
तथाविधानामेष लोको महर्षे
परं गन्ता धृतराष्ट्रो न तत्र ।
यदन्यत्ते विदितं स्थानमस्ति
तद्ब्रूहि त्वं त्वरितो ह्येष यामि ॥ २२

गौतम उवाच ।

सुपुष्पितं किंनरराजजुष्टं
प्रियं वनं नन्दनं नारदस्य ।

---

दासीशत निष्कशतानि पञ्च । इति झ. पाठः ॥ ११ ॥ ब्राह्मणस्य ब्राह्मणसबन्धिना धनेन ॥ १२ ॥ यातयिष्ये हस्तिनम् । स्वीयं फलं त्वत्तो ग्रहीष्ये इत्यर्थः । हस्तिन याचयिष्ये इति क. ङ. थ. ध. पाठः ॥ १४ ॥ यथा शत्रु मदमत्ताश्चरन्ति इति झ. पाठः ॥ १८ ॥

गन्धर्वाणामप्सरसां च सद्म
तत्र त्वाऽहं हस्तिनं यातयिष्ये ॥ २३

धृतराष्ट्र उवाच ।
ये नृत्यगीते कुशला जनाः सदा
देवात्मानः प्रियकामाश्चरन्ति ।
तथाविधानामेष लोको महर्षे
परं गन्ता धृतराष्ट्रो न तत्र ॥ २४

गौतम उवाच ।
यत्रोत्तराः-कुरवो भान्ति रम्या
देवैः सार्धं मोदमाना नरेन्द्र ।
यत्राग्नियौनाश्च वसन्ति विप्रा
अब्योनयः पर्वतयोनयश्च ॥ २५
यत्र शक्रो वर्षति सर्वकामा-
न्यत्र स्त्रियः कामचारा भवन्ति ।
यत्र चेर्ष्या नास्ति नारीनराणां
तत्र त्वाऽहं हस्तिनं यातयिष्ये ॥ २६

धृतराष्ट्र उवाच ।
ये सर्वभूतेषु निवृत्तकामा
अमांसादा न्यस्तदण्डाश्चरन्ति ।
न स्थावरं जङ्गमानि
भूताना य सवभूतात्मभूताः ॥ २७
निराशिषो निर्ममा वीतरागा
लाभालाभे तुल्यनिन्दाप्रशंसाः ।
तथाविधानामेष लोको महर्षे
परं गन्ता धृतराष्ट्रो न तत्र ॥ २८

गौतम उवाच ।
ततोऽपरे भान्ति लोकाः सनातनाः
सुपुण्यगन्धा विरजा वीतशोकाः ।
सोमस्य राज्ञः सदने महात्मन-
स्तत्र त्वाऽहं हस्तिनं यातयिष्ये ॥ २९

धृतराष्ट्र उवाच ।
ये दानशीला न प्रतिगृह्णते सदा
न चाप्यर्थांश्चाददते परेभ्यः ।
येषामदेयमर्हते नास्ति किंचि-
त्सर्वातिथ्याः सुप्रजना जनाश्च ॥ ३०
ये क्षन्तारो नाभिजल्पन्ति चान्या-
ञ्शक्ता भूत्वा सततं पुण्यशीलाः ।
तथाविधानामेष लोको महर्षे
परं गन्ता धृतराष्ट्रो न तत्र ॥ ३१

गौतम उवाच ।
ततोऽपरे भान्ति लोकाः सनातना
विराजसा वितमस्का विशोकाः ।
आदित्यदेवस्य पदं महात्मन-
स्तत्र त्वाऽहं हस्तिनं यातयिष्ये ॥ ३२

धृतराष्ट्र उवाच ।
स्वाध्यायशीला गुरुशुश्रूषकाश्च
तपस्विनः सुव्रताः सत्यसन्धाः ।
आचार्याणामप्रतिकूलभाषिणो
नित्योत्थिता गुरुकर्मस्वचोद्याः ॥ ३३
तथाविधानामेष लोको महर्षे
विशुद्धानां भावितो वाग्यतानाम् ।
सत्ये स्थितानां वेदविदां महात्मनां
परं गन्ता धृतराष्ट्रो न तत्र ॥ ३४

गौतम उवाच ।
ततोऽपरे भान्ति लोकाः सनातनाः
सुपुण्यगन्धा विरजा विशोकाः ।
वरुणस्य राज्ञः सदने महात्मन-
स्तत्र त्वाऽहं हस्तिनं यातयिष्ये ॥ ३५

धृतराष्ट्र उवाच ।
चातुर्मास्यैर्ये यजन्ते जनाः सदा
तथेष्टीनां दशशतं प्राप्नुवन्ति ।
ये चाग्निहोत्रं जुह्वति श्रद्दधाना
यथान्यायं त्रीणि वर्षाणि विप्राः ॥ ३६
स्वदारगाणां धर्मकृतां महात्मनां
यथोदिते वर्त्मनि सुस्थितानाम् ।
धर्मात्मनामुद्वहतां गतिं तां
परं गन्ता धृतराष्ट्रो न तत्र ॥ ३७

---

अग्नियौना धृष्टद्युम्नवदग्निरेव यौन योनिर्येषा ते ॥ २५ ॥

क्षन्तारः क्षमिणः ॥ ३१ ॥

गौतम उवाच ।
इन्द्रस्य लोका विरजा विशोका
दुरन्वयाः काङ्क्षिता मानवानाम् ।
तस्याहं ते भवने भूरितेजसो
राजन्निमं हस्तिनं यातयिष्ये ॥ ३८

धृतराष्ट्र उवाच ।
शतवर्षजीवी यश्च शूरो मनुष्यो
वेदाध्यायी यश्च यज्वाऽप्रमत्तः ।
एते सर्वे शक्रलोकं व्रजन्ति
परं गन्ता धृतराष्ट्रो न तत्र ॥ ३९

गौतम उवाच ।
प्राजापत्याः सन्ति लोका महान्तो
नाकस्य पृष्ठे पुष्कला वीतशोकाः ।
मनीषिणां सर्वलोकाभयानां
तत्र त्वाऽहं हस्तिनं यातयिष्ये ॥ ४०

धृतराष्ट्र उवाच ।
ये राजानो राजसूयाभिषिक्ता
धर्मात्मानो रक्षितारः प्रजानाम् ।
ये चाश्वमेधावभृथे प्लुताङ्गा-
स्तेषां लोका धृतराष्ट्रो न तत्र ॥ ४१

गौतम उवाच ।
ततः परं भान्ति लोकाः सनातनाः
सुपुण्यगन्धा विरजा वीतशोकाः ।
तस्मिन्नहं दुर्लभे चाप्यधृष्ये
गवां लोके हस्तिनं यातयिष्ये ॥ ४२

धृतराष्ट्र उवाच ।
यो गोसहस्री शतदो महात्मा
यो गोशती दश दद्याच्च शक्त्या ।
तथा दशभ्यो यश्च दद्यादिहैकां
पञ्चभ्यो वा दानशीलस्तथैकाम् ॥ ४३
ये जीर्यन्ते ब्रह्मचर्येण विप्रा
ब्राह्मीं वाचं परिरक्षन्ति चैव ।
मनस्विनस्तीर्थयात्रापरा ये
ते तत्र मोदन्ति ततो विमानैः ॥ ४४

प्रभासं मानसं तीर्थं पुष्कराणि महत्सरः ।
पुण्यं च नैमिषं तीर्थं बाहुदां करतोयिनीम् ॥४५
गयां हयशिरश्चैव विपाशां स्थूलवालुकाम् ।
तूष्णीं गङ्गां शनैर्गङ्गां महाह्रदमथापि च ॥ ४६
गोमतीं कौशिकीं पंपां महात्मानो धृतव्रताः ।
सरस्वतीदृषद्वत्यौ यमुनां ये तु यान्ति च ॥ ४७
तत्र ते दिव्यसंस्थाना दिव्यमाल्यधराः शिवाः ।
प्रयान्ति पुण्यगन्धाढ्या धृतराष्ट्रो न तत्र वै ४८

गौतम उवाच ।
यत्र शीतभयं नास्ति न चोष्णभयमण्वपि ।
न क्षुत्पिपासे न ग्लानिर्न दुःखं न सुखं तथा ॥
न द्वेष्यो न प्रियः कश्चिन्न बन्धुर्न रिपुस्तथा ।
न जरामरणे तत्र न पुण्यं न च पातकम् ॥ ५०
तस्मिन्विरजसि स्फीते प्रज्ञासत्त्वव्यवस्थिते ।
स्वयंभुभवने पुण्ये हस्तिनं यातयिष्यति ॥ ५१

धृतराष्ट्र उवाच ।
निर्मुक्ताः सर्वसङ्गैर्ये कृतात्मानो यतव्रताः ।
अध्यात्मयोगसंस्थानैर्युक्ताः स्वर्गगतिं गताः ॥५२
ते ब्रह्मभवनं पुण्यं प्राप्नुवन्तीह सात्त्विकाः ।
न तत्र धृतराष्ट्रस्ते शक्यो द्रष्टुं महामुने ॥ ५३

गौतम उवाच ।
रथन्तरं यत्र बृहच्च गीयते
यत्र वेदिः पुण्यजनैर्वृता च ।
यत्रोपयाति हरिभिः सोमपीथी
तत्र त्वाऽहं हस्तिनं यातयिष्ये ॥ ५४
बुध्यामि त्वां वृत्रहणं शतक्रतुं
व्यतिक्रमन्तं भुवनानि विश्वा ।
कच्चिन्न वाचा वृजिनं कदाचि-
दकार्षं ते मनसोऽभिषङ्गात् ॥ ५५

शतक्रतुरुवाच ।
मघवाऽहं लोकपथं प्रजाना-
मन्वागमं परिवादे गजस्य ।
तस्माद्भवान्प्रणतं माऽनुशास्तु
ब्रवीषि यत्तत्करवाणि सर्वम् ॥ ५६

एकोनषष्ट्यधिकशततमोऽध्यायः ॥ १५९ ॥

हस्तिन मे प्रदास्यसि इति झ. पाठः ॥ ५१ ॥

गौतम उवाच ।
श्वेतं करेणुं मम पुत्रं हि नागं
प्रियं तु मे षष्टिवर्षं तु बालम् ।
यो मे वने वसतोऽभूद्द्वितीय-
स्तमेव मे देहि सुरेन्द्र नागम् ॥ ५७
शतक्रतुरुवाच ।
अयं सुतस्ते द्विजमुख्य नाग
आघ्रायते त्वामभिवीक्षमाणः ।
पादौ च ते नासिकयोपजिघ्रते
श्रेयो ममाख्याहि नमश्च तेऽस्तु ॥ ५८
गौतम उवाच ।
शिवं सदैवेह सुरेन्द्र तुभ्यं
ध्यायामि पूजां च सदा प्रयुञ्जे ।
ममापि त्वं शक्र शिवं ददस्व
त्वया दत्तं प्रतिगृह्णामि नागम् ॥ ५९
शतक्रतुरुवाच ।
येषां वेदा निहिता वै गुहायां
मनीषिणां सत्ववतां महात्मनाम् ।
तेषां त्वयैकेन महात्मनाऽस्मि
बुद्धस्तस्मात्प्रीतिमांस्तेऽहमद्य ॥ ६०
हन्तैहि ब्राह्मण क्षिप्रं सह पुत्रेण हस्तिना ।
त्वं हि प्राप्तुं शुभाँल्लोकानह्नाय च चिराय च ६१
भीष्म उवाच
स गौतमं पुरस्कृत्य सह पुत्रेण हस्तिना
दिवमाचक्रमे वज्री सद्भिः सह दुरासदम् ॥ ६२
इदं यः शृणुयान्नित्यं यः पठेद्वा जितेन्द्रियः ।
स याति ब्रह्मणो लोकं ब्राह्मणो गौतमो यथा६३

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि एकोनषष्ट्यधिकशततमोऽध्यायः ॥ १५९ ॥

## षष्ट्यधिकशततमोऽध्यायः ॥ १६० ॥

**भीष्मेण युधिष्ठिरंप्रति विप्रवचनस्यैहिकपारत्रिकश्रेयस्साधनत्वकथनम् ॥ १ ॥ तथाऽनशनस्य महातपस्त्वकथनम् ॥ २ ॥**

युधिष्ठिर उवाच ।
दानं बहुविधाकारं शान्तिः सत्यमहिंसितम् ।
स्वदारतुष्टिश्चोक्ता ते फलं दानस्य वाऽपि यत् १
पितामहस्य विदितं किमन्यत्तपसो बलात् ।
तपसो यत्परं तेऽद्य तन्नो व्याख्यातुमर्हसि ॥ २
भीष्म उवाच ।
तपसः प्रक्षयो यावत्तावल्लोको युधिष्ठिर ।
मतं ममात्र कौन्तेय तपो नानशनात्परम् ॥ ३
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
भगीरथस्य संवादं ब्रह्मणश्च महात्मनः ॥ ४
अतीत्य सुरलोकं च गवां लोकं च भारत ।
ऋषिलोकं च सोऽगच्छद्भगीरथ इति श्रुतम् ॥ ५
तं तु दृष्ट्वा वचः प्राह ब्रह्मा राजन्भगीरथम् ।
कथं भगीरथाऽऽगास्त्वमिमं लोकं दुरासदम् ॥ ६
न हि देवा न गन्धर्वा न मनुष्या भगीरथ ।
आयान्त्यतप्ततपसः कथं वै त्वमिहागतः ॥ ७
भगीरथ उवाच ।
निश्शङ्कमन्नमददां ब्राह्मणेभ्यः
शतं सहस्राणि सदैवतानाम् ।
ब्राह्मं व्रतं नित्यमास्थाय विद्धि-
न्न त्वेवाहं तस्य फलादिहागाम् ॥ ८
दशैकरात्रान्दशपञ्चरात्रा-
नेकादशैकादशकान्क्रतूंश्च ।
ज्योतिष्टोमानां च शतं यदिष्टं
फलेन तेनापि च नागतोऽहम् ॥ ९
यच्चावसं जाह्नवीतीरनित्यः
शतं समास्तप्यमानस्तपोऽहम् ।

अहिंसितमहिंसा ॥ १ ॥ तपसः कृच्छ्रचान्द्रायणादेर्बला-दन्यत्किं बलवत्तरं विदितं न किमप्यपितु तपसस्तपसां मध्ये यत्परम् ॥ २ ॥ लोको भोग्यप्रदेशः ॥ ३ ॥ ब्रह्मलोकं च सोगच्छत् इति क. पाठः ॥५॥ एकरात्रादयः क्रतुविशेषाः॥९॥

अदां च तत्राश्वतरीसहस्रं
नारीपुरं न च तेनाहमागाम् ॥ १०
दशायुतानि चाश्वानां गोऽयुतानि च विंशतिम् ।
पुष्करेषु द्विजातिभ्यः प्रादां शतसहस्रशः ॥ ११
सुवर्णचन्द्रोत्तमधारिणीनां
कन्योत्तमानामददं सहस्रम् ।
षष्टिं सहस्राणि विभूषितानां
जाम्बूनदैराभरणैर्न तेन ॥ १२
दशार्बुदान्यददं गोसवेज्या-
स्वेकैकशो दश गा लोकनाथ
समानवत्साः पयसा समान्विताः
सुवर्णकांस्योपदुहा न तेन ॥ १३
आप्तोर्यामेषु नियतमेकैकस्मिन्दशाददम् ।
गृष्टीनां क्षीरदोग्ध्रीणां रोहिणीनां शतानि च ॥ १४
दोग्ध्रीणां वै गवां चापि प्रयुतानि दशैव ह ।
प्रादां दशगुणं ब्रह्मन्न तेनाहमिहागतः ॥ १५
वाजिनां बाह्लिजातानामयुतान्यददं दश ।
कर्काणां हेममालानां न च तेनाहमागतः ॥ १६
कोटीश्च काञ्चनस्याष्टौ प्रादां ब्रह्मन्दशान्वहम् ।
एकैकस्मिन्क्रतौ तेन फलेनाहं न चागतः ॥ १७
वाजिनां श्यामकर्णानां हरितानां पितामह ।
प्रादां हेमस्रजां ब्रह्मन्कोटीर्दश च सप्त च ॥ १८
ईषादन्तान्महाकायान्काञ्चनस्रग्विभूषितान् ।
पद्मिनो वै सहस्राणि प्रादां दश च सप्त च ॥ १९
अलंकृतानां देवेश दिव्यैः कनकभूषणैः ।
रथानां काञ्चनाङ्गानां सहस्राण्यददं दश ॥ २०
सप्त चान्यानि युक्तानि वाजिभिः समलंकृतैः ।
दक्षिणावयवाः केचिद्वेदैर्ये संप्रकीर्तिताः ॥ २१
वाजपेयेषु दशसु प्रादां तेष्वपि चाप्यहम् ।
शक्रतुल्यप्रभावाणामिज्यया विक्रमेण ह ॥ २२
सहस्रं निष्ककण्ठानामददं दक्षिणामहम् ।
विजित्य भूपतीन्सर्वानर्थैरिष्ट्वा पितामह ।
अष्टभ्यो राजसूयेभ्यो न च तेनाहमागतः ॥ २३
स्रोतश्च यावद्गङ्गायाश्छन्नमासीज्जगत्पते ।
दक्षिणाभिः प्रवृत्ताभिर्मम नागां च तत्कृते ॥ २४
वाजिनां च सहस्रे द्वे सुवर्णशतभूषिते ।
वरं ग्रामशतं चाहमेकैकस्यां तिथावदाम् ॥ २५
तपस्वी नियताहारः शममास्थाय वाग्यतः ।
दीर्घकालं हिमवति गङ्गार्थमचरं तपः ॥ २६
मूर्ध्ना हरं महादेवं प्रणम्याभ्यर्चयन्नृपः ।
न तेनाप्यहमागच्छं फलेनेह पितामह ॥ २७
शम्याक्षेपैरयजं यच्च देवा-
ञ्शतैः क्रतूनामयुतैश्चापि यच्च ।
त्रयोदशद्वादशाहैश्च देव
सपौण्डरीकैर्न च तेषां फलेन ॥ २८
अष्टौ सहस्राणि ककुद्मिनामहं
शुक्लर्षभाणामददं द्विजेभ्यः ।
एकैकं वै काञ्चनं शृङ्गमेभ्यः
पत्नीश्चैषामददं निष्ककण्ठीः ॥ २९
हिरण्यरत्ननिचयानददं रत्नपर्वतान् ।
धनधान्यैः समृद्धांश्च ग्रामाञ्शतसहस्रशः ॥ ३०
शतं शतानां गृष्टीनामददं चाप्यतन्द्रितः ।
इष्ट्वाऽनेकैर्महायज्ञैर्ब्राह्मणेभ्यो न तेन च ॥ ३१
एकादशाहैरयजं सदक्षिणै-
र्द्विर्द्वादशाहैरश्वमेधैश्च देव ।
गवां धनैः षोडशभिश्च ब्रह्मं-
स्तेषां फलेनेह न चागतोऽस्मि ॥ ३२

नारीपुरं कन्यासमूहमदाम् ॥ १० ॥ चन्द्रो भूषणविशेषः । न तेनाहमागामित्यनुवर्तते ॥ १२ ॥ एकैकशो ब्राह्मणाय दश गाः ॥ १३ ॥ आप्तोर्यामः सोमयागः ॥ १४ ॥ कर्काणां शुक्लाश्वानाम् ॥ १६ ॥ पद्मिनः पद्मचिह्नान् ॥ १९ ॥ दक्षिणारूपा यज्ञाङ्गभूता दक्षिणावयवाः ॥ २१ ॥ निष्ककण्ठानां युद्धे जितानां राज्ञां सहस्रं विप्रेभ्यो विप्रवचनाद्दक्षिणा अददं उत्सृष्टवान् ॥ २३ ॥ शम्या पृथुबुध्नः काष्ठदण्डः । स बलेनाक्षिप्तो यावद्दूरं पतति तावद्देशो यस्य वेदिकाया भवति स शम्याक्षेपोयागः । देवान् साद्यस्कानामयुतैश्चापि यत्तत् इति झ. पाठः ॥ २८ ॥ आर्कायणैः षोडशभिश्च इति झ. पाठः

निष्कैककण्ठमददं योजनायतं
तद्विस्तीर्णं काञ्चनपादपानाम् ।
वनं चूतानां रत्नविभूषितानां
नचैव तेषामागतोऽहं फलेन ॥ ३३
तुरायणं हि व्रतमप्यधृष्य-
मक्रोधनोऽकरवं त्रिंशदब्दान् ।
शतं गवामष्टशतानि चैव
दिनेदिने ह्यददं ब्राह्मणेभ्यः ॥ ३४
पयस्विनीनामथ रोहिणीनां
तथैवान्याननडुहो लोकनाथ ।
प्रादां नित्यं ब्राह्मणेभ्यः सुरेश
नेहागतस्तेन फलेन चाहम् ॥ ३५
'शम्याक्षेपेण पृथिवीं त्रिधा पर्यचरं यजन् ।'
त्रिंशदग्नीनहं ब्रह्मन्यजे यच्च नित्यदा ।
अष्टाभिः सर्वमेधैश्च नरमेधैश्च सप्तभिः ॥ ३६
दशभिर्विश्वजिद्भिश्च शतैरष्टादशोत्तरैः ।
न चैव तेषां देवेश फलेनाहमिहागमम् ॥ ३७
सरय्वां बाहुदायां च गङ्गायामथ नैमिषे ।
गवां शतानामयुतमददं न च तेन वै ॥ ३८
इन्द्रेण गुह्यं निहितं वै गुहायां
यद्भार्गवस्तपसेहाभ्यविन्दत् ।
जाज्वल्यमानमुशनस्तेजसेह
तत्साधयामासमहं वरेण्य ॥ ३९
'ब्राह्मणार्थाय कर्माणि रणं चैव करोमि यत् ।'
ततो मे ब्राह्मणास्तुष्टास्तस्मिन्कर्मणि साधिते ।
'पूजितैर्ब्राह्मणैर्नित्यं न च तेनाहमागतः ॥' ४०
सहस्रमृषयश्चासन्ये वै तत्र समागताः ।
उक्तस्तैरसि गच्छ त्वं ब्रह्मलोकमिति प्रभो ॥ ४१
प्रीतेनोक्तः सहस्रेण ब्राह्मणानामहं प्रभो ।
इमं लोकमनुप्राप्तो मा भूत्तेऽत्र विचारणा ॥ ४२
कामं यथावद्विहितं विधात्रा
पृष्टेन वाच्यं तु मया यथावत् ।
तपो हि नान्यच्चानशनान्मतं मे
नमोस्तु ते देववर प्रसीद ॥ ४३
भीष्म उवाच ।
इत्युक्तवन्तं ब्रह्मा तु राजानं स भगीरथम्
पूजयामास पूजार्हं विधिदृष्टेन कर्मणा ॥ ४४
तस्मादनशनैर्युक्तो विप्रान्पूजय नित्यदा ।
विप्राणां वचनात्सर्वं परत्रेह च सिध्यति ॥ ४५
वासोभिरन्नैर्गोभिश्च शुभैर्नैवेशिकैरपि ।
शुभैः सुरक्षणैश्चापि स्तोष्या एव द्विजास्तथा ।
एतदेव परं गुह्यमलोभेन समाचर ॥ ४६

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि षष्ट्यधिकशततमोऽध्यायः ॥ १६० ॥

## एकषष्ट्यधिकशततमोऽध्यायः ॥ १६१ ॥

भीष्मेण युधिष्ठिरंप्रत्यायुष्यानायुष्यकारणशुभाशुभकर्मप्रतिपादनम् ॥ १ ॥

युधिष्ठिर उवाच ।
शतायुरुक्तः पुरुषः शतवीर्यश्च वैदिके ।
कस्मान्म्रियन्ते पुरुषा बाला अपि पितामह ॥ १
आयुष्मान्केन भवति अल्पायुर्वाऽपि मानवः ।
केन वा लभते कीर्तिं केन वा लभते श्रियम् ॥ २
तपसा ब्रह्मचर्येण जपैर्होमैस्तथा परैः ।
जन्मना यदि वाऽचारात्तन्मे ब्रूहि पितामह ॥ ३
भीष्म उवाच ।
अत्र तेऽहं प्रवक्ष्यामि यन्मां त्वमनुपृच्छसि ।
अल्पायुर्येन भवति दीर्घायुर्येन मानवः ॥ ४

---

॥ ३२ ॥ काञ्चनमयाना वृक्षाणां चूतानां नानावर्णरत्नखचितानां वनमित्यर्थः ॥ ३३ ॥ अग्नीनग्निचयनानि ॥ ३६ ॥ गुहायां निहित गोपित गुह्यं यदनशन तपसा अभ्यविन्दत् आज्ञासीत् । उशनस्तेजसा शुक्रस्य बलेन जाज्वल्यमानम् । तच्च वाक्यशेषात्सर्वभोगत्यागात्मकमनशन सर्वभोगैर्ब्राह्मणानां संतर्पण च । साधयामासमित्यार्षम् ॥ ३९ ॥ षष्ट्यधिकशततमोऽध्यायः ॥ १६० ॥

जपैर्होमैस्तथौषधैरिति झ॰ पाठः ॥ ३ ॥

येन वा लभते कीर्तिं येन वा लभते श्रियम् ।
यथा च वर्तयन्पुरुषः श्रेयसा संप्रयुज्यते ॥ ५
आचाराल्लभते ह्यायुराचाराल्लभते श्रियम् ।
आचारात्कीर्तिमाप्नोति पुरुषः प्रेत्य चेह च ॥ ६
दुराचारो हि पुरुषो नेहायुर्विन्दते महत् ।
त्रसन्ति चास्य भूतानि तथा परिभवन्ति च ॥७
तस्मात्कुर्यादिहाचारं य इच्छेद्भूतिमात्मनः ।
अपि पापशरीरस्य आचारो हन्त्यलक्षणम् ॥ ८
आचारलक्षणो धर्मः सन्तश्चारित्रलक्षणाः ।
साधूनां च यथावृत्तमेतदाचारलक्षणम् ॥ ९
अप्यदृष्टं श्रवादेव पुरुषं धर्मचारिणम् ।
स्वानि कर्माणि कुर्वाणं तं जनाः कुर्वते प्रियम् १०
ये नास्तिका निष्क्रियाश्च गुरुशास्त्रातिलङ्घिनः ।
अधर्मज्ञा दुराचारास्ते भवन्ति गतायुषः ॥ ११
विशीला भिन्नमर्यादा नित्यं संकीर्णमैथुनाः ।
अल्पायुषो भवन्तीह नरा निरयगामिनः ॥ १२
सर्वलक्षणहीनोऽपि समुदाचारवान्नरः ।
श्रद्दधानोऽनसूयुश्च शतं वर्षाणि जीवति ॥ १३
अक्रोधनः सत्यवादी भूतानामविहिंसकः ।
अनसूयुरजिह्मश्च शतं वर्षाणि जीवति ॥ १४
लोष्ठमर्दी तृणच्छेदी नखखादी च यो नरः ।
नित्योच्छिष्टः संकुसुको नेहायुर्विन्दते महत् ॥१५
ब्राह्मे मुहूर्ते बुध्येत धर्मार्थौ चानुचिन्तयेत् ।
उत्थाय चोपतिष्ठेत पूर्वां सन्ध्यां कृताञ्जलिः ।
एवमेवापरां सन्ध्यां समुपासीत वाग्यतः ॥ १६
नेक्षेतादित्यमुद्यन्तं नास्तं यन्तं कदाचन ।
नोपसृष्टं न वारिस्थं न मध्यं नभसो गतम् ॥ १७
ऋषयो नित्यसन्ध्यत्वाद्दीर्घमायुरवाप्नुवन् ॥ १८
'सदर्भपाणिस्तत्कुर्वन्वाग्यतस्तन्मनाः शुचिः ।'
तस्मात्तिष्ठेत्सदा पूर्वां पश्चिमां चैव वाग्यतः ॥ १९
ये न पूर्वामुपासन्ते द्विजाः संध्यां न पश्चिमाम् ।
सर्वांस्तान्धार्मिको राजा शूद्रकर्माणि कारयेत् ॥२०
परदारा न गन्तव्याः सर्ववर्णेषु कर्हिचित् ।
नहीदृशमनायुष्यं लोके किंचन विद्यते ॥ २१
यादृशं पुरुषस्येह परदारोपसेवनम् ।
तादृशं विद्यते किंचिदनायुष्यं नृणामिह ॥ २२
यावन्तो रोमकूपाः स्युः स्त्रीणां गात्रेषु निर्मिताः ।
तावद्वर्षसहस्राणि नरकं पर्युपासते ॥ २३
मैत्रं प्रसाधनं स्नानमञ्जनं दन्तधावनम् ।
पूर्वाह्ण एव कुर्वीत देवतानां च पूजनम् ॥ २४
पुरीषमूत्रे नोदीक्षेन्नाधितिष्ठेत्कदाचन ।
नातिकल्यं नातिसायं न च मध्यंदिने स्थिते ।
नाज्ञातैः सह गच्छेत नैको न वृषलैः सह ॥२५
पन्था देयो ब्राह्मणाय गोभ्यो राजभ्य एव च ।
वृद्धाय भारतप्ताय गर्भिण्यै दुर्बलाय च ॥ २६
प्रदक्षिणं च कुर्वीत परिज्ञातान्वनस्पतीन् ।
चतुष्पदान्मङ्गलांश्च मान्यान्वृद्धान्द्विजानपि ॥२७
मध्यंदिने निशाकाले अर्धरात्रे च सर्वदा ।
चतुष्पथं न सेवेत उभे सन्ध्ये तथैव च ॥ २८
उपानहौ च वस्त्रं च धृतमन्यैर्न धारयेत् ।
ब्रह्मचारी च नित्यं स्यात्पादं पादेन नाक्रमेत् २९
अमावास्यां पौर्णमास्यां चतुर्दश्यां च जन्मनि ।
अष्टम्यामथ द्वादश्यां ब्रह्मचारी सदा भवेत् ॥३०
वृथा मांसं न खादेत पृष्ठमांसं तथैव च ।
आक्रोशं परिवादं च पैशुन्यं च विवर्जयेत् ॥३१
नारुन्तुदः स्यान्न नृशंसवादी
न हीनतो वरमभ्याददीत ।
ययाऽस्य वाचा पर उद्विजेत
न तां वदेद्रुशतीं पापलोक्याम् ॥ ३२
अतिवादबाणा मुखतो निःसरन्ति
यैराहतः शोचति रात्र्यहानि ।
परस्य वा मर्मसु ये पतन्ति
तान्पण्डितो नावसृजेत्परेषु ॥ ३३
संरोहत्यग्निना दग्धं वनं परशुना हतम् ।

वर्तयन् अनुतिष्ठन् ॥ ५ ॥ अलक्षण कुष्ठापस्मारादिविरुद्ध लक्षणम् ॥ ८ ॥ श्रवात् श्रवणात् । तं पुरुषम् । जनाः साधवः ॥ १० ॥ संकुसुको दुर्जन. अस्थिरश्च । नित्योच्छिष्टः सूच- कश्चेति क. थ पाठ' ॥ १५ ॥ उपसृष्ट राहुग्रस्तम् ॥ १७ ॥ उपानहौ च छत्र च इति थ. पाठः ॥ २९ ॥

वाचा दुरुक्तं बीभत्सं न संरोहति वाक्क्षतम् ३४
कर्णिनालीकनाराचान्निर्हरन्ति शरीरतः ।
वाक्शल्यस्तु न निर्हर्तुं शक्यो हृदिशयो हि सः ३५
हीनाङ्गानतिरिक्ताङ्गान्विद्याहीनान्वयोधिकान् ।
रूपद्रविणहीनांश्च सत्यहीनांश्च नाक्षिपेत् ॥ ३६
नास्तिक्यं वेदनिन्दां च परनिन्दां च कुत्सनम् ।
द्वेषस्तम्भाभिमानं च तैक्ष्ण्यं च परिवर्जयेत् ॥३७
परस्य दण्डं नोद्यच्छेत्क्रुद्धो नैनं निपातयेत् ।
अन्यत्र पुत्राच्छिष्याच्च शिक्षार्थं ताडनं स्मृतम् ॥३८
न ब्राह्मणान्परिवदेन्नक्षत्राणि न निर्दिशेत् ।
तिथिं पक्षस्य न ब्रूयात्तथाऽस्यायुर्न रिष्यते ॥३९
'अमावास्यामृते नित्यं दन्तधावनमाचरेत् ।
इतिहासपुराणानि दानं वेदं च नित्यशः ।
गायत्रीमननं नित्यं कुर्यात्सन्ध्यां समाहितः ॥'४०
कृत्वा मूत्रपुरीषे तु रथ्यामाक्रम्य वा पुनः ।
पादप्रक्षालनं कुर्यात्स्वाध्याये भोजने तथा ॥४१
त्रीणि देवाः पवित्राणि ब्राह्मणानामकल्पयन् ।
अदृष्टमद्भिर्निर्णिक्तं यच्च वाचा प्रशस्यते ॥ ४२
यावकं कृसरं मांसं शष्कुलीं पायसं तथा ।
आत्मार्थं न प्रकर्तव्यं देवार्थं तु प्रकल्पयेत् ॥४३
नित्यमग्निं परिचरेद्भिक्षां दद्याच्च नित्यदा ।
दन्तकाष्ठे च सन्ध्यायां मलोत्सर्गे च मौनगः ॥४४
न चाभ्युदितशायी स्यात्प्रायश्चित्ती तथा भवेत् ।
मातापितरमुत्थाय पूर्वमेवाभिवादयेत् ।
आचार्यमथवाऽप्यन्यं तथाऽऽयुर्विन्दते महत् ४५
वर्जयेद्दन्तकाष्ठानि वर्जनीयानि नित्यशः ।
भक्षयेच्छास्त्रदृष्टानि पर्वस्वपि विवर्जयेत् ।
उदङ्मुखश्च सततं शौचं कुर्यात्समाहितः ॥ ४६
अकृत्वा देवपूजां च नाचरेद्दन्तधावनम् ।
अकृत्वा देवपूजां च नान्यं गच्छेत्कदाचन ।
अन्यत्र तु गुरुं वृद्धं धार्मिकं वा विचक्षणम् ॥४७
अवलोक्यो न चादर्शो मलिनो बुद्धिमत्तरैः ।
न चाज्ञातां स्त्रियं गच्छेद्गर्भिणीं वा कदाचन ४८
दारसंग्रहणात्पूर्वं नाचरेन्मैथुनं बुधः ।
अन्यथा त्ववकीर्णः स्यात्प्रायश्चित्तं सदाऽऽचरेत् ॥
नोदीक्षेत्परदारांश्च रहस्येकासनो भवेत् ।
इन्द्रियाणि सदा यच्छेत्स्वप्ने शुद्धमना भवेत् ॥५०
उदक्शिरा न स्वपेत तथा प्रत्यक्शिरा न च ।
प्राक्शिरास्तु स्वपेद्विद्वांस्तथा वै दक्षिणाशिराः ५१
न भग्ने नावशीर्णे च शयने प्रस्वपीत च ।
नान्तर्धानेन संयुक्ते न च तिर्यक्कदाचन ॥ ५२
न चापि गच्छेत्कार्येण समयाद्वाऽपि नास्तिकैः ।
आसनं तु पदाऽऽकृष्य न प्रसज्जेत्तथा नरः ॥ ५३
न नग्नः कर्हिचित्स्नायान्न निशायां कदाचन ।
स्नात्वा च नावमृज्येत गात्राणि सुविचक्षणः ।
न निशायां पुनः स्नायादापद्यग्निद्विजान्तिके ॥५४
न चानुलिम्पेदस्नात्वा वासश्चापि न निर्धुनेत् ।
आर्द्र एव तु वासांसि नित्यं सेवेत मानवः ॥ ५५
स्रजश्च नावकृष्येत न बहिर्धारयीत च ।
उदक्यया च संभाषां न कुर्वीत कदाचन ॥ ५६
नोत्सृजेत पुरीषं च क्षेत्रे मार्गस्य चान्तिके ।
उभे मूत्रपुरीषे तु नाप्सु कुर्यात्कदाचन ॥ ५७
देवालयेऽथ गोवृन्दे चैत्ये सस्येषु विश्रमे ।
भोक्ष्यं भुक्त्वा क्षुतेऽध्वानं गत्वा मूत्रपुरीषयोः ।
द्विराचामेद्यथान्यायं हृद्गतं तु पिबन्नपः ॥ ५८
अन्नं बुभुक्षमाणस्तु त्रिर्मुखेन स्पृशेदपः ।
भुक्त्वा चान्नं तथैव त्रिर्द्विः पुनः परिमार्जयेत् ॥५९
प्राङ्मुखो नित्यमश्नीयाद्वाग्यतोऽन्नमकुत्सयन् ।
प्रस्कन्दयेच्च मनसा भुक्त्वा चाग्निमुपस्पृशेत् ॥६०
आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः ।
धन्यं पश्चान्मुखो भुङ्क्ते ऋतं भुङ्क्ते उदङ्मुखः ॥ ६१
'अग्रासनो जितक्रोधो बालपूर्वस्त्वलङ्कृतः ।

---

न रिष्यते न हिंस्यते ॥ ३९ ॥ त्रीणि भोज्यानि । अदृष्टं शूद्रोदक्यादिभिः ॥४२॥ अज्ञातामृतुमतीत्वेन कामुकत्वेन वा ॥४८॥ अन्तर्धाने अत्यन्तमन्धकारे । संयुक्ते इतरेण स्त्र्यादिना ॥५२॥ स्नात्वा वासो न निर्धुनेत् इति । न चैवार्द्राणि वासांसि इति च. ज्ञ. पाठः ॥ ५२ ॥ प्रस्कन्दयेदन्नशेषं किञ्चित्त्यजेत् । भुक्त्वा च मनसाग्निमुपस्पृशेत् ॥ ६० ॥ ऋतं निःश्रेयसमिच्छन्निति शेषः ॥ ६१ ॥

घृताहुतिविशुद्धान्नं हुताग्निश्च क्षिपन्ग्रसेत् ॥' ६२
अग्निमालभ्य तोयेन सर्वान्प्राणानुपस्पृशेत् ।
गात्राणि चैव सर्वाणि नाभिं पाणितले तथा ॥ ६३
नाधितिष्ठेत्तुषं जातु केशभस्मकपालिकाः ।
अन्यस्य चाप्यवस्नातं दूरतः परिवर्जयेत् ॥ ६४
शान्तिहोमांश्च कुर्वीत सावित्राणि च धारयेत् ।
निषण्णश्चापि खादेत न तु गच्छन्कदाचन ॥ ६५
मूत्रं नोत्तिष्ठता कार्यं न भस्मनि न गोव्रजे ।
आर्द्रपादस्तु भुञ्जीत नार्द्रपादस्तु संविशेत् ॥ ६६
आर्द्रपादस्तु भुञ्जानो वर्षाणां जीवते शतम् ।
त्रीणि तेजांसि नोच्छिष्ट आलभेत कदाचन ।
अग्निं गां ब्राह्मणं चैव तथा ह्यायुर्न रिष्यते ॥ ६७
त्रीणि ज्योतींषि नोच्छिष्ट उदीक्षेत कदाचन ।
सूर्याचन्द्रमसौ चैव नक्षत्राणि च सर्वशः ॥ ६८
ऊर्ध्वं प्राणा ह्युत्क्रमन्ति यूनः स्थविर आगते ।
प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते ॥ ६९
अभिवादयीत वृद्धांश्च दद्याच्चैवासनं स्वयम् ।
कृताञ्जलिरुपासीत गच्छन्तं पृष्ठतोऽन्वियात् ॥ ७०
न चासीतासने भिन्ने भिन्नकांस्यं च वर्जयेत् ।
नैकवस्त्रेण भोक्तव्यं न नग्नः स्नातुमर्हति ॥ ७१
स्वप्तव्यं नैव नग्नेन न चोच्छिष्टोपि संविशेत् ।
उच्छिष्टो न स्पृशेच्छीर्षं सर्वे प्राणास्तदाश्रयाः ॥ ७२
केशग्रहं प्रहारांश्च शिरस्येतान्विवर्जयेत् ।
न संहताभ्यां पाणिभ्यां कण्डूयेदात्मनः शिरः ।
न चाभीक्ष्णं शिरःस्नायात्तथा स्यायुर्न रिष्यते ७३
शिरःस्नातस्तु तैलैश्च नाङ्गं किंचिदपि स्पृशेत् ।
तिलपिष्टं न चाश्नीयाद्गतसर्वरसं तथा ॥ ७४
नाध्यापयेत्तथोच्छिष्टो नाधीयीत कदाचन ।
वाते च पूतिगन्धे च मनसाऽपि न चिन्तयेत् ७५
अत्र गाथा यमोद्गीताः कीर्तयन्ति पुराविदः ।
आयुरस्य निकृन्तामि प्रज्ञामस्याददे तथा ॥ ७६
उच्छिष्टो यः प्राद्रवति स्वाध्यायं चाधिगच्छति ।
यश्चानध्यायकालेऽपि मोहादभ्यस्यति द्विजः ७७
तस्य वेदः प्रणश्येत आयुश्च परिहीयते ।
तस्माद्युक्तो ह्यनध्याये नाधीयीत कदाचन ॥ ७८
प्रत्यादित्यं प्रत्यनलं प्रतिगां च प्रतिद्विजान् ।
ये मेहन्ति च पन्थानं ते भवन्ति गतायुषः ॥ ७९
उभे मूत्रपुरीषे तु दिवा कुर्यादुदङ्मुखः ।
दक्षिणाभिमुखो रात्रौ तथा ह्यायुर्न रिष्यते ॥ ८०
त्रीन्कृशान्नावजानीयाद्दीर्घमायुर्जिजीविषुः ।
ब्राह्मणं क्षत्रियं सर्पं सर्वे ह्याशीविषास्त्रयः ॥ ८१
दहत्याशीविषः क्रुद्धो यावत्पश्यति चक्षुषा ।
क्षत्रियोपि दहेत्क्रुद्धो यावत्स्पृशति तेजसा ॥ ८२
ब्राह्मणस्तु कुलं हन्याद्ध्यानेनावेक्षितेन च ।
तस्मादेतत्त्रयं यत्नादुपसेवेत पण्डितः ॥ ८३
गुरुणा वैरनिर्बन्धो न कर्तव्यः कदाचन ।
अनुमान्यः प्रसाद्यश्च गुरुः क्रुद्धो युधिष्ठिर ॥ ८४
सम्यङ्मिथ्याप्रवृत्तेऽपि वर्तितव्यं गुराविह ।
गुरुनिन्दा दहत्यायुर्मनुष्याणां न संशयः ॥ ८५
दूरादावसथान्मूत्रं दूरात्पादावसेचनम् ।
उच्छिष्टोत्सर्जनं चैव दूरे कार्यं हितैषिणा ॥ ८६
रक्तमाल्यं न धार्यं स्याच्छुक्लं धार्यं तु पण्डितैः ।
वर्जयित्वा तु कमलं तथा कुवलयं प्रभो ॥ ८७
रक्तं शिरसि धार्यं तु तथा वानेयमित्यपि ।
काञ्चनीयाऽपि माला या न सा दुष्यति कर्हिचित् ॥
स्नातस्य वर्णकं नित्यमार्द्रं दद्याद्विशांपते ॥ ८९
विपर्ययं न कुर्वीत वाससो बुद्धिमान्नरः ।
तथा नान्यधृतं धार्यं न चातिविकृतं तथा ॥ ९०
अन्यदेव भवेद्वासः शयनीये नरोत्तम ।
अन्यद्रथ्यासु देवानामर्चायामन्यदेव हि ॥ ९१

---

प्राणान्नासादीन् ऊर्ध्वंच्छिद्राणि ॥ ६३ ॥ अवस्नात स्नानजलं । अन्यस्य चाप्युपस्थानं दूरतः परिवर्जयेत् इति क. थ. ध. पाठः ॥ ६४ ॥ सावित्राणि मन्त्रविशेषान् । शान्तिहोमांश्च कुर्वीत पवित्राणि च कारयेत् इति क. थ. ध. पाठः ॥ ६५ ॥ नरिष्यते हिंस्यते ॥ ७३ ॥ शिरोभ्यक्तेन तैलेनेति क. थ. ध. पाठः ॥ ७४ ॥ न चिन्तयेत् वेदम् ॥ ७५ ॥ प्रजास्तस्याददे तथा इति झ. पाठः ॥ ७६ ॥ मिथ्याप्रवृत्तेपि सम्यग्वर्तितव्यम् ॥ ८५ ॥ विपर्ययमौत्तराधर्यम् । अपदशा दशाहीनम् । न चापदशमेव चेति झ. पाठः ॥ ९० ॥

प्रियङ्गुचन्दनाभ्यां च बिल्वेन स्थगरेण च ।
पृथगेवानुलिम्पेन केसरेण च बुद्धिमान् ॥ ९२
उपवासं च कुर्वीत स्नातः शुचिरलंकृतः ।
'नोपवासं वृथा कुर्याद्धनं नापहरेदिह ॥' ९३
पर्वकालेषु सर्वेषु ब्रह्मचारी सदा भवेत् ।
समानमेकपात्रे तु भुञ्जेन्नान्नं जनेश्वर ॥ ९४
नावलीढमवज्ञातमाघ्रातं भक्षयेदपि ।
तथा नोद्धृतसाराणि प्रेक्षतामप्रदाय च ॥ ९५
नासंनिविष्टो मेधावी नाशुचिर्न च सत्सु च ।
प्रतिषिद्धान्न धर्मेषु भक्ष्यान्भुञ्जीत पृष्ठतः ॥ ९६
पिप्पलं च वटं चैव शणशाकं तथैव च ।
उदुम्बरं न खादेच्च भवार्थी पुरुषो नृप ॥ ९७
आजं गव्यं च यन्मांसं मायूरं चैव वर्जयेत् ।
वर्जयेच्छुष्कमांसं च तथा पर्युषितं च यत् ॥९८
न पाणौ लवणं विद्वान्प्राश्नीयान्न च रात्रिषु ।
दधिसक्तून्न दोषायां पिबेन्मधु च नित्यशः ॥९९
सायं प्रातश्च भुञ्जीत नान्तराले समाहितः ।
वालेन तु न भुञ्जीत परश्राद्धं तथैव च ॥ १००
वाग्यतो नैकवस्त्रश्च नासंविष्टः कदाचन ।
भूमौ सदैव नाश्नीयान्नाशौचं न च शब्दवत्१०१
तोयपूर्वं प्रदायान्नमतिथिभ्यो विशांपते ।
पश्चाद्भुञ्जीत मेधावी न चाप्यन्यमना नरः ॥१०२
समानमेकपङ्क्त्यां तु भोज्यमन्नं नरेश्वर ।
विषं हालाहलं भुङ्क्ते योऽप्रदाय सुहृज्जने ॥ १०३
पानीयं पायसं सक्तून्दधि सर्पिर्मधून्यपि ।
निरस्य शेषमन्येषां न प्रदेयं तु कस्यचित् ॥ १०४
भुञ्जानो मनुजव्याघ्र नैव शङ्कां समाचरेत् ।
दधि चाप्यनु पानं वै न कर्तव्यं भवार्थिना ॥१०५
आचम्य चैव हस्तेन परिस्राव्य तथोदकम् ।
अङ्गुष्ठं चरणस्याथ दक्षिणस्यावसेचयेत् ॥ १०६

पाणिं मूर्ध्नि समाधाय स्पृष्ट्वा चाग्निं समाहितः ।
ज्ञातिश्रैष्ठ्यमवाप्नोति प्रयोगकुशलो नरः ॥ १०७
अद्भिः प्राणान्समालभ्य नाभिं पाणितले तथा ।
स्पृशंश्चैव प्रतिष्ठेत न चाप्यार्द्रेण पाणिना ॥१०८
अङ्गुष्ठमूलस्य तले ब्राह्मं तीर्थमुदाहृतम् ।
कनिष्ठिकायाः पश्चात्तु देवतीर्थमिहोच्यते ॥ १०९
अङ्गुष्ठस्य च यन्मध्यं प्रदेशिन्याश्च भारत ।
तेन पित्र्याणि कुर्वीत स्पृष्ट्वाऽऽपो न्यायतः सदा ॥
परापवादं न ब्रूयान्नाप्रियं च कदाचन ।
न मन्युः कश्चिदुत्पाद्यः पुरुषेण भवार्थिना ॥ १११
पतितैस्तु कथां नेच्छेद्दर्शनं च विवर्जयेत् ।
संसर्गं च न गच्छेत तथाऽऽयुर्विन्दते महत् ॥ ११२
न दिवा मैथुनं गच्छेन्न कन्यां न च बन्धकीम् ।
न चास्नातां स्त्रियं गच्छेत्तथाऽऽयुर्विन्दते महत्११३
स्वेस्वे तीर्थे समाचम्य कार्ये समुपकल्पिते ।
त्रिः पीत्वाऽऽपो द्विः प्रमृज्य कृतशौचो भवेन्नरः ॥
इन्द्रियाणि सकृत्स्पृश्य त्रिरभ्युक्ष्य च मानवः ।
कुर्वीत पित्र्यं दैवं च वेददृष्टेन कर्मणा ॥ ११५
ब्राह्मणार्थे च यच्छौचं तच्च मे शृणु कौरव ।
प्रवृत्तं चाहितं चोक्त्वा बहुभोजनवत्तदा ॥ ११६
सर्वशौचेषु ब्राह्मेण तीर्थेन समुपस्पृशेत् ।
निष्ठीव्य तु तथा क्षुत्वा स्पृश्यापो हि शुचिर्भवेत् ॥
निष्ठीवने मैथुने च क्षुते अक्ष्याविमोचने ।
उदक्या दर्शने तद्वन्नग्नस्याचमनं स्मृतम् ।
स्पृशेत्कर्णं सप्रणवं सूर्यमीक्षेत्सदा तदा ॥ ११८
वृद्धो ज्ञातिस्तथा मित्रमनाथा च स्वसा गुरुः ।
कुलीनः पण्डित इति रक्ष्या निःस्वाः स्वशक्तितः ।
गृहे वासयितव्यास्ते धन्यमायुष्यमेव च ॥ ११९
गृहे पारावता धार्याः शुकाश्च सहशारिकाः ।
'देवताप्रतिमाऽऽदर्शश्चन्दनाः पुष्पवल्लिकाः १२०

---

उपवासं ब्रह्मचर्यम् ॥ ९३ ॥ धर्मेषु श्राद्धादिषु ॥९६॥ वालेन केशेन उपलक्षितम् । परश्राद्ध शत्रुश्राद्धम् ॥ १०० ॥ निरस्य पानीयादीन्विहाय । अन्येषां भक्षाणां शेषमन्यस्मै न देयम् ॥ १०४ ॥ अधिक तोयपान तु न कर्तव्य इति ड. पाठः । शङ्का जीर्यति न वेति । दधीति तक्र त्वनुपान कर्तव्यमेव । यथेष्ट भुक्त्व मासैपीस्तक्र सलवणं पिबेति तस्य दृष्टार्थत्वोक्तेः ॥ १०५ ॥ प्राणान्नासादीन् ॥ १०८ ॥ नच वर्धकीम् इति ड. थ. ध. पाठः । नच नर्तकीम् इति क. पाठः ॥ ११३ ॥

शुद्धं जलं सुवर्णं च रजतं गृहमङ्गलम् ।'
गृहेष्वेते न पापाय यथा वै तैलपायिकाः ॥१२१
उद्दीपकाश्च गृध्राश्च कपोता भ्रमरास्तथा ।
निविशेयुर्यदा तत्र शान्तिमेव तदाऽऽचरेत् १२२
अमङ्गल्यः सतां शापस्तथाऽऽक्रोशो महात्मनाम् ।
महात्मनोतिगुह्यानि न वक्तव्यानि कर्हिचित् १२३
अगम्याश्च न गच्छेत राज्ञः पत्नीं सखीस्तथा ।
वैद्यानां बालवृद्धानां भृत्यानां च युधिष्ठिर १२४
बन्धूनां ब्राह्मणानां च तथा शारणिकस्य च ।
संबन्धिनां च राजेन्द्र तथाऽऽयुर्विन्दते महत् ॥
ब्राह्मणस्थपतिभ्यां च निर्मितं यन्निवेशनम् ।
तदा वसेत्सदा प्राज्ञो भवार्थी मनुजेश्वर ॥ १२६
सन्ध्यायां न स्वपेद्राजन्विद्यां न च समाचरेत् ।
न भुञ्जीत च मेधावी तथाऽऽयुर्विन्दते महत् १२७
नक्तं न कुर्यात्पित्र्याणि नक्तं चैव प्रसाधनम् ।
पानीयस्य क्रिया नक्तं न कार्या भूतिमिच्छता ॥
वर्जनीयाश्चैव नित्यं सक्तवो निशि भारत ।
शेषाणि चावदातानि पानीयं चापि भोजने १२९
सौहित्यं न च कर्तव्यं रात्रौ न च समाचरेत् ।
'न भुक्त्वा मैथुनं गच्छेन्न धावेन्नातिहासकम् ।'
द्विजच्छेदं न कुर्वीत भुक्त्वा न च समाचरेत् १३०
महाकुले प्रसूतां च प्रशस्तां लक्षणैस्तथा ।
वयसाऽवरां सुनक्षत्रां कन्यामावोढुमर्हति ॥१३१
अपत्यमुत्पाद्य ततः प्रतिष्ठाप्य कुलं तथा ।
पुत्राः प्रदेया ज्ञातेषु कुलधर्मेषु भारत ॥ १३२
कन्या चोत्पाद्य दातव्या कुलपुत्राय धीमते ।
पुत्रा निवेश्याश्च कुलाद्भृत्या लभ्याश्च भारत १३३
शिरःस्नातोथ कुर्वीत दैवं पित्र्यमथापि च १३४
'तैलं जन्मदिनेऽष्टम्यां चतुर्दश्यां च पर्वसु ।'
नक्षत्रे न च कुर्वीत यस्मिञ्जातो भवेन्नरः ।
न प्रोष्ठपदयोः कार्यं तथाऽऽग्नेये च भारत १३५
दारुणेषु च सर्वेषु प्रत्यरिं च विवर्जयेत् ।
ज्योतिषे यानि चोक्तानि तानि सर्वाणि वर्जयेत् ॥
प्राङ्मुखः श्मश्रुकर्माणि कारयेत्सुसमाहितः ।
उदङ्मुखो वा राजेन्द्र तथाऽऽयुर्विन्दते महत् १३७
'सामुद्रेणाम्भसा स्नानं क्षौरं श्राद्धेषु भोजनम् ।
अन्तर्वत्नीपतिः कुर्वन्न पुत्रफलमश्नुते ॥　१३८
सतां गुरूणां वृद्धानां कुलस्त्रीणां विशेषतः ।'
परिवादं न च ब्रूयात्परेषामात्मनस्तथा ।
परिवादो ह्यधर्माय प्रोच्यते भरतर्षभ ॥　१३९
वर्जयेद्व्यङ्गिनीं नारीं तथा कन्यां नरोत्तम ।
समार्षां व्यङ्गिकां चैव मातुः सकुलजां तथा १४०
वृद्धां प्रव्रजितां चैव तथैव च पतिव्रताम् ।
तथा निकृष्टवर्णां च वर्णोत्कृष्टां च वर्जयेत् १४१
अयोनिं च वियोनिं च न गच्छेत विचक्षणः ।
पिङ्गलां कुष्ठिनीं नारीं न त्वमुद्वोढुमर्हसि ॥ १४२
अपस्मारिकुले जातां निहीनां चापि वर्जयेत् ।
श्वित्रिणां च कुले जातां क्षयिणां मनुजेश्वर १४३
'सुरोमशामतिस्थूलां कन्यां मातृपितृस्थिताम् ।
अलज्जां भ्रातृजां दुष्टां वर्जयेद्रक्तकेशिनीम् ॥' १४४
लक्षणैरन्विता या च प्रशस्ता या च लक्षणैः ।
मनोज्ञां दर्शनीयां च तां भवान्वोढुमर्हति ॥१४५
महाकुले निवेष्टव्यं सदृशे वा युधिष्ठिर ।
अवरा पतिता चैव न ग्राह्या भूतिमिच्छता १४६
अग्नीनुत्पाद्य यत्नेन क्रियाः सुविहिताश्च याः ।
वेदे च ब्राह्मणैः प्रोक्तास्ताश्च सर्वाः समाचरेत् ॥
न चेर्ष्या स्त्रीषु कर्तव्या रक्ष्या दाराश्च सर्वशः ।
अनायुष्या भवेदीर्ष्या तस्मादीर्ष्यां विवर्जयेत् १४८

एते तैलपायिकादिवन्न पापाय । अभ्युदयायेत्यर्थः । पारावतादयः सर्वे पक्षिविशेषा एव ॥ १२१ ॥ शारणिकस्य रक्षणार्थिनः । तथा नागरिकस्य चेति ध. पाठः ॥ १२५ ॥ प्रसाधन केशाना संस्कारादिकम् । पानीयस्य क्रिया स्नानं न नक्त स्नायादिति गृहे रात्रौ शिरःस्नाननिषेधः ॥ १२८ ॥ पुत्राः प्रदेया ज्ञानेष्विति झ. पाठः । ज्ञानेषु बहुज्ञाननिमित्तं पुत्रा देया विद्वत्सु समर्पणीयाः ॥ १३२ ॥ कुलात्सत्कुलसंबन्धेन । निवेश्या विवाह्याः । लभ्या लम्भनीयाः ॥ १३३ ॥ तैलाभ्यञ्जनमष्टम्यामिति ड. थ. पाठः । आग्नेये कृत्तिकायाम् ॥१३५॥ स्वनक्षत्रादिदिननक्षत्र यावद्गणयित्वा नवभिर्भागे हृते पञ्चमी तारा प्रत्यरिः ॥ १३६ ॥ व्यङ्गिनीं न्यूनाङ्गीम् । व्यङ्गिकां विरुद्धाङ्गेनाधिकेन युक्ताम् । समार्षां समानप्रवराम् ॥ १४० ॥ अयोनिं अज्ञातकुलाम् । वियोनिं हीनकुलाम् ॥ १४२ ॥

[redacted]



अनायुष्यं दिवा स्वप्नं तथाऽभ्युदितशायिता ।
प्रातर्निशायां च तथा ये चोच्छिष्टा भवन्ति च ॥
पारदार्यमनायुष्यं नापितोच्छिष्टता तथा ।
यत्नतो वै न कर्तव्यमत्याशश्चैव भारत ॥ १५०
सन्ध्यां न भुञ्ज्यान्न स्नायेन्न पुरीषं समुत्सृजेत् ।
प्रयतश्च भवेत्तस्यां न च किंचित्समाचरेत् ॥१५१
ब्राह्मणान्पूजयेच्चापि तथा स्नात्वा नराधिप ।
देवांश्च प्रणमेत्स्नातो गुरूंश्चाप्यभिवादयेत् ॥१५२
अनिमन्त्रितो न गच्छेत यज्ञं गच्छेत दर्शकः ।
अनर्चिते ह्यनायुष्यं गमनं तत्र भारत ॥ १५३
न चैकेन परिव्रज्यं न गन्तव्यं तथा निशि ।
'नानापदि परस्यान्नमनिमन्त्रितमाहरेत् ॥ १५४
एकोद्दिष्टं न भुञ्जीत प्रथमं तु विशेषतः ।
सपिण्डीकरणं वर्ज्यं सविधानं च मासिकम् ॥१५५
अनागतायां सन्ध्यायां पश्चिमायां गृहे वसेत् ॥
मातुः पितुर्गुरूणां च कार्यमेवानुशासनम् ।
हितं चाप्यहितं चापि न विचार्यं नरर्षभ ॥१५७
'क्षत्रियस्तु विशेषेण धनुर्वेदं समभ्यसेत् ।'
धनुर्वेदे च वेदे च यत्नः कार्यो नराधिप ॥१५८
हस्तिपृष्ठेऽश्वपृष्ठे च रथचर्यासु चैव ह ।
यत्नवान्भव राजेन्द्र यत्नवान्सुखमेधते ॥ १५९
अप्रधृष्यश्च शत्रूणां भृत्यानां स्वजनस्य च ।
प्रजापालनयुक्तश्च नारतिं लभते क्वचित् ॥ १६०
युक्तिशास्त्रं च ते ज्ञेयं शब्दशास्त्रं च भारत ।
गान्धर्वशास्त्रं च कलाः परिज्ञेया नराधिप १६१
पुराणमितिहासाश्च तथाऽऽख्यानानि यानि च ।
महात्मनां च चरितं श्रोतव्यं नित्यमेव ते ॥१६२
'मान्यानां माननं कुर्यान्निन्द्यानां निन्दनं तथा ।
गोब्राह्मणार्थे युध्येत प्राणानपि परित्यजेत् ॥१६३
न स्त्रीषु सज्जेद्द्रष्टव्यं शक्त्या दानरुचिर्भवेत् ।
न ब्राह्मणान्परिभवेत्कार्पण्यं ब्राह्मणैर्व्रतम् ।
पतितान्नाभिभाषेत नाह्वयेत रजस्वलाम् ॥'१६४
पत्नीं रजस्वलां चैव नाभिगच्छेन्न चाह्वयेत् ।
स्नातां चतुर्थे दिवसे रात्रौ गच्छेद्विचक्षणः १६५
पञ्चमे दिवसे नारी षष्ठेऽहनि पुमान्भवेत् ।
'आषोडशादृतुर्मुख्यः पुत्रजन्मनि शब्दितः'१६६
एतेन विधिना पत्नीमुपगच्छेत पण्डितः ।
ज्ञातिसंबन्धिमित्राणि पूजनीयानि सर्वशः १६७
यष्टव्यं च यथाशक्ति यज्ञैर्विविधदक्षिणैः ।
अत ऊर्ध्वमरण्यं च सेवितव्यं नराधिप ॥ १६८
एष ते लक्षणोद्देश आयुष्याणां प्रकीर्तितः ।
शेषस्त्रैविद्यवृद्धेभ्यः प्रत्याहार्यो युधिष्ठिर ॥ १६९
आचारो भूतिजनन आचारः कीर्तिवर्धनः ।
आचाराद्वर्धते ह्यायुराचारो हन्त्यलक्षणम् ॥ १७०
आगमानां हि सर्वेषामाचारः श्रेष्ठ उच्यते ।
आचारप्रभवो धर्मो धर्मादायुर्विवर्धते ॥ १७१
एतद्यशस्यमायुष्यं स्वर्ग्यं स्वस्त्ययनं महत् ।
अनुकम्प्य सर्ववर्णान्ब्रह्मणा समुदाहृतम् ॥ १७२
य इदं शृणुयान्नित्यं यश्चापि परिकीर्तयेत् ।
स शुभान्प्राप्नुयाल्लोकान्सदाचारपरो नृप ॥ १७३

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि एकषष्ट्यधिकशततमोऽध्यायः ॥ १६१ ॥

## द्विषष्ट्यधिकशततमोऽध्यायः ॥ १६२ ॥

भीष्मेण युधिष्ठिरंप्रति ज्येष्ठकनिष्ठयोः परस्परस्मिन्वर्तनप्रकारादिकथनम् ॥ १ ॥

उवाच ।
कथं ज्येष्ठः कनिष्ठेषु वर्तेत भरतर्षभ ।
कनिष्ठाश्च यथा ज्येष्ठे वर्तेरंस्तद्ब्रवीहि मे ॥ १

भीष्म उवाच ।
ज्येष्ठवत्तात वर्तस्व ज्येष्ठोसि हि तथा भवान् ।
गुरोर्गरीयसी वृत्तिर्या च शिष्यस्य भारत ॥ २

---

नापितोच्छिष्टता श्मश्रुकर्मोत्तरमस्नातता ॥ १५० ॥ दर्शको द्रष्टा ॥ १५३ ॥ परिव्रज्य देशान्तरे गन्तव्यम् ॥ १५४ ॥ मातुः पितुश्च पुत्राणां कार्यमिति थ. पाठः ॥ १५७ ॥

आयुष्याणामायुष्कराणां कर्मणाम् । उद्देशः संक्षेपः ॥ १६९ ॥ एकषष्ट्यधिकशततमोऽध्यायः ॥ १६१ ॥

या च शिष्यस्य गुरौ वृत्तिस्तां वर्तस्व ॥ २ ॥

न गुरावकृतप्रज्ञे शक्यं शिष्येण वर्तितुम् ।
गुरौ हि सदृशी वृत्तिर्यथा शिष्यस्य भारत ॥ ३
अन्धः स्यादन्धवेलायां जडः स्यादपि वा बुधः ।
परिहारेण तद्ब्रूयाद्यस्तेषां स्याद्व्यतिक्रमः ॥ ४
प्रत्यक्षं भिन्नहृदया भेदयेयुर्यथाऽहिताः ।
'श्रियाऽभितप्तास्तद्भेदान्नभिन्नाः स्युः समाहिताः'
श्रियाऽभितप्ताः कौन्तेय भेदकामास्तथाऽरयः ॥५
ज्येष्ठः कुलं वर्धयति विनाशयति वा पुनः ।
हन्ति सर्वमपि ज्येष्ठः प्रायो दुर्विनयादिह ॥ ६
अथ यो विनिकुर्वीत ज्येष्ठो भ्राता यवीयसः ।
अज्येष्ठः स्यादभागश्च नियम्यो राजभिश्च सः ॥ ७
निकृती हि नरो लोकान्पापान्गच्छत्यसंशयम्
विफलं तस्य पुत्रत्वं मोघं जनयितुः स्मृतम् ॥ ८
पित्रोरनर्थाय कुले जायते पापपूरुषः ।
अकीर्तिं जनयत्येव कीर्तिमन्तर्दधाति च ॥ ९
सर्वे चापि विकर्मस्था भागं नार्हन्ति सोदराः ।
ज्येष्ठोऽपि दुर्विनीतस्तु कनिष्ठस्तु विशेषतः ।
नाप्रदाय कनिष्ठेभ्यो ज्येष्ठः कुर्वीत वेतनम् ॥ १०
अनुजस्य पितुर्दायो जङ्घाश्रमफलोऽध्वगः ।
स्वयमीहेत लब्धं तु नाकामो दातुमर्हति ॥ ११
भ्रातॄणामविभक्तानामुत्थानमपि चेत्सह ।
न पुत्रभागं विषमं पिता दद्यात्कदाचन ॥ १२
न ज्येष्ठो वाऽवमन्येत दुष्कृतः सुकृतोऽपि वा ।
गुरूणामपराधो हि शक्यः क्षन्तव्य एव च ॥ १३
यदि स्त्री यद्यवरजः श्रेयः पश्येत्तदाचरेत् ।
धर्मार्थः श्रेय इत्याहुस्त्रयो ज्ञाता विधायकाः ॥१४
दशाचार्यानुपाध्याय उपाध्यायान्पिता दश ।
दश चैव पितॄन्माता सर्वां वा पृथिवीमपि ।
गौरवेणाभिभवति नास्ति मातृसमो गुरुः ॥ १५
माता गरीयसी यच्च तेनैतां मन्यते गुरुम्
ज्येष्ठो भ्राता पितृसमो मृते पितरि भारत ॥ १६
स ह्येषां वृत्तिदाता स्यात्स चैतान्प्रतिपालयेत् ।
कनिष्ठास्तं नमस्येरन्सर्वे छन्दानुवर्तिनः ॥ १७
तमेव चोपजीवेरन्यथैव पितरं तथा ।
शरीरमेतौ सृजतः पिता माता च भारत ॥ १८
आचार्यशिष्टा या जातिः सा सत्या साऽजरामरा ।
ज्येष्ठा मातृसमा चापि भगिनी भरतर्षभ ।
भ्रातुर्भार्या च तद्वत्स्याद्यस्या बाल्ये स्तनं पिबेत् ॥

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि द्विषष्ट्यधिकशततमोऽध्यायः ॥ १६२ ॥

## त्रिषष्ट्यधिकशततमोऽध्यायः ॥ १६३ ॥

भीष्मेण युधिष्ठिरंप्रति पक्षमासोपवासफलप्रतिपादकाङ्गिरोवचनानुवादः ॥ १ ॥

युधिष्ठिर उवाच ।
सर्वेषामेव वर्णानां म्लेच्छानां च पितामह ।
उपवासे मतिरियं कारणं च न विद्महे ॥ १
ब्रह्मक्षत्रेण नियमाः कर्तव्या इति नः श्रुतम् ।
उपवासे कथं तेषां कृतमस्ति पितामह ॥ २
नियमांश्चोपवासांश्च सर्वेषां ब्रूहि पार्थिव ।
आप्नोति कां गतिं तात उपवासपरायणः ॥ ३
उपवासः परं पुण्यं पवित्रमपि चोत्तमम् ।
उपोष्येह नरश्रेष्ठ किं फलं प्रतिपद्यते ॥ ४
अधर्मान्मुच्यते केन धर्ममाप्नोति वा कथम् ।
स्वर्गं पुण्यं च लभते कथं भरतसत्तम ॥ ५
उपोष्य चापि किं तेन प्रयोज्यं स्यान्नराधिप ।
धर्मेण च सुखानर्थाँल्लभेद्येन ब्रवीहि मे ॥ ६
वैशंपायन उवाच ।
एवं ब्रुवाणं कौन्तेयं धर्मज्ञं धर्मतत्त्ववित् ।
धर्मपुत्रमिदं वाक्यं भीष्मः शान्तनवोऽब्रवीत् ॥७

तेषां गुरूणाम् ॥ ४ ॥ यवीयसः कनिष्ठान् ॥ ७ ॥ विदुलस्येव तत्पुण्य मोघमिति झ. पाठः ॥ ८ ॥ ज्येष्ठः कुर्वीत यौतकमिति झ. पाठः ॥ १० ॥ जङ्घाश्रम एव फलं धन यस्य । अध्वगः प्रवासी । अनुपघ्नन्पितुर्दायं इति झ. पाठः ॥ ११ ॥ उत्थानं भोजनादौ विभागे वा ॥ १२ ॥ यदि स्त्री यदि वा कनिष्ठो दुष्कृतस्तथापि तस्य श्रेय आचरेत् ॥ १४ ॥ द्विषष्ट्यधिकशततमोऽध्यायः ॥ १६२ ॥

इदं खलु महाराज श्रुतमासीत्पुरातनम् ।
उपवासविधौ श्रेष्ठा गुणा ये भरतर्षभ ॥ ८
प्राजापत्यमाङ्गिरसं पृष्टवानसि भारत ।
यथा मां त्वं तथैवाहं पृष्टवांस्तं तपोधनम् ॥ ९
प्रश्नमेतं मया पृष्टो भगवानग्निसंभवः ।
उपवासविधिं पुण्यमाचष्ट भरतर्षभ ॥ १०
अङ्गिरा उवाच ।
ब्रह्मक्षत्रे त्रिरात्रं तु विहितं कुरुनन्दन ।
द्विस्त्रिरात्रमथैकाहं निर्दिष्टं पुरुषर्षभ ॥ ११
वैश्याः शूद्राश्च यन्मोहादुपवासं प्रकुर्वते ।
त्रिरात्रं वा द्विरात्रं वा तयोर्व्युष्टिर्न विद्यते ॥१२
चतुर्थभक्तक्षपणं वैश्ये शूद्रे विधीयते ।
त्रिरात्रं न तु धर्मज्ञैर्विहितं ब्रह्मवादिभिः ॥ १३
पञ्चम्यां वाऽपि षष्ठ्यां च पौर्णमास्यां च भारत ।
उपोष्य एकभक्तेन नियतात्मा जितेन्द्रियः ॥१४
क्षमावान्रूपसंपन्नः सुरभिश्चैव जायते ।
नानपत्यो भवेत्प्राज्ञो दरिद्रो वा कदाचन ॥ १५
यजिष्णुः पञ्चमीं षष्ठीं कुले भोजयते द्विजान् ।
अष्टमीमथ कौरव्य कृष्णपक्षे चतुर्दशीम् ।
उपोष्य व्याधिरहितो वीर्यवानभिजायते ॥ १६
मार्गशीर्षं तु वै मासमेकभक्तेन यः क्षिपेत् ।
भोजयेच्च द्विजाञ्शक्त्या स मुच्येद्व्याधिकिल्बिषैः१७
सर्वकल्याणसंपूर्णः सर्वौषधिसमन्वितः ।
कृषिभागी बहुधनो बहुधान्यश्च जायते ॥ १८
पौषमासं तु कौन्तेय भक्तेनैकेन यः क्षिपेत् ।
सुभगो दर्शनीयश्च यशोभागी च जायते ॥ १९
पितृभक्तो माघमासं यः क्षिपेदेकभोजनः ।
श्रीमत्कुले ज्ञातिमध्ये सुभगत्वं प्रपद्यते ॥ २०
भगदैवतमासं तु एकभक्तेन यः क्षिपेत् ।
'सुभगो दर्शनीयश्च यशोभागी च जायते ।'
स्त्रीषु वल्लभतां याति वश्याश्चास्य भवन्ति ताः२१
चैत्रं तु नियतो मासमेकभक्तेन यः क्षिपेत् ।
सुवर्णमणिमुक्ताढ्ये कुले महति जायते ॥ २२
निस्तरेदेकभक्तेन वैशाखं यो जितेन्द्रियः ।
नरो वा यदि वा नारी ज्ञातीनां श्रेष्ठतां व्रजेत् ॥२३
ज्येष्ठामूलं तु यो मासमेकभक्तेन संक्षिपेत् ।
ऐश्वर्यमतुलं श्रेष्ठं पुमान्स्त्री वा प्रपद्यते ॥ २४
आषाढमेकभक्तेन स्थित्वा मासमतन्द्रितः ।
बहुधान्यो बहुधनो बहुपुत्रश्च जायते ॥ २५
श्रावणं नियतो मासमेकभक्तेन यः क्षिपेत् ।
रूपद्रविणसंपन्नः सुखी भवति नित्यशः ।
बहुभार्यो बहुधनो बहुपुत्रश्च जायते ॥ २६
प्रौष्ठपादं तु यो मासमेकाहारो भवेन्नरः ।
गवाढ्यं स्फीतमचलमैश्वर्यं प्रतिपद्यते ॥ २७
तथैवाश्वयुजं मासमेकभक्तेन यः क्षिपेत् ।
प्रज्ञावान्वाहनाढ्यश्च बहुपुत्रश्च जायते ॥ २८
कार्तिकं तु नरो मासं यः कुर्यादेकभोजनम् ।
शूरश्च बहुभार्यश्च कीर्तिमांश्चैव जायते ॥ २९
इति मासा नरव्याघ्र क्षिपतां परिकीर्तिताः ।
तिथीनां नियमा ये तु शृणु तानपि पार्थिव ॥३०
पक्षेपक्षे गते यस्तु भक्तमश्नाति भारत ।
गवाढ्यो बहुपुत्रश्च दीर्घायुश्च स जायते ॥ ३१
मासिमासि त्रिरात्राणि कृत्वा वर्षाणि द्वादश ।
गणाधिपत्यं प्राप्नोति निःसपत्नमनाविलम् ॥ ३२
एते तु नियमाः सर्वे कर्तव्याः शरदो दश ।
द्वे चान्ये भरतश्रेष्ठ प्रवृत्तिरनुकीर्तिता ॥ ३३
यस्तु प्रातस्तथा सायं भुञ्जानो नान्तरा पिबेत् ।
अहिंसानिरतो नित्यं जुह्वानो जातवेदसम् ॥ ३४
षड्भिः स वर्षैर्नृपते सिध्यते नात्र संशयः ।
अग्निष्टोमस्य यज्ञस्य फलं प्राप्नोति मानवः ॥ ३५
अधिवासे सोप्सरसां नृत्यगीतविनादिते ।
रमते स्त्रीसहस्राढ्ये सुकृती विरजा नरः ॥ ३६
तप्तकाञ्चनवर्णाभं विमानमधिरोहति ।
[illegible]ं च ब्रह्मलोके महीयते ।

व्युष्टिः फलम् ॥ १२ ॥ दिनस्य द्वे भक्ते तत्र चतुर्थस्य भक्तस्य क्षपणम् । द्विरात्रमभोजनमित्यर्थः ॥ १३ ॥ यजिष्णुः देवतापूजनशीलः । कुले स एव महानन्नदाता भवतीत्यर्थः ॥१६॥

ज्येष्ठामूलं ज्येष्ठमासम् ॥ २४ ॥ मृजावान् वाहनाढ्यश्च इति झ. पाठः ॥ २८ ॥ सर्वेषु मासेष्वेकैकस्मिन्पक्षे गते द्वितीयपक्षे भक्तमेकभक्तमश्नाति ॥ ३१ ॥

तत्क्षयादिह चागम्य माहात्म्यं प्रतिपद्यते ॥ ३७
यस्तु संवत्सरं पूर्णमेकाहारो भवेन्नरः ।
अतिरात्रस्य यज्ञस्य स फलं समुपाश्नुते ॥ ३८
त्रिंशद्वर्षसहस्राणि स्वर्गे च स महीयते ।
तत्क्षयादिह चागम्य माहात्म्यं प्रतिपद्यते ॥ ३९
यस्तु संवत्सरं पूर्णं चतुर्थं भक्तमश्नुते ।
अहिंसानिरतो नित्यं सत्यवाग्विजितेन्द्रियः ॥४०
वाजपेयस्य यज्ञस्य स फलं समुपाश्नुते ।
त्रिंशद्वर्षसहस्राणि स्वर्गलोके महीयते ॥ ४१
षष्ठे काले तु कौन्तेय नरः संवत्सरं क्षिपन् ।
अश्वमेधस्य यज्ञस्य फलं प्राप्नोति मानवः ॥ ४२
चक्रवाकप्रयुक्तेन विमानेन स गच्छति ।
चत्वारिंशत्सहस्राणि वर्षाणि दिवि मोदते ॥४३
अष्टमेन तु भक्तेन जीवन्संवत्सरं नृप ।
गवामयनयज्ञस्य फलं प्राप्नोति मानवः ॥ ४४
हंससारसयुक्तेन विमानेन स गच्छति ।
पञ्चाशतं सहस्राणि वर्षाणां दिवि मोदते ॥ ४५
पक्षेपक्षे गते राजन्योऽश्नीयाद्वर्षमेव तु ।
षण्मासानशनं तस्य भगवानङ्गिराऽब्रवीत् ।
षष्टिं वर्षसहस्राणि दिवमावसते च सः ॥ ४६
वीणानां वल्लकीनां च वेणूनां च विशांपते ।
सुघोषैर्मधुरैः शब्दैः सुप्तः स प्रतिबोध्यते ॥ ४७
संवत्सरमिहैकं तु मासिमासि पिबेदपः ।
फलं विश्वजितस्तात प्राप्नोति स नरो नृप ॥४८
सिंहव्याघ्रप्रयुक्तेन विमानेन स गच्छति ।
सप्ततिं च सहस्राणि वर्षाणां दिवि मोदते ॥४९
मासादूर्ध्वं नरव्याघ्र नोपवासो विधीयते ।
विधिं त्वनशनस्याहुः पार्थ धर्मविदो जनाः ॥५०
अनार्तो व्याधिरहितो गच्छेदनशनं तु यः ।
पदेपदे यज्ञफलं स प्राप्नोति न संशयः ॥ ५१
दिवं हंसप्रयुक्तेन विमानेन स गच्छति ।
शतं वर्षसहस्राणां मोदते स दिवि प्रभो ॥ ५२
शतं चाप्सरसः कन्या रमयन्त्यपि तं नरम् ।
आर्तो वा व्याधितो वाऽपि गच्छेदनशनं तु यः ॥
शतं वर्षसहस्राणां मोदते स दिवि प्रभो ।
काञ्चीनूपुरशब्देन सुप्तश्चैव प्रबोध्यते ॥ ५४
सहस्रहंससंयुक्तेन विमानेन तु गच्छति ।
स गत्वा स्त्रीशताकीर्णे रमते भरतर्षभ ॥ ५५
क्षीणस्याप्यायनं दृष्टं क्षतस्य क्षतरोहणम् ।
व्याधितस्यौषधग्रामः क्रुद्धस्य च प्रसादनम् ॥५६
दुःखितस्यार्तपूर्वस्य द्रव्याणां प्रतिपादनम् ।
न चैतद्रोचते तेषां ये धनैः सुखमेधिताः ॥ ५७
अतः स कामसंयुक्ते विमाने हेमसन्निभे ।
रमते स्त्रीशताकीर्णे पुरुषोऽलंकृतः शुचिः ॥ ५८
स्वस्थः सफलसंकल्पः सुखी विगतकल्मषः ।
अनश्नन्देहमुत्सृज्य फलं प्राप्नोति मानवः ॥ ५९
बालसूर्यप्रतीकाशे विमाने सोमवर्चसि ।
वैदूर्यमुक्ताखचिते वीणामुरजनादिते ॥ ६०
पताकादीपिकाकीर्णे दिव्यघण्टानिनादिते ।
स्त्रीसहस्रानुचरिते स नरः सुखमेधते ॥ ६१
यावन्ति रोमकूपाणि तस्य गात्रेषु पाण्डव ।
तावन्त्येव सहस्राणि वर्षाणां दिवि मोदते ॥६२
नास्ति वेदात्परं शास्त्रं नास्ति मातृसमो गुरुः ।
न धर्मात्परमो लाभस्तपो नानशनात्परम् ॥ ६३
ब्राह्मणेभ्यः परं नास्ति पावनं दिवि चेह च ।
उपवासैस्तथा तुल्यं तपःकर्म न विद्यते ॥ ६४
उपोष्य विधिवद्देवास्त्रिदिवं प्रतिपेदिरे ।
ऋषयश्च परां सिद्धिमुपवासैरवाप्नुवन् ॥ ६५
दिव्यवर्षसहस्राणि विश्वामित्रेण धीमता ।
क्षान्तमेकेन भक्तेन तेन विप्रत्वमागतम् ॥ ६६
च्यवनो जमदग्निश्च वसिष्ठो गौतमो भृगुः ।
सर्व एव दिवं प्राप्ताः क्षमावन्तो महर्षयः ॥ ६७
इदमङ्गिरसा पूर्वं महर्षिभ्यः प्रदर्शितम् ।
यः प्रदर्शयते नित्यं न स दुःखमवाप्नुते ॥ ६८

इमं तु कौन्तेय यथाक्रमं विधिं
प्रवर्तितं ह्यङ्गिरसा महर्षिणा ।
पठेच्च यो वै शृणुयाच्च नित्यदा
न विद्यते तस्य नरस्य किल्बिषम् ॥ ६९

दुःखितस्यार्थमानाभ्यां दुःखानां प्रतिषेधनम् इति झ. पाठ.॥५७॥

विमुच्यते चापि स सर्वसंकरै-
र्न चास्य दोषैरभिभूयते मनः ।
वियोनिजानां च विजानते रुतं
ध्रुवां च कीर्तिं लभते नरोत्तमः ॥ ७०

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि त्रिषष्ट्यधिकशततमोऽध्यायः ॥ १६३ ॥

---

## चतुःषष्ट्यधिकशततमोऽध्यायः ॥ १६४ ॥

युधिष्ठिरेण भीष्मंप्रति दरिद्राणां यज्ञस्य बहुद्रव्यसाध्यत्वेन दुष्करतया तत्फलप्राप्त्यै तत्प्रतिनिधिकथनप्रार्थना ॥ १ ॥ भीष्मेण युधिष्ठिरंप्रति एकैकदिनवृद्ध्या मासावध्युपवासस्य यज्ञप्रतिनिधित्वकथनम् ॥ २ ॥

युधिष्ठिर उवाच ।
पितामहेन विधिवद्यज्ञाः प्रोक्ता महात्मना ।
-गुणाश्चैषां यथातथ्यं प्रेत्य चेह च सर्वशः ॥ १
न ते शक्या दरिद्रेण यज्ञाः प्राप्तुं पितामह ।
बहूपकरणा यज्ञा नानासंभारविस्तराः ॥ २
पार्थिवै राजपुत्रैर्वा शक्याः प्राप्तुं पितामह ।
नार्थन्यूनैरवगुणैरेकात्मभिरसंहतैः ॥ ३
यो दरिद्रैरपि विधिः शक्यः प्राप्तुं सदा भवेत् ।
अर्थन्यूनैरवगुणैरेकात्मभिरसंहतैः ।
तुल्यो यज्ञफलैरेतैस्तन्मे ब्रूहि पितामह ॥ ४
भीष्म उवाच ।
इदमङ्गिरसा प्रोक्तमुपवासफलात्मकम् ।
विधिं यज्ञफलैस्तुल्यं तन्निबोध युधिष्ठिर ॥ ५
यस्तु कल्यं तथा सायं भुञ्जानो नान्तरा पिबेत् ।
अहिंसानिरतो नित्यं जुह्वानो जातवेदसम् ।
षड्भिरेव स वर्षैस्तु सिध्यते नात्र संशयः ॥ ६
तप्तकाञ्चनवर्णं च विमानं लभते नरः ।
देवस्त्रीणामधीवासे नृत्तगीतनिनादिते ।
प्राजापत्ये वसेत्पद्मं वर्षाणामग्निसंनिभे ॥ ७
त्रीणि वर्षाणि यः प्राशेत्सततं त्वेकभोजनम् ।
धर्मपत्नीरतो नित्यमग्निष्टोमफलं लभेत् ।
यज्ञं बहुसुवर्णं वा वासवप्रियमाचरेत् ॥ ८
सत्यवान्दानशीलश्च ब्रह्मण्यश्चानसूयकः ।
क्षान्तो दान्तो जितक्रोधः स गच्छति परां गतिम् ९
पाण्डुराभ्रप्रतीकाशे विमाने हंसलक्षणे ।
द्वे समाप्ते ततः पद्मे सोऽप्सरोभिर्वसेत्सह ॥ १०
द्वितीये दिवसे यस्तु प्राश्नीयादेकभोजनम् ।
सदा द्वादशमासांस्तु जुह्वानो जातवेदसम् ॥ ११
अग्निकार्यपरो नित्यं नित्यं कल्यप्रबोधनः ।
अग्निष्टोमस्य यज्ञस्य फलं प्राप्नोति मानवः ॥ १२
हंससारसयुक्तं च विमानं लभते नरः ।
इन्द्रलोके च वसते वरस्त्रीभिः समावृतः ॥ १३
तृतीये दिवसे यस्तु प्राश्नीयादेकभोजनम् ।
सदा द्वादशमासांस्तु जुह्वानो जातवेदसम् ॥ १४
अग्निकार्यपरो नित्यं नित्यं कल्यप्रबोधनः ।
अतिरात्रस्य यज्ञस्य फलं प्राप्नोत्यनुत्तमम् ॥ १५
मयूरहंसयुक्तं च विमानं लभते नरः ।
सप्तर्षीणां सदा लोके सोऽप्सरोभिर्वसेत्सह ।
निवर्तनं च तत्रास्य त्रीणि पद्मानि वै विदुः १६
दिवसे यश्चतुर्थे तु प्राश्नीयादेकभोजनम् ।
सदा द्वादशमासान्वै जुह्वानो जातवेदसम् ।
वाजपेयस्य यज्ञस्य फलं प्राप्नोत्यनुत्तमम् ॥ १७
इन्द्रकन्याभिरूढं च विमानं लभते नरः ।
सागरस्य च पर्यन्ते वासवं लोकमावसेत् ।
देवराजस्य च क्रीडां नित्यकालमवेक्षते ॥ १८
दिवसे पञ्चमे यस्तु प्राश्नीयादेकभोजनम् ।
सदा द्वादशमासांस्तु जुह्वानो जातवेदसम् ॥ १९
अलुब्धः सत्यवादी च ब्रह्मण्यश्चाविहिंसकः ।

---

वियोनिजाना पक्ष्यादीनां रुतं शब्द विजानते विजानीते ॥ ७० ॥ त्रिषष्ट्यधिकशततमोऽध्यायः ॥ १६३ ॥

अवगुणैर्निर्गुणैः । एकात्मभिरेकाकिभिः । अत एवासंहतै-रसहायैः ॥ ३ ॥ कल्य प्रातः ॥ ६ ॥ समाप्ते सपूर्णे द्वे पद्मे वर्षाणीति शेषः । शतकोटय एकं पद्मम् ॥ १० ॥ निवर्तन नियमेन वर्तनम् ॥ १६ ॥

अनग्न्युरपापस्थो द्वादशाहफलं लभेत् ॥ २०
जाम्बूनदमयं दिव्यं विमानं हंसलक्षणम् ।
सूर्यमालासमाभासमारोहेत्पाण्डुरं गृहम् ॥ २१
आवर्तनानि चत्वारि तथा पद्मानि द्वादश ।
शराग्निपरिमाणं च तत्रासौ वसते सुखम् ॥ २२
दिवसे यस्तु षष्ठे वै मुनिः प्राशेत भोजनम् ।
सदा द्वादशमासान्वै जुह्वानो जातवेदसम् ॥२३
सदा त्रिषवणस्नायी ब्रह्मचार्यनसूयकः ।
गवामयनयज्ञस्य फलं प्राप्नोत्यनुत्तमम् ॥ २४
अग्निज्वालासमाभासं हंसबर्हिणसेवितम् ।
शातकुम्भसमायुक्तं साधयेद्यानमुत्तमम् ॥ २५
तथैवाप्सरसामङ्के प्रतिसुप्तः प्रबोध्यते ।
नूपुराणां निनादेन मेखलानां च निःस्वनैः २६
कोटीसहस्रं वर्षाणां त्रीणि कोटिशतानि च ।
पद्मान्यष्टादश तथा पताके द्वे तथैव च ॥ २७
अयुतानि च पञ्चाशदृक्षचर्मशतस्य च ।
लोम्नां प्रमाणेन समं ब्रह्मलोके महीयते ॥ २८
दिवसे सप्तमे यस्तु प्राश्नीयादेकभोजनम् ।
सदा द्वादशमासान्वै जुह्वानो जातवेदसम् ॥२९
सरस्वतीं गोपयानो ब्रह्मचर्यं समाचरन् ।
सुमनोवर्णकं चैव मधु मांसं च वर्जयन् ॥ ३०
पुरुषो मरुतां लोकमिन्द्रलोकं च गच्छति ।
तत्रतत्र हि सिद्धार्थो देवकन्याभिरुह्यते ॥ ३१
फलं बहुसुवर्णस्य यज्ञस्य लभते नरः ।
सङ्ख्यामतिगुणां चापि तेषु लोकेषु मोदते ॥३२
यस्तु संवत्सरं क्षान्तो भुङ्क्तेऽहन्यष्टमे नरः ।
देवकार्यपरो नित्यं जुह्वानो जातवेदसम् ॥ ३३
पौण्डरीकस्य यज्ञस्य फलं प्राप्नोत्यनुत्तमम् ।
पद्मवर्णनिभं चैव विमानमधिरोहति ॥ ३४
मृष्टाः कनकगौर्यश्च नार्यः श्यामास्तथापराः ।
वयोरूपविलासिन्यो लभते नात्र संशयः ॥ ३५
यस्तु संवत्सरं भुङ्क्ते नवमेनवमेऽहनि ।
सदा द्वादशमासान्वै जुह्वानो जातवेदसम् ॥ ३६
अश्वमेधसहस्रस्य फलं प्राप्नोत्यनुत्तमम् ।
पुण्डरीकप्रकाशं च विमानं लभते नरः ॥ ३७
दीप्तसूर्याग्नितेजोभिर्दिव्यमालाभिरेव च ।
नीयते रुद्रकन्याभिः सोऽन्तरिक्षं सनातनम् ॥ ३८
अष्टादशसहस्राणि वर्षाणां कल्पमेव च ।
कोटीशतसहस्रं च तेषु लोकेषु मोदते ॥ ३९
यस्तु संवत्सरं भुङ्क्ते दशाहे वै गतेगते ।
सदा द्वादश मासान्वै जुह्वानो जातवेदसम् ॥ ४०
ब्रह्मकन्यानिवासे च सर्वभूतमनोहरे ।
अश्वमेधसहस्रस्य फलं प्राप्नोत्यनुत्तमम् ॥ ४१
रूपवत्यश्च तं कन्या रमयन्ति सदा नरम् ।
नीलोत्पलनिभैर्वर्णै रक्तोत्पलनिभैस्तथा ॥ ४२
विमानं मण्डलावर्तमावर्तगहनाकुलम् ।
सागरोर्मिप्रतीकाशं स लभेद्यानमुत्तमम् ॥ ४३
विचित्रमणिमालाभिर्नादितं शङ्खनिःस्वनैः ।
स्फाटिकैर्वज्रसारैश्च स्तम्भैः सुकृतवेदिकम् ।
आरोहति महद्यानं हंससारसवाहनम् ॥ ४४
एकादशे तु दिवसे यः प्राप्ते प्राशते हविः ।
सदा द्वादशमासांस्तु जुह्वानो जातवेदसम् ॥ ४५
परस्त्रियं नाभिलषेद्वाचाथ मनसाऽपि वा ।
अनृतं च न भाषेत मातापित्रोः कृतेऽपि वा ।
अभिगच्छेन्महादेवं विमानस्थं महाबलम् ॥ ४६
अश्वमेधसहस्रस्य फलं प्राप्नोत्यनुत्तमम् ।
स्वायंभुवं च पश्येत विमानं समुपस्थितम् ॥ ४७
कुमार्यः काञ्चनाभासा रूपवत्यो नयन्ति तम् ।
रुद्राणां तमधीवासं दिवि दिव्यं मनोहरम् ॥ ४८
वर्षाण्यपरिमेयानि युगान्तमपि चावसेत् ।
कोटीशतसहस्रं च दशकोटिशतानि च ॥ ४९
रुद्रं नित्यं प्रणमते देवदानवसंमतम् ।
स तस्मै दर्शनं प्राप्तो दिवसेदिवसे भवेत् ॥५०
दिवसे द्वादशे यस्तु प्राप्ते वै प्राशते हविः ।

आवर्तनानि वर्षाणि चत्वारि द्वादशचेति षोडश पद्मानि । तथा शराग्निरिति पञ्चत्रिंशत् । एवमेकपञ्चाशत्पद्मानि ॥ २२ ॥ पताकौ महापद्माख्यसंख्याविशेषः ॥ २७ ॥ सुमनोवर्णकं स्रक्चन्दनादि ॥ ३० ॥

सदा द्वादश मासान्वै जुह्वानो जातवेदसम् ॥५१
नियमेन समायुक्तः सर्वमेधफलं लभेत् ।
आदित्यैर्द्वादशैस्तस्य विमानं संविधीयते ॥ ५२
मणिमुक्ताप्रवालैश्च महार्हैरुपशोभितम् ।
हंसभासा परिक्षिप्तं नागवीथीसमाकुलम् ॥ ५३
मयूरैश्चक्रवाकैश्च कूजद्भिरुपशोभितम् ।
अट्टैर्महद्भिः संयुक्तं ब्रह्मलोके प्रतिष्ठितम् ॥ ५४
नित्यमावसथं राजन्नरनारीसमावृतम् ।
ऋषिरेवं महाभागस्त्वङ्गिराः प्राह धर्मवित् ॥ ५५
त्रयोदशे तु दिवसे प्राप्ते यः प्राशते हविः ।
सदा द्वादश मासान्वै देवसत्रफलं लभेत् ॥ ५६
रक्तपद्मोदयं नाम विमानं साधयेन्नरः ।
जातरूपप्रयुक्तं च रत्नसंचयभूषितम् ॥ ५७
देवकन्याभिराकीर्णं दिव्याभरणभूषितम् ।
पुण्यगन्धोदयं दिव्यं वादित्रैरुपशोभितम् ॥ ५८
तत्र शङ्कुपताके द्वे युगान्तं कल्पमेव च ।
अयुतायुतं तथा पद्मं समुद्रं च तथा वसेत् ॥ ५९
गीतगन्धर्वघोषैश्च भेरीपणवनिःस्वनैः ।
सदा प्रह्लादितस्ताभिर्देवकन्याभिरीड्यते ॥ ६०
चतुर्दशे तु दिवसे यः पूर्णे प्राशते हविः ।
सदा द्वादशमासांस्तु महामेधफलं लभेत् ॥ ६१
अनिर्देश्यवयोरूपा देवकन्याः स्वलंकृताः ।
मृष्टतप्ताङ्गदधरा विमानैरुपयान्ति तम् ॥ ६२
कलहंसविनिर्घोषैर्नूपुराणां च निःस्वनैः ।
काञ्चीनां च समुत्कर्षैस्तत्रतत्र निबोध्यते ॥ ६३
देवकन्यानिवासे च तस्मिन्वसति मानवः ।
जाह्नवीवालुकाकीर्णं पूर्णं संवत्सरं नरः ॥ ६४
यस्तु पक्षे गते भुङ्क्ते एकभक्तं जितेन्द्रियः ।
सदा द्वादशमासांस्तु जुह्वानो जातवेदसम् ॥ ६५
राजसूयसहस्रस्य फलं प्राप्नोत्यनुत्तमम् ।
यानमारोहते दिव्यं हंसबर्हिणलक्षणम् ॥ ६६
मणिमण्डलकैश्चित्रं जातरूपसमावृतम् ।
दिव्याभरणशोभाभिर्वरस्त्रीभिरलंकृतम् ॥ ६७
एकस्तम्भं चतुर्द्वारं सप्तभौमं सुमङ्गलम् ।
वैजयन्तीसहस्रैश्च शोभितं गीतनिःस्वनैः ।
दिव्यं दिव्यगुणोपेतं विमानमधिरोहति ॥ ६८
मणिमुक्ताप्रवालैश्च भूषितं वैद्युतप्रभम् ।
वसेद्युगसहस्रं च खड्गकुञ्जरवाहनः ॥ ६९
षोडशे दिवसे यस्तु संप्राप्ते प्राशते हविः ।
सदा द्वादशमासान्वै सोमयज्ञफलं लभेत् ॥ ७०
सोमकन्यानिवासेषु सोऽध्यावसति नित्यशः ।
सौम्यगन्धानुलिप्तश्च कामचारगतिर्भवेत् ॥ ७१
सुदर्शनाभिर्नारीभिर्मधुराभिस्तथैव च ।
अर्च्यते वै विमानस्थः कामभोगैश्च सेव्यते ॥७२
फलं पद्मशतप्रख्यं महाकल्पं दशाधिकम् ।
आवर्तनानि चत्वारि साधयेच्चाप्यसौ नरः ॥७३
दिवसे सप्तदशमे यः प्राप्ते प्राशते हविः ।
सदा द्वादशमासान्वै जुह्वानो जातवेदसम् ॥७४
स्थानं वारुणमैन्द्रं च रौद्रं वाऽप्यधिगच्छति॥७५
मारुतं शयनं चैव ब्रह्मलोकं स गच्छति ।
तत्र दैवतकन्याभिरासनेनोपचर्यते ॥ ७६
भूर्भुवःस्वश्च देवर्षिर्विश्वरूपमवेक्षते ।
तत्र देवाधिदेवस्य कुमार्यो रमयन्ति तम् ।
द्वात्रिंशद्रूपधारिण्यो मधुराः समलंकृताः ॥ ७७
चन्द्रादित्यावुभौ यावद्गगने चरतः प्रभो ।
तावच्चरत्यसौ धीरः सुधातुल्यरसाशनः ॥ ७८
अष्टादशे यो दिवसे प्राश्नीयादेकभोजनम् ।
सदा द्वादशमासान्वै सप्तलोकान्स पश्यति ॥७९
रथैः स नन्दिघोषैश्च पृष्ठतः सोऽनुगम्यते ।
देवकन्याधिरूढैस्तु भ्राजमानैः स्वलंकृतैः ॥ ८०
व्याघ्रसिंहप्रयुक्तं च मेघस्वननिनादितम् ।
विमानमुत्तमं दिव्यं सुसुखी ह्यधिरोहति ॥ ८१
तत्र कल्पसहस्रं स कन्याभिः सह मोदते ।
सुधारसं च भुञ्जीत अमृतोपममुत्तमम् ॥ ८२
एकोनविंशदिवसे यो भुङ्क्ते एकभोजनम् ।
सदा द्वादशमासान्वै सप्त लोकान्स पश्यति ॥८३

शङ्कुपताके संख्याविशेषौ ॥ ५९ ॥

सुधा अमृतम् । अमृत देवभोग्य तदुपमम् ॥ ८२ ॥

उत्तमं लभते स्थानमप्सरोगणसेवितम् ।
गन्धर्वैरुपगीतं च विमानं सूर्यवर्चसम् ॥ ८४
तत्रामरवरस्त्रीभिर्मोदते विगतज्वरः ।
दिव्याम्बरधरः श्रीमानयुतानां शतंशतम् ॥ ८५
पूर्णेऽथ विंशे दिवसे यो भुङ्क्ते ह्येकभोजनम् ।
सदा द्वादशमासांस्तु सत्यवादी धृतव्रतः ॥ ८६
अमांसाशी ब्रह्मचारी सर्वभूतहिते रतः ।
स लोकान्विपुलान्रम्यानादित्यानामुपाश्नुते ॥८७
गन्धर्वैरप्सरोभिश्च दिव्यमाल्यानुलेपनैः ।
विमानैः काञ्चनैर्हृद्यैः पृष्ठतश्चानुगम्यते ॥ ८८
एकविंशे तु दिवसे यो भुङ्क्ते ह्येकभोजनम् ।
सदा द्वादशमासान्वै जुह्वानो जातवेदसम् ।
लोकमौशनसं दिव्यं शक्रलोकं च गच्छति ॥८९
अश्विनोर्मरुतां चैव सुखेष्वभिरतः सदा ।
अनभिज्ञश्च दुःखानां विमानवरमास्थितः ।
सेव्यमानो वरस्त्रीभिः क्रीडत्यमरवत्प्रभुः ॥ ९०
द्वाविंशे दिवसे प्राप्ते यो भुङ्क्ते ह्येकभोजनम् ।
सदा द्वादश मासान्वै जुह्वानो जातवेदसम् ॥९१
अहिंसानिरतो धीमान्सत्यवागनसूयकः ।
लोकान्वसूनामाप्नोति दिवाकरसमप्रभः ॥ ९२
कामचारी सुधाहारो विमानवरमास्थितः ।
रमते देवकन्याभिर्दिव्याभरणभूषितः ॥ ९३
त्रयोविंशे तु दिवसे प्राशेद्यस्त्वेकभोजनम् ।
सदा द्वादशमासांस्तु मिताहारो जितेन्द्रियः ।
वायोरुशनसश्चैव रुद्रलोकं च गच्छति ॥ ९४
कामचारी कामगमः पूज्यमानोऽप्सरोगणैः ।
अनेकयुगपर्यन्तं विमानवरमास्थितः ।
रमते देवकन्याभिर्दिव्याभरणभूषितः ॥ ९५
चतुर्विंशे तु दिवसे यः प्राप्ते प्राशते हविः ।
सदा द्वादशमासांश्च जुह्वानो जातवेदसम् ।
आदित्यानामधीवासे मोदमानो वसेच्चिरम् ॥९६
दिव्यमाल्याम्बरधरो दिव्यगन्धानुलेपनः ।
विमाने काञ्चने दिव्ये हंसयुक्ते मनोरमे ।
रमते देवकन्यानां सहस्रैरयुतैस्तथा ॥ ९७
पञ्चविंशे तु दिवसे यः प्राशेदेकभोजनम् ।
सदा द्वादशमासांस्तु पुष्कलं यानमारुहेत् ॥९८
सिंहव्याघ्रप्रयुक्तैस्तु मेघनिःस्वननादितैः ।
स रथैर्नन्दिघोषैश्च पृष्ठतो ह्यनुगम्यते ।
देवकन्यासमारूढैः काञ्चनैर्विमलैः शुभैः ॥ ९९
विमानमुत्तमं दिव्यमास्थाय सुमनोहरम् ।
तत्र कल्पसहस्रं वै वसते स्त्रीशतावृते ।
सुधारसं चोपजीवन्नमृतोपममुत्तमम् ॥ १००
षड्विंशे दिवसे यस्तु प्रकुर्यादेकभोजनम् ।
सदा द्वादशमासांस्तु नियतो नियताशनः ।
जितेन्द्रियो वीतरागो जुह्वानो जातवेदसम् १०१
स प्राप्नोति महाभागः पूज्यमानोऽप्सरोगणैः ।
सप्तानां मरुतां लोकान्वसूनां चापि सोऽश्नुते॥१०२
विमानैः स्फाटिकैर्दिव्यैः सर्वरत्नैरलंकृतैः ।
गन्धर्वैरप्सरोभिश्च पूज्यमानः प्रमोदते ।
द्वेऽर्बुदानां सहस्रे तु दिव्ये दिव्येन तेजसा १०३
सप्तविंशेऽथ दिवसे यः कुर्यादेकभोजनम् ।
सदा द्वादशमासांस्तु जुह्वानो जातवेदसम् १०४
फलं प्राप्नोति विपुलं देवलोके च पूज्यते ।
अमृताशी वसंस्तत्र स वितृप्तः प्रमोदते ॥ १०५
देवर्षिचरिताँल्लोकान्राजर्षिभिरनुष्ठितान् ।
अध्यावसति दिव्यात्मा विमानवरमास्थितः१०६
स्त्रीभिर्मनोभिरामाभी रममाणो मदोत्कटः ।
युगकल्पसहस्राणि त्रीण्यावसति वै सुखम्॥१०७
योऽष्टाविंशे तु दिवसे प्राश्नीयादेकभोजनम् ।
सदा द्वादशमासांस्तु जितात्मा विजितेन्द्रियः१०८
फलं देवर्षिचरितं विपुलं समुपाश्नुते ।
भोगवांस्तेजसा भाति सहस्रांशुरिवामलः ॥१०९
सुकुमार्यश्च नार्यस्तं रममाणाः सुवर्चसः ।
पीनस्तनोरुजघना दिव्याभरणभूषिताः ॥ ११०
रमयन्ति मनःकान्ता विमाने सूर्यसन्निभे ।
सर्वकामगमे दिव्ये कल्पायुतशतं समाः ॥ १११
एकोनत्रिंशदिवसे यः प्राशेदेकभोजनम् ।
सदा द्वादशमासान्वै सत्यव्रतपरायणः ।
तस्य लोकाः शुभा दिव्या देवराजर्षिपूजिताः ११२

विमानं सूर्यचन्द्राभं दिव्यं समधिगच्छति ।
ज्ञानरूपमयं युक्तं सर्वरत्नसमन्वितम् ।
अप्सरोगणसंकीर्णं गन्धर्वैरभिनादितम् ॥ ११३
तत्र चैनं शुभा नार्यो दिव्याभरणभूषिताः ।
मनोभिरामा मधुरा रमयन्ति मदोत्कटाः ॥ ११४
भोगवांस्तेजसा युक्तो वैश्वानरसमप्रभः ।
दिव्यो दिव्येन वपुषा भ्राजमान इवामरः ॥ ११५
वसूनां मरुतां चैव साध्यानामश्विनोस्तथा ।
रुद्राणां च तथा लोकं ब्रह्मलोकं च गच्छति ॥ ११६
यस्तु मासे गते भुङ्क्ते एकभक्तं समाहितः ।
सदा द्वादश मासान्वै ब्रह्मलोकमवाप्नुयात् ॥ ११७
सुधारसकृताहारः श्रीमान्सर्वमनोहरः ।
तेजसा वपुषा लक्ष्म्या भ्राजते रश्मिवानिव ॥ ११८
दिव्यमाल्याम्बरधरो दिव्यगन्धानुलेपनः ।
सुखेष्वभिरतो भोगी दुःखानामविजानकः ॥ ११९
स्वयंप्रभाभिर्नारीभिर्विमानस्थो महीयते ।
रुद्रदेवर्षिकन्याभिः सततं चाभिपूज्यते ॥ १२०
नानारमणरूपाभिर्नानारागाभिरेव च ।
नानामधुरभाषाभिर्नानारतिभिरेव च ॥ १२१
विमाने गगनाकारे सूर्यवैडूर्यसन्निभे ।
पृष्ठतः सोमसंकाशे उदर्के चाभ्रसन्निभे ॥ १२२
दक्षिणायां तु रक्ताभे अधस्तान्नीलमण्डले ।
ऊर्ध्वं विचित्रसंकाशे नैको वसति पूजितः ॥ १२३
यावद्वर्षसहस्रं वै जम्बूद्वीपे प्रवर्षति ।
तावत्संवत्सराः प्रोक्ता ब्रह्मलोकेऽस्य धीमतः ॥ १२४
विप्रुषश्चैव यावन्त्यो निपतन्ति नभस्तलात् ।
वर्षासु वर्षतस्तावन्निवसत्यमरप्रभः ॥ १२५
मासोपवासी वर्षैस्तु दशभिः स्वर्गमुत्तमम् ।
महर्षित्वमथासाद्य सशरीरगतिर्भवेत् ॥ १२६
मुनिर्दान्तो जितक्रोधो जितशिश्नोदरः सदा ।
जुह्वन्नग्नींश्च नियतः सन्ध्योपासनसेविता ॥ १२७
बहुभिर्नियमैरेवं शुचिरश्नाति यो नरः ।
अभ्रावकाशशीलश्च तस्य भानोरिव त्विषः ॥ १२८
दिवं गत्वा शरीरेण स्वेन राजन्यथाऽमरः ।
स्वर्गं पुण्यं यथाकाममुपभुङ्क्ते तथाविधः ॥ १२९
एष ते भरतश्रेष्ठ यज्ञानां विधिरुत्तमः ।
व्याख्यातो ह्यानुपूर्व्येण उपवासफलात्मकः ।
दरिद्रैर्मनुजैः पार्थ प्राप्यं यज्ञफलं यथा ॥ १३०
उपवासानिमान्कृत्वा गच्छेच्च परमां गतिम् ।
देवद्विजातिपूजायां रतो भरतसत्तम ॥ १३१
उपवासविधिस्त्वेष विस्तरेण प्रकीर्तितः ।
नियतेष्वप्रमत्तेषु शौचवत्सु महात्मसु ॥ १३२
दम्भद्रोहनिवृत्तेषु कृतबुद्धिषु भारत ।
अचलेष्वप्रकम्पेषु मा ते भूदत्र संशयः ॥ १३३

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि चतुःषष्ट्यधिकशततमोऽध्यायः ॥ १६४ ॥

## पञ्चषष्ट्यधिकशततमोऽध्यायः ॥ १६५ ॥

भीष्मेण युधिष्ठिरंप्रति तत्वसृष्टिप्रतिपादकरुद्रसनत्कुमारसंवादानुवादः ॥ १ ॥

युधिष्ठिर उवाच ।*
पितामहेन कथिता दानधर्माश्रिताः कथाः ।
मया श्रुता ऋषीणां तु संनिधौ केशवस्य च ॥ १
पुनः कौतूहलमभूत्तामेवाध्यात्मिकीं प्रति ।
कथाः कथय राजेन्द्र त्वदन्यः क उदाहरेत् ॥ २
एष यादवदायादस्तथानुज्ञातुमर्हति ।
ज्ञाने तु यस्मिञ्ज्ञातव्यं ज्ञातं भवति भारत ॥ ३
पश्चाच्छ्रोष्यामहे राज्ञां श्राव्यान्धर्मान्पितामह ।
कौतूहलमृषीणां तु छेत्तुमर्हसि सांप्रतम् ॥ ४
भीष्म उवाच ।
अत ऊर्ध्वं महाराज साङ्ख्ययोगोभयशास्त्राधिगतयाथात्म्यदर्शनसंपन्नयोराचार्ययोः संवादमनु-

अभ्र मेघस्तस्यावकाश आकाश तच्छीलस्तद्वन्निर्मलः ॥ १२८ ॥ चतुःषष्ट्यधिकशततमोऽध्यायः ॥ १६४ ॥

* एतदादिपञ्चाध्याया दाक्षिणात्यकोशेष्वेव दृश्यन्ते ॥

व्याख्यास्यामः ॥ ५

तद्यथा भगवन्तं सनत्कुमारमासीनमङ्गुष्ठपर्व-
मात्रं महति विमानवरे योजनमहस्रमण्डले तरुण-
भास्करप्रतीकाशे शयनीये महति बद्धासनमनु-
ध्यायन्तममृतमनावर्तकरममूर्तमक्षयजमथोपदि-
ष्टमुपसंसर्प भगवन्तमाचार्य भगवानाचार्यो रुद्रः॥

तं प्रोवाच स्वागतं महेश्वर ब्रह्मसुत एतदास-
नमास्तां भगवान् ॥ ७

इत्युक्ते चासीनो भगवाननन्तरूपो रुद्रस्तं
प्रोवाच भगवानपि ध्यानमावर्तयति । इत्युक्ते
चाह भगवान्सनत्कुमारस्तथेति ॥ ८

तथेत्युक्तश्च प्रोवाच भगवाञ्शङ्करस्तदा ।
परावरज्ञं सर्वस्य त्रैलोक्यस्य महामुनिम् ॥ ९
किं वा ध्यानेन द्रष्टव्यं यद्भवाननुपश्यति ।
यच्च ध्यात्वा न शोचन्ति यतयस्तत्वदर्शिनः ॥१०
कथय त्वमिमं देवं देहिनां यतिसत्तम ।
यच्च तत्पुरुषं शुद्धमित्युक्तं योगसाङ्ख्ययोः ॥ ११
किमध्यात्माधिभूतं च तथा चाप्यधिदैवतम् ।
कालसङ्ख्या च का देव द्रष्टव्या तस्य ब्रह्मणः १२
सङ्ख्या सङ्ख्यादनस्यैव या प्रोक्ता परमर्षिभिः ।
शास्त्रदृष्टेन मार्गेण यथावद्यतिसत्तम ॥ १३
यच्च तत्पुरुषं शुद्धं प्रबुद्धमजरं ध्रुवम् ।
बुध्यमानाप्रबुद्धाभ्यां विद्यावेद्यं तथैव च ॥ १४
विमोक्षं त्रिविधं चैव ब्रूहि मोक्षविदांवर ।
परिसाङ्ख्यं च साङ्ख्यानां ध्यानं योगेषु चार्थवत् १५
एकत्वदर्शनं चैव तथा नानात्वदर्शनम् ।
अरिष्टानि च तत्वेन तथैवोत्क्रमणानि च ॥ १६
दैवतानि च सर्वाणि निखिलेनानुपूर्वशः ।
यान्याश्रितानि देहेषु देहिनां यतिसत्तम ।
सर्वमेतद्यथातत्वमाख्याहि मुनिसत्तम ॥ १७
श्रेष्ठो भवान्हि सर्वेषां ब्रह्मज्ञानामनिन्दितः ।
चतुर्थस्त्वं त्रयाणां तु ये गताः परमां गतिम् ।
ज्ञानेन च प्राकृतेन निर्मुक्तो मृत्युबन्धनात् ॥१८
वयं तु वैकृतं मार्गमाश्रिता वै क्षरं सदा ।
परमुत्सृज्य पन्थानममृताक्षरमेव तु ॥ १९
न्यूने पथि निमग्नास्तु ऐश्वर्येऽष्टगुणे तथा ।
महिमानं प्रगृह्येमं विचरामो यथासुखम् ॥ २०
न चैतत्सुखमत्यन्तं न्यूनमेतदनन्तरम् ।
मूर्तिमत्परमेतत्स्यादिदमेवं सुसत्तम ॥ २१
पुनः पुनश्च पतनं मूर्तिमत्युपदिश्यते ।
न पुनर्मृत्युमित्यन्यं निर्मुक्तानां तु मूर्तितः ॥ २२
मृत्युदोषास्त्वनन्ता वै उत्पद्यन्ते कृतात्मनाम् ।
मर्त्येषु नाकपृष्ठेषु निरयेषु महामुने ॥ २३
तत्र मज्जन्ति पुरुषाः सुखदुःखेन वेष्टिताः ॥ २४
सुखदुःखव्यपेतं च यदाहुरमृतं पदम् ।
तदहं श्रोतुमिच्छामि यथावच्छ्रुतिदर्शनात् ॥ २५
सनत्कुमार उवाच ।
यदुक्तं भवता वाक्यं तत्वसंज्ञेति देहिनाम् ।
चतुर्विंशतिमेवात्र केचिदाहुर्मनीषिणः ॥ २६
केचिदाहुस्त्रयोविंशं यथाश्रुतिनिदर्शनात् ।
वयं तु पञ्चविंशं वै तदधिष्ठानसंज्ञितम् ।
तत्वं समधिमन्यामः सर्वतन्त्रप्रलापनात् ॥ २७
अव्यक्तश्चैव वै व्यक्तावुभावपि पिनाकधृक् ।
सह चैव विना चैव तावन्योन्यं प्रतिष्ठितौ ॥२८
हिरण्मयीं प्रविश्यैष मूर्तिं मूर्तिमतांवर ।
चकार पुरुषस्तात विकारपुरुषावुभौ ॥ २९
अव्यक्तादेक एवैष महानात्मा प्रसूयते ।
अहंकारेण लोकांश्च व्याप्य चाहंकृतेन वै ॥ ३०
विना सर्वं तदव्यक्तादभिमन्यस्व शूलधृक् ।
भूतसर्गमहंकाराचृतीयं विद्धि वै क्रमात् ॥ ३१
अहंकाराच्च भूतेषु चतुर्थं विद्धि वैकृतम् ।
अहंकाराच्च जातानि युगपद्विबुधेश्वर ॥ ३२
सविशेषाणि भूतानि पञ्च प्राहुर्मनीषिणः ।
चतुर्विंशात्तु वै प्रोक्तात्पञ्चविंशोऽधितिष्ठति ॥३३
एते सर्गा मया प्रोक्ताश्चत्वारः प्राकृतास्त्विह ।
अहंकाराच्च जातानि युगपद्विबुधेश्वर ॥ ३४
अहंकाराच्च भूतेषु विविधार्थं व्यजायत ।

---

यथावद्वद सत्तमेति ङ. पाठः ॥ १३ ॥

इन्द्रियाण्ययुगपन्मनः सो नित्यश्च समीक्षते ॥ ३५
मरुत्त्वं मन्वमर्गश्च तुष्टिः सिद्धिस्तथैव च ।
वैकृतानि प्रवक्ष्यामि शृणु तानि महामते ॥ ३६
एषा तत्त्वचतुर्विंशन्मया शास्त्रानुमानतः ।
वर्णिता तव देवेश पञ्चविंशत्समन्विता ॥ ३७
पञ्चमोऽनुग्रहश्चैव नवैते प्राकृतैः सह ।
ऐन्द्र्यप्यहमधोप्यन्यन्ममात्मनि च भास्करः ॥ ३८
यच्च देहमयं किंचित्त्रिषु लोकेषु विद्यते ।
सर्वत्रैवाभिमन्तव्यं त्वया त्रिपुरसूदन ॥ ३९
अन्यथा येऽनुपश्यन्ति ते न पश्यन्ति ब्रह्मज ।
एतदव्यक्तविषयं पञ्चविंशसमन्वितम् ॥ ४०
अनेन कारणेनैव तत्त्वमाहुर्मनीषिणः ।
विकारमात्रमेतं तु तत्त्वमाचक्षते परम् ॥ ४१
निस्तत्त्वश्चैष देवेश बोद्धव्यं तु न बुद्ध्यते ।
यदि बुद्ध्येत्परं बुद्धं बुद्ध्यमानः सुरर्षभः ।
प्रबुद्धो ह्यभिमन्येत योयं नाहमिति प्रभो ॥ ४२

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि पञ्चषष्ट्यधिकशततमोऽध्यायः ॥ १६५ ॥

## षट्षष्ट्यधिकशततमोऽध्यायः ॥ १६६ ॥

रुद्रंप्रति सनत्कुमारेण तत्त्वलयक्रमाध्यात्मादिप्रतिपादनम् ॥ १ ॥

सनत्कुमार उवाच ।
तत्त्वसङ्ख्या श्रुता चैषा येषां ब्रह्मविदांवर ।
सर्गसङ्ख्या मया प्रोक्ता नवानामानुपूर्व्यशः ।
प्रवक्ष्यामि तु तेऽध्यात्ममधिभूताधिदैवतम् ॥ १
नैतद्युक्तैर्वेदविद्भिर्गृहस्थै-
र्मान्यैरेभिस्तपसा वाभिपन्नैः ।
यत्नेन दृष्टं परमात्मतत्त्वं
तत्त्वेन प्राप्यं तु यथोक्तमेतत् ।
परं परेभ्यस्त्वमृतार्थतत्त्वं
स्वभावसत्त्वस्थमनीशमीशम् ॥ २
कैवल्यतां प्राप्य महासुरोत्तम
तवैतदाख्यामि मुनीन्द्रवृत्त्या ।
रहस्यमेवान्यदवाप्य दिव्यं
पवित्रपूतस्तव मृत्युजालम् ॥ ३
पृथ्वीमिमां यद्यपि रत्नपूर्णां
दद्यान्न देयं त्वपरीक्षिताय ।
नाश्रद्दधानाय न चान्यबुद्धे-
र्नाज्ञानयुक्ताय न विस्मिताय ॥ ४
स्वाध्याययुक्ताय गुणान्विताय
प्रदेयमेतन्नियतेन्द्रियाय ॥ ५
संक्षेपं चाप्यथैतेषां तत्त्वानां वृषभध्वज ।
अनुलोमानुजातानां प्रतिलोमप्रमीयताम् ॥ ६
प्रवक्ष्यामि तमध्यात्मं साधिभूताधिदैवतम् ।
यथांशुजालमर्कस्य तथैतत्प्रवदन्ति वै ॥ ७
संक्षीणे ब्रह्मदिवसे जगज्जलधिमाविशेत् ।
प्रलीयते जले भूमिर्जलमग्नौ प्रलीयते ॥ ८
लीयतेऽग्निस्तथा वायौ वायुराकाश एव तु ।
मनसि प्रलीयते खं तु मनोऽहंकार एव च ॥ ९
अहंकारस्तथा तस्मिन्महति प्रविलीयते ।
महानव्यक्त इत्याहुस्तदेकत्वं प्रचक्षते ॥ १०
अव्यक्तस्य महादेव प्रलयं विद्धि ब्रह्मणि ।
एवमस्यासकृत्क्रीडामाहुस्तत्त्वविदो जनाः ॥ ११
अध्यात्ममधिभूतं च तथैवाप्यधिदैवतम् ।
यथावदुदितं शास्त्रं योगे तु सुमहात्मभिः ॥ १२
तथैव चेह साङ्ख्ये तु परिसंख्यात्मचिन्तकैः ।
प्रपञ्चितार्थमेतावन्महादेव महात्मभिः ॥ १३
ब्रह्मेति विद्यादध्यात्मं पुरुषं चाधिदैवतम् ।
प्रभवं सर्वभूतानां रक्षणं तत्र कर्म च ॥ १४
अध्यात्मं प्राणमित्याहुः क्रतुमप्यधिदैवतम् ।
रथं च यज्ञवाहोऽत्र कर्माहंकारमेव च ॥ १५

---

मम ल सत्त्वसर्गश्चेति ध. पाठः ॥ ३६ ॥ पञ्चषष्ट्यधिकशततमोऽध्यायः ॥ १६५ ॥

गृहस्थैर्मान्येज्याभिरिति ट. थ. पाठ. ॥ २ ॥ षट्षष्ट्यधिकशततमोऽध्यायः ॥ १६६ ॥

अध्यात्मं तु मनो विद्याच्चन्द्रमाश्चाधिदैवतम् ।
दैवं च प्रभवश्चैव कर्म व्याहृतयस्तथा ॥ १६
विद्यात्तु श्रोत्रमध्यात्ममाकाशमधिदैवतम् ।
सर्वभावाभिधानार्थं शब्दः कर्म सदा स्मृतं॥१७
त्वगध्यात्ममथो विद्याद्वायुरत्राधिदैवतम् ।
संनिपातय विज्ञानं सर्वकर्म च तत्र ह ॥ १८
अध्यात्मं चक्षुरित्याहुर्भास्करोऽत्राधिदैवतम् ।
ज्ञापनं सर्ववर्णानां रूपं कर्म सदा स्मृतम् ॥१९
जिह्वेति विद्यादध्यात्ममापश्चात्राधिदैवतम् ॥२०
पायुरध्यात्ममित्याहुर्यथावद्यतिसत्तमाः ।
विसर्गमधिभूतं च मित्रं चाप्यधिदैवतम् ॥ २१
उपस्थोऽध्यात्ममित्याहुर्देवदेव पिनाकधृक् ।
अनुभावोऽधिभूतं तु दैवतं च प्रजापतिः ॥ २२
पादावध्यात्ममित्याहुस्त्रिशूलाङ्क मनीषिणः ।
गन्तव्यमधिभूतं तु विष्णुस्तत्राधिदैवतम् ॥ २३
वागध्यात्मं तथैवाहुः पिनाकिंस्तत्वदर्शिनः ।
वक्तव्यमधिभूतं तु वह्निस्तत्राधिदैवतम् ॥ २४
एतदध्यात्ममतुलं साधिभूताधिदैवतम् ।
मया तु वर्णितं सम्यग्देहिनाममरर्षभ ॥ २५
एतत्कीटपतङ्गे च श्वपाके शुनि हस्तिनि ।
पुत्रिकादंशमशके ब्राह्मणे गवि पार्थिवे ॥ २६
सर्वमेव हि द्रष्टव्यमन्यथा मा विचिन्तय ।
अतोऽन्यथा ये पश्यन्ति न सम्यक्तेषु दर्शनम्२७
देवदानवगन्धर्वयक्षराक्षसकिंनराः
यन्न जानन्ति को ह्येष कुतो वा भगवानिति॥२८
ओमित्येकाक्षरं ब्रह्म यत्तत्सदसतः परम् ।
अनादिमध्यपर्यन्तं कूटस्थमचलं ध्रुवम् ॥ २९
योगेश्वरं पद्मनाभं विष्णुं जिष्णुं जगत्पतिम् ।
अनादिनिधनं देवं देवदेवं सनातनम् ॥ ३०
अप्रमेयमविज्ञेयं हरिं नारायणं प्रभुम् ।
कृताञ्जलिः शुचिर्भूत्वा प्रणम्य प्रयतोऽर्चयेत्॥३१
अनाद्यन्तं परं ब्रह्म न देवा ऋषयो विदुः ।
एकोयं वेद भगवांस्त्राता नारायणो हरिः ॥ ३२
नारायणादृषिगणास्ततः सिद्धा महोरगाः
देवा देवर्षयश्चैव यं विदुर्दुःखभेषजम् ॥ ३३
यमाहुर्विजितक्लेशं यस्मिंश्च विहिताः प्रजाः ।
यस्मिँल्लोकाः स्फुरन्तीमे जाले शकुनयो यथा ॥३४
सप्तर्षयो मनः सप्त साङ्ख्यास्तु मुनिदर्शनात् ।
सप्तर्षयश्चेन्द्रियाणि पञ्च बुद्धीन्द्रियाणि च ॥ ३५
श्रोत्रयोश्च दिशः प्राहुर्मनसि त्वथ चन्द्रमाः ॥३६
मनः षष्ठं बुद्धिः सप्तमी ह्यात्मनि स्थापितानि
शरीरेषु नात्मनि तस्य हि कारणानि भवन्ति सर्वा-
ण्यपि सर्वकर्मसु वा विषयेषु वा युञ्जन्ति यथात्म-
नि स्वानि कर्माणि प्रवृत्तानि सप्तस्वपि ॥ ३७
विषयाणां व्यापकत्वानि तान्येव स्वपतो भूत-
ग्रामस्याजमात्मानं देवलोकस्थानसंभितं देहान्तर-
गामिनं मुमुक्षुं वानुप्रविशन्ति सूक्ष्माणि प्रली-
यन्ते ॥ ३८
मोक्षकाले तमेकं न कश्चिद्वेत्ति स्वपरम् ।
एवं प्रविष्टेषु भूतेषु को जागर्तीत्युच्यते ॥ ३९
निद्राप्रसुप्तेषु वाऽत्र जाग्रत्स्वप्नशीलोत्रसदन्नै
च देवद्योतनो भगवांश्चात्र क्षेत्रज्ञो बुद्धिर्वाऽभिसुप्त-
स्यापि स्वप्नदर्शनानि पश्यन्ति ॥ ४०
अप्रतिबुद्धेषु लोकेषु स एव प्रतिबुध्यते । स
एष प्राज्ञः । अथ तैजसः कायाग्निः स हि
सुप्तस्यात्मा वा ॥ ४१
अविदुषो वाऽप्रतिबुध्यमानस्यान्नं पचतीत्यन्ते
वै तिष्ठति एतदात्मानमधिकृत्यानुज्ञातमिति॥४२

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि षट्षष्ट्यधिकशततमोऽध्यायः ॥ १६६ ॥

---

## सप्तषष्ट्यधिकशततमोऽध्यायः ॥ १६७ ॥

सनत्कुमारेण रुद्रंप्रति देहिदेहावयवाश्रितदेवताकथनपूर्वकं योगनिरूपणम् ॥ १ ॥

सनत्कुमार उवाच ।
प्रभवश्चाप्ययस्तात वर्णितस्तेऽनुपूर्वशः
तथाऽध्यात्माधिभूतं च तथैवात्राधिदैवतम् ॥ १
निखिलेन तु वक्ष्यामि दैवतानि ह देहिनाम् ।

यान्याश्रितेषु देहेषु यानि पृच्छामि शङ्कर ॥ २
वाच्यग्निस्त्वथ जिह्वायां सोमः प्राणे तु मारुतः ।
रूपे चाप्यथ नक्षत्रं जिह्वायां चाप एव तु ॥ ३
नाभ्यां समुद्रश्च विभुर्नखरोम तथैव च ।
वनस्पतिर्वनौषध्यस्त्वङ्गेषु मरुतस्तथा ॥ ४
संवत्सराः पर्वसु च आकाशे देवमानुषे ।
उदाने विद्युदभवद्व्याने पर्जन्य एव च ॥ ५
स्तनयोरेव चाकाशं बले चेन्द्रस्तथैव च ।
मनसोऽप्यथ चेशानस्त्वपाने रुद्र एव च ॥ ६
गन्धर्वाप्सरसो व्याने सत्ये मित्रश्च शङ्कर ।
प्रज्ञायां वरुणश्चैव चक्षुष्यादित्य एव च ॥ ७
शरीरे पृथिवी चैव पादयोर्विष्णुरेव च ।
पायौ मित्रस्तथोपस्थे प्रजापतिररिंदम ॥ ८
मूर्ध्नि चैव दिशः प्राहुर्बुद्धौ ब्रह्मा प्रतिष्ठितः ।
बुध्यमानोऽऽत्मनिष्ठः स्यादधिष्ठाता तु शङ्करः ॥९
अबुद्धश्चाभवत्तस्माद्बुध्यमानान्न संशयः ।
आभ्यामन्यः परो बुद्धो वेदवादेषु शङ्कर ॥ १०
यदाश्रितानि देहेषु दैवतानि पृथक्पृथक् ।
योऽग्नये जायते नित्यमात्मयाजी समाहितः ॥११
य एवमनुपश्येत दैवतानि समाहितः ।
सोऽत्र योगी भवत्येव य एवमनुपश्यति ।
स सर्वयज्ञयाजिभ्यो ह्यात्मयाजी विशिष्यते १२
मुखे जुहोति यो नित्यं कृत्स्नं विश्वमिदं जगत् ।
सोऽऽत्मवित्प्रोच्यते तज्ज्ञैर्महादेव महात्मभिः ॥१३
सर्वेभ्यः परमेभ्यो वै दैवतेभ्यो ह्यात्मयाजिना ।
गन्तव्यं परमाकाङ्क्षन्परमेव च चिन्तयन् ॥ १४
यथा संक्रमते देहाद्देही त्रिपुरसूदन ।
तथास्य स्थानमाख्यास्ये पृथक्त्वेनेह शङ्कर ॥१५
पादाभ्यां वैष्णवं स्थानमाप्नोति विनियोजनात् ।
पायुना मित्रमाप्नोति उपस्थेन प्रजापतिम् ॥ १६
नाभ्या च वारुणं स्थानं स्तनाभ्यां तु भवो लभेत्
बाहुभ्यां वासवं स्थानं श्रोत्राभ्यामाप्नुयाद्दिशः ।
आदित्यं चक्षुषा स्थानं मूर्ध्ना ब्रह्मण एव च ॥१७
अथ मूर्धसु यः प्राणान्धारयेत समाहितः ।
बुद्ध्या मानमवाप्नोति द्रव्यावस्थं न संशयः ॥१८
अव्यक्तात्परमं शुद्धमप्रमेयमनामयम् ।
तमाहुः परमं नित्यं यद्यदाप्नोति बुद्धिमान् ॥१९
बुध्यमानाप्रबुद्धाभ्यां स बुद्ध इति पठ्यते ।
बुध्यमानमबुद्धश्च नित्यमेवानुपश्यति ॥ २०
विकारपुरुषस्त्वेष बुध्यमान इति स्मृतः ।
पञ्चविंशतितत्त्वं तत्प्रोच्यते तत्र संशयः ॥ २१
स एष प्रकृतिस्थत्वात्तस्थुरित्युपदिश्यते ।
महानात्मा महादेव महानत्राधितिष्ठति ॥ २२
अधिष्ठानादधिष्ठाता प्रोच्यते शास्त्रदर्शनात् ।
एष चेतयते देव मोहजालमबुद्धिमान् ॥ २३
अव्यक्तस्यैव साधर्म्यमेतदाहुर्मनीषिणः ।
सोहं सोहमतो नित्यादज्ञानादिति मन्यते ॥२४
यदि बुध्यति चैवायं मन्येयमिति भास्वरः ।
न प्रबुद्धो न वर्तेत पानीयं मत्स्यको यथा ॥२५
देवता निखिलेनैताः प्रोक्तास्त्रिभुवनेश्वर ।
योगकृत्यं तु तावन्मे त्वं निबोधानुपूर्वशः ॥२६
शून्यागारेष्वरण्येषु सागरे वा गुहासु वा ।
विष्टम्भयित्वा त्रीन्दण्डानवाप्तो ह्यद्वयो भवेत् ॥२७
प्राङ्मुखोदङ्मुखो वापि तथा पश्चान्मुखोपि वा ।
दक्षिणावदनो वापि बद्ध्वा विधिवदासनम् ॥ २८
स्वस्तिकेनोपसंविष्टः कायमुन्नाम्य भास्वरम् ।
यथोपदिष्टं गुरुणा तथा तद्ब्रह्म धारयेत् ॥ २९
लघ्वाहारो यतो दान्तस्त्रिकालपरिवर्जकः ।
मूत्रोत्सर्गपुरीषाभ्यामाहारे च समाहितः ॥ ३०
शेषकालं तु युञ्जीत मनसा सुसमाहितः ।
इन्द्रियाणीन्द्रियार्थेभ्यो मनसा विनिवर्तयेत् ॥३१
मनस्तथैव संगृह्य बुद्ध्या बुद्धिमतां वर ।
विधावमानं धैर्येण विस्फुरन्तमितस्ततः ॥ ३२
निरुध्य सर्वसंकल्पांस्ततो वै स्थिरतां व्रजेत् ।

---

योऽग्निं याजयते नित्यमिति थ. पाठः ॥ ११ ॥ पञ्चविंशतिकं तत्त्वमिति थ. पाठः ॥ २१ ॥ त्रीन्दण्डानवाप्नोति च योगविदिति ट. थ पाठः ॥ २७ ॥ सप्तषष्ट्यधिकशततमोऽध्यायः ॥ १६७ ॥

एकाग्रस्तद्विजानीयात्सर्वं गुह्यतमं परम् ॥ ३३
निवातस्थ इवालोलो यथा दीपोऽतिदीप्यते ।
ऊर्ध्वमेव न तिर्यक्क तथैवाभ्रान्ति ते मनः ॥ ३४
हृदिस्थस्तिष्ठते योसौ तस्यैवाभिमुखो यदा ।
मनो भवति देवेश पोषाणमिव निश्चलम् ॥ ३५
स निर्जने विनिर्घोषे मघोषे चाऽऽवसज्जने ।
युक्तो यो न विकम्पेत योगी योगविधिः श्रुतः ३६
ततः पश्यति तद्ब्रह्म ज्वलदात्मनि संस्थितम् ।
विद्युदम्बुधरे यद्वत्तद्वदेकमनाश्रयम् ॥ ३७
तमस्यगाधे तिष्ठन्तं निस्तमस्कमचेतनम् ।
चेतयानमचेतं च दीप्यमानं स्वतेजसा ॥ ३८
अङ्गुष्ठपर्वमात्रं तन्नैश्रेयसमनिन्दितम् ।
महद्भूतमनन्तं च स्वतन्त्रं विगतज्वरम् ॥ ३९
ज्योतिषां ज्योतिषं देवं विष्णुमत्यन्तनिर्मलम् ।
नारायणमणीयांसमीश्वराणामधीश्वरम् ॥ ४०
विश्वतः परमं नित्यं विश्वं नारायणं प्रभुम् ।
अविज्ञाय निमज्जन्ति लोकाः संसारसागरे ॥४१
यं दृष्ट्वा यतयस्तात न शोचन्ति गतज्वराः ।
जन्ममृत्युभयान्मुक्तास्तीर्णाः संसारसागरम् ॥४२
अणिमा लघिमा भूमा प्राप्तिः प्राकाम्यमेव च ।
ईशित्वं च वशित्वं च यत्र कामावसायिता ।
एतदष्टगुणं योगं योगानाममितं स्मृतम् ॥ ४३
दृष्ट्वात्मानं निरात्मानमप्रमेयं सनातनम् ।
ते विशन्ति शरीराणि योगेनानेन भास्वरम् ।
दैत्यदेवमनुष्याणां बलेन बलवत्तमाः ॥ ४४
एतत्तत्वमनाद्यन्तं यद्भवाननुपृच्छति ।
नित्यं वयमुपास्मामे योगधर्मं सनातनम् ॥ ४५
योगधर्मान्न धर्मोस्ति गरीयान्सुरसत्तम ।
एतद्धर्मं हि धर्माणामपुनर्भवसंस्कृतम् ॥ ४६
तत्वतः परमस्तीस्ति केचिदाहुर्मनीषिणः ।
केचिदाहुः परं नास्ति ये ज्ञानफलमाश्रिताः ॥४७
ज्ञानस्थः पुरुषस्त्वेष विकृतः स्वेन वर्णितः ।
ये ध्यानेनानुपश्यन्ति नित्यं योगपरायणाः ॥४८
तमेव पुरुषं देवं केचिदेव महेश्वर ।
नित्यमन्यतमाः प्राहुर्ज्ञानं परमकं स्मृतम् ॥ ४९
ज्ञानमेव विनिर्मुक्ताः सांख्या गच्छन्ति केवलम् ।
चिन्ताध्यात्मनि चान्यत्र योगाः परमबुद्धयः ५०
उक्तमेतावदेतत्ते योगदर्शनमुत्तमम् ।
साङ्ख्यज्ञानं प्रवक्ष्यामि परिसंख्याविदर्शनम् ॥ ५१

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि सप्तषष्ट्यधिकशततमोऽध्यायः ॥ १६७ ॥

## अष्टषष्ट्यधिकशततमोऽध्यायः ॥ १६८ ॥

सनत्कुमारेण रुद्रंप्रति अव्यक्तादितत्वानां तारतम्यकथनपूर्वकं तत्सृष्टिलयादिकथनम् ॥ १-॥ तथा एतज्ज्ञानस्य संसार-तारकत्वोक्तिः ॥ २ ॥

'सनत्कुमार उवाच ।
इन्द्रियेभ्यो मनः पूर्वमहंकारस्ततः परम् ।
अहंकारात्परा बुद्धिर्बुद्धेः परतरं महत् ॥
महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
एतावदेतत्सांख्यानां दर्शनं देवसत्तम ॥
अव्यक्तं बुद्ध्यहंकारौ महाभूतानि पञ्च च
मनस्तथा विशेषाश्च दश चैवेन्द्रियाणि च ।
एतास्तत्वचतुर्विंशन्महापुरुषसंमिताः ॥
बुद्ध्यमानेन देवेश चेतनेन महात्मना ।
संयोगमेतयोर्नित्यमाहुरव्यक्तपुंसयोः ॥ ४
एकत्वं च बहुत्वं च सर्गप्रलयकोटिशः ।
तमःसंज्ञितमेतद्धि प्रवदन्ति त्रिशूलधृक् ॥ ५
समुत्पाद्य यथाव्यक्ताज्जीवा यान्ति पुनःपुनः ।
आदिरेष महानात्मा गुणानामिति नः प्रभो ॥६
गुणस्थत्वाद्गुणं चैनमाहुरव्यक्तलक्षणम् ।
एतेनाध्युषितो व्यक्तस्त्रिगुणं चेतयत्युत ॥ ७
अचेतनः प्रकृत्येषु न चान्यमनुबुध्यते ।
बुध्यमानो ह्यहंकारो नित्यं मानाप्रबोधनात् ॥८

विमलस्य विशुद्धस्य नीरुजस्य महात्मनः ।
विमलोदरशीलः स्याद्बुध्यमानाप्रबुद्धयोः ॥ ९
द्रष्टा भवत्यभोक्ता च सत्वमूर्तिश्च निर्गुणः ।
बुध्यमानाप्रबुद्धाभ्यामन्य एव तु निर्गुणः ॥१०
उपेक्षकः शुचिस्ताभ्यामुभाभ्यामयुतस्तथा ।
बुध्यमानो न बुध्येत बुद्धमेवं सनातनम् ॥ ११
स एव बुद्धेरव्यक्तस्वभावत्वादचेतनः ।
मोहमेव न मेऽन्योस्ति य एवमभिमन्यते ॥ १२
न मन्यते प्रमान्योस्ति येन चेतोस्म्यचेतनः ।
एवमेवाभिमन्येत बुध्यमानोप्यनात्मवान् ॥ १३
अहमेव न मेऽन्योस्ति न प्रबुद्धवशानुगः ।
अव्यक्तस्थो गुणानेष नित्यमेवाभिमन्यते ॥ १४
तेनाविष्ठिततत्वज्ञैर्महद्भिरभिधीयते ।
अहंकारेण संयुक्तस्ततस्तदभिमन्यते ॥ १५
क्षेत्रं प्रविश्य दुर्बुद्धिर्बुध्यमानो ह्यनात्मवान् ।
अहमेव सृजत्यन्यद्द्वितीयं लोकसारथिः ॥ १६
स्वभावैरहंकारैस्तृतीयं सर्गसंज्ञितम् ।
ततो भूतान्यहंकारमहंकारो मनोऽसृजत् ॥ १७
सर्वस्रोतस्यभिमुखं संप्रावर्तत बुद्धिमान् ।
तथैव यज्ञे भूतेषु विषयार्थी पुनःपुनः ।
इन्द्रियैः सह शूलाङ्क पञ्च पञ्चभिरेव च ॥ १८
मनो वेद न चात्मानमहंकारं प्रजापतिः ।
न वेद वाप्यहंकारो बुद्धिं बुद्धिमतांवर ॥ १९
एवमेते महाभाग नेतरेन्नयवादिनः ।
अहंकारेण संयुक्तः स्रोतस्यभिमुखः सदा ॥ २०
एवमेष विकारात्मा महापुरुषसंज्ञकः ।
प्रतनोति जगत्कृत्स्नं पुनराददते सकृत् ॥ २१
ससंज्ञत्वाज्जगत्कृत्स्नमव्यक्तस्य हृदि स्थितम् ।
संविशद्रजनीं कृत्स्नां निशान्ते दिवसागमे ॥ २२
पुनरात्मा विजयते बहवो निर्गुणास्तथा ।
अज्ञानेन समायुक्तः सोव्यक्तेन तमोत्मना ॥ २३
यदि ह्येषो नु मन्येत ममास्ति परतो वरः ।
स पुनः पुनरात्मानं न कुर्यादाक्षिपेत च ॥ २४
एतमव्यक्तविषयं सूक्ष्मं मन्येत बुद्धिमान् ।
पञ्चविंशं महादेव महापुरुषवैकृतम् ॥ २५
प्रबुद्धो बुद्धवानेतत्सृजमानमबुद्धवान् ।
गुणान्पुनश्च तानेव सोत्मनात्मनि निक्षिपेत् ॥२६
अव्यक्तस्य वशीभूतो योऽज्ञानस्य तमोत्मनः ।
बुध्यमानो ह्यबुद्धस्य बुद्धस्तदनुभुज्यते ॥ २७
उपेक्षकः शुचिर्व्यग्रः सोलिङ्गः सोव्रणोऽमलः ।
षड्विंशो भगवानास्ते बुद्धः शुद्धो निरामयः ॥ २८
अव्यक्तादिविशेषान्तमेतद्वैद्या वदन्त्युत ।
एतैरेव विहीनं तु केचिदाहुर्मनीषिणः ॥ २९
निस्तत्वं बुध्यमानास्तु केचिदाहुर्महामते ।
केचिदाहुर्महात्मानस्तत्वसंज्ञितमेव तु ॥ ३०
तत्वस्य श्रवणादेनं तत्वमेवं वदन्ति वै ।
सत्वसंश्रयणाच्चैव सत्ववन्तं महेश्वर ॥ ३१
एवमेष विकारात्मा बुध्यमानो महाभुज ।
अव्यक्तो भवते व्यक्तौ सत्त्वंसत्वं तथा गुणौ ।
विद्या च भवते विद्या भवेत्तु ग्रहसंज्ञितम् ॥ ३२
य एवमनुबुद्ध्यन्ते योगसाङ्ख्याश्च तत्वतः ।
तेऽव्यक्तं शङ्कगाढं मुञ्चन्ते शास्त्रबुद्धयः ॥ ३३
तेषामेतत्तु वदतां शास्त्रार्थं सूक्ष्मदर्शिनाम् ।
बुद्धिर्विस्तीर्यते सर्वं तैलबिन्दुरिवाम्भसि ॥ ३४
विद्या तु सर्वविद्यानामवबोध इति स्मृतः ।
येन विद्यामविद्यां च विन्दन्ति यतिसत्तमाः ॥ ३५
सैषा त्रयी परा विद्या चतुर्थ्यान्वीक्षिकी स्मृता ।
यां बुद्ध्यमानो बुद्ध्येत बुद्ध्यात्मनि समं गतः ३६
अप्रबुद्धमथाव्यक्तमविद्यासंज्ञिकं स्मृतम् ।
विमोहितं तु शोकेन केवलेन समन्वितम् ।
एतद्बुद्ध्या भवेद्बुद्धः किमन्यद्बुद्धिलक्षणम् ॥ ३७
ये त्वेतन्नावबुद्ध्यन्ते ते प्रबुद्धवशानुगाः ।
ते पुनःपुनरव्यक्ताज्जनिष्यन्त्यबुधात्मनः ॥ ३८
तमेव तुलयिष्यन्ति अबुद्धिवशवर्तिनः ।
ये चाप्यन्ये तन्मनसस्तेप्येतत्फलभागिनः ॥ ३९
विदित्वैनं न शोचन्ति योगोपेतार्थदर्शिनः ।
स्वातन्त्र्यं प्रतिलप्स्यन्ते केवलत्वं च भास्वरम् ४०
अज्ञानबन्धनान्मुक्तास्तीर्णाः संसारबन्धनात् ।

अज्ञानसागरं घोरमगाधं तमसंज्ञकम् ।
यत्र मज्जन्ति भूतानि पुनःपुनररिंदम ॥ ४१
एषा विद्या तथाऽविद्या कथिता ते मयाऽर्थतः ।
यस्मिन्देयं च नो ग्राह्यं सांख्याः सांख्यं तथैव च ॥
तथा चैकत्वनानात्वमक्षरं क्षरमेव च ।
निगदिष्यामि देवेश विमोक्षं त्रिविधं च ते ॥४३
बुध्यमानाप्रबुद्धाभ्यामबुद्धस्य प्रपञ्चनम् ।
भूय एव निबोध त्वं देवानां देवसत्तम ॥ ४४
यच्च किंच श्रुतं न स्यादृष्टं चैव न किंचन ।
तच्च ते संप्रवक्ष्यामि एकाग्रः शृणु तत्परः ॥४५

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि अष्टषष्ट्यधिकशततमोऽध्यायः ॥ १६८ ॥

## एकोनसप्तत्यधिकशततमोऽध्यायः ॥ १६९ ॥

सनत्कुमारेण रुद्रंप्रति प्राणिनां मरणसूचकदुर्निमित्तकथनपूर्वकं जिजीविषोमृत्युपरिहारोपायकथनम् ॥ १ ॥ तथाऽनिच्छोर्भगवद्ध्यानेन शरीरत्यागस्य पारत्रिकसुखसाधनत्वोक्तिः ॥ २ ॥ तथा भगवज्ज्ञानप्रशंसनपूर्वकं तदुपदेशपरंपराकथनम् ॥ ३ ॥

सनत्कुमार उवाच ।
अरिष्टानि प्रवक्ष्यामि तत्वेन शृणु तद्भवान् ।
मध्य उत्तरतस्तात दक्षिणामुखनिष्ठितम् ॥ १
विद्युत्संस्थानपुरुषं यदि पश्येत मानवः ।
वर्षत्रयेण जानीयाद्देहन्यासमुपस्थितम् ।
एतत्फलमरिष्टस्य शङ्कराहुर्मनीषिणः ॥ २
शुद्धमण्डलमादित्यमरश्मिमथ पश्यतः ।
वर्षार्धकेन जानीयाद्देहन्यासमुपस्थितम् ॥ ३
छिद्रां चन्द्रमसश्छायां पादावप्यनपश्यतः ।
संवत्सरेण जानीयाद्देहन्यासमुपस्थितम् ॥ ४
कनीनिकायामशिरःपुरुषं यदि पश्यति ।
जानीयात्षट्सु मासेषु देहन्यासमुपस्थितम् ॥ ५
कर्णौ पिधाय हस्ताभ्यां शब्दं न शृणुयाद्यदि ।
विजानीयात्तु मासेन देहन्यासमुपस्थितम् ॥ ६
आमगन्धमुपाघ्राति सुरभिं प्राप्य भास्वरम् ।
देवतायतनस्थोपि सप्तरात्रेण मृत्युभाक् ॥ ७
सर्वाङ्गधारणावस्थां धारयेत समाहितः ।
यथा स मृत्युं जयति नान्यथेह महेश्वर ।
यदि जीवितुमिच्छेत चिरकालं महामुने ॥ ८
अथ नेच्छेच्चिरं कालं त्यजेदात्मानमात्मना ।
केवलं चिन्तयानस्तु निष्कलं स निरामयम् ॥ ९
अथ तं निर्विकारं तु प्रकृतेः परमं शुचिः ।
पुरुषं देहसाधर्म्यं देहन्यासमुपाश्नुयात् ॥ १०
जाग्रतो हि मयोक्तानि तवारिष्टानि तत्वतः ।
धारणाच्चैव सर्वाङ्गे मृत्युं जीयात्सुरर्षभ ॥ ११
एकत्वदर्शनं भूयो नानात्वं च निबोध मे ।
अक्षरं च क्षरं चैव चतुष्टयविधानतः ॥ १२
अव्यक्तादीनि तत्वानि सर्वाण्येव महाद्युते ।
आहुश्चतुर्विंशतितमं विकारपुरुषान्वितम् ॥ १३
एकत्वदर्शनं चैव नानात्वेन वरं स्मृतम् ।
पञ्चविंशतिवर्गः स्यादपवर्गोऽजरामरः ॥ १४
स निर्विकारः पुरुषस्तत्वेनैवोपदिश्यते ।
स एव पञ्चविंशस्तु विकारः पुरुषः स्मृतः ॥ १५
यद्येष निर्विकारः स्यात्तत्वं न तु भवेद्भव ।
विकारो विद्यमानस्तु तत्वसंज्ञकमुच्यते ॥ १६
यद्येषोऽव्यक्ततां नैति व्यतिरेकान्न संशयः ।
तथा भवति निस्तत्वस्तथा सत्वस्तथागुणः ॥१७
विकारगुणसंत्यागात्प्रकृत्यन्यत्वता शुचिः ।
तदा नानात्वतामेति सर्गहीनोऽपवर्गभाक् ॥१८
बोध्यमानः प्रबुध्येत समो भवति बुद्धिमान् ।
अक्षरश्च भवत्येष यथावा च्युतवान्क्षणात् ॥ १९
अव्यक्ताव्यक्तिरुक्ता स्यान्निर्गुणस्य गुणाकरात् ।
एतदेकत्वनानात्वमक्षरः क्षर एवं च ॥ २०
व्याख्यातं तव शूलाङ्के तथारिष्टानि चैव हि ।
विमोक्षलक्षणं शेषं तदपीह ब्रवीमि ते ।
यं ज्ञात्वा यतयः प्राप्ताः केवलत्वमनामयम् ॥ २१
साङ्ख्याश्चाप्यथ योगाश्च दग्धपङ्का गतज्वराः ।
अमूर्तित्वमनुप्राप्ता निर्गुणा निर्भया भव ॥ २२

विपाप्मानो महादेव मुक्ताः संसारसागरात् ।
सरणे प्रजनादाने गुणानां प्रकृतिः सदा ।
परा प्रमत्ता सततमेतावत्कार्यकारणम् ॥ २३
असच्चैव च सच्चैव कुरुते स पुनः पुनः ।
चैतन्येन पुराणेन चेतनाचेतनात्परः ॥ २४
यस्तु चेतयते चेतो मनसा चैकबुद्धिकम् ।
स नैव सन्न चैवासन्सदसन्न च संस्मृतः ॥ २५
व्यतिरिक्तश्च शुद्धश्च सोऽन्यश्चाप्रकृतिस्तथा ।
उपेक्षकश्च प्रकृतेर्विकारपुरुषः स्मृतः ॥ २६
विकारपुरुषेणैषा संयुक्ता सृजते जगत् ।
पुनराददते चैव गुणानामन्यथात्मनि ॥ २७
मत्स्योदकात्समंज्ञातः प्रकृतेरेव कर्मणः ।
तद्वत्क्षेत्रसहस्राणि स एव प्रकरिष्यति ॥ २८
क्षेत्रप्रलयतज्ज्ञस्तु क्षेत्रज्ञ इति चोच्यते ।
सयोगो नित्य इत्याहुर्ये जनास्तत्वदर्शिनः ॥ २९
एवमेष ह्यसत्सच्च विकारपुरुषः स्मृतः ।
विकारापद्यमानं तु विकृतिं प्रवदन्ति नः ॥ ३०
यदा त्वेष विकारस्य प्रकृतानिति मन्यते ।
तदा विकारतामेति विकारान्यत्वतां व्रजेत् ॥ ३१
प्रकृत्या च विकारैश्च व्यतिरिक्तो यदा भवेत् ।
शुचि यत्परमं शुद्धं प्रतिबुद्धं सनातनम् ।
अयुक्तं निष्कलं शुद्धमव्ययं चाजरामरम् ॥ ३२
समेत्य तेन शुद्धेन बुध्यमानः स भास्वरः ।
विमोक्षं भजते व्यक्तादप्रबुद्धादचेतनात् ॥ ३३
उदुम्बराद्वा मशकः प्रलयान्निर्गतो यथा ।
तथाऽव्यक्तस्य संत्यागान्निर्ममः पञ्चविंशकः ॥ ३४
यथा पुष्करपर्णस्थो जलबिन्दुर्न संश्लिषेत् ।
तथैवाव्यक्तविषये न लिप्येत्पञ्चविंशकः ॥ ३५
आकाश इव निःसङ्गस्तथा सङ्गस्तथा वरः ।
पञ्चविंशतिमो बुद्धो बुद्धेन समतां गतः ॥ ३६
एतद्धि प्रकृतं ज्ञानं तत्वतश्च समुत्थितम् ।
पूर्वजेभ्यस्तथोत्पन्नं ब्रह्मजेभ्यस्तथानघ ॥ ३७
आदिसर्गो महाबाहो तामसेनावृतं परम् ।
प्रविष्टावयवं देवमभेद्यमजरामरम् ॥ ३८
सनकः सनन्दनश्चैव तृतीयश्च सनातनः ।
ते विदुः परमं धर्ममव्ययं व्ययधर्षणम् ॥ ३९
अव्यक्तात्परमात्सूक्ष्मादव्रणान्मूर्तिसंज्ञकात् ।
[illegible] भगवानास्ते नारायणपरायणः ॥ ४०
अस्माकं सहजातानामुत्पन्नं ज्ञानमुत्तमम् ।
एते हि मूर्तिमन्तो वै लोकान्प्रविचरामहे ॥ ४१
पुनःपुनः प्रजाता वै तत्रतत्र पिनाकधृक् ।
द्वन्द्वैर्विरज्यमानस्य ज्ञानमुत्पन्नमुत्तमम् ॥ ४२
कपिलान्मूलआचार्यात्तत्त्वबुद्धिविनिश्चयम् ।
योगसांख्यमवाप्तं मे कार्त्स्न्येन मुनिसत्तमात् ॥ ४३
तेन संबोधिताः शिष्या बहवस्तत्वदर्शिनः ।
तद्बुद्ध्वा बहवः शिष्या मयाप्येतन्निदर्शिताः ॥ ४४
जन्ममृत्युहरं तथ्यं ज्ञानं ज्ञेयं सनातनम् ।
यज्ज्ञात्वा नानुशोचन्ति तत्वज्ञाना निरिन्द्रियाः ॥
शुद्धबीजमलाश्चैव विपक्का वै निरक्षराः ।
स्वतन्त्रास्ते स्वतन्त्रेण संमिता निष्कलाः स्मृताः ॥ ४६
शाश्वताश्चाव्ययाश्चैव तमोग्राह्याश्च भास्वर ।
विपाप्मानस्तथा सर्वे सत्वस्थाश्चापि निर्व्रणाः ॥ ४७
विमुक्ताः केवलाश्चैव वीतमोहभयास्तथा ।
अमूर्तास्ते महाभाग सर्वे च विगतज्वराः ॥ ४८
हिरण्यनाभस्त्रिशिरास्तथा प्रह्लादभास्करौ ।
वसुर्विश्वावसुश्चैव सार्धं पञ्चशिखस्तथा ॥ ४९
गार्ग्योऽथासुरिरावन्त्यो गौतमो वृतं एव च ।
कात्यायनोऽथ नमुचिर्हरिश्च दमनश्च ह ॥ ५०
एते चान्ये च बहवस्तत्वमेवोपदर्शिताः ।
केचिन्मुक्ताः स्थिताः केचिच्छन्दतश्चापरे मृताः ॥
दर्शितास्त्रिविधं बन्धं विमोक्षं त्रिविधं तथा ।
अज्ञानं चैव रागश्च संयोगं प्राकृतं तथा ॥ ५२
एतेभ्यो बन्धनं प्रोक्तं विमोक्षमपि मे शृणु ।
परितस्तावता सम्यक्संबन्धो यावता कृतः ॥ ५३
कृत्स्नक्षयपरित्यागाद्विमोक्ष इति नः श्रुतिः ।

निवृत्तः सर्वसङ्गेभ्यः केवलः पुरुषोऽमलः ॥ ५४
भीष्म उवाच ।
इत्येवमुक्त्वा भगवानीश्वराय महात्मने ।
सनत्कुमारः प्रययावाकाशं समुपाश्रितः ॥ ५५

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि एकोनसप्तत्यधिकशततमोऽध्यायः ॥ १६९ ॥

---

## सप्तत्यधिकशततमोऽध्यायः ॥ १७० ॥

भीष्मेण युधिष्ठिरंप्रति तीर्थशौचनिरूपणम् ॥ १ ॥

---

युधिष्ठिर उवाच ।
यद्वरं सर्वतीर्थानां तद्ब्रवीहि पितामह ।
यत्र चैव परं शौचं तन्मे व्याख्यातुमर्हसि ॥ १
भीष्म उवाच ।
सर्वाणि खलु तीर्थानि गुणवन्ति मनीषिणः ।
यत्तु तीर्थं च शौचं च तन्मे शृणु समाहितः ॥२
अगाधे विमले शुद्धे सत्यतीर्थे धृतिह्रदे ।
स्नातव्यं मानसे तीर्थे सत्वमालम्ब्य शाश्वतम् ॥३
तीर्थशौचं तपो ज्ञानं मार्दवं सत्यमार्जवम् ।
अहिंसा सर्वभूतानामानृशंस्यं दमः शमः ॥ ४
निर्ममा निरहंकारा निर्द्वन्द्वा निष्परिग्रहाः ।
योगिनस्तीर्थभूतास्ते तीर्थं परममुच्यते ॥ ५
नारायणेऽथ रुद्रे वा भक्तिस्तीर्थं परं मतम् ।
शौचलक्षणमेतत्ते सर्वत्रैवान्ववेक्षतः ॥ ६
रजस्तमःसत्वमथो येषां निर्धूतमात्मना ।
तीर्थमाचारशुद्धिश्च स्वमार्गपरिमार्गणम् ॥ ७
सर्वत्यागेष्वभिरताः सर्वज्ञाः समदर्शिनः ।
शौचेष्वेतेष्वभिरतास्ते तीर्थशुचयोऽपि च ॥ ८
नोदकक्लिन्नगात्रस्तु स्नात इत्यभिधीयते ।
स स्नातो यो दमस्नातः स बाह्याभ्यन्तरः शुचिः ॥
अदृष्टेष्वनपेक्षा ये प्राप्तेष्वर्थेषु निर्ममाः ।
शौचमेव परं तेषां येषां नोत्पद्यते स्पृहा ॥ १०
प्रज्ञानं शौचमेवेह शरीरस्य विशेषतः ।
तथा निष्किंचनत्वं च मनसश्च प्रसन्नता ॥ ११
वृत्तं शौचं महाशौचं तीर्थशौचमतः परम् ।
ज्ञानोत्पन्नं च यच्छौचं तच्छौचं परमं स्मृतम् १२
मनसा च प्रदीप्तेन ब्रह्मज्ञानजलेन च ।
स्नाता ये मानसे तीर्थे तज्ज्ञाः क्षेत्रज्ञदर्शनाः ॥१३
समारोपितशौचस्तु नित्यं भावसमन्वितः ।
केवलं गुणसंपन्नः शुचिरेव नरः सदा ॥ १४
शरीरस्थानि तीर्थानि प्रोक्तान्येतानि भारत ।
पृथिव्यां यानि तीर्थानि पुण्यानि शृणु तान्यपि ॥
शरीरस्य यथोद्देशाः शरीरोपरि निर्मिताः ।
तथा पृथिव्या भागाश्च पुण्यानि सलिलानि च ॥
कीर्तनाच्चैव तीर्थस्य स्नानाच्च पितृतर्पणात् ।
शोध्यं हि पातकं तीर्थे पूता यान्ति सुखं दिवम् १७
परिग्रहाच्च साधूनां पृथिव्याश्चैव तेजसा ।
अतीव पुण्यभागास्ते सलिलस्य च तेजसा ॥ १८
मनसश्च पृथिव्याश्च पुण्यास्तीर्थास्तथापरे ।
उभयोरेव यः स्नायात्स सिद्धिं शीघ्रमाप्नुयात् १९
यथा फलं क्रियाहीनं क्रिया वा फलवर्जिता ।
नेह साधयते कार्यं समायुक्ता तु सिध्यति ॥ २०
एवं शरीरशौचेन तीर्थशौचेन चान्वितः ।
शुचिः सिद्धिमवाप्नोति द्विविधं शौचमुत्तमम् ॥२१

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि सप्तत्यधिकशततमोऽध्यायः ॥ १७० ॥

तत्त्वविस्त्वनहंबुद्धिस्तीर्थप्रवरमुच्यते इति झ. पाठः ॥ ७ ॥ सप्तत्यधिकशततमोऽध्यायः ॥ १७० ॥

## एकसप्तत्यधिकशततमोऽध्यायः ॥ १७१ ॥

भीष्मेण युधिष्ठिरंप्रति मार्गशीर्षादि कार्तिकान्तेषु द्वादशमासेषु द्वादशद्वादशीषु केशवादिदामोदरान्तभगवद्रूपविशेषपूजाफलविशेषकथनम् ॥ १ ॥

[युधिष्ठिर उवाच ।
सर्वेषामुपवासानां यच्छ्रेयः सुमहत्फलम् ।
यच्चाप्यसंशयं लोके तन्मे त्वं वक्तुमर्हसि ॥ १
भीष्म उवाच ।
शृणु राजन्यथा गीतं स्वयमेव स्वयंभुवा ।
यत्कृत्वा निर्वृतो भूयात्पुरुषो नात्र संशयः ॥ २
द्वादश्यां मार्गशीर्षे तु अहोरात्रेण केशवम् ।
अर्च्याश्वमेधं प्राप्नोति दुष्कृतं चास्य नश्यति ॥ ३
तथैव पौषमासे तु पूज्यो नारायणेति च ।
वाजपेयमवाप्नोति च परमां व्रजेत् ॥ ४
अहोरात्रेण द्वादश्या माघमासे तु माधवम्
राजसूयमवाप्नोति कुलं चैव समुद्धरेत् ॥ ५
तथैव फाल्गुने मासि गोविन्देति च पूजयन् ।
अतिरात्रमवाप्नोति सोमलोकं च गच्छति ॥ ६
अहोरात्रेण द्वादश्यां चैत्रे विष्णुरिति स्मरन् ।
पौण्डरीकमवाप्नोति देवलोकं च गच्छति ॥ ७
वैशाखमासे द्वादश्यां पूजयन्मधुसूदनम् ।
अग्निष्टोममवाप्नोति सोमलोकं च गच्छति ॥ ८
अहोरात्रेण द्वादश्यां ज्येष्ठे मासि त्रिविक्रमम् ।
गवां मेधमवाप्नोति अप्सरोभिश्च मोदते ॥ ९
आषाढे मासि द्वादश्यां वामनेति च पूजयन् ।
नरमेधमवाप्नोति पुण्यं च लभते महत् ॥ १०
अहोरात्रेण द्वादश्यां श्रावणे मासि श्रीधरम् ।
पञ्चयज्ञानवाप्नोति विमानस्थश्च मोदते ॥ ११
तथा भाद्रपदे मासि हृषीकेशेति पूजयन् ।
सौत्रामणिमवाप्नोति पूतात्मा भवते च हि ॥ १२
द्वादश्यामाश्विने मासि पद्मनाभेति चार्चयन् ।
गोसहस्रफलं पुण्यं प्राप्नुयान्नात्र संशयः ॥ १३
द्वादश्यां कार्तिके मासि पूज्यो दामोदरेति च ।
गवां यज्ञमवाप्नोति पुमान्स्त्री वा न संशयः ॥ १४
अर्चयेत्पुण्डरीकाक्षमेवं संवत्सरं तु यः ।
जातिस्मरत्वं प्राप्नोति विन्द्याद्बहु सुवर्णकम् ॥ १५
अहन्यहनि तद्भावमुपेन्द्रं योऽधिगच्छति
समाप्ते भोजयेद्विप्रानथवा दापयेद्घृतम् ॥ १६
अतः परं नोपवासो भवतीति विनिश्चयः ।
उवाच भगवान्विष्णुः स्वयमेव पुरातनम् ॥] १७

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि एकसप्तत्यधिकशततमोऽध्यायः ॥ १७१ ॥

## द्विसप्तत्यधिकशततमोऽध्यायः ॥ १७२ ॥

भीष्मेण युधिष्ठिरंप्रति शरीरसौन्दर्यादिफलकचान्द्रव्रताचरणप्रकारकथनम् ॥ १ ॥

[वैशंपायन उवाच ।
शरतल्पगतं भीष्मं वृद्धं कुरुपितामहम् ।
उपगम्य महाप्राज्ञः पर्यपृच्छद्युधिष्ठिरः ॥ १
अङ्गानां रूपसौभाग्यं प्रियं चैव कथं भवेत् ।
धर्मार्थकामसंयुक्तः सुखभागी कथं भवेत् ॥ २
भीष्म उवाच ।
मार्गशीर्षस्य मासस्य चन्द्रे मूलेन संयुते ।
पादौ मूलेन राजेन्द्र जङ्घायामथ रोहिणीम् ॥ ३

अर्च्य अभ्यर्च्य ॥ ३ ॥ एकसप्तत्यधिकशततमोऽध्यायः ॥ १७१ ॥

इष्टकामनासिद्ध्यर्थं चान्द्रव्रतमाह मार्गेति । मार्गशीर्षशुक्लप्रतिपदि मूलनक्षत्रयोगे सतीद चान्द्र व्रतमारभेत । तत्र चन्द्रावयवेषु नक्षत्राणि न्यसेत् पादौ मूलेनेत्यादिना । स्वदेवतासहितेन मूलेन चन्द्रस्य पादौ कल्पयेदित्यर्थः । एव रोहिण्यादिभिः सदेवताभिर्जङ्घादयः कल्पनीयाः । सर्वत्र विभक्तिव्यत्यय आर्षः ॥ ३ ॥

* एतदाद्यध्यायद्वय झ. पुस्तक एव दृश्यते

अश्विन्यां सक्थिनी चैव ऊरू चाषाढयोस्तथा ।
गुह्यं तु फाल्गुनी विद्यात्कृत्तिका कटिकास्तथा ॥४
नाभिं भाद्रपदे विद्याद्रेवत्यामक्षिमण्डलम् ।
पृष्ठमेव धनिष्ठासु अनुराधोत्तरास्तथा ॥ ५
बाहुभ्यां तु विशाखासु हस्तौ हस्तेन निर्दिशेत् ।
पुनर्वस्वङ्गुली राजन्नाश्लेषासु नखास्तथा ॥ ६
ग्रीवां ज्येष्ठा च राजेन्द्र श्रवणेन तु कर्णयोः ।
मुखं पुष्येण दानेन दन्तोष्ठौ स्वातिरुच्यते ॥ ७
हासं शतभिषां चैव मघां चैवाथ नासिकाम् ।
नेत्रे मृगशिरो विद्याल्ललाटं मित्रमेव तु ॥ ८
भरण्यां तु शिरो विद्यात्केशानार्द्रां नराधिप ।
समाप्ते तु घृतं दद्याद्ब्राह्मणे वेदपारगे ॥ ९
सुभगो दर्शनीयश्च ज्ञानभाग्यथ जायते ।
जायते परिपूर्णाङ्गः पौर्णमास्येव चन्द्रमाः ॥] १०

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि द्विसप्तत्यधिकशततमोऽध्यायः ॥ १७२ ॥

---

## त्रिसप्तत्यधिकशततमोऽध्यायः ॥ १७३ ॥

बृहस्पतिना युधिष्ठिरंप्रति देहिनां जननादिप्रकारनिरूपणम् ॥ १ ॥ तथा प्राणिनां दुष्कर्मविशेषफलतया तिर्यग्योनिविशेषेषु जननकथनम् ॥ २ ॥

युधिष्ठिर उवाच ।
पितामह महाप्राज्ञ सर्वशास्त्रविशारद ।
श्रोतुमिच्छामि मर्त्यानां संसारविधिमुत्तमम् ॥ १
केन वृत्तेन राजेन्द्र वर्तमाना नरा भुवि ।
प्राप्नुवन्त्युत्तमं स्वर्गं कथं च नरकं नृप ॥ २
मृतं शरीरमुत्सृज्य काष्ठलोष्टसमं जनाः ।
प्रयान्त्यमुं लोकमितः को वैताननुगच्छति ॥३
भीष्म उवाच ।
दूरादायाति भगवान्बृहस्पतिरुदारधीः ।
पृच्छैनं सुमहाभागमेतद्गुह्यं सनातनम् ॥ ४
नैतदन्येन शक्यं हि वक्तुं केनचिदद्य वै ।
वक्ता बृहस्पतिसमो न ह्यन्यो विद्यते क्वचित् ॥ ५
वैशंपायन उवाच ।
तयोः संवदतोरेवं पार्थगाङ्गेययोस्तदा ।
आजगाम विशुद्धात्मा भगवान्स बृहस्पतिः ॥ ६
ततो राजा समुत्थाय धृतराष्ट्रपुरोगमः ।
पूजामनुपमां चक्रे सर्वे ते च सभासदः ॥ ७
ततो धर्मसुतो राजा भगवन्तं बृहस्पतिम् ।
उपगम्य यथान्यायं प्रश्नं पप्रच्छ तत्त्वतः ॥ ८
भगवन्सर्वधर्मज्ञ सर्वशास्त्रविशारद ।
मर्त्यस्य कः सहायो वै पिता माता सुतो गुरुः ।
ज्ञातिसंबन्धिवर्गश्च मित्रवर्गस्तथैव च ॥ ९
मृतं शरीरमुत्सृज्य काष्ठलोष्टसमं जनाः ।
गच्छन्त्यमुं च लोकं वै क एताननुगच्छति ॥ १०
बृहस्पतिरुवाच ।
एकः प्रसूयते राजन्नेक एव विनश्यति ।
एकस्तरति दुर्गाणि गच्छत्येकस्तु दुर्गतिम् ॥ ११
न सहायः पिता माता तथा भ्राता सुतो गुरुः ।
ज्ञातिसंबन्धिवर्गश्च मित्रवर्गस्तथैव च ॥ १२
मृतं शरीरमुत्सृज्य काष्ठलोष्टसमं जनाः ।
मुहूर्तमुपयुज्याथ ततो यान्ति पराङ्मुखाः ॥ १३
तैस्तच्छरीरमुत्सृष्टं धर्म एकोऽनुगच्छति ।
तस्माद्धर्मः सहायार्थे सेवितव्यः सदा नृपः ॥१४
प्राणी धर्मसमायुक्तो गच्छेत्स्वर्गगतिं पराम् ।
तथैवाधर्मसंयुक्तो नरकं चोपपद्यते ॥ १५
तस्मान्न्यायागतैरर्थैर्धर्मं सेवेत पण्डितः ।
धर्म एको मनुष्याणां सहायः पारलौकिकः॥१६
लोभान्मोहादनुक्रोशाद्भयाद्वाऽप्यबहुश्रुतः ।

---

आषाढाद्वय फाल्गुनीद्वय भाद्रपदाद्वय च ज्ञेयम् ॥ ४ ॥ एवं कुर्वन्विकलाङ्गोऽपि पौर्णमास्या सकलाङ्गो भवति एतत्सदृष्टान्तमाह परिपूर्णाङ्ग इति ॥ १० ॥

द्विसप्तत्यधिकशततमोऽध्यायः ॥ १७२ ॥
व रोदित्वेति झ. पाठ ॥ १३ ॥

नरः करोत्यकार्याणि परार्थे लोभमोहितः ॥ १७
धर्मश्चार्थश्च कामश्च त्रितयं जीविते फलम् ।
एतत्त्रयमवाप्तव्यमधर्मपरिवर्जितम् ॥ १८
युधिष्ठिर उवाच ।
श्रुतं भगवतो वाक्यं धर्मयुक्तं परं हितम् ।
शरीरनिश्चयं ज्ञातुं बुद्धिस्तु मम जायते ॥ १९
मृतं शरीरं हि नृणां सूक्ष्ममव्यक्ततां गतम् ।
अचक्षुर्विषयं प्राप्तं कथं धर्मोऽनुगच्छति ॥ २०
बृहस्पतिरुवाच ।
पृथिवी वायुराकाशमापो ज्योतिरनन्तरम् ।
बुद्धिरात्मा च सहिता धर्मं पश्यन्ति नित्यदा॥ २१
प्राणिनामिह सर्वेषां साक्षिभूतं दिवानिशम् ।
एतैश्च सह धर्मोऽपि तं जीवमनुगच्छति ॥ २२
त्वगस्थि मांसं शुक्रं च शोणितं च महामते ।
शरीरं वर्जयन्त्येते जीवितेन विवर्जितम् ॥ २३
ततो धर्मसमायुक्तः स जीवः सुखमेधते ।
इह लोके परे चैव किं भूयः कथयामि ते ॥ २४
युधिष्ठिर उवाच ।
तद्दर्शितं भगवता यथा धर्मोऽनुगच्छति ।
एतत्तु ज्ञातुमिच्छामि कथं रेतः प्रवर्तते ॥ २५
बृहस्पतिरुवाच ।
अन्नमश्नन्ति यद्देवाः शरीरस्था नरेश्वर ।
पृथिवी वायुराकाशमापो ज्योतिर्मनस्तथा ॥ २६
ततस्तृप्तेषु राजेन्द्र तेषु भूतेषु पञ्चसु ।
मनःषष्ठेषु शुद्धात्मन्रेतः संपद्यते महत् ॥ २७
ततो गर्भः संभवति श्लेषात्स्त्रीपुंसयोर्नृप ।
एतत्ते सर्वमाख्यातं भूयः किं श्रोतुमिच्छसि ॥ २८
युधिष्ठिर उवाच ।
आख्यातं मे भगवता गर्भः संजायते यथा ।
यथा जातस्तु पुरुषः प्रपद्यति तदुच्यताम् ॥ २९
बृहस्पतिरुवाच ।
आसन्नमात्रः पुरुषस्तैर्भूतैरभिभूयते ।
विप्रयुक्तश्च तैर्भूतैः पुनर्यात्यपरां गतिम् ।
स च भूतसमायुक्तः प्राप्नुते जीव एव हि ॥ ३०
ततोऽस्य कर्म पश्यन्ति शुभं वा यदि वाशुभम् ।
देवताः पञ्चभूतस्थाः किं भूयः श्रोतुमिच्छसि ॥ ३१
युधिष्ठिर उवाच ।
त्वगस्थिमांसमुत्सृज्य तैश्च भूतैर्विवर्जितः ।
जीवः सह वसन्कुत्रं सुखदुःखसहः प्रभो ॥ ३२
बृहस्पतिरुवाच ।
'भोगवश्यं कर्मवश्यं यातनावश्यमित्यपि ।
एतत्त्रयाणामासाद्य कर्मतः सोऽश्नुते फलम्॥' ३३
जीवः कर्मसमायुक्तः शीघ्रं रेतस्त्वमागतः ।
स्त्रीणां पुष्पं समासाद्य सूतिकाले लभेत तत्॥ ३४
यमस्य पुरुषैः क्लेशं यमस्य पुरुषैर्वधम् ।
दुःखं संसारचक्रं च नरः क्लेशं स विन्दति ॥ ३५
इह लोके स च प्राणी जन्मप्रभृति पार्थिव ।
सुकृतं कर्म वै भुङ्क्ते धर्मस्य फलमाश्रितः ॥ ३६
यदि धर्मं यथाशक्ति जन्मप्रभृति सेवते ।
ततः स पुरुषो भूत्वा सेवते नियतं सुखम् ॥ ३७
अथान्तरा तु धर्मस्याप्यधर्ममुपसेवते ।
सुखस्यानन्तरं दुःखं स जीवोऽप्यधिगच्छति ॥ ३८
अधर्मेण समायुक्तो यमस्य विषयं गतः ।
महद्दुःखं समासाद्य तिर्यग्योनौ प्रजायते ॥ ३९
कर्मणा येन येनेह यस्यां योनौ प्रजायते ।
जीवो मोहसमायुक्तस्तन्मे निगदतः शृणु ॥ ४०
यदेतदुच्यते शास्त्रे सेतिहासे च च्छन्दसि ।
यमस्य विषयं घोरं मर्त्यो लोकः प्रपद्यते ॥ ४१
इह स्थानानि पुण्यानि देवतुल्यानि भूपते ।
तिर्यग्योन्यतिरिक्तानि गतिमन्ति च सर्वशः॥ ४२
यमस्य भवने दिव्ये ब्रह्मलोकसमे गुणैः ।
कर्मभिर्नियतैर्बद्धो जन्तुर्दुःखान्युपाश्नुते ॥ ४३
येनयेन तु भावेन कर्मणा पुरुषो गतिम् ।
प्रयाति परुषां घोरां तत्ते वक्ष्याम्यतः परम् ॥ ४४
अधीत्य चतुरो वेदान्द्विजो मोहसमन्वितः ।
पतितात्प्रतिगृह्याथ खरयोनौ प्रजायते ॥ ४५
खरो जीवति वर्षाणि दश पञ्च च भारत ।

---

जीवः स भगवन्कस्थः सुखदुःखे समश्नुते इति झ. पाठः॥ ३२॥

खरो मृतो बलीवर्दः सप्तवर्षाणि जीवति ॥ ४६
बलीवर्दो मृतश्चापि जायते ब्रह्मराक्षसः ।
ब्रह्मरक्षश्च मासांस्त्रींस्ततो जायेत ब्राह्मणः ॥ ४७
पतितं याजयित्वा तु कृमियोनौ प्रजायते ।
तत्र जीवति वर्षाणि दश पञ्च च भारत ॥ ४८
कृमिभावाद्विमुक्तस्तु ततो जायेत गर्दभः ।
गर्दभः पञ्चवर्षाणि पञ्चवर्षाणि सूकरः ॥ ४९
कुक्कुटः पञ्चवर्षाणि पञ्चवर्षाणि जम्बुकः ।
श्वा वर्षमेकं भवति ततो जायेत मानवः ॥ ५०
उपाध्यायस्त्रियः पापं शिष्यः कुर्यादबुद्धिमान् ।
स जीव इह संसारांस्त्रीनाप्नोति न संशयः ॥ ५१
वृको भवति राजेन्द्र ततः क्रव्यात्ततः खरः ।
ततः प्रेतः परिक्लिष्टः पश्चाज्जायेत ब्राह्मणः ॥५२
मनसाऽपि गुरोर्भार्यां यः शिष्यो याति पापकृत्
स उग्रान्प्रैति संसारानधर्मेणेह चेतसा ॥ ५३
श्वयोनौ तु स संभूतस्त्रीणि वर्षाणि जीवति ।
तत्रापि निधनं प्राप्तः कृमियोनौ प्रजायते ॥ ५४
कृमिभावमनुप्राप्तो वर्षमेकं तु जीवति ।
ततस्तु निधनं प्राप्तो ब्रह्मयोनौ प्रजायते ॥ ५५
यदि पुत्रसमं शिष्यं गुरुर्हन्यादकारणे ।
आत्मनः कामकारेण सोपि हिंस्रः प्रजायते ॥५६
पितरं मातरं चैव यस्तु पुत्रोऽवमन्यते ।
सोऽपि राजन्मृतो जन्तुः पूर्वं जायेत गर्दभः ॥ ५७
गर्दभत्वं तु संप्राप्य दशवर्षाणि जीवति ।
संवत्सरं तु कुम्भीरस्ततो जायेत मानवः ॥ ५८
पुत्रस्य मातापितरौ यस्य रुष्टावुभावपि ।
गुर्वपध्यानतः सोपि मृतो जायति गर्दभः ॥५९
खरो जीवति मासांस्तु दश श्वा च चतुर्दश ।
बिडालः सप्तमासांस्तु ततो जायेत मानवः ॥६०
मातापितरावाक्रुश्य शारिका संप्रजायते ।
ताडयित्वा तु तावेव जायते कच्छपो नृप ॥ ६१
कच्छपो दशवर्षाणि त्रीणि वर्षाणि शल्यकः ।
व्यालो भूत्वा च षण्मासांस्ततो जायति मानुषः६२
भर्तृपिण्डमुपाश्नन्यो राजद्विष्टानि सेवते ।
सोपि मोहसमापन्नो मृतो जायति वानरः ॥ ६३
वानरो दशवर्षाणि पञ्चवर्षाणि सूकरः ।
श्वाऽथ भूत्वा तु षण्मासांस्ततो जायति मानुषः ॥
न्यासापहर्ता तु नरो यमस्य विषयं गतः ।
यातनानां शतं गत्वा कृमियोनौ प्रजायते ॥६५
तत्र जीवति वर्षाणि दशपञ्च च भारत ।
दुष्कृतस्य क्षयं कृत्वा ततो जायति मानुषः ॥ ६६
असूयकः कुत्सितश्च चण्डालो दुःखमश्नुते ।
विश्वासहर्ता तु नरो मीनो जायति दुर्मतिः ॥ ६७
भूत्वा मीनोऽष्टमासांस्तु मृगो जायति भारत ।
मृगस्तु चतुरो मासांस्ततश्छागः प्रजायते ॥ ६८
छागस्तु निधनं प्राप्य पूर्णे संवत्सरे ततः ।
गौः स संजायते जन्तुस्ततो जायति मानुषः ॥६९
धान्यान्यवांस्तिलान्माषान्कुलत्थान्सर्षपांश्चणान् ।
कलायानथ मुद्गांश्च गोधूमानतसीस्तथा ॥ ७०
यस्तु धान्यापहर्ता च मोहाज्जन्तुरचेतनः ।
स जायते महाराज मूषिको निरपत्रपः ॥ ७१
ततः प्रेत्य महाराज मृतो जायति सूकरः ।
सूकरो जातमात्रस्तु रोगेण म्रियते नृप ॥ ७२
श्वा ततो जायते मूढः कर्मणा तेन पार्थिव ।
भूत्वा श्वा पञ्चवर्षाणि ततो जायति मानवः ॥ ७३
परदाराभिमर्शं तु कृत्वा जायति वै वृकः ।
श्वा शृगालस्ततो गृध्रो व्यालः कङ्को बकस्तथा७४
भ्रातुर्भार्यां तु पापात्मा यो धर्षयति मोहितः ।
पुंस्कोकिलत्वमाप्नोति सोऽपि संवत्सरं नृप ॥७५
सखिभार्यां गुरोर्भार्यां राजभार्यां तथैव च ।
प्रधर्षयित्वा कामाद्यो मृतो जायति सूकरः ॥ ७६
सूकरः पञ्चवर्षाणि दशवर्षाणि श्वाविधः ।
बिडालः पञ्चवर्षाणि दशवर्षाणि कुक्कुटः ॥ ७७
पिपीलिका तु मासांस्त्रीन्वानरो मासमेव तु ।
एतानासाद्य संसारान्कृमियोनौ प्रजायते ॥ ७८
तत्र जीवति मासांस्तु कृमियोनौ चतुर्दश ।

---

उपाध्यायस्य यः पापं इति झ. पाठः ॥ ५१ ॥ प्राक् श्वा भवति इति झ. पाठः ॥ ५२ ॥ कुम्भीरो नक्रः ॥ ५८ ॥

पञ्चवर्षाणि मूषिकः इति झ. पाठः ॥ ६४ ॥ ससाराणां शते इति झ. पाठः ॥ ६५ ॥

ततोऽधर्मक्षयं कृत्वा पुनर्जायति मानवः ॥ ७९
उपस्थिते विवाहे तु यज्ञे दानेऽपि वा विभो ।
मोहात्करोति यो विघ्नं स मृतो जायते कृमिः ८०
कृमिर्जीवति वर्षाणि दश पञ्च च भारत ।
अधर्मस्य क्षयं कृत्वा ततो जायति मानवः ॥ ८१
पूर्वं दत्त्वा तु यः कन्यां द्वितीये दातुमिच्छति ।
सोपि राजन्मृतो जन्तुः कृमियोनौ प्रजायते ॥ ८२
तत्र जीवति वर्षाणि त्रयोदश युधिष्ठिर ।
अधर्मसंक्षये युक्तस्ततो जायति मानवः ॥ ८३
देवकार्यमकृत्वा तु पितृकार्यमथापि वा ।
अनिर्वाप्य समश्नन्वै मृतो जायति वायसः ॥ ८४
वायसः शतवर्षाणि ततो जायति कुक्कुटः ।
जायते व्यालकश्चापि मासं तस्मात्तु मानुषः ॥ ८५
ज्येष्ठं पितृसमं चापि भ्रातरं योऽवमन्यते ।
सोऽपि मृत्युमुपागम्य क्रौञ्चयोनौ प्रजायते ॥ ८६
क्रौञ्चो जीवति वर्षं तु ततो जायति चीरकः ।
ततो निधनमापन्नो मानुषत्वमुपाश्नुते ॥ ८७
वृषलो ब्राह्मणीं गत्वा कृमियोनौ प्रजायते ।
[ततः संप्राप्य निधनं जायते सूकरः पुनः ॥ ८८
सूकरो जातमात्रस्तु रोगेण म्रियते नृप ।
श्वा ततो जायते मूढः कर्मणा तेन पार्थिव ॥ ८९
श्वा भूत्वा कृतकर्माऽसौ जायते मानुषस्ततः ।
तत्रापत्यं समुत्पाद्य मृतो जायति मूषिकः ॥ ९०
कृतघ्नस्तु मृतो राजन्यमस्य विषयं गतः ।
यमस्य पुरुषैः क्रुद्धैर्वधं प्राप्नोति दारुणम् ॥ ९१
दण्डं समुद्गरं शूलमग्निकुम्भं च दारुणम् ।
असिपत्रवनं घोरवालुकं कूटशाल्मलीम् ॥ ९२
एताश्चान्याश्च बह्वीश्च यमस्य विषयं गतः ।
यातनाः प्राप्य तत्रोग्रास्ततो वध्यति भारत ॥ ९३
ततो हतः कृतघ्नः स तत्रोग्रैर्भरतर्षभ ।
संसारचक्रमासाद्य कृमियोनौ प्रजायते ॥ ९४
कृमिर्भवति वर्षाणि दशपञ्च च भारत ।
ततो गर्भं समासाद्य तत्रैव म्रियते शिशुः ॥ ९५
ततो गर्भशतैर्जन्तुर्बहुभिः संप्रपद्यते ।
संसारांश्च बहून्गत्वा ततस्तिर्यक्षु जायते ॥ ९६
ततो दुःखमनुप्राप्य बहुवर्षगणानिह ।
स पुनर्भवसंयुक्तस्ततः कूर्मः प्रजायते ॥ ९७
दधि हृत्वा बकश्चापि प्लवो मत्स्यानसंस्कृतान् ।
चोरयित्वा तु दुर्बुद्धिर्मधुदंशः प्रजायते ॥ ९८
फलं वा मूलकं हृत्वा अपूपं वा पिपीलिकाः ।
चोरयित्वा च निष्पावं जायते हलगोलकः ॥ ९९
पायसं चोरयित्वा तु तित्तिरित्वमवाप्नुते ।
हृत्वा पिष्टमयं पूपं कुम्भोलूकः प्रजायते ॥ १००
अयो हृत्वा तु दुर्बुद्धिर्वायसो जायते नरः ।
कांस्यं हृत्वा तु दुर्बुद्धिर्हारितो जायते नरः ॥ १०१
राजतं भाजनं हृत्वा कपोतः संप्रजायते ।
हृत्वा तु काञ्चनं भाण्डं कृमियोनौ प्रजायते १०२
पत्रोर्णं चोरयित्वा तु कृकलत्वं निगच्छति ।
कौशिकं तु ततो हृत्वा नरो जायति वर्तकः १०३
अंशुकं चोरयित्वा तु शुको जायति मानवः ।
चोरयित्वा दुकूलं तु मृतो हंसः प्रजायते ॥ १०४
क्रौञ्चः कार्पासिकं हृत्वा मृतो जायति मानवः ।
चोरयित्वा नरः पट्टं त्वाविकं चैव भारत ।
क्षौमं च वस्त्रमादाय शशो जन्तुः प्रजायते ॥ १०५
वर्णान्हृत्वा तु पुरुषो मृतो जायति बर्हिणः ।
हृत्वा रक्तानि वस्त्राणि जायते जीवजीवकः १०६
वर्णकादींस्तथा गन्धांश्चोरयित्वेह मानवः ।
छुच्छुन्दरित्वमाप्नोति राजँल्लोभपरायणः ॥ १०७
तत्र जीवति वर्षाणि ततो दश च पञ्च च ।
अधर्मस्य क्षयं गत्वा ततो जायति मानुषः १०८
चोरयित्वा पयश्चापि बलाका संप्रजायते ॥ १०९
यस्तु चोरयते तैलं नरो मोहसमन्वितः ।
सोपि राजन्मृतो जन्तुस्तैलपायी प्रजायते ॥ ११०
अशस्त्रं पुरुषं हत्वा सशस्त्रः पुरुषाधमः ।
अर्थार्थी यदि वा वैरी स मृतो जायते खरः १११
खरो जीवति वर्षे द्वे ततः शस्त्रेण वध्यते ।

निष्पाव राजमाषम् । हलगोलकः दीर्घपुच्छो गोलरूपी कीटविशेषः ॥ ९९ ॥ कुम्भोलूकः उलूकजातिभेदः ॥ १०० ॥ हारितः पक्षिविशेषः ॥ १०१ ॥ पत्रोर्णं धौतकौशेयम् ॥ १०३ ॥ वर्णान् हरितालादीन् ॥ १०६ ॥

स मृतो मृगयोनौ तु नित्योद्विग्नोऽभिजायते ११२
मृगो वध्यति शस्त्रेण गते संवत्सरे तु सः ।
हतो मृगस्ततो मीनः सोपि जालेन वध्यते ११३
मासे चतुर्थे संप्राप्ते श्वापदः संप्रजायते ।
श्वापदो दशवर्षाणि द्वीपी वर्षाणि पञ्च च ॥११४
ततस्तु निधनं प्राप्तः कालपर्यायचोदितः ।
अधर्मस्य क्षयं कृत्वा ततो जायति मानुषः ११५
स्त्रियं हत्वा तु दुर्बुद्धिर्यमस्य विषयं गतः ।
बहून्क्लेशान्समासाद्य नरकानेकविंशतिम् ॥ ११६
ततः पश्चान्महाराज कृमियोनौ प्रजायते ।
कृमिर्विंशतिवर्षाणि भूत्वा जायति मानुषः ११७
भोजनं चोरयित्वा तु मक्षिका जायते नरः ।
मक्षिकासङ्घवशगो बहून्मासान्भवत्युत ॥ ११८
ततः पापक्षयं कृत्वा मानुषत्वमवाप्नुते ।
'भक्ष्यं हत्वा तु पुरुषो जालपाशः प्रजायते ११९
खाद्यं हत्वा तु पुरुषश्चीरपाशः प्रजायते ।'
धान्यं हत्वा तु पुरुषो लोमशः संप्रजायते ॥१२०
तथा पिण्याकसंमिश्रमशनं चोरयेन्नरः ।
स जायते भृतिधनो दारुणो मूषिको नरः॥१२१
दशन्वै मानुषान्नित्यं पापात्मा स विशांपते ।
घृतं हत्वा तु दुर्बुद्धिः काकमद्गुः प्रजायते ॥१२२
मत्स्यमांसमथो हत्वा काको जायति दुर्मतिः ।
लवणं चोरयित्वा तु चिरिकाकः प्रजायते ॥१२३
विश्वासेन तु निक्षिप्तं यो विनिह्नोति मानवः ।
स गतायुर्नरस्तात मत्स्ययोनौ प्रजायते ॥ १२४
मत्स्ययोनिमनुप्राप्य मृतो जायति मानुषः ।
मानुषत्वमनुप्राप्य क्षीणायुरुपपद्यते ॥ १२५
पापानि तु नराः कृत्वा तिर्यग्जायन्ति भारत ।
न चात्मनः प्रयाणान्ते धर्मं जानन्ति कंचन१२६
ये पापानि नराः कृत्वा निरस्यन्ति व्रतैः सदा ।
सुखदुःखसमायुक्ता व्यथितास्ते भवन्त्युत॥१२७
अपुमांसः प्रजायन्ते म्लेच्छाश्चापि न संशयः ।
नराः पापसमाचारा लोभमोहसमन्विताः ॥१२८
वर्जयन्ति च पापानि जन्मप्रभृति ये नराः ।
अरोगा रूपवन्तस्ते धनिनश्च भवन्त्युत ॥ १२९
स्त्रियोऽप्येतेन कल्पेन कृत्वा पापमवाप्नुयुः ।
एतेषामेव जन्तूनां भार्यात्वमुपयान्ति ताः ॥ १३०
परस्वहरणे दोषाः सर्वे एव प्रकीर्तिताः ।
एतद्धि लेशमात्रेण कथितं ते मयाऽनघ ॥ १३१
अपरस्मिन्कथायोगे भूयः श्रोष्यसि भारत ।
एतन्मया महाराज ब्रह्मणो गदतः पुरा ॥ १३२
सुरर्षीणां श्रुतं मध्ये पृष्टश्चापि यथातथम् ।
मयाऽपि तच्च कार्त्स्न्येन यथावदनुवर्णितम् ।
एतच्छ्रुत्वा महाराज धर्मे कुरु मनः सदा ॥ १३३

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि त्रिसप्तत्यधिकशततमोऽध्यायः ॥ १७३ ॥

## चतुःसप्तत्यधिकशततमोऽध्यायः ॥ १७४ ॥

बृहस्पतिना युधिष्ठिरंप्रति पश्चात्तापादेर्ब्राह्मणेभ्योऽन्नदानस्य च पापपरिहारोपायत्वकथनम् ॥ १ ॥

उवाच ।
अधर्मस्य गतिर्ब्रह्मन्कथिता मे त्वयाऽनघ ।
धर्मस्य तु गतिं श्रोतुमिच्छामि वदतांवर ॥ १
कृत्वा कर्माणि पापानि कथं यान्ति शुभां गतिम् ।
कर्मणा च कृतेनेह केन यान्ति शुभां गतिम् ॥ २
बृहस्पतिरुवाच ।
कृत्वा पापानि कर्माणि अधर्मवशमागतः ।
मनसा विपरीतेन निरयं प्रतिपद्यते ॥ ३
मोहादधर्मं यः कृत्वा पुनः समनुतप्यते ।
मनःसमाधिसंयुक्तो न स सेवेत दुष्कृतम् ॥ ४
[यथायथा मनस्तस्य दुष्कृतं कर्म गर्हते ।
तथातथा शरीरं तु तेनाधर्मेण मुच्यते ॥ ५
यदि व्याहरते राजन्विप्राणां धर्मवादिनाम् ।
ततोऽधर्मकृतात्क्षिप्रमपवादात्प्रमुच्यते ॥] ६

काकमद्गुः शृङ्गवान् जलपक्षी ॥ १२२ ॥ असंवासाः प्रजायन्ते इति झ. पाठः ॥१२८॥ त्रिसप्तत्यधिकशततमोऽध्यायः॥१७३॥

यथायथा नरः सम्यगधर्ममनुभाषते ।
समाहितेन मनसा विमुच्येत तथातथा ।
भुजङ्ग इव निर्मोकात्पूर्वभुक्ताज्जरान्वितात् ॥ ७
दत्त्वा विप्रस्य दानानि विविधानि समाहितः ।
मनःसमाधिसंयुक्तः सुगतिं प्रतिपद्यते ॥ ८
प्रदानानि तु वक्ष्यामि यानि दत्त्वा युधिष्ठिर ।
नरः कृत्वाऽप्यकार्याणि ततो धर्मेण युज्यते ॥ ९
सर्वेषामेव दानानामन्नं श्रेष्ठमुदाहृतम् ।
पूर्वमन्नं प्रदातव्यमृजुना धर्ममिच्छता ॥ १०
प्राणा ह्यन्नं मनुष्याणां तस्माज्जन्तुश्च जायते ।
अन्ने प्रतिष्ठितो लोकस्तस्मादन्नं प्रशस्यते ॥ ११
अन्नमेव प्रशंसन्ति देवर्षिपितृमानवाः ।
अन्नस्य हि प्रदानेन स्वर्गमाप्नोति मानवः ॥ १२
न्यायलब्धं प्रदातव्यं द्विजातिभ्योऽन्नमुत्तमम् ।
स्वाध्यायसमुपेतेभ्यः प्रहृष्टेनान्तरात्मना ॥ १३
यस्य ह्यन्नमुपाश्नन्ति ब्राह्मणानां शतं दश ।
हृष्टेन मनसा दत्तं न स तिर्यग्गतिर्भवेत् ॥ १४
ब्राह्मणानां सहस्राणि दश भोज्य नरर्षभ ।
नरोऽधर्मात्प्रमुच्येत योगेष्वभिरतः सदा ॥ १५
भैक्ष्येणान्नं समाहृत्य दद्यादन्नं द्विजेषु वै ।
सुवर्णदानात्पापानि नश्यन्ति सुबहून्यपि ॥ १६
दत्त्वा वृत्तिकरीं भूमिं पातकेनापि मुच्यते ।
पारायणैश्च वेदानां मुच्यते पातकैर्द्विजः ॥ १७
गायत्र्याश्चैव लक्षेण गोसहस्रस्य तर्पणात् ।
वेदार्थं ज्ञापयित्वा तु शुद्धान्विप्रान्यथार्थतः ॥ १८
सर्वत्यागादिभिश्चैव मुच्यते पातकैर्द्विजः ।
सर्वातिथ्यं परं ह्येषां तस्माद्दानं परं स्मृतम् ॥ १९
अहिंसन्ब्राह्मणस्वानि न्यायेन परिपाल्य च ।
क्षत्रियस्तरसा प्राप्तमन्नं यो वै प्रयच्छति ॥ २०
द्विजेभ्यो वेदवृद्धेभ्यः प्रयतः सुसमाहितः ।
तेनापोहति धर्मात्मन्दुष्कृतं कर्म पाण्डव ॥ २१
षड्भागपरिशुद्धं च कृषेर्भागमुपार्जितम् ।
वैश्योऽददद्द्विजातिभ्यः पापेभ्यः परिमुच्यते ॥ २२
अवाप्य प्राणसंदेहं कार्कश्येन समार्जितम् ।
अन्नं दत्त्वा द्विजातिभ्यः शूद्रः पापात्प्रमुच्यते ॥ २३
औरसेन बलेनान्नमर्जयित्वाऽविहिंसकः ।
यः प्रयच्छति विप्रेभ्यो न स दुर्गाणि पश्यति ॥ २४
न्यायेनैवाप्तमन्नं तु नरो हर्षसमन्वितः ।
द्विजेभ्यो वेदवृद्धेभ्यो दत्त्वा पापात्प्रमुच्यते ॥ २५
अन्नमूर्जस्करं लोके दत्त्वोर्जस्वी भवेन्नरः ।
सतां पन्थानमावृत्य सर्वपापैः प्रमुच्यते ॥ २६
'शूद्रान्नं नैव भोक्तव्यं विप्रैर्धर्मपरायणैः ।
आपद्येव स्वदासानां भोक्तव्यं स्वयमुद्यतैः ॥ २७
दानवद्भिः कृतः पन्था येन यान्ति मनीषिणः ।
ते हि प्राणस्य दातारस्तेभ्यो धर्मः सनातनः ॥ २८
सर्वावस्थं मनुष्येण न्यायेनान्नमुपार्जितम् ।
कार्यं पात्रागतं नित्यमन्नं हि परमा गतिः ॥ २९
अन्नस्य हि प्रदानेन नरो रौद्रं न सेवते ।
तस्मादन्नं प्रदातव्यमन्यायपरिवर्जितम् ॥ ३०
यतेद्ब्राह्मणपूर्वं हि भोक्तुमन्नं गृही सदा ।
अवन्ध्यं दिवसं कुर्यादन्नपानीयदानतः ॥ ३१
भोजयित्वा दशशतं नरो वेदविदां नृप ।
न्यायविद्धर्मविदुषामितिहासविदां तथा ॥ ३२
न याति नरकं घोरं संसारांश्च न सेवते ।
सर्वकामसमायुक्तः प्रेत्य चाप्यश्नुते सुखम् ॥ ३३
एवं सुखसमायुक्तो रमते विगतज्वरः ।
रूपवान्कीर्तिमांश्चैव धनवांश्चोपपद्यते ॥ ३४
एतत्ते सर्वमाख्यातमन्नदानफलं महत् ।
मूलमेतत्तु धर्माणां प्रदानानां च भारत ॥ ३५

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि चतुःसप्तत्यधिकशततमोऽध्यायः ॥ १७४ ॥

प्रदानेन रन्तिदेवो दिवं गतः इति झ० पाठः ॥ १२ ॥ | चतुःसप्तत्यधिकशततमोऽध्यायः ॥ १७४ ॥

## पञ्चसप्तत्यधिकशततमोऽध्यायः ॥ १७५ ॥

बृहस्पतिना युधिष्ठिरंप्रत्यहिंसाप्रशंसनम् ॥ १ ॥

युधिष्ठिर उवाच ।
अहिंसा वैदिकं कर्म ध्यानमिन्द्रियसंयमः ।
तपोऽथ गुरुशुश्रूषा किं श्रेयः पुरुषं प्रति ॥ १
बृहस्पतिरुवाच ।
सर्वाण्येतानि धर्मस्य पृथग्द्वाराणि नित्यशः ।
शृणु संकीर्त्यमानानि षडेव भरतर्षभ ॥ २
हन्त निःश्रेयसं जन्तोरहं वक्ष्याम्यनुत्तमम् ।
अहिंसापाश्रयं धर्मं दान्तो विद्वान्समाचरेत् ॥ ३
त्रिदण्डं सर्वभूतेषु निधाय पुरुषः शुचिः ।
कामक्रोधौ च संयम्य ततः सिद्धिमवाप्नुते ॥ ४
अहिंसकानि भूतानि दण्डेन विनिहन्ति यः ।
आत्मनः सुखमन्विच्छन्स प्रेत्य न सुखी भवेत् ५
आत्मोपमस्तु भूतेषु यो वै भवति पूरुषः ।
त्यक्तदण्डो जितक्रोधः स प्रेत्य सुखमेधते ॥ ६
सर्वभूतात्मभूतस्य सर्वभूतानि पश्यतः ।
देवाऽपि मार्गे मुह्यन्ति ह्यपदस्य पदैषिणः ॥ ७
न तत्परस्य संदध्यात्प्रतिकूलं यदात्मनः ।
एष सांग्राहिको धर्मः कामादन्यः प्रवर्तते ॥ ८
प्रत्याख्याने च दाने च सुखदुःखे प्रियाप्रिये ।
आत्मौपम्येन पुरुषः प्रमाणमधिगच्छति ॥ ९
यथा परः प्रक्रमते परेषु
तथा परे प्रक्रमन्ते परस्मिन् ।
निषेवते स्वसमां जीवलोके
यथा धर्मो नैपुणेनोपदिष्टः ॥ १०
वैशंपायन उवाच ।
इत्युक्त्वा तं सुरगुरुर्धर्मराजं युधिष्ठिरम् ।
दिवमाचक्रमे धीमान्पश्यतामेव नस्तदा ॥ ११

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि पञ्चसप्तत्यधिकशततमोऽध्यायः ॥ १७५ ॥

## षट्सप्तत्यधिकशततमोऽध्यायः ॥ १७६ ॥

भीष्मेण युधिष्ठिरंप्रति हिंसाया मांसभक्षणस्य च गर्हणम् ॥ १ ॥

वैशंपायन उवाच ।
ततो युधिष्ठिरो राजा शरतल्पे पितामहम्
पुनरेव महाराज पप्रच्छ वदतांवरः ॥ १
युधिष्ठिर उवाच ।
ऋषयो ब्राह्मणा देवाः प्रशंसन्ति महामते ।
अहिंसालक्षणं धर्मं वेदप्रामाण्यदर्शनात् ॥ २
कर्मणा न नरः कुर्वन्हिंसां पार्थिवसत्तम ।
वाचा च मनसा चैव ततो दुःखात्प्रमुच्यते ॥ ३
भीष्म उवाच ।
चतुर्विधेयं निर्दिष्टा ह्यहिंसा ब्रह्मवादिभिः ।
एकैकतोऽपि विभ्रष्टा न भवत्यरिसूदन ॥ ४
यथा सर्वश्चतुष्पाद्वै त्रिभिः पादैर्न तिष्ठति ।
तथैवेयं महीपाल कारणैः प्रोच्यते त्रिभिः ॥ ५
यथा नागपदेऽन्यानि पदानि पदगामिनाम् ।
सर्वाण्येवापिधीयन्ते पदजातानि कौञ्जरे ॥ ६
एवं लोकेष्वहिंसा तु निर्दिष्टा धर्मतः पुरा ।

सर्वेषां भूतानामात्मभूतस्याऽऽत्मदुःखेनेव परदुःखेनाप्युद्विजतः ॥ ७ ॥ हिंसितो हिनस्ति पालितः पालयति तस्मात्पालयेदेव नो हिंसयेदित्यर्थः ॥ १० ॥ पञ्चसप्तत्यधिकशततमोऽध्यायः ॥ १७५ ॥

मनसा वचसा कर्मणा भक्षणेनेति चतुर्विधा हिंसा । तत्र एकेन त्यक्ता सर्वात्मना त्यक्ता न भवति ॥ ४ ॥ नागपदे गजपदे क्षुद्रपदानामिव सर्वेषां धर्माणां समावेशो भवति अहिंसायाम् । कौञ्जरे पदे दत्ते सति सर्वाणि पदानि यथा पिधीयन्ते एव हिंसाया सर्वे धर्माः पिधीयन्ते ॥ ६ ॥

कर्मणा लिप्यते जन्तुर्वाचा च मनसाऽपि च ॥७
पूर्वं तु मनसा त्यक्त्वा त्यजेद्वाचाऽथ कर्मणा ।
'हिंसां तु नोपयुञ्जीत तथा हिंसा चतुर्विधा ॥८
काये मनसि वाक्येऽपि दोषा ह्येते प्रकीर्तिताः ।'
[न भक्षयति यो मांसं त्रिविधं स विमुच्यते ॥९
त्रिकारणं तु निर्दिष्टं श्रूयते ब्रह्मवादिभिः ।
मनो वाचि तथाऽऽस्वादे दोषा ह्येषु प्रतिष्ठिताः ॥]
न भक्षयन्त्यतो मांसं तपोयुक्ता मनीषिणः ।
दोषांस्तु भक्षणे राजन्मांसस्येह निबोध मे ॥ ११
पुत्र मांसोपमं जानन्खादते यो विचेतनः ।
मांसं मोहसमायुक्तः पुरुषः सोऽधमः स्मृतः॥१२
पितृमातृसमायोगे पुत्रत्वं जायते यथा ।
हिंसां कृत्वाऽवशः पापो भूयिष्ठं जायते तथा१३
रसश्च हृदि जिह्वाया ज्ञानं प्रज्ञायते यथा ।
तथा शास्त्रेषु नियतं रागो ह्यास्वादिताद्भवेत् १४
संस्कृतासंस्कृताः पक्का लवणालवणास्तथा ।
प्रजायन्ते यथा भावास्तथा चित्तं निरुध्यते ॥१५
भेरीमृदङ्गशब्दांश्च तन्त्रीशब्दांश्च पुष्कलान् ।
निषेविष्यन्ति वै मन्दा मांसभक्षाः कथं नराः १६
'परेषां धनधान्यानां हिंसकाः स्तावकास्तथा ।
प्रशंसकाश्च मांसस्य नित्यं स्वर्गे बहिष्कृताः ॥'१७
अचिन्तितमनिर्दिष्टमसंकल्पितमेव च ।
रसगृद्ध्याऽभिभूता ये प्रशंसन्ति फलार्थिनः १८
प्रशंसा ह्येव मांसस्य दोषकल्पफलान्विता ॥ १९
'भस्म विष्ठा कृमिर्वाऽपि निष्ठा यस्येदृशी ध्रुवा ।
स कायः परपीडाभिः कथं धार्यो विपश्चिता ॥'२०
जीवितं हि परित्यज्य बहवः साधवो जनाः ।
स्वमांसैः परमांसानि परिपाल्य दिवं गताः ॥२१
एवमेषा महाराज चतुर्भिः कारणैः स्मृता ।
अहिंसा तव निर्दिष्टा सर्वधर्मानुसंहिता ॥ २२

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि षट्सप्तत्यधिकशततमोऽध्यायः ॥ १७६ ॥

## सप्तसप्तत्यधिकशततमोऽध्यायः ॥ १७७ ॥

**भीष्मेण युधिष्ठिरंप्रति मांसभक्षणाभक्षणयोः क्रमेण निन्दाप्रशंसने ॥ १ ॥**

उवाच ।
अहिंसा परमो धर्म इत्युक्तं बहुशस्त्वया ।
श्राद्धेषु च भवानाह पितॄणां मांसमीप्सितम् ॥१
मांसैर्बहुविधैः प्रोक्तस्त्वया श्राद्धविधिः पुरा ।
अहत्वा च कुतो मांसमेवमेतद्विरुध्यते ॥ २
जातो नः संशयो धर्मे मांसस्य परिवर्जने ।
दोषो भक्षयतः कः स्यात्कश्चाभक्षयतो गुणः ॥ ३
हत्वा भक्षयतो वाऽपि परेणोपहृतस्य वा ।
हन्याद्वा यः परस्यार्थे क्रीत्वा वा भक्षयेन्नरः ॥ ४
एतदिच्छामि तत्त्वेन कथ्यमानं त्वयाऽनघ ।
निश्चयेन चिकीर्षामि धर्ममेतं सनातनम् ॥ ५
कथमायुरवाप्नोति कथं भवति सत्त्ववान् ।
कथमव्यङ्गतामेति लक्षण्यो जायते कथम् ॥ ६
भीष्म उवाच ।
मांसस्याभक्षणाद्राजन्यो धर्मः कुरुनन्दन ।
तं मे शृणु यथातत्त्वं यश्चास्य विधिरुत्तमः ॥ ७
रूपमव्यङ्गतामायुर्बुद्धिं सत्त्वं बलं स्मृतिम् ।
प्राप्तुकामैर्नरैर्हिंसा वर्जनीया कृतात्मभिः ॥ ८
ऋषीणामत्र संवादो बहुशः कुरुनन्दन ।
बभूव तेषां तु मतं यत्तच्छृणु युधिष्ठिर ॥ ९
यो यजेताश्वमेधेन मासिमासि यतव्रतः ।
वर्जयेन्मधु मांसं च सममेतद्युधिष्ठिर ॥ १०
सप्तर्षयो वालखिल्यास्तथैव च मरीचिपाः ।
मांसस्याभक्षणं राजन्प्रशंसन्ति मनीषिणः ॥ ११
न भक्षयति यो मांसं न च हन्यान्न घातयेत् ।
तन्मित्रं सर्वभूतानां मनुः स्वायंभुवोऽब्रवीत् ॥१२

यथा स्त्रीपुंयोगे नान्तरीयकं पुत्रजन्म एव हिंसकस्य भूयिष्ठं पाप-योनौ जन्मेत्यर्थः॥ १३ ॥ षट्सप्तत्यधिकशततमोऽध्यायः १७६

अधृष्यः सर्वभूतानां विश्वास्यः सर्वजन्तुषु ।
साधूनां संमतो नित्यं भवेन्मांसं विवर्जयन् ॥ १३
स्वमांसं परमांसेन यो वर्धयितुमिच्छति ।
अविश्वास्योऽवसीदेत्स इति होवाच नारदः ॥ १४
ददाति यजते चापि तपस्वी च भवत्यपि ।
मधुमांसनिवृत्त्येति प्राह चैवं बृहस्पतिः ॥ १५
मासिमास्यश्वमेधेन यो यजेत शतं समाः ।
न खादति च यो मांसं सममेतन्मतं मम ॥ १६
सदा यजति सत्रेण सदा दानं प्रयच्छति ।
सदा तपस्वी भवति मद्यमांसविवर्जनात् ॥ १७
सर्वे वेदा न तत्कुर्युः सर्वे यज्ञाश्च भारत ।
यो भक्षयित्वा मांसानि पश्चादपि निवर्तते ॥ १८
'भक्षयित्वा निमित्तेऽपि दुष्करं कुरुते तपः ।'
दुष्करं च रसज्ञेन मांसस्य परिवर्जनम् ।
चर्तुं व्रतमिदं श्रेष्ठं सर्वप्राण्यभयप्रदम् ॥ १९
सर्वभूतेषु यो विद्वान्ददात्यभयदक्षिणाम् ।
दाता भवति लोके स प्राणानां नात्र संशयः ।
एवं वै परमं धर्मं प्रशंसन्ति मनीषिणः ॥ २०
प्राणा यथाऽऽत्मनोऽभीष्टा भूतानामपि वै तथा ।
आत्मौपम्येन गन्तव्यं बुद्धिमद्भिः कृतात्मभिः ॥ २१
विकीर्णकर्णकेनापि तृणमस्पन्दने भयम् ।
किं पुनर्हन्यमानानां तरसा जीवितार्थिनाम् ।
अरोगाणामपापानां पापैर्मांसोपजीविभिः ॥ २२
मृत्युतो भयमस्तीति शङ्कायां दुःखमुत्तरम् ।
धर्मस्यायतनं तस्मान्मांसस्य परिवर्जनम् ॥ २३
अहिंसा परमो धर्मस्तथाऽहिंसा परं तपः ।
अहिंसा परमं सत्यं ततो धर्मः प्रवर्तते ॥ २४
न हि मांसं तृणात्काष्ठादुपलाद्वाऽपि जायते ।
हत्वा जन्तुं ततो मांसं तस्माद्दोषस्तु भक्षणे ॥ २५
स्वाहास्वधामृतभुजो देवाः सत्यार्जवप्रियाः ।
राक्षसेन्द्रभयान्मुक्ताः सर्वभूतपरायणाः ॥ २६
कान्तारेष्वथ घोरेषु दुर्गेषु गहनेषु च ।
रात्रावहनि सन्ध्यासु चत्वरेषु सभासु च ॥ २७
उद्यतेषु च शस्त्रेषु मृगव्यालहतेषु च ।
अमांसभक्षणाद्राजन्न भयं तेषु विद्यते ॥ २८
शरण्यः सर्वभूतानां विश्वास्यः सर्वजन्तुषु ।
अनुद्वेगकरो लोके न चाप्युद्विजते सदा ॥ २९
यदि चेत्खादको न स्यान्न तदा घातको भवेत् ।
घातकः खादकार्थाय तद्घातयति वै नरः ॥ ३०
अभक्ष्यमेतदिति वै इति हिंसा निवर्तते ।
खादकार्थमतो हिंसा मृगादीनां प्रवर्तते ॥ ३१
यस्माद्ग्रसति चैवायुर्हिंसकानां महाद्युते ।
तस्माद्विवर्जयेन्मांसं य इच्छेद्भूतिमात्मनः ॥ ३२
त्रातारं नाधिगच्छन्ति रौद्राः प्राणिविहिंसकाः ।
उद्वेजकास्तु भूतानां यथा व्यालमृगास्तथा ॥ ३३
लोभाद्वा बुद्धिमोहाद्वा बलवीर्यार्थमेव च ।
संसर्गादथ पापानामधर्मो रुचितो नृणाम् ॥ ३४
स्वमांसं परमांसेन यो वर्धयितुमिच्छति ।
उद्विग्नराष्ट्रे वसति यत्र यत्राभिजायते ॥ ३५
धन्यं यशस्यमायुष्यं स्वर्ग्यं स्वस्त्ययनं महत् ।
मांसस्याभक्षणं प्राहुर्नियताः परमर्षयः ॥ ३६
इदं तु खलु कौन्तेय श्रुतमासीत्पुरा मया ।
मार्कण्डेयस्य वदतो ये दोषा मांसभक्षणे ॥ ३७
यो हि खादति मांसानि प्राणिनां जीवितैषिणाम् ।
सदा भवति वै पापः प्राणिहन्ता तथैव सः ॥ ३८
धनेन क्रयिको हन्ति खादकश्चोपभोगतः ।
घातको वधबन्धाभ्यामित्येष त्रिविधो वधः ॥ ३९
अखादन्ननुमोदंश्च भावदोषेण मानवः ।
योऽनुमोदति हन्यन्तं सोऽपि दोषेण लिप्यते ॥ ४०
अधृष्यः सर्वभूतानामायुष्मान्निरुजः सदा ।
भवत्यभक्षयन्मांसं दयावान्प्राणिनामिह ॥ ४१
हिरण्यदानैर्गोदानैर्भूमिदानैश्च सर्वशः ।
मांसस्याभक्षणे धर्मो विशिष्ट इति नः श्रुतिः ॥ ४२
अप्रोक्षितं वृथामांसं विधिहीनं न भक्षयेत् ।
भक्षयन्निरयं याति नरो नास्त्यत्र संशयः ॥ ४३
प्रोक्षिताभ्युक्षितं मांसं तथा ब्राह्मणकाम्यया ।
अल्पदोषमिति ज्ञेयं विपरीते तु लिप्यते ॥ ४४

---

नहि कृत्स्नो वेदस्तथा तद्बोधिता यज्ञाश्च पुरुषं हिंसायां प्रवर्तयन्ति । किंतु परिसंख्याविधया निवृत्तिमेव बोधयन्तीत्यर्थः ॥ १८ ॥ व्यालमृगाः मांसादपशवः ॥ ३३ ॥ हन्यन्तं हन्यमानम् ॥ ४० ॥

खादकस्य कृते जन्तून्यो हन्यात्पुरुषाधमः ।
महादोषकरस्तत्र घातको न तु खादकः ॥ ४५
इज्यायज्ञश्रुतिकृतैर्यो मार्गैरबुधोऽधमः ।
हन्याज्जन्तून्मांसगृध्नुः स वै नरकभाङ्नरः ॥ ४६
भक्षयित्वाऽपि यो मांसं पश्चादपि निवर्तते ।
तस्यापि सुमहान्धर्मो यः पापाद्विनिवर्तते ॥ ४७
आहर्ता चानुमन्ता च विशस्ता क्रयविक्रयी ।
संस्कर्ता चोपभोक्ता च घातकाः सर्व एव ते ॥ ४८
इदमन्यत्तु वक्ष्यामि प्रमाणं विधिनिर्मितम् ।
पुराणमृषिभिर्जुष्टं वेदेषु परिनिश्चितम् ॥ ४९
प्रवृत्तिलक्षणे धर्मे फलार्थिभिरभिद्रुते ।
यथोक्तं राजशार्दूल न तु तन्मोक्षकारणम् ॥ ५०
हविर्यत्संस्कृतं मन्त्रैः प्रोक्षिताभ्युक्षितं शुचि ।
वेदोक्तेन प्रमाणेन पितॄणां प्रक्रियासु च ।
प्रवृत्तिधर्मिणा भक्ष्यं नान्यथा मनुरब्रवीत् ॥ ५१
अस्वर्ग्यमयशस्यं च रक्षोवद्भरतर्षभ ।
विधिहीनं नरः पूर्वं मांसं राजन्न भक्षयेत् ॥ ५२
य इच्छेत्पुरुषोऽत्यन्तमात्मानं निरुपद्रवम् ।
स वर्जयेत मांसानि प्राणिनामिह सर्वशः ॥ ५३
श्रूयते हि पुराकल्पे नृणां व्रीहिमयः पशुः ।
येनायजन्त विद्वांसः पुण्यलोकपरायणाः ॥ ५४
ऋषिभिः संशयं पृष्टो वसुश्चेदिपतिः पुरा ।
अभक्ष्यमपि मांसं यः प्राह भक्ष्यमिति प्रभो ॥५५
आकाशादवनिं प्राप्तस्ततः स पृथिवीपतिः ।
एतदेव पुनश्चोक्त्वा विवेश धरणीतलम् ॥ ५६
प्रजानां हितकामेन त्वगस्त्येन महात्मना ।
आरण्याः सर्वदैवत्याः प्रोक्षितास्तापसैर्मृगाः ॥५७
क्रिया ह्येवं न हीयन्ते पितृदैवतसंश्रिताः ।
प्रीयन्ते पितरश्चैव न्यायतो मांसतर्पिताः ॥ ५८
इदं तु शृणु राजेन्द्र मांसस्याभक्षणे गुणाः ।
[अभक्षणे सर्वसुखं मांसस्य मनुजाधिप ॥] ५९

यस्तु वर्षशतं पूर्णं तपस्तप्येत्सुदारुणम् ।
यश्चैव वर्जयेन्मांसं सममेतन्मतं मम ॥ ६०
कौमुद्यास्तु विशेषेण शुक्लपक्षे नराधिप ।
वर्जयेत्सर्वमांसानि धर्मो ह्यत्र विधीयते ॥ ६१
[चतुरो वार्षिकान्मासान्यो मांसं परिवर्जयेत् ।
चत्वारि भद्राण्याप्नोति कीर्तिमायुर्यशो बलम् ६२
अथवा मासमेकं वै सर्वमांसान्यभक्षयन् ।
अतीत्य सर्वदुःखानि सुखं जीवेन्निरामयः ॥ ६३
वर्जयन्ति हि मांसानि मासशः पक्षशोपि वा ।
तेषां हिंसानिवृत्तानां ब्रह्मलोको विधीयते ॥] ६४
मांसं तु कौमुदं पक्षं वर्जितं पार्थ राजभिः ।
सर्वभूतात्मभूतस्थैर्विदितार्थपरावरैः ॥ ६५
नाभागेनाम्बरीषेण गयेन च महात्मना ।
आयुषाऽथानरण्येन दिलीपरघुपूरुभिः ॥ ६६
कार्तवीर्यानिरुद्धाभ्यां नहुषेण ययातिना ।
नृगेण विष्वगश्वेन तथैव शशबिन्दुना ॥ ६७
युवनाश्वेन च तथा शिबिनौशीनरेण च ।
मुचुकुन्देन मान्धात्रा हरिश्चन्द्रेण वा विभो ॥६८
सत्यं वदत माऽसत्यं सत्यं धर्मः सनातनः ।
हरिश्चन्द्रश्चरति वै दिवि सत्येन चन्द्रवत् ॥ ६९
श्येनचित्रेण राजेन्द्र सोमकेन वृकेण च ।
रैवते रन्तिदेवेन वसुना सृञ्जयेन च ॥ ७०
एतैश्चान्यैश्च राजेन्द्र कृपेण भरतेन च ।
दुष्यन्तेन करूषेण रामालर्कनलैस्तथा ।
विरूपाश्वेन निमिना जनकेन च धीमता ॥ ७१
ऐलेन पृथुना चैव वीरसेनेन चैव ह ।
इक्ष्वाकुणा शंभुना च श्वेतेन सगरेण च ॥ ७२
अजेन धुन्धुना चैव तथैव च सुबाहुना ।
हर्यश्वेन च राजेन्द्र क्षुपेण भरतेन च ॥ ७३
एतैश्चान्यैश्च राजेन्द्र पुरा मांसं न भक्षितम् ।
शारदं कौमुदं मासं ततस्ते स्वर्गमाप्नुवन् ॥ ७४

इज्या देवपूजा यतोऽश्वमेधादिस्तिदर्थं श्रुतिकृतैर्मार्गैरपायैरबुधो यज्ञोपनिषदमजानन्मांसगृध्नुः केवलं यज्ञव्याजेन मांसं भोक्तुकामः ॥ ४६ ॥ प्रवृत्तिलक्षणो धर्मः प्रजार्थिभिरुदाहृतः । यथोक्तं राजशार्दूल नतु तन्मोक्षकाङ्क्षिणाम् । इति झ. पाठः ॥ ५० ॥ आरण्याः प्रोक्षिता इति एवमेवेंकितानारण्यानुत्सृजन्तीति श्रुतेरारण्यैर्यज्ञं कृत्वापि तेषां वधो न कृत इत्यर्थः ॥ ५७ ॥ सप्तसप्तत्यधिकशततमोऽध्यायः ॥ १७७ ॥

ब्रह्मलोके च तिष्ठन्ति ज्वलमानाः श्रियाऽन्विताः।
उपास्यमाना गन्धर्वैः स्त्रीसहस्रसमन्विताः ॥ ७५
तदेतदुत्तमं धर्ममहिंसाधर्मलक्षणम् ।
ये चरन्ति महात्मानो नाकपृष्ठे वसन्ति ते ॥ ७६
मधु मांसं च ये नित्यं वर्जयन्तीह धार्मिकाः ।
जन्मप्रभृति मद्यं च सर्वे ते मुनयः स्मृताः ॥ ७७
इमं धर्ममांसादं यश्चरेच्छ्रावयीत वा ।
अपि चेत्सुदुराचारो न जातु निरयं व्रजेत् ॥ ७८
पठेद्वा य इदं राजञ्शृणुयाद्वाऽप्यभीक्ष्णशः ।
अमांसभक्षणविधिं पवित्रमृषिपूजितम् ॥ ७९
विमुक्तः सर्वपापेभ्यः सर्वकामैर्महीयते ।
विशिष्टतां ज्ञातिषु च लभते नात्र संशयः ।
'अहिंसो दानशीलश्च मधुमांसविवर्जितः ॥' ८०
आपन्नश्चापदो मुच्येद्बद्धो मुच्येत बन्धनात् ।
मुच्येत्तथाऽऽतुरो रोगाद्दुःखान्मुच्येत दुःखितः ॥
तिर्यग्योनिं न गच्छेत रूपवांश्च भवेन्नरः ।
ऋद्धिमान्वै कुरुश्रेष्ठ प्राप्नुयाच्च महद्यशः ॥ ८२
एतत्ते कथितं राजन्मांसस्य परिवर्जने ।
प्रवृत्तौ च निवृत्तौ च विधानमृषिनिर्मितम् ॥८३

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि सप्तसप्तत्यधिकशततमोऽध्यायः ॥ १७७ ॥

---

## अष्टसप्तत्यधिकशततमोऽध्यायः ॥ १७८ ॥

भीष्मेण युधिष्ठिरंप्रति मांसगतगुणकथनपूर्वकं तद्भक्षणगर्हणम् ॥ १ ॥ तथा दयाया अहिंसायाश्च प्रशंसनम् ॥ २ ॥

---

उवाच ।
इमे वै मानवा लोके भृशं मांसेषु गृद्धिनः ।
विसृज्य विविधान्भक्ष्यान्महारक्षोगणा इव ॥ १
अपूपान्विविधाकाराञ्शाकानि विविधानि च ।
पादपात्रससंयुक्तान्न चेच्छन्ति यथाऽऽमिषम् ॥ २
तत्र मे बुद्धिरत्रैव विषये परिमुह्यते ।
न मन्ये रसतः किंचिन्मांसतोऽस्तीति किंचन ॥३
तदिच्छामि गुणाञ्श्रोतुं मांसस्याभक्षणे प्रभो
भक्षणे चैव ये दोषास्तांश्चैव पुरुषर्षभ ॥ ४
सर्वसत्त्वेन धर्मज्ञ यथावदिह धर्मतः ।
किं वा भक्ष्यमभक्ष्यं वा सर्वमेतद्वदस्व मे ॥
यथैतद्यादृशं चैव गुणा ये चास्य वर्जने ।
दोषा भक्षयतो येऽपि तन्मे ब्रूहि पितामह ॥
भीष्म उवाच ।
सर्वमेतन्महाबाहो यथा वदसि भारत ।
न मांसात्परमं किंचिद्रसतो विद्यते भुवि ॥ ७
क्षतक्षीणाभितप्तानां ग्राम्यधर्मरतात्मनाम् ।
अध्वना कर्शितानां च न मांसाद्विद्यते परम् ॥८
सद्यो वर्धयति प्राणान्पुष्टिमग्र्यां दधाति च ।
'नाशो भक्षणदोषः स्याद्दानमेव सदा मतम् ॥९
क्षुधितानां द्विजानां च सर्वेषां चापि जीवितम् ।
दत्त्वा भवति पूतात्मा श्रद्धया लोभवर्जितः ॥१०
शिक्षयन्ति न याचन्ते दर्शयन्ति स्वमूर्तिभिः ।
अवस्थेयमदानस्य मा भूदेवं भवानिति ।
दानाद्यः सुशुचिर्मांसं पुनर्नैव च भक्षयेत् ॥'११
न भक्ष्योऽभ्यधिकः कश्चिन्मांसादस्ति परंतप ।
विवर्जने तु बहवो गुणाः कौरवनन्दन ।
ये भवन्ति मनुष्याणां तान्मे निगदतः शृणु ॥१२
स्वमांसं परमांसेन यो वर्धयितुमिच्छति ।
नास्ति क्षुद्रतरस्तस्मात्स नृशंसतरो नरः ॥ १३
न हि प्राणात्प्रियतरं लोके किंचन विद्यते ।
तस्माद्दयां नरः कुर्याद्यथाऽऽत्मनि तथा परे ॥ १४
शुक्राच्च तात संभूतिर्मांसस्येह न संशयः ।
भक्षणे तु महान्दोषो मलेन स हि कल्प्यते ॥१५
'अहिंसालक्षणो धर्म इति वेदविदो विदुः ।
यदहिंस्रं भवेत्कर्म तत्कुर्यादात्मवान्नरः ॥ १६
पितृदैवतयज्ञेषु प्रोक्षितं हविरुच्यते ।'
विधिना वेददृष्टेन तद्भुक्त्वेह न दुष्यति ॥ १७
यज्ञार्थे पशवः सृष्टा इत्यपि श्रूयते श्रुतिः ।

दोषो निवृत्त्या पुण्यमुच्यत इति झ. पाठः ॥ १५ ॥

अतोऽन्यथा प्रवृत्तानां राक्षसो विधिरुच्यते॥ १८
क्षत्रियाणां तु यो दृष्टो विधिस्तमपि मे शृणु ।
वीर्येणोपार्जितं मांसं यथा भुञ्जन्न दुष्यति ॥ १९
आरण्याः सर्वदैवत्याः सर्वशः प्रोक्षिता मृगाः ।
अगस्त्येन पुरा राजन्मृगया येन पूज्यते ॥ २०
'रक्षणार्थाय भूतानां हिंस्रान्हन्यान्मृगान्पुनः ।'
नात्मानमपरित्यज्य मृगया नाम विद्यते ॥ २१
समतामुपसंगम्य रूपं हन्यान्न वा नृप ।
अतो राजर्षयः सर्वे मृगयां यान्ति भारत ।
न हि लिप्यन्ति पापेन न चैतत्पातकं भुवि॥ २२
न ह्यतः सदृशं किंचिदिह लोके परत्र च ।
यत्सर्वेष्विह भूतेषु दया कौरवनन्दन ॥ २३
न भयं विद्यते जातु नरस्येह दयावतः ।
दयावतामिमे लोकाः परे चापि तपस्विनाम्॥ २४
अभयं सर्वभूतेभ्यो यो ददाति दयापरः ।
अभयं तस्य भूतानि ददतीत्यनुशुश्रुम ॥ २५
क्षतं च स्खलितं चैव पतितं क्लिन्नमाहतम् ।
सर्वभूतानि रक्षन्ति समेषु विषमेषु च । २६
नैनं व्यालमृगा घ्नन्ति न पिशाचा न राक्षसाः ।
मुच्यते भयकालेषु मोक्षयेद्यो भये परान् ॥ २७
प्राणदानात्परं दानं न भूतं न भविष्यति ।
न ह्यात्मनः प्रियतरं किंचिदस्तीह निश्चितम् ॥२८
अनिष्टं सर्वभूतानां मरणं नाम भारत ।
मृत्युकाले हि भूतानां सद्यो जायति वेपथुः॥ २९
व्याधिजन्मजरादुःखैर्नित्यं संसारसागरे ।
जन्तवः परिवर्तन्ते मरणादुद्विजन्ति च ॥ ३०
गर्भवासेषु पच्यन्ते क्षाराम्लकटुकै रसैः ।
मूत्रस्वेदपुरीषाणां परुषैर्भृशदारुणैः ॥ ३१
जाताश्चाप्यवशास्तत्र छिद्यमानाः पुनःपुनः ।
हन्यमानाश्च दृश्यन्ते विवशा मांसगृद्धिनः ॥३२
कुम्भीपाके च पच्यन्ते तां तां योनिमुपागताः ।
आक्रम्य मार्यमाणाश्च त्रास्यन्त्यन्ये पुनःपुनः ३३
नात्मनोऽस्ति प्रियतरः पृथिवीमनुसृत्य ह ।
तस्मात्प्राणिषु सर्वेषु दयावानात्मवान्भवेत् ॥३४
सर्वमांसानि यो राजन्यावज्जीवं न भक्षयेत् ।
आश्वासं विपुलं स्थानं प्राप्नुयान्नात्र संशयः ॥३५
ये भक्षयन्ति मांसानि भूतानां जीवितैषिणाम् ।
भक्ष्यन्ते तेऽपि भूतैस्तैरिति मे नास्ति संशयः ॥३६
मां स भक्षयते यस्माद्भक्षयिष्ये तमप्यहम्
एतन्मांसस्य मांसत्वमनुबुद्ध्यस्व भारत ॥ ३७
घातको वध्यते नित्यं तथा वध्येत बन्धकः
आक्रोष्टा क्रुध्यते राजन्द्वेष्टा द्वेष्यत्वमाप्नुते ॥३८
येनयेन शरीरेण यद्यत्कर्म करोति यः ।
तेनतेन शरीरेण तत्तत्फलमुपाश्नुते ॥ ३९
अहिंसा परमो धर्मस्तथाऽहिंसा परो दमः ।
अहिंसा परमं दानमहिंसा परमं तपः ॥ ४०
अहिंसा परमो यज्ञस्तथाऽहिंसा परं फलम् ।
अहिंसा परमं मित्रमहिंसा परमं सुखम् ॥ ४१
सर्वयज्ञेषु वा दानं सर्वतीर्थेषु वा प्लुतम् ।
सर्वदानफलं वाऽपि नैतत्तुल्यमहिंसया ॥ ४२
अहिंस्रस्य तपोऽक्षय्यमहिंस्रो जयते सदा ।
अहिंस्रः सर्वभूतानां यथा माता यथा पिता ४३
एतत्फलमहिंसायां भूयश्च कुरुपुङ्गव ।
न हि शक्या गुणा वक्तुमपि वर्षशतैरपि ॥ ४४

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि अष्टसप्तत्यधिकशततमोऽध्यायः ॥ १७८ ॥

---

किंच हन्यमानात्पशोः स्ववधस्यापि संभवात् प्राणपणेनेय क्रियमाणा मृगया न दोषायेत्याह नात्मानमिति ॥ २१ ॥ मां सः पूर्वजन्मनि भक्षितवानत एव तस्य मांसमहं भक्षयिष्यामीति व्यवहारान्मांसपदनिरुक्तिः ॥ ३७ ॥ अष्टसप्तत्यधिकशततमोऽध्यायः ॥ १७८ ॥

## एकोनाशीत्यधिकशततमोऽध्यायः ॥ १७९ ॥

भीष्मेण युधिष्ठिरंप्रति कीटोपाख्यानकथनम् ॥ १ ॥ कीटेन व्यासंप्रति स्वपूर्वजन्मवृत्तान्तकथनम् ॥ २ ॥

युधिष्ठिर उवाच ।
अकामाश्च सकामाश्च ये हताः स्म महामृधे ।
कां योनिं प्रतिपन्नास्ते तन्मे ब्रूहि पितामह ॥ १
दुःखं प्राणपरित्यागः पुरुषाणां महामृधे ।
जानामि चाहं धर्मज्ञ प्राणत्यागं सुदुष्करम् ॥ २
समृद्धे वाऽसमृद्धे वा शुभे वा यदि वाऽशुभे ।
'संसारेऽस्मिन्सदा जाताः प्राणिनोऽभिरताः कथम्'
कारणं तत्र मे ब्रूहि सर्वज्ञो ह्यसि मे मतः ॥ ३
भीष्म उवाच ।
समृद्धे वाऽसमृद्धे वा शुभे वा यदि वाऽशुभे ।
संसारेऽस्मिन्समे जाताः प्राणिनः पृथिवीपते ॥४
निरता येन भावेन तत्र मे शृणु कारणम् ।
सम्यक्चायमनुप्रश्नस्त्वयोक्तस्तु युधिष्ठिर ॥ ५
अत्र ते वर्तयिष्यामि पुरावृत्तमिदं नृप ।
द्वैपायनस्य संवादं कीटस्य च युधिष्ठिर ॥ ६
ब्रह्मभूतश्चरन्विप्रः कृष्णद्वैपायनः पुरा ।
ददर्श कीटं धावन्तं शीघ्रं शकटवर्त्मनि ॥ ७
गतिज्ञः सर्वभूतानां रुतज्ञश्च शरीरिणाम् ।
सर्वज्ञस्त्वरितं दृष्ट्वा कीटं वचनमब्रवीत् ॥ ८
कीट संत्रस्तरूपोऽसि त्वरितश्चैव लक्ष्यसे ।
क्व च वासस्तदाचक्ष्व कुतस्ते भयमागतम् ॥ ९
कीट उवाच ।
शकटव्रजस्य महतो घोषं श्रुत्वा भयं मम ।
आगतं वै महाबुद्धे स्वन एष हि दारुणः ॥ १०
श्रूयते तु स मा हन्यादिति ह्यस्मादपक्रमे ।
श्वसतां च शृणोम्येनं गोवृषाणां प्रतोद्यताम् ॥११
वहतां सुमहाभारं सन्निकर्षे स्वनं प्रभो ।
नृणां च संवाहयुतां श्रूयन्ते विविधाः स्वनाः१२
वोढुमस्मद्विधेनैष न शक्यः कीटयोनिना ।
तस्मादतिक्रमाम्येष भयादस्मात्सुदारुणात् ॥ १३
दुःखं हि मृत्युर्भूतानां जीवितं च सुदुर्लभम् ।
अतो भीतः पलायामि गच्छेयं नापदं यथा ॥१४
भीष्म उवाच ।
इत्युक्तः स तु तं प्राह कुतः कीट सुखं तव ।
मरणं ते सुखं मन्ये तिर्यग्योनौ हि वर्तसे ॥ १५
शब्दं स्पर्शं रसं गन्धं भोगांश्चोच्चावचान्बहून् ।
नाभिजानासि कीट त्वं श्रेयो मरणमेव ते ॥१६
कीट उवाच ।
सर्वत्र निरतो जीव इहापि च सुखं मम ।
चेतयामि महाप्राज्ञ तस्मादिच्छामि जीवितुम् १७
इहापि विषयः सर्वो यथादेहं प्रवर्तितः ।
मनुष्यास्तिर्यगाश्चैव पृथग्भोगा विशेषतः ॥ १८
अहमासं मनुष्यो वै शूद्रो बहुधनः प्रभो ।
अब्रह्मण्यो नृशंसश्च कदर्यो वृद्धिजीवनः ॥ १९
वाक्श्लक्ष्णो ह्यकृतप्रज्ञो द्वेष्टा विश्वस्य कर्मणः ।
मिथोगुप्तनिधिर्नित्यं परस्वहरणे रतः ॥ २०
भृत्यातिथिजनश्चापि गृहेऽपर्यशितो मया ।
मात्सर्यात्स्वादुकामेन नृशंसेन बुभुक्षता ॥ २१
देवार्थं पितृयज्ञार्थं न च श्राद्धं कृतं मया ।
न दत्तमन्नकामेषु दत्तमन्नं लुनामि च ॥ २२
गुप्तं शरणमाश्रित्य भयेषु शरणागतान् ।
त्यक्त्वाऽकस्मान्निशायां च न दत्तमभयं मया २३
धनं धान्यं प्रियान्दारान्यानं वासस्तथाऽद्भुतम् ।
श्रियं दृष्ट्वा मनुष्याणामसूयामि निरर्थकम् ॥ २४
ईर्ष्युः परसुखं दृष्ट्वा अन्यस्य न बुभूषकः ।
त्रिवर्गहन्ता चान्येषामात्मकामानुवर्तकः ॥ २५
नृशंसगुणभूयिष्ठं पुरा कर्म कृतं मया ।
स्मृत्वा तदनुतप्येऽहं हित्वा प्रियमिवात्मजम् २६
शुभानां नाभिजानामि कृतानां कर्मणां फलम् ।
माता च पूजिता वृद्धा ब्राह्मणश्चार्चितो मया २७

कदर्यो वृद्धिजीवनः इति झ. पाठः ॥ १९ ॥ न बुभूषकः अनैश्वर्यमिच्छन् ॥२५॥ एकोनाशीत्यधिकशततमोऽध्यायः १७९

मक्कजातिर्गुणोपेतः संगत्या गृहमागतः ।
अतिथिः पूजितो ब्रह्मंस्तेन मां नाजहात्स्मृतिः ॥
कर्मणामेव चैवाहं सुखाशामिव लक्षये ।
तच्छ्रोतुमहमिच्छामि त्वत्तः श्रेयस्तपोधन ॥ २९

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि एकोनाशीत्यधिकशततमोऽध्यायः ॥ १७९ ॥

## अशीत्यधिकशततमोऽध्यायः ॥ १८० ॥

व्यासेन कीटाय राज्यदानम् ॥ १ ॥

व्यास उवाच ।
शुभेन कर्मणा यद्वै तिर्यग्योनौ न मुह्यसे ।
ममैव कीट तत्कर्म येन त्वं न प्रमुह्यसे ॥ १
अहं त्वा दर्शनादेव तारयामि तपोबलात्
तपोबलाद्धि बलवद्बलमन्यन्न विद्यते ॥ २
जानामि पापैः स्वकृतैर्गतं त्वां कीट कीटताम् ।
अवाप्स्यसि परं धर्मं मानुष्ये यदि मन्यसे ॥ ३
कर्मभूमिकृतं देवा भुञ्जते तिर्यगाश्च ये ।
धन्या अपि मनुष्येषु कामार्थाश्च यथा गुणाः ॥४
वाग्बुद्धिपाणिपादैश्च समुपेता विपश्चितः ।
किमायाति मनुष्यस्य मन्दस्यार्थस्य जीवतः ॥ ५
दैवे यः कुरुते पूजां विप्राग्निशशिसूर्ययोः ।
ब्रुवन्नपि कथां पुण्यां तत्र कीट त्वमेष्यसि ।
गुणभूतानि भूतानि तत्र त्वमुपभोक्ष्यसे ।
क्रमात्तेऽहं विनेष्यामि ब्रह्मत्वं यदि चेच्छसि
भीष्म उवाच ।
स तथेति प्रतिश्रुत्य कीटः समवतिष्ठत ॥ ७
*तमृषिं द्रष्टुमगमत्सर्वास्वन्यासु योनिषु ॥ ८
श्वाविद्गोधावराहाणां तथैव मृगपक्षिणाम्
श्वपाकशूद्रवैश्यानां क्षत्रियाणां च योनिषु ॥ ९
स कीट एवमाख्यातमृषिणा सत्यवादिना ।
प्रतिस्मृत्याथ जग्राह पादौ मूर्ध्नि कृताञ्जलिः १०
कीट उवाच ।
इदं तदतुलं स्थानमीप्सितं दशभिर्गुणैः ।
यदहं प्राप्य कीटत्वमागतो राजपुत्रताम् ॥ ११
वहन्ति मामतिबलाः कुञ्जरा हेममालिनः ।
स्यन्दनेषु च काम्भोजा युक्ताः समरवाजिनः ॥१२
उष्ट्राश्वतरयुक्तानि यानानि च वहन्ति माम् ।
सबान्धवः सहामात्यश्चाश्नामि पिशिताशनम् १३
गृहेषु स्वनिवासेषु सुखेषु शयनेषु च ।
वरार्हेषु महाभाग स्वपामि च सुपूजितः ॥ १४
सर्वेष्वपररात्रेषु सूतमागधवन्दिनः ।
स्तुवन्ति मां यथा देवा महेन्द्रं प्रियवादिनः ॥१५
प्रसादात्सत्यसन्धस्य भवतोऽमिततेजसः ।
यदहं कीटतां प्राप्य स्मृतिजाता जुगुप्सिताम् ।
ननु नाशोस्ति पापस्य यन्मयोपचितं पुरा ॥ १६
[नमस्तेऽस्तु महाप्राज्ञ किं करोमि प्रशाधि माम् ।
त्वत्तपोबलनिर्दिष्टमिदं ह्यधिगतं मया ॥] १७
व्यास उवाच ।
[अर्चितोऽहं त्वया राजन्वाग्भिरद्य यदृच्छया ।
अद्य ते कीटतां प्राप्य स्मृतिर्जाता जुगुप्सिताम्]१८
शूद्रेणार्थप्रधानेन नृशंसेनाततायिना
ममैतद्दर्शनं प्राप्तं तच्च वै सुकृतं पुरा ।
तिर्यग्योनौ स्म जातेन मम चाभ्यर्चनात्तथा ॥१९
इतस्त्वं राजपुत्रत्वाद्ब्राह्मण्यं समवाप्स्यसि ।
गोब्राह्मणकृते प्राणान्हित्वाऽऽत्मीयान्रणाजिरे २०
भीष्म उवाच ।
राजपुत्रः सुखं प्राप्य ईजे चैवाप्तदक्षिणैः ।
अथ चोदीप्यत स्वर्गे प्रभूतोप्यव्ययः सुखी ॥२१

अशीत्यधिकशततमोऽध्यायः ॥ १८० ॥

तदैव कीट तत्कर्मेति क. ड. थ. पाठः ॥ १ ॥ जीवन्हि कुरुते पूजां विप्राग्न्यः शशिसूर्ययोः इति झ पाठः ॥ ६ ॥

* अत्र सप्तमश्लोकादनन्तरं सार्धश्लोको झ. पुस्तकेऽधिको दृश्यते स च शकटो व्रजंश्च सुमहानागतश्च यदृच्छया । चक्राक्रमेण भिन्नश्च कीटः प्राणान्मुमोच ह ॥ संभूतः क्षत्रियकुले प्रसादादमितौजसः । इति ।

तिर्यग्योन्याः शूद्रतामभ्युपैति
प्र। वश्य क्षात्रयत्व च वश्यः ।
वृत्तश्लाघी क्षत्रियो ब्राह्मणत्वं
स्वर्गं पुण्याद्ब्राह्मणः साधुवृत्तः ॥ २२

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि अशीत्यधिकशततमोऽध्यायः ॥ १८० ॥

## एकाशीत्यधिकशततमोऽध्यायः ॥ १८१ ॥

कीटेन व्यासचोदनया राज्यपालनपूर्वकं जन्मान्तरे ब्राह्मण्यलाभेन तपश्चर्यादिना ब्रह्मसालोक्याधिगमः ॥ १ ॥

भीष्म उवाच ।
क्षत्रधर्ममनुप्राप्तः स्मरन्नेव च वीर्यवान् ।
त्यक्त्वा हि कीटतां राजंश्चचार विपुलं तपः ॥१
तस्य धर्मार्थविदुषो दृष्ट्वा तद्विपुलं तपः ।
आजगाम द्विजश्रेष्ठः कृष्णद्वैपायनस्तदा ॥ २
व्यास उवाच ।
क्षात्रादेव व्रतात्कीट भूतानां परिपालय ।
क्षात्रं देवव्रतं ध्यायंस्ततो विप्रत्वमेष्यसि ॥
पाहि सर्वाः प्रजाः सम्यक् शुभाशुभविदात्मवान् ।
शुभैः संविभजन्कामैरशुभानां च भावनैः ॥ ४
आत्मवान्भव सुप्रीतः स्वधर्माचरणे रतः ।
क्षात्रीं तनुं समुत्सृज्य ततो विप्रत्वमेष्यसि ॥ ५
भीष्म उवाच ।
सोऽप्यरण्यादभिप्रेत्य पुनरेव युधिष्ठिर ।
महर्षेर्वचनं श्रुत्वा प्रजा धर्मेण पालयन् । ६
अचिरेणैव कालेन कीटः पार्थिवसत्तम ।
प्रजापालनधर्मेण प्रेत्य विप्रत्वमागतः ॥ ७
ततस्तं ब्राह्मणं द्रष्टुं पुनरेव महायशाः ।
आजगाम महाप्राज्ञः कृष्णद्वैपायनस्तदा ॥ ८
व्यास उवाच ।
भोभो ब्रह्मर्षभ श्रीमन्मा व्यथिष्ठाः कथंचन ।
शुभकृच्छुभयोनीषु पापकृत्पापयोनिषु ॥ ९
उपपद्यति धर्मज्ञ यथाधर्मं यथाव्रतम् ।
तस्मान्मृत्युभयात्कीट मा व्यथिष्ठाः कथंचन ।
धर्मलाभात्परं न स्यात्तस्माद्धर्मं चरोत्तमम् ॥ १०
कीट उवाच ।
सुखात्सुखतरं प्राप्तो भगवंस्त्वत्कृते ह्यहम् ।
धर्ममूलं शुभं प्राप्य पाप्मा नष्ट इहाद्य मे ॥ ११
भीष्म उवाच ।
भगवद्वचनात्कीटो ब्राह्मण्यं प्राप्य दुर्लभम् ।
अकरोत्पृथिवीं राजन्यज्ञयूपशताङ्किताम् ।
ततः सालोक्यमगमद्ब्रह्मणो ब्रह्मवित्तमः ॥ १२
अथ पापहरं कीटः पार्थ ब्रह्म सनातनम् ।
स्वकर्मफलनिर्वृत्तं व्यासस्य वचनात्तदा ॥ १३
कुरुक्षेत्रे युद्धहताः पुण्ये क्षत्रियपुङ्गवाः ।
संप्राप्तास्ते गतिं पुण्यां तन्मा त्वं शोच पुत्रक १४

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि एकाशीत्यधिकशततमोऽध्यायः ॥ १८१ ॥

## द्व्यशीत्यधिकशततमोऽध्यायः ॥ १८२ ॥

भीष्मेण युधिष्ठिरंप्रति विद्यातपोदानानां मध्ये दानप्रशंसनपरव्यासमैत्रेयसंवादानुवादः ॥ १ ॥

युधिष्ठिर उवाच ।
विद्या तपश्च दानं च किमेतेषां विशिष्यते ।
पृच्छामि त्वां सतां श्रेष्ठ तन्मे ब्रूहि पितामह ॥१
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
मैत्रेयस्य च संवादं कृष्णद्वैपायनस्य च ॥ २
कृष्णद्वैपायनो राजन्नज्ञातचरितं चरन् ।
वाराणस्यामुपातिष्ठन्मैत्रेयं स्वैरिणीकुले ॥ ३

---

मैत्रेयमपि अज्ञातचरित चरन्तमित्यर्थः । स्व ईरयति धर्माय प्रेरयति स्वैरिणी मुनिश्रेणी तस्याः कुले गृहे । स्वैरिण

तमुपच्छन्नमार्मानं ज्ञात्वा स मुनिसत्तमः ।
अर्चित्वा भोजयामास मैत्रेयोऽशनमुत्तमम् ॥ ४
तदन्नमुत्तमं भुक्त्वा गुणवत्सार्वकामिकम् ।
उत्तिष्ठमानोऽस्मयत प्रीतः कृष्णो महामनाः ॥ ५
तमुत्स्मयन्तं संप्रेक्ष्य मैत्रेयः कृष्णमब्रवीत् ।
कारणं ब्रूहि धर्मात्मन्व्यस्मयिष्ठाः कुतश्च ते ।
तपस्विनो धृतिमतः प्रमोदः समुपागतः ॥ ६
एतदिच्छामि ते विद्वन्नभिवाद्य प्रणम्य च ।
आत्मनश्च तपोभाग्यं सुखभाग्यं ममेह च ॥ ७
'तपोभाग्यान्महाभाग सुखभाग्यात्तथैव च ।'
पृथगाचरितं तात पृथगाचरितात्मनः ।
अल्पान्तरमहं मन्ये विशिष्टमपि चान्वयात् ॥ ८
व्यास उवाच
अतिच्छेदातिवादाभ्यां स्मयोऽयं समुपागतः ।
असत्यं वेदवचनं कस्माद्वेदोऽनृतं वदेत् ॥ ९
त्रीण्येव तु पदान्याहुः पुरुषस्योत्तमं प्रति ।
न द्रुह्येच्चैव दद्याच्च सत्यं चैव परान्वदेत् ॥ १०
इति वेदोक्तमृषिभिः पुरस्तात्परिकल्पितम् ।
इदानीं चैव नः कृत्यं पुरस्ताच्च परिश्रुतम् ॥ ११
अल्पोऽपि तादृशो न्यासो भवत्युत महाफलः ।
तृषिताय च यद्दत्तं हृदयेनानसूयता ॥ १२
तोषितास्त्रिदशा यत्ते दत्त्वैतद्दर्शनं मम
अजैषीर्महतो लोकान्महायज्ञैरिव प्रभो ॥ १३
ततो दानपवित्रेण प्रीतोऽस्मि तपसैव च ।
दूरात्पुण्यवतो गन्धः पुण्यस्यैव च दर्शनात् ॥ १४
पुण्यश्च वातिगन्धस्ते मन्ये कर्म विधानजम् ।
अथ कर्मार्जितस्तात यथाचैवानुलेपनात् ॥ १५
शुभं सर्वपवित्रेभ्यो दानमेव परं द्विज ।
[नोचेत्सर्वपवित्रेभ्यो दानमेव परं भवेत् ॥] १६
यानीमान्युत्तमानीह वेदोक्तानि प्रशंसति ।
तेषां श्रेष्ठतरं दानमिति मे नात्र संशयः ॥ १७
दानवद्भिः कृतः पन्था येन यान्ति मनीषिणः ।
ते हि प्राणस्य दातारस्तेषु धर्मः प्रतिष्ठितः ॥ १८
यथा वेदाः स्वधीताश्च यथा चेन्द्रियसंयमः ।
सर्वत्यागो यथा चेह तथा दानमनुत्तमम् ॥ १९
त्वं हि तात सुखादेव शुभमेष्यसि शोभनम् ।
सुखात्सुखतरप्राप्तिमाप्नुते मतिमान्नरः ॥ २०
तन्नः प्रत्यक्षमेवेदमुपलक्ष्यमसंशयम् ।
श्रीमन्तः प्राप्नुवन्त्यर्थान्दानं यज्ञं तथा सुखम् ॥
सुखादेव परं दुःखं दुःखादन्यत्परं सुखम् ।
दृश्यते हि महाप्राज्ञ नियतं वै स्वभावतः ॥ २२
विविधानीह वृत्तानि नरस्याहुर्मनीषिणः ।
पुण्यमन्यत्पापमन्यन्न पुण्यं न च पापकम् ॥ २३
न वृत्तं मन्यतेऽन्यस्य मन्यतेऽन्यस्य पातकम् ।
यथा स्वकर्मनिर्वृत्तं न पुण्यं न च पातकम् ॥ २४
यज्ञदानतपःशीला नरा वै पुण्यकर्मिणः
येऽभिद्रुह्यन्ति भूतानि ते वै पापकृतो जनाः ॥ २५
द्रव्याण्याददते चैव दुःखं यान्ति पतन्ति च ।
ततोऽन्यत्कर्म यत्किंचिन्न पुण्यं न च पातकम् २६
'नित्यं चाकृपणो भुङ्क्ते स्वजनैर्देहि याचतः
भाग्यक्षयेण क्षीयन्ते नोपभोगेन संचयाः ॥' २७
रमस्वैधस्व मोदस्व देहि दाने रमस्व च ।
न त्वामतिभविष्यन्ति वैद्या न च तपस्विनः ॥ २८

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि द्व्यशीत्यधिकशततमोऽध्यायः ॥ १८२ ॥

कुल इति थ. पाठः ॥ ३ ॥ अस्मयत विस्मय प्राप्तवान् ॥ ५ ॥ कुतश्च ते प्रमोद इति संबन्ध. ॥ ६ ॥ इच्छामि ज्ञातुमिति शेषः ॥ ७ ॥ अतिच्छेदोऽत्यन्तमन्तरं मशकेन समुद्रशोषण-मिव अतिवादस्तस्यैवार्थस्य कथनं लोके ताभ्यां विस्मयो मे भवेत् । इद स्थान क्रतुशत विना न प्राप्यत इति वेदवचनमसत्यम् । जलमात्रदानेन तव तत्प्राप्तिदर्शनात् । देशकालपात्रश्रद्धाविशेषादल्पमपि महत्तमत्व जलमौक्तिकन्यायेन प्राप्नोतीति दर्शनात् । कस्माद्वेदोऽनृत वदेदिति उक्तम् ॥ ९ ॥ द्व्यशीत्यधिकशततमोऽध्यायः ॥ १८२ ॥

## त्र्यशीत्यधिकशततमोऽध्यायः ॥ १८३ ॥

भीष्मेण युधिष्ठिरंप्रति दानादिप्रशंसापरव्यासमैत्रेयसंवादानुवादः ॥ १ ॥

भीष्म उवाच ।
एवमुक्तः प्रत्युवाच मैत्रेयः कर्मपूर्वकः
अत्यन्तं श्रीमति कुले जातः प्राज्ञो बहुश्रुतः ॥१
असंशयं महाप्राज्ञ यथैवात्थ तथैव तत् ।
अनुज्ञातश्च भवता किंचिद्ब्रूयामहं विभो ॥ २
व्यास उवाच ।
यद्यदिच्छसि मैत्रेय यावद्यावद्यथायथा ।
ब्रूहि तत्वं महाप्राज्ञ शुश्रूषे वचनं तव ॥ ३
मैत्रेय उवाच ।
निर्दोषं निर्मलं चैव वचनं सत्यसंहितम् ।
विद्यातपोभ्यां हि भवान्भावितात्मा न संशयः ४
भवतो भावितात्मत्वाल्लाभोऽयं सुमहान्मम ।
भूयो बुद्ध्याऽनुपश्यामि सुसमृद्धतपा इव ॥ ५
अपि मे दर्शनादेव भवतोऽभ्युदयो महान् ।
मन्ये भवत्प्रसादोऽयं बुद्धिकर्मस्वभावतः ॥ ६
तपः श्रुतं च योनिश्चाप्येतद्ब्राह्मण्यकारणम् ।
त्रिभिर्गुणैः समुदितः स्नातो भवति वै द्विजः॥७
अस्मिंस्तृप्ते च तृप्यन्ति पितरो दैवतानि च ।
न हि श्रुतवतां किंचिदधिकं ब्राह्मणादृते ॥ ८
'असंस्कारात्क्षत्रवैश्यौ नश्येते ब्राह्मणादृते ।
शूद्रो नश्यत्यशुश्रूषुराश्रमाणां यथार्हतः ॥' ९
[अन्धं स्यात्तम एवेदं न प्रज्ञायेत किंचन ।
चातुर्वर्ण्यं न वर्तेत धर्माधर्मावृतानृते ॥] १०
यथाहि सुकृते क्षेत्रे फलं विन्दति मानवः ।
एवं दत्त्वा श्रुतवते फलं दाता समश्नुते ॥ ११
ब्राह्मणश्चेन्न विन्देत श्रुतवृत्तोपसंहितः ।
प्रतिग्रहीता दानस्य मोघं स्याद्धनिनां धनम् १२
अन्नं ह्यविद्वान्हन्त्येवमविद्वांसं च हन्ति तत् ।
तच्चान्यं हन्ति यच्चान्यत्स भुक्त्वा हन्यतेऽबुधः १३
आहुर्ह्यन्नमदन्विद्वान्पुनर्जनयतीश्वरः ।
स चान्नाज्जायते तस्मात्सूक्ष्म एष व्यतिक्रमः १४
'ब्राह्मं ह्यनुपयोगी यो ददंश्चान्नमसंशयम् ।
यस्तारयति वै विद्वान्पितॄन्देवान्सदाऽमृतान्' १५
यदेव ददतः पुण्यं तदेव प्रतिगृह्णतः ।
न ह्येकचक्रं वर्तेत इत्येवमृषयो विदुः ॥ १६
यत्र वै ब्राह्मणाः सन्ति श्रुतवृत्तोपसंहिताः ।
तत्र दानफलं पुण्यमिह चामुत्र चाश्नुते ॥ १७
ये योनिशुद्धाः सततं तपस्यभिरता भृशम् ।
दानाध्ययनसंपन्नास्ते वै पूज्यतमाः सदा ॥ १८
तैर्हि सद्भिः कृतः पन्था देवयानो न मुह्यते ।
ते हि स्वर्गस्य नेतारो यज्ञवाहाः सनातनाः॥१९

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि त्र्यशीत्यधिकशततमोऽध्यायः ॥ १८३ ॥

---

## चतुरशीत्यधिकशततमोऽध्यायः ॥ १८४ ॥

भीष्मेण युधिष्ठिरंप्रति विद्यातपोदानप्रशंसापरव्यासमैत्रेयसंवादानुवादः ॥ १ ॥

भीष्म उवाच ।
एवमुक्तः स भगवान्मैत्रेयं प्रत्यभाषत ।
दिष्ट्यैतत्त्वं विजानासि दिष्ट्या ते बुद्धिरीदृशी १
लोको ह्ययं गुणानेव भूयिष्ठं संप्रशंसति ।

---

श्रुतं शास्त्रज्ञानम् ॥ ७ ॥ ब्राह्मणादृते इदमन्धन्तम एव स्याद्यतो वर्णधर्मादिकं तेन विना न प्रज्ञायेतेति संबन्धः ॥ ८ ॥ ईश्वरत्वाच्च क्षेत्रभूतः सन् पुनर्जनयति दात्रे अनेकगुणितं प्रयच्छतीत्यर्थः । सच दातुरन्नाज्जायते प्रजारूपेण । गृहस्थश्चेत्तत्र यस्यान्नं तस्य सन्ततिरिति सूक्ष्मो व्यतिक्रमोऽस्ति । तेन गृहस्थः परपाक नाश्नीयादिति गम्यते ॥ १४ ॥ प्रतिग्रहीत्रभावे अन्नस्य वृद्धिर्न स्यात् । वध्यभावे दातुर्दाने प्रवृत्तिर्न स्यादिति दातृप्रतिग्रहीतारौ चक्रवल्लोकतन्त्रं वहत इत्यर्थः ॥ १५ ॥ त्र्यशीत्यधिकशततमोऽध्यायः ॥ १८३ ॥

रूपमाना नयामाना धनावधामदस्तथा ॥ २
दिष्ट्या नाभिभवन्ति त्वां दैवस्तेऽयमनुग्रहः ।
तत्ते बहुगुणं दानं वर्तयिष्यामि तच्छृणु ॥ ३
यानीहागमशास्त्राणि याश्च काश्चित्प्रवृत्तयः ।
तानि वेदं पुरस्कृत्य प्रवृत्तानि यथाक्रमम् ॥ ४
अहं दानं प्रशंसामि भवानपि तपःश्रुते ।
तपः पवित्रं वेदस्य तपः स्वर्गस्य साधनम् ॥ ५
तपसा महदाप्नोति विद्यया चेति नः श्रुतम् ।
तपसैव चापनुदेद्यच्चान्यदपि दुष्कृतम् ॥ ६
यद्यद्धि किंचित्संधाय पुरुषस्तप्यते तपः ।
सर्वमेतदवाप्नोति ब्राह्मणो वेदपारगः ॥ ७
दुरन्वयं दुष्प्रधर्षं दुरापं दुरतिक्रमम् ।
सर्वं वै तपसाऽभ्येति तपो हि बलवत्तरम् ॥ ८
सुरापः स्वर्णहारी च भ्रूणहा गुरुतल्पगः ।
तपसा तरते सर्वमेनसश्च प्रमुच्यते ॥ ९
सर्वो वैद्यस्तु चक्षुष्मानपि यादृशतादृशः ।
तपस्विनं तथैवाहुस्ताभ्यां कार्यं सतां मतम्॥१०
सर्वे पूज्याः श्रुतधनास्तथैव च तपस्विनः ।
दानप्रदाः सुखं प्रेत्य प्राप्नुवन्तीह च श्रियम् ११
इमं च ब्रह्मलोकं च लोकं च बलवत्तरम् ।
अन्नदानैः सुकृतिनः प्रतिपद्यन्ति लौकिकम् १२
पूजिताः पूजयन्त्येते मानिता मानयन्ति च ।
म दाना यत्र यत्रेति सवतः संप्रणूयते ॥ १३
अकर्ता चैव कर्ता च लभते यस्य यादृशम् ।
यदि चोर्ध्वं यद्यधो वा स्वान्लोकानभियास्यति ॥
प्राप्स्यसि त्वन्नपानानि यानि दास्यसि कर्हिचित् ।
मेधाव्यसि कुले जातः श्रुतवाननृशंसवान् ॥१५
कौमारदारो व्रतवान्मैत्रेय निरतो भव ।
[एतद्गृहाण प्रथमं प्रशस्तं गृहमेधिनाम् ॥ १६
यो भर्ता वासितातुष्टो भर्तुस्तुष्टा च वासिता ।
यस्मिन्नेवं कुले सर्वं कल्याणं तत्र वर्तते ॥ १७
अद्भिर्गात्रान्मलमिव तमोऽग्निप्रभया यथा ।]
दानेन तपसा चैव विष्णोरभ्यर्चनेन च ।
'ब्राह्मणः स महाभाग तरेत्संसारसागरात् ॥ १८
स्वकर्मशुद्धसत्त्वानां तपोभिर्निर्मलात्मनाम् ।
विद्यया गतमोहानां तारणाय हरिः स्मृतः ॥१९
तदर्चनपरो नित्यं तद्भक्तस्तं नमस्कुरु ।
तद्भक्ता न विनश्यन्ति ह्यष्टाक्षरपरायणाः ॥ २०
प्रणवोपासनपराः परमार्थपरास्त्विह ।
एतैः पावय चात्मानं सर्वपापमपोह्य च ॥' २१
स्वस्ति प्राप्नुहि मैत्रेय गृहान्साधु व्रजाम्यहम् ।
एतन्मनसि कर्तव्यं श्रेय एवं भविष्यति ॥ २२
तं प्रणम्याथ मैत्रेयः कृत्वा चापि प्रदक्षिणम् ।
स्वस्ति प्राप्नोतु भगवानित्युवाच कृताञ्जलिः २३

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि चतुरशीत्यधिकशततमोऽध्यायः ॥ १८४ ॥

## पञ्चाशीत्यधिकशततमोऽध्यायः ॥ १८५ ॥

भीष्मेण युधिष्ठिरंप्रति पतिव्रताधर्मप्रतिपादकशाण्डिलीसुमनासंवादानुवादः ॥ १ ॥

युधिष्ठिर उवाच ।
स्त्रीणां हि समुदाचारं सर्वधर्मविदांवर ।
श्रोतुमिच्छाम्यहं त्वत्तस्तन्मे ब्रूहि पितामह ॥ १
भीष्म उवाच ।
सर्वज्ञां सर्वतत्त्वज्ञां देवलोके मनस्विनीम् ।
कैकेयी सुमना नाम शाण्डिलीं पर्यपृच्छत ॥ २
केन वृत्तेन कल्याणि समाचारेण केन वा ।
विधूय सर्वपापानि देवलोकं त्वमागता ॥ ३
हुताशनशिखेव त्वं ज्वलमाना स्वतेजसा ।
सुता ताराधिपस्येव प्रभया दिवमागता ॥ ४
अरजांसि च वस्त्राणि धारयन्ती गतक्लमा ।
विमानस्था शुभा भासि सहस्रगुणमोजसा ॥ ५

- वर्तयिष्यामि कथयिष्यामि ॥ ३ ॥ यः सर्ववित्स चक्षुष्मान् यादृशतादृशमपि तपस्विन तथैव चक्षुष्मन्तमेवाहुः । ताभ्यां सर्ववित्तपस्विभ्याम् ॥ १० ॥ वासिता स्त्री ॥ १७ ॥ चतुरशीत्यधिकशततमोऽध्यायः ॥ १८४ ॥

न त्वमल्पेन तपसा दानेन नियमेन वा ।
इमं लोकमनुप्राप्ता त्वं हि तत्त्वं वदस्व मे ॥ ६
इति पृष्टा सुमनया मधुरं चारुहासिनी ।
शाण्डिली निभृतं वाक्यं सुमनामिदमब्रवीत् ॥ ७
नाहं काषायवसना नापि वल्कलधारिणी ।
न च मुण्डा च जटिला भूत्वा देवत्वमागता ॥ ८
अहितानि च वाक्यानि सर्वाणि परुषाणि च ।
अप्रमत्ता च भर्तारं कदाचिन्नाहमब्रवम् ॥ ९
देवतानां पितॄणां च ब्राह्मणानां च पूजने
अप्रमत्ता सदा युक्ता श्वश्रूश्वशुरवर्तिनी ॥ १०
पैशुन्ये न प्रवर्तामि न ममैतन्मनो गतम्
अद्वारि न च तिष्ठामि चिरं न कथयामि च ॥ ११
असद्वा हसितं किंचिदहितं वाऽपि कर्मणा ।
रहस्यमरहस्यं वा न प्रवर्तामि सर्वथा ॥ १२
कार्यार्थे निर्गतं चापि भर्तारं गृहमागतम् ।
आसनेनोपसंयोज्य पूजयामि समाहिता ॥ १३
यदन्नं नाभिजानाति यद्भोज्यं नाभिनन्दति ।
भक्ष्यं वा यदि वा लेह्यं तत्सर्वं वर्जयाम्यहम् ॥ १४
कुटुंबार्थे समानीतं यत्किंचित्कार्यमेव तु ।
पुनरुत्थाय तत्सर्वं कारयामि करोमि च ॥ १५
अग्निसंरक्षणपरा गृहशुद्धिं च कारये ।
कुमारान्पालये नित्यं कुमारीं परिशिक्षये ॥ १६
आत्मप्रियाणि हित्वाऽपि गर्भसंरक्षणे रता ।
बालानां वर्जये नित्यं शापं कोपं प्रतापनम् ॥ १७
अविक्षिप्तानि धान्यानि नान्नविक्षेपणं गृहे ।
रक्तवत्स्पृहये गेहे गावः सयवसोदकाः ।
समुद्गम्य च शुद्धाऽहं भिक्षां दद्यां द्विजातिषु ॥ १८
प्रवासं यदि मे याति भर्ता कार्येण केनचित् ।
मङ्गलैर्बहुभिर्युक्ता भवामि नियता तदा ॥ १९
अञ्जनं रोचनां चैव स्नानं माल्यानुलेपनम् ।
प्रसाधनं च निष्क्रान्ते नाभिनंदामि भर्तरि ॥ २०
नोत्थापयामि भर्तारं सुखं सुप्तमहं सदा ।
आतुरेष्वपि कार्येषु तेन तुष्यति मे मनः ।
नोत्थापये सुखं सुप्तं ह्यातुरं पालये पतिम् ॥ २१
नायासयामि भर्तारं कुटुंबार्थेऽपि सर्वदा ।
गुप्तगुह्या सदा चास्मि सुसंमृष्टनिवेशना ॥ २२
इमं धर्मपथं नारी पालयन्ती समाहिता ।
अरुन्धतीव नारीणां स्वर्गलोके महीयते ॥ २३
भीष्म उवाच ।
एतदाख्याय सा देवी सुमनायै तपस्विनी ।
पतिधर्मं महाभागा जगामादर्शनं तदा ॥ २४
यश्चेदं पाण्डवाख्यानं पठेत्पर्वणि पर्वणि ।
स देवलोकं संप्राप्य नन्दने स सुखी वसेत् ॥ २५

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि पञ्चाशीत्यधिकशततमोऽध्यायः ॥ १८५ ॥

## षडशीत्यधिकशततमोऽध्यायः ॥ १८६ ॥

युधिष्ठिरेणावश्यवेद्योपास्येषु परावधिं पृष्टेन भीष्मेण तंप्रति श्रीनारायणमहिमप्रतिपादकनारदपुण्डरीकसंवादानुवादपूर्वकं नारायणस्य सर्वोत्कृष्टत्वेन वेद्यत्वोपास्यत्वविधानम् ॥ १ ॥

*युधिष्ठिर उवाच ।
यज्ज्ञेयं परमं कृत्यमनुष्ठेयं महात्मभिः ।
सारं मे सर्वशास्त्राणां वक्तुमर्हस्यनुग्रहात् ॥ १
भीष्म उवाच ।
श्रूयतामिदमत्यन्तं गूढं संसारमोचनम् ।
श्रोतव्यं च त्वया सम्यग्ज्ञातव्यं च विशांपते ॥ २
पुण्डरीकः पुरा विप्रः पुण्यतीर्थे जपान्वितः ।
नारदं परिपप्रच्छ श्रेयो योगपरं मुनिम् ॥ ३

मङ्गलैर्नियतेति मङ्गलसूत्रमात्र धारयामि नतु ताम्बूलादीनित्यर्थः ॥ १९ ॥ पाण्डवाख्यानं पाण्डवेति च्छेदः ॥ २५ ॥ पञ्चाशीत्यधिकशततमोऽध्यायः ॥ १८५ ॥

* अयमध्यायो दाक्षिणात्यकोशेष्वेव दृश्यते ।

नारदश्चाभ्यवादेनं ब्रह्मणोक्तं महात्मना ॥ ४
शृणुष्वावहितस्तात ज्ञानयोगमनुत्तमम् ।
अप्रभूतं प्रभूतार्थं वेदशास्त्रार्थसंयुतम् ॥ ५
यः परः प्रकृतेः प्रोक्तः पुरुषः पञ्चविंशकः ।
स एव सर्वभूतात्मा नर इत्यभिधीयते ॥ ६
नराज्जातानि तत्त्वानि नाराणीति ततो विदुः ।
तान्येव चायनं तस्य तेन नारायणः स्मृतः ७
नारायणाज्जगत्सर्वं सर्गकाले प्रजायते ।
तस्मिन्नेव पुनस्तच्च प्रलये संप्रलीयते ॥ ८
नारायणः परं ब्रह्म तत्त्वं नारायणः परः ।
परादपि परश्चासौ तस्मान्नास्ति परात्परः ॥ ९
वासुदेवं तथा विष्णुमात्मानं च तथा विदुः ।
संज्ञाभेदैः स एवैकः सर्वशास्त्राभिसंस्कृतः ॥१०
आलोड्य सर्वशास्त्राणि विचार्य च पुनःपुनः ।
इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ॥ ११
तस्मात्त्वं गहनान्सर्वांस्त्यक्त्वा शास्त्रार्थविस्तरान् ।
अनन्यचेता ध्यायस्व नारायणमजं विभुम् ॥ १२
मुहूर्तमपि यो ध्यायेन्नारायणमतन्द्रितः ।
सोऽपि तद्गतिमाप्नोति किं पुनस्तत्परायणः॥१३
नमो नारायणायेति यो वेद ब्रह्म शाश्वतम्
अन्त्यकाले जपन्नेति तद्विष्णोः परमं पदम् ॥१४
श्रवणान्मननाच्चैव गीतिस्तुत्यर्चनादिभिः ।
आराध्यं सर्वदा ब्रह्म पुरुषेण हितैषिणा ॥ १५
लिप्यते न स पापेन नारायणपरायणः ।
पुनाति सकलं लोकं सहस्रांशुरिवोदितः ॥ १६
ब्रह्मचारी गृहस्थोऽपि वानप्रस्थोऽथ भिक्षुकः ।
केशवाराधनं हित्वा नैव याति परां गतिम् ॥१७
जन्मान्तरसहस्रेषु दुर्लभा तद्गता मतिः ।
तद्भक्तवत्सलं देवं समाराधय सुव्रत ॥ १८
नारदेनैवमुक्तस्तु स विप्रोऽभ्यर्चयद्धरिम् ।
स्वप्नेऽपि पुण्डरीकाक्षं शङ्खचक्रगदाधरम् ॥ १९
किरीटकुण्डलधरं लसच्छ्रीवत्सकौस्तुभम् ।
तं दृष्ट्वा देवदेवेशं प्रणमत्संभ्रमान्वितः ॥ २०
अथ कालेन महता तथा प्रत्यक्षतां गतः ।
संस्तुतः स्तुतिभिर्वेदैर्देवगन्धर्वकिन्नरैः ॥ २१
अथ तेनैव भगवानात्मलोकमधोक्षजः ।
गतः संपूजितः सर्वैः स योगिनिलयो हरिः २२
तस्मात्त्वमपि राजेन्द्र तद्भक्तस्तत्परायणः ।
अर्चयित्वा यथायोगं भजस्व पुरुषोत्तमम् ॥ २३
अजरममरमेकं ध्येयमाद्यन्तशून्यं
सगुणमगुणमाद्यं स्थूलमत्यन्तसूक्ष्मम् ।
निरुपममुपमेयं योगिविज्ञानगम्यं
त्रिभुवनगुरुमीशं संप्रपद्यस्व विष्णुम् ॥२४

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि षडशीत्यधिकशततमोऽध्यायः ॥ १८६ ॥

## सप्ताशीत्यधिकशततमोऽध्यायः ॥ १८७ ॥

भीष्मेण युधिष्ठिरंप्रति साम्नः सकलवशीकरणोपायत्वे दृष्टान्ततया रक्षोब्राह्मणसंवादानुवादः ॥ १ ॥

युधिष्ठिर उवाच ।
साम्नि चापि प्रदाने च ज्यायः किं भवतो मतम् ।
प्रब्रूहि भरतश्रेष्ठ यदत्र व्यतिरिच्यते ॥ १
भीष्म उवाच ।
साम्ना प्रसाद्यते कश्चिद्दानेन च तथाऽपरः ।
पौरुषीं प्रकृतिं ज्ञात्वा तयोरेकतरं भजेत् ॥ २
गुणांस्तु शृणु वै राजन्सान्त्वस्य पुरुषर्षभ ।
दारुणान्यपि भूतानि सान्त्वेनाराधयेद्यथा ॥ ३
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
गृहीत्वा रक्षसा मुक्तो द्विजातिः कानने यथा ॥४
कश्चित्तु बुद्धिसंपन्नो ब्राह्मणो विजने वने ।
गृहीतः कृच्छ्रमापन्नो रक्षसा भक्षयिष्यता ॥ ५
सुबुद्धिः श्रुतिसंपन्नो दृष्ट्वा तमतिभीषणम् ।
सामैवास्मै प्रयुञ्जानो न मुमोह न विव्यथे ॥ ६

रक्षस्तु वाचा संपूज्य प्रश्नं पप्रच्छ तं द्विजम् ।
मोक्ष्यसे ब्रूहि मे प्रश्नं केनासि हरिणः कृशः ॥ ७
भीष्म उवाच ।
मुहूर्तमथ संचिन्त्य ब्राह्मणस्तं निरीक्ष्य सः ।
अभीतवदथाव्यग्रः प्रश्नं प्रतिजगाद ह ॥ ८
विदेशस्थो विलोकस्थो विना नूनं सुहृज्जनैः ।
विषयानतुलान्भुङ्क्षे तेनासि हरिणः कृशः ॥ ९
नूनं मित्राणि ते रक्षः साधूपचरिताम्यपि ।
स्वदोषात्तु परित्यज्य तेनासि हरिणः कृशः ॥ १०
अवृत्त्या पीड्यमानोऽपि वृत्त्युपायान्विगर्हयन् ।
महार्थान्ध्यायसे नूनं तेनासि हरिणः कृशः ॥ ११
परकार्याधिकारस्थाः सद्गुणैरधमा नराः ।
अवजानन्ति नूनं त्वां तेनासि हरिणः कृशः ॥ १२
गुणवान्निर्गुणानन्यान्नूनं पश्यसि सत्कृतान् ।
प्राज्ञैरपि विनीतात्मा तेनासि हरिणः कृशः ॥ १३
संपीड्यात्मानमार्यत्वात्त्वया कश्चिदुपस्कृतः ।
जितं त्वां मन्यते साधो तेनासि हरिणः कृशः १४
क्लिश्यमानान्विमार्गेषु कामक्रोधावृतात्मनः ।
मन्येऽनुध्यायसि जनांस्तेनासि हरिणः कृशः ॥ १५
प्राज्ञैरपूजितो नूनं प्राज्ञैरप्यभिनिन्दितः ।
ह्रीमानमर्षी दुर्वृत्तस्तेनासि हरिणः कृशः ॥ १६
नूनं मित्रमुखः शत्रुः कश्चिदार्यवदाचरन् ।
वञ्चयित्वा गतस्त्वां वै तेनासि हरिणः कृशः ॥ १७
नूनमद्य सतां मध्ये तव वाक्यमनुत्तमम् ।
न भाति कालेऽभिहितं तेनासि हरिणः कृशः १८
दृष्टपूर्वान्श्रुतपूर्वान्कुपितान्हृदयप्रियान् ।
अनुनेतुं न शक्नोषि तेनासि हरिणः कृशः ॥ १९
नूनमासञ्जयित्वा त्वा कृत्ये कस्मिंश्चिदीप्सिते ।
कश्चिदर्थयते नित्यं तेनासि हरिणः कृशः ॥ २०
परोक्षवादिभिर्मिथ्यादोषस्ते संप्रदर्शितः ।
तज्ज्ञैर्न पूज्यसे व्यक्तं तेनासि हरिणः कृशः २१
नूनं त्वं सद्गुणापेक्षं पूजयानं सुहृत्प्रजाः ।
मायावीति च जानन्ति तेनासि हरिणः कृशः २२
अन्तर्गतमभिप्रायं न नूनं लज्जयेच्छसि ।
विवक्तुं प्राप्य शैथिल्यात्तेनासि हरिणः कृशः २३
नानाबुद्धिरुचीँल्लोके मानुषान्नूनमिच्छसि ।
ग्रहीतुं स्वैर्गुणैः सर्वांस्तेनासि हरिणः कृशः ॥ २४
असत्सु विनिविष्टेषु न गुणान्वदतः स्वयम् ।
गुणास्ते न विराजन्ते तेनासि हरिणः कृशः ॥ २५
धर्मवृत्तः श्रुतैर्हीनः पदं त्वं रजसान्वितः ।
महत्प्रार्थयसे नूनं तेनासि हरिणः कृशः ॥ २६
तपःप्रणिहितात्मानं मन्ये त्वारण्यकाङ्क्षिणम् ।
बन्धुवर्गो निगृह्णाति तेनासि हरिणः कृशः ॥ २७
इष्टभार्यस्य ते नूनं प्रातिवेश्यो महाधनः ।
युवा सुललितः कामी तेनासि हरिणः कृशः ॥ २८
दुर्विनीतहतः पुत्रो जामाता वाऽप्रमार्जकः ।
दारा वा प्रतिकूलास्ते तेनासि हरिणः कृशः २९
भ्रातरोऽतीव विषमाः पिता वा क्षुत्क्षतो मृतः ।
माता ज्येष्ठो गुरुर्वाऽपि तेनासि हरिणः कृशः ॥ ३०
ब्राह्मणो वा हतो गौर्वा ब्रह्मस्वं वापहृतं पुरा ।
देवस्वं वा हृतं काले तेनासि हरिणः कृशः ॥ ३१
हृतदारोऽथ वृद्धो वा लोके द्विष्टोऽथवा नरैः ।
अविज्ञानेन वा वृद्धस्तेनासि हरिणः कृशः ॥ ३२
वार्धकार्थं धनं दृष्ट्वा स्वा श्रीर्वाऽपि परैर्हृता ।
वृत्तिर्वा दुर्जनापेक्षा तेनासि हरिणः कृशः ॥ ३३
संप्राप्तकालेन ते धर्मः क्षीणस्तात सुहृद्भवैः ।
असंन्यासमतिस्तत्र तेनासि हरिणः कृशः ॥ ३४
अविद्वान्भीरुरल्पार्थे विद्याविक्रमदानजम् ।
यशः प्रार्थयसे नित्यं तेनासि हरिणः कृशः ॥ ३५
चिराभिलषितं किंचित्फलमप्राप्तमेव ते ।
कृतमन्यैरपहृतं तेनासि हरिणः कृशः ॥ ३६
नूनमात्मगतं दोषमपश्यन्किंचिदात्मनि ।
अकारणेऽभिशस्तो हि तेनासि हरिणः कृशः ३७
सुहृदां दुःखमार्तानां न प्रमोक्ष्यसि हानिजम् ।
अलमर्थगुणैर्हीनं तेनासि हरिणः कृशः ॥ ३८

आभिर्गाधाभिरव्यग्र इति झ. पाठः ॥ ८ ॥ स्वदोषादपरज्यन्ते इति झ. पाठः ॥ १० ॥ प्रज्ञासभावितो नूनमप्रज्ञैरुपसंहिते इति झ. पाठः ॥ १६ ॥ सप्ताशीत्यधिकशततमोऽध्यायः ॥ १८७ ॥

साधून्गृहस्थान्दृष्ट्वा च तथा साधून्वनेचरान् ।
मुक्तांश्चावसथे सक्तांस्तेनासि हरिणः कृशः ॥ ३९
धर्म्यमर्थ्यं च काम्यं च देशे च रहितं वचः ।
न प्रसिद्ध्यति ते नूनं तेनासि हरिणः कृशः ४०
दत्तानकुशलैरर्थान्मनीषी संजिजीविषुः ।
प्राप्य वर्तयसे नूनं तेनासि हरिणः कृशः ॥ ४१
परस्परविरुद्धानां प्रियं नूनं चिकीर्षसि ।
सुहृदामुपरोधेन तेनासि हरिणः कृशः ॥ ४२
पापान्विवर्धितान्दृष्ट्वा कल्याणांश्चावसीदतः ।
ध्रुवं गर्हयसे नूनं तेनासि हरिणः कृशः ॥ ४३
एवं संपूजितं रक्षो विप्रं तं प्रत्यपूजयत् ।
सहायमकरोच्चैनं संपूज्यामुं मुमोच ह ॥ ४४

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि सप्ताशीत्यधिकशततमोऽध्यायः ॥ १८७ ॥

## अष्टाशीत्यधिकशततमोऽध्यायः ॥ १८८ ॥

भीष्मेण युधिष्ठिरंप्रति श्राद्धविध्यादिप्रतिपादकपितृदेवदूतादिसंवादानुवादः ॥ १ ॥

[*युधिष्ठिर उवाच ।
जन्म मानुष्यकं प्राप्य कर्मक्षेत्रं सुदुर्लभम् ।
श्रेयोर्थिना दरिद्रेण किं कर्तव्यं पितामह ॥ १
दानानामुत्तमं यच्च देयं यच्च यथायथा ।
मान्यान्पूज्यांश्च गाङ्गेय रहस्यं वक्तुमर्हसि ॥ २
वैशंपायन उवाच ।
एवं पृष्टो नरेन्द्रेण पाण्डवेन यशस्विना ।
धर्माणां परमं गुह्यं भीष्मः प्रोवाच पार्थिवम् ॥ ३
भीष्म उवाच ।
शृणुष्वावहितो राजन्धर्मगुह्यानि भारत ।
यथाहि भगवान्व्यासः पुरा कथितवान्मयि ॥ ४
देवगुह्यमिदं राजन्यमेनाक्लिष्टकर्मणा ।
नियमस्थेन युक्तेन तपसो महतः फलम् ॥ ५
येन यः प्रीयते देवः प्रीयन्ते पितरस्तथा ।
ऋषयः प्रमथाः श्रीश्च चित्रगुप्तो दिशां गजाः ६
ऋषिधर्मः स्मृतो यत्र सरहस्यो महाफलः ।
महादानफलं चैव सर्वयज्ञफलं तथा ॥ ७
यश्चैतदेवं जानीयाज्ज्ञात्वा वा कुरुतेऽनघ ।
सदोषोऽदोषवांश्चेह तैर्गुणैः सह युज्यते ॥ ८
दशसूनासमं चक्रं दशचक्रसमो ध्वजः ।
दशध्वजसमा वेश्या दशवेश्यासमो नृपः ॥ ९
अर्धेनैतानि सर्वाणि नृपतिः कथ्यतेऽधिकः ।
त्रिवर्गसहितं शास्त्रं पवित्रं पुण्यलक्षणम् ॥ १०
धर्मव्याकरणं पुण्यं रहस्यश्रवणं महत् ।
श्रोतव्यं धर्मसंयुक्तं विहितं त्रिदशैः स्वयम् ॥ ११
पितॄणां यत्र गुह्यानि प्रोच्यन्ते श्राद्धकर्मणि ।
देवतानां च सर्वेषां रहस्यं कथ्यतेऽखिलम् ॥ १२
ऋषिधर्मः स्मृतो यत्र सरहस्यो महाफलः ।
महायज्ञफलं चैव सर्वदानफलं तथा ॥ १३
ये पठन्ति सदा मर्त्या येषां चैवोपतिष्ठति ।
श्रुत्वा च फलमाचष्टे स्वयं नारायणः प्रभुः ॥ १४
गवां फलं तीर्थफलं यज्ञानां चैव यत्फलम् ।
एतत्फलमवाप्नोति यो नरोऽतिथिपूजकः ॥ १५
श्रोतारः श्रद्दधानाश्च येषां शुद्धं च मानसम् ।
तेषां व्यक्तं जिता लोकाः श्रद्दधानेन साधुना १६
मुच्यते किल्बिषाच्चैव न स पापेन लिप्यते ।
धर्मं च लभते नित्यं प्रेत्य लोकगतो नरः ॥ १७
कस्यचित्त्वथ कालस्य देवदूतो यदृच्छया ।
स्थितो ह्यन्तर्हितो भूत्वा पर्यभाषत वासवम् ॥ १८
यौ तौ कामगुणोपेतावश्विनौ भिषजां वरौ ।

---

यमेनप्राप्तमिति शेषः ॥ ५ ॥ दशानां पशूनां सूना वधो यत्र सा पशुघ्नजातिर्दशसूना । चक्रं चक्रवान् तैलिकः । ध्वजः सुरापायी । नृपः क्षुद्रो राजा ॥ ९ ॥ एवं दुष्प्रतिग्रहपराङ्मुखेन त्रिवर्गशास्त्रं धर्मार्थकामशास्त्राणि ज्ञेयानि ॥ १० ॥ पठन्ति शास्त्रम् । उपतिष्ठति सम्यक् स्फुरत्याचष्टे च यः स स्वयं नारायण एवेति ज्ञातव्यः ॥ १४ ॥ सनरान् सहर्षीन्प्राप्तः

* एतदादिचतुर्दशाध्याया झ. पुस्तके अधिका दृश्यन्ते ।

आज्ञयाऽहं तयोः प्राप्तः सनगान्पितृदेवतान् ॥१९
कस्माद्धि मैथुनं श्राद्धे दातुर्भोक्तुश्च वर्जितम् ।
किमर्थं च त्रयः पिण्डाः प्रविभक्ताः पृथक्पृथक् ॥
प्रथमः कस्य दातव्यो मध्यमः क्व च गच्छति ।
उत्तरश्च स्मृतः कस्य एतदिच्छामि वेदितुम् ॥ २१
श्रद्दधानेन दूतेन भाषितं धर्मसंहितम् ।
पूर्वस्थास्त्रिदशाः सर्वे पितरः पूज्य खेचरम् ॥२२
पितर ऊचुः ।
स्वागतं तेऽस्तु भद्रं ते श्रूयतां खेचरोत्तम ।
गूढार्थः परमः प्रश्नो भवता समुदीरितः ॥ २३
श्राद्धं दत्त्वा च भुक्त्वा च पुरुषो यः स्त्रियं व्रजेत् ।
पितरस्तस्य तं मासं तस्मिन्रेतसि शेरते ॥ २४
प्रविभागं तु पिण्डानां प्रवक्ष्याम्यनुपूर्वशः ।
पिण्डो ह्यधस्ताद्गच्छंस्तु अप आविश्य भावयेत् २५
पिण्डं तु मध्यमं तत्र पत्नीत्वेका समश्नुते ।
पिण्डस्तृतीयो यस्तेषां तं दद्याज्जातवेदसि ।
एष श्राद्धविधिः प्रोक्तो यथा धर्मो न लुप्यते ॥२६
पितरस्तस्य तुष्यन्ति प्रहृष्टमनसः सदा ।
प्रजा विवर्धते चास्य अक्षयं चोपतिष्ठति ॥ २७
देवदूत उवाच ।
आनुपूर्व्येण पिण्डानां प्रविभागः पृथक्पृथक् ।
पितॄणां त्रिषु सर्वेषां निरुक्तं कथितं त्वया ॥ २८
एकः समुद्धृतः पिण्डो ह्यधस्तात्कस्य गच्छति ।
कं वा प्रीणयते देवं कथं तारयते पितॄन् ॥ २९
मध्यमं तु तदा पत्नी भुङ्क्तेऽनुज्ञातमेव हि ।
किमर्थं पितरस्तस्य कव्यमेव च भुञ्जते ॥ ३०
अत्र यस्त्वन्तिमः पिण्डो गच्छते जातवेदसम् ।
भवते का गतिस्तस्य कं वा समनुगच्छति ॥ ३१
एतदिच्छाम्यहं श्रोतुं पिण्डेषु त्रिषु या गतिः ।
फलं वृत्तिं च मार्गं च यश्चैनं प्रतिपद्यते ॥ ३२
पितर ऊचुः ।
सुमहानेष प्रश्नो वै यस्त्वया समुदीरितः ।
रहस्यमद्भुतं चापि पृष्टाः स्म गगनेचर ॥ ३३
एतदेव प्रशंसन्ति देवाश्च मुनयस्तथा ।
तेऽप्येवं नाभिजानन्ति पितृकार्यविनिश्चयम् ।
वर्जयित्वा महात्मानं चिरजीविनमुत्तमम् ॥ ३४
पितृभक्तस्तु यो विप्रो वरलब्धो महायशाः ।
त्रयाणामपि पिण्डानां श्रुत्वा भगवतो गतिम् ३५
देवदूतेन यः पृष्टः श्राद्धस्य विधिनिश्चयः ।
गतिं त्रयाणां पिण्डानां शृणुष्वावहितो मम ३६
अपो गच्छति यो ह्यत्र शशिनं ह्येष प्रीणयेत् ।
शशी प्रीणयते देवान्पितॄंश्चैव महामते ॥ ३७
भुङ्क्ते तु पत्नी यं चैषामनुज्ञाता तु मध्यमम् ।
पुत्रकामाय पुत्रं तु प्रयच्छन्ति पितामहाः ॥ ३८
हव्यवाहे तु यः पिण्डो दीयते तन्निबोध मे ।
पितरस्तेन तृप्यन्ति प्रीताः कामान्दिशन्ति च ।
एतत्ते कथितं सर्वं त्रिषु पिण्डेषु या गतिः ॥ ३९
ऋत्विग्यो यजमानस्य पितृत्वमनुगच्छति ।
तस्मिन्नहनि मन्यन्ते परिहार्यं हि मैथुनम् ॥ ४०
शुचिना तु सदा श्राद्धं भोक्तव्यं खेचरोत्तम ।
ये मया कथिता दोषास्ते तथा स्युर्न चान्यथा ॥४१
तस्मात्स्नातः शुचिः क्षान्तः श्राद्धं भुञ्जीत वै द्विजः ।
प्रजा विवर्धते चास्य यश्चैवं संप्रयच्छति ॥ ४२
ततो विद्युत्प्रभो नाम ऋषिराह महातपाः ।
आदित्यतेजसा तस्य तुल्यं रूपं प्रकाशते ॥ ४३
स च धर्मरहस्यानि श्रुत्वा शक्रमथाब्रवीत् ॥ ४४
तिर्यग्योनिगतान्सत्त्वान्मर्त्या हिंसन्ति मोहिताः ।
कीटान्पिपीलिकान्सर्पान्मेषान्समृगपक्षिणः ।
किल्बिषं सुबहु प्राप्ताः किंस्विदेषां प्रतिक्रिया ४५
ततो देवगणाः सर्वे ऋषयश्च तपोधनाः ।
पितरश्च महाभागाः पूजयन्ति स्म तं मुनिम् ॥ ४६
शक्र उवाच ।
कुरुक्षेत्रं गयां गङ्गां प्रभासं पुष्कराणि च ।
एतानि मनसा ध्यात्वा अवगाहेत्ततो जलम् ।

प्रष्टुमिति शेषः ॥ १९ ॥ पूज्य संपूज्य ॥ २२ ॥ चिरजीविन मार्कण्डेयम् ॥ ३४ ॥ यतः ऋत्विक् श्राद्धभोक्ता यजमानस्य पितृत्व गच्छति तस्मादन्यात्मता गतः स्वस्त्रियं न गच्छेत् । पारदार्यदोषतुल्य ह्येतदित्यर्थः ॥ ४० ॥ एतच्च वरणमारभ्यै द्रष्टव्यमित्याशयेनाह शुचिनेति ॥ ४१ ॥

तथा मुच्यन्ति पापेन राहुणा चन्द्रमा यथा॥४७
त्र्यहं स्नातः स भवति निराहारश्च वर्तते ।
स्पृशते यो गवां पृष्ठं वालधिं च नमस्यति॥४८
ततो विद्युत्प्रभो वाक्यमभ्यभाषत वासवम् ।
अयं सूक्ष्मतरो धर्मस्तं निबोध शतक्रतो ॥ ४९
घृष्टो वटकषायेण अनुलिप्तः प्रियङ्गुणा ।
क्षीरेण षष्टिकान्भुक्त्वा सर्वपापैः प्रमुच्यते ॥५०
श्रूयतां चापरं गुह्यं रहस्यमृषिचिन्तितम् ।
श्रुतं मे भाष्यमाणस्य स्थाणोः स्थाने बृहस्पतेः ।
रुद्रेण सह देवेश तन्निबोध शचीपते ॥ ५१
पर्वतारोहणं कृत्वा एकपादो विभावसुम् ।
निरीक्षेत निराहार ऊर्ध्वबाहुः कृताञ्जलिः ।
तपसा महता युक्त उपवासफलं लभेत् ॥ ५२
रश्मिभिस्तापितोऽर्कस्य सर्वपापमपोहति ।
ग्रीष्मकालेऽथवा शीते एवं पापमपोहति ॥ ५३
ततः पापात्प्रमुक्तस्य द्युतिर्भवति शाश्वती ।
तेजसा सूर्यवद्दीप्तो भ्राजते सोमवत्पुनः ॥ ५४
मध्ये त्रिदशवर्गस्य देवराजः शतक्रतुः ।
उवाच मधुरं वाक्यं बृहस्पतिमनुत्तमम् ॥ ५५
धर्मगुह्यं तु भगवन्मानुषाणां सुखावहम् ।
सरहस्याश्च ये दोषास्तान्यथावदुदीरय ॥ ५६
बृहस्पतिरुवाच ।
प्रतिमेहन्ति ये सूर्यमनिलं द्विषते च ये ।
हव्यवाहे प्रदीप्ते च समिधं ये न जुह्वति ॥ ५७
बालवत्सां च ये धेनुं दुहन्ति क्षीरकारणात् ।
तेषां दोषान्प्रवक्ष्यामि तन्निबोध शचीपते ॥५८
भानुमाननिलश्चैव हव्यवाहश्च वासव ।
लोकानां मातरश्चैव गावः सृष्टाः स्वयंभुवा ॥५९
लोकांस्तारयितुं शक्ता मर्त्येष्वेतेषु देवताः ।
सर्वे भवन्तः शृण्वन्तु एकैकं धर्मनिश्चयम् ॥ ६०
वर्षाणि षडशीतिं तु दुर्वृत्ताः कुलपांसनाः ।
स्त्रियः सर्वाश्च दुर्वृत्ताः प्रतिमेहन्ति या रविम्६१

वटकषायेण वटजटाकषायेण । प्रियङ्गु॰ राजसर्षपः । षष्टिकान् षष्टिरात्रेण पक्वधान्यम् ॥ ५० ॥ विभावसु सूर्यम् ॥ ५२ ॥

अनिलद्वेषिणः शक्र गर्भस्था च्यवते प्रजा ।
हव्यवाहस्य दीप्तस्य समिधं ये न जुह्वति ।
अग्निकार्येषु वै तेषां हव्यं नाश्नाति पावकः॥ ६२
क्षीरं तु बालवत्सानां ये पिबन्तीह मानवाः ।
न तेषां क्षीरपाः केचिज्जायन्ते कुलवर्धनाः॥६३
प्रजाक्षयेण युज्यन्ते कुलवंशक्षयेण च ।
एवमेतत्पुरा दृष्टं कुलवृद्धैर्द्विजातिभिः ॥ ६४
तस्माद्वर्ज्यानि वर्ज्यानि कार्यं कार्यं च नित्यशः।
भूतिकामेन मर्त्येन सत्यमेतद्ब्रवीमि ते ॥ ६५
ततः सर्वा महाभाग देवताः समरुद्गणाः
ऋषयश्च महाभागाः पृच्छन्ति स्म पितॄंस्ततः॥६६
पितरः केन तुष्यन्ति मर्त्यानामल्पचेतसाम् ।
अक्षयं च कथं दानं भवेच्चैवौर्ध्वदेहिकम ॥ ६७
आनृण्यं वा कथं मर्त्या गच्छेयुः केन कर्मणा ।
एतदिच्छामहे श्रोतुं परं कौतूहलं हि नः ॥ ६८
पितर ऊचुः ।
न्यायतो वै महाभागाः संशयः समुदाहृतः ।
श्रूयतां येन तुष्यामो मर्त्यानां साधुकर्मणाम् ६९
नीलषण्डप्रमोक्षेण अमावास्यां तिलोदकैः ।
वर्षासु दीपकैश्चैव पितॄणामनृणो भवेत् ॥ ७०
अक्षयं निर्व्यलीकं च दानमेतन्महाफलम् ।
अस्माकं परितोषश्च अक्षयः परिकीर्त्यते ॥ ७१
श्रद्दधानाश्च ये मर्त्या आहरिष्यन्ति संततिम् ।
दुर्गात्ते तारयिष्यन्ति नरकात्प्रपितामहान् ॥ ७२
पितॄणां भाषितं श्रुत्वा हृष्टरोमा तपोधनः ।
वृद्धगार्ग्यो महातेजास्तानेवं वाक्यमब्रवीत् ॥ ७३
के गुणा नीलषण्डस्य प्रमुक्तस्य तपोधनाः ।
वर्षासु दीपदानेन तथैव च तिलोदकैः ॥ ७४
पितर ऊचुः ।
नीलषण्डस्य लाङ्गूलं तोयमभ्युद्धरेद्यदि ।
षष्टिं वर्षसहस्राणि पितरस्तेन तर्पिताः ॥ ७५
यस्तु शृङ्गगतं पङ्कं कूलादुद्धृत्य तिष्ठति ।
पितरस्तेन गच्छन्ति सोमलोकमसंशयम् ॥ ७६

अष्टाशीत्यधिकशततमोऽध्यायः ॥ १८८ ॥

वर्षासु दीपदानेन शशीवच्छोभते नरः ।
तमोरूपं न नश्यान्ति दीपकं यः प्रयच्छति ॥ ७७
अमावास्यां तु ये मर्त्याः प्रयच्छन्ति तिलोदकम् ।
पात्रमौदुम्बरं गृह्य मधुमिश्रं तपोधन ।
कृतं भवति तैः श्राद्धं सरहस्यं यथार्थवत् ॥ ७८
हृष्टपुष्टमनास्तेषां प्रजा भवति नित्यदा ।
कुलवंशस्य वृद्धिस्तु पिण्डदस्य फलं भवेत् ।
श्रद्धधानस्तु यः कुर्यात्पितृणामनृणो भवेत् ॥ ७९
एवमेष समुद्दिष्टः श्राद्धकालक्रमस्तथा ।
विधिः पात्रं फलं चैव यथावदनुकीर्तितम् ॥]८०

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि अष्टाशीत्यधिकशततमोऽध्यायः ॥ १८८ ॥

## एकोननवत्यधिकशततमोऽध्यायः ॥ १८९ ॥

विष्णुनेन्द्रंप्रति स्वप्रीतिकरधर्मकथनम् ॥ १ ॥ तथा बलदेवदेवाग्निविश्वामित्रादिभिः पृथक्पृथग्धर्मविशेषकथनम् ॥२॥

[भीष्म उवाच ।
केन ते च भवेत्प्रीतिः कथं तुष्टिं तु गच्छसि ।
इति पृष्टः सुरेन्द्रेण प्रोवाच हरिरीश्वरः ॥ १
ब्राह्मणानां परीवादो मम विद्वेषणं महत् ।
ब्राह्मणैः पूजितैर्नित्यं पूजितोऽहं न संशयः ॥ २
नित्याभिवाद्याविप्रेन्द्रा भुक्त्वा पादौ तथाऽऽत्मनः
तेषां तुष्यामि मर्त्यानां यश्चक्रे च बलिं हरेत् ॥ ३
वामनं ब्राह्मणं दृष्ट्वा वराहं च जलोत्थितम् ।
उद्धृतां धरणीं चैव मूर्ध्ना धारयते तु यः ।
न तेषामशुभं किंचित्कल्मषं चोपपद्यते ॥ ४
अश्वत्थं रोचनां गां च पूजयेद्यो नरः सदा ।
पूजितं च जगत्तेन सदेवासुरमानुषम् ॥ ५
तेन रूपेण तेषां च पूजां गृह्णामि तत्त्वतः
पूजा ममैषा नास्त्यन्या यावल्लोकाः प्रतिष्ठिताः ६
अन्यथा हि वृथा मर्त्याः पूजयन्त्यल्पबुद्धयः
नाहं तत्प्रतिगृह्णामि न सा तुष्टिकरी मम ॥ ७
इन्द्र उवाच ।
चक्रं पादौ वराहं च ब्राह्मणं चापि वामनम् ।
उद्धृतां धरणीं चैव किमर्थं त्वं प्रशंससि ॥ ८
भवान्सृजति भूतानि भवान्संहरति प्रजाः ।
प्रकृतिः सर्वभूतानां समर्त्यानां सनातनी ॥ ९
भीष्म उवाच ।
संप्रहस्य ततो विष्णुरिदं वचनमब्रवीत् ।

चक्रे गोमयोपलिप्ते मण्डले सुदर्शनमन्त्रेण पूजिते ॥ ३ ॥

चक्रेण निहता दैत्याः पद्भ्यां क्रान्ता वसुंधरा १०
वाराहं रूपमास्थाय हिरण्याक्षो निपातितः ।
वामनं रूपमास्थाय जितो राजा मया बलिः॥११
परितुष्टो भवाम्येवं मानुषाणां महात्मनाम् ।
तन्मां ये पूजयिष्यन्ति नास्ति तेषां पराभवः १२
अपि वा ब्राह्मणं दृष्ट्वा ब्रह्मचारिणमागतम् ।
ब्राह्मणाग्र्याहुतिं दत्त्वा अमृतं तस्य भोजनम्॥१३
ऐन्द्रीं संध्यामुपासित्वा आदित्याभिमुखः स्थितः।
सर्वतीर्थेषु स स्नातो मुच्यते सर्वकिल्बिषैः ॥ १४
एतद्वः कथितं गुह्यमखिलेन तपोधनाः ।
संशयं पृच्छमानानां किं भूयः कथयाम्यहम् ॥ १५
बलदेव उवाच
श्रूयतां परमं गुह्यं मानुषाणां सुखावहम् ।
अजानन्तो यदबुधाः क्लिश्यन्ते भूतपीडिताः॥१६
कल्य उत्थाय यो मर्त्यः स्पृशेद्गां वै घृतं दधि ।
सर्षपं च प्रियङ्गुं च कल्मषात्प्रतिमुच्यते ॥ १७
भूतानि चैव सर्वाणि अग्रतः पृष्ठतोपि वा ।
उच्छिष्टं वापि च्छिद्रेषु वर्जयन्ति तपोधनाः॥ १८
देवा ऊचुः ।
प्रगृह्यौदुम्बरं पात्रं तोयपूर्णमुदङ्मुखः
उपवासं तु गृह्णीयाद्यद्वा संकल्पयेद्व्रतम् ॥ १९
देवतास्तस्य तुष्यन्ति कामिकं चापि सिध्यति ।
अन्यथा हि वृथा मर्त्याः कुर्वते स्वल्पबुद्धयः ॥२०
उपवासे बलौ चापि ताम्रपात्रं विशिष्यते ।

बलिर्भिक्षा तथाऽर्घ्यं च पितॄणां च तिलोदकं २१
ताम्रपात्रेण दातव्यमन्यथाऽल्पफलं भवेत् ।
गुह्यमेतत्समुद्दिष्टं यथा तुष्यन्ति देवताः ॥ २२
धर्म उवाच ।
राजपौरुषिके विप्रे घाण्टिके परिचारिके ।
गोरक्षके वाणिजके तथा कारुकुशीलवे ॥ २३
मित्रद्रुह्यनधीयाने यश्च स्याद्वृषलीपतिः ।
एतेषु दैवं पित्र्यं वा न देयं स्यात्कथंचन ।
पिण्डदास्तस्य हीयन्ते न च प्रीणाति वै पितॄन् ॥
अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्तते ।
पितरस्तस्य देवाश्च अग्नयश्च तथैव हि ।
निराशाः प्रतिगच्छन्ति अतिथेरप्रतिग्रहात् ॥ २५
स्त्रीघ्नैर्गोघ्नैः कृतघ्नैश्च ब्रह्मघ्नैर्गुरुतल्पगैः ।
तुल्यदोषो भवत्येभिर्यस्यातिथिरनर्चितः ॥ २६
अग्निरुवाच ।
पादमुद्यम्य यो मर्त्यः स्पृशेद्गाश्च सुदुर्मतिः ।
ब्राह्मणं वा महाभागं दीप्यमानं तथाऽनलम् ।
तस्य दोषान्प्रवक्ष्यामि तच्छ्रृणुध्वं समाहिताः २७
दिवं स्पृशत्यशब्दोऽस्य त्रस्यन्ति पितरश्च वै ।
वैमनस्यं च देवानां कृतं भवति पुष्कलम् ।
पावकश्च महातेजा हव्यं न प्रतिगृह्णति ॥ २८
आजन्मनां शतं चैव नरके पच्यते तु सः ।
निष्कृतिं च न तस्यापि अनुमन्यन्ति कर्हिचित् ॥
तस्माद्गावो न पादेन स्प्रष्टव्या वै कदाचन ।
ब्राह्मणश्च महातेजा दीप्यमानस्तथाऽनलः ।
श्रद्दधानेन मर्त्येन आत्मनो हितमिच्छता ॥ ३०
एते दोषा मया प्रोक्तास्त्रिषु यः पादमुत्सृजेत् ३१
विश्वामित्र उवाच ।
श्रूयतां परमं गुह्यं रहस्यं धर्मसंहितम् ।
परमान्नेन यो दद्यात्पितॄणामौपहारिकम् ॥ ३२
गजच्छायायां पूर्वस्यां कुतपे दक्षिणामुखः ।
यदा भाद्रपदे मासि भवते बहुले मघा ॥ ३३
श्रूयतां तस्य दानस्य यादृशो गुणविस्तरः
कृतं तेन महच्छ्राद्धं वर्षाणीह त्रयोदश ॥ ३४
गाव ऊचुः ।
बहुले समङ्गे ह्यकुतोभये च
क्षेमे च संख्येव हि भूयसी च ।
यथा पुरा ब्रह्मपुरे सवत्सा
शतक्रतोर्वज्रधरस्य यज्ञे ॥ ३५
भूयश्च या विष्णुपदे स्थिताया
विभावसोश्चापि पथे स्थिता या ।
देवाश्च सर्वे सह नारदेन
प्रकुर्वते सर्वसहेति नाम ॥ ३६
मन्त्रेणैतेनाभिवन्देत यो वै
विमुच्यते पापकृतेन कर्मणा ।
लोकानवाप्नोति पुरंदरस्य
गवां फलं चन्द्रमसो द्युतिं च ॥ ३७
एतं हि मन्त्रं त्रिदशाभिजुष्टं
पठेत यः पर्वसु गोष्ठमध्ये ।
न तस्य पापं न भयं न शोकः ।
सहस्रनेत्रस्य च याति लोकम् ॥ ३८
भीष्म उवाच ।
अथ सप्त महाभागा ऋषयो लोकविश्रुताः ।
वसिष्ठप्रमुखाः सर्वे ब्रह्माणं पद्मसंभवम् ।
प्रदक्षिणमभिक्रम्य सर्वे प्राञ्जलयः स्थिताः ॥ ३९
उवाच वचनं तेषां वसिष्ठो ब्रह्मवित्तमः ।
सर्वप्राणिहितं प्रश्नं ब्रह्मक्षत्रे विशेषतः ॥ ४०
द्रव्यहीनाः कथं मर्त्या दरिद्राः साधुवर्तिनः ।
प्राप्नुवन्तीह यज्ञस्य फलं केन च कर्मणा ॥ ४१
एतच्छ्रुत्वा वचस्तेषां ब्रह्मा वचनमब्रवीत् ॥ ४२
अहो प्रश्नो महाभाग गूढार्थः परमः शुभः ।
सूक्ष्मः श्रेयांश्च मर्त्यानां भवद्भिः समुदाहृतः ॥ ४३
श्रूयतां सर्वमाख्यास्ये निखिलेन तपोधनाः ।
यथा यज्ञफलं मर्त्यो लभते नात्र संशयः ॥ ४४
पौषमासस्य शुक्ले वै यदा युज्येत रोहिणी ।
तेन नक्षत्रयोगेन आकाशशयनो भवेत् ॥ ४५

अशब्दः अपशब्दः निन्दारूपः ॥ २८ ॥

एकवस्त्रः शुचिः स्नातः श्रद्दधानः समाहितः ।
सोमस्य रश्मयः पीत्वा महायज्ञफलं लभेत् ॥ ४६
एतद्वः परमं गुह्यं कथितं द्विजसत्तमाः ।
यन्मां भवन्तः पृच्छन्ति सूक्ष्मतत्त्वार्थदर्शिनः] ४७

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि एकोननवत्यधिकशततमोऽध्यायः ॥ १८९ ॥

## नवत्यधिकशततमोऽध्यायः ॥ १९० ॥

सूर्यगार्ग्यादिभिः पृथक्पृथग्धर्मरहस्यकथनम् ॥ १ ॥

[विभावसुरुवाच ।
सलिलस्याञ्जलिं पूर्णमक्षताश्च घृतोत्तराः ।
सोमस्योत्तिष्ठमानस्य तज्जलं चाक्षतांश्च तान् ॥ १
स्थितो ह्यभिमुखोमर्त्यः पौर्णमास्यां बलिं हरेत्
अग्निकार्यं कृतं तेन हुताश्चास्याग्नयस्त्रयः ॥
वनस्पतिं च यो हन्यादमावास्यामबुद्धिमान् ।
अपि ह्येकेन पत्रेण लिप्यते ब्रह्महत्यया ॥
दन्तकाष्ठं तु यः खादेदमावास्यामबुद्धिमान्
हिंसितश्चन्द्रमास्तेन पितरश्चोद्विजन्ति च ॥ ४
हव्य न तस्य देवाश्च प्रतिगृह्णन्ति
कुप्यन्ते पितरश्चास्य कुले वंशोऽस्य हीयते ॥ ५
श्रीरुवाच ।
प्रकीर्णं भाजनं यत्र भिन्नभाण्डमथासनम् ।
योषितश्चैव हन्यन्ते कश्मलोपहते गृहे ॥ ६
देवताः पितरश्चैव उत्सवे पर्वणीषु वा ।
निराशाः प्रतिगच्छन्ति कश्मलोपहताद्गृहात् ॥ ७
अङ्गिरा उवाच ।
यस्तु संवत्सरं पूर्णं दद्याद्दीपं करञ्जके ।
सुवर्चलामूलहस्तः प्रजा तस्य विवर्धते ॥ ८
गार्ग्य उवाच ।
आतिथ्यं सततं कुर्याद्दीपं दद्यात्प्रतिश्रये ।
वर्जयानो दिवास्वापं न च मांसानि भक्षयेत् ॥ ९
गोब्राह्मणं न हिंस्याच्च पुष्कराणि च कीर्तयेत् ।
एष श्रेष्ठतमो धर्मः सरहस्यो महाफलः ॥ १०
अपि क्रतुशतैरिष्ट्वा क्षयं गच्छति तद्धविः ।
न तु क्षीयन्ति ते धर्माः श्रद्दधानैः प्रयोजिताः ॥
इदं च परमं गुह्यं सरहस्यं निबोधत ।
श्राद्धकल्पे च दैवे च तैर्थिके पर्वणीषु च ॥ १२
रजस्वला च या नारी श्वित्रिकाऽपुत्रिका च या ।
एताभिश्चक्षुषा दृष्टं हविर्नाश्नन्ति देवताः ।
पितरश्च न तुष्यन्ति वर्षाण्यपि त्रयोदश ॥ १३
शुक्लवासाः शुचिर्भूत्वा ब्राह्मणान्स्वस्ति वाचयेत्
कीर्तयेद्भारतं चैव तथा स्यादक्षयं हविः ॥ १४
धौम्य उवाच ।
भिन्नभाण्डं च खट्वां च कुक्कुटं शुनकं तथा ।
अप्रशस्तानि सर्वाणि यश्च वृक्षो गृहेरुहः ॥ १५
भिन्नभाण्डे कलिं प्राहुः खट्वायां तु धनक्षयः ।
कुक्कुटे शुनके चैव हविर्नाश्नन्ति देवताः ।
वृक्षमूले ध्रुवं सत्त्वं तस्माद्वृक्षं न रोपयेत् ॥ १६
जमदग्निरुवाच ।
यो यजेदश्वमेधेन वाजपेयशतेन ह ।
अवाक्शिरा वा लम्बेत सत्रं वा स्फीतमाहरेत् १७
न यस्य हृदयं शुद्धं नरकं स ध्रुवं व्रजेत् ।
तुल्यं यज्ञश्च सत्यं च हृदयस्य च शुद्धता ॥ १८
शुद्धेन मनसा दत्त्वा सक्तुप्रस्थं द्विजातये ।
ब्रह्मलोकमनुप्राप्तः पर्याप्तं तन्निदर्शनम् ॥] १९

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि नवत्यधिकशततमोऽध्यायः ॥ १९० ॥

---

रश्मयः रश्मीन् ॥ ४६ ॥ एकोननवत्यधिकशततमोऽध्यायः १८९ करञ्जसुवर्चले वृक्षवल्लिविशेषौ ॥ ८ ॥ सत्त्व वृश्चिकसर्पादि । न रोपयेत् गृहे इति शेषः ॥ १६ ॥ नवत्यधिकशततमोऽध्यायः ॥ १९० ॥

## एकनवत्यधिकशततमोऽध्यायः ॥ १९१ ॥

वायुना धर्मरहस्यकथनम् ॥ १ ॥

[वायुरुवाच ।
किंचिद्धर्मं प्रवक्ष्यामि मानुषाणां सुखावहम् ।
सरहस्याश्च ये दोषास्ताञ्शृणुध्वं समाहिताः ॥ १
अग्निकार्यं च कर्तव्यं परमान्नेन भोजनम् ।
दीपकश्चापि कर्तव्यः पितॄणां सतिलोदकः ॥ २
एतेन विधिना मर्त्यः श्रद्दधानः समाहितः ।
चतुरो वार्षिकान्मासान्यो ददाति तिलोदकम् ३
भोजनं च यथाशक्त्या ब्राह्मणे वेदपारगे ।
पशुबन्धशतस्येह फलं प्राप्नोति पुष्कलम् ॥ ४
इदं चैवापरं गुह्यमप्रशस्तं निबोधत ।
अग्नेस्तु वृषलो नेता हविर्मूढाश्च योषितः ॥ ५
मन्यते धर्म एवेति स चाधर्मेण लिप्यते ।
अग्नयस्तस्य कुप्यन्ति शूद्रयोनिं स गच्छति ॥ ६
पितरश्च न तुष्यन्ति सहदेवैर्विशेषतः ।
प्रायश्चित्तं तु यत्तत्र ब्रुवतस्तन्निबोध मे ।
यत्कृत्वा तु नरः सम्यक्सुखी भवति विज्वरः ॥ ७
गवां मूत्रपुरीषेण पयसा च घृतेन च ।
अग्निकार्यं त्र्यहं कुर्यान्निराहारः समाहितः ॥ ८
ततः संवत्सरे पूर्णे प्रतिगृह्णन्ति देवताः ।
हृष्यन्ति पितरश्चास्य श्राद्धकाल उपस्थिते ॥ ९
एष ह्यधर्मो धर्मश्च सरहस्यः प्रकीर्तितः ।
मर्त्यानां स्वर्गकामानां प्रेत्य स्वर्गसुखावहः ॥]१०

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि एकनवत्यधिकशततमोऽध्यायः ॥ १९१ ॥

## द्विनवत्यधिकशततमोऽध्यायः ॥ १९२ ॥

लोमशेन धर्मरहस्यकथनम् ॥ १ ॥

लोमश उवाच ।
परदारेषु ये सक्ता अकृत्वा दारसंग्रहम् ।
निराशाः पितरस्तेषां श्राद्धकाले भवन्ति वै ॥ १
परदाररतिर्यश्च यश्च वन्ध्यामुपासते ।
ब्रह्मस्वं हरते यश्च समदोषा भवन्ति ते ॥ २
असंभाष्या भवन्त्येते पितॄणां नात्र संशयः ।
देवताः पितरश्चैषां नाभिनन्दन्ति तद्धविः ॥ ३
तस्मात्परस्य वै दारांस्त्यजेद्वन्ध्यां च योषितम् ।
ब्रह्मस्वं हि न हर्तव्यमात्मनो हितमिच्छता ॥ ४
श्रूयतां चापरं गुह्यं रहस्यं धर्मसंहितम् ।
श्रद्दधानेन कर्तव्यं गुरूणां वचनं सदा ॥ ५
द्वादश्यां पौर्णमास्यां च मासिमासि घृताक्षतम् ।
ब्राह्मणेभ्यः प्रयच्छेत तस्य पुण्यं निबोधत ॥ ६
सोमश्च वर्धते तेन समुद्रश्च महोदधिः ।
अश्वमेधचतुर्भागं फलं सृजति वासवः ॥ ७
दानेनैतेन तेजस्वी वीर्यवांश्च भवेन्नरः ।
प्रीतश्च भगवान्सोम इष्टान्कामान्प्रयच्छति ॥ ८
श्रूयतां चापरो धर्मः सरहस्यो महाफलः ।
इदं कलियुगं प्राप्य मनुष्याणां सुखावहः ॥ ९
कल्यमुत्थाय यो मर्त्यः स्नातः शुक्लेन वाससा ।
तिलपात्रं प्रयच्छेत ब्राह्मणेभ्यः समाहितः ॥ १०
तिलोदकं च यो दद्यात्पितॄणां मधुना सह ।
दीपकं कृसरं चैव श्रूयतां तस्य यत्फलम् ॥ ११
तिलपात्रे फलं प्राह भगवान्पाकशासनः ।
गोप्रदानं च यः कुर्याद्भूमिदानं च शाश्वतम् ॥ १२
अग्निष्टोमं च यो यज्ञं यजेत बहुदक्षिणम् ।
तिलपात्रं सहैतेन समं मन्यन्ति देवताः ॥ १३

---

८ नेता देशान्तरप्रापको यदि शूद्रः स्यात् तर्हि तस्य दोषः ॥ ५ ॥ एकनवत्यधिकशततमोऽध्यायः ॥ १९१ ॥

महान्त्युदकानि धीयन्तेऽस्मिन्निति । यद्वा महानामुत्सवानामुदधिरिव ॥ ७ ॥ द्विनवत्यधिशततमोऽध्यायः ॥ १९२ ॥

तिलोदकं सदा श्राद्धे मन्यन्ते पितरोऽक्षयम् । स्वर्गे च पितृलोके च पितृदेवाभिपूजितम् ।
दीपे च क्रमरे चैव तुष्यन्तेऽस्य पितामहाः ॥ १४ एवमेतन्मयोद्दिष्टमृषिदृष्टं पुरातनम् ॥] १५

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि द्विनवत्यधिकशततमोऽध्यायः ॥ १९२ ॥

## त्रिनवत्यधिकशततमोऽध्यायः ॥ १९३ ॥

भीष्मेण युधिष्ठिरंप्रत्यरुन्धतीचित्रगुप्तोदितधर्मरहस्यकथनम् ॥ १ ॥

[भीष्म उवाच
ततस्त्वापगणाः सर्वे पितरश्च सदेवताः ।
अरुन्धतीं तपोवृद्धामपृच्छन्त समाहिताः ॥ १
समानशीलां वीर्येण वसिष्ठस्य महात्मनः ।
त्वत्तो धर्मरहस्यानि श्रोतुमिच्छामहे वयम् ।
यत्ते गुह्यतमं भद्रे तत्प्रभाषितुमर्हसि ॥ २
अरुन्धत्युवाच ।
तपोवृद्धिर्मया प्राप्ता भवतां स्मरणेन वै
भवतां च प्रसादेन धर्मान्वक्ष्यामि शाश्वतान् ॥ ३
सगुह्यान्सरहस्यांश्च ताञ्शृणुध्वमशेषतः ।
श्रद्दधाने प्रयोक्तव्या यस्य शुद्धं तथा मनः ॥ ४
अश्रद्दधानो मानी च ब्रह्महा गुरुतल्पगः ।
असंभाष्या हि चत्वारो नैषां धर्मं प्रकाशयेत् ॥ ५
अहन्यहनि यो दद्यात्कपिलां द्वादशीः समाः ।
मासिमासि च सत्रेण यो यजेत सदा नरः ॥ ६
गवां शतसहस्रं च यो दद्याज्ज्येष्ठपुष्करे ।
न तद्धर्मफलं तुल्यमतिथिर्यस्य तुष्यति ॥ ७
श्रूयतां चापरो धर्मो मनुष्याणां सुखावहः ।
श्रद्दधानेन कर्तव्यः सरहस्यो महाफलः ॥ ८
कल्यमुत्थाय गोमध्ये गृह्य दर्भान्सहोदकान् ।
निषिञ्चेत गवां शृङ्गे मस्तकेन च तज्जलम् ।
प्रतीच्छेत निराहारस्तस्य धर्मफलं शृणु ॥ ९
श्रूयन्ते यानि तीर्थानि त्रिषु लोकेषु कानिचित् ।
सिद्धचारणजुष्टानि सेवितानि महर्षिभिः ।
अभिषेकः समस्तेषां गवां शृङ्गोदकस्य च ॥ १०
साधुसाध्विति चोद्दिष्टं दैवतैः पितृभिस्तथा ।
भूतैश्चैव सुसंहृष्टैः पूजिता साऽप्यरुन्धती ॥ ११
पितामह उवाच ।
अहो धर्मो महाभागे सरहस्य उदाहृतः ।
वरं ददामि ते धन्ये तपस्ते वर्धतां सदा ॥ १२
यम उवाच ।
रमणीया कथा दिव्या युष्मत्तो या मया श्रुता ।
श्रूयतां चित्रगुप्तस्य भाषितं मम च प्रियम् ॥ १३
रहस्यं धर्मसंयुक्तं शक्यं श्रोतुं महर्षिभिः ।
श्रद्दधानेन मर्त्येन आत्मनो हितमिच्छता ॥ १४
न हि पुण्यं तथा पापं कृतं किंचिद्विनश्यति ।
पर्वकाले च यत्किंचिदादित्यं चाधितिष्ठति ॥ १५
प्रेतलोकं गते मर्त्ये तत्तत्सर्वं विभावसुः ।
प्रतिजानाति पुण्यात्मा तच्च तत्रोपयुज्यते ॥ १६
किंचिद्धर्मं प्रवक्ष्यामि चित्रगुप्तमतं शुभम् ।
पानीयं चैव दीपं च दातव्यं सततं तथा ॥ १७
उपानहौ च च्छत्रं च कपिला च यथातथम् ।
पुष्करे कपिला देया ब्राह्मणे वेदपारगे ॥ १८
अग्निहोत्रं च यत्नेन सर्वशः प्रतिपालयेत् ।
अयं चैवापरो धर्मश्चित्रगुप्तेन भाषितः ॥ १९
फलमस्य पृथक्त्वेन श्रोतुमर्हन्ति सत्तमाः ।
प्रलयं सर्वभूतैस्तु गन्तव्यं कालपर्ययात् ॥ २०
तत्र दुर्गमनुप्राप्ताः क्षुत्तृष्णापरिपीडिताः ।
दह्यमाना विपच्यन्ते न तत्रास्ति पलायनम् ॥ २१
अन्धकारं तमो घोरं प्रविशन्त्यल्पबुद्धयः ।
तत्र धर्मं प्रवक्ष्यामि येन दुर्गाणि संतरेत् ॥ २२
अल्पव्ययं महार्थं च प्रेत्य चैव सुखोदयम् ।

प्रयोक्तव्या धर्मा वाच्याः ॥ ४ ॥ प्रतिजानात्यर्पयति । उपयुज्यते पुण्यपापकर्ता ॥ १६ ॥ प्रकृष्टो लयोऽदर्शनं यस्मा- त्तत्प्रलयं मरणम् ॥ २० ॥ त्रिनवत्यधिकशततमोऽध्यायः १९३.

पानीयस्य गुणा दिव्याः प्रेतलोके विशेषतः २३
तत्र पुण्योदका नाम नदी तेषां विधीयते ।
अक्षयं सलिलं तत्र शीतलं ह्यमृतोपमम् ॥ २४
स तत्र तोयं पिबति पानीयं यः प्रयच्छति ।
प्रदीपस्य प्रदानेन श्रूयतां गुणविस्तरः ॥ २५
तमोन्धकारं नियतं दीपदो न प्रपश्यति
प्रभां चास्य प्रयच्छन्ति सोमभास्करपावकाः ।
देवताश्चानुमन्यन्ते विमलाः सर्वतो दिशः ॥ २६
द्योतते च यथाऽऽदित्यः प्रेतलोकगतो नरः
तस्माद्दीपः प्रदातव्यः पानीयं च विशेषतः ॥ २७
कपिलां ये प्रयच्छन्ति ब्राह्मणे वेदपारगे ।
पुष्करे च विशेषेण श्रूयतां तस्य यत्फलम् ॥२८
गोशतं सवृषं तेन दत्तं भवति शाश्वतम् ।
पापं कर्म च यत्किंचिद्ब्रह्महत्यासमं भवेत् ।
शोधयेत्कपिला ह्येका प्रदत्तं गोशतं यथा ॥ २९
तस्मात्तु कपिला देया कौमुद्यां ज्येष्ठपुष्करे ।
न तेषां विषमं किंचिन्न दुःखं न च कण्टकाः ३०
उपानहौ च यो दद्यात्पात्रभूते द्विजोत्तमे ।
छत्रदाने सुखां छायां लभते परलोकगः ॥ ३१
न हि दत्तस्य दानस्य नाशोऽस्तीह कदाचन ।
चित्रगुप्तमतं श्रुत्वा हृष्टरोमा विभावसुः ॥ ३२
उवाच देवताः सर्वाः पितॄंश्चैव महाद्युतिः ।
श्रुतं हि चित्रगुप्तस्य धर्मगुह्यं महात्मनः ॥ ३३
श्रद्धानाश्च ये मर्त्या ब्राह्मणेषु महात्मसु ।
दानमेतत्प्रयच्छन्ति न तेषां विद्यते भयम् ॥ ३४
धर्मदोषास्त्विमे पञ्च येषां नास्तीह निष्कृतिः
असंभाष्या अनाचारा वर्जनीया नराधमाः ॥३५
ब्रह्महा चैव गोघ्नश्च परदाररतश्च यः ।
अश्रद्धानश्च नरः स्त्रियं यश्चोपजीवति ॥ ३६
प्रेतलोकगता ह्येते नरके पापकर्मिणः ।
पच्यन्ते वै यथा मीनाः पूयशोणितभोजनाः ३७
असंभाष्याः पितॄणां च देवानां चैव पञ्च ते ।
स्नातकानां च विप्राणां ये चान्ये च तपोधनाः ३८

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि त्रिनवत्यधिकशततमोऽध्यायः ॥ १९३ ॥

## चतुर्नवत्यधिकशततमोऽध्यायः ॥ १९४ ॥

प्रमथैर्ऋषिगणान्प्रति प्रजानां स्वहिंसातदभावकारणाभिधानम् ॥ १ ॥

भीष्म उवाच ।
ततः सर्वे महाभागा देवाश्च पितरश्च ह ।
ऋषयश्च महाभागाः प्रमथान्वाक्यमब्रुवन् ॥ १
भवन्तो वै महाभागा अपरोक्षनिशाचराः ।
उच्छिष्टानशुचीन्क्षुद्रान्कथं हिंसथ मानवान् ॥ २
के च स्मृताः प्रतीघाता येन मर्त्यान्न हिंसथ ।
रक्षोघ्नानि च कानि स्युर्यैर्गृहेषु प्रणश्यथ ।
श्रोतुमिच्छाम युष्माकं सर्वमेतन्निशाचराः ॥ ३
प्रमथा ऊचुः ।
मैथुनेन सदोच्छिष्टाः कृते चैवाधरोत्तरे ।
मोहान्मांसानि खादेत वृक्षमूले च यः स्वपेत् ॥४
आमिषं शीर्षतो यस्य पादतो यश्च संविशेत् ।
तत उच्छिष्टकाः सर्वे बहुच्छिद्राश्च मानवाः ॥ ५
उदके चाप्यमेध्यानि श्लेष्माणं च प्रमुञ्चति ।
एते भक्ष्याश्च वध्याश्च मानुषा नात्र संशयः ॥६
एवं शीलसमाचारान्धर्षयामो हि मानवान् ।
श्रूयतां च प्रतीघातान्यैर्न शक्नुम हिंसितुम् ॥ ७
गोरोचनासमालम्भो वचाहस्तश्च यो भवेत् ।
घृताक्षतं च यो दद्यान्मस्तके तत्परायणः ॥ ८
ये च मांसं न खादन्ति तान्न शक्नुम हिंसितुम् ।
यस्य चाग्निर्गृहे नित्यं दिवारात्रौ च दीप्यते ॥ ९

अधरोत्तरे अधर उत्तरः श्रेष्ठो यत्र श्रेष्ठस्यावमाने कृते सति ॥ ४ ॥ आमिषं मांसं शिरसि दधानः । पादतः शय्याया पादस्थाने शिरः कृत्वा यः संविशेत् ॥ ५ ॥

तरक्षोश्वर्मदंष्ट्राश्च तथैव गिरिकच्छपः ।
आज्यधूमो बिडालश्च च्छागः कृष्णोऽथ पिङ्गलः॥
येषामेतानि तिष्ठन्ति गृहेषु गृहमेधिनाम् ।
तान्यधृष्याण्यगाराणि पिशिताशैः सुदारुणैः ११
लोकानस्माद्विधा ये च विचरन्ति यथासुखम् ।
तस्मादेतानि गेहेषु रक्षोघ्नानि विशांपते ।
एतद्वः कथितं सर्वं यत्र वः संशयो महान् ॥]१२

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि चतुर्नवत्यधिकशततमोऽध्यायः ॥ १९४ ॥

## पञ्चनवत्यधिकशततमोऽध्यायः ॥ १९५ ॥

रेणुकनामकेन करेणुना देवादीन्प्रति दिग्गजगदितधर्मनिवेदनम् ॥ १ ॥

[भीष्म उवाच ।
ततः पद्मप्रतीकाशः पद्मोद्भूतः पितामहः ।
उवाच वचनं देवान्वासवं च शचीपतिम् ॥ १
अयं महाबलो नागो रसातलचरो बली ।
तेजस्वी रेणुको नाम महासत्वपराक्रमः ॥ २
अतितेजस्विनः सर्वे महावीर्या महागजाः ।
धारयन्ति महीं कृत्स्नां सशैलवनकाननाम् ॥ ३
भवद्भिः समनुज्ञातो रेणुकस्तान्महागजान् ।
धर्मगुह्यानि सर्वाणि गत्वा पृच्छतु तत्र वै ॥ ४
पितामहवचः श्रुत्वा ते देवा रेणुकं तदा ।
प्रेषयामासुरव्यग्रा यत्र ते धरणीधराः ॥
रेणुक उवाच ।
अनुज्ञातोऽस्मि देवैश्च पितृभिश्च महाबलाः ।
धर्मगुह्यानि युष्माकं श्रोतुमिच्छामि तत्त्वतः
कथयध्वं महाभागा यद्वस्तत्त्वं मनीषितम् ॥ ६
दिग्गजा ऊचुः ।
कार्तिके मासि चाश्लेषा बहुलस्याष्टमी शिवा ।
तेन नक्षत्रयोगेन यो ददाति गुडौदनम् ।
इमं मन्त्रं जपञ्श्राद्धे यताहारो ह्यकोपनः ॥ ७
बलदेवप्रभृतयो ये नागा बलवत्तराः ।
अनन्ता ह्यक्षया नित्यं भोगिनः सुमहाबलाः ॥८
तेषां कुलोद्भवा ये च महाभूता भुजङ्गमाः ।
ते मे बलिं प्रयच्छन्तु बलतेजोभिवृद्धये ॥ ९
यदा नारायणः श्रीमानुज्जहार वसुंधराम् ।
तद्बलं तस्य देवस्य धरामुद्धरतस्तथा ॥ १०
एवमुक्त्वा बलिं तत्र वल्मीके तु निवेदयेत् ॥११
गजेन्द्रकुसुमाकीर्णं नीलवस्त्रानुलेपनम् ।
निर्वपेत्तं तु वल्मीके अस्तं याते दिवाकरे ॥ १२
एवं तुष्टास्ततः सर्वे अधस्ताद्भारपीडिताः ।
श्रमं तं नावबुध्यामो धारयन्तो वसुंधराम् ॥१३
एवं मन्यामहे सर्वे भारार्ता निरपेक्षिणः ।
ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा यद्युपोषितः१४
एवं संवत्सरं कृत्वा दानं बहुफलं लभेत् ।
वल्मीके बलिमादाय तन्नो बहुफलं मतम् ॥ १५
ये च नागा महावीर्यास्त्रिषु लोकेषु कृत्स्नशः ।
कृतातिथ्या भवेयुस्ते शतं वर्षाणि तत्त्वतः ॥ १६
दिग्गजानां च तच्छ्रुत्वा देवताः पितरस्तथा ।
ऋषयश्च महाभागाः पूजयन्ति स्म रेणुकम् ॥]१७

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि पञ्चनवत्यधिकशततमोऽध्यायः ॥ १९५ ॥

## षण्णवत्यधिकशततमोऽध्यायः ॥ १९६ ॥

महेश्वरेण देवादीन्प्रति गोप्रशसनम् ॥ १ ॥

[महेश्वर उवाच ।
सारमुद्धृत्य युष्माभिः साधुधर्म उदाहृतः ।

---

तरक्षोर्व्याघ्रस्य । गिरिकच्छपः पर्वतदरीशायी स्थलकूर्मः ॥१०॥ चतुर्नवत्यधिकशततमोऽध्यायः ॥ १९४ ॥

नागो गजः ॥ २ ॥ पञ्चनवत्यधिकशततमोऽध्यायः ॥१९५॥

धर्मगुह्यमिदं मत्तः शृणुध्वं सर्व एव ह ॥ १
येषां धर्माश्रिता बुद्धिः श्रद्धानाश्च ये नराः
तेषां स्यादुपदेष्टव्यः सरहस्यो महाफलः ॥
निरुद्विग्नस्तु यो दद्यान्मासमेकं गवाह्निकम्
एकभक्तं तथाऽश्नीयाच्छ्रयतां तस्य यत्फलम् ॥३
इमा गावो महाभागाः पवित्रं परमं स्मृताः ।
त्रींल्लोकान्धारयन्ति स्म सदेवासुरमानुषान् ॥ ४
तासु चैव महापुण्यं शुश्रूषा च महाफलम् ।
अहन्यहनि धर्मेण युज्यते वै गवाह्निकः ॥ ५
मया ह्येता ह्यनुज्ञाताः पूर्वमासन्कृते युगे ।
ततोऽहमनुनीतो वै ब्रह्मणा पद्मयोनिना ॥ ६
तस्माद्व्रजस्थानगतस्तिष्ठत्युपरि मे वृषः ।
रमेऽहं सह गोभिश्च तस्मात्पूज्याः सदैव ताः ॥७
महाप्रभावा वरदा वरं दद्युरुपासिताः ।
ता गावोऽस्यानुमन्यन्ते सर्वकर्मसु यत्फलम् ॥ ८
तस्य तत्र चतुर्भागो यो ददाति गवाह्निकम् ॥] ९

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि षण्णवत्यधिकशततमोऽध्यायः ॥ १९६ ॥

## सप्तनवत्यधिकशततमोऽध्यायः ॥ १९७ ॥

स्कन्देन देवादीन्प्रति धर्मरहस्यविशेषकथनम् ॥ १ ॥

[स्कन्द उवाच ।
ममाप्यनुमतो धर्मस्तं शृणुध्वं समाहिताः ।
नीलषण्डस्य शृङ्गाभ्यां गृहीत्वा मृत्तिकां तु यः ॥१
अभिषेकं त्र्यहं कुर्यात्तस्य धर्मं निबोधत ।
शोधयेदशुभं सर्वमाधिपत्यं परत्र च ॥ २
यावच्च जायते मर्त्यस्तावच्छूरो भविष्यति ।
इदं चाप्यपरं गुह्यं सरहस्यं निबोधत ॥ ३
प्रगृह्यौदुम्बरं पात्रं पक्वान्नं मधुना सह
सोमस्योत्तिष्ठमानस्य पौर्णमास्यां बलिं हरेत् ॥ ४
तस्य धर्मफलं नित्यं श्रद्दधाना निबोधत ।
साध्या रुद्रास्तथाऽऽदित्या विश्वेदेवास्तथाऽश्विनौ
मरुतो वसवश्चैव प्रतिगृह्णन्ति तं बलिम् ।
सोमश्च वर्धते तेन समुद्रश्च महोदधिः ६
एष धर्मो मयोद्दिष्टः सरहस्यः सुखावहः ॥ ७
विष्णुरुवाच ।
धर्मगुह्यानि सर्वाणि देवतानां महात्मनाम् ।
ऋषीणां चैव गुह्यानि यः पठेदाह्निकं सदा ॥ ८
शृणुयाद्वाऽनसूयुर्यः श्रद्दधानः समाहितः ।
नास्य विघ्नः प्रभवति भयं चास्य न विद्यते ॥ ९
ये च धर्माः शुभाः पुण्याः सरहस्या उदाहृताः ।
तेषां धर्मफलं तस्य यः पठेत जितेन्द्रियः ॥ १०
नास्य पापं प्रभवति न च पापेन लिप्यते ।
पठेद्वा श्रावयेद्वाऽपि श्रुत्वा वा लभते फलम् ॥११
भुञ्जते पितरो देवा हव्यं कव्यमथाक्षयम् ।
श्रावयंश्चापि विप्रेन्द्रान्पर्वसु प्रयतो नरः ॥ १२
ऋषीणां देवतानां च पितॄणां चैव नित्यदा ।
भवत्यभिमतः श्रीमान्धर्मेषु प्रयतः सदा ॥ १३
कृत्वाऽपि पापकं कर्म महापातकवर्जितम्
रहस्यधर्मं श्रुत्वेमं सर्वपापैः प्रमुच्यते ॥ १४
भीष्म उवाच ।
एतद्धर्मरहस्यं वै देवतानां नराधिप ।
व्यासोद्दिष्टं मया प्रोक्तं सर्वदेवनमस्कृतम् ॥ १५
पृथिवी रत्नसंपूर्णा ज्ञानं चेदमनुत्तमम्
इदमेव ततः श्राव्यमिति मन्येत धर्मवित् ॥ १६
नाश्रद्दधानाय न नास्तिकाय
न नष्टधर्माय न निर्घृणाय ।
न हेतुदुष्टाय गुरुद्विषे वा
नानात्मभूताय निवेद्यमेतत् ॥ १७

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि सप्तनवत्यधिकशततमोऽध्यायः ॥ १९७ ॥

## अष्टनवत्यधिकशततमोऽध्यायः ॥ १९८ ॥

भीष्मेण युधिष्ठिरंप्रति भोज्याभोज्यान्नकानां भोजनीयानां जनानां च विवेचनम् ॥ १ ॥

युधिष्ठिर उवाच ।
के भोज्या ब्राह्मणस्येह के भोज्याः क्षत्रियस्य
तथा वैश्यस्य के भोज्याः के शूद्रस्य च भारत॥१
भीष्म उवाच
ब्राह्मणा ब्राह्मणस्येह भोज्या ये चैव क्षत्रियाः ।
वैश्याश्चापि तथा भोज्याः शूद्राश्च परिवर्जिताः॥२
ब्राह्मणाः क्षत्रिया वैश्या भोज्या वै क्षत्रियस्य ह ।
वर्जनीयास्तु वै शूद्राः सर्वभक्षा विकर्मिणः ॥ ३
वैश्यास्तु भोज्या विप्राणां क्षत्रियाणां तथैव च ।
नित्याग्नयो विविक्ताश्च चातुर्मास्यरताश्च ये ॥ ४
शूद्राणामथ यो भुङ्क्ते स भुङ्क्ते पृथिवीमलम्
मलं नृणां स पिबति मलं भुङ्क्ते जनस्य च ॥ ५
शूद्राणां यस्तथा भुङ्क्ते स भुङ्क्ते पृथिवीमलम् ।
पृथिवीमलमश्नन्ति ये द्विजाः शूद्रभोजिनः ॥ ६
शूद्रस्य कर्मनिष्ठायां विकर्मस्थोपि पच्यते ।
ब्राह्मणः क्षत्रियो वैश्यो विकर्मस्थश्च पच्यते ॥ ७
स्वाध्यायनिरता विप्रास्तथा स्वस्त्ययने नृणाम् ।
रक्षणे क्षत्रियं प्राहुर्वैश्यं पुष्ट्यर्थमेव च ॥ ८
करोति कर्म यद्वैश्यस्तद्गत्वा ह्युपजीवति ।
कृषिगोरक्ष्यवाणिज्यमकुत्सा वैश्यकर्मणि ॥ ९
शूद्रकर्म तु यः कुर्यादवहाय स्वकर्म च
स विज्ञेयो यथा शूद्रो न च भोज्यः कदाचन॥१०
चिकित्सकः काण्डपृष्ठः पुराध्यक्षः पुरोहितः ।
सांवत्सरो वृथाध्यायी सर्वे ते शूद्रसंमिताः ॥११
शूद्रकर्मस्वथैतेषु यो भुङ्क्ते निरपत्रपः
अभोज्यभोजनं भुक्त्वा भयं प्राप्नोति दारुणम्१२
कुलं वीर्यं च तेजश्च तिर्यग्योनित्वमेव च ।
स प्रयाति यथा श्वा वै निष्क्रियो धर्मवर्जितः१३
भुङ्क्ते चिकित्सकस्यान्नं तदन्नं च पुरीषवत् ।
पुंश्चल्यन्नं च मूत्रं स्यात्कारुकान्नं च शोणितम्१४
विद्योपजीविनोऽन्नं च यो भुङ्क्ते साधुसंमतः ।
तदप्यन्नं यथा शौद्रं तत्साधुः परिवर्जयेत् ॥ १५
वचनीयस्य यो भुङ्क्ते तमाहुः शोणितं ह्रदम् ।
पिशुनं भोजनं भुङ्क्ते ब्रह्महत्यासमं विदुः ॥ १६
असत्कृतमवज्ञातं न भोक्तव्यं कदाचन ॥ १७
व्याधिं कुलक्षयं चैव क्षिप्रं प्राप्नोति ब्राह्मणः ।
नगरीरक्षिणो भुङ्क्ते श्वपचप्रवणो भवेत् ॥ १८
गोघ्ने च ब्राह्मणघ्ने च सुरापे गुरुतल्पगे ।
भुक्त्वाऽन्नं जायते विप्रो रक्षसां कुलवर्धनः॥१९
न्यासापहारिणो भुक्त्वा कृतघ्ने क्लीबवर्तिनि ।
जायते शबरावासे मध्यदेशबहिष्कृते ॥ २०
अभोज्याश्चैव भोज्याश्च मया प्रोक्ता यथाविधि ।
किमन्यदद्य कौन्तेय मत्तस्त्वं श्रोतुमिच्छसि॥]२१

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि अष्टनवत्यधिकशततमोऽध्यायः ॥ १९८ ॥

## एकोनद्विशततमोऽध्यायः ॥ १९९ ॥

भीष्मेण युधिष्ठिरंप्रति अप्रतिग्राह्यप्रतिग्रहे अभोज्यभोजने च प्रायश्चित्तकथनम् ॥ १ ॥

[युधिष्ठिर उवाच ।
उक्तास्तु भवता भोज्यास्तथाऽभोज्याश्च सर्वशः ।
अत्र मे प्रश्नसंदेहस्तन्मे वद पितामह ॥ १
ब्राह्मणानां विशेषेण हव्यकव्यप्रतिग्रहे ।

के भोज्या भोज्यान्नाः ॥ १ ॥ वैश्या भोज्या भोजनीयाः ॥ ४ ॥ शूद्रस्य कर्मनिष्ठाया सेवायां वर्तमानो विकर्मस्थो विशिष्टकर्मस्थः सन्ध्यावन्दनादियुक्तोऽपि पच्यते नरके इति शेषः ॥ ७ ॥ काण्डपृष्ठोऽधमः ॥ ११ ॥ पिशुन तत्संबन्धि ॥ १६ ॥ नगरी रक्षति तस्य ॥ १८ ॥ अष्टनवत्यधिकशतत-मोऽध्यायः ॥ १९८ ॥

नानाविधेषु भोज्येषु प्रायश्चित्तानि शंस मे ॥ २
भीष्म उवाच ।
हन्त वक्ष्यामि ते राजन्ब्राह्मणानां महात्मनाम् ।
प्रतिग्रहेषु भोज्ये च मुच्यते येन पाप्मनः ॥ ३
घृतप्रतिग्रहे चैव सावित्री समिदाहुतिः ।
तिलप्रतिग्रहे चैव सममेतद्युधिष्ठिर ॥ ४
मांसप्रतिग्रहे चैव मधुनो लवणस्य च ।
आदित्योदयनं स्थित्वा पूतो भवति ब्राह्मणः ॥५
काञ्चनं प्रतिगृह्याथ जपमानो गुरुश्रुतिम् ।
कृष्णायसं च विवृतं धारयन्मुच्यते द्विजः ॥ ६
एवं प्रतिगृहीतेऽथ धने वस्त्रे तथा स्त्रियाम् ।
एवमेव नरश्रेष्ठ सुवर्णस्य प्रतिग्रहे ॥ ७
अन्नप्रतिग्रहे चैव पायसेक्षुरसे तथा
इक्षुतैलपवित्राणां त्रिसन्ध्येऽप्सु निमज्जनम् ॥ ८
व्रीहौ पुष्पे फले चैव जले पिष्टमये तथा ।
यावके दधिदुग्धे च सावित्रीं शतशोऽन्विताम् ९
उपानहौ च च्छत्रं च प्रतिगृह्यौर्ध्वदेहिके ।
जपेच्छतं समायुक्तस्तेन मुच्येत पाप्मना ॥ १०
क्षेत्रप्रतिग्रहे चैव ग्रहसूतकयोस्तथा ।
त्रीणि रात्राण्युपोषित्वा तेन पापाद्विमुच्यते॥११
कृष्णपक्षे तु यः श्राद्धं पितॄणामश्नुते द्विजः ।
अन्नमेतदहोरात्रात्पूतो भवति ब्राह्मणः ॥ १२
न च सन्ध्यामुपासीत न च जाप्यं प्रवर्तयेत्
न संकिरेत्तदन्नं च ततः पूयेत ब्राह्मणः ॥ १३
इत्यर्थमपराह्णे तु पितॄणां श्राद्धमुच्यते ।
यथोक्तानां यदश्नीयुर्ब्राह्मणाः पूर्वकेतिताः ॥१४
मृतकस्य तृतीयाहे ब्राह्मणो योऽन्नमश्नुते ।
स त्रिवेलं समुन्मज्ज्य द्वादशाहेन शुध्यति ॥ १५
द्वादशाहे व्यतीते तु कृतशौचो विशेषतः ।
ब्राह्मणेभ्यो हविर्दत्त्वा मुच्यते तेन पाप्मना॥१६
मृतस्य दशरात्रेण प्रायश्चित्तानि दापयेत् ।
सावित्रीं रैवतीमिष्टिं कूश्माण्डमघमर्षणम् ॥ १७
मृतकस्य त्रिरात्रे यः समुद्दिष्टे समश्नुते ।
सप्तत्रिषवणं स्नात्वा पूतो भवति ब्राह्मणः ॥ १८
सिद्धिमाप्नोति विपुलामापदं चैव नाप्नुयात् ॥१९
यस्तु शूद्रैः समश्नीयाद्ब्राह्मणोऽप्येकभोजने ।
अशौचं विधिवत्तस्य शौचमत्र विधीयते ॥ २०
यस्तु वैश्यैः सहाश्नीयाद्ब्राह्मणोऽप्येकभोजने ।
स वै त्रिरात्रं दीक्षित्वा मुच्यते तेन कर्मणा ॥ २१
क्षत्रियैः सह योऽश्नीयाद्ब्राह्मणोऽप्येकभोजने ।
आप्लुतः सह वासोभिस्तेन मुच्येत पाप्मना ॥२२
शूद्रस्य तु कुलं हन्ति वैश्यस्य पशुबान्धवान् ।
क्षत्रियस्य श्रियं हन्ति ब्राह्मणस्य सुवर्चसम् ॥२३
प्रायश्चित्तं च शान्तिं च जुहुयात्तेन मुच्यते ।
सावित्रीं रैवतीमिष्टिं कूश्माण्डमघमर्षणम् ॥ २४
तथोच्छिष्टमथान्योन्यं संप्राशेन्नात्र संशयः ।
रोचना विरजा रात्रिर्मङ्गलालम्भनानि च ॥ २५

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि एकोनद्विशततमोऽध्यायः ॥ १९९ ॥

## द्विशततमोऽध्यायः ॥ २०० ॥

भीष्मेण युधिष्ठिरंप्रति दृष्टान्तप्रदर्शनपूर्वकं दानप्रशंसनम् ॥ १ ॥

युधिष्ठिर उवाच ।
दानेन वर्ततेत्याह तपसा चैव भारत ।

आदित्योदयन तत्पर्यन्तं स्थित्वा ॥ ५ ॥ विवृत लोकप्रत्यक्षं धारयन् ॥ ६ ॥ ग्रहसूतकयोः कारागारस्थाशौचवतोः ॥ ११ ॥ नच संध्यामुपासीतेत्यत्र अस्नात इति शेषः । न संकिरेदिति पुनर्भोजनं न कुर्यादित्यर्थः ॥ १३ ॥ अश्नीयुरित्यर्थमिति संबन्धे अपराह्णे क्षुद्बोधात्सम्यगन्नमश्नन्तीत्यर्थः । केतिताः निमन्त्रिताः ॥ १४ ॥ हविरन्नम् ॥ १६ ॥ सावित्री जपन् । रैवतीं रैवत साम । इष्टि पवित्रेष्टिम् । कूश्माण्डं यद्देवादेवहेडनमित्यनुवाकपञ्चकम् । अघमर्षण जले निमज्ज्य दशप्रणवसंयुक्तगायत्र्याः ऋतचेति तृचस्य वा त्रिर्जपः ॥ १७ ॥ अशौच प्रायश्चित्ताभाव एव ॥ २० ॥ विरजा दूर्वा रात्रिर्हरिद्रेति विश्वः ॥ २५ ॥ एकोनद्विशततमोऽध्यायः ॥ १९९ ॥

दानतपसोर्मध्ये किं श्रेष्ठमिति प्रश्नः । वर्तते स्वर्गे इति शेषः ।

तदेतन्मे मनोदुःखं व्यपोह त्वं पितामह ।
किंस्वित्पृथिव्यां ह्येतन्मे भवाञ्शंसितुमर्हति ॥ १
भीष्म उवाच ।
शृणु यैर्धर्मनिरतैस्तपसा भावितात्मभिः ।
लोका ह्यसंशयं प्राप्ता दानपुण्यरतैर्नृपैः ॥ २
सत्कृतश्च तथाऽऽत्रेयः शिष्येभ्यो ब्रह्म निर्गुणम् ।
उपदिश्य तदा राजन्गतो लोकाननुत्तमान् ॥ ३
शिबिरौशीनरः प्राणान्प्रियस्य तनयस्य च ।
ब्राह्मणार्थमुपाकृत्य नाकपृष्ठमितो गतः ॥ ४
प्रतर्दनः काशिपतिः प्रदाय तनयं स्वकम् ।
ब्राह्मणायातुलां कीर्तिमिह चामुत्र चाश्नुते ॥ ५
रन्तिदेवश्च सांकृत्यो वसिष्ठाय महात्मने ।
अर्घ्यं प्रदाय विधिवल्लेभे लोकाननुत्तमान् ॥ ६
दिव्यं शतशलाकं च यज्ञार्थं काञ्चनं शुभम् ।
छत्रं देवावृधो दत्त्वा ब्राह्मणायास्थितो दिवम् ॥७
भगवानम्बरीषश्च ब्राह्मणायामितौजसे ।
प्रदाय सकलं राष्ट्रं सुरलोकमवाप्तवान् ॥ ८
सावित्रः कुण्डलं दिव्यं यानं च जनमेजयः ।
ब्राह्मणाय च गा दत्त्वा गतो लोकाननुत्तमान् ॥९
वृषादर्भिश्च राजर्षी रत्नानि विविधानि च ।
रम्यांश्चावसथान्दत्त्वा द्विजेभ्यो दिवमागतः १०
निमी राष्ट्रं च वैदर्भिः कन्यां दत्त्वा महात्मने ।
अगस्त्याय गतः स्वर्गं सपुत्रपशुबान्धवः ॥ ११
जामदग्न्यश्च विप्राय भूमिं दत्त्वा महायशाः ।
रामोऽक्षयांस्तथा लोकाञ्जगाम मनसोऽधिकान् ॥
अवर्षति च पर्जन्ये सर्वभूतानि देवराट् ।
वसिष्ठो जीवयामास येन यातोऽक्षयां गतिम् १३
रामो दाशरथिश्चैव हुत्वा यज्ञेषु वै वसु ।
स गतो ह्यक्षयाँल्लोकान्यस्य लोके महद्यशः ॥१४
कक्षसेनश्च राजर्षिर्वसिष्ठाय महात्मने ।
न्यासं यथावत्संन्यस्य जगाम सुमहायशः ॥ १५

करंधमस्य पौत्रस्तु मरुत्तोऽविक्षितः सुतः ।
कन्यामाङ्गिरसे दत्त्वा दिवमाशु जगाम सः ॥१६
ब्रह्मदत्तश्च पाञ्चाल्यो राजा धर्मभृतांवरः ।
निधिं शङ्खमनुज्ञाप्य जगाम परमां गतिम् ॥१७
राजा मित्रसहश्चैव वसिष्ठाय महात्मने ।
मदयन्तीं प्रियां भार्यां दत्त्वा च त्रिदिवं गतः ॥
मनोः पुत्रश्च सुद्युम्नो लिखिताय महात्मने ।
दण्डमुद्धृत्य धर्मेण गतो लोकाननुत्तमान् ॥ १९
सहस्रचित्यो राजर्षिः प्राणानिष्टान्महायशाः ।
ब्राह्मणार्थे परित्यज्य गतो लोकाननुत्तमान् २०
सर्वकामैश्च संपूर्णं दत्त्वा वेश्म हिरण्मयम् ।
मौद्गल्याय गतः स्वर्गं शतद्युम्नो महीपतिः ॥ २१
भक्ष्यभोज्यस्य च कृतान्राशयः पर्वतोपमान् ।
शाण्डिल्याय पुरा दत्त्वा सुमन्युर्दिवमास्थितः २२
नाम्ना च द्युतिमान्नाम साल्वराजो महाद्युतिः ।
दत्त्वा राज्यमृचीकाय गतो लोकाननुत्तमान् २३
मदिराश्वश्च राजर्षिर्दत्त्वा कन्यां सुमध्यमाम् ।
हिरण्यहस्ताय गतो लोकान्देवैरधिष्ठितान् ॥ २४
लोमपादश्च राजर्षिः शान्तां दत्त्वा सुतां प्रभुः ।
ऋश्यशृङ्गाय विपुलैः सर्वैः कामैरयुज्यत ॥ २५
कौत्साय दत्त्वा कन्यां तु हंसीं नाम यशस्विनीम्
गतोऽक्षयानतो लोकान्राजर्षिश्च भगीरथः ॥ २६
दत्त्वा शतसहस्रं तु गवां राजा भगीरथः ।
सवत्सानां कोहलाय गतो लोकाननुत्तमान् २७
एते चान्ये च बहवो दानेन तपसा च ह ।
युधिष्ठिर गताः स्वर्गं निवर्तन्ते पुनःपुनः ॥ २८
तेषां प्रतिष्ठिता कीर्तिर्यावत्स्थास्यति मेदिनी ।
गृहस्थैर्दानतपसा यैर्लोका वै विनिर्जिताः ॥ २९
शिष्टानां चरितं ह्येतत्कीर्तितं मे युधिष्ठिर ।
दानयज्ञप्रजासर्गैरेते हि दिवमास्थिताः ॥ ३०
दत्त्वा तु सततं तेऽस्तु कौरवाणां धुरंधर ।
दानयज्ञक्रियायुक्ता बुद्धिर्धर्मोपचायिनी ॥ ३१

संधिरार्षः ॥ १ ॥ सावित्रः कर्णः ॥ ९ ॥ मनसो मनःसंकल्पादप्यधिकान् ॥ १२ ॥ देवराट् भूदेवराट् वसिष्ठः ॥ १३ ॥ न्यासं दानरूपेण स्थापनम् ॥ १५ ॥ अनुज्ञाप्य दत्त्वा ॥ १७ ॥

दण्ड चोरयोग्य हस्तच्छेदरूपम् ॥ १९ ॥ राशयः राशीन् ॥ २२ ॥ द्विशततमोऽध्यायः ॥ २०० ॥

यत्र ते नृपशार्दूल संदेहो वै भविष्यति ।
श्वः प्रभाते हि वक्ष्यामि सन्ध्या हि समुपस्थिता ३२

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि द्विशततमोऽध्यायः ॥ २०० ॥

## एकाधिकद्विशततमोऽध्यायः ॥ २०१ ॥

भीष्मेण युधिष्ठिरंप्रति दानस्य पञ्चविधत्वकथनपूर्वकं तत्तल्लक्ष्यप्रदर्शनम् ॥ १ ॥

[युधिष्ठिर उवाच ।
श्रुतं मे भवतस्तात सत्यव्रतपराक्रम ।
दानधर्मेण महता ये प्राप्तास्त्रिदिवं नृपाः ॥ १
इमांस्तु श्रोतुमिच्छामि धर्मान्धर्मभृतांवर ।
दानं कतिविधं देयं किं तस्य च फलं लभेत् ॥ २
कथं केभ्यश्च धर्म्यं च दानं दातव्यमिष्यते ।
कैः कारणैः कतिविधं श्रोतुमिच्छामि तत्त्वतः ॥ ३
भीष्म उवाच ।
शृणु तत्त्वेन कौन्तेय दानं प्रति ममानघ ।
यथा दानं प्रदातव्यं सर्ववर्णेषु भारत ॥ ४
धर्मादर्थाद्भयात्कामात्कारुण्यादिति भारत ।
दानं पञ्चविधं ज्ञेयं कारणैर्यैर्निबोध तत् ॥ ५
इह कीर्तिमवाप्नोति प्रेत्य चानुत्तमं सुखम् ।
इति दानं प्रदातव्यं ब्राह्मणेभ्योऽनसूयता ॥ ६
ददाति वा दास्यति वा मह्यं दत्तमनेन वा
इत्यर्थिभ्यो निशम्यैव सर्वं दातव्यमर्थिने ॥ ७
नास्याहं न मदीयोऽयं पापं कुर्याद्विमानितः ।
दद्याद्भयादेव दृढं मूढाय पण्डितः ॥ ८
प्रियो मे यं प्रियोऽस्याहमिति संप्रेक्ष्य बुद्धिमान्
वयस्यायैवमक्लिष्टं दानं दद्यादतन्द्रितः ॥ ९
दीनश्च याचते चायमल्पेनापि हि तुष्यति ।
इति दद्याद्दरिद्राय कारुण्यादिति सर्वथा ॥ १०
इति पञ्चविधं दानं पुण्यकीर्तिविवर्धनम् ।
यथाशक्त्या प्रदातव्यमेवमाह प्रजापतिः ॥] ११

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि एकाधिकद्विशततमोऽध्यायः ॥ २०१ ॥

## द्व्यधिकद्विशततमोऽध्यायः ॥ २०२ ॥

युधिष्ठिरेण भीष्मंप्रति सप्रशंसनं पुनर्धर्मकथनप्रार्थना ॥ १ ॥

वैशंपायन उवाच
अनुशास्य शुभैर्वाक्यैर्भीष्ममाह महामतिः ।
प्रीत्या पुनः स शुश्रूषुर्वचनं यद्युधिष्ठिरः ॥ १
जनमेजय उवाच ।
पितामहो मे विप्रर्षे भीष्मं कालवशं गतम् ।
किमपृच्छत्तदा राजा सर्वसामाजिकं हितम् ॥ २
उभयोर्लोकयोर्युक्तं पुरुषार्थमनुत्तमम् ।
तन्मे वद महाप्राज्ञ श्रोतुं कौतूहलं हि मे ॥ ३
वैशंपायन उवाच ।
भूय एव महाराज शृणु धर्मसमुच्चयम् ।
यदपृच्छत्तदा राजा कुन्तीपुत्रो युधिष्ठिरः ॥ ४
शरतल्पगतं भीष्मं सर्वपार्थिवसन्निधौ ।
अजातशत्रुः प्रीतात्मा पुनरेवाभ्यभाषत ॥ ५
पितामह महाप्राज्ञ सर्वशास्त्रविशारद ।
श्रूयतां मे हि वचनमर्थित्वात्प्रब्रवीम्यहम् ॥ ६
परावरज्ञो भूतानां दयावान्सर्वजन्तुषु ।

धर्माद्दान व्याचष्टे इहेति ॥ ६ ॥ अर्थादित्यस्य लक्षणमाह ददातीति ॥ ७ ॥ एकाधिकद्विशततमोऽध्यायः ॥ २०१ ॥

* एकोत्तरद्विशततमाध्यायात्परं एकपञ्चाशदधिकद्विशततमाध्यायात्पूर्वं मध्ये परिदृश्यमानैकोनपञ्चाशदध्यायप्रतिनिधितया औत्तराहकोशे अष्टावेवाध्यायाः परिदृश्यन्ते । तेचानुपूर्वीभेदेन तदर्थैकदेशप्रतिपादकाएव दृश्यन्ते नतु तदनुक्तार्थप्रतिपादकाः ॥

आगमैर्बहुभिः प्रीतो भवान्नः परमं कुले ॥ ७
त्वादृशो दुर्लभो लोके सांप्रतं ज्ञानसंयुतः ।
भवता गुरुणा चैव धन्याश्चैव वयं प्रभो ॥ ८
अयं स कालः संप्राप्तो दुर्लभैर्ज्ञातिबान्धवैः ।
शास्ता तु नास्ति नः कश्चित्त्वदृते पुरुषर्षभ ॥ ९
तस्माद्धर्मार्थसहितमायत्यां च हितोदयम् ।
आश्चर्यं परमं वाक्यं श्रोतुमिच्छामि भारत ॥१०
अयं नारायणः श्रीमान्सर्वपार्थिवसंनिधौ ।
भवन्तं बहुमानाच्च प्रणयाच्चैव सेवते ॥ ११
अस्यैव तु समक्षं नः पार्थिवानां तथैव च ।
इतिवृत्तं पुराणं च श्रोतॄणां परमं हितम् ॥ १२
यदि तेऽहमनुग्राह्यो भ्रातृभिः सहितोऽनघ ।
मत्प्रियार्थं हि कौरव्य स्नेहाद्भाषितुमर्हसि ॥ १३
वैशंपायन उवाच ।
तस्य तद्वचनं श्रुत्वा स्नेहादागतविक्लवः ।
प्रपिबन्निव तं दृष्ट्वा भीष्मो वचनमब्रवीत् ॥ १४
शृणु राजन्पुरावृत्तमितिहासं पुरातनम् ।
एतावदुक्त्वा गाङ्गेयः प्रणम्य शिरसा हरिम् ।
धर्मराजं समीक्ष्येदं पुनर्वक्तुं समारभत् ॥ १५

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि द्व्यधिकद्विशततमोऽध्यायः ॥ २०२ ॥

## त्र्यधिकद्विशततमोऽध्यायः ॥ २०३ ॥

कृष्णेन पुत्रार्थं कैलासे तपश्चरणम् ॥ १ ॥ तत्र कृष्णदर्शनाय नारदादीनामागमनम् ॥ २ ॥ कृष्णेन स्वमुखनिःसृताग्निना तत्पर्वतस्य भस्मीकरणम् ॥ ३ ॥ तथा पुनः प्रसन्नदृष्ट्या गिरेरुज्जीवनम् ॥ ४ ॥ तथा नारदादीन्प्रति तत्कारणकथनम् ॥ ५ ॥

भीष्म उवाच ।
अयं नारायणः श्रीमान्पुत्रार्थे व्रतकाङ्क्षया ।
दीक्षितोऽभून्महाबाहुः पुरा द्वादशवार्षिकम् ॥ १
दीक्षितं केशवं द्रष्टुमभिजग्मुर्महर्षयः ।
सेवित्वा च महात्मानः श्रीमन्तं जनार्दनम् २
नारदः पर्वतश्चैव कृष्णद्वैपायनस्तथा ।
देवलः काश्यपश्चैव हस्तिकाश्यप एव च ।
जमदग्निश्च राजेन्द्र धौम्यो वाल्मीकिरेव च ॥ ३
अपरेऽपि तपःसिद्धाः सत्यव्रतपरायणाः ।
शिष्यैरनुगताः सर्वे ब्रह्मविद्भिरकल्मषैः ॥ ४
केशवस्तानभिगतान्प्रीत्या संपरिगृह्य च ।
तेषामतिथिसत्कारं पूजनार्थं कुलोचितम् ।
देवकीतनयो हृष्टो देवतुल्यमकल्पयत् ॥ ५
उपविष्टेषु सर्वेषु विष्टरेषु तदाऽनघ ।
विश्वस्तेष्वभितुष्टेषु केशवार्चनया पुनः ॥ ६
परस्परं कथा दिव्याः प्रावर्तन्त मनोरमाः ।
विष्णोर्नारायणस्यैव प्रसादात्कथयामि ताः ॥ ७
तस्यैव व्रतचर्यायां मुनिभिर्विस्मितं पुरा ।
यत्र गोवृषभाङ्कस्य प्रभावोऽभून्महात्मनः ॥ ८
यत्र देवी महादेवमपृच्छत्संशयान्पुरा ।
कथयामास सर्वांस्तान्देव्याः प्रियचिकीर्षया ॥ ९
उमापत्योश्च संवादं शृणु तात मनोरमम् ।
वर्णाश्रमाणां धर्मश्च तत्र तात समाहितः ॥ १०
ऋषिधर्मश्च निखिलो राजधर्मश्च पुष्कलः ।
गृहस्थधर्मश्च शुभः कर्मपाकफलानि च ॥ ११
देवगुह्यं च विविधं दानधर्मविधिस्तथा ।
विज्ञानमत्र प्रोक्तं यद्यमस्य नियमस्य च ॥ १२
यमलोकविधानं च स्वर्गलोकगतिस्तथा ।
प्राणमोक्षविधिश्चैव तीर्थचर्या च पुष्कला ॥ १३
मोक्षधर्मविधानं च साङ्ख्ययोगसमन्वितम् ।
स्त्रीधर्मश्च स्वयं देव्या देवदेवाय भाषितः ॥ १४
एवमादि शुभं सर्वं तत्र तात समाहितम् ।
रुद्राण्याः संशयप्रश्नो यत्र तात प्रवर्तते ॥ १५
धन्यं यशस्यमायुष्यं धर्म्यं च परमं हितम् ।
पुष्टियोगमिमं दिव्यं कथ्यमानं मया शृणु ॥ १६
इतिहासमिमं दिव्यं पवित्रं परमं शुभम् ।
सायं प्रातः सदा सम्यक् श्रोतव्यं च बुभूषता ॥

भीष्म उवाच ।
ततो नारायणो देवः संक्लिष्टो व्रतचर्यया ।
वह्निर्विनिःसृतो वक्त्रात्कृष्णस्याद्भुतदर्शनः ॥ १८
अग्निना तेन महता निःसृतेन मुखाद्विभोः ।
पश्यतामेव सर्वेषां दग्ध एव नगोत्तमः ॥ १९
मृगपक्षिगणाकीर्णः श्वापदैरपि संकुलः ।
वृक्षगुल्मलताकीर्णो मथितो दीनदर्शनः ॥ २०
पुनः स दृष्टमात्रेण हरिणा सौम्यचेतसा ।
स बभूव गिरिः क्षिप्रं प्रफुल्लद्रुमकाननः ॥ २१
सिद्धचारणसङ्घैश्च प्रसन्नैरुपशोभितः ।
मत्तवारणसंयुक्तो नानापक्षिगणैर्युतः ।
तदद्भुतमचिन्त्यं च सर्वेषामभवद्भृशम् ॥ २२
तं दृष्ट्वा हृष्टरोमाणः सर्वे मुनिगणास्तदा ।
विस्मिताः परमायत्ताः साध्वसाकुललोचनाः ।
न किंचिदब्रुवंस्तत्र शुभं वा यदि वेतरत् ॥ २३
ततो नारायणो देवो मुनिसङ्घे तु विस्मिते ।
तान्समीक्ष्यैव मधुरं बभाषे पुष्करेक्षणः ॥ २४
किमर्थं मुनिसङ्घेऽस्मिन्विस्मयोऽयमनुत्तमः ।
एतन्मे संशयं सर्वे याथातथ्येन नन्दिताः ।
ऋषयो वक्तुमर्हन्ति निश्चयेनार्थकोविदाः ॥ २५
केशवस्य वचः श्रुत्वा तुष्टुवुर्मुनिपुङ्गवाः ।
भवान्सृजति वै लोकान्भवान्संहरति प्रजाः ।
भवाञ्शीतं भवानुष्णं भवान्सत्यं भवान्क्रतुः ॥ २६
भवानादिर्भवानन्तो भवतोऽन्यन्न विद्यते ।
स्थावरं जङ्गमं सर्वं त्वमेव पुरुषोत्तम ॥ २७
त्वत्तः सर्वमिदं तात लोकचक्रं प्रवर्तते ।
त्वमेवार्हसि तद्वक्तुं मुखादग्निविनिर्गमम् ॥ २८
एतन्नो विस्मयकरं बभूव मधुसूदन ।
ततो विगतसंत्रासा भवाम पुरुषोत्तम ।
यदिच्छेत्तत्र वक्तव्यं कुतोऽस्माकं नियोगतः ॥२९
श्रीभगवानुवाच ।
नित्यं हितार्थं लोकानां भवद्भिः क्रियते तपः ।
तस्माल्लोकहितं गुह्यं श्रूयतां कथयामि वः ॥ ३०
असुरः सांप्रतं कश्चिदहितो लोकनाशनः ।
मायास्त्रकुशलश्चैव बलदर्पसमन्वितः ॥ ३१
बभूव स मया वध्यो लोकानां हितकाम्यया ।
पुत्रेण मे वधो दृष्टस्तस्य वै मुनिपुङ्गवाः ॥ ३२
तदर्थं पुत्रमेवाहं सिसृक्षुर्वनमागतः ।
आत्मनः सदृशं पुत्रमहं जनयितुं व्रतैः ॥ ३३
एवं व्रतपरीतस्य तपस्तीव्रतया मम ।
अथात्मा मम देहस्थः सोऽग्निर्भूत्वा विनिःसृतः ३४
विनिःसृत्य गतो द्रष्टुं क्षणेन च पितामहम् ।
ब्रह्मणा मन्मथोऽनङ्गः पुत्रत्वेन प्रकल्पितः ।
अनुज्ञातश्च तेनैव पुनरायान्ममान्तिकम् ॥ ३५
एवं मे वैष्णवं तेजो मम वक्त्राद्विनिःसृतम्
तत्तेजसा निर्मथितः पुरतोऽयं गिरिः स्थितः ॥३६
दृष्ट्वा दाहं गिरेस्तस्य सौम्यभावतया मम ।
पुनः स दृष्टमात्रेण गिरिरासीद्यथा पुरा ॥ ३७
एतद्गुह्यं यथातथ्यं कथितं वः समासतः ।
भवन्तो व्यथिता येन विस्मिताश्च तपोधनाः ॥३८
ऋषीणामेवमुक्त्वा तु तान्पुनः प्रत्यभाषत ॥ ३९

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि त्र्यधिकद्विशततमोऽध्यायः ॥ २०३ ॥

## चतुरधिकद्विशततमोऽध्यायः ॥ २०४ ॥

कृष्णेनाश्चर्यकथनं प्रार्थितैर्मुनिगणैर्नारदंप्रति तच्चोदना ॥ १ ॥

श्रीभगवानुवाच ।
भवतां दर्शनादेव प्रीतिरभ्यधिका मम ।
भवन्तस्तु तपःसिद्धा भवन्तो दिव्यदर्शनाः ॥ १
सर्वत्र गतिमन्तश्च ज्ञानविज्ञानभाविताः ।
गत्यागतिज्ञा लोकानां सर्वे निर्धूतकल्मषाः ॥ २
तस्माद्भवद्भिर्यत्किंचिद्दृष्टं वाऽप्यथवा श्रुतम् ।
आश्चर्यभूतं लोकेषु तद्भवन्तो ब्रुवन्तु मे ॥ ३
युष्माभिः कथितं यत्स्यात्तपसा भावितात्मभिः ।

तत्स्यादमृतसंकाशं वाङ्मधुश्रवणे स्पृहा ॥ ४
रागद्वेषवियुक्तानां सततं सत्यवादिनाम् ।
श्रद्धेयं श्रवणीयं च वचनं हि सतां भवेत् ॥ ५
तत्संयोगं हितं मेऽस्तु न वृथा कर्तुमर्हथ ।
भवतां दर्शनं तस्मात्सफलं तु भवेन्मम ॥ ६
तदहं सज्जनमुखान्निःसृतं जनसंसदि ।
कथयिष्याम्यहं बुद्ध्या बुद्धिदीपकरं नृणाम् ॥ ७
तदन्ये वर्धयिष्यन्ति पूजयिष्यन्ति चापरे ।
वात्सल्यविगताश्चान्ये प्रशंसन्ति पुरातनाः ॥ ८
एवं ब्रुवति गोविन्दे श्रवणार्थं महर्षयः ।
वाग्भिः साञ्जलिमालाभिरिदमूचुर्जनार्दनम् ॥ ९
अयुक्तमस्मानेवं त्वं वाचा वरद भाषितुम् ।
त्वच्छासनमुखाः सर्वे त्वदधीनपरिश्रमाः ॥ १०
एवं पूजयितुं चास्मान्न चैवार्हसि केशव ।
त्वत्तस्त्वन्यं न पश्यामो यल्लोके ते न विद्यते ।
दिवि वा भुवि वा किंचित्तत्सर्वं हि त्वया ततम् ११
न विद्महे वयं देव कथ्यमानं तवान्तिके ।
एवमुक्तो हृषीकेशः सस्मितं चेदमब्रवीत् ॥ १२
अहं मानुषयोनिस्थः सांप्रतं मुनिपुङ्गवाः ।
तस्मान्मानुषवद्वाक्यं मम जानीत सुव्रताः ।
भवद्भिः कथ्यमानं च अपूर्वमिव तद्भवेत् ॥ १३
भीष्म उवाच ।
एवं संचोदिताः सर्वे केशवेन महात्मना ।
ऋषयश्चानुवर्तन्ते वासुदेवस्य शासनम् ॥ १४
ततस्त्वृषिगणाः सर्वे नारदं देवदर्शनम् ।
अमन्यन्त बुधा बुद्ध्या समर्थं तन्निबोधने ॥ १५
ऋषिरुग्रतपाश्चायं केशवस्य प्रियोऽधिकम् ।
पुराणज्ञश्च वाग्मी च कारणंस्तं च मेनिरे ॥ १६
सर्वे तदर्हणं कृत्वा नारदं वाक्यमब्रुवन् ॥ १७
भवता तीर्थयात्रार्थं चरता हिमवद्गिरौ ।
दृष्टं वै यत्तदाश्चर्यं श्रोतॄणां परमं प्रियम् ॥ १८
अतस्त्वमविशेषेण हितार्थं सर्वमादितः ।
प्रियार्थं केशवस्यास्य स भवान्वक्तुमर्हति ॥ १९
तदा संयोजितः सर्वैर्ऋषिभिर्नारदस्तदा ।
प्रणम्य शिरसा विष्णुं सर्वलोकहिते रतम् ।
समुद्वीक्ष्य हृषीकेशं वक्तुमेवोपचक्रमे ॥ २०
ततो नारायणसुहृन्नारदो वदतांवरः ।
शंकरस्योमया सार्धं संवादमनुभाषत ॥ २१

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि चतुरधिकद्विशततमोऽध्यायः ॥ २०४ ॥

## पञ्चाधिकद्विशततमोऽध्यायः ॥ २०५ ॥

नारदेन कृष्णंप्रति उमामहेश्वरसंवदानुवादारम्भः ॥ १ ॥ नानामुनिगणाकीर्णहिमवत्तटमुपविष्टे महादेवे तत्पृष्ठभागमुपागतया पार्वत्या क्रीडार्थं स्वपाणिभ्यां तदीयनयनद्वयपिधानम् ॥ २ ॥ तदा जगत आन्ध्यभीतो देवेन स्वललाटे तृतीयनेत्रसर्जनम् ॥ ३ ॥ तत्तेजसा निर्दग्धे गिरौ देवीप्रार्थनया देवेन पुनर्गिरेरुज्जीवनम् ॥ ४ ॥

नारद उवाच ।
भगवंस्तीर्थयात्रार्थं तथैव चरता मया ।
दिव्यमद्भुतसंकाशं दृष्टं हैमवतं वनम् ॥ १
नानावृक्षसमायुक्तं नानापक्षिगणैर्वृतम् ।
नानारत्नगणाकीर्णं नानाभावसमन्वितम् ॥
दिव्यचन्दनसंयुक्तं दिव्यधूपेन धूपितम् ।
दिव्यपुष्पसमाकीर्णं दिव्यगन्धेन वासितम् ॥ ३
सिद्धचारणसंघातैर्भूतसङ्घैर्निषेवितम् ।
वरिष्ठाप्सरसाकीर्णं नागगन्धर्वसंकुलम् ॥
मृदङ्गमुरजोद्धुष्टं शङ्खवीणाभिनादितम् ।
नृत्यद्भिर्भूतसङ्घैश्च सर्वतस्त्वभिशोभितम् ॥ ५
नानारूपैर्विरूपैश्च भीमरूपैर्भयानकैः ।
सिंहव्याघ्रोरगमृगैर्बिडालवदनैस्तथा ॥
खरोष्ट्रद्वीपिवदनैर्गजवक्त्रैस्तथैव च ।
उलूकश्येनवदनैः काकगृध्रमुखैस्तथा ॥
एवं बहुविधाकारैर्भूतसङ्घैर्भृशाकुलम् ।
नानधमानं बहुधा हरपारिषदैर्भृशम् ॥
घोररूपं सुदुर्दर्शं रक्षोगणशतैर्वृतम् ।

ममाजं तद्वनं दृष्टं मया भूतपतेः पुरा ॥ ९
प्रनृत्ताप्सरसं दिव्यं देवगन्धर्वनादितम् ।
प्रथमे वर्षरात्रे तु मेघसङ्घनिनादितम् ॥ १०
नानाबर्हिणसंघुष्टं गजयूथसमाकुलम् ।
षट्पदैरुपगीतं च प्रथमे मासि माधवे ॥ ११
उत्क्रोशत्क्रौञ्चकुररैः सारसैर्जीवजीवकैः ।
मत्ताभिः परपुष्टाभिः कूजन्तीभिः समाकुलम् १२
उत्तमावाससंकाशं भीमरूपतरं ततः ।
द्रष्टुं भवन्ति धर्मस्य धर्मभागिजनस्य च ॥ १३
ये चोर्ध्वरेतसः सिद्धास्तत्रतत्र समागताः ।
मार्ताण्डरश्मिसंचारा विश्वेदेवगणास्तथा ॥ १४
तथा नागास्तथा दिव्या लोकपाला हुताशनाः ।
वाताश्च सर्वे चायान्ति दिव्यपुष्पसमाकुलाः १५
किरन्तः सर्वपुष्पाणि किरन्तोऽद्भुतदर्शनाः ।
ओषध्यः प्रज्वलन्त्यश्च द्योतयन्त्यो दिशो दश १६
विहगाश्च मुदा युक्ता नृत्यन्ति च नदन्ति च ।
ततः समन्ततस्तत्र दिव्या दिव्यजनप्रियाः ॥ १७
तत्र देवो गिरितटे हेमधातुविभूषिते ।
पर्यङ्क इव बभ्राज उपविष्टो महाद्युतिः ॥ १८
व्याघ्रचर्मपरीधानो गजचर्मोत्तरच्छदः ।
व्यालयज्ञोपवीतश्च लोहिताभ्रविभूषितः ॥ १९
हरिश्मश्रुजटो भीमो भयकर्ताऽमरद्विषाम् ।
भयहेतुरभक्तानां भक्तानामभयंकरः ॥ २०
किन्नरैर्देवगन्धर्वैः स्तूयमानस्ततस्ततः ।
ऋषिभिश्चाप्सरोभिश्च सर्वतश्चैव शोभितः ॥ २१
तत्र भूतपतेः स्थानं देवदानवसंकुलम् ।
सर्वतेजोमयं भूम्ना लोकपालनिषेवितम् ॥ २२
महोरगसमाकीर्णं सर्वेषां रोमहर्षणम् ।
भीमरूपमनिर्देश्यमप्रधृष्यतमं विभोः ॥ २३
तत्र भूतपतिं देवमासीनं शिखरोत्तमे ।
ऋषयो भूतसङ्घाश्च प्रणम्य शिरसा हरम् ।
गीर्भिः परमशुद्धाभिस्तुष्टुवुश्च मनोहरम् ॥ २४
विमुक्ताश्चैव पापेभ्यो बभूवुर्विगतज्वराः ।
ऋषयो वालखिल्याश्च तथा विप्रर्षयश्च ये ॥ २५
अयोनिजा योनिजाश्च तपःसिद्धा महर्षयः ।
ततस्तं देवदेवेशं भगवन्तमुपासते ॥ २६
ततस्तस्मिन्क्षणे देवी भूतस्त्रीगणसंवृता ।
हरतुल्याम्बरधरा समानव्रतचारिणी ॥ २७
काञ्चनं कलशं गृह्य सर्वतीर्थाम्बुपूरितम् ।
पुष्पवृष्ट्याऽभिवर्षन्ती दिव्यगन्धसमावृता ॥ २८
सरिद्वराभिः सर्वाभिः पृष्ठतोऽनुगता वरा ।
सेवितुं भगवत्पार्श्वमाजगाम शुचिस्मिता ॥ २९
आगम्य तु गिरेः पुत्री देवदेवस्य चान्तिकम् ।
मनःप्रियं चिकीर्षन्ती क्रीडार्थं शंकरान्तिके॥३०
मनोहराभ्यां पाणिभ्यां हरनेत्रे पिधाय तु ।
अवेक्ष्य हृष्टा स्वगणान्स्मयन्ती पृष्ठतः स्थिता॥३१
देव्या चान्धीकृते देवे कश्मलं समपद्यत ।
निमीलिते भूतपतौ नष्टचन्द्रार्कतारकम् ॥ ३२
निःस्वाध्यायवषट्कारं तमसा चाभिसंवृतम् ।
विषण्णं भयवित्रस्तं जगदासीद्भयाकुलम् ॥ ३३
हाहाकारमृषीणां च लोकानामभवत्तदा ।
तमोभिभूते संभ्रान्ते लोके जीवनसंक्षये ॥ ३४
तृतीयं चास्य संभूतं ललाटे नेत्रमायतम् ।
द्वादशादित्यसंकाशं लोकान्भासाऽवभासयत् ३५
तत्र तेनाग्निना तेन युगान्ताग्निनिभेन वै ।
अदह्यत गिरिः सर्वो हिमवानग्रतः स्थितः ॥ ३६
दह्यमाने गिरौ तस्मिन्मृगपक्षिसमाकुले ।
सविद्याधरगन्धर्वे दिव्यौषधसमाकुले ॥ ३७
ततो गिरिसुता चापि विस्मयोत्फुल्ललोचना ।
बभूव च जगत्सर्वं तथा विस्मयसंयुतम् ॥ ३८
पश्यतामेव सर्वेषां देवदानवरक्षसाम् ।
नेत्रजेनाग्निना तेन दग्ध एव नगोत्तमः ॥ ३९
तं दृष्ट्वा मथितं शैलं शैलपुत्री सविक्लवा ।
पितुः संमानमिच्छन्ती पपात भुवि पादयोः ४०
तं दृष्ट्वा देवदेवेशो देव्या दुःखमनुत्तमम् ।
हैमवत्याः प्रियार्थं च गिरिं पुनरवैक्षत ॥ ४१
दृष्टमात्रे भगवता सौम्ययुक्तेन चेतसा ।
क्षणेन हिमवाञ्शैलः प्रकृतिस्थोऽभवत्पुनः ॥४२

हृष्टपुष्टविहङ्गैश्च प्रफुल्लद्रुमकाननः ।
सिद्धचारणसङ्घैश्च प्रीतियुक्तैः समाकुलः ॥ ४३
पितरं प्रकृतिस्थं च दृष्ट्वा हैमवती भृशम् ।
अभवत्प्रीतिसंयुक्ता मुदितात्र पिनाकिनम् ॥ ४४
देवी विस्मयसंयुक्ता प्रष्टुकामा महेश्वरम् ।
हितार्थं सर्वलोकानां प्रजानां हितकाम्यया ।
देवदेवं महादेवी बभाषेदं वचोऽर्थवत् ॥ ४५
भगवन्देवदेवेश शूलपाणे महाद्युते ।
विस्मयो मे महाञ्ज्ञानस्तस्मिन्नेत्राग्निसंभवे ॥ ४६
किमर्थं देवदेवेश ललाटेऽस्मिन्प्रकाशते ।
अतिसूर्याग्निसंकाशं तृतीयं नेत्रमायतम् ॥ ४७
नेत्राग्निना तु महता निर्दग्धो हिमवानसौ ।
पुनः संदृष्टमात्रस्तु प्रकृतिस्थः पिता मम ॥ ४८
एष मे संशयो देव हृदि मे संप्रवर्तते ।
देवदेव नमस्तुभ्यं तन्मे शंसितुमर्हसि ॥ ४९
नारद उवाच ।
एवमुक्तस्तया देव्या प्रीयमाणोऽब्रवीद्भवः ।
स्थाने संशयितुं देवि धर्मज्ञे प्रियभाषिणि ॥ ५०
त्वदृते मां हि वै प्रष्टुं न शक्यं केन चेत्प्रिये ।
प्रकाशं यदि वा गुह्यं प्रियार्थं प्रब्रवीम्यहम् ॥ ५१
शृणु तत्सर्वमखिलमस्यां संसदि भामिनि ।
सर्वेषामेव लोकानां कूटस्थं विद्धि मां प्रिये ॥ ५२
मदधीनास्त्रयो लोका यथा विष्णौ तथा मयि ।
स्रष्टा विष्णुरहं गोप्ता इत्येतद्विद्धि भामिनि ॥ ५३
तस्माद्यदा मां स्पृशति शुभं वा यदि वेतरत् ।
तथैवेदं जगत्सर्वं तत्तद्भवति शोभने ॥ ५४
एतद्गुह्यमजानन्त्या त्वया बाल्यादनिन्दिते ।
मन्नेत्रे पिहिते देवि क्रीडनार्थं दृढव्रते ॥ ५५
तत्कृते नष्टचन्द्रार्के जगदासीद्भयाकुलम् ।
नष्टादित्ये तमोभूते लोके गिरिसुते प्रिये ॥ ५६
तृतीयं लोचनं सृष्टं लोकं संरक्षितुं मया ।
कथितं संशयस्थानं निर्विशङ्का भव प्रिये ॥ ५७

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि पञ्चाधिकद्विशततमोऽध्यायः ॥ २०५ ॥

## षडधिकद्विशततमोऽध्यायः ॥ २०६ ॥

ईश्वरेण पार्वतींप्रति स्वस्य चतुर्मुखत्वस्य नीलकण्ठतायाः पिनाककार्मुकताया वृषभवाहनत्वस्य च कारणाभिधानम् ॥१॥

नारद उवाच ।
क्षणज्ञा देवदेवस्य श्रोतुकामा प्रियं हितम् ।
उमादेवी महादेवमपृच्छत्पुनरेव तु ॥
भगवन्देवदेवेश सर्वदेवनमस्कृत ।
चतुर्मुखो वै भगवानभवत्केन हेतुना ॥ २
भगवन्केन ते वक्त्रमैन्द्रमद्भुतदर्शनम् ।
उत्तरं चापि भगवन्पश्चिमं शुभदर्शनम् ।
दक्षिणं च मुखं रौद्रं केनोर्ध्वं जटिलावृतम् ॥ ३
यथादृशं महाभाग श्रोतुमिच्छामि कारणम् ।
एष मे संशयो देव तन्मे शंसितुमर्हसि ॥ ४
महादेव उवाच ।
तदहं ते प्रवक्ष्यामि यत्त्वमिच्छसि भामिनि ।
पुराऽसुरौ महाघोरौ लोकोद्वेगकरौ भृशम् ॥ ५
सुन्दोपसुन्दनामानावासतुर्बलगर्वितौ ।
अशस्त्रवध्यौ बलिनौ परस्परहितैषिणौ ॥ ६
तयोरेव विनाशाय निर्मिता विश्वकर्मणा ।
सर्वतः सारमुद्धृत्य तिलशो लोकपूजिता ।
तिलोत्तमेति विख्याता अप्सराः सा बभूव ह ॥ ७
देवकार्यं करिष्यन्ती हासभावसमन्विता ।
सा तपस्यन्तमागम्य रूपेणाप्रतिमा भुवि ॥ ८
मया बहुमता चेयं देवकार्यं करिष्यति ।
इति मत्वा तदा चाहं कुर्वन्तीं मां प्रदक्षिणम् ।
तथैव तां दिदृक्षुश्च चतुर्वक्त्रोऽभवं प्रिये ॥ ९
ऐन्द्रं मुखमिदं पूर्वं तपश्चर्यापरं सदा ।
दक्षिणं मे मुखं दिव्यं रौद्रं संहरति प्रजाः ॥ १०
लोककार्यपरं नित्यं पश्चिमं मे मुखं प्रिये ।

वेदानधीते सततमद्भुतं चोत्तरं मुखम् ।
एतत्ते सर्वमाख्यातं किं भूयः श्रोतुमिच्छसि॥११
उमोवाच ।
भगवञ्श्रोतुमिच्छामि शूलपाणे वरप्रद ।
किमर्थं नीलता कण्ठे भाति बर्हिनिभा तव ॥१२
महेश्वर उवाच ।
एतत्ते कथयिष्यामि शृणु देवि समाहिता ॥ १३
पुरा युगान्तरे यत्नादमृतार्थं सुरासुरैः ।
बलवद्भिर्विमथितश्चिरकालं महोदधिः ॥ १४
रज्जुना नागराजेन मथ्यमाने महोदधौ ।
विषं तत्र समुद्भूतं सर्वलोकविनाशनम् ॥ १५
तद्दृष्ट्वा विबुधाः सर्वे तदा विमनसोऽभवन् ।
ग्रस्तं हि तन्मया देवि लोकानां हितकारणात् १६
तत्कृता नीलता चासीत्कण्ठे बर्हिनिभा शुभे ।
तदाप्रभृति चैवाहं नीलकण्ठ इति स्मृतः ।
एतत्ते सर्वमाख्यातं किं भूयः श्रोतुमिच्छसि ॥१७
उमोवाच ।
नीलकण्ठ नमस्तेऽस्तु सर्वलोकसुखावह ।
बहूनामायुधानां त्वं पिनाकं धर्तुमिच्छसि
किमर्थं देवदेवेश तन्मे शंसितुमर्हसि ॥ १८
महेश्वर उवाच ।
शस्त्रागमं ते वक्ष्यामि शृणु धर्म्यं शुचिस्मिते ।
युगान्तरे महादेवि कण्वो नाम महामुनिः ॥ १९
स हि दिव्यां तपश्चर्यां कर्तुमेवोपचक्रमे ।
तथा तस्य तपो घोरं चरतः कालपर्ययात् ।
वल्मीकं पुनरुद्भूतं तस्यैव शिरसि प्रिये ॥ २०
वेणुर्वल्मीकसंयोगान्मूर्ध्नि तस्य बभूव ह ।
धरमाणश्च तत्सर्वं तपश्चर्यां तथाऽकरोत् ॥ २१
तस्मै ब्रह्मा वरं दातुं जगाम तपसार्चितः ।
दत्त्वा तस्मै वरं देवो वेणुं दृष्ट्वा त्वचिन्तयत्॥ २२
लोककार्यं समुद्दिश्य वेणुनाऽनेन भामिनि ।
चिन्तयित्वा तमादाय कार्मुकार्थे न्ययोजयत् २३
विष्णोर्मम च सामर्थ्यं ज्ञात्वा लोकपितामहः ।
धनुषी द्वे तदा प्रादाद्विष्णवे च ममैव च ॥२४
पिनाकं नाम मे चापं शार्ङ्गं नाम हरेर्धनुः ।
तृतीयमवशेषेण गाण्डीवमभवद्धनुः ॥ २५
तच्च सोमाय निर्दिश्य ब्रह्मा लोकं गतः पुनः ।
एतत्ते सर्वमाख्यातं शस्त्रागममनिन्दिते ॥ २६
उमोवाच ।
भगवन्देवदेवेश पिनाकपरमप्रिय ।
वाहनेषु तथाऽन्येषु सत्सु भूतपते तव ॥ २७
अयं तु वृषभः कस्माद्वाहनं स यथाऽभवत्
एष मे संशयो देव तन्मे शंसितुमर्हसि ॥ २८
महादेव उवाच ।
तदहं ते प्रवक्ष्यामि वाहनं स यथाऽभवत् ॥२९
आदिसर्गे पुरा गावः श्वेतवर्णाः शुचिस्मिते ।
बलसंहनना गावो दर्पयुक्ताश्चरन्ति ताः ॥ ३०
अहं तु तप आतिष्ठं तस्मिन्काले शुभानने ।
एकपादश्चोर्ध्वबाहुर्लोकार्थं हिमवद्गिरौ ॥ ३१
गावो मे पार्श्वमागम्य दर्पोत्सिक्ताः समन्ततः ।
स्थानभ्रंशं तदा देवि चक्रिरे बहुशस्तदा ॥ ३२
अपचारेण वै तासां मनःक्षोभोऽभवन्मम ।
तस्माद्दग्धा यदा गावो रोषाविष्टेन चेतसा ॥ ३३
तस्मिंस्तु व्यसने घोरे वर्तमाने पशून्प्रति
अनेन वृषभेणाहं शमितः संप्रसादनैः ॥ ३४
तदाप्रभृति शान्ताश्च वर्णभेदत्वमागताः ।
श्वेतोऽयं वृषभो देवि पूर्वसंस्कारसंयुतः ।
वाहनत्वे ध्वजत्वे मे तदाप्रभृति योजितः ॥ ३५
तस्मान्मे गोपतित्वं च देवैर्गोभिश्च कल्पितम् ।
प्रसन्नश्चाभवं देवि तदा गोपतितां गतः ॥ ३६

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि षडधिकद्विशततमोऽध्यायः ॥ २०६ ॥

## सप्ताधिकद्विशततमोऽध्यायः ॥ २०७ ॥

ईश्वरेण पार्वतींप्रति स्वस्य श्मशानवासचन्द्रकलाधारणादे: कारणाभिधानम् ॥ १ ॥

उमोवाच ।
भगवन्सर्वभूतेश शूलपाणे वृषध्वज
आवासेषु विचित्रेषु रम्येषु च शुभेषु च ॥ १
सत्सु चान्येषु भूतेषु श्मशाने रमसे कथम् ।
केशास्थिकलिले भीमे कपालशतसंकुले ॥ २
सृगालगृध्रसंपूर्णे शवधूमसमाकुले ।
चिताग्निविषमे घोरे गहने च भयानके ॥ ३
एवं कलेवरक्षेत्रे दुर्दर्शे रमसे कथम् ।
एष मे संशयो देव तन्मे शंसितुमर्हसि ॥ ४
महादेव उवाच ।
हन्त ते कथयिष्यामि शृणु देवि समाहिता ।
आवासार्थं पुरा देवि शुद्धान्वेषी शुचिस्मिते ॥ ५
नाध्यगच्छं चिरं कालं देशं शुचितमं शुभे ।
एष मेऽभिनिवेशोऽभूत्तस्मिन्काले प्रजापतिः ॥ ६
आकुलः सुमहाघोरः प्रादुरासीत्समन्ततः ।
संभूता भूतसृष्टिश्च घोरा लोकभयावहा ॥ ७
नानावर्णा विरूपाश्च तीक्ष्णदंष्ट्राः प्रहारिणः ।
पिशाचरक्षोवदनाः प्राणिनां प्राणहारिणः ।
इतश्चरन्ति निघ्नन्तः प्राणिनो भृशमेव च ॥ ८
एवं लोके प्राणिहीने क्षयं याते पितामहः ।
चिन्तयंस्तत्प्रतीकारं मां च शक्तं हि निग्रहे ॥ ९
एवं ज्ञात्वा ततो ब्रह्मा तस्मिन्कर्मण्ययोजयत् ।
तच्च प्राणिहितार्थं तु मयाऽप्यनुमतं प्रिये ॥ १०
तस्मात्संरक्षिता देवि भूतेभ्यः प्राणिनो भयात् ।
अस्माच्छ्मशानान्मेध्यं तु नास्ति किंचिदनिन्दिते ।
निःसंपातान्मनुष्याणां तस्माच्छुचितमं स्मृतं ११
भूतसृष्टिं च तां चाहं श्मशाने संन्यवेशयम् ।
तत्रस्थः सर्वभूतानां विनिहन्मि प्रिये भयम् ॥१२
न च भूतगणेनाहं विना वसितुमुत्सहे ।
तस्मान्मे सन्निवासाय श्मशाने रोचते मनः ॥ १३
मेध्यकामैर्द्विजैर्नित्यं मेध्यमित्यभिधीयते ।
आचरद्भिर्व्रतं नित्यं मोक्षकामैश्च सेव्यते ॥ १४
स्थानं मे तत्र विहितं वीरस्थानमिति प्रिये ।
कपालशतसंपूर्णमभिरूपं भयानकम् ॥ १५
मध्याह्ने सन्ध्ययोस्तत्र नक्षत्रे रुद्रदैवते ।
आयुष्कामैरशुद्धैर्वा न गन्तव्यमिति स्थितिः ॥१६
मदन्येन न शक्यं हि निहन्तुं भूतजं भयम् ।
तत्रस्थोऽहं प्रजाः सर्वाः पालयामि दिनेदिने ॥ १७
मन्नियोगाद्भूतसङ्घा न च घ्नन्तीह कंचन ।
तांस्तु लोकहितार्थाय श्मशाने रमयाम्यहम् ।
एतत्ते सर्वमाख्यातं किं भूयः श्रोतुमिच्छसि ॥१८
उमोवाच ।
भगवन्देवदेवेश त्रिनेत्र वृषभध्वज ।
पिङ्गलं विकृतं भाति रूपं ते तु भयानकम् ॥ १९
भस्मदिग्धं विरूपाक्षं तीक्ष्णदंष्ट्रं जटाकुलम् ।
व्याघ्रोदरत्वक्संवीतं कपिलश्मश्रुसंततम् ॥ २०
रौद्रं भयानकं घोरं शूलपट्टससंयुतम् ।
किमर्थं त्वीदृशं रूपं तन्मे शंसितुमर्हसि ॥ २१
महेश्वर उवाच ।
तदहं कथयिष्यामि शृणु तत्त्वं समाहिता ।
द्विविधो लौकिको भावः शीतमुष्णमिति प्रिये २२
तयोर्हि ग्रसितं सर्वं सौम्याग्नेयमिदं जगत् ॥ २३
सौम्यत्वं सततं विष्णौ मय्याग्नेयं प्रतिष्ठितम्
अनेन वपुषा नित्यं सर्वलोकान्बिभर्म्यहम् ॥२४
रौद्राकृतिं विरूपाक्षं शूलपट्टससंयुतम् ।
आग्नेयमिति मे रूपं देवि लोकहिते रतम् ॥ २५
यद्यहं विपरीतः स्यामेतत्त्यक्त्वा शुभानने ।
तदैव सर्वलोकानां विपरीतं प्रवर्तते ॥ २६
तस्मान्मयेदं ध्रियते रूपं लोकहितैषिणा ।
इति ते कथितं देवि किं भूयः श्रोतुमिच्छसि ॥२७
उमोवाच ।
भगवन्देवदेवेश शूलपाणे वृषध्वज ।

सप्ताधिकद्विशततमोऽध्यायः ॥ २०७ ॥

सच भूतगणेनाह न विनाशितुमुत्सहे इति इ. पाठः ॥१३॥

किमर्थं चन्द्ररेखा ते शिरोभागे विरोचते ।
श्रोतुमिच्छाम्यहं देव तन्मे शंसितुमर्हसि ॥ २८
महेश्वर उवाच ।
तदहं ते प्रवक्ष्यामि शृणु कल्याणि कारणम् ।
पुराऽहं कारणादेवि कोपयुक्तः शुचिस्मिते ।
दक्षयज्ञवधार्थाय भूतसङ्घैः समावृतः ॥ २९
तस्मिन्क्रतुवरे घोरे यज्ञभागनिमित्ततः ।
देवा विभ्रंशितास्ते वै येषां भागः कृतो कृतः॥३०
सोमस्तत्र मया देवि कुपितेन भृशार्दितः ।
पश्यंश्चानपराधी सन्पादाङ्गुष्ठेन ताडितः ॥ ३१
तथापि विकृतेनाहं सामपूर्वं प्रसादितः ।
तन्मे चिन्तयतश्चासीत्पश्चात्तापः पुरा प्रिये ॥३२
तदाप्रभृति सोमं वै शिरसा धारयाम्यम् ।
एवं मे पापहानिस्तु भवेदिति मतिर्मम ।
तदाप्रभृति वै सोमो मूर्ध्नि संदृश्यते सदा ॥ ३३
नारद उवाच ।
एवं ब्रुवति देवेशे विस्मिताः परमर्षयः ।
वाग्भिः साञ्जलिमालाभिरभितुष्टुवुरीश्वरम् ॥३४
ऋषय ऊचुः ।
नमः शंकर सर्वेश नमः सर्वजगद्गुरो ।
नमो देवादिदेवाय नमः शशिकलाधर ॥ ३५
नमो घोरतराद्घोर नमो रुद्राय शंकर ।
नमः शान्ततराच्छान्त नमश्चन्द्रस्य पालक ॥३६
नमः सोमाय देवाय नमस्तुभ्यं चतुर्मुख ।
नमो भूतपते शंभो जह्नुकन्याम्बुशेखर ॥ ३७
नमस्त्रिशूलहस्ताय पन्नगाभरणाय च ।
नमोस्तु विषमाक्षाय दक्षयज्ञप्रदाहक ॥ ३८
नमोस्तु बहुनेत्राय लोकरक्षणतत्पर ।
अहो देवस्य माहात्म्यमहो देवस्य वै कृपा ।
एवं धर्मपरत्वं च देवदेवस्य चार्हति ॥ ३९
एवं ब्रुवत्सु मुनिषु वचो देव्यब्रवीद्धरम् ।
संप्रीत्यर्थं मुनीनां सा क्षणज्ञा परमं हितम् ॥४०
उमोवाच ।
भगवन्देवदेवेश सर्वलोकनमस्कृत ।
अस्यैव ऋषिसङ्घस्य मम च प्रियकाम्यया ॥ ४१
वर्णाश्रमकृतं धर्मं वक्तुमर्हस्यशेषतः ।
न तृप्तिरस्ति देवेश श्रवणीयं हि ते वचः ॥ ४२
सधर्मचारिणी चेयं भक्ता चेयमिति प्रभो ।
वक्तुमर्हसि देवेश लोकानां हितकाम्यया ।
याथातथ्येन तत्सर्वं वक्तुमर्हसि शंकर ॥ ४३

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि सप्ताधिकद्विशततमोऽध्यायः ॥ २०७ ॥

## अष्टोत्तराधिकद्विशततमोऽध्यायः ॥ २०८ ॥

ईश्वरेण पार्वतीप्रति वर्णाश्रमधर्मकथनम् ॥ १ ॥

महेश्वर उवाच ।
हन्त ते कथयिष्यामि यत्ते देवि मनःप्रियम् ।
शृणु तत्सर्वमखिलं धर्मं वर्णाश्रमाश्रितम् ॥ १
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चेति चतुर्विधम् ।
ब्रह्मणा विहिताः पूर्वं लोकतन्त्रमभीप्सता ।
कर्माणि च तदर्हाणि शास्त्रेषु विहितानि वै ॥ २
यदीदमेकवर्णं स्याज्जगत्सर्वं विनश्यति ।
सहैव देवि वर्णानि चत्वारि विहितान्यतः ॥ ३
मुखतो ब्राह्मणाः सृष्टास्तस्मात्ते वाग्विशारदाः ।
बाहुभ्यां क्षत्रियाः सृष्टास्तस्मात्ते बाहुगर्विताः ॥ ४
ऊरुभ्यामुद्गता वैश्यास्तस्माद्वार्तोपजीविनः ।
शूद्राश्च पादतः सृष्टास्तस्मात्ते परिचारकाः ॥ ५
तेषां धर्मांश्च कर्माणि शृणु देवि समाहिता ।
विप्राः कृता भूमिदेवा लोकानां धारणे कृताः ।
ते कैश्चिन्नावमन्तव्या ब्राह्मणा हितमिच्छुभिः॥६
यदि ते ब्राह्मणा न स्युर्दानयोगवहाः सदा ।
उभयोर्लोकयोर्देवि स्थितिर्न स्यात्समासतः ॥ ७
लोकेषु दुर्लभं किंतु ब्राह्मणत्वमिति स्मृतम् ।
अबुधो वा दरिद्रो वा पूजनीयः सदैव सः ॥ ८
ब्राह्मणान्योऽवमन्येत निन्देच्च क्रोधयेच्च वा ।

ब्राह्मणोऽभिहिता शुचिः इति क. पाठः ॥ ९ ॥

प्रहरेत हरेद्वाऽपि धनं तेषां नराधमः ॥ ९
कारयेद्धीनकर्माणि कामलोभविमोहनात् ।
स च मामवमन्येत मां क्रोधयति निन्दति ॥१०
मामेव प्रहरेन्मूढो मद्धनस्यापहारकः ।
मामेव प्रेषणं कृत्वा निवर्तन्ते मूढचेतनः ॥ ११
स्वाध्यायो यजनं दानं तस्य धर्म इति स्थितिः ।
कर्मण्यध्यापनं चैव याजनं च प्रतिग्रहः ।
सत्यं शान्तिस्तपः शौचं तस्य धर्मः सनातनः १२
विक्रयो रसधान्यानां ब्राह्मणस्य विगर्हितः ।
अनापदि च शूद्रान्नं वृषलीसंग्रहस्तथा ॥ १३
तप एव सदा धर्मो ब्राह्मणस्य न संशयः ।
स तु धर्मार्थमुत्पन्नः पूर्वं धात्रा तपोबलात् ॥१४
तस्योपनयनं धर्मो नित्यं चोदकधारणम् ।
शास्त्रस्य श्रवणं धर्मो वेदव्रतनिषेवणम् ॥ १५
अग्निकार्यं परो धर्मो नित्ययज्ञोपवीतिता ।
शूद्रान्नवर्जनं धर्मो धर्मः सत्पथसेवनम् ।
धर्मो नित्योपवासित्वं ब्रह्मचर्यं परं तथा ॥ १६
गृहस्थस्य परो धर्मो गृहस्थाश्रमिणस्तथा ।
गृहसंमार्जनं धर्म आलेपनविधिस्तथा ॥ १७
अतिथिप्रियता धर्मो धर्मस्त्रेताग्निधारणम् ।
इष्टिर्वा पशुबन्धाश्च विधिपूर्वं परंतप ॥ १८
दंपत्योः समशीलत्वं धर्मो वै गृहमेधिनाम् ।
एवं द्विजन्मनो धर्मो गार्हस्थ्ये धर्मधारणम् ॥१९
यस्तु क्षत्रगतो धर्मस्त्वया देवि प्रचोदितः ।
तमहं ते प्रवक्ष्यामि शृणु देवि समाहिता ॥ २०
क्षत्रियास्तु ततो देवि द्विजानां पालने स्मृताः ।
यदि निःक्षत्रियो लोको जगत्स्यादधरोत्तरम् ॥२१
रक्षणात्क्षत्रियैरेव जगद्भवति शाश्वतम् ।
तस्याप्यध्ययनं दानं यजनं धर्मतः स्मृतम् ॥ २२
दीनानां रक्षणं चैव पापानामनुशासनम् ।
सतां संपोषणं चैव कर्मषण्मार्गजीवनम् ॥ २३
उत्साहः शस्त्रजीवित्वं तस्य धर्मः सनातनः ।
भृत्यानां भरणं धर्मः कृते कर्मण्यमोघता ॥ २४
सम्यग्गुणयुतो धर्मो धर्मः पौरहितक्रिया ।
दस्युहारग्रहैर्नित्यं गुणयुक्तो महीपतिः ॥ २५
आर्तवित्तप्रदो राजा धर्मं प्राप्नोत्यनुत्तमम् ।
एवं ते विहितः पूर्वं धर्मः कर्मविधानतः ॥ २६
तथैव देवि वैश्याश्च लोकयात्राहिताः स्मृताः ।
अन्ये तानुपजीवन्ति प्रत्यक्षफलदा हि ते ॥ २७
यदि न स्युस्तथा वैश्या न भवेयुस्तथा परे ।
तेषामध्ययनं दानं यजनं धर्म उच्यते ॥ २८
वैश्यस्य सततं धर्मः पाशुपाल्यं कृषिस्तथा ।
अग्निहोत्रपरिस्पन्दास्त्रयो वर्णा द्विजातयः ॥ २९
वाणिज्यं सत्पथे स्थानमातिथेयत्वमेव च ।
विप्राणां स्वागतन्यायो वैश्यधर्मः सनातनः ॥३०
तिलगन्धरसाश्चैव न विक्रेयाः कथंचन ।
वणिक्पथमुपासद्भिर्वैश्यैर्वैश्यपथि स्थितैः ॥ ३१
सर्वातिथ्यं त्रिवर्गस्य यथाशक्ति दिवानिशम् ।
एवं ते विहिता देवि लोकयात्रा स्वयंभुवा ॥ ३२
तथैव शूद्रा विहिताः सर्वधर्मप्रसाधकाः ।
शूद्राश्च यदि ते न स्युः कर्मकर्ता न विद्यते ॥ ३३
त्रयः पूर्वे शूद्रमूलाः सर्वे कर्मकराः स्मृताः ।
ब्राह्मणादिषु शुश्रूषा दासधर्म इति स्मृतः ॥ ३४
वार्ता चकारुकर्माणि शिल्पं नाट्यं तथैव च ।
अहिंसकः शुभाचारो दैवतद्विजवन्दकः ॥ ३५
शूद्रो धर्मफलैरिष्टैः स्वधर्मेणोपपद्यते ।
एवमादि तथाऽन्यच्च शूद्रधर्म इति स्मृतः ॥ ३६
तेऽप्येवं विहिता लोके कर्मयोग्याः शुभानने ३७
एवं चतुर्णां वर्णानां वर्णलोकाः परत्र च ।
विहिताश्च तथा दृष्टा यथावद्धर्मचारिणि ॥ ३८
एष वर्णाश्रयो धर्मः कर्म चैव तदर्पणम् ।
कथितं श्रोतुकामायाः किं भूयः श्रोतुमिच्छसि ३९
उमोवाच ।
भगवन्देवदेवेश नमस्ते वृषभध्वज ।
श्रोतुमिच्छाम्यहं देव धर्ममाश्रमिणां विभो ॥४०
महेश्वर उवाच ।
तथाऽऽश्रमगतं धर्मं शृणु देवि समाहिता ।
आश्रमाणां तु यो धर्मः क्रियते ब्रह्मवादिभिः ४१

गृहस्थः प्रवरस्तेषां गार्हस्थ्यं धर्ममाश्रितः ।
पञ्चयज्ञक्रियाशौचं दारतुष्टिरतन्द्रिता ॥ ४२
ऋतुकालाभिगमनं दानयज्ञतपांसि च ।
अविप्रवासस्तस्येष्टः स्वाध्यायश्चाग्निपूर्वकम् ॥ ४३
अतिथीनामाभिमुख्यं शक्त्या चेष्टनिमन्त्रणम् ।
अनुग्रहश्च सर्वेषां मनोवाक्कायकर्मभिः ॥ ४४
एवमादि शुभं चान्यत्कुर्यात्सद्वृत्तिमान्गृही ।
एवं संचरतस्तस्य पुण्यलोका न संशयः ॥ ४५
तथैव वानप्रस्थस्य धर्माः प्रोक्ताः सनातनाः ॥ ४६
गृहवासं समुत्सृज्य निश्चित्यैकमनाः शुभैः ।
वन्यैरेव सदाहारैः वर्तयेदिति च स्थितिः ॥ ४७
भूमिशय्या जटाश्मश्रुचर्मवल्कलधारणम् ।
देवतातिथिसत्कारो महाकृच्छ्राभिपूजनम् ॥ ४८
अग्निहोत्रं त्रिषवणं नित्यं तस्य विधीयते ।
ब्रह्मचर्यं क्षमा शौचं तस्य धर्मः सनातनः ।
एवं स विगते प्राणे देवलोके महीयते ॥ ४९
यतिधर्मास्तथा देवि गृहांस्त्यक्त्वा यतस्ततः ।
आकिंचन्यमनारम्भः सर्वतः शौचमार्जवम् ॥ ५०
सर्वत्र भैक्षचर्या च सर्वत्रैव विवासनम् ।
सदा ध्यानपरत्वं च देहशुद्धिः क्षमा दया ।
तत्त्वानुगतबुद्धित्वं तस्य धर्मविधिर्भवेत् ॥ ५१
ब्रह्मचारी च यो देवि जन्मप्रभृति भिक्षितः ।
ब्रह्मचर्यपरो भूत्वा साधयेद्गुरुमात्मनः ।
सर्वकालेषु सर्वत्र गुरुपूजां समाचरेत् ॥ ५२
भैक्षचर्याग्निकार्यं च सदा जलनिषेवणम् ।
स्वाध्यायः सततं तस्य एष धर्मः सनातनः ॥ ५३
तस्य चेष्टा तु गुर्वर्थमाप्राणान्तमिति स्थितिः
गुरोरभावे तत्पुत्रे गुरुवद्वृत्तिमाचरेत् ॥ ५४
एवं सोप्यमलाँल्लोकान्ब्राह्मणः प्रतिपद्यते ।
एष ते कथितो देवि धर्मश्चाश्रमवासिनाम् ॥ ५५
चतुर्णामाश्रमो युक्तो लोक इत्येव विद्यते ।
कथितं ते समासेन किं भूयः श्रोतुमिच्छसि ॥ ५६

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि अष्टोत्तरद्विशततमोऽध्यायः ॥ २०८ ॥

## नवाधिकद्विशततमोऽध्यायः ॥ २०९ ॥

ईश्वरेण पार्वतींप्रति ऋषिधर्मकथनम् ॥ १ ॥

उमोवाच ।
भगवन्देवदेवेश त्रिपुरान्तक शंकर ।
अयं त्वृषिगणो देव तपस्तप इति प्रभो ॥ १
तपसा कर्शितो नित्यं तपोऽर्जनपरायणः ।
अस्य किंलक्षणो धर्मः कीदृशश्चागमस्तथा ।
एतदिच्छाम्यहं श्रोतुं तन्मे वद वरप्रद ॥ २
नारद उवाच ।
एवं ब्रुवन्त्यां रुद्राण्यामृषयः साधुसाध्विति ।
अब्रुवन्हृष्टमनसः सर्वे तद्गतमानसाः ॥ ३
शृण्वन्तीमृषिधर्मांस्तु ऋषयश्चाभ्यपूजयन् ॥ ४
ऋषय ऊचुः ।
त्वत्प्रसादाद्वयं देवि श्रोष्यामः परमं हितम् ।
धन्याः खलु वयं सर्वे पादमूलं तवाश्रिताः ।
इति सर्वे तदा देवीं वाचा समभिपूजयन् ॥
महेश्वर उवाच ।
न्यायतस्त्वं महाभागे श्रोतुकामा मनस्विनि ।
हन्त ते कथयिष्यामि मुनिधर्मं शुचिस्मिते ॥
वानप्रस्थं समाश्रित्य क्रियते बहुधा नरैः ।
बहुशाखो बहुविधो ऋषिधर्मः सनातनः ॥
प्रायशः सर्वभोगार्थमृषिभिः क्रियते तपः ।
तथा संचरतां तेषां देवि धर्मविधिं शृणु ॥ ८
भूत्वा पूर्वं गृहस्थस्तु पुत्रानृण्यमवाप्य च ।
कलत्रकार्यं संस्थाप्य कारणात्संत्यजेद्गृहम् ॥ ९
अवस्थाप्य मनो धृत्वा व्यवसायपुरःसरः ।

आयुष्कामो द्विजो देवि धारयेद्रुद्रस्य नित्यशः । मोक्षकामी च यो विप्रो भूतिकामोथवा पुनः । पुनरावृत्तिरहितं लोक संप्रतिपद्यते । इति थ. पाठ. ॥ ५५ ॥ अष्टोत्तरद्विशततमोऽध्यायः ॥ २०८ ॥

निर्दारो वा सदारो वा वनवासाय संव्रजेत् ॥१०
देशाः परमपुण्या ये नदीवनसमन्विताः ।
अबाधमुक्ताः प्रायेण तीर्थायतनसंयुताः ॥ ११
तत्र गत्वा विधिं ज्ञात्वा दीक्षां कुर्याद्यथागमम् ।
दीक्षितस्त्वेकमना भूत्वा यश्चिर्यां समाचरेत् ॥ १२
काल्योत्थानं च शौचं च सर्वदेवप्रणामनम् ।
सकृदालेपनं काये त्यक्तदोषोऽप्रमादिना ॥ १३
सायंप्रातश्चाभिषेकं चाग्निहोत्रं यथाविधि
काले शौचं च कार्यं च जटावल्कलधारणम्॥१४
सततं वनचर्या च समित्कुसुमकारणात् ।
नीवाराग्रयणं काले शाकमूलोपचायनम् ॥ १५
सदायतनशौचं च तस्य धर्माय चेष्यते ।
अतिथीनामाभिमुख्यं तत्परत्वं च सर्वदा ॥ १६
पाद्यासनाभ्यां संपूज्य तथाऽऽहारनिमन्त्रणम् ।
अग्राम्यपचनं काले पितृदेवार्चनं तथा ॥ १७
पश्चादतिथिसत्कारस्तस्य धर्मः सनातनः ।
शिष्टैर्धर्मासने चैव धर्मार्थसहिताः कथाः ॥ १८
प्रतिश्रयविभागश्च भूमिशय्या शिलासु वा ।
व्रतोपवासयोगश्च क्षमा चेन्द्रियनिग्रहः ॥ १९
दिवारात्रं यथायोगं शौचं धर्मस्य चिन्तनम्
एवं धर्माः पुरा दृष्टाः सामान्या वनवासिनाम्॥२०
एवं वै यतमानस्य कालधर्मो यथा भवेत् ।
तथैव सोऽभिजयति स्वर्गलोकं शुचिस्मिते ॥२१
तत्र संविदिता भोगाः स्वर्गस्त्रीभिरनिन्दिते ।
परिभ्रष्टो यथा स्वर्गाद्विशिष्टस्तु भवेन्नृषु ॥ २२
एवं धर्मस्तथा देवि सर्वेषां वनवासिनाम् ।
एतत्ते कथितं सर्वं किं भूयः श्रोतुमिच्छसि ॥ २३
उमोवाच ।
भगवन्देवदेवेश ऋषीणां चरितं शुभम् ।
विशेषधर्मानिच्छामि श्रोतुं कौतूहलं हि मे ॥ २४
महेश्वर उवाच ।
तदहं ते प्रवक्ष्यामि शृणु देवि समाहिता ॥ २५
वननित्यैर्वनरतैर्वानप्रस्थैर्महर्षिभिः
वनं गुरुमिवालम्ब्य वस्तव्यमिति निश्चयः ॥२६
वीरशय्यामुपासद्भिर्वीरस्थानोपसेविभिः ।
व्रतोपवासैर्बहुलैर्ग्रीष्मे पञ्चतपैस्तथा ॥ २७
पञ्चयज्ञपरैर्नित्यं पौर्णमास्यापरायणैः ।
मण्डूकशायैर्हेमन्ते शैवालाङ्कुरभोजनैः ॥ २८
चीरवल्कलसंवीतैर्मृगाजिनधरैस्तथा
चातुर्मास्यपरः कश्चिद्देवधर्मपरायणैः ॥ २९
एवंविधैर्वनेवासैस्तप्यते सुमहत्तपः
एवं कृत्वा शुभं कर्म पश्चाद्याति त्रिविष्टपम्॥३०
तत्रापि सुमहत्कालं संविहृत्य यथासुखम् ।
जायते मानुषे लोके दानभोगसमन्विताः ॥ ३१
तपोविशेषसंयुक्ताः कथितास्ते शुचिस्मिते ॥ ३२
उमोवाच ।
भगवन्देवदेवेश तेषु ये दारसंयुताः ।
कीदृशं चरितं तेषां तन्मे शंसितुमर्हसि ॥ ३३
महेश्वर उवाच ।
य एकपत्नीधर्माणश्चरन्ति विपुलं तपः ।
विंध्यपादेषु ये केचिद्ये च नैमिशवासिनः ॥ ३४
पुष्करेषु च ये चान्ये नदीवनसमाश्रिताः ।
सर्वे ते विधिदृष्टेन चरन्ति विपुलं तपः ॥ ३५
हिंसाद्रोहविमुक्ताश्च सर्वभूतानुकम्पिनः ।
शान्ता दान्ता जितक्रोधाः सर्वातिथ्यपरायणाः ॥
प्राणिष्वात्मोपमा नित्यमृतुकालाभिगामिनः ।
स्वदारसहिता देवि चरन्ति व्रतमुत्तमम् ॥ ३७
वसन्ति सुखमव्यग्राः पुत्रदारसमन्विताः ।
तेषां परिच्छदारम्भाः कृतोपकरणानि च ॥ ३८
गृहस्थवद्द्वितीयं ते यथायोगं प्रमाणतः ।
पोषणार्थं स्वदाराणामग्निकार्यार्थमेव च ।
गात्रश्च कर्षणं चैव सर्वमेतद्विधीयते ॥ ३९
एवं वनगतैर्देवि कर्तव्यं दारसंग्रहैः ।
ते स्वदारैः समायान्ति पुण्याँल्लोकान्दृढव्रताः॥४०
पतिभिः सह ये दाराश्चरन्ति विपुलं तपः ।
अव्यग्रभावादैकात्म्यात्ताश्च गच्छन्ति वै दिवम् ।
एतत्ते कथितं देवि किं भूयः श्रोतुमिच्छसि॥४१

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि नवाधिकद्विशततमोऽध्यायः ॥ २०९ ॥

## दशाधिकद्विशततमोऽध्यायः ॥ २१० ॥

ईश्वरेण पार्वतींप्रति ऋषीणां कर्मफलविशेषादिकथनम् ॥ १ ॥

उमोवाच ।
भगवन्देवदेवेश तेषां कर्मफलं प्रभो ।
श्रोतुमिच्छाम्यहं देव प्रसादात्ते वरप्रद ॥ १
महेश्वर उवाच ।
वानप्रस्थगतं सर्वं फलपाकं शृणु प्रिये ॥ २
अग्नियोगं व्रजन्ग्रीष्मे ततो द्वादशवार्षिकम् ।
रुद्रलोकेऽभिजायेत विधिदृष्टेन कर्मणा ॥ ३
उपवासव्रतं कुर्वन्वर्षाकाले दृढव्रतः ।
सोमलोकेऽभिजायेत नरो द्वादशवार्षिकम् ॥ ४
काष्ठवन्मौनमास्थाय नरो द्वादशवार्षिकम् ।
मरुतां लोकमास्थाय तत्र भोगैश्च युज्यते ॥ ५
कुशशर्करसंयुक्ते स्थण्डिले संविशन्मुनिः ।
यक्षलोकेऽभिजायेत सहस्राणि चतुर्दश ॥ ६
वर्षाणां भोगसंयुक्तो नरो द्वादशवार्षिकम् ।
वीरासनगतो यस्तु कण्टकाफलकाश्रितः ।
गन्धर्वेष्वभिजायेत नरो द्वादशवार्षिकम् ॥ ७
वीरस्थायी चोर्ध्वबाहुर्नरो द्वादशवार्षिकम् ।
देवलोकेऽभिजायेत दिव्यभोगसमन्वितः ॥ ८
पादाङ्गुष्ठेन यस्तिष्ठेदूर्ध्वबाहुर्जितेन्द्रियः
इन्द्रलोकेऽभिजायेत सहस्राणि चतुर्दश ॥ ९
आहारनियमं कृत्वा मुनिर्द्वादशवार्षिकम् ।
नागलोकेऽभिजायेत संवत्सरगणान्बहून् ॥ १०
एवं दृढव्रता देवि वानप्रस्थाश्च कर्मभिः ।
स्थानेषु तत्र तिष्ठन्ति तत्तद्भोगसमन्विताः ॥ ११
तेभ्यो भ्रष्टाः पुनर्देवि जायन्ते नृषु भोगिनः ।
वर्णोत्तमकुलेष्वेव धनधान्यसमन्विताः ॥ १२
एतत्ते कथितं देवि किं भूयः श्रोतुमिच्छसि ॥ १३
उमोवाच ।
एषां यथा चराणां तु धर्ममिच्छामि मानद ।
कृपया परयाऽऽविष्टस्तन्मे ब्रूहि महेश्वर ॥ १४
महेश्वर उवाच ।
धर्मं यथा चराणां त्वं शृणु भामिनि तत्परा ॥ १५
व्रतोपवासशुद्धाङ्गास्तीर्थस्नानपरायणाः ।
धृतिमन्तः क्षमायुक्ताः सत्यव्रतपरायणाः ॥ १६
पक्षमासोपवासैश्च कर्शिता धर्मदर्शिनः ।
वर्षैः शीतातपैश्चैव कुर्वन्तः परमं तपः ॥ १७
कालयोगेन गच्छन्ति शक्रलोकं शुचिस्मिते ।
तत्र ते भोगसंयुक्ता दिव्यगन्धसमन्विताः ॥ १८
दिव्यभूषणसंयुक्ता विमानवरसंयुताः ।
विचरन्ति यथाकामं दिव्यस्त्रीगणसंयुताः ।
एतत्ते कथितं देवि किं भूयः श्रोतुमिच्छसि ॥ १९
उमोवाच ।
तेषां चक्रचराणां च धर्ममिच्छामि वै प्रभो ॥ २०
महेश्वर उवाच ।
हन्त ते कथयिष्यामि शृणु शाकटिकं शुभे ॥ २१
संवहन्तो धुरं दानैः शकटानां तु सर्वदा ।
प्रार्थयन्ते यथाकालं शकटैर्भैक्षचर्यया ॥ २२
तपोर्जनपरा धीरास्तपसा क्षीणकल्मषाः ।
पर्यटन्तो दिशः सर्वाः कामक्रोधविवर्जिताः २३
तेनैव कालयोगेन त्रिदिवं यान्ति शोभने ।
तत्र प्रमुदिता भोगैर्विचरन्ति यथासुखम् ॥ २४
एतत्ते कथितं देवि किं भूयः श्रोतुमिच्छसि ॥ २५
उमोवाच ।
वैखानसानां वै धर्मं श्रोतुमिच्छाम्यहं प्रभो ॥ २६
महेश्वर उवाच ।
ते वै वैखानसा नाम वानप्रस्थाः शुभेक्षणे ।
तीव्रेण तपसा युक्ता दीप्तिमन्तः स्वतेजसा ।
सत्यव्रतपरा धीरास्तेषां निष्कल्मषं तपः ॥ २७
अश्मकुट्टास्तथाऽन्ये च दन्तोलूखलिनस्तथा ।
शीर्णपर्णाशिनश्चान्ये उञ्छवृत्तास्तथा परे ॥ २८
कपोतवृत्तयश्चान्ये कापोतीं वृत्तिमाश्रिताः ।
पशुप्रचारनिरताः फेनपाश्च तथा परे ॥ २९
मृगवन्मृगचर्यायां संचरन्ति तथा परे ।
अब्भक्षा वायुभक्षाश्च निराहारास्तथैव च ॥ ३०

केचिच्चरन्ति मद्विष्णोः पादपूजनमुत्तमम् ।
संचरन्ति तपो घोरं व्याधिमृत्युविवर्जिताः ।
स्ववशादेव ते मृत्युं भीषयन्ति च नित्यशः॥३१
इन्द्रलोके तथा तेषां निर्मिता भोगसंचयाः
अमरैः समतां यान्ति देववद्भोगसंयुताः ॥ ३२
वराप्सरोभिः संयुक्ताश्चिरकालमनिन्दिते ।
एतत्ते कथितं देवि भूयः श्रोतुं किमिच्छसि॥३३
उमोवाच ।
भगवञ्श्रोतुमिच्छामि वालखिल्यांस्तपोधनान्३४
महेश्वर उवाच ।
धर्मचर्या तथा देवि वालखिल्यगतां शृणु ॥ ३५
मृगनिर्मोकवसना निर्द्वन्द्वास्ते तपोधनाः ।
अङ्गुष्ठमात्राः सुश्रोणि तेष्वेवाङ्गेषु संश्रिताः॥३६
उद्यन्तं सततं सूर्यं स्तुवन्तो विविधैः स्तवैः ।
भास्करस्येव किरणैः सहसा यान्ति नित्यदा ।
द्योतयन्तो दिशः सर्वा धर्मज्ञाः सत्यवादिनः३७
तेष्वेव निर्मलं सत्यं लोकार्थं तु प्रतिष्ठितम् ।
लोकोऽयं धार्यते देवि तेषामेव तपोबलात् ॥ ३८
महात्मनां तु तपसा सत्येन च शुचिस्मिते ।
क्षमया च महाभागे भूतानां संस्थितिं विदुः॥३९
प्रजार्थमपि लोकार्थं महद्भिः क्रियते तपः ।
तपसा प्राप्यते सर्वं तपसा प्राप्यते फलम् ।
दुष्प्रापमपि यल्लोके तपसा प्राप्यते हि तत ॥ ४०
पञ्चभूतार्थतत्त्वे च लोकसृष्टिविवर्धनम् ।
एतत्सर्वं समासेन तपोयोगाद्विनिर्मितम् ॥ ४१
तस्मादयं त्वृषिगणस्तपस्तप इति प्रिये ।
धर्मान्वेषी तपः कर्तुं यतते सततं प्रिये ॥ ४२
अमरत्वं शिवत्वं च तपसा प्रापयेत्सदा ।
एतत्ते कथितं सर्वं शृण्वन्त्यास्ते श्रुतं प्रिये ।
प्रियार्थमृषिसङ्घस्य प्रजानां हितकाम्यया ॥ ४३
नारद उवाच ।
एवं ब्रुवन्तं देवेशमृषयश्चापि तुष्टुवुः ।
भूयः परतरं यत्तु तदाप्रभृति चक्रिरे ॥ ४४

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि दशाधिकद्विशततमोऽध्यायः ॥ २१० ॥

---

## एकादशाधिकद्विशततमोऽध्यायः ॥ २११ ॥

महेश्वरेण पार्वतींप्रति निवृत्तिधर्मफलकथनम् ॥ १ ॥ तथा गार्हस्थ्यप्रशंसनपूर्वकं तद्धर्मफलादिकथनम् ॥ २ ॥

उमोवाच ।
उक्तस्त्वया त्रिवर्गस्य धर्मश्च परमः शुभः ।
सर्वव्यापी तु यो धर्मो भगवंस्तं ब्रवीतु मे । १
महेश्वर उवाच ।
ब्रह्मणा लोकसंसारे सृष्टा धात्रा गुणार्थिना
लोकांस्तारयितुं युक्ता मर्त्येषु क्षितिदेवताः ॥ २
तेषु तावत्प्रवक्ष्यामि धर्मं शुभफलोदयम् ।
ब्राह्मणेष्वभयो धर्मः परमः शुभलक्षणः ॥ ३
इमे च धर्मा लोकानां पूर्वं सृष्टाः स्वयंभुवा ।
पृथिव्यां सद्भिर्जैर्नित्यं कीर्त्यमानं निबोध मे ॥४
स्वदारनिरतिर्धर्मो नित्यं जप्यं तथैव च ।
सर्वातिथ्यं त्रिवर्गस्य यथाशक्ति दिवानिशम्॥५
शूद्रो धर्मपरो नित्यं शुश्रूषानिरतो भवेत् ॥ ६
त्रैविद्यो ब्राह्मणो वृद्धो न चाध्ययनजीवकः ।
त्रिवर्गस्य व्यतिक्रान्तं तस्य धर्मः सनातनः ॥ ७
षट् कर्माणि च प्रोक्तानि सृष्टानि ब्रह्मणा पुरा ।
धर्मिष्ठानि वरिष्ठानि तानितानि शृणूत्तमे ॥ ८
यजनं याजनं चैव दानं पात्रे प्रतिग्रहः ।
अध्यापनमध्ययनं षट्कर्मा धर्मभाग्द्विजः ॥ ९
नित्यः स्वाध्यायतो धर्मः नित्ययज्ञः सनातनः
दानं प्रशंसते नित्यं ब्राह्मणेषु त्रिकर्मसु ॥ १०
अयमेव परो धर्मः संवृतः सत्सु विद्यते ।
गर्भस्थाने विशुद्धानां धर्मस्य नियमो महान्॥११
पञ्चयज्ञविशुद्धात्मा ऋतुनित्योऽनसूयकः ।
दान्तो ब्राह्मणसत्कर्ता सुसंमृष्टनिवेशनः ॥ १२
चक्षुःश्रोत्रमनोजिह्वास्निग्धवर्णप्रदः सदा ।

अतिथ्यभ्यागतरतः शेषान्नकृतभोजनः ॥ १३
पाद्यमर्घ्यं यथान्यायमासनं शयनं तथा ।
दीपं प्रतिश्रयं चैव यो ददाति स धार्मिकः॥१४
प्रातरुत्थाय वै पश्चाद्भोजनं तु निमन्त्रयेत् ।
सत्कृत्याऽनुव्रजेद्यश्च तस्य धर्मः सनातनः ॥ १५
प्रवृत्तिलक्षणो धर्मो गृहस्थेषु विधीयते ।
तदहं कीर्तयिष्यामि त्रिवर्गेषु च यद्यथा ॥ १६
एकेनांशेन धर्मार्थः कर्तव्यो हितमिच्छता ।
एकेनांशेन कामार्थमेकमंशं विवर्धयेत् ॥ १७
निवृत्तिलक्षणः पुण्यो धर्मो मोक्षो विधीयते ।
तस्य वृत्तिं प्रवक्ष्यामि तां शृणुष्व समाहिता॥१८
सर्वभूतदया धर्मो निवृत्तेः परमः सदा ।
बुभुक्षितं पिपासार्तमतिथिं श्रान्तमागतम् ।
अर्चयन्ति वरारोहे तेषामपि फलं महत् ॥ १९
पात्रमित्येव दातव्यं सर्वस्मै धर्मकाङ्क्षिभिः ।
आगमिष्यति यत्पात्रं तत्पात्रं तारयिष्यति ॥२०
काले संप्राप्तमतिथिं भोक्तुकाममुपस्थितम् ।
यस्तं संभावयेत्तत्र व्यासोऽयं समुपस्थितः ॥ २१
तस्य पूजां यथाशक्त्या सौम्यचित्तः प्रयोजयेत् ।
चित्तमूलो भवेद्धर्मो धर्ममूलं भवेद्यशः ॥ २२
तस्मात्सौम्येन चित्तेन दातव्यं देवि सर्वथा ।
सौम्यचित्तस्तु यो दद्यात्तद्धि दानमनुत्तमम्॥२३
यथाम्बुबिन्दुभिः सूक्ष्मैः पतद्भिर्मेदिनीतले ।
केदाराश्च तटाकानि सरांसि सरितस्तथा ॥ २४
तोयपूर्णानि दृश्यन्ते अप्रतर्क्योऽतिशोभने ।
अल्पमल्पमपि ह्येकं दीयमानं विवर्धते ॥ २५
पीडयाऽपि च भृत्यानां दानमेव विशिष्यते ।
पुत्रदारधनं धान्यं न मृताननुगच्छति ॥ २६
श्रेयो दानं च भोगश्च धनं प्राप्य यशस्विनि ।
दानेन हि महाभागा भवन्ति मनुजाधिपाः॥२७
नास्ति भूमौ दानसमं नास्ति दानसमो निधिः ।
नास्ति सत्यात्परो धर्मो नानृतात्पातकं परम्॥२८
आश्रमे यस्तु तप्येत तपो मूलफलाशनः ।
आदित्याभिमुखो भूत्वा जटावल्कलसंवृतः ।
मण्डूकशायी हेमन्ते ग्रीष्मे पञ्चतपा भवन् ॥ २९
सम्यक्तपश्चरन्तीह श्रद्दधाना वनाश्रमे ।
गृहाश्रमस्य ते देवि कलां नार्हन्ति षोडशीम् ॥३०
उमोवाच ।
गृहाश्रमस्य या चर्या व्रतानि नियमाश्च ये ।
तथा च देवताः पूज्याः सततं गृहमेधिना ॥३१
यद्यच्च परिहर्तव्यं गृहिणातिथिपर्वसु ।
तत्सर्वं श्रोतुमिच्छामि कथ्यमानं त्वया विभो॥३२
महेश्वर उवाच ।
गृहाश्रमस्य यन्मूलं फलं धर्मोऽयमुत्तमम् ।
पादैश्चतुर्भिः सततं धर्मो यत्र प्रतिष्ठितः ॥ ३३
सारभूतं वरारोहे दध्नो घृतमिवोद्धृतम् ।
तदहं ते प्रवक्ष्यामि श्रूयतां धर्मचारिणि ॥ ३४
'दंपत्यलङ्करिष्णुश्च गृहदानरतिर्नरः ।
कलत्रसौख्यं विन्देत नास्ति तत्र विचारणा॥३५
स्त्रियो वा पुरुषो वाऽपि दंपतीन्पूजयन्ति ते ।
मनोभिलषितान्कामान्प्राप्नुवन्ति न संशयः॥'३६
शुश्रूषन्ते ये पितरं मातरं च गृहाश्रमे ।
भर्तारं चैव या नारी अग्निहोत्रं च ये द्विजाः॥३७
तेषुतेषु च प्रीणन्ति देवा इन्द्रपुरोगमाः ।
पितरः पितृलोकस्थाः स्वधर्मेण स रज्यते ॥ ३८
उमोवाच ।
मातापितृवियुक्तानां का चर्या गृहमेधिनाम् ।
विधवानां च नारीणां भवानेव ब्रवीतु मे ॥ ३९
महेश्वर उवाच ।
देवतातिथिशुश्रूषा गुरुवृद्धाभिवादनम् ।
अहिंसा सर्वभूतानामलोभः सत्यसन्धता ॥ ४०
ब्रह्मचर्यं शरण्यत्वाशौचं पूर्वाभिभाषणम् ।
कृतज्ञत्वमपैशुन्यं सततं धर्मशीलता ॥ ४१
दिने द्विरभिषेकं च पितृदैवतपूजनम् ।
गवाह्निकप्रदानं च संविभागोऽतिथिष्वपि ॥ ४२
दीपप्रतिश्रयं चैव दद्यात्पाद्यासनं तथा ।
पञ्चमेऽहनि षष्ठे वा द्वादशेऽप्यष्टमेऽथवा ।
चतुर्दशे पञ्चदशे ब्रह्मचारी सदा भवेत् ॥ ४३

श्मश्रुकर्म शिरोभ्यङ्गमञ्जनं दन्तधावनम् ।
नैतेष्वहस्सु कुर्वीत तेषु लक्ष्मीः प्रतिष्ठिता ॥४४
व्रतोपवासनियमास्तपो दानं च शक्तितः ।
भरणं भृत्यवर्गस्य दीनानामनुकम्पनम् ॥ ४५
परदारान्निवृत्तिश्च स्वदारेषु रतिः सदा ।
शरीरमेकं दंपत्योर्विधात्रा पूर्वनिर्मितम् ।
तस्मात्स्वदारनिरतो ब्रह्मचारी विधीयते ॥ ४६
शीलवृत्तविनीतस्य निगृहीतेन्द्रियस्य च ।
आर्जवे वर्तमानस्य सर्वभूतहितैषिणः ॥ ४७
प्रियातिथेश्च क्षान्तस्य धर्मार्जितधनस्य च ।
गृहाश्रमपदस्थस्य किमन्यैः कृत्यमाश्रमैः ॥ ४८
यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः ।
तथा गृहाश्रमं प्राप्य सर्वे जीवन्ति चाश्रमाः॥४९
राजानः सर्वपाषण्डाः सर्वे रङ्गोपजीविनः ।
व्यालग्रहाश्च डम्भाश्च चोरा राजभटास्तथा ॥५०
सविद्याः सर्वशीलज्ञाः सर्वे वै विचिकित्सकाः ।
दूराध्वानं प्रपन्नाश्च क्षीणपथ्योदना नराः ।
एते चान्ये च बहवस्तर्कयन्ति गृहाश्रमम् ॥ ५१
मार्जारा मूषिकाः श्वानः सूकराश्च शुकास्तथा ।
कपोतका काकटकाः सरीसृपनिषेवणाः ।
अरण्यवासिनश्चान्ये सङ्घा ये मृगपक्षिणाम् ॥ ५२
एवं बहुविधा देवि लोकेऽस्मिन्सचराचराः ।
गृहे क्षेत्रे बिले चैव शतशोऽथ सहस्रशः ॥ ५३
गृहस्थेन कृतं कर्म सर्वैस्तैरिह भुज्यते ।
उपयुक्तं च यत्तेषां मतिमांस्तानुशोचति ॥ ५४
धर्म इत्येव संकल्प्य अस्तु तस्य फलं शृणु ।
सर्वयज्ञप्रणीतस्य हयमेधेन यत्फलम् ।
वर्षे स द्वादशे देवि फलेनैतेन युज्यते ॥ ५५
आशापाशविमोक्षं च विविधर्ममनुत्तमम् ।
वृक्षमूलचरा नित्यं शून्यागारनिवेशनम् ॥ ५६
नदीपुलिनशायी च नदीतीरमनुव्रजन् ।
विमुक्तः सर्वसङ्गेभ्यः स्नेहबन्धेन वै द्विजः ॥५७
आत्मन्येवात्मना भावं समायोज्येह तेन वै ।
आत्मभूतो यताहारो मोक्षदृष्टेन कर्मणा ॥ ५८
पवित्रनित्यो युक्तश्च तस्य धर्मः सनातनः ।
नैकत्र रमते सक्तो न चैकग्रामगोचरः ।
युक्तोऽप्यटति यो युक्तो न चैकपुलिनाश्रयः५९
एष मोक्षविदां धर्मो वेदोक्तः सत्पथे स्थितः ६०

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि एकादशाधिकद्विशततमोऽध्यायः ॥ २११ ॥

## द्वादशाधिकद्विशततमोऽध्यायः ॥ २१२ ॥

महेश्वरेण पार्वतींप्रति विस्तरेण राजधर्मकथनम् ॥ १ ॥

उमोवाच ।
देवदेव नमस्तुभ्यं त्र्यक्ष भो वृषभध्वज ।
श्रुतं मे भगवन्सर्वं त्वत्प्रसादान्महेश्वर ॥ १
संगृहीतं मया तच्च तव वाक्यमनुत्तमम् ।
इदानीमस्ति संदेहो मानुषेष्विह कश्चन ॥
तुल्यप्राणशिरःकायो राजाऽयमिति दृश्यते ।
केन कर्मविपाकेन सर्वप्राधान्यमर्हति ॥
स चापि दण्डयन्मर्त्यान्भर्त्सयन्विधमन्नपि ।
प्रेत्यभावे कथं लोकाँल्लभते पुण्यकर्मणा ।
राजवृत्तमहं तस्माच्छ्रोतुमिच्छामि मानद ॥
महेश्वर उवाच ।
तदहं ते प्रवक्ष्यामि राजधर्मं शुभानने ॥ ५
राजायत्तं हि यत्सर्वं लोकवृत्तं शुभाशुभम् ।
महतस्तपसो देवि फलं राज्यमिति स्मृतम् ॥ ६
तपोदानमयं राज्यं परं स्थानं विधीयते ।
तस्माद्राज्ञः सदा मर्त्याः प्रणमन्ति यतस्ततः ॥ ७
न्यायतस्त्वं महाभागे श्रोतुकामाऽसि भामिनि ।
तस्मात्तस्यैव चरितं जगत्पथ्यं शृणु प्रिये ॥ ८
अराजके पुरा त्वासीत्प्रजानां संकुलं महत् ।
तद्दृष्ट्वा संकुलं ब्रह्मा मनुं राज्ये न्यवेदयत् ।
तदाप्रभृति संदृष्टं राज्ञां वृत्तं शुभाशुभम् ॥ ९
तन्मे शृणु वरारोहे तस्य पथ्यं जगद्धितम् ।

यथा प्रेत्य लभेत्स्वर्गं यथा वीर्यं यशस्तथा ॥१०
पित्र्यं वा भूतपूर्वं वा स्वयमुत्पाद्य वा पुनः ।
राज्यधर्ममनुष्ठाय विधिवद्भोक्तुमर्हति ॥ ११
आत्मानमेव प्रथमं विनयैरुपपादयेत् ।
अनु भृत्यान्प्रजाः पश्चादित्येष विनयक्रमः ॥१२
स्वामिनं चोपमां कृत्वा प्रजास्तद्वृत्तकाङ्क्षया ।
स्वयं विनयसंपन्ना भवन्तीह शुभेक्षणे ॥ १३
स्वस्मात्पूर्वतरं राजा विनयत्येव वै प्रजाः ।
अपहास्यो भवेत्तादृक्स्वदोषस्यानवेक्षणात् ॥ १४
विद्याभ्यासैर्वृद्धयोगैरात्मानं विनयं नयेत् ।
विद्या धर्मार्थफलिनी तद्विदो वृद्धसंज्ञिताः॥ १५
इन्द्रियाणां जयो देवि अत ऊर्ध्वमुदाहृतः ।
अजये सुमहान्दोषो राजानं विनिपातयेत् ॥ १६
पञ्चैव स्ववशे कृत्वा तदर्थान्पञ्च शोषयेत् ।
षडुत्सृज्य यथायोगं ज्ञानेन विनयेन च ।
शास्त्रचक्षुर्नयपरो भूत्वा भृत्यान्समाहरेत् ॥ १७
वृत्तश्रुतकुलोपेतानुपधाभिः परीक्षितान् ।
अमात्यानुपधातीतान्सोपसर्पाञ्जितेन्द्रियान्
योजयेत यथायोगं यथार्हं स्वेषु कर्मसु ॥ १८
अमात्या बुद्धिसंपन्ना राष्ट्रं बहुजनप्रियम् ।
दुराधर्षं पुरश्रेष्ठं कोशः कृच्छ्रसहः स्मृतः ॥ १९
अनुरक्तं बलं साम्नामद्वैधं मन्त्रमेव च ।
एताः प्रकृतयः स्वेषु स्वामी विनयतत्ववित् ॥२०
प्रजानां रक्षणार्थाय सर्वमेतद्विनिर्मितम् ।
आभिः करणभूताभिः कुर्याल्लोकहितं नृपः ॥२१
आत्मरक्षा नरेन्द्रस्य प्रजारक्षार्थमिष्यते ।
तस्मात्सततमात्मानं संरक्षेदप्रमादवान् ॥ २२
भोजनाच्छादनस्नानाद्बहिर्निष्क्रमणादपि ।
नित्यं स्त्रीगणसंयोगाद्रक्षेदात्मानमात्मवान् ॥२३
स्वेभ्यश्चैव परेभ्यश्च शस्त्रादपि विषादपि ।
सततं पुत्रदारेभ्यो रक्षेदात्मानमात्मवान् ॥ २४
सर्वेभ्य एव स्थानेभ्यो रक्षेदात्मानमात्मवान् ।
प्रजानां रक्षणार्थाय प्रजाहितकरो भवेत् ॥ २५
प्रजाकार्यं तु तत्कार्यं प्रजासौख्यं तु तत्सुखम् ।
प्रजाप्रियं प्रियं तस्य स्वहितं तु प्रजाहितम् ।
प्रजार्थं तस्य सर्वस्वमात्मार्थं न विधीयते ॥ २६
प्रकृतीनां हि रक्षार्थं रागद्वेषौ व्युदस्य च ।
उभयोः पक्षयोर्वादं श्रुत्वा चैव यथातथम् ।
तमर्थं विमृशेद्बुद्ध्या स्वयमातत्त्वदर्शनात् ॥ २७
तत्त्वावाप्तश्च बहुभिर्वृद्धैः सह नरोत्तमैः ।
कर्तारमपराधं च देशकालौ नयानयौ । २८
ज्ञात्वा सम्यग्यथाशास्त्रं ततो दण्डं नयेन्नृषु ।
एवं कुर्वल्लभेद्धर्मं पक्षपातविवर्जनात् ॥ २९
प्रत्यक्षाप्तोपदेशाभ्यामनुमानेन वा पुनः ।
बोद्धव्यं सततं राज्ञा देशवृत्तं शुभाशुभम् ॥ ३०
चारैः कर्मप्रवृत्त्या च तद्विज्ञाय विचारयेत् ।
अशुभं निर्हरेत्सद्यो जोषयेच्छुभमात्मनः ॥ ३१
गर्ह्यान्विगर्हयेद्देवि पूज्यान्संपूजयेत्तथा ।
दण्ड्यांश्च दण्डयेद्देवि नात्र कार्या विचारणा ॥३२
पश्चावेक्षन्सदा मन्त्रं कुर्याद्बुद्धियुतैर्नरैः ।
कुलवृत्तश्रुतोपेतैर्नित्यं मन्त्रपरो भवेत् ॥ ३३
कामकारेण वै मुख्यैर्न च मन्त्रमना भवेत् ।
राजा राष्ट्रहितापेक्षं सत्यधर्माणि कारयेत् ॥ ३४
सर्वोद्योगं स्वयं कुर्याद्दुर्गादिषु सदा नृषु ।
देशवृद्धिकरान्भृत्यानप्रमादेन कारयेत् ॥ ३५
देशक्षयकरान्सर्वानप्रियांश्च विवर्जयेत् ।
अहन्यहनि संपश्येदनुजीविगणं स्वयम् ॥ ३६
सुमुखः सुप्रियो दत्वा सम्यग्वृत्तं समाचरेत् ।
अधर्म्यं परुषं तीक्ष्णं वाक्यं वक्तुं न चार्हति ॥३७
असंविश्वास्य वचनं वक्तुं सत्सु न चार्हति ।
नरेनरे गुणान्दोषान्सम्यग्वेदितुमर्हति ॥ ३८
स्वेङ्गितं वृणुयाद्धैर्यं न कुर्यात्क्षुद्रसंविदम् ।
परेङ्गितज्ञो लोकेषु भूत्वा संसर्गमाचरेत् ॥ ३९
स्वतश्च परतश्चैव परस्परभयादपि ।
अमानुषभयेभ्यश्च स्वाः प्रजाः पालयेन्नृपः ॥४०
लुब्धाः कठोराश्चाप्यस्य मानवा दस्युवृत्तयः ।
निग्राह्या एव ते राज्ञा संगृहीत्वा यतस्ततः ॥४१
कुमारान्विनयोद्बोधैर्जन्मप्रभृति योजयेत् ।

तेषामात्मगुणोपेतं यौवराज्येन योजयेत् ॥ ४२
प्रकृतीनां यथा न स्याद्राज्यभ्रंशो भवेद्भयम् ।
एतत्संचिन्तयेन्नित्यं तद्विधानं तथार्हति ॥ ४३
अराजकं क्षणमपि राज्यं न स्याद्धि शोभने ।
आत्मनोऽनुविधानाय यौवराज्यं मदेष्यते ॥ ४४
कुलजानां च वैद्यानां श्रोत्रियाणां तपस्विनाम् ।
अन्येषां वृत्तियुक्तानां विशेषं कर्तुमर्हति ॥ ४५
आत्मार्थं राज्यतन्त्रार्थं कोशार्थं च समाचरेत् ।
दुर्गाद्राष्ट्रात्समुद्राच्च वणिग्भ्यः पुरुषात्ययान् ४६
परात्मगुणमाराभ्यां भृत्यपोषणमाचरेत् ।
वाहनानां प्रकुर्वीत पोषणं योधकर्मसु ॥ ४७
सादरः सततं भूत्वा अवेक्षाव्रतमाचरेत् ।
चतुर्धा विभजेत्कोशं धर्मभृत्यात्मकारणात् ॥४८
आपदर्थं च नीतिज्ञो देशकालवशेन तु ।
अनाथान्व्यथितान्वृद्धान्स्वे देशे पोषयेन्नृपः ॥४९
सन्धिं च विग्रहं चैव तद्विशेषांस्तथा परान् ।
यथावत्संविमृश्यैव बुद्धिपूर्वं समाचरेत् ॥ ५०
सर्वेषां संप्रियो भूत्वा मण्डलं सततं चरेत् ।
शुभेष्वपि च कार्येषु न चैकान्तः समाचरेत् ॥५१
स्वतश्च परतश्चैव व्यसनानि विमृश्य सः ।
परेण धार्मिकान्योगान्नातीयाद्द्वेषलोभतः ॥ ५२
रक्ष्यत्वं वै प्रजाधर्मः क्षत्रधर्मस्तु रक्षणम् ।
कुनृपैः पीडितास्तस्मात्प्रजाः सर्वत्र पालयेत् ॥५३
यात्राकालेऽनवेक्ष्यैव पश्चात्कोपफलोदयः ।
तद्युक्ताश्चापदश्चैव शासनादिति चिन्तयेत् ॥५४
व्यसनेभ्यो बलं रक्षेन्नयतो व्ययतोपि वा ।
प्रायशो वर्जयेद्युद्धं प्राणरक्षणकारणात् ॥ ५५
कारणादेव योद्धव्यं नात्मनः परदोषतः ।
सुयुद्धे प्राणमोक्षश्च तस्य धर्माय इष्यते ॥ ५६
अभियुक्तो बलवता कुर्यादापद्विधिं नृपः
अनुनीय तथा सर्वान्प्रजानां हितकारणात् ॥५७
अन्यप्रकृतियुक्तानां राज्ञां वृत्तिविचारिणाम् ।
अन्यांश्चापन्नपन्नानां न तान्संयोक्तुमर्हति ॥ ५८
शुभाशुभं यदा देवि व्रतं नृपसमाधनम् ।
आत्मैव तच्छुभं कुर्यादशुभं योजयेत्परान् ॥ ५९
एवमुद्देशतः प्रोक्तमलेपत्वं यथा भवेत् ।
एष देवि समासेन राजधर्मः प्रकीर्तितः ॥ ६०
एवं संवर्तमानस्तु दण्डयन्भर्त्सयन्प्रजाः ।
निष्कल्मषमवाप्नोति पद्मपत्रमिवाम्भसा ॥ ६१
एवं संवर्तमानस्य कालधर्मो यदा भवेत् ।
स्वर्गलोके तदा राजा त्रिदशैः सह तोष्यते ॥ ६२
द्विविधं राज्यवृत्तं च न्यायभाग्यसमन्वितम् ।
एवं न्यायानुगं वृत्तं कथितं ते शुभेक्षणे ॥ ६३
राज्यं न्यायानुगं तात बुद्धिशास्त्रानुगं भवेत् ।
धर्म्यं पथ्यं यशस्यं च स्वर्ग्यं चैव तथा भवेत् ॥६४
राज्यं भाग्यानुगं नाम अयथावत्प्रदृश्यते ।
तत्तु शास्त्रविनिर्मुक्तं सतां कोपकरं भवेत् ।
अधर्म्यमयशस्यं च दुरन्तं च भवेद्ध्रुवम् ॥ ६५
यत्र स्वच्छन्दतः सर्वं क्रियते कर्म राजभिः ।
तत्र भाग्यवशाद्भूत्या लभन्ते न विशेषतः ॥ ६६
यत्र दण्ड्या न दण्ड्यन्ते पूज्यन्ते वा नराधमाः ।
यत्र सन्तोपि हन्यन्ते तत्र भाग्यानुगं भवेत् ६७
शुभाशुभं यथा यत्र विपरीतं प्रदृश्यते ।
राज्ञि चासुरपक्षे तु तत्र भाग्यानुगं भवेत् ॥ ६८
भाग्यानुगे तु राजानो वर्तमाना यथातथा
प्राप्याकीर्तिमनर्थं च इह लोके शुभेक्षणे ॥ ६९
परत्र सुमहाघोरं तमः प्राप्य दुरत्ययम् ।
तिष्ठन्ति नरके देवि प्रलयान्तादिति स्थितिः ७०
मोक्षं दुष्कृतिनां चापि विद्यते कालपर्ययात् ।
नास्त्येव मोक्षणं देवि राज्ञां दुष्कृतिकारिणाम् ७१
एतत्सर्वं समासेन राजवृत्तं शुभाशुभम्
कथितं ते महाभागे भूयः श्रोतुं किमिच्छसि ॥७२

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि द्वादशाधिकद्विशततमोऽध्यायः ॥ २१२ ॥

# त्रयोदशाधिकद्विशततमोऽध्यायः ॥ २१३ ॥

ईश्वरेण हिंसाया दुष्परिणामनिरूपणपूर्वकमहिंसाप्रशंसनम् ॥ १ ॥

उमोवाच ।
देवदेव महादेव सर्वदेवनमस्कृत ।
यानि धर्मरहस्यानि श्रोतुमिच्छामि तान्यहम् ॥१
महेश्वर उवाच ।
रहस्यं श्रूयतां देवि मानुषाणां सुखावहम् ।
नपुंसकेषु वन्ध्यासु विघोनां पृथिवीतले ॥ २
उत्सर्गो रेतसस्तेषु न कार्यो धर्मकाङ्क्षिभिः ।
एतेषु बीजं प्रक्षिप्तं न च रोहति वै प्रिये ॥ ३
यत्र वा तत्र वा बीजं धर्मार्थी नोत्सृजेत्पुनः ।
नरो बीजविनाशेन लिप्यते ब्रह्महत्यया ॥ ४
अहिंसा परमो धर्म अहिंसा परमं सुखम् ।
अहिंसा धर्मशास्त्रेषु सर्वेषु परमं पदम् ॥ ५
देवतातिथिशुश्रूषा सततं धर्मशीलता ।
वेदाध्ययनयज्ञाश्च तपो दानं दमस्तथा ॥ ६
आचार्यगुरुशुश्रूषा तीर्थाभिगमनं तथा ।
अहिंसाया वरारोहे कलां नार्हन्ति षोडशीम् ॥७
एतत्ते परमं गुह्यमाख्यातं परमार्चितम् ॥
उमोवाच ।
यद्यधर्मस्तु हिंसायां किमर्थममरोत्तम ।
यज्ञेषु पशुबन्धेषु हन्यन्ते पशवो द्विजैः ॥
कथं च भगवन्भूयो हिंसमाना नराधिपाः
स्वर्गं सुदुर्गमं यान्ति तदा स रिपुसूदन ॥ १०
यस्यैव गोसहस्राणि विंशतिः साधिकानि तु ।
अहन्यहनि हन्यन्ते द्विजानां मांसकारणात् ॥११
समांसं तु स दत्त्वाऽन्नं रन्तिदेवो नराधिपः ।
कथं स्वर्गमनुप्राप्तः परं कौतूहलं हि मे ॥ १२
किंतु धर्मं न शृण्वन्ति न श्रद्दधति वा श्रुतम् ।
मृगयां वै विनिर्गत्य मृगान्हन्ति नराधिपाः १३
एतत्सर्वं विशेषेण विस्तरेण वृषध्वज ।
श्रोतुमिच्छामि सर्वज्ञ तत्त्वमद्य ममोच्यताम् ॥१४
ईश्वर उवाच ।
बहुमान्यमिदं देवि नास्ति कश्चिदहिंसकः ।
श्रूयतां कारणं चात्र यथाऽनेकविधं भवेत् ॥१५
दृश्यते चापि लोकेऽस्मिन्न हि कश्चिदहिंसकः ।
धरणीसंश्रिता देवि सुसूक्ष्मांश्चैव मध्यमान् ॥१६
संचरंश्चरणाभ्यां च हन्ति जीवाननेकशः ।
अज्ञानाज्ज्ञानतो वाऽपि यो जीवः शयनासनात्
उपाविशञ्शयानश्च हन्ति जीवाननेकशः ॥ १७
शिरोवस्त्रेषु ये जीवा नराणां स्वेदसंभवाः ।
तांश्च हिंसन्ति सततं दंशांश्च मशकानपि ॥ १८
जले जीवास्तथाऽऽकाशे पृथिवी जीवमालिनी ।
एवं जीवाकुले लोके कोऽसौ स्याद्यस्त्वहिंसकः १९
स्थूलमध्यमसूक्ष्मैश्च स्वेदवारिसहीरुहैः ।
दृश्यरूपैरदृश्यैश्च नानारूपैश्च भामिनि ॥ २०
जीवैस्ततमिदं सर्वमाकाशं पृथिवी तथा ।
अन्योन्यं ते च हिंसन्ति दुर्बलान्बलवत्तराः ॥२१
मत्स्या मत्स्यान्ग्रसन्तीह खगाश्चैव खगांस्तथा ।
सरीसृपैश्च जीवन्ति कपोताद्या विहंगमाः ॥ २२
भूचराः खेचराश्चान्ये क्रव्यादा मांसगृद्धिनः ।
समृद्धाः परमांसैस्तु भक्षैरन्येऽपि चापरैः ॥ २३
सत्त्वैः सत्त्वानि जीवन्ति शतशोथ सहस्रशः ।
अपीडयित्वा नैवान्यं जीवा जीवन्ति सुन्दरि २४
स्थूलकायस्य सत्त्वस्य खरस्य महिषस्य च ।
जीवस्यैकस्य मांसेन पयसा रुधिरेण वा
तृप्यन्ते बहवो जीवाः क्रव्यादा मांसजीविनः २५
एको जीवसहस्राणि सदा खादति मानवः ।
अन्नाद्यस्य च भोगेन धान्यसंज्ञानि यानि तु ॥२६
मांसधान्यैः सबीजैश्च भोजनं परिवर्जयेत् ॥ २७
त्रिरात्रं पञ्चरात्रं वा सप्तरात्रं तथाऽपि वा ।
धान्यानि यो न हिंसेत्ताहिंसकः परिकीर्तितः २८
नाश्नाति यावतो जीवस्तावत्पुण्येन युज्यते ।
आहारस्य वियोगेन शरीरं परितप्यते ॥ २९
तप्यमाने शरीरे तु शरीरे चेन्द्रियाणि तु ।
वशे तिष्ठन्ति सुश्रोणि नृपाणामिव किंकराः ३०

निरुणद्धीन्द्रियाण्येव स सुखी स विचक्षणः ।
इन्द्रियाणां निरोधेन दानेन च दमेन च ।
नरः सर्वमवाप्नोति मनसा यद्यदिच्छति ॥ ३१
एवं मूलमहिंसाया उपवासः प्रकीर्तितः ॥ ३२
आहारं कुरुते यस्तु भूमिमाक्रमते च यः ।
सर्वे ते हिंसका देवि यथा धर्मेषु दृश्यते ॥ ३३
यथैवाहिंसको देवि तत्त्वतो ज्ञायते नरः ।
तथा ते संप्रवक्ष्यामि श्रूयतां धर्मचारिणि ॥ ३४
फलानि मूलपर्णानि भस्म वा योपि भक्षयेत् ।
आलेख्यमिव निश्चेष्टं तं मन्येऽहमहिंसकम् ॥३५
आरम्भा हिंसया युक्ता धूमेनाग्निरिवावृताः ।
तस्माद्यस्तु निराहारस्तं मन्येऽहमहिंसकम् ॥ ३६
यस्तु सर्वं समुत्सृज्य दीक्षित्वा नियतः शुचिः ।
कृत्वा मण्डलमर्यादां संकल्पं कुरुते नरः ॥ ३७
यावज्जीवमनाशित्वा कालकाङ्क्षी दृढव्रतः ।
ध्यानेन तपसा युक्तस्तं मन्येऽहमहिंसकम् ॥ ३८
अन्यथा हि न पश्यामि नरो यः स्यादहिंसकः ।
बहु चिन्त्यमिदं देवि नास्ति कश्चिदहिंसकः ३९
यतो यतो महाभागे हिंसा स्यान्महती ततः ।
निवृत्तो मधुमांसाभ्यां हिंसा त्वल्पतरा भवेत् ४०
निवृत्तिः परमो धर्मो निवृत्तिः परमं सुखम् ।
मनसा विनिवृत्तानां धर्मस्य निचयो महान् ४१
मनःपूर्वागमा धर्मा अधर्माश्च न संशयः ।
मनसा बध्यते चापि मुच्यते चापि मानवः ॥४२
निगृहीते भवेत्स्वर्गो विसृष्टे नरको ध्रुवः ।
घातकः शस्त्रमुद्यम्य मनसा चिन्तयेद्यदि ॥ ४३
आयुःक्षयं गतेऽन्येषां मृते तु प्रहराम्यहम् ।
इति यो घातको हन्यान्न स पापेन लिप्यते ॥४४
विधिना निहताः पूर्वं निमित्तं स तु घातकः ।
विधिर्हि बलवान्देवि दुस्त्यजं वै पुराकृतम् ॥४५
जीवाः पुराकृतेनैव तिर्यग्योनिसरीसृपाः ।
नानायोनिषु जायन्ते स्वकर्मपरिवेष्टिताः ॥ ४६
नानाविधविचित्राङ्गा नानाशौर्यपराक्रमाः ।
नानाभूमिप्रदेशेषु नानाहाराश्च जन्तवः ॥ ४७
जायमानस्य जीवस्य मृत्युः पूर्वं प्रजायते ।
सुखं वा यदि वा दुःखं यथापूर्वं कृतं तु वा ॥ ४८
प्राप्नुवन्ति नरा मृत्युं यदा यत्र च येन च ।
नातिक्रान्तुं हि शक्यः स्यान्निदेशः पूर्वकर्मणः ४९
अप्रमत्तः प्रमत्तेषु विधिर्जागर्ति जन्तुषु ।
न हि तस्य प्रियः कश्चिन्न द्वेष्यो न च मध्यमः ५०
समः सर्वेषु भूतेषु कालः कालं निरीक्षते ।
गतायुषो ह्याक्षिपते जीवः सर्वस्य देहिनः ॥ ५१
यथा येन च मर्तव्यं नान्यथा म्रियते हि सः ।
दृश्यते न च लोकेऽस्मिन्भूतो भव्यो द्विधा पुनः ५२
विज्ञानैर्विक्रमैर्वाऽपि नानामन्त्रौषधैरपि ।
यो हि वञ्चयितुं शक्तो विधेस्तु नियतां गतिम् ॥५३
एष तेऽभिहितो देवि जीवहिंसाविधिक्रमः ॥ ५४

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि त्रयोदशाधिकद्विशततमोऽध्यायः ॥ २१३ ॥

## चतुर्दशाधिकद्विशततमोऽध्यायः ॥ २१४ ॥

महेश्वरेण पार्वतींप्रति सदृष्टान्तप्रदर्शनं सर्वैर्विधेर्दुरतिक्रमत्वनिरूपणम् ॥ १ ॥ तथा योधधर्मकथनपूर्वकं राज्ञां योधानां च प्राणयज्ञप्रशंसनम् ॥ २ ॥

महेश्वर उवाच ।
श्रूयतां कारणं देवि यथा हि दुरतिक्रमः ।
विधिः सर्वेषु भूतेषु मर्तव्ये समुपस्थिते ॥ १
आयुःक्षयेणोपहिताः समागम्य वरानने ।
कीटाः पतङ्गा बहवः स्थूलाः सूक्ष्माश्च मध्यमाः ।
प्रज्वलत्सु प्रदीपेषु स्वयमेव पतन्ति ते ॥ २
बहूनां मृगयूथानां नानावननिषेविणाम् ।
यस्तु कालं गतस्तेषां स वै पाशेन बध्यते ॥ ३
सूनार्थं देवि बद्धानां क्षीणायुर्यो निबध्यते ।
अवशो घातकस्याथ हस्तं तदहरेति सः ॥ ४

यथा पक्षिगणाः क्षिप्रं विस्तीर्णाकाशगामिनः ।
क्षीणायुषो निबध्यन्ते शक्ता अपि पलायितुम् ॥५
यथा वारिचरा मीना बहवोऽम्बुजजातयः ।
जालं समधिरोहन्ति स्वयमेव विधेर्वशात् ॥ ६
शल्यकस्य च जिह्वाग्रं स्वयमारुह्य शोभने ।
आयुःक्षयेणोपहता निबध्यन्ते सरीसृपाः ॥ ७
कृषतां कर्षकाणां च नास्ति बुद्धिर्विहिंसने ।
अथैषां लाङ्गलाग्राद्यैर्हन्यन्ते जन्तवोऽक्षयाः ॥ ८
पादाग्रेणैव चैकेन यां हिंसां कुरुते नरः ।
मातङ्गोपि न तां कुर्यात्क्रूरो जन्मशतैरपि ॥ ९
म्रियन्ते यैर्हि मर्तव्यं न तान्घ्नन्ति कृषीवलाः ।
कृषामीति मनस्तस्य नास्ति चिन्ता विहिंसने ॥१०
तस्माज्जीवसहस्राणि हत्वाऽपि न स लिप्यते ।
विधिना स हतः पूर्वं पश्चात्प्राणी विपद्यते ।
एवं सर्वेषु भूतेषु विधिर्हि दुरतिक्रमः ॥ ११
गतायुषा मुहूर्तं तु न शक्यमुपजीवितुम् ।
जीवितव्ये न मर्तव्यं न भूतं न भविष्यति ॥ १२
शुभाशुभं कर्मफलं न शक्यमतिवर्तितुम् ।
तथा ताभिश्च मर्तव्यं मोक्तव्याश्चैव तास्तथा ॥ १३
रन्तिदेवस्य गावो वै विधेर्हि वशमागताः ।
स्वयमायान्ति गावो वै हन्यन्ते यत्र सुन्दरि ॥ १४
गवां वै हन्यमानानां रुधिरप्रभवा नदी ।
चर्मण्वतीति विख्याता खुरशृङ्गास्थिदुर्गमा ॥१५
रुधिरं तां नदीं प्राप्य तोयं भवति शोभने ।
मेध्यं पुण्यं पवित्रं च गन्धवर्णरसैर्युतम् ॥ १६
तत्राऽभिषेकं कुर्वन्ति कृतजप्याः कृताह्निकाः ।
द्विजा देवगणाश्चापि लोकपाला महेश्वराः ॥ १७
तस्य राज्ञः सदा सत्रे स्वयमागम्य सुन्दरि ।
विधिना पूर्वदृष्टेन तन्मांसमुपकल्पितम् ।
मन्त्रवत्प्रतिगृह्णन्ति यथान्यायं यथाविधि ॥ १८
समांसं च सदा ह्यन्नं शतशोऽथ सहस्रशः ।
भुञ्जानानां द्विजातीनामस्तमेति दिवाकरः ॥ १९
गावो यांस्तत्र हन्यन्ते राज्ञस्तस्य क्रतूत्तमे ।
पच्यमानेषु मन्त्रेषु यथान्यायं यथाविधि ॥ २०
ताश्च स्वर्गं गता गावो रन्तिदेवश्च पार्थिवः ।
सदा सत्रविधानेन सिद्धिं प्राप्तो नरोत्तमः ॥ २१
अथ यस्तु सहायार्थमुक्तः स्यात्पार्थिवैर्नरैः ।
भोगानां संविभागेन वस्त्राभरणभूषणैः ॥ २२
सहभोजनसंबद्धैः सत्कारैर्विविधैरपि ।
सहायकाले संप्राप्ते संग्रामे शस्त्रमुद्धरेत् ॥ २३
व्यूढानीके यथा शास्त्रं सेनयोरुभयोरपि ।
हस्त्यश्वरथसंपूर्णे पदातिबलसंकुले ।
चामरच्छत्रशबले ध्वजचर्मायुधोज्ज्वले ॥ २४
शक्तितोमरकुन्तासिशूलमुद्गरपाणिभिः ।
कूटमुद्गरचापेषु मुसुण्ठीजुष्टमुष्टिभिः ॥ २५
भिण्डिपालगदाचक्रप्रासकर्पटधारिभिः ।
नानाप्रहरणैर्योधैः सेनयोरुभयोरपि ।
युद्धशौण्डैः प्रगर्जद्भिर्दृप्तेषु वृषभैरिव ॥ २६
शङ्खदुन्दुभिनादेन नानातूर्यरवेण च ।
हयहेषितशब्देन कुञ्जराणां तु बृंहितैः ॥ २७
योधानां सिंहनादैश्च घण्टानां शिञ्जितस्वनैः ।
दिशश्च विदिशश्चैव समन्ताद्बधिरीकृताः ॥ २८
ग्रीष्मान्तेष्विव गर्जद्भिर्नभसीव बलाहकैः ।
रथनेमिखुरोद्भूतैररुणै रणरेणुभिः ।
कपिलाभिरिवाकाशे छाद्यमाने समन्ततः ॥ २९
प्रवृत्ते शस्त्रसंपाते योधानां तत्र सेनयोः ।
तेषां प्रहारक्षतजं रक्तचन्दनसन्निभम् ॥ ३०
तेषामस्राणि गात्रेभ्यः स्रवन्ते रणमूर्धनि ।
पलाशाशोकपुष्पाणां जङ्गमा इव राशयः ॥ ३१
रणे समभिवर्तन्त उद्यतायुधपाणयः ।
शोभमाना रणे शूरा आह्वयन्तः परस्परम् ॥ ३२
हन्यमानेष्वभिघ्नत्सु शूरेषु रणसंकटे ।
पृष्ठं दत्त्वा च ये तत्र नायकस्य नराधमाः ॥ ३३
अनाहता निवर्तन्ते नायके चाप्यनीप्सति ।
ते दुष्कृतं प्रपद्यन्ते नायकस्याखिलं नराः ।
यच्चास्ति सुकृतं तेषां युज्यते तेन नायकः ॥ ३४
अहिंसा परमो धर्म इति येऽपि नरा विदुः ।
संग्रामेषु न युध्यन्ते भृत्याश्चैवानुरूपतः ।

नरकं यान्ति ते घोरं भर्तृपिण्डापहारिणः ॥ ३५
यस्तु प्राणान्परित्यज्य प्रविशेदुद्यतायुधः ।
संग्राममग्निप्रतिमं पतङ्ग इव निर्भयः ।
स्वर्गमाविशते मर्त्य ज्ञात्वा योधस्य निश्चयम् ॥३६
आविष्टश्चैव सत्त्वेन मद्भूणो जायते नरः ।
प्रहारैर्नन्दयेद्देवि सत्त्वेनाधिष्ठितो हि सः ।
प्रहारव्यथितश्चैव न वैक्लव्यमुपैति सः ॥ ३७
यस्तु स्वं नायकं रक्षेदतिघोरे रणाङ्कणे ।
तापयन्नरिसैन्यानि सिंहो मृगगणानिव ।
आदित्य इव मध्याह्ने दुर्निरीक्ष्यो रणाजिरे ॥ ३८
निर्दयो यस्तु संग्रामे प्रहरन्नुद्यतायुधः ।
यजते स तु पूतात्मा संग्रामेण महाक्रतुम् ॥ ३९
चर्म कृष्णाजिनं तस्य दन्तकाष्ठं धनुः स्मृतम् ।
रथो वेदिर्ध्वजो यूपः कुशाश्च रथरश्मयः ॥ ४०
मानो दर्पस्त्वहंकारस्त्रयस्त्रेताग्नयः स्मृताः
प्रमोदश्च स्रुवस्तस्य उपाध्यायो हि सारथिः ॥ ४१
स्रुग्भाण्डं चापि यत्किंचिद्यज्ञोपकरणानि च ।
आयुधान्यस्य तत्सर्वं समिधः सायकाः स्मृताः ४२
स्वेदस्रवश्च गात्रेभ्यः क्षौद्रं तस्य यशस्विनः ।
पुरोडाशा नृशीर्षाणि रुधिरं चाहुतिः स्मृता ।
तूणाश्चैव चरुर्ज्ञेया वसोर्धारा वसाः स्मृताः ॥ ४३
क्रव्यादा भूतसङ्घाश्च तस्मिन्यज्ञे द्विजातयः ।
तेषां भक्षान्नपानानि हता नृगजवाजिनः ।
भुञ्जते ते यथाकामं यथा यज्ञे किमिच्छति ॥ ४४
निहतानां तु योधानां वस्त्राभरणभूषणम् ।
हिरण्यं च सुवर्णं च यद्वै यज्ञस्य दक्षिणा ॥ ४५
यस्तत्र हन्यते देवि गजस्कन्धगतो नरः ।
ब्रह्मलोकमवाप्नोति रणेष्वभिमुखो हतः ॥ ४६
रथमध्यगतो वाऽपि हयपृष्ठगतोपि वा ।
हन्यते यस्तु संग्रामे शक्रलोके महीयते ॥ ४७
स्वर्गे हताः प्रपूज्यन्ते हन्ता त्वत्रैव पूज्यते ।
द्वावेतौ सुखमेधेते हन्ता यश्चैव हन्यते ॥ ४८
तस्मात्संग्राममासाद्य प्रहर्तव्यमभीतवत् ॥ ४९
निर्भयो यस्तु संग्रामे प्रहरेदुद्यतायुधः ।
यथा नदीसहस्राणि प्रविष्टानि महोदधिम् ॥ ५०
तथा सर्वे न संदेहो धर्मा धर्मभृतांवरम् ।
प्रविष्टा राजधर्मेण आचारविनयस्तथा ॥ ५१
वेदोक्ताश्चैव ये धर्माः पाषण्डेषु च कीर्तिताः ।
तथैव मानुषा धर्मा धर्माश्चान्ये तथेतरे ॥ ५२
देशजातिकुलानां च ग्रामधर्मास्तथैव च ।
ये धर्माः पार्वतीयेषु ये धर्माः पत्तनादिषु ।
तेषां पूर्वप्रवृत्तानां कर्तव्यं परिरक्षणम् ॥ ५३
धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः ।
तस्माद्धर्मो न हन्तव्यः पार्थिवेन विशेषतः ॥ ५४
प्रजाः पालयते यत्र धर्मेण वसुधाधिपः ।
षट्कर्मनिरता विप्राः पूज्यन्ते पितृदेवताः ॥ ५५
नैव तस्मिन्ननावृष्टिर्न रोगा नाप्युपद्रवाः
धर्मशीलाः प्रजाः सर्वाः स्वधर्मनिरते नृपे ॥ ५६
एष्टव्यः सततं देवि युक्ताचारो नराधिपः ।
छिद्रज्ञश्चैव शत्रूणामप्रमत्तः प्रतापवान् ॥ ५७
शूद्राः पृथिव्यां बहवो राज्ञां बहुविनाशकाः ।
तस्मात्प्रमादं सुश्रोणि न कुर्यात्पण्डितो नृपः ५८
तेषु मित्रेषु त्यक्तेषु तथा मर्त्येषु हस्तिषु ।
विस्रम्भो नोपगन्तव्यः स्नानपानेषु नित्यशः ॥५९
राज्ञो वल्लभतामेति कुलं भावयते स्वकम् ।
यस्तु राष्ट्रहितार्थाय गोब्राह्मणकृते तथा ।
बन्दीग्रहाय मित्रार्थे प्राणांस्त्यजति दुस्त्यजान् ६०
सर्वकामदुघां धेनुं धरणीं लोकधारिणीम् ।
समुद्रान्तां वरारोहे सशैलवनकाननाम् ॥ ६१
दद्याद्देवि द्विजातिभ्यो वसुपूर्णां वसुंधराम् ।
न तत्समं वरारोहे प्राणत्यागी विशिष्यते ॥ ६२
सहस्रमपि यज्ञानां यजते च यंतद्विमान् ।
यज्ञैस्तस्य किमाश्चर्यं प्राणत्यागः सुदुष्करः ॥ ६३
तस्मात्सर्वेषु यज्ञेषु प्राणयज्ञो विशिष्यते ।
एवं संग्रामयज्ञास्ते यथार्थं समुदाहृताः ॥ ६४

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि चतुर्दशाधिकद्विशततमोऽध्यायः ॥ २१४ ॥

## पञ्चदशाधिकद्विशततमोऽध्यायः ॥ २१५ ॥

ईश्वरेण पार्वतींप्रति राज्ञां मृगयायां मृगहिंसाया धर्मत्वप्रतिपादनम् ॥ १ ॥ तथा सदृष्टान्तप्रदर्शनं ब्राह्मणमहिमप्रशंसनपूर्वकं तेषामदण्ड्यत्वकथनम् ॥ २ ॥ तथा सामान्येन राजधर्मकथनम् ॥ ३ ॥

महेश्वर उवाच ।
मृगयात्रां तु वक्ष्यामि शृणु तां धर्मचारिणि ।
मृगान्हत्वा महीपालो यथा पापैर्न लिप्यते ॥ १
निर्मानुषामिमां सर्वे मृगा इच्छन्ति मेदिनीम् ।
भक्षयन्ति च सस्यानि शासितव्या नृपेण ते ॥ २
दुष्टानां शासनं धर्मः शिष्टानां परिपालनम् ।
कर्तव्यं भूमिपालेन नित्यं कार्येषु चार्जवम् ।
स्वर्गं मृगाश्च गच्छन्ति स्वयं नृपतिना हताः ॥ ३
यथा गावो ह्यगोपालास्तथा राष्ट्रमनायकम् ।
तस्माद्दंशास्तु देवानां गन्धर्वोरगरक्षसाम् ।
राज्ये नियुक्ता राष्ट्रेषु प्रजापालनकारणात् ॥ ४
अशिष्टशासने चैव शिष्टानां परिपालने ।
तेषां चर्यां प्रवक्ष्यामि श्रूयतामनुपूर्वशः ॥ ५
यथा प्रचरतां तेषां पार्थिवानां यशस्विनाम् ।
राष्ट्रं धर्मो धनं चैव यशः कीर्तिश्च वर्धते ॥ ६
नृपाणां पूर्वमेवायं धर्मो धर्मभृतांवर ।
सभाप्रपातटाकानि देवतायतनानि च ।
ब्राह्मणावसथाश्चैव कर्तव्या नृपसत्तमैः ॥ ७
ब्राह्मणा नावमन्तव्या भस्मच्छन्ना इवाग्नयः ।
कुलमुत्सादयेयुस्ते क्रोधाविष्टा द्विजातयः ॥
ध्मायमानो यथा ह्यग्निर्निर्दहेत्सर्वमिन्धनम् ।
तथा क्रोधाग्निना विप्रा दहेयुः पृथिवीमिमाम् ।
न हि विप्रेषु क्रुद्धेषु राज्यं भुञ्जन्ति भूमिपाः ॥ ९
परिभूय द्विजान्मोहाद्वातापिनहुषादयः ।
सबन्धुमित्रा नष्टास्ते दग्धा ब्राह्मणमन्युभिः ।
शरीरं चापि शक्रस्य कृतं भगनिरन्तरम् ॥ १०
ततो देवगणाः सर्वे इन्द्रस्यार्थे महामुनिम् ।
प्रसादं कारयामासुः प्रणामस्तुतिवन्दनैः ॥ ११
तेन प्रीतेन सुश्रोणि गौतमेन महात्मना ।
तच्छरीरं तु शक्रस्य सहस्रभगचिह्नितम्
कृतं नेत्रसहस्रेण क्षणेनैव निरन्तरम् ॥ १२
छित्त्वा मेषस्य वृषणौ गौतमेनाभिमन्त्रितौ ।
इन्द्रस्य वृषणौ भूत्वा क्षिप्रं वै श्लेषमागतौ ॥ १३
एवं विप्रेषु क्रुद्धेषु देवराजः शतक्रतुः ।
अशक्तः शासितुं राज्यं किंपुनर्मानुषा भुवि ॥ १४
क्रोधाविष्टो दहेद्विप्रः शुष्केन्धनमिवानलः ।
भस्मीकृत्य जगत्सर्वं सृजेदन्यज्जगत्पुनः ॥ १५
अदेवानपि देवान्स कुर्याद्देवानदेवताः ।
तस्मान्नोत्पादयेन्मन्युं मन्युप्रहरणा द्विजाः ॥ १६
महत्स्वप्यपराधेषु शासनं नार्हति द्विजः ।
न च शस्त्रनिपातानि न च प्राणैर्वियोजनम् ।
दृश्यते त्रिषु लोकेषु ब्राह्मणानामनिन्दिते ॥ १७
क्रोधाश्च विपुला घोराः प्रसादाश्चाप्यनुत्तमाः
तस्मान्नोत्पादयेत्क्रोधं नित्यं पूज्या द्विजातयः १८
दृश्यते न स लोकेऽस्मिन्भूते वाऽथ भविष्यति ।
क्रुद्धेषु यो वै विप्रेषु राज्यं भुङ्क्ते नराधिपः ॥ १९
न चैवापहसेद्विप्रान्न चैवोपालभेच्च तान् ।
कालमासाद्य कुप्येच्च काले कुर्यादनुग्रहम् ॥ २०
संप्रहासश्च भृत्येषु न कर्तव्यो नराधिपैः ।
लघुत्वं चैव प्राप्नोति आज्ञा चास्य निवर्तते ॥ २१
भृत्यानां संप्रहासेन पार्थिवः परिभूयते ।
अयाच्यानि च याचन्ति अवक्तव्यं ब्रुवन्ति च ॥
पूर्वमप्यर्पितैर्लोभैः परितोषं न यान्ति ते
तस्माद्भृत्येषु नृपतिः संप्रहासं विवर्जयेत् ॥ २३
न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् ।
सगोत्रेषु विशेषेण सर्वोपायैर्न विश्वसेत् ॥ २४
विश्वासाद्भयमुत्पन्नं हन्याद्वृक्षमिवाशनिः ।
प्रमादाद्धन्यते राजा लोभेन च वशीकृतः ।
तस्मात्प्रमादं लोभं च न च कुर्यान्न विश्वसेत् २५
भयार्तानां भयत्राता दीनानुग्रहकारणात् ।
कार्याकार्यविशेषज्ञो नित्यं राष्ट्रहिते रतः ॥ २६

पूर्वमप्युचितैर्लोभैरिति ठ. पाठः ॥ २३

सत्यसन्धः स्थितो राज्ये प्रजापालनतत्परः ।
अलुब्धो न्यायवादी च षड्भागमुपजीवति ॥ २७
कार्याकार्यविशेषज्ञः सर्वं धर्मेण पश्यति ।
स्वराष्ट्रेषु दया कुर्यादकार्ये न प्रवर्तनं ॥ २८
ये चैवैनं प्रशंसन्ति ये च निन्दन्ति मानवाः ।
शत्रुं च मित्रवत्पश्येदपराधविवर्जितम् ॥ २९
अपराधानुरूपेण दुष्टं दण्डेन शासयन्
धर्मः प्रवर्तते तत्र यत्र दण्डरुचिर्नृपः ।
न धर्मो विद्यते तत्र यत्र राजा क्षमान्वितः॥३०
अशिष्टशासनं धर्मः शिष्टानां परिपालनम् ।
वध्यांश्च घातयेद्यस्तु अवध्यान्परिरक्षति ॥ ३१
अवध्या ब्राह्मणा गावो दूताश्चैव पिता तथा ।
विद्यां ग्राहयते यश्च ये च पूर्वोपकारिणः ।
स्त्रियश्चैव न हन्तव्या यश्च सर्वातिथिर्नरः ॥ ३२
धरणीं गां हिरण्यं च सिद्धान्नं च तिलान्घृतम् ।
ददन्नित्यं द्विजातिभ्यो मुच्यते राजकिल्बिषात् ३३
एवं चरति यो नित्यं राजा राष्ट्रहिते रतः ।
तस्य राष्ट्रं धनं धर्मो यशः कीर्तिश्च वर्धते ।
न च पापैर्न चानर्थैर्युज्यते स नराधिपः ॥ ३४
षड्भागमुपभुञ्जानः प्रजा राजा न रक्षति ।
स्वचक्रपरचक्राभ्यां धर्मैर्वा विक्रमेण वा ॥ ३५
निरुद्योगो नृपो यश्च परराष्ट्रनिपातने ।
स्वराष्ट्रं निष्प्रतापस्य परचक्रेण हन्यते ॥ ३६
यत्पाप परचक्रस्य पराष्ट्राभिघातन
तत्पापं सकलं राजा हतराष्ट्रः प्रपद्यते ॥ ३७
मातुलं भागिनेयं वा मातरं श्वशुरं गुरुम् ।
पितरं वर्जयित्वैकं हन्याद्धातकमागतम् ॥ ३८
स्वस्य राष्ट्रस्य रक्षार्थं युध्यमानश्च यो हतः ।
संग्रामे परचक्रेण श्रूयतां तस्य या गतिः ॥ ३९
विमानेन वरागेहे अप्सरोगणसेवितः ।
शक्रलोकमितो याति संग्रामे निहतो नृपः ॥ ४०
यावन्तो रोमकूपाः स्युस्तस्य गात्रेषु सुन्दरि ।
तावद्वर्षसहस्राणि शक्रलोके महीयते ॥ ४१
यदि वै मानुषे लोके कदाचिदुपपद्यते ।
राजा वा राजमात्रो वा भूयो भवति वीर्यवान् ४२
तस्माद्यत्नेन कर्तव्यं स्वराष्ट्रपरिपालनम् ।
व्यवहाराश्च चारश्च सततं सत्यसन्धता ॥ ४३
अप्रमादः प्रमोदश्च व्यवसायेऽप्यचण्डता ।
भरणं चैव भृत्यानां वाहनानां च पोषणम् ॥ ४४
योधानां चैव सत्कारः कृते कर्मण्यमोघता ।
श्रेय एव नरेन्द्राणामिह चैव परत्र च ॥ ४५

*॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि पञ्चदशाधिकद्विशततमोऽध्यायः ॥ २१५ ॥

## षोडशाधिकद्विशततमोऽध्यायः ॥ २१६ ॥

**महेश्वरेण पार्वतींप्रति त्रिवर्गनिरूपणम् ॥ १ ॥**

महेश्वर उवाच ।
पशवः पशुबन्धेषु ये हन्यन्तेऽध्वरेषु च ।
यूपे निबध्य मन्त्रैश्च यथान्यायं यथाविधि ।
मन्त्राहुतिविपूतास्ते स्वर्गं यान्ति यशस्विनि ॥ १
तर्पिता यज्ञभागेषु तेषां मांसैर्वरानने ।
अग्नयस्त्रिदशाश्चैव लोकपाला महेश्वराः ॥
तेषु तुष्टेषु जायेत यस्य यज्ञस्य यत्फलम् ।
तेन संयुज्यते देवि यजमानो न संशयः ॥ २
सपत्नीकः सपुत्रश्च पित्रा च भ्रातृभिः सह ।
ये तत्र दीक्षिता देवि सर्वे स्वर्गं प्रयान्ति ते ॥ ४
एतत्ते सर्वमाख्यातं किं भूयः श्रोतुमिच्छसि ॥ ५
उमोवाच ।
भगवन्सर्वभूतेश शूलपाणे महाद्युते ।
श्रोतुमिच्छाम्यहं वृत्तं सर्वेषां गृहमेधिनाम् ॥ ६

नाधर्मो विद्यते तत्रेति थ. पाठः ॥ ३० ॥ यो घातयेत् तस्याशिष्टशासनं धर्म इत्यन्वयः ॥ ३१ ॥

*पञ्चदशाधिकद्विशततमोऽध्यायः ॥ २१५ ॥

कीदृशं चरितं तेषां त्रिवर्गमहितं प्रभो ।
प्रत्यायतिः कथं तेषां जीवनार्थमुदाहृतम् ॥ ७
वर्तमानाः कथं सर्वे प्राप्नुवन्त्युत्तमां गतिम् ।
एतत्सर्वं समासेन वक्तुमर्हसि मानद ॥ ८
महेश्वर उवाच ।
न्यायतस्त्वं महाभागे श्रोतुकामाऽसि भामिनि ।
प्रायशो लोकसद्वृत्तमिष्यते गृहवासिनाम् ॥ ९
तेषां संरक्षणार्थाय राजानः संस्कृता भुवि ।
सर्वेषामथ मर्त्यानां वृत्तिं सामान्यतः शृणु ॥ १०
विद्या वार्ता च सेवा च कारुत्वं नाट्यता तथा ।
इत्येते जीवनार्थाय मर्त्यानां विहिताः प्रिये ॥११
अपि जन्मफलं तावन्मानुषाणां विशेषतः ।
विहितं तत्स्ववृत्तेन तन्मे शृणु समाहिता ॥ १२
कर्मक्षेत्रं हि मानुष्यं सुखदुःखयुताः परे ।
सर्वेषां प्राणिनां तस्मान्मानुष्ये वृत्तिरिष्यते॥ १३
विद्यायोगस्तु सर्वेषां पूर्वमेव विधीयते ।
कार्याकार्यं विजानन्ति विद्यया देवि नान्यथा॥१४
विद्यया स्फीयते ज्ञानं ज्ञानात्तत्त्वनिदर्शनम् ।
दृष्टतत्त्वो विनीतात्मा सर्वार्थस्य च भाजनम्॥१५
शक्यं विद्याविनीतेन लोके संजीवनं शुभम्॥१६
आत्मानं विद्यया तस्मात्पूर्वं कृत्वा तु भाजनम् ।
वश्येन्द्रियो जितक्रोधो भूतात्मानं तु भावयेत् ।
भावयित्वा तदाऽऽत्मानं पूजनीयः सतामपि॥१७
कुलानुवृत्तं वृत्तं वा पूर्वमात्मा समाश्रयेत् ।
इत्येतत्कुलवासाय दानकर्म यथा पुरा ॥ १८
यदि चेद्विद्यया चैव वृत्तिं काङ्क्षेदथात्मनः ।
राजविद्यानुवादेऽपि लोकविद्यामथापि वा ।
तीर्थतश्चापि गृह्णीयाच्छुश्रूषादिगुणैर्युतः ॥ १९
ग्रन्थतश्चार्थतश्चैव दृढं कुर्यात्प्रयत्नतः ।
एवं विद्याफलं देवि प्राप्नुयान्नान्यथा नरः ।
न्यायाद्विद्याफलानीच्छेदधर्मं तत्र वर्जयेत् ॥ २०
यदिच्छेद्वार्तया वृत्तिं काङ्क्षेत विधिपूर्वकम् ।
क्षेत्रे जलोपपन्ने च तद्योग्यां कृषिमाचरेत् ॥ २१
वाणिज्यं वा यथाकालं कुर्यात्तद्देशयोगतः ।
मूल्यमर्थं प्रयासं च विचार्यैव व्ययोदयौ ॥ २२
पशुसंजीवनं चैव दश गाः पोषयेद्ध्रुवम् ।
बहुप्रकारा बहवः पशवस्तस्य साधकाः ॥ २३
यः कश्चित्सेवया वृत्तिं काङ्क्षेत मतिमान्नरः ।
यतात्मा श्रवणीयानां भवेद्वै संप्रयोजकः ॥ २४
बुद्ध्या वा कर्मयोगाद्वा बोधनाद्वा समाश्रयेत् ।
मार्गतस्तु समाश्रित्य तदा तत्संप्रयोजयेत् ॥ २५
यथायथा स तुष्येत तथा संतोषयेत्तु तम् ।
अनुजीविगुणोपेतः कुर्यादात्मार्थमाश्रितम् ॥ २६
विप्रियं नाचरेत्तस्य एषा सेवा समासतः ।
विप्रयोगात्पुरा तेन गतिमन्यां न लक्षयेत् ॥ २७
कारुकर्म च नाट्यं च प्रायशो नीचयोनिषु ।
तयोरपि यथायोगं न्यायतः कर्मवेतनम् ॥ २८
आजीवेभ्योऽपि सर्वेभ्यः स्वार्जवाद्वेतनं हरेत् ।
अनार्जवादाहरतस्तत्तु पापाय कल्पते ॥ २९
सर्वेषां पूर्वमारम्भांश्चिन्तयेन्नयपूर्वकम् ।
आत्मशक्तिमुपायांश्च देशकालौ च युक्तितः ।
कारणानि प्रयासं च प्रक्षेपं च फलोदयम् ॥ ३०
एवमादीनि संचिन्त्य दृष्ट्वा दैवानुकूलताम् ।
अतः परं समारम्भेद्यत्रात्महितमाहितम् ॥ ३१
वृत्तिमेव समासाद्य तां सदा परिपालयेत् ।
दैवमानुषविघ्नेभ्यो न पुनर्मन्यते यथा ॥ ३२
पालयन्वर्धयन्भुञ्जंस्तां प्राप्य न विनाशयेत् ।
क्षीयते गिरिसंकाशमश्नतो ह्यनपेक्षया ॥ ३३
आजीवेभ्यो धनं प्राप्य चतुर्धा विभजेद्बुधः ।
धर्मायार्थाय कामाय आपत्प्रशमनाय च ॥ ३४
चतुर्ष्वपि विभागेषु विधानं शृणु शोभने ॥ ३५
यज्ञार्थं चान्नदानार्थं दीनानुग्रहकारणात् ।
देवब्राह्मणपूजार्थं पितृपूजार्थमेव च ॥ ३६
मूलार्थं सन्निवासार्थं क्रियानित्यैश्च धार्मिकैः ।
एवमादिषु चान्येषु धर्मार्थं संत्यजेद्धनम् ॥ ३७
धर्मकार्ये धनं दद्यादनवेक्ष्य फलोदयम् ।
ऐश्वर्यस्थानलाभार्थं राजवाल्लभ्यकारणात् ॥ ३८
वार्तायां च समारम्भेऽमात्यमित्रपरिग्रहे ।

आवाहे च विवाहे च पुत्राणां वृत्तिकारणात् ३९
अर्थोदयसमावाप्तावनर्थस्य विघातने ।
एवमादिषु चान्येषु अर्थार्थं विसृजेद्धनम् ॥ ४०
अनुबन्धं हेतुयुक्तं दृष्ट्वा वित्तं परित्यजेत् ।
अनर्थं बाधते ह्यर्थो अर्थं चैव फलान्युत ॥ ४१
नाधनाः प्राप्नुवन्त्यर्थं नरा यत्नशतैरपि ।
तस्माद्धनं रक्षितव्यं दातव्यं च विधानतः ॥ ४२
शरीरपोषणार्थाय आहारस्य विशोषणे ।
नटगान्धर्वसंयोगे कामयात्राविहारयोः ॥ ४३
मनःप्रियाणां संयोगे प्रीतिदाने तथैव च ।
एवमादिषु चान्येषु कामार्थं विसृजेद्धनम् ॥ ४४
विचार्य गुणदोषांस्तु त्रयाणां तत्र संत्यजेत् ।
चतुर्थं सन्निदध्याच्च आपदर्थं शुचिस्मिते ॥ ४५
राज्यभ्रंशविनाशार्थं दुर्भिक्षार्थं च शोभने ।
महाव्याधिविमोक्षार्थं वार्धकस्यैव कारणात् ॥४६
शत्रूणां प्रतिकाराय साहसैश्चाप्यमर्षणात् ।
प्रस्थाने चान्यदेशार्थमापदां विप्रमोक्षणे ।
एवमादि समुद्दिश्य सन्निदध्यात्स्वकं धनम् ॥ ४७
सुखमर्थवतां लोके कृच्छ्राणां विप्रमोक्षणम् ।
यस्य नास्ति धनं किंचित्तस्य लोकद्वयं न च ॥४८
अशनादिन्द्रियाणीव सर्वमर्थात्प्रवर्तते ।
निधानमात्रं यस्तेषामन्यथा विलयं व्रजेत् ।
एवं देवि मनुष्याणां लोकानां जीवनं प्रति ॥४९
एवं लोकस्य वृत्तस्य लोकवृत्तं पुनः शृणु ।
धन्यं यशस्यमायुष्यं स्वर्ग्यं च परमं यशः ॥ ५०
त्रिवर्गो हि वशे युक्तः सर्वेषां संविधीयते ।
तथा संवर्तमानास्तु लोकयोर्हितमाप्नुयुः ॥ ५१
काल्योत्थानं च शौचं च देवब्राह्मणभक्तितः ।
गुरूणामेव शुश्रूषा ब्राह्मणेष्वभिवादनम् ॥ ५२
प्रत्युत्थानं च वृद्धानां देवस्थानप्रणामनम् ।
आभिमुख्यं पुरस्कृत्य अतिथीनां च पूजनम् ५३
वृद्धोपदेशकरणं श्रवणं हितपथ्ययोः ।
पोषणं भृत्यवर्गस्य सान्त्वदानपरिग्रहे ॥ ५४
न्यायतः कर्मकरणमन्यायाहितवर्जनम् ।
सम्यग्वृत्तं स्वदारेषु दोषाणां प्रतिषेधनम् ॥ ५५
पुत्राणां विनयं कुर्यात्तत्तत्कार्यनियोजनम् ।
वर्जनं चाशुभार्थानां शुभानां जोषणं तथा ॥५६
कुलोचितानां धर्माणां यथावत्परिपालनम् ।
कुलसंधारणं चैव पौरुषेणैव सर्वशः ।
एवमादि शुभं सर्वं तस्य वृत्तमिति स्थितम् ॥५७
वृद्धसेवी भवेन्नित्यं हितार्थं ज्ञानकाङ्क्षया ।
परार्थं नाहरेद्द्रव्यमनामन्त्र्य तु सर्वथा ।
न याचेत परान्धीरः स्वबाहुबलमाश्रयेत् ॥ ५८
स्वशरीरं सदा रक्षेदाहाराचारयोरपि ।
हितं पथ्यं सदाहारं जीर्णं भुञ्जीत मात्रया ॥५९
देवतातिथिसत्कारं कृत्वा सर्वं यथाविधि
शेषं भुञ्जेच्छुचिर्भूत्वा न च भाषेत विप्रियम् ६०
प्रतिश्रयं च पानीयं बलिं भिक्षां च सर्वतः ।
गृहस्थवासी सततं दद्याद्दाश्चैव पोषयेत् ॥ ६१
बहिर्निष्क्रमणं चैव कुर्यात्कारणतोपि वा ।
मध्याह्ने वाऽर्धरात्रे वा गमनाय न रोचयेत् ॥ ६२
विषयान्नावगाहेत स्वशक्त्या तु समाचरेत् ।
यथाऽऽयव्ययता लोके गृहस्थानां प्रपूजितम् ६३
अयशस्करमर्थघ्नं कर्म यत्परपीडनम् ।
भयाद्वा यदि लोभाद्वा न कुर्वीत कदाचन ॥ ६४
बुद्धिपूर्वं समालोक्य दूरतो गुणदोषतः ।
आरभेत तदा कर्म शुभं वा यदि वेतरत् ॥ ६५
आत्मसाक्षी भवेन्नित्यमात्मनस्तु शुभाशुभे ।
मनसा कर्मणा वाचा न च काङ्क्षेत पातकम् ॥६६

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि षोडशाधिकद्विशततमोऽध्यायः ॥ २१६ ॥

## सप्तदशाधिकद्विशततमोऽध्यायः ॥ २१७ ॥

पार्वत्या ब्राह्मण्यादिकं किं स्वाभाविकं उत कर्माधीनमिति प्रश्ने ईश्वरेण तस्य कर्माधीनत्वप्रतिपादनम् ॥ १ ॥ तथा प्राणिनां भोगाभोगादेः स्वस्वकर्मायत्तत्वप्रतिपादनम् ॥ २ ॥

उमोवाच ।
भगवन्भगनेत्रघ्न कालसूदन शंकर ।
इमे वर्णाश्च चत्वारो विहिताः स्वस्वभावतः ।
उताहो क्रियया वर्णाः संभवन्ति महेश्वर ॥ १
एवं मे संशयप्रश्नस्तं मे छेत्तुं त्वमर्हसि ॥ २
महेश्वर उवाच ।
स्वभावादेव विद्यन्ते चत्वारो ब्राह्मणादयः ।
एकजात्या सुदुष्प्रापमन्यवर्णत्वमागतम् ॥ ३
तच्च कर्मविशेषेण पुनर्जन्मनि जायते ।
तस्मात्तेषां प्रवक्ष्यामि तत्सर्वं कर्मपाकजम् ॥ ४
ब्राह्मणस्तु नरो भूत्वा स्वजातिमनुपालयन् ।
दृढं ब्राह्मणकर्माणि वेदोक्तानि समाचरेत् ॥ ५
सत्यार्जवपरो भूत्वा दानयज्ञपरस्तथा ।
सत्यां जात्यां समुदितो जातिधर्मान्न हापयेत् ॥ ६
एवं संवर्तमानस्तु कालधर्मं गतः पुनः ।
स्वर्गलोके हि जायेत स्वर्गभोगाय भामिनि ॥ ७
तत्क्षये ब्राह्मणो भूत्वा तथैव नृषु जायते ।
एवं स्वकर्मणा मर्त्यः स्वजातिं लभते पुनः ॥ ८
अपरस्तु तथा कश्चिद्ब्रह्मयोनिसमुद्भवः ।
अवमत्यैव तां जातिमज्ञानतमसा वृतः ॥ ९
अन्यथा वर्तमानस्तु जातिकर्माणि वर्जयेत् ।
शूद्रवद्विचरेल्लोके शूद्रकर्माभिलाषवान् ।
शूद्रैः सह चरन्नित्यं शौचमङ्गलवर्जितः ॥ १०
स चापि कालधर्मस्थो यमलोके सुदण्डितः ।
यदि जायेत मर्त्येषु शूद्र एवाभिजायते ॥ ११
शूद्र एव भवेद्देवि ब्राह्मणोऽपि स्वकर्मणा ॥ १२
तथैव शूद्रस्तत्परः शूद्रकर्माणि वर्जयेत् ।
सत्यार्जवपरो भूत्वा दानधर्मपरस्तथा ।
मन्त्रब्राह्मणसत्कर्ता मनसा ब्राह्मणप्रियः ॥ १३
एवं युक्तसमाचारः शूद्रोपि मरणं गतः ।
स्वर्गलोके हि जायेत तत्क्षये नृषु जायते ।
ब्राह्मणानां कुले मुख्ये वेदस्वाध्यायसंयुते ॥ १४
एवमेव सदा लोके शूद्रो ब्राह्मण्यमाप्नुयात् ॥ १५
एवं क्षत्रियवैश्याश्च जातिधर्मेण संयुताः ।
स्वकर्मणैव जायन्ते विशिष्टेष्वधमेषु च ॥ १६
एवं जातिविपर्यासः प्रेत्यभावे भवेन्नृणाम् ।
अन्यथा तु न शक्यं तल्लोकसंस्थितिकारणात् ॥ १७
तस्माज्जातिं विशिष्टां तु कथंचित्प्राप्य पण्डितः ।
सर्वथा तां तथा रक्षेन्न पुनर्भ्रश्यते यथा ।
इति ते कथितं देवि भूयः श्रोतुं किमिच्छसि ॥ १८
उमोवाच ।
जन्मप्रभृति कः शुद्धो लभेज्जन्मफलं नरः ।
शोभनाशोभनं सर्वमधिकारवशात्स्वकम् ॥ १९
महेश्वर उवाच ।
कर्म कुर्वन्न लिप्येत आर्जवेन समाचरेत् ।
आत्मैव तच्छुभं कुर्यादशुभे योजयेत्परान् ॥ २०
शठेषु शठवत्कुर्योदार्यष्वार्यवदाचरेत् ।
आपत्सु नावसीदेच्च घोरान्संग्रामयेत्परात् ।
साम्नैव सर्वकार्याणि कर्तुं पूर्वं समारभेत् ॥ २१
अनर्थाधर्मशोकानां यथा न प्राप्नुयात्स्वयम् ।
प्रीयते तत्तथा कर्तुमेतद्वृत्तं समासतः ॥ २२
एवं वृत्तं समासाद्य गृहमाश्रित्य मानवाः ।
निराहारा निरुद्वेगाः प्राप्नुवन्त्युत्तमां गतिम् ॥ २३
एतज्जन्मफलं नित्यं सर्वेषां गृहवासिनाम् ।
एवं गृहस्थितैर्नित्यं वर्तितव्यमिति स्थितिः ।
एतत्सर्वं मया प्रोक्तं किं भूयः श्रोतुमिच्छसि ॥ २४
उमोवाच ।
सुरासुरपते देव वरद प्रीतिवर्धन ।
मानुषेष्वेव ये के चिदाढ्याः क्लेशविवर्जिताः ।
भुञ्जाना विविधान्भोगान्दृश्यन्ते निरुपद्रवाः २५
अपरे क्लेशसंयुक्ता दरिद्रा भोगवर्जिताः ॥ २६
किमर्थं मानुषे लोके न समत्वेन कल्पिताः ।

एतच्छ्रोतुं महादेव कौतूहलमतीव मे ॥ २७
महेश्वर उवाच ।
न्यायतस्त्वं महाभागे श्रोतुकामासि भामिनि ।
शृणु तत्सर्वमखिलं मानुषाणां हितं वचः ॥ २८
आदिसर्गे पुरा ब्रह्मा ममत्वेनासृजत्प्रजाः ।
नित्यं न भवतो ह्यस्य रागद्वेषौ प्रजापतेः ।
तदा तस्मात्सुराः सर्वे बभूवुः ममतो नराः ॥ २९
एवं संवर्तमाने तु युगे कालविपर्ययात् ।
केचित्प्रपेदिरे तत्र विषमं बुद्धिमोहिताः ॥ ३०
तेषां हानिं ततो दृष्ट्वा तुल्यानामेव भामिनि ।
ब्राह्मणास्ते समाजग्मुस्तत्तत्कारणवेदकाः ॥ ३१
कर्तुं नार्हसि देवेश पक्षपातं त्वमीदृशम् ।
पुत्रभावे समे देव किमर्थं नो भवेत्कलिः ॥ ३२
एवमेतैरुपालब्धो ब्रह्मा वचनमब्रवीत् ।
यूयं मा ब्रूत मे दोषं स्वकृतं स्मरथ प्रजाः ॥ ३३
युष्माभिरेव युष्माकं ग्रथितं हि शुभाशुभम् ।
यादृशं कुरुते कर्म तादृशं फलमश्नुते ।
स्वकृतस्य फलं भुङ्क्ते नान्यस्तद्भोक्तुमर्हति ॥ ३४
एवं संबोधितास्तेन कालकर्त्रा स्वयंभुवा ।
पुनर्निवृत्य कर्माणि शुभान्येव प्रपेदिरे ॥ ३५
एवं विज्ञाततत्त्वास्ते दानधर्मपरायणाः ।
शुभानि विधिवत्कृत्वा कालधर्मगताः पुनः ।
तानि दानफलान्येव भुञ्जते सुखभोगिनः ॥ ३६
स्वकृतं तु नरस्तस्मात्स्वयमेव प्रपद्यते ॥ ३७
अपरे धर्मकामेभ्यो निवृत्ताश्च शुभेक्षणे ।
कदर्या निरनुक्रोशाः प्रायेणात्मपरायणाः ॥ ३८
तादृशा मरणं प्राप्ताः पुनर्जन्मनि शोभने ।
दरिद्राः क्लेशभूयिष्ठा भवन्त्येव न संशयः ॥ ३९
उमोवाच ।
मानुषेष्वथ ये केचिद्धनधान्यसमन्विताः ।
भोगहीनाः प्रदृश्यन्ते सर्वभोगेषु सत्स्वपि ।
न भुञ्जते किमर्थं ते तन्मे शंसितुमर्हसि ॥ ४०
महेश्वर उवाच ।
परैः संचोदिता धर्मं कुर्वते न स्वकामतः ।
स्वयं श्रद्धां बहिष्कृत्य कुर्वन्ति च रुदन्ति च ४१
तादृशा मरणं प्राप्ताः पुनर्जन्मनि शोभने ।
फलानि तानि संप्राप्य भुञ्जते न कदाचन ।
रक्षन्तो वर्धयन्तश्च आसते निधिपालवत् ॥ ४२
उमोवाच ।
केचिद्धनवियुक्ताश्च भोगयुक्ता महेश्वर ।
मानुषाः संप्रदृश्यन्ते तन्मे शंसितुमर्हसि ॥ ४३
महेश्वर उवाच ।
आनृशंस्यपरा ये तु धर्मकामाश्च दुर्गताः ।
परोपकारं कुर्वन्ति दीनानुग्रहकारणात् ॥ ४४
प्रतिपद्युः परधनं नष्टं वाऽन्यैर्नरैर्हृतम् ।
नित्यं ये दातुमनसो नरा वित्तेष्वसत्स्वपि ॥ ४५
कालधर्मवशं प्राप्ताः पुनर्जन्मनि ते नराः ।
एते धनविहीनाश्च भोगयुक्ता भवन्त्युत ॥ ४६
धर्मदानोपदेशं वा कर्तव्यमिति निश्चयः ।
इति ते कथितं देवि किं भूयः श्रोतुमिच्छसि ॥ ४७

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि सप्तदशाधिकद्विशततमोऽध्यायः ॥ २१७ ॥

---

## अष्टादशाधिकद्विशततमोऽध्यायः ॥ २१८ ॥

महेश्वरेण पार्वतींप्रति प्राणिनां शुभाशुभकर्मानुसारेण शुभाशुभफलप्राप्तिकथनम् ॥ १ ॥

उमोवाच ।
भगवन्देवदेवेश त्र्यक्ष भो वृषभध्वज ।
मानुषास्त्रिविधा देव दृश्यन्ते सततं विभो ॥
आसीना एव भुञ्जन्ते स्थानैश्वर्यपरिग्रहैः ।
अपरे यत्नपूर्वं तु लभन्ते भोगसंग्रहम् ॥
अपरे यतमानाश्च न लभन्ते तु किंचन ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ ३
महेश्वर उवाच ।
न्यायतस्त्वं महाभागे श्रोतुकामाऽसि भामिनि ॥ ४
ये लोके मानुषा देवि दानधर्मपरायणाः ।

पात्राणि विधिवज्ज्ञात्वा दूरतोऽप्यनुमानतः ॥ ५
अभिगम्य स्वयं तत्र ग्राहयन्ति प्रसाद्य च ।
दानादि चेङ्गितैरेव तैरविज्ञातमेव वा ॥ ६
पुनर्जन्मनि ते देवि तादृशाः शोभना नराः ।
अयत्नतस्तु तान्येव फलानि प्राप्नुवन्त्युत ॥ ७
आसीना एव भुञ्जन्ते भोगान्सुकृतभोगिनः ॥८
अपरे ये च दानानि ददत्येव प्रयाचिताः ।
यदायदाऽर्थिने दत्त्वा पुनर्दानं च याचिताः ॥ ९
तावत्कालं ततो देवि पुनर्जन्मनि ते नराः ।
यत्नतः श्रमसंयुक्ताः पुनस्तान्प्राप्नुवन्ति च ॥ १०
याचिता अपि केचित्तु अदत्त्वैव कथंचन ।
अभ्यसूयापरा मर्त्या लोभोपहतचेतसः ॥ ११
ते पुनर्जन्मनि शुभे यतन्तो बहुधा नराः ।
न प्राप्नुवन्ति मनुजा मार्गन्तस्तेऽपि किंचन ॥१२
नानुप्तं रोहते सस्यं तद्वद्दानफलं विदुः ।
यद्यद्ददाति पुरुषस्तत्तत्प्राप्नोति केवलम् ॥ १३
इति ते कथितं देवि भूयः श्रोतुं किमिच्छसि १४
उमोवाच ।
भगवन्भगनेत्रघ्न केचिद्वार्धकसंयुताः ।
अभोगयोग्यकाले तु भोगांश्चैव धनानि च ॥ १५
लभन्ते स्थविरा भूता भोगैश्वर्यं यतस्ततः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ १६
महेश्वर उवाच ।
हन्त ते कथयिष्यामि शृणु तत्त्वं समाहिता ॥१७
धर्मकार्यं चिरं कालं विस्मृत्य धनसंयुताः ।
प्राणान्तकाले संप्राप्ते व्याधिभिश्च निपीडिताः १८
आरभन्ते पुनर्धर्मं दातुं दानानि वा नराः ।
ते पुनर्जन्मनि शुभे भूत्वा दुःखपरिप्लुताः ॥ १९
अतीतयौवने काले स्थविरत्वमुपागताः ।
लभन्ते पूर्वदत्तानां फलानि शुभलक्षणे ॥ २०
एतत्कर्मफलं देवि कालयोगाद्भवत्युत ॥ २१
उमोवाच ।
भोगयुक्ता महादेव केचिद्व्याधिपरिप्लुताः ।
असमर्थाश्च तान्भोक्तुं भवन्ति किमु कारणम् ॥२२

महेश्वर उवाच ।
व्याधियोगपरिक्लिष्टा ये निराशाः स्वजीविते ।
आरभन्ते तदा कर्तुं दानानि शुभलक्षणम् ॥ २३
ते पुनर्जन्मनि शुभे प्राप्य तानि फलान्युत ।
असमर्थाश्च तान्भोक्तुं व्याधितास्ते भवन्त्युत ॥२४
उमोवाच ।
भगवन्देवदेवेश मानुषेष्वेव केचन ।
रूपयुक्ताः प्रदृश्यन्ते शुभाङ्गाः प्रियदर्शनाः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ २५
महेश्वर उवाच ।
हन्त ते कथयिष्यामि शृणु तत्त्वं समाहिता ॥२६
ये पुरा मनुजा देवि लज्जायुक्ताः प्रियंवदाः ।
शक्ताः सुमधुरा नित्यं भूत्वा चैव स्वभावतः ॥२७
अमांसभोजिनश्चैव सदा प्राणिदयायुताः ।
प्रतिकर्मप्रदा वाऽपि वस्त्रदा धर्मकारणात् ।
भूमिशुद्धिकरा वाऽपि कारणादग्निपूजकाः ॥ २८
एवं युक्तसमाचाराः पुनर्जन्मनि ते नराः ।
रूपेण स्पृहणीयास्तु भवन्त्येव न संशयः ॥ २९
उमोवाच ।
विरूपाश्च प्रदृश्यन्ते मानुषेष्वेव केचन ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ ३०
महेश्वर उवाच ।
तदहं ते प्रवक्ष्यामि शृणु कल्याणि कारणम् ॥३१
रूपयोगात्पुरा मर्त्या दर्पाहंकारसंयुताः ।
विरूपहासकाश्चैव स्तुतिनिन्दादिभिर्भृशम् ॥ ३२
परोपतापनाश्चैव मांसादाश्च तथैव च ।
अभ्यसूयापराश्चैव अशुद्धाश्च तथा नराः ॥ ३३
एवं युक्तसमाचारा यमलोके सुदण्डिताः ।
कथंचित्प्राप्य मानुष्यं तत्र ते रूपवर्जिताः ।
विरूपाः संभवन्त्येव नास्ति तत्र विचारणा ॥ ३४
उमोवाच ।
भगवन्देवदेवेश केचित्सौभाग्यसंयुताः ।
रूपभोग्यविहीनाश्च दृश्यन्ते प्रमदाप्रियाः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ ३५

महेश्वर उवाच ।
ये पुरा मनुजा देवि सौम्यशीलाः प्रियंवदाः ।
स्वदारैरेव सतुष्टा दारेषु समवृत्तयः ३६
दाक्षिण्येनैव वर्तन्त प्रमदास्वाप्रियास्वपि ।
न तु प्रत्यादिशन्त्येव स्त्रीदोषान्गुणसंश्रितान् ३७
अन्नपानीयदाः काले नृणां स्वादुप्रदाश्च ये ।
स्वदारवर्तिनश्चैव धृतिमन्तो निरत्ययाः ॥ ३८
एवं युक्तसमाचाराः पुनर्जन्मनि शोभने ।
मानुषास्ते भवन्त्येव सततं सुभगा भृशम्
अर्थाद्धतेऽपि ते देवि भवन्ति प्रमदाप्रियाः ॥३९
उमोवाच ।
दुर्भगाः संप्रदृश्यन्ते आढ्या भोगयुता अपि
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ ४०
महेश्वर उवाच ।
तदहं ते प्रवक्ष्यामि शृणु सर्वं समाहिता ॥ ४१
ये पुरा मनुजा देवि स्वदारेष्वनपेक्षया
यथेष्टवृत्तयश्चैव निर्लज्जा वीतसंभ्रमाः ॥ ४२
परेषां विप्रियकरा वाङ्मनःकायकर्मभिः ।
निराश्रया निरानन्दाः स्त्रीणां हृदयकोपनाः॥४३
एवं युक्तसमाचाराः पुनर्जन्मनि ते नराः ।
दुर्भगास्तु भवन्त्येव स्त्रीणां हृदयविप्रियाः ।
नास्ति तेषां रतिसुखं स्वदारेष्वपि किंचन ॥ ४४

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि अष्टादशाधिकद्विशततमोऽध्यायः ॥ २१८ ॥

## एकोनविंशत्यधिकद्विशततमोऽध्यायः ॥ २१९ ॥

महेश्वरेण पार्वतींप्रति शुभाशुभकर्मणोः सुखदुःखहेतुत्वकथनम् ॥ १ ॥

उमोवाच ।
भगवन्देवदेवेश मानुषेष्वेव केचन ।
ज्ञानविज्ञानसंपन्ना बुद्धिमन्तो विचक्षणाः ॥ १
दुर्गतास्तु प्रदृश्यन्ते यतमाना यथाविधि ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ २
महेश्वर उवाच ।
तदहं ते प्रवक्ष्यामि शृणु कल्याणि कारणम् ॥ ३
ये पुरा मनुजा देवि श्रुतवन्तोपि केवलम् ।
निराश्रया निरन्नाद्या भृशमात्मपरायणाः ॥ ४
ते पुनर्जन्मनि शुभे ज्ञानबुद्धियुता अपि ।
निष्किञ्चना भवन्त्येव अनुप्तं हि न रोहति ॥ ५
उमोवाच ।
मूर्खा लोके प्रदृश्यन्ते वृथा मूढा विचेतसः ।
ज्ञानविज्ञानरहिताः समृद्धाश्च समन्ततः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ ६
महेश्वर उवाच ।
ये पुरा मनुजा देवि बालिशा अपि सर्वतः ।
समाचरन्ति दानानि दीनानुग्रहकारणात् ॥ ७
अबुद्धिपूर्वं वा दानं ददत्येव यतस्ततः ।
ते पुनर्जन्मनि शुभे प्राप्नुवन्त्येव तत्तथा ॥ ८
पण्डितोऽपण्डितो वाऽपि भुङ्क्ते दानफलं नरः ।
बुद्ध्याऽनपेक्षितं दानं सर्वथा तत्फलत्युत ॥ ९
उमोवाच ।
भगवन्देवदेवेश मानुषेष्वेव केचन ।
मेधाविनः श्रुतधरा भवन्ति विशदाक्षराः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ १०
महेश्वर उवाच ।
ये पुरा मनुजा देवि गुरुशुश्रूषका भृशम् ।
ज्ञानार्थं ते तु संगृह्य तीर्थतो विधिपूर्वकम्॥ ११
विधिनैव परांश्चैव ग्राहयन्ति च नान्यथा ।
अश्लाघमाना ज्ञानेन प्रशान्ता यतवाचकाः ।
विद्यास्थानानि ये लोके स्थापयन्ति च यत्नतः १२
तादृशा मरणं प्राप्ताः पुनर्जन्मनि शोभने ।
मेधाविनः श्रुतधरा भवन्ति विशदाक्षराः ॥ १३
उमोवाच ।
अपरे मानुषा देव यतन्तोपि यतस्ततः ।
बहिष्कृताः प्रदृश्यन्ते श्रुतविज्ञानबुद्धितः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ १४

महेश्वर उवाच ।
ये पुरा मनुजा देवि ज्ञानदर्पसमन्विताः ।
श्लाघमानाश्च तत्प्राप्य ज्ञानाहंकारमोहिताः॥१५
वदन्ति ये परान्नित्यं ज्ञानाधिक्येन दर्पिताः ।
ज्ञानादसूयां कुर्वन्ति न सहन्ते च चापरान् ॥१६
तादृशा मरणं प्राप्ताः पुनर्जन्मनि शोभने ।
मानुष्यं सुचिरात्प्राप्य तत्र बोधविवर्जिताः ।
भवन्ति सततं देवि यतन्तो हीनमेधसः ॥ १७
उमोवाच ।
भगवन्मानुषाः केचित्सर्वकल्याणसंयुताः ।
पुत्रैर्दारैर्गुणयुतैर्दासीदामपरिच्छदैः ॥ १८
परमं बुद्धिसंयुक्ताः स्थानैश्वर्यपरिग्रहैः ।
व्याधिहीना नवाधाश्च रूपारोग्यबलैर्युताः ॥ १९
धनधान्येन संपन्नाः प्रासादैर्यानवाहनैः ।
सर्वोपभोगसंयुक्ता नानाचित्रैर्मनोहरैः ॥ २०
ज्ञातिभिः सह मोदन्ते अविघ्नं तु दिनेदिने ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ २१
महेश्वर उवाच ।
तदहं ते प्रवक्ष्यामि शृणु सर्वं समाहिता ॥ २२
ये पुरा मनुजा देवि आढ्या वा इतरेऽपि वा ।
श्रुतवृत्तसमायुक्ता दानकामाः श्रुतप्रियाः ॥ २३
परेङ्गितपरा नित्यं दातव्यमिति निश्चिताः ।
सत्यसन्धाः क्षमाशीला लोभमोहविवर्जिताः॥२४
दातारः पात्रतो दानं व्रतैर्नियमसंयुताः ।
स्वदुःखमिव संस्मृत्य परदुःखविवर्जिताः ।
सौम्यशीलाः शुभाचारा देवब्राह्मणपूजकाः॥ २५
एवंशीलसमाचाराः पुनर्जन्मनि शोभने ।
दिवि वा भुवि वा देवि जायन्ते कर्मभोगिनः२६
मानुषेष्वपि ये जातास्तादृशाः संभवन्ति ते ।
यादृशास्तु तथा प्रोक्ताः सर्वे कल्याणसंयुताः२७
रूपं द्रव्यं बलं चायुर्भोगैश्वर्यं बलं श्रुतम् ।
इत्येतत्सर्वसाद्गुण्यं दानाद्भवति नान्यथा ।
तपोदानमयं सर्वमिति विद्धि शुभानने ॥ २८
उमोवाच ।
अथ केचित्प्रदृश्यन्ते मानुषेष्वेव मानुषाः ।
दुर्गताः क्लेशभूयिष्ठा दानभोगविवर्जिताः ॥ २९
भयैस्त्रिभिः समाजुष्टा व्याधिक्षुद्भयसंयुताः ।
दुष्कलत्राभिभूताश्च सततं विघ्नदर्शकाः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ ३०
महेश्वर उवाच ।
ये पुरा मनुजा देवि आसुरं भावमाश्रिताः ।
क्रोधलोभसमायुक्ता निरन्नाद्याश्च निष्क्रियाः ३१
नास्तिकाश्चैव धूर्ताश्च मूर्खाश्चात्मपरायणाः ।
परोपतापिनो देवि प्रायशः प्राणिनिर्दयाः॥ ३२
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
कथंचित्प्राप्य मानुष्यं तत्र ते दुःखपीडिताः ३३
सर्वतः संभवन्त्येव पूर्वमात्मप्रमादतः ।
यथा ते पूर्वकथितास्तथा ते संभवन्त्युत ॥ ३४
शुभाशुभं कृतं कर्म सुखदुःखफलोदयम् ।
इति ते कथितं देवि भूयः श्रोतुं किमिच्छसि॥३५

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि एकोनविंशत्यधिकद्विशततमोऽध्यायः ॥ ११९ ॥

## विंशत्यधिकद्विशततमोऽध्यायः ॥ २२० ॥

ईश्वरेणोमांप्रति अन्धत्वपङ्गुत्वादिनानादोषकारणीभूतानां दुष्कर्मणां विशिष्य कथनम् ॥ १ ॥

उमोवाच ।
भगवन्देवदेवेश मम प्रीतिविवर्धन ।
जात्यन्धाश्चैव दृश्यन्ते जाता वा नष्टचक्षुषः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ १
महेश्वर उवाच ।
हन्त ते कथयिष्यामि शृणु कल्याणि कारणम् ॥ २
ये पुरा कामकारेण परवेश्मसु लोलुपाः ।
परस्त्रियोऽभिवीक्षन्ते दुष्टेनैव स्वचक्षुषा ॥ ३
अन्धीकुर्वन्ति यन्मर्त्यान्क्रोधलोभसमन्विताः ।
लक्षणज्ञाश्च रूपेषु अयथावत्प्रदर्शकाः ॥ ४

एवं युक्तसमाचाराः कालधर्मवशास्तु ते ।
दण्डिता यमदण्डेन निरयस्थाश्चिरं प्रिये ॥ ५
यदि चेन्मानुषं जन्म लभेरंस्ते तथापि वा ।
स्वभावतो वा जाता वा अन्धा एव भवन्ति ते ।
अक्षिरोगयुता वाऽपि नास्ति तत्र विचारणा ॥ ६
उमोवाच ।
मुखरोगयुताः केचिद्दृश्यन्ते सततं नराः ।
दन्तकण्ठकपोलस्थैर्व्याधिभिर्बहुपीडिताः ॥ ७
आदिप्रभृति वै मर्त्या जाता वाऽप्यथ कारणात् ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ ८
महेश्वर उवाच ।
हन्त ते कथयिष्यामि शृणु देवि समाहिता ॥ ९
कुवक्तारस्तु ये देवि जिह्वया कटुकं भृशम् ।
असत्यं परुषं घोरं गुरून्प्रति परान्प्रति ॥ १०
जिह्वाबाधां तदाऽन्येषां कुर्वते कोपकारणात् ।
प्रायशोऽनृतभूयिष्ठा नराः कार्यवशेन वा ।
तेषां जिह्वाप्रदेशस्था व्याधयः संभवन्ति ते ॥ ११
कुश्रोतारस्तु ये चार्थं परेषां कर्णनाशकाः ।
कर्णरोगान्बहुविधाँल्लभन्ते ते पुनर्भवे ॥ १२
दन्तरोगशिरोरोगकर्णरोगास्तथैव च ।
अन्ये दुःखाश्रिता दोषाः सर्वे चात्मकृतं फलम् १३
उमोवाच ।
पीड्यन्ते सततं देव मानुषेष्वेव केचन ।
कुक्षिपक्षाश्रितैर्दोषैर्व्याधिभिश्चोदराश्रितैः ॥ १४
तीक्ष्णशूलैश्च पीड्यन्ते नरा दुःखपरिप्लुताः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ १५
महेश्वर उवाच ।
ये पुरा मनुजा देवि कामक्रोधवशा भृशम् ।
आत्मार्थमेव चाहारं भुञ्जन्ते निरपेक्षकाः ॥ १६
अभक्ष्याहारदानैश्च विश्वस्तानां विषप्रदाः ।
अभक्ष्यभक्षदाश्चैव शौचमङ्गलवर्जिताः ॥ १७
मांसयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
कथंचित्प्राप्य मानुष्यं तत्र ते व्याधिपीडिताः॥१८
तैस्तैर्बहुविधाकारैर्व्याधिभिर्दुःखसंश्रिताः ।
भवन्त्येवं तथा देवि यथा चैवं तथा कृतम् ॥१९
उमोवाच ।
दृश्यन्ते सततं देव व्याधिभिर्मद्नाश्रितैः
पीड्यमानास्तथा मर्त्या अश्मरीशर्करादिभिः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ २०
महेश्वर उवाच ।
ये पुरा मनुजा देवि परदारप्रधर्षकाः ।
तिर्यग्योनिषु धूर्ता वै मैथुनार्थं चरन्ति च ॥ २१
कामदोषेण ये धूर्ताः कन्यासु विधवासु च ।
बलात्कारेण गच्छन्ति रूपदर्पसमन्विताः ॥ २२
तादृशा मरणं प्राप्ताः पुनर्जन्मनि शोभने ।
यदि चेन्मानुषं जन्म लभेरंस्ते तथाविधाः ।
मेहनस्थैस्तथा घोरैः पीड्यन्ते व्याधिभिः प्रिये २३
उमोवाच ।
भगवन्मानुषाः केचिद्दृश्यन्ते शोषिणः कृशाः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ २४
महेश्वर उवाच ।
ये पुरा मनुजा देवि मांसलुब्धाः सुलोलुपाः ।
आत्मार्थे स्वादुगृद्धाश्च परभोगोपतापिनः ॥ २५
अभ्यसूयाश्चोपतापाः परभोगेषु ये नराः ।
एवं युक्तसमाचाराः पुनर्जन्मनि शोभने ॥ २६
शोषव्याधियुतास्तत्र नरा धमनिसंतताः ।
भवन्त्येव नरा देवि पापकर्मोपभोगिनः ॥ २७
उमोवाच ।
भगवन्मानुषाः केचित्क्लिश्यन्ते कण्ठरोगिणः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ २८
महेश्वर उवाच ।
ये पुरा मनुजा देवि परेषां रूपनाशनाः ।
आघातवधबन्धैश्च वृथा दण्डेन मोहिताः ॥ २९
इष्टनाशकरा ये तु अपथ्याहारदा नराः ।
चिकित्सका वा दुष्टाश्च द्वेषलोभसमन्विताः॥३०
निर्दयाः प्राणिहिंसायां मलदाश्चित्तनाशनाः ।
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ॥ ३१
यदि वै मानुषं जन्म लभेरंस्तेषु दुःखिताः ।

अत्र ते क्लेशसंयुक्ताः कण्ठरोगशतैर्वृताः ॥ ३२
केचित्त्वग्दोषसंयुक्ता व्रणकुष्ठैश्च संयुताः ।
श्वित्रकुष्ठयुता वाऽपि बहुधा कृच्छ्रसंयुताः ।
भवन्त्येव नरा देवि यथा येन कृतं फलम् ॥ ३३
उमोवाच
भगवन्मानुषाः कान्दङ्गहानाश्च पङ्गवः
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ ३४
महेश्वर उवाच
ये पुरा मनुजा देवि लोभमोहसमावृताः
प्राणिनां प्राणहिंसार्थमङ्गविघ्नं प्रकुर्वते ।
शस्त्रेणोत्कृत्य वा देवि प्राणिनां चेष्टनाशकाः ३५
एवं युक्तसमाचाराः पुनर्जन्मनि शोभने ।
तदङ्गहाना वै मेत्य भवन्त्येव न संशयः ।
स्वभावतो वा जाता वा पङ्गवश्च भवन्ति ते ॥ ३६
उमोवाच ।
भगवन्मानुषाः केचिद्ग्रन्थिभिः पिलकैस्तथा ।
क्लिश्यमानाः प्रदृश्यन्ते तन्मे शंसितुमर्हसि ॥ ३७
महेश्वर उवाच ।
ये पुरा मनुजा देवि ग्रन्थिभेदकरा नृणाम् ।
मुष्टिप्रहारपरुषा नृशंसाः पापकारिणः ।
पाटकास्तोटकाश्चैव शूलतुन्नास्तथैव च ॥ ३८
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
ग्रन्थिभिः पिलकैश्चैव क्लिश्यन्ते भृशदुःखिताः ३९
उमोवाच ।
भगवन्मानुषाः केचित्पादरोगसमन्विताः
दृश्यन्ते सततं देव तन्मे शंसितुमर्हसि ॥ ४०
महेश्वर उवाच ।
ये पुरा मनुजा देवि क्रोधलोभसमन्विताः ।
मनुजा देवतास्थानं स्वपादैर्भ्रंशयन्त्युत ।
जानुभिः पार्ष्णिभिश्चैव प्राणिहिंसां प्रकुर्वते ॥ ४१
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
पादरोगैर्बहुविधैर्बाध्यन्ते विपदादिभिः ॥ ४२
उमोवाच ।
भगवन्मानुषाः केचिद्दृश्यन्ते बहवो भुवि
वातजैः पित्तजैः रोगैर्युगपत्सान्निपातकैः ॥ ४३
रोगैर्बहुविधैर्देव क्लिश्यमानाः सुदुःखिताः ।
असमस्तैः समस्तैश्च आढ्या वा दुर्गतास्तथा ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ ४४
महेश्वर उवाच ।
तदहं ते प्रवक्ष्यामि शृणु कल्याणि कारणम् ॥४५
ये पुरा मनुजा देवि त्वासुरं भावमाश्रिताः
स्ववशाः कोपनपरा गुरुविद्वेषिणस्तथा ॥ ४६
परेषां दुःखजनका मनोवाक्कायकर्मभिः ।
छिन्दन्भिन्दन्स्तुदन्नेव नित्यं प्राणिषु निर्दयाः ४७
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
यदि वै मानुषं जन्म लभेरंस्ते तथाविधाः ।
तत्र ते बहुभिर्घोरैस्तप्यन्ते व्याधिभिः प्रिये ॥४८
केचिद्वातादिसंयुक्ताः केचित्काससमन्विताः ।
ज्वरातिसारतृष्णाभिः पीड्यमानास्तथा परे ॥४९
पादगुल्मैश्च बहुभिः श्लेष्मदोषसमन्विताः ।
पादरोगैश्च विविधैर्व्रणकुष्ठभगंदरैः ।
आढ्या वा दुर्गता वाऽपि दृश्यन्ते व्याधिपीडिताः
एवमात्मकृतं कर्म भुञ्जन्ते तत्रतत्र ते ।
अभिभूतुं न शक्यं हि केनचित्स्वकृतं फलम् ।
इति ते कथितं देवि भूयः श्रोतुं किमिच्छसि ५१

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि विंशत्यधिकद्विशततमोऽध्यायः ॥ २२० ॥

## एकविंशत्यधिकद्विशततमोऽध्यायः ॥ २२१ ॥

ईश्वरेण पार्वतींप्रति प्राणिनामङ्गविकलत्वनपलताादिदोषहेतुभूतदुष्कर्मप्रतिपादनम् ॥ १ ॥

उमोवाच ।
भगवन्देवदेवेश भूतपाल नमोस्तु ते
ह्रस्वाङ्गाश्चैव वक्राङ्गाः कुब्जा वामनकास्तथा ॥ १
अपरे मानुषा देव दृश्यन्ते कुणिबाहवः ।

केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ २
महेश्वर उवाच ।
ये पुरा मनुजा देवि लोभमोहसमन्विताः ।
धान्यमानान्विकुर्वन्ति क्रयविक्रयकारणात् ॥ ३
कुलदोषं तदा देवि धूर्तमानेषु नित्यशः ।
अर्थापकर्षणं चैव सर्वेषां क्रयविक्रये ॥ ४
अङ्गदोषकरा ये तु परेषां कोपकारणात् ।
मांसादाश्चैव ये मूर्खा अयथावत्प्रथाः सदा ॥ ५
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
ह्रस्वाङ्गा वामनाश्चैव कुब्जाश्चैव भवन्ति ते ॥ ६
उमोवाच ।
भगवन्मानुषाः केचिद्दृश्यन्ते मानुषेषु वै ।
उन्मत्ताश्च पिशाचाश्च पर्यटन्तो यतस्ततः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ ७
महेश्वर उवाच ।
ये पुरा मनुजा देवि दर्पाहंकारसंयुताः ।
बहुधा प्रलपन्त्येव हसन्ति च परान्भृशम् ॥ ८
मोहयन्ति परान्भोगैर्मदनैर्लोभकारणात् ।
वृद्धान्गुरूंश्च ये मूर्खा वृथैवापहसन्ति च ।
शौण्डा विदग्धाः शास्त्रेषु सदैवानृतवादिनः॥ ९
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
उन्मत्ताश्च पिशाचाश्च भवन्त्येव न संशयः॥ १०
उमोवाच ।
भगवन्मानुषाः केचिन्निरपत्याः सुदुःखिताः ।
यतन्तो न लभन्त्येव अपत्यानि यतस्ततः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ ११
महेश्वर उवाच ।
ये पुरा मनुजा देवि सर्वप्राणिषु निर्दयाः ।
घ्नन्ति बालांश्च भुञ्जन्ते मृगाणां पक्षिणामपि॥१२
गुरुविद्वेषिणश्चैव परपुत्राभ्यसूयकाः ।
पितृपूजां न कुर्वन्ति यथोक्तां चाष्टकादिभिः १३
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
मानुष्यं वा चिरात्प्राप्य निरपत्या भवन्ति ते ।
पुत्रशोकयुताश्चापि नास्ति तत्र विचारणा ॥ १४
उमोवाच ।
भगवन्मानुषाः केचिन्प्रदृश्यन्ते सुदुःखिताः ।
उद्वेगवासनिरताः सोद्वेगाश्च यतव्रताः ॥ १५
नित्यं शोकसमाविष्टा दुर्गताश्च तथैव च ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ १६
महेश्वर उवाच ।
ये पुरा मनुजा नित्यमुत्क्रोशनपरायणाः ।
भीषयन्ति परान्नित्यं विकुर्वन्ति तथैव च ॥ १७
ऋणवृद्धिकराश्चैव दरिद्रेभ्यो यथेष्टतः ।
ऋणार्थमभिगच्छन्ति सततं वृद्धिरूपकाः ॥ १८
उद्विजन्ते हि तान्दृष्ट्वा धारकाः स्वार्थकारणात् ।
अतिवृद्धिर्न कर्तव्या दरिद्रेभ्यो यथेष्टतः ॥ १९
ये श्वभिः क्रीडमानाश्च त्रासयन्ति वने मृगान् ।
प्राणिहिंसां तथा देवि कुर्वन्ति च यतस्ततः॥२०
येषां गृहेषु वै श्वानस्त्रासयन्ति वृथा नरान् ।
एवंयुक्तसमाचाराः कालधर्मगताः पुनः ॥ २१
पीडिता यमदण्डेन निरयस्थाश्चिरं प्रिये ।
कथंचित्प्राप्य मानुष्यं तत्र ते दुःखसंयुताः॥२२
कुदेशे दुःखभूयिष्ठे व्याघातशतसंकुले ।
जायन्ते तत्र शोचन्तः सोद्वेगाश्च यतस्ततः ॥ २३
उमोवाच ।
भगवन्मानुषाः केचिदैश्वर्यज्ञानसंयुताः ।
म्लेच्छभूमिषु दृश्यन्ते म्लेच्छैश्वर्यसमन्विताः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ २४
महेश्वर उवाच ।
ये पुरा मनुजा देवि धनधान्यसमन्विताः ।
अयथावत्प्रयच्छन्ति श्रद्धावर्जितमेव वा ॥ २५
अपात्रेभ्यश्च ये दानं शौचमङ्गलवर्जिताः ।
ददत्येव च ये मूर्खाः श्लाघयाऽवज्ञयाऽपि वा ॥२६
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
कुदेशे म्लेच्छभूयिष्ठे दुर्गमे वनसंकटे ।
म्लेच्छाधिपत्यं संप्राप्य जायन्ते तत्रतत्र वै ॥२७
उमोवाच ।
भगवन्भगनेत्रघ्न मानुषेषु च केचन ।

क्लीवा नपुंसकाश्चैव दृश्यन्ते षण्डकास्तथा ॥ २८
नीचकर्मरता नीचा नीचसख्यास्तथा भुवि ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ २९
महेश्वर उवाच ।
तदहं ते प्रवक्ष्यामि शृणु कल्याणि कारणम् ३०
ये पुरा मनुजा भूत्वा घोरकर्मरतास्तथा ।
पशुपुंस्त्वोपघातेन जीवन्ति च रमन्ति च ॥३१
पुंस्त्वोपघातिनश्चैव नराणां कोपकारणात् ।
ये धूर्ताः स्त्रीषु गच्छन्ति अयथावद्यथेष्टतः ॥ ३२
कामविघ्नकरा ये तु द्वेषपैशुन्यकारणात् ।
एवंयुक्तसमाचाराः कालधर्मं गतास्तु ते ।
दण्डिता यमदण्डेन निरयस्थाश्चिरं प्रिये ॥ ३३
यदि चेन्मानुषं जन्म लभेरंस्ते तथाविधाः ।
क्लीवा वर्षवराश्चैव षण्डकाश्च भवन्ति ते ॥ ३४
नीचकर्मपरा लोके निर्लज्जा वीतसंभ्रमाः ।
परान्दीनान्वहिष्कृत्य ते भवन्ति स्वकर्मणा ॥३५
यदि चेत्संप्रपश्येरंस्ते मुच्यन्ते हि कल्मषात् ।
अत्रापि ते प्रमाद्येयुः पतन्ति नरकालये ॥ ३६
स्त्रीणामपि तथा देवि यथा पुंसां तु कर्मजम् ।
इति ते कथितं देवि भूयः श्रोतुं किमिच्छसि ॥३७

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि एकविंशत्यधिकद्विशततमोऽध्यायः ॥ २२१ ॥

## द्वाविंशत्यधिकद्विशततमोऽध्यायः ॥ २२२ ॥

महेश्वरेणोमांप्रति स्त्रीणां पुंश्चलीत्वादिदोषहेतुभूतदुष्कर्मकथनम् ॥ १ ॥ तथा प्राणिसाधारण्येन दास्यादिप्रयोजकदुष्कर्मकथनम् ॥ २ ॥

उमोवाच ।
भगवन्देवदेवेश शूलपाणे वृषध्वज ।
पुंश्चल्य इव या स्त्रीषु नीचवृत्तिरताः स्मृताः
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ १
महेश्वर उवाच ।
याः पुरा मनुजा देवि बुद्धिमोहसमन्विताः ।
कामरागसमायुक्ताः पतीनतिचरन्ति वै ॥ २
प्रतिकूलपरा यास्तु पतीन्प्रति यथा तथा ।
शौचं लज्जां तु विभ्रष्ट्य यथेष्टपरिचारणाः ॥ ३
एवंयुक्तसमाचारा यमलोके सुदण्डिताः ।
यदि वै मानुषं जन्म लभेरंस्तास्तथाविधाः ।
बहुसाधारणा एव पुंश्चल्यश्च भवन्ति ताः ॥ ४
पौंश्चल्यं यत्तु तद्वृत्तं स्त्रीणां कष्टतमं स्मृतम् ।
ततःप्रभृति ता देवि पतन्त्येव न संशयः ॥ ५
शोचन्ति चेत्तु तद्वृत्तं मनसा हितमाप्नुयुः ॥ ६
उमोवाच ।
भगवन्देवदेवेश प्रमदा विधवा भृशम् ।
दृश्यन्ते मानुषा लोके सर्वकल्याणवर्जिताः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ ७
महेश्वर उवाच ।
याः पुरा मनुजा देवि बुद्धिमोहसमन्विताः ।
कुटुम्बं तत्र वै पत्युर्नाशयन्ति वृथा तथा ॥ ८
विषदाश्चाग्निदाश्चैव पतीन्प्रति सुनिर्दयाः ।
अन्यासां हि पतीन्यान्ति स्वपतिद्वेषकारणात् ॥९
एवंयुक्तसमाचारा यमलोके सुदण्डिताः ।
निरयस्थाश्चिरं कालं कथंचित्प्राप्य मानुषम् ।
तत्र ता भोगरहिता विधवास्तु भवन्ति वै ॥१०
उमोवाच ।
भगवन्प्रमदा लोके पत्यौ ज्ञातिषु सत्सु च ।
लिङ्गिन्यः संप्रदृश्यन्ते पाषण्डं मतमाश्रिताः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ ११
महेश्वर उवाच ।
याः पुरा भावदोषेण लोभमोहसमन्विताः ।
परद्रव्यपरा लोभात्परेषां द्रव्यहारकाः ॥ १२
अभ्यसूयापरा यास्तु सपत्नीनां प्रदूषकाः ।
ईर्ष्यापराः कोपनाश्च बन्धूनां विफलाः सदा ॥१३
एवंयुक्तसमाचाराः पुनर्जन्मनि ताः स्त्रियः ।
अलक्षणसमायुक्ताः पाषण्डं धर्ममाश्रिताः ।

स्त्रियः प्रव्राजशीलाश्च भवन्त्येव न संशयः ॥ १४
उमोवाच ।
भगवन्मानुषाः केचित्कारुवृत्तिसमाश्रिताः ।
प्रदृश्यन्ते मनुष्येषु नीचकर्मरतास्तथा ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ १५
महेश्वर उवाच ।
ये पुरा मनुजा देवि स्तब्धमानयुता भृशम् ।
दर्पाहंकारसंयुक्ताः केवलात्मपरायणाः ॥ १६
तादृशा मानुषा देवि पुनर्जन्मनि शोभने ।
कारवो नटगन्धर्वाः संभवन्ति यथा तथा ॥ १७
नापिता वन्दिनश्चैव तथा वैतालिकाः प्रिये ।
एवंभूतास्त्वधोवृत्तिं जीवन्त्याश्रित्य मानवाः १८
परप्रसाधनकरास्ते परैः कृतवेतनाः ।
परावमानस्य फलं भुञ्जते पौर्वदेहिकम् ॥ १९
उमोवाच ।
भगवन्देवदेवेश मानुषेष्वेव केचन ।
दासभूताः प्रदृश्यन्ते सर्वकर्मपरा भृशम् ॥ २०
आघातभर्त्सनसहाः पीड्यमानाश्च सर्वशः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ २१
महेश्वर उवाच ।
तदहं ते प्रवक्ष्यामि शृणु कल्याणि कारणम् ॥२२
ये पुरा मनुजा देवि परेषां वित्तहारकाः ।
ऋणवृद्धिकरं कृत्वा न्यासमदत्तं तथैव च ॥ २३
निक्षेपकारणाद्दत्तपरद्रव्यापहारिणः ।
प्रमादाद्विस्मृतं नष्टं परेषां धनहारकाः ॥ २४
वधबन्धपरिक्लेशैर्दासत्वं कुर्वते परान् ।
तादृशा मरणं प्राप्ता दण्डिता यमशासनैः ॥ २५
कथंचित्प्राप्य मानुष्यं तत्र ते देवि सर्वथा ।
दासभूता भविष्यन्ति जन्मप्रभृति मानवाः ॥२६
तेषां कर्माणि कुर्वन्ति येषां ते धनहारकाः ।
आममाप्तेः स्वपापस्य कुर्वन्तीति विनिश्चयः ॥ २७
पशुभूतास्तथा चान्ये भवन्ति धनहारकाः
तत्तथा क्षीयते कर्म तेषां पूर्वापराधजम् ।
अतोऽन्यथा न तच्छक्यं कर्म भोक्तुं सुरासुरैः ॥ २८
किंतु मोक्षविधिस्तेषां सर्वथा तत्प्रमादनम् ।
अयथावन्मोक्षकामः पुनर्जन्मनि चेष्यते ॥ २९
मोक्षकामी यथान्यायं कुर्वन्कर्माणि सर्वशः ।
भर्तुः प्रसादमाकाङ्क्षन्दासमान्सर्वथा सहन् ॥ ३०
प्रीतिपूर्वं तु यो भर्त्रा मुक्तो मुक्तः स्वपापतः ।
तथाभूतान्कर्मकरान्सदा संतोषयेत्पतिः ॥ ३१
यथार्हं कारयेत्कर्म दण्डकारणतः क्षिपेत् ।
वृद्धान्बालांस्तथा क्षीणान्पालयन्धर्ममाप्नुयात् ३२
इति ते कथितं देवि भूयः श्रोतुं किमिच्छसि ३३

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि द्वाविंशत्यधिकद्विशततमोऽध्यायः ॥ २२२ ॥

## त्रयोविंशत्यधिकद्विशततमोऽध्यायः ॥ २२३ ॥

परमेश्वरेण पार्वतींप्रति प्राणिनां चण्डालत्वदरिद्रत्वादिप्रापकदुष्कर्मप्रतिपादनम् ॥ १ ॥

उमोवाच ।
भगवन्मानुषेष्वेव मानुषाः समदर्शनाः ।
चण्डाला इव दृश्यन्ते स्पर्शमात्रविदूषिताः ॥ १
नीचकर्मरता देव सर्वेषां मलहारकाः ।
दुर्गताः क्लेशभूयिष्ठा विरूपा दुष्टचेतसः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥
महेश्वर उवाच ।
तदहं ते प्रवक्ष्यामि तदेकाग्रमनाः शृणु ॥ ३
ये पुरा मनुजा देवि अतिमानयुता भृशम् ।
आत्मसंभावनायुक्ताः स्तब्धा दर्पसमन्विताः ॥ ४
प्रणामं तु न कुर्वन्ति गुरूणामपि पामराः ।
ये स्वधर्मार्पणं कार्यमतिमानान्न कुर्वते ॥ ५
परान्संनामयन्त्येव आज्ञयात्मनि ये बलात् ।
ऋद्धियोगात्परान्नित्यमवमन्यन्ति मानवान् ।
पानपाः सर्वभक्षाश्च परुषाः कटुका नराः ॥ ६
एवंयुक्तसमाचारा दण्डिता यमशासनैः ।

कथंचित्प्राप्य मानुष्यं चण्डालाः संभवन्ति ते ॥ ७
नीचकर्मरताश्चैव सर्वेषां मलहारकाः ।
परेषां वन्दनपरास्ते भवन्त्येव मानिनः ॥ ८
विरूपाः पापयोनिस्थाः स्पर्शनादिविवर्जिताः ।
कुवृत्तिमुपजीवन्ति भूत्वा ते रजकादयः ।
पुराऽतिमानदोषात्तु भुञ्जते स्वकृतं फलम् ॥ ९
तानप्यवस्थाकृपणांश्चण्डालानपि बुद्धिमान् ।
न च निन्देन्नापि कुप्येद्भुञ्जते स्वकृतं फलम् ।
चण्डाला अपि तां जातिं शोचन्तः शुद्धिमाप्नुयुः ॥
उमोवाच ।
भगवन्मानुषाः केचिदाशापाशशतैर्वृताः ।
परेषां द्वारि तिष्ठन्ति प्रतिषिद्धाः प्रवेशने ॥ ११
द्रष्टुं ज्ञापयितुं चैव न लभन्ते च यत्नतः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ १२
महेश्वर उवाच ।
ये पुरा मानुषा देवि ऐश्वर्यस्थानसंयुताः ।
संवादं तु न कुर्वन्ति परैरैश्वर्यमोहिताः ॥ १३
द्वाराणि न ददत्येव लोभमोहादिभिर्वृताः ।
अवस्थामोहसंयुक्ताः स्वार्थमात्रपरायणाः ॥ १४
सर्वभोगयुता वाऽपि सर्वेषां निष्फला भृशम् ।
अपि शक्ता न कुर्युस्ते परानुग्रहकारणात् ॥ १५
निर्दयाश्चैव निर्द्वारा भोगैश्वर्यगतिं प्रति ।
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ॥ १६
यदि चेन्मानुषं जन्म लभेरंस्ते तथाविधाः ।
दुर्गता दुरवस्थाश्च कर्मव्याक्षेपसंयुताः ॥ १७
अभिधावन्ति ते सर्वे तमर्थमभिवेदिनः ।
राज्ञां वा राजमात्राणां द्वारि तिष्ठन्ति वारिताः १८
कर्म विज्ञापितुं द्रष्टुं न लभन्ते कथंचन ।
प्रवेष्टुमपि ते द्वारं बहिस्तिष्ठन्ति काङ्क्षया ॥ १९
उमोवाच ।
भगवन्मानुषाः केचिन्मनुष्येषु बहुष्वपि ।
सहसा नष्टसर्वस्वा भ्रष्टकोशपरिग्रहाः ॥ २०
दृश्यन्ते मानुषाः केचिद्राजचोरोदकादिभिः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ २१
महेश्वर उवाच ।
ये पुरा मानुषा देवि आसुरं भावमाश्रिताः
परेषां वृत्तिनाशं तु कुर्वते द्वेषलोभतः ॥ २२
उत्कोचनपराश्चैव पिशुनाश्च तथाविधाः ।
परद्रव्यहरा घोराश्चौर्याद्वाऽन्येन कर्मणा ॥ २३
निर्दया निरनुक्रोशाः परेषां वृत्तिनाशकाः
नास्तिकाऽनृतभूयिष्ठाः परद्रव्यापहारिणः ॥ २४
एवंयुक्तसमाचारा दण्डिता यमशासनैः ।
निरयस्थाश्चिरं कालं तत्र दुःखसमन्विताः ॥ २५
यदि चेन्मानुषं जन्म लभेरंस्ते तथाविधाः ।
तत्रस्थाः प्राप्नुवन्त्येव सहसा द्रव्यनाशनम् ॥ २६
कष्टं तत्प्राप्नुवन्त्येव कारणाकारणादपि ।
नाशं विनाशं द्रव्याणामुपघातं च सर्वशः ॥ २७
उमोवाच ।
भगवन्मानुषाः केचिद्बान्धवैः सहसा पृथक् ।
कारणादेव सहसा सर्वेषां प्राणनाशनम् ॥ २८
शस्त्रेण वाऽन्यथा वाऽपि प्राप्नुवन्ति वधं नराः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ २९
महेश्वर उवाच ।
ये पुरा मनुजा देवि घोरकर्मरतानृताः ।
आसुराः प्रायशो मूर्खाः प्राणिहिंसाप्रिया भृशं ३०
निर्दयाः प्राणिहिंसायां तथा प्राणिविघातकाः ।
विश्वस्तघातकाश्चैव तथा सुप्तविघातकाः ।
प्रायशोऽनृतभूयिष्ठा नास्तिका मांसभोजनाः ३१
एवंयुक्तसमाचाराः कालधर्मं गताः पुनः ।
दण्डिता यमदण्डेन निरयस्थाश्चिरं प्रिये ॥ ३२
तिर्यग्योनिं पुनः प्राप्य तत्र दुःखपरिक्षयात् ।
यदि चेन्मानुषं जन्म लभेरंस्ते तथाविधाः ।
तत्र ते प्राप्नुवन्त्येव वधबन्धान्यथा तथा ॥ ३३
आढ्या वा दुर्गता वाऽपि भुञ्जते स्वकृतं फलम् ।
सुप्ता मत्ताश्च विश्वस्तास्तथा ते प्राप्नुवन्त्युत ॥ ३४
प्राणबाधकृतं दुःखं बान्धवैः सहसा पृथक् ।
पुत्रदारविनाशं वा शस्त्रेणान्येन वा वधम् ॥ ३५
उमोवाच ।
भगवन्मानुषाः केचिद्राजनीतिविशारदैः

दण्ड्यन्ते मानुषे लोके मानुषाः सर्वतोभयाः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ ३६
महेश्वर उवाच ।
ये पुरा मनुजा देवि मानुषांश्चेतराणि वा ।
क्लिष्टघातेन निघ्नन्ति श्रवणान्प्राणिषु निर्दयाः ।
आसुरं घोरकर्माणः क्रूरदण्डवधप्रियाः ॥ ३७
ये दण्डयन्त्यदण्ड्यांश्च राजानः कोपमोहिताः ।
हिंसाहंकारपरुषा मांसादा नास्तिकाशुभाः ॥ ३८
केचित्स्त्रीपुरुषघ्नाश्च गुरुघ्नाश्च तथा प्रिये ।
एवंयुक्तसमाचाराः प्राणिधर्मं गताः पुनः ॥ ३९
दण्डिता यमदण्डेन निरयस्थाश्चिरं प्रिये ।
पूर्वजन्मकृतं कर्म भुञ्जते तदिह प्रजाः ॥ ४०
इहैव यत्कर्म कृतं तत्परत्र फलत्युत ।
एषा व्यवस्थितिर्देवि मानुषेष्वेव दृश्यते ॥ ४१
न चर्षीणां न देवानाममृतत्वात्तपोबलात् ।
तैरेकेन शरीरेण भुज्यते कर्मणः फलम् ॥ ४२
न तथा मानुषाणां स्यादन्तर्धाय भवेद्धि तत् ४३
उमोवाच ।
किमर्थं मानुषा लोके दण्ड्यन्ते पृथिवीश्वरैः ।
कृतापराधमुद्दिश्य हन्ता हर्ताऽयमित्युत ॥ ४४
पुत्रार्थी पुत्रकामेष्ट्या इहैव लभते सुतान् ।
तैरेव हि शरीरेण भुञ्जन्ते कर्मणां फलम् ॥ ४५
दृश्यन्ते मानुषे लोके तद्भवान्नानुमन्यते ।
एतन्मे संशयस्थानं तन्मे त्वं छेत्तुमर्हसि ॥ ४६
महेश्वर उवाच ।
स्थाने संशयितं देवि तत्त्वं शृणु समाहिता ।
कर्म कर्मफलं चेति युगपद्भुवि नेष्यते ॥ ४७
ये त्वयाऽभिहिता देवि हन्ता हर्ताऽयमित्यपि ।
तेषां तत्पूर्वकं कर्म दण्ड्यते यत्र राजभिः ॥ ४८
देवि कर्म कृतं चैषां हेतुर्भवति शासने ।
अपराधापदेशेन राजा दण्डयति प्रजाः ॥ ४९
इह लोके व्यवस्थार्थं राजभिर्दण्डनं स्मृतम् ।
उद्वेजनार्थं शेषाणामपराधं तमुद्दिशन् ॥ ५०
पुराकृतफलं दण्डो दण्ड्यमानस्य तद्भवम् ।
प्रागेव च मया प्रोक्तं तत्र निःसंशया भव ॥ ५१
उमोवाच ।
भगवन्भुवि मर्त्यानां दण्डितानां नरेश्वरैः ।
दण्डेनैव तु तेनेह पापनाशो भवेन्न वा ।
एतन्मया संशयितं तद्भवांश्छेत्तुमर्हति ॥ ५२
महेश्वर उवाच ।
स्थाने संशयितं देवि शृणु तत्त्वं समाहिता ॥ ५३
ये नृपैर्दण्डिता भूमावपराधापदेशतः ।
यमलोके न दण्ड्यन्ते तत्र ते यमदण्डनैः ॥ ५४
अदण्डिता वा ये मिथ्या मिथ्या वा दण्डिता भुवि ।
तान्यमो दण्डयत्येव स हि वेद कृताकृतम् ।
नातिक्रमेद्यमं कश्चित्कर्म कृत्वेह मानुषः ॥ ५५
राजा यमश्च कुर्वाते दण्डमात्रं तु शोभने ।
उभाभ्यां यमराजभ्यां दण्डितोऽदण्डितोपि वा ।
पश्चात्कर्मफलं भुङ्क्ते नरके मानुषेषु वा ॥ ५६
नास्ति कर्मफलच्छेत्ता का कृत्वयेऽपि च ।
इति ते कथितं सर्वं निर्विशङ्का भव प्रिये ॥ ५७
उमोवाच ।
किमर्थं दुष्कृतं कृत्वा मानुषा भुवि नित्यशः ।
पुनस्तत्कर्मनाशाय प्रायश्चित्तानि कुर्वते ॥ ५८
सर्वपापहरं चेति हयमेधं वदन्ति च ।
प्रायश्चित्तानि चान्यानि पापनाशाय कुर्वते ।
तस्मान्मया संशयितं त्वं तच्छेत्तुमिहार्हसि ॥ ५९
महेश्वर उवाच ।
स्थाने संशयितं देवि शृणु तत्त्वं समाहिता ।
संशयो हि महानेव पूर्वेषां च मनीषिणाम् ॥ ६०
द्विधा तु क्रियते पापं सद्भिश्चासद्भिरेव च ।
अभिसन्धाय वा नित्यमन्यथा वा यदृच्छया ६१
केवलं चाभिसन्धाय संरम्भाच्च करोति यत् ।
कर्मणस्तस्य नाशस्तु न कथंचन विद्यते ॥ ६२
अभिसन्धिकृतस्यैव नैव नाशोस्ति कर्मणः ।
अश्वमेधसहस्रैश्च प्रायश्चित्तशतैरपि ॥ ६३
अन्यथा यत्कृतं पापं प्रमादाद्वा यदृच्छया ।
प्रायश्चित्ताश्वमेधाभ्यां श्रेयसा तत्प्रणश्यति ॥ ६४

लोकसंव्यवहारार्थं प्रायश्चित्तादिरिष्यते ।
विद्ध्येवं पापकं कार्ये निर्विशङ्का भव प्रिये ॥ ६५
इति ते कथितं देवि भूयः श्रोतुं किमिच्छसि ६६
उमोवाच
भगवन्देवदेवेश मानुषाश्चेतरा अपि ।
म्रियन्ते मानुषा लोके कारणाकारणादपि
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ ६७
महेश्वर उवाच ।
ये पुरा मनुजा देवि कारणाकारणादपि ।
यथाऽसुभिर्वियुज्यन्ते प्राणिनः प्राणिनिर्दयैः ॥६८
तथैव ते प्राप्नुवन्ति यथैवात्मकृतं फलम् ।
विषदास्तु विषेणैव शस्त्रैः शस्त्रेण घातकाः॥ ६९
एवमेव यथा लोके मानुषान्घ्नन्ति मानुषाः ।
कारणेनैव तनाथ तथा स्वप्राणनाशनम् ।
प्राप्नुवन्ति पुनर्देवि नास्ति तत्र विचारणा ७०
इति ते कथितं सर्वं कर्मपाकफलं प्रिये ।
भूयस्तव समासेन कथयिष्यामि तच्छृणु ॥ ७१
सत्यप्रमाणकरणान्नित्यमव्यभिचारि च
यैः पुरा मनुजैर्देवि यस्मिन्काले यथा कृतम् ॥ ७२
येनैव कारणेनापि कर्म यत्तु शुभाशुभम् ।
तस्मिन्काले तथा देवि कारणेनैव तेन तु ॥ ७३
प्राप्नुवन्ति नराः प्रेत्य निःसंदेहं शुभाशुभम् ।
इति सत्यं प्रजानीहि लोके तत्र विधिं प्रति ॥ ७४
कर्मकर्ता नरो भोक्ता स नास्ति दिवि वा भुवि ।
न शक्यं कर्म चाभोक्तुं सदेवासुरमानुषैः ७५
कर्मणा ग्रथितो लोक आदिप्रभृति वर्तते ।
एतदुद्देशतः प्रोक्तं कर्मपाकफलं प्रति ॥ ७६
यदन्यच्च मया नोक्तं यस्मिंस्ते कर्मसंग्रहे ।
बुद्धितर्केण तत्सर्वं तथा वेदितुमर्हसि ।
कथितं श्रोतुकामाया भूयः श्रोतुं किमिच्छसि ॥७७

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि त्रयोविंशत्यधिकद्विशततमोऽध्यायः ॥ २२३ ॥

## चतुर्विंशत्यधिकद्विशततमोऽध्यायः ॥ २२४ ॥

परमेश्वरेण पार्वतींप्रति मर्त्यामर्त्यानां शरीरभेदाभेदेन कर्मफलभोगोक्तिः ॥ १ ॥

उमोवाच ।
भगवन्देवदेवेश लोकपालनमस्कृत ।
प्रसादात्ते महादेव श्रुता मे कर्मणां गतिः ॥ १
संगृहीतं च तत्सर्वं तत्वतोऽमृतसंनिभम् ।
कर्मणा ग्रथितं सर्वमिति वेद शुभाशुभम् ॥ २
गोवत्सवच्च जननीं निम्नं सलिलवत्तथा ।
कर्तारं स्वकृतं कर्म नित्यं तदनुधावति ॥ ३
कृतस्य कर्मणश्चेह नाशो नास्तीति निश्चयः ।
अशुभस्य शुभस्यापि तदप्युपगतं मया ॥ ४
भूय एव महादेव वरद प्रीतिवर्धन ।
कर्मणां गतिमाश्रित्य संशयान्मोक्तुमर्हसि ॥ ५
महेश्वर उवाच ।
यत्ते विवक्षितं देवि गुह्यमप्यसितेक्षणे ।
तत्सर्वं निर्विशंका त्वं पृच्छ मां शुभलक्षणे ॥ ६
उमोवाच ।
एवं व्यवस्थिते लोके कर्मणां वृषभध्वज ।
कृत्वा तत्पुरुषः कर्म शुभं वा यदि वेतरत् ॥ ७
कर्मणः सुकृतस्येह कदा भुङ्क्ते फलं पुनः ।
इह वा प्रेत्य वा देव तन्मे शंसितुमर्हसि ॥ ८
महेश्वर उवाच ।
स्थाने संशयितं देवि तद्धि गुह्यतमं नृषु ।
त्वत्प्रियार्थं प्रवक्ष्यामि देवि गुह्यं शुभानने ॥ ९
देहकृतं कर्म भुञ्जते तदिह प्रजाः ।
यत्कृतं पुंसां तत्परत्र फलिष्यते ।
एषा व्यवस्थितिर्देवि मानुषेष्वेव दृश्यते ॥ १०
देवानामसुराणां च्व अमरत्वात्तपोबलात् ।
एकेनैव शरीरेण भुज्यते कर्मणां फलम् ।
मानुषैर्न तथा देवि अन्तरं त्वेतदिष्यते ॥ ११

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि चतुर्विंशत्यधिकद्विशततमोऽध्यायः ॥ २२४ ॥

## पञ्चविंशत्यधिकद्विशततमोऽध्यायः ॥ २२५ ॥

पार्वत्या परमेश्वरंप्रति प्राणिनां शुभाशुभफलयोर्मध्ये कस्य पूर्वोपभोग इति प्रश्नः ॥ १ ॥ परमेश्वरेण तांप्रति सदृष्टान्तप्रदर्शनं तयोर्यौगपद्येनोपभोगकथनम् ॥ २ ॥ तथा पूर्वकर्मणामल्पायुष्ट्वादिकारणत्वाभिधानम् ॥ ३ ॥

उमोवाच ।
भगवन्भगनेत्रघ्न मानुषाणां विचेष्टितम् ।
सर्वमात्मकृतं चेति श्रुतं मे भगवन्मतम् ॥ १
लोके ग्रहकृतं सर्वं मत्वा कर्म शुभाशुभम् ।
तदेव ग्रहनक्षत्रं प्रायशः पर्युपासते ।
एष मे संशयो देव तं मे त्वं छेत्तुमर्हसि ॥ २
महेश्वर उवाच ।
स्थाने संशयितं देवि शृणु तत्वविनिश्चयम् ॥ ३
नक्षत्राणि ग्रहाश्चैव शुभाशुभनिवेदकाः ।
मानवानां महाभागे न तु कर्मकराः स्वयम् ॥ ४
प्रजानां तु हितार्थाय शुभाशुभविधिं प्रति ।
अनागतमतिक्रान्तं ज्योतिश्चक्रेण बोध्यते ॥ ५
किंतु तत्र शुभं कर्म सुग्रहैस्तु निवेद्यते ।
दुष्कृतस्याशुभैरेव समवायो भवेदिति ॥ ६
तस्मात्तु ग्रहवैषम्ये विषमं कुरुते जनः ।
ग्रहसाम्ये शुभं कुर्याज्ज्ञात्वाऽऽत्मानं तथा कृतम् ७
केवलं ग्रहनक्षत्रं न करोति शुभाशुभम् ।
सर्वमात्मकृतं कर्म लोकवादो ग्रहा इति ॥ ८
पृथग्ग्रहाः पृथक्कर्ता कर्ता स्वं भुञ्जते फलम् ।
इति ते कथितं सर्वं विशङ्कां जहि शोभने ॥ ९
उमोवाच ।
भगवन्विविधं कर्म कृत्वा जन्तुः शुभाशुभम् ।
किं तयोः पूर्वकतरं भुङ्क्ते जन्मान्तरे पुनः ।
एष मे संशयो देव तं मे त्वं छेत्तुमर्हसि ॥ १०
महेश्वर उवाच ।
स्थाने संशयितं देवि तत्ते वक्ष्यामि तत्वतः ॥ ११
अशुभं पूर्वमित्याहुरपरे शुभमित्यपि ।
मिथ्या तदुभयं प्रोक्तं केवलं तद्ब्रवीमि ते ॥ १२
मानुषे तु पदे कर्म युगपद्भुज्यते सदा ।
यथाकृतं यथायोगमुभयं भुज्यते क्रमात् ॥ १३
भुञ्जानाश्चापि दृश्यन्ते क्रमशो भुवि मानवाः ।
ऋद्धिं हानिं सुखं दुःखं तन्मत्वमुभयं भयम् ॥ १४
दुःखान्यनुभवन्त्याढ्या दरिद्राश्च सुखानि च ।
यौगपद्याद्धि भुञ्जाना दृश्यन्ते लोकसाक्षिकम् १५
नरके स्वर्गलोके च न तथा संस्थितिः प्रिये ।
नित्यं दुःखं हि नरके स्वर्गे नित्यं सुखं तथा ॥ १६
शुभाशुभानामाधिक्यं कर्मणां तत्र सेव्यते ।
निरन्तरं सुखं दुःखं स्वर्गे च नरके भवेत् ॥ १७
तत्रापि सुमहद्भुक्त्वा पूर्वमल्पं पुनः शुभे ।
एतत्ते सर्वमाख्यातं किं भूयः श्रोतुमिच्छसि ॥ १८
उमोवाच ।
भगवन्प्राणिनो लोके म्रियन्ते केन हेतुना ।
जाताजाता न तिष्ठन्ति तन्मे शंसितुमर्हसि ॥ १९
महेश्वर उवाच ।
तदहं ते प्रवक्ष्यामि शृणु सत्य समाहिता ।
आत्मा कर्मक्षयाद्देहं यथा मुञ्चति तच्छृणु ॥ २०
शरीरात्मसमाहारो जन्तुरित्यभिधीयते ।
तत्रात्मानं नित्यमाहुरनित्यं क्षेत्रमुच्यते ॥ २१
एवं कालेन संक्रान्तं शरीरं जर्झरीकृतम् ।
अकर्मयोग्यं संशीर्णं त्यक्त्वा देही ततो व्रजेत् ॥ २२
नित्यस्यानित्यसंत्यागाल्लोके तन्मरणं विदुः ।
कालं नातिक्रमेरन्हि सदेवासुरमानवाः ॥ २३
यथाऽऽकाशे न तिष्ठेत द्रव्यं किंचिदचेतनम् ।
तथा धावति कालोऽयं क्षणं किंचिन्न तिष्ठति ॥ २४
स पुनर्जायतेऽन्यत्र शरीरं नवमाविशन् ।
एवं लोकगतिर्नित्यमादिप्रभृति वर्तते ॥ २५
उमोवाच ।
भगवन्प्राणिनो बाला दृश्यन्ते मरणं गताः ।
अतिवृद्धाश्च जीवन्तो दृश्यन्ते चिरजीविनः ॥ २६
केवलं कालमरणं न प्रमाणं महेश्वर ।
तस्मान्मे संशयं ब्रूहि प्राणिनां जीवकारणम् ॥ २७

महेश्वर उवाच ।
शृणु तत्कारणं देवि निर्णयस्त्वेक एव सः ।
जीर्णत्वमात्रं कुरुते कालो देहं न पातयेत् ॥ २८
जीर्णे कर्मणि संघातः स्वयमेव विशीर्यते ।
पूर्वकर्मप्रमाणेन जीवितं मृत्युरेव वा ॥ २९
यावत्पूर्वकृतं कर्म तावज्जीवति मानवः ।
तत्र कर्मवशाद्बाला म्रियन्ते कालसंक्षयात् ॥ ३०
चिरं जीवन्ति वृद्धाश्च तथा कर्मप्रमाणतः ।
इति ते कथितं देवि निर्विशङ्का भव प्रिये ॥ ३१
उमोवाच ।
भगवन्केन वृत्तेन भवन्ति चिरजीविनः ।
अल्पायुषो नराः केन तन्मे शंसितुमर्हसि ॥ ३२
महेश्वर उवाच ।
शृणु तत्सर्वमखिलं गुह्यं पथ्यतरं नृणाम् ।
येन वृत्तेन संपन्ना भवन्ति चिरजीविनः ॥ ३३
अहिंसा सत्यवचनमक्रोधः क्षान्तिरार्जवम् ।
गुरूणां नित्यशुश्रूषा वृद्धानामपि पूजनम् ॥ ३४
शौचादकार्यसंत्यागात्सदा पथ्यस्य भोजनम् ।
एवमादिगुणं वृत्तं नराणां दीर्घजीविनाम् ॥ ३५
तपसा ब्रह्मचर्येण रसायननिषेवणात् ।
उदग्रसत्त्वा बलिनो भवन्ति चिरजीविनः ।
स्वर्गे वा मानुषे वाऽपि चिरं तिष्ठन्ति धार्मिकाः ॥ ३६
अपरे पापकर्माणः प्रायशोऽनृतवादिनः ।
हिंसाप्रिया गुरुद्विष्टा निष्क्रियाः शौचवर्जिताः ॥
नास्तिका घोरकर्माणः सततं मांसपानपाः ।
पापाचारा गुरुद्विष्टाः कोपनाः कलहप्रियाः ॥ ३८
एवमेवाशुभाचारास्तिष्ठन्ति नरके चिरम् ।
तिर्यग्योनौ तथाऽत्यन्तमल्पास्तिष्ठन्ति मानवाः ।
तस्मादल्पायुषो मर्त्यास्तादृशाः संभवन्ति ते ॥ ३९
अगम्यदेशगमनादपथ्यानां च भोजनात् ।
आयुःक्षयो भवेन्नृणामायुःक्षयकरा हि ते ॥ ४०
भवन्त्यल्पायुषस्तैस्तैरन्यथा चिरजीविनः ।
एतत्ते कथितं सर्वं भूयः श्रोतुं किमिच्छसि ॥ ४१

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि पञ्चविंशत्यधिकद्विशततमोऽध्यायः ॥ २२५ ॥

## षड्विंशत्यधिकद्विशततमोऽध्यायः ॥ २२६ ॥

परमेश्वरेण पार्वतींप्रति प्राणिनां स्त्रीत्वपुंस्त्वयोः स्वाभाविकत्वनिषेधेन कर्मायत्तत्वोक्तिः ॥ १ ॥ तथा सात्त्विकादिधर्मादिप्रतिपादनम् ॥ २ ॥

उमोवाच ।
देवदेव महादेव श्रुतं मे भगवन्निदम् ।
आत्मनो जातिसंबन्धं ब्रूहि स्त्रीपुरुषान्तरम् ॥ १
स्त्रीप्राणाः पुरुषप्राणा एकतः पृथगेव वा ।
एष मे संशयो देव तं मे छेत्तुं त्वमर्हसि ॥ २
महेश्वर उवाच ।
तदहं ते प्रवक्ष्यामि शृणु सर्वं समाहिता ।
स्त्रीत्वं पुंस्त्वमिति प्राणे स्थितिर्नास्ति शुभेक्षणे ॥ ३
निर्विकारः सदैवात्मा स्त्रीत्वं पुंस्त्वं न चात्मनि ।
कर्मप्रकारेण तथा जात्यां जात्यां प्रजायते ॥ ४
कृत्वा कर्म पुमान्स्त्री वा स्त्री पुमानपि जायते ।
स्त्रीभावं यत्पुमान्कृत्वा कर्मणा प्रमदा भवेत् ॥ ५
उमोवाच ।
भगवन्सर्वलोकेश कर्मात्मा न करोति चेत् ।
कोऽन्यः कर्मकरो देहे तन्मे त्वं वक्तुमर्हसि ॥ ६
महेश्वर उवाच ।
शृणु भामिनि कर्तारमात्मा हि न च कर्मकृत् ।
प्रकृत्या गुणयुक्तेन क्रियते कर्म नित्यशः ॥ ७
शरीरं प्राणिनां लोके यथा पित्तकफानिलैः ।
व्याप्तमेभिस्त्रिभिर्दोषैस्तथा व्याप्तं त्रिभिर्गुणैः ॥ ८
सत्त्वं रजस्तमश्चैव गुणास्त्वेते शरीरिणः ।
प्रकाशात्मकमेतेषां सत्त्वं सततमिष्यते ॥ ९
रजो दुःखात्मकं तत्र तमो मोहात्मकं स्मृतम् ।
त्रिभिरेतैर्गुणैर्युक्तं लोके कर्म प्रवर्तते ॥ १०

सत्यं प्राणिदया शौचं श्रेयःप्रीतिः क्षमा दमः
एवमादि तथाऽन्यच्च कर्म सात्त्विकमुच्यते ॥ ११
दाक्ष्यं कर्मपरत्वं च लोभो मोहो विधिं प्रति ।
कलत्रसङ्गो माधुर्यं नित्यमैश्वर्यलुब्धता ।
रजसश्चोद्भवं चैतत्कर्म नानाविधं सदा ॥ १२
अनृतं चैव पारुष्यं धृतिर्विद्वेषिता भृशम् ।
हिंसाऽसत्यं च नास्तिक्यं निद्रालस्यभयानि च ।
तमसश्चोद्भवं चैतत्कर्म पापयुतं तथा ॥ १३
तस्माद्गुणमयः सर्वः कार्यारम्भः शुभाशुभः ।
तस्मादात्मानमव्यग्रं विद्धि कर्तारमव्ययम् ॥ १४
सात्त्विकाः पुण्यलोकेषु राजसा मानुषे पदे ।
तिर्यग्योनौ च नरके तिष्ठेयुस्तामसा नराः ॥ १५
उमोवाच ।
किमर्थमात्मा भिन्नेऽस्मिन्देहे शस्त्रेण वा हते ।
स्वयं प्रयास्यति तदा तन्मे शंसितुमर्हसि ॥ १६
महेश्वर उवाच ।
तदहं ते प्रवक्ष्यामि शृणु कल्याणि कारणम् ।
एतन्निर्णायकश्चापि मुह्यन्ते सूक्ष्मबुद्धिभिः ॥ १७
कर्मक्षये तु संप्राप्ते प्राणिनां जन्मधारिणाम् ।
उपद्रवो भवेद्देहे येन केनापि हेतुना ॥ १८
तन्निमित्तं शरीरी तु शरीरं प्राप्य संक्षयम् ।
अपयाति परित्यज्य ततः कर्मवशेन सः ॥ १९
देहक्षयेपि नैवात्मा वेदनाभिर्न चाल्यते ।
तिष्ठेत्कर्मफलं यावद्व्रजेत्कर्मक्षये पुनः ॥ २०
आदिप्रभृति लोकेऽस्मिन्नेवमात्मगतिः स्मृता ।
एतत्ते कथितं देवि किं भूयः श्रोतुमिच्छसि ॥ २१

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि षड्विंशत्यधिकद्विशततमोऽध्यायः ॥ २२६ ॥

---

## सप्तविंशत्यधिकद्विशततमोऽध्यायः ॥ २२७ ॥

ईश्वरेणोमांप्रति प्राणिनामुद्भिदादिभेदेन चातुर्विध्यादिनिरूपणम् ॥ १ ॥ तथा शास्त्रजन्यज्ञानस्य श्रेयःसाधनत्वाद्युक्तिः ॥ २ ॥

उमोवाच ।
भगवन्देवदेवेश कर्मणैव शुभाशुभम् ।
यथायोगं फलं जन्तुः प्राप्नोतीति विनिश्चयः ॥ १
परेषां विप्रियं कुर्वन्यथा संप्राप्नुयाच्छुभम् ।
यद्येतदस्मिन्देहे तन्मे शंसितुमर्हसि ॥ २
महेश्वर उवाच ।
तदप्यस्ति महाभागे अभिसन्धिबलान्नृणाम् ।
हितार्थं दुःखमन्येषां कृत्वा सुखमवाप्नुयात् ॥ ३
दण्डयन्भर्त्सयन्राजा जनान्पुण्यमवाप्नुयात् ।
गुरुः संतर्जयञ्शिष्यान्भर्ता भृत्यजनान्स्वकान् ।
उन्मार्गप्रतिपन्नांश्च शास्ता धर्मफलं लभेत् ॥ ४
चिकित्सकश्च दुःखानि जनयन्हितमाप्नुयात् ।
यज्ञार्थं पशुहिंसां च कुर्वन्नपि न लिप्यते ।
एवमन्ये सुमनसो हिंसकाः स्वर्गमाप्नुयुः ॥ ५
एकस्मिन्निहते भद्रे बहवः सुखमाप्नुयुः ।
तस्मिन्हते भवेद्धर्मः कुत एव तु पातकम् ॥ ६
अहिंसतेति हत्वा तु शुद्धे कर्मणि गौरवात् ।
अभिसंधेरजिह्मत्वाच्छुद्धे धर्मस्य गौरवात् ।
एतत्कृत्वा तु पापेभ्यो न दोषं प्राप्नुयुः क्वचित् ॥ ७
उमोवाच ।
चतुर्विधानां जन्तूनां कथं ज्ञानमिह स्मृतम् ।
कृत्रिमं तत्स्वभावं वा तन्मे शंसितुमर्हसि ॥ ८
महेश्वर उवाच ।
स्थावरं जङ्गमं चैव जगद्द्विविधमुच्यते ।
चतस्रो योनयस्तत्र प्रजानां क्रमशो यथा ॥ ९
तेषामुद्भिदजा वृक्षा लतावल्ल्यश्च वीरुधः ।
दंशयूकादयश्चान्ये स्वेदजाः क्रिमिजातयः ॥ १०
पक्षिणश्छिद्रकर्णाश्च प्राणिनस्त्वण्डजा मताः ।
मृगव्यालमनुष्यांश्च विद्धि तेषां जरायुजान् ॥ ११
एवं चतुर्विधां जातिमात्मा संस्थाय तिष्ठति ॥ १२
स्पर्शेनैकेन्द्रियेणात्मा तिष्ठत्युद्भिदजेषु वै ।
शरीरस्पर्शरूपाभ्यां स्वेदजेष्वपि तिष्ठति ॥ १३
पञ्चभिश्चेन्द्रियद्वारैर्जीवन्त्यण्डजरायुजाः ॥ १४
तथा भूम्यम्बुसंयोगाद्भवन्त्युद्भिदजाः प्रिये ।

शीतोष्णयोस्तु संयोगाज्जायन्ते स्वेदजाः प्रिये ।
अण्डजाश्चापि जायन्ते संयोगात्क्लेदबीजयोः॥१५
शुक्रशोणितसंयोगात्संभवन्ति जरायुजाः ।
जरायुजानां सर्वेषां मानुषं पदमुत्तमम् ॥ १६
अतःपरं तमोत्पत्तिं शृणु देवि समाहिता ।
द्विविधं हि तमो लोके शार्वरं देहजं तथा ॥ १७
जोतिर्भिश्च तमो लोके नाशं गच्छति शार्वरम् ।
देहजं तु तमो लोके तैः समस्तैर्न शाम्यते ॥ १८
तमसस्तस्य नाशार्थं नोपायमधिजग्मिवान् ।
तपश्चचार विपुलं लोककर्ता पितामहः ॥ १९
चरतस्तु समुद्भूता वेदाः साङ्गाः सहोत्तराः ।
ताँल्लब्ध्वा मुमुदे ब्रह्मा लोकानां हितकाम्यया ।
देहजं तु तमो घोरमभूत्तैरेव नाशितम् ॥ २०
कार्याकार्यमिदं चेति वाच्यावाच्यमिदं त्विति ।
यदि चेन्न भवेल्लोके श्रुतं चारित्रदैशिकम् ।
पशुभिर्निर्विशेषं तु चेष्टन्ते मानुषा अपि ॥ २१
यज्ञादीनां समारम्भः श्रुतेनैव विधीयते ।
यज्ञस्य फलयोगेन देवलोकः समृद्ध्यते ॥ २२
प्रीतियुक्ताः पुनर्देवा मानुषाणां भवन्त्युत ।
एवं नित्यं प्रवर्धेते रोदसी च परस्परम् ॥ २३
लोकसंधारणं तस्माच्छ्रुतमित्यवधारय ।
ज्ञानाद्विशिष्टं जन्तूनां नास्ति लोकत्रयेऽपि च॥२४
सहजं तत्प्रधानं स्यादपरं कृत्रिमं स्मृतम् ।
उभयं यत्र संपन्नं भवेत्तत्र तु शोभनम् ॥ २५
संप्रगृह्य श्रुतं सर्वं कृतकृत्यो भवत्युत
उपर्युपरि मर्त्यानां देववत्संप्रकाशते ॥ २६
कामं क्रोधं भयं दर्पमज्ञानं चैव बुद्धिजम्
तच्छ्रुतं नुदति क्षिप्रं यथा वायुर्बलाहकान् ॥ २७
अल्पमात्रं कृतो धर्मो भवेज्ज्ञानवतां महान् ।
महानपि कृतो धर्मो ह्यज्ञानान्निष्फलो भवेत्॥२८
परावरज्ञो भूतानां ज्ञानवांस्तत्वविद्भवेत् ।
एवं श्रुतफलं सर्वं कथितं ते शुभेक्षणे ॥ २९

उमोवाच ।
भगवन्मानुषाः केचिज्जातिस्मरणसंयुताः ।
किमर्थमभिजायन्ते जानन्तः पौर्वदैहिकम् ।
एतन्मे तत्वतो देव मानुषेषु वदस्व भो ॥ ३०

महेश्वर उवाच ।
तदहं ते प्रवक्ष्यामि शृणु तत्वं समाहिता ॥ ३१
ये मृताः सहसा मर्त्या जायन्ते सहसा पुनः ।
तेषां पौराणिको बोधः कंचित्कालं हि तिष्ठति ३२
तस्माज्जातिस्मरा लोके जायन्ते बोधसंयुताः ।
तेषां विवर्धतां संज्ञा स्वप्नवत्सा प्रणश्यति ।
परलोकस्य चास्तित्वे मूढानां कारणं च तत् ॥ ३३

उमोवाच ।
भगवन्मानुषाः केचिन्मृता भूत्वाऽपि संप्रति ।
निवर्तमाना दृश्यन्ते देहेष्वेव पुनर्नराः ॥ ३४

महेश्वर उवाच ।
तदहं ते प्रवक्ष्यामि कारणं शृणु शोभने ॥ ३५
प्राणैर्वियुज्यमानानां बहुत्वात्प्राणिनां वधे ।
तथैव नामसामान्याद्यमदूता नृणां प्रभि ॥ ३६
वहन्ति ते क्वचिन्मोहादन्यं मर्त्यं तु यामिकाः ।
निर्विकारं हि तत्सर्वं यमो वेद कृताकृतम् ॥३७
तस्मात्संयमनीं प्राप्य यमेनैकेन मोक्षिताः ।
पुनरेव निवर्तन्ते शेषं भोक्तुं स्वकर्मणः ।
स्वकर्मण्यसमाप्ते तु निवर्तन्ते हि मानवाः ॥ ३८

उमोवाच ।
भगवन्सुप्तमात्रेण प्राणिनां स्वप्नदर्शनम् ।
किं तत्स्वभावमन्यद्वा तन्मे शंसितुमर्हसि ॥ ३९

महेश्वर उवाच ।
सुप्तानां तु मनश्चेष्टा स्वप्न इत्यभिधीयते ।
अनागतमतिक्रान्तं पश्यते संचरन्मनः ॥ ४०
निमित्तं च भवेत्तस्मात्प्राणिनां स्वप्नदर्शनम् ।
एतत्ते कथितं देवि भूयः श्रोतुं किमिच्छसि॥४१

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि सप्तविंशत्यधिकद्विशततमोऽध्यायः ॥ २२७ ॥

## अष्टाविंशत्यधिकद्विशततमोऽध्यायः ॥ २२८ ॥

परमेश्वरेण पार्वतींप्रति प्राणिनां फलनिष्पत्तौ दैवपुरुषकारयोः परस्परमापेक्षत्वेन साधनत्वोक्तिः ॥ १ ॥ तथाऽण्डजरायुजानां गर्भप्रवेशादिप्रकारकथनम् ॥ २ ॥

उमोवाच ।
भगवन्सर्वभूतेश लोके कर्मक्रियापथे ।
दैवात्प्रवर्तते सर्वमिति केचिद्व्यवस्थिताः ॥ १
अपरे चेष्टया चेति दृष्ट्वा प्रत्यक्षतः क्रियाम् ।
पक्षभेदे द्विधा चास्मिन्संशयस्थं मनो मम ।
तत्त्वं वद महादेव श्रोतुं कौतूहलं हि मे ॥ २
महेश्वर उवाच ।
तदहं ते प्रवक्ष्यामि शृणु तत्वं समाहिता ।
तदेवं कुरुते कर्म लोके देवि शुभाशुभम् ॥ ३
लक्ष्यते द्विविधं कर्म मानुषेष्वेव तच्छृणु ।
पुराकृतं तयोरेकमैहिकं त्वितरत्तथा ॥ ४
अदृष्टपूर्वं यत्कर्म तद्दैवमिति लक्ष्यते ।
विहीनं दृष्टकरणं तन्मानुषमिति स्मृतम् ॥ ५
मानुषं तु क्रियामात्रं दैवात्संभवते फलम् ।
एवं तदुभयं कर्म मानुषं विद्धि तन्नृषु ॥ ६
लौकिकं तु प्रवक्ष्यामि दैवमानुषनिर्मितम् ।
कृषौ तु दृश्यते कर्म कर्षणं वपनं तथा ॥ ७
रोपणं चैव लवनं यच्चान्यत्पौरुषं स्मृतम् ।
दैवादसिद्धिश्च भवेद्दुष्कृतं चास्ति पौरुषे ॥ ८
सुयत्नाल्लभ्यते कीर्तिर्दुर्यत्नादयशस्तथा ।
एवं लोकगतिर्देवि आदिप्रभृति वर्तते ॥ ९
उमोवाच ।
भगवन्सर्वलोकेश सुरासुरनमस्कृत ।
कथमात्मा सदा गर्भं संविशेत्कर्मकारणात् ।
तन्मे वद महादेव तद्धि गुह्यं परं मतम् ॥ १०
महेश्वर उवाच ।
शृणु भामिनि तत्सर्वं गुह्यानां परमं प्रिये ।
देवगुह्यादपि परमात्मगुह्यमिति स्मृतम् ॥ ११
देवासुरास्तन्न विदुरात्मनो हि गतागतम् ।
अदृश्यो हि सदैवात्मा जनैःसौक्ष्म्यान्निराश्रयात् ॥
अतिमायेति मायानामात्ममाया सदेष्यते ।
सोयं चतुर्विधां जातिं संविशत्यात्ममायया ।
मैथुनं शोणितं बीजं दैवमेवात्र कारणम् ॥ १३
बीजशोणितसंयोगो यदा संभवते शुभे ।
तदाऽऽत्मा विशते गर्भमेवमण्डजरायुजे ॥ १४
एवं संयोगकाले तु आत्मा गर्भत्वमेयिवान् ॥ १५
कलिलाज्जायते पिण्डं पिण्डात्पेश्यर्बुदं भवेत् ।
व्यक्तिभावगतं चैव कर्म त्वाश्रयते क्रमात् ॥ १६
एवं विवर्धमानेन कर्मात्मा सह वर्धते ।
एवमात्मगतिं विद्धि यन्मां पृच्छसि सुप्रभे ॥ १७
रोपणं चैव लवनं यच्चान्यत्पौरुषं स्मृतम् ॥ १८
काले वृष्टिः सुवापं च प्ररोहः पक्तिरेव च ।
एवमादि तु यच्चान्यत्तद्दैवतमिति स्मृतम् ॥ १९
पञ्चभूतस्थितिश्चैव ज्योतिषामयनं तथा ।
अबुद्धिगम्यं यन्मर्त्यैर्हेतुभिर्वा न विद्यते ॥ २०
तादृशं कारणं दैवं शुभं वा यदि वेतरत् ।
यादृशं चात्मना शक्यं तत्पौरुषमिति स्मृतम् २१
केवलं फलनिष्पत्तिरेकेन तु न शक्यते ।
पौरुषेणैव दैवेन युगपद्ग्रथितं प्रिये ।
तयोः समाहितं कर्म शीतोष्णं युगपत्तथा ॥ २२
पौरुषं तु तयोः पूर्वमारब्धव्यं विजानता ।
आत्मना तु न शक्यं हि न तथा कीर्तिमाप्नुयात् २३
खननान्मथनाल्लोके जलाग्निप्रापणं यथा ।
तथा पुरुषकारे तु दैवसंपत्समाहिता ॥ २४
नरस्याकुर्वतः कर्म दैवसंपन्न लभ्यते ।
तस्मात्सर्वसमारम्भो दैवमानुषनिर्मितः ॥ २५
असुरा राक्षसाश्चैव मन्यन्ते लोकनाशनाः ।
पश्यन्ते न च ते पापाः केवलं मांसभक्षणाः ॥ २६
प्रच्छादितं हि तत्सर्वं गूढमाया हि देवताः ।
तदहं ते प्रवक्ष्यामि देवि गुह्यं पुरस्सरम् ॥ २७
आदिकाले नराः सर्वे कृत्वा कर्म शुभाशुभम् ।
भुञ्जते पश्यमानास्ते वृत्तान्तं लोकयोर्द्वयोः ॥ २८

यथैवान्नकृतं विद्युर्देशान्तरगता नराः ।
विद्युस्तथैवान्तकाले सुकृतं पौर्वदैहिकम् ॥ २९
एवं व्यवस्थिते लोके सर्वे धर्मरताऽभवन् ।
अचिरेणैव कालेन स्वर्गः संपूरितस्तदा ॥ ३०
देवानामपि संबाधं दृष्ट्वा ब्रह्माऽप्यचिन्तयत् ।
संचरन्ते कथं स्वर्गं मानुषाः प्रविशन्ति हि ॥ ३१
इत्येवमनुचिन्त्यैव मानुषान्समसमोहयत् ।
तदाप्रभृति ते मर्त्या न विदुस्ते पुराकृतम् ॥३२
कामक्रोधौ तु तत्काले मानुषेष्ववपातयत् ।
ताभ्यामभिहता मर्त्याः स्वर्गलोकं न पेदिरे ॥३३
पुराकृतस्याविज्ञानात्कामक्रोधाभिपीडिताः ।
नैतदस्तीति मन्वाना विकारांश्चक्रिरे पुनः ॥३४
अकार्यादिमहादोषानाहरन्त्यात्मकारणात् ।
विस्मृत्य धर्मकार्याणि परलोकभयं तदा ॥ ३५
एवं व्यवस्थिते लोके कश्मलं समपद्यत ।
लोकानां चैव देवानां क्षयायैव तथा प्रिये ।
नरकाः पूरिताश्चासन्प्राणिभिः पापकारिभिः ३६
पुनरेव तु तान्दृष्ट्वा लोककर्ता पितामहः ।
अचिन्तयत्तमेवार्थं लोकानां हितकारणात् ।
समत्वेन कथं लोके वर्तेतेति मुहुर्मुहुः ॥ ३७
चिन्तयित्वा तदा ब्रह्मा ज्ञानेन तपसा प्रिये ।
अकरोज्ज्ञानदृश्यं तत्परलोकं न चक्षुषा ॥ ३८
उमोवाच ।
भगवन्मृतमात्रस्तु योयं जात इति स्मृतः ।
तथैव दृश्यते जातस्तत्रात्मा तु कथं भवेत् ॥ ३९
गर्भादावेव संविष्ट आत्मा तु भगवन्मम ।
एष मे संशयो देव तन्मे छेत्तुं त्वमर्हसि ॥ ४०
महेश्वर उवाच ।
तदहं ते प्रवक्ष्यामि शृणु तत्त्वं समाहिता ॥ ४१
अन्यो गर्भगतो भूत्वा तत्रैव निधनं गतः ।
पुनरन्यच्छरीरं तत्प्रविश्य भुवि जायते ।
तत्त्वविन्नैव सर्वस्तु दैवयोगस्तु संभवेत् ॥ ४२
सूतिकाया हितार्थं च मोहनार्थं च देहिनाम् ।
समकर्मविधानत्वादित्येवं विद्धि शोभने ॥ ४३
काङ्क्षमाणास्तु नरकं भुक्त्वा केचित्प्रयान्ति हि ।
मायासंयामिका नाम यज्जन्ममरणान्तरे ।
इति ते कथितं देवि भूयः श्रोतुं किमिच्छसि ॥ ४४
उमोवाच ।
भगवन्सर्वलोकेश लोकनाथ वृषध्वज ।
नास्त्यात्मा कर्मभोक्तेति मृतो जन्तुर्न जायते ४५
स्वभावाज्जायते सर्वं यथा वृक्षफलं तथा ।
यथोर्मयः संभवन्ति तथैव जगदाकृतिः ॥ ४६
तपोदानानि यत्कर्म तत्र तद्दृश्यते वृथा ।
नास्ति पौनर्भवं जन्म इति केचिद्व्यवस्थिताः॥ ४७
परोक्षवचनं श्रुत्वा न प्रत्यक्षस्य दर्शनात् ।
तत्सर्वं नास्तिनास्तीति संशयस्थास्तथा परे ॥ ४८
पक्षभेदान्तरे चास्मिंस्तत्त्वं मे वक्तुमर्हसि ।
उक्तं भगवता यत्तु तत्तु लोकस्य संस्थितिः ॥ ४९
प्रश्नमेतत्तु पृच्छन्त्या रुद्राण्या परिषत्तदा ।
कौतूहलयुता श्रोतुं समाहितमनाऽभवत् ॥ ५०
महेश्वर उवाच ।
नैतदस्ति महाभागे यद्वदन्तीह नास्तिकाः ।
एतदेवाभिशस्तानां श्रुतविद्वेषिणां मतम् ॥ ५१
सर्वमर्थं श्रुतं दृष्टं यत्प्रागुक्तं मया तव ।
तदाप्रभृति मर्त्यानां श्रुतमाश्रित्य पण्डिताः॥५२
कामान्संछिद्य परिघान्धृत्या वै परमासिना ।
अभियान्त्येव ते स्वर्गं पश्यन्तः कर्मणः फलम् ५३
एवं श्रद्धाफलं लोके परतः सुमहत्फलम् ।
बुद्धिः श्रद्धा च विनयः कारणानि हितैषिणाम् ५४
तस्मात्स्वर्गाभिगन्तारः कतिचित्त्वभवन्नराः ।
अन्ये करणहीनत्वान्नास्तिक्यं भावमाश्रिताः॥५५
श्रुतविद्वेषिणो मूर्खा नास्तिका दृढनिश्चयाः ।
निष्क्रियास्तु निरन्नादाः पतन्त्येवाधमां गतिम् ५६
नास्त्यस्तीति पुनर्जन्म कवयोऽप्यत्र मोहिताः ।
नाधिगच्छन्ति तन्नित्यं हेतुवादशतैरपि ॥ ५७
एषा ब्रह्मकृता माया दुर्विज्ञेया
किंपुनर्मानवैर्लोके ज्ञातुकामैः कुबुद्धिभिः ॥ ५८
केवलं श्रद्धया देवि श्रुतमात्मनिविष्टया ।

ततोऽस्त्रीऽस्त्येव मन्तव्यं तथा हितमवाप्नुयात् ॥ ५९
देवगुह्येषु चान्येषु हेतुर्देवि निरर्थकः ।
बधिरान्धवदेवात्र वर्तितव्यं हितैषिणा ।
एतत्ते कथितं देवि ऋषिगुह्यं प्रजाहितम् ॥ ६०

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि अष्टाविंशत्यधिकद्विशततमोऽध्यायः ॥ २२८ ॥

## एकोनत्रिंशदधिकद्विशततमोऽध्यायः ॥ २२९ ॥

महादेवेन देवींप्रति यमनगरतन्मार्गादिप्रतिपादनपूर्वकं पापिनां यातनानुभवप्रकारादिप्रतिपादनम् ॥ १ ॥

उमोवाच ।
भगवन्सर्वलोकेश त्रिपुरार्दन शंकर ।
कीदृशा यमदण्डास्ते कीदृशाः परिचारकाः ॥ १
कथं मृतास्ते गच्छन्ति प्राणिनो यमसादनम् ।
कीदृशं भवनं तस्य कथं दण्डयति प्रजाः ।
एतत्सर्वं महादेव श्रोतुमिच्छाम्यहं प्रभो ॥
महेश्वर उवाच
शृणु कल्याणि तत्सर्वं यत्ते देवि मनःप्रियम् ।
दक्षिणस्यां दिशि शुभे यमस्य सदनं महत् ॥ ३
विचित्रं रमणीयं च नानाभावसमन्वितम् ।
पितृभिः प्रेतसङ्घैश्च यमदूतैश्च संततम् ॥ ४
प्राणिसङ्घैश्च बहुभिः कर्मवश्यैश्च पूरितम् ।
तत्रास्ते दण्डयन्नित्यं यमो लोकहिते रतः ॥ ५
मायया सततं वेत्ति प्राणिनां यच्छुभाशुभम् ।
मायया संहरंस्तत्र प्राणिसङ्घान्यतस्ततः ॥ ६
तस्य मायामयाः पाशा न वेद्यन्ते सुरासुरैः ।
को हि मानुषमात्रस्तु देवस्य चरितं महत् ॥ ७
एवं संवसतस्तस्य यमस्य परिचारकाः ।
गृहीत्वा सन्नयन्त्येव प्राणिनः क्षीणकर्मणः ।
येन केनापदेशेन त्वपदेशसमुद्भवाः ॥ ८
कर्मणा प्राणिनो लोके उत्तमाधममध्यमाः ।
यथार्हं तान्समादाय नयन्ति यमसादनम् ॥ ९
धार्मिकानुत्तमान्विद्धि स्वर्गिणस्ते यथाऽमराः ।
त्रिषु जन्म लभन्ते ये कर्मणा मध्यमाः स्मृताः ।
तिर्यङ्नरकगन्तारो ह्यधमास्ते नराधमाः ॥ १०
पन्थानस्त्रिविधा दृष्टाः सर्वेषां गतजीविनाम् ।
रमणीयं निराबाधं दुर्दर्शमिति नामतः ॥ ११
रमणीयं तु यन्मार्गं पताकाध्वजसंकुलम् ।
धूपितं सिक्तसंमृष्टं पुष्पमालाभिसंकुलम् ॥ १२
मनोहरं सुखस्पर्शं गच्छतामेव तद्भवेत् ।
निराबाधं यथालोकं सुप्रशस्तं कृतं भवेत् ॥ १३
तृतीयं यत्तु दुर्दर्शं दुर्गन्धि तमसा वृतम् ।
परुषं शर्कराकीर्णं श्वदंष्ट्राबहुलं भृशम् ।
क्रिमिकीटसमाकीर्णं भजतामतिदुर्गमम् ॥ १४
मार्गैरेवं त्रिभिर्नित्यमुत्तमाधममध्यमान् ।
सन्नयन्ति यथा काले तन्मे शृणु शुचिस्मिते ॥ १५
उत्तमानन्तकाले तु यमदूताः सुसंवृताः ।
नयन्ति सुखमादाय रमणीयपथेन वै ॥ १६
उमोवाच ।
भगवंस्तत्र चात्मानं त्यक्तदेहं निराश्रयम् ।
अदृश्यं कथमादाय संनयन्ति यमान्तिकम् ॥ १७
महेश्वर उवाच ।
शृणु भामिनि तत्सर्वं त्रिविधं देहकारणम् ।
कर्मवश्यं भोगवश्यं दुःखवश्यमिति प्रिये ॥ १८
मानुषं कर्मवश्यं स्याद्द्वितीयं भोगसाधनम् ।
तृतीयं यातनावश्यं शरीरं मायया कृतम् ।
यमलोके न चान्यत्र दृश्यते यातनायुतम् ॥ १९
शरीरैर्यातनावश्यैर्जीवानामुच्य भामिनि ।
नयन्ति यामिकास्तत्र प्राणिनो मायया मृतान् २०
मध्यमान्योधवेषेण मध्यमेन पथा तथा ॥ २१
चण्डालवेषास्त्वधमान्गृहीत्वा भर्त्सतर्जनैः ।
आकर्षन्तस्तथा पाशैर्दुर्दर्शेन नयन्ति तान् ॥ २२
त्रिविधानेवमादाय नयन्ति यमसादनम् ।
धर्मासनगतं दक्षं भ्राजमानं स्वतेजसा ॥ २३
लोकपालं सहाध्यक्षं तथैव परिषद्गतम् ।
दर्शयन्ति महाभागे यामिकास्तं निवेद्य ते ॥ २४

पूजयन्दण्डयन्कांश्चित्तेषां शृण्वञ्शुभाशुभम् ।
व्याहृतो बहुसाहस्रैस्तत्रास्ते सततं यमः ॥ २५
गताना तु यमस्तेषामुत्तमानामभिपूजया ।
अभिसंगृह्य विधिवत्पृष्ट्वा स्वागतकौशलम् ।
प्रस्तुत्य तत्कृतं तेषां लोकं संदिशते यमः ॥ २६
यमेनैवमनुज्ञाता यान्ति पश्चात्त्रिविष्टपम् ॥ २७
मध्यमानां यमस्तेषां श्रुत्वा कर्म यथातथम् ।
जायन्तां मानुषेष्वेव इति संदिशते च तान् २८
अधमान्क्लेशसंयुक्तान्यमो नावेक्षते गतान् ।
यमस्य पुरुषा घोराश्चण्डालसमदर्शनाः ।
यातनाः प्रापयन्त्येताँल्लोकपालस्य शासनात् ॥ २९
भिन्दन्तश्च तुदन्तश्च प्रकर्षन्तो यतस्ततः ।
क्रोशन्तः पातयन्त्येतान्मिथो गर्तेष्ववाङ्मुखान् ॥
संयामिन्यः शिलास्तेषां पतन्ति शिरसि प्रिये ।
अयोमुखाः कङ्कबला भक्षयन्ति सुदारुणाः ॥ ३१
असिपत्रवने घोरे चारयन्ति तथा परान् ।
तीक्ष्णदंष्ट्रास्तथा श्वानः कांश्चित्तत्र ह्यदन्ति वै ॥ ३२
तत्र वैतरणी नाम नदी ग्राहसमाकुला ।
दुष्प्रवेशा च घोरा च मूत्रशोणितवाहिनी ।
तस्यां संमज्जयन्त्येते तृषितान्पाययन्ति तान् ॥ ३३
आरोपयन्ति वै कांश्चित्तत्र कण्टकशल्मलीम् ।
यन्त्रचक्रेषु तिलवत्पीड्यन्ते तत्र केचन ॥ ३४
अङ्गारेषु च दह्यन्ते तथा दुष्कृतकारिणः
कुम्भीपाकेषु पच्यन्ते पच्यन्ते सिकतासु वै ॥ ३५
पाट्यन्ते तरुवच्छस्त्रैः पापिनः क्रकचादिभिः ।
भिद्यन्ते भागशः शूलैस्तुद्यन्ते सूक्ष्मसूचिभिः ॥ ३६
एवं त्वया कृतं दोषं तदर्थं दण्डनं त्विति ।
वाचैवं घोषयन्ति स्म दण्डमानाः समन्ततः ॥ ३७
एवं ते यातनां प्राप्य शरीरैर्यातनाशयैः ।
प्रसहन्तश्च तद्दुःखं स्मरन्तः स्वापराधजम् ॥ ३८
क्रोशन्तश्च रुदन्तश्च न मुच्यन्ते कथंचन ।
स्मरन्तस्तत्र तप्यन्ते पापमात्मकृतं भृशम् ॥ ३९
एवं बहुविधा दण्डा भुज्यन्ते पापकारिभिः ।
यातनाभिश्च पच्यन्ते नरकेषु पुनः पुनः ॥ ४०
अपरे यातनां भुक्त्वा मुच्यन्ते तत्र किल्बिषात् ।
पापदोषक्षयकरा यातनाः संस्मृता नृणाम् ।
बहुतप्तं यथा लोहममलं तत्तथा भवेत् ॥ ४१

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि एकोनत्रिंशदधिकद्विशततमोऽध्यायः ॥ २२९ ॥

---

## त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३० ॥

परमेश्वरेण पार्वतींप्रति रौरवादिनरकविभजनपूर्वकं प्राणिनां दुष्कृततारतम्येन तेषु यातनानुभवप्रकारकथनम् ॥ १ ॥ तथा यातनानुभवानन्तरं कर्मशेषफलतया नानानीचयोनिप्राप्त्यादिकथनम् ॥ २ ॥

उमोवाच ।
भगवंस्ते कथं तत्र दण्ड्यन्ते नरकेषु वै ।
कति ते नरका घोराः कीदृशास्ते महेश्वर ॥ १
महेश्वर उवाच ।
शृणु भामिनि तत्सर्वं पञ्चैते नरकाः स्मृताः
भूमेरधस्ताद्विहिता घोरा दुष्कृतकर्मणाम् ॥
प्रथमं रौरवं नाम शतयोजनमायतम् ।
तावत्प्रमाणविस्तीर्णं तामसं पापपीडितम् ॥
भृशं दुर्गन्धि परुषं क्रिमिभिर्दारुणैर्वृतम् ।
अतिघोरमनिर्देश्यं प्रतिकूलं ततस्ततः ॥
ते चिरं तत्र तिष्ठन्ति न तत्र शयनासने ।
क्रिमिभिर्भक्ष्यमाणाश्च विष्ठागन्धसमायुताः ॥
एवंप्रमाणमुद्विग्ना यावत्तिष्ठन्ति तत्र ते ।
यातनाभ्यो दशगुणं नरके दुःखमिष्यते ॥
तत्र चात्यन्तिकं दुःखमिष्यते च शुभेक्षणे ।
क्रोशन्तश्च रुदन्तश्च वेदनास्तत्र भुञ्जते ॥ ७
भ्रमन्ति दुःखमोक्षार्थं ज्ञाता कश्चिन्न विद्यते ।
दुःखस्यान्तरमात्रं तु ज्ञानं वा न च लभ्यते ॥ ८
महारौरवसंज्ञं तु द्वितीयं नरकं प्रिये ।
तस्माद्द्विगुणितं विद्धि माने दुःखे च रौरवात् ॥ ९

तृतीयं नरकं तत्र कण्टकावनसंज्ञितम् ।
ततो द्विगुणितं तच्च पूर्वाभ्यां दुःखमानयोः ।
महापातकसंयुक्ता घोरास्तस्मिन्विशन्ति हि ॥ १०
अग्निकुण्डमिति ख्यातं चतुर्थं नरकं प्रिये ।
एतद्द्विगुणितं तस्माद्यथानिष्टसुखं तथा ॥ ११
ततो दुःखं हि सुमहदमानुषमिति स्मृतम् ।
भुञ्जते तत्रतत्रैव दुःखं दुष्कृतकारिणः ॥ १२
तत्र दुःखमनिर्देश्यं वहद्घोरं यथा तथा ।
पञ्चेन्द्रियैरसंबाधात्पञ्चकष्टमिति स्मृतम् ।
भुञ्जते तत्रतत्रैव दुःखं दुष्कृतकारिणः ॥ १३
अमानुषार्हजं दुःखं महाभूतैश्च भुञ्जते ।
अतिघोरं चिरं कृत्वा महाभूतानि यान्ति तम् १४
पञ्च कष्टेन हि समं नास्ति दुःखं तथा परम् ।
दुःखस्थानमिति प्राहुः पञ्चकष्टमिति प्रिये ॥ १५
एवं त्वेतेषु तिष्ठन्ति प्राणिनो दुःखभागिनः ।
अन्ये च नरकाः सन्ति अवीचिप्रमुखाः प्रिये॥१६
क्रोशन्तश्च रुदन्तश्च वेदनार्ता भृशातुराः ।
केचिद्भ्रमन्तश्चेष्टन्ते केचिद्धावन्ति चातुराः ॥ १७
आधावन्तो निवार्यन्ते शूलहस्तैर्यतस्ततः ।
रुजार्दितास्तृषायुक्ताः प्राणिनः पापकारिणः॥१८
यावत्पूर्वकृतं तावन्न मुच्यन्ते कथंचन ।
क्रिमिभिर्भक्ष्यमाणाश्च वेदनार्तास्तृषान्विताः १९
संस्मरन्तः स्वकं पापं कृतमात्मापराधजम् ।
शोचन्तस्तत्र तिष्ठन्ति यावत्पापक्षयं प्रिये ।
एवं भुक्त्वा तु नरकं मुच्यन्ते पापसंक्षयात् ॥ २०
उमोवाच ।
भगवन्कतिकालं ते तिष्ठन्ति नरकेषु वै ॥ २१
महेश्वर उवाच ।
शतवर्षसहस्राणामादिं कृत्वा हि जन्तवः ।
तिष्ठन्ति नरकावासाः प्रलयान्तमिति स्थितिः २२
उमोवाच ।
भगवंस्तेषु के तत्र तिष्ठन्तीति वद प्रभो ॥ २३
महेश्वर उवाच ।
रौरवे शतसाहस्रं वर्षाणामिति संस्थितिः ।
मानुषघ्नाः कृतघ्नाश्च तथैवानृतवादिनः ॥ २४
द्विर्नीये द्विगुणं कालं पच्यन्ते तादृशा नराः ।
महापातकयुक्तास्तु नृनीये दुःखमाप्नुयुः ॥ २५
एतावन्मानुषमहं परमन्येषु लक्ष्यते ॥ २६
यक्षा विद्याधराश्चैव काद्रवेयाश्च किंनराः ।
गन्धर्वभूतसङ्घाश्च तेषां पापयुता भृशम् ।
चतुर्थे परिपच्यन्ते तादृशा नरकाः स्मृताः ॥२७
चतुर्थे परितप्यन्ते यावद्युगविपर्ययः ।
सहन्तस्तादृशं घोरं पञ्चकष्टे तु यादृशम् ।
तत्रास्य चिरदुःखस्य ह्यधोऽन्यान्विद्धि मानुषान् ॥
एवं ते नरकान्भुक्त्वा तत्र क्षपितकल्मषाः ।
नरकेभ्यो विमुक्ताश्च जायन्ते क्रिमिजातिषु ॥२९
उद्भेदजेषु वा केचिदत्रापि क्षीणकल्मषाः ।
पुनरेव प्रजायन्ते मृगपक्षिषु शोभने ।
मृगपक्षिषु तद्भुक्त्वा लभन्ते मानुषं पदम् ॥ ३०
उमोवाच ।
नानाजातिषु केनैव जायन्ते पापकारिणः ॥ ३१
महेश्वर उवाच ।
तदहं ते प्रवक्ष्यामि यत्त्वमिच्छसि शोभने ।
सर्वदाऽऽत्मा कर्मवशो नानाजातिषु जायते॥३२
यश्च मांसप्रियो नित्यं काकगृध्रान्स संस्पृशेत् ।
सुरापः सततं मर्त्यः सूकरत्वं व्रजेद्ध्रुवम् ॥ ३३
अभक्ष्यभक्षणो मर्त्यः काकजातिषु जायते ।
आत्मघ्नो यो नरः कोपात्प्रेतजातिषु तिष्ठति॥३४
पैशुन्यात्परिवादाच्च कुक्कुटत्वमवाप्नुयात् ।
नास्तिकश्चैव यो मूर्खो मृगजातिं स गच्छति॥३५
हिंसाविहारस्तु नरः क्रिमिकीटेषु जायते ।
अतिमानयुतो नित्यं प्रेत्य गर्दभतां व्रजेत् ॥३६
अगम्यागमनाच्चैव परदारनिषेवणात् ।
मूषिकत्वं व्रजेन्मर्त्यो नास्ति तत्र विचारणा॥ ३७
कृतघ्नो मित्रघाती च सृगालवृकजातिषु ।
कृतघ्नः पुत्रघाती च स्थावरेष्वथ तिष्ठति ॥ ३८
एवमाद्यशुभं कृत्वा नरा निरयगामिनः ।

तांस्तान्भावान्प्रपद्यन्ते स्वकृतस्यैव कारणात् ॥३९
एवंजातिषु निर्दिश्याः प्राणिनः पापकारिणः ।
कथंचित्पुनरुत्पद्य लभन्ते मानुषं पदम् ॥ ४०
बहुशश्चाग्निसंक्रान्तं लोहं शुचिमयं तथा ।
बहुदुःखाभिसंतप्तस्तथाऽऽत्मा शोध्यते बलात् ।
तस्मात्सुदुर्लभं चेति विद्धि जन्मसु मानुषम् ॥४१

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३० ॥

## एकत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३१ ॥

परमेश्वरेण पार्वतींप्रति शुभाशुभकर्मणां मानसिकत्वादिभेदेन त्रैविध्यकथनपूर्वकं तत्तत्फलनिरूपणम् ॥ १ ॥ तथा मद्योत्पत्तिकारणादिकथनपूर्वकं तत्पानजदोषादिप्रतिपादनम् ॥ २ ॥

---

उमोवाच ।
भगवन्देवदेवेश शूलपाणे वृषध्वज ।
श्रुतं मे परमं गुह्यं प्रसादात्ते वरप्रद ॥ १
श्रोतुं भूयोऽहमिच्छामि प्रजानां हितकारणात् ।
शुभाशुभमिति प्रोक्तं कर्म स्वंस्वं समासतः ॥ २
तन्मे विस्तरतो ब्रूहि शुभाशुभविधिं प्रति ।
अशुभं कीदृशं कर्म प्राणिनो यन्निपातयेत् ॥ ३
शुभं वापि कथं देव प्रजानामूर्ध्वदं भवेत् ।
एतन्मे वद देवेश श्रोतुकामाऽस्मि कीर्तय ॥ ४
महेश्वर उवाच ।
तदहं ते प्रवक्ष्यामि तत्सर्वं शृणु शोभने ।
सुकृतं दुष्कृतं चेति द्विविधं कर्मविस्तरम् ॥ ५
तयोर्यद्दुष्कृतं कर्म तच्च संजायते त्रिधा ।
मनसा कर्मणा वाचा बुद्धिमोहसमुद्भवात् ॥ ६
मनःपूर्वं तु वा कर्म वर्तते वाङ्मयं ततः ।
जायते वै क्रियायोगमनु चेष्टाक्रमः प्रिये ॥ ७
अभिद्रोहोऽभ्यसूया च परार्थेषु च वै स्पृहा ।
शुभाशुभानां मर्त्यानां वर्तनं परिवारितम् ॥ ८
धर्मकार्ये यदाऽश्रद्धा पापकर्मणि हर्षणम् ।
एवमाद्यशुभं कर्म मनसा पापमुच्यते ॥ ९
अनृतं यच्च परुषमबद्धवचनं कटु ।
असत्यं परिवादश्च पापमेतत्तु वाङ्मयम् ॥ १०
अगम्यागमनं चैव परदारनिषेवणम् ।
वधबन्धपरिक्लेशैः परप्राणोपतापनम् ॥ ११
चौर्यं परेषां द्रव्याणां हरणं नाशनं तथा ।
अभक्ष्यभक्षणं चैव व्यसनेष्वविषक्तता ॥ १२
दर्पात्स्तम्भाभिमानाच्च परेषामुपतापनम् ।
अकार्याणां च करणमशौचं पानसेवनम् ॥ १३
दौःशील्यं पापसंपर्के साहाय्यं पापकर्मणि ।
अधर्म्यमयशस्यं च कार्यं तस्य निषेवणम् ।
एवमाद्यशुभं चान्यच्छारीरं पापमुच्यते ॥ १४
मानसाद्वाङ्मयं पापं विशिष्टमिति लक्ष्यते ।
वाङ्मयादपि वै पापाच्छारीरं गण्यते बहु ॥ १५
एवं पापयुतं कर्म त्रिविधं पातयेन्नरम् ।
परापकारजननमत्यन्तं पातकं स्मृतम् ॥ १६
त्रिविधं तत्कृतं पापं कर्तारं पापकं नयेत् ।
पातकं चापि यत्कर्म कर्मणा बुद्धिपूर्वकम् ॥ १७
सापदेशमवश्यं तत्कर्तव्यमिति तत्कृतम् ।
कथंचित्तत्कृतमपि कर्ता तेन स लिप्यते ॥ १८
अवश्यं पापदेशेन प्रतिहन्येत कारणम् ॥ १९
उमोवाच ।
भगवन्पापकं कर्म यथा कृत्वा न लिप्यते ॥२०
महेश्वर उवाच ।
यो नरोऽनपराधी च स्वात्मप्राणस्य रक्षणात् ।
शत्रुमुद्यतशस्त्रं वा पूर्वं तेन हतोपि वा ।
प्रतिहन्यन्नरो हिंस्रान्न स पापेन लिप्यते ॥ २१
चोरादधिकसंत्रस्तस्तत्प्रतीकारचेष्टया ।
यः प्रजघ्नन्नरो हन्यान्न स पापेन लिप्यते ॥ २२
ग्रामार्थं भर्तृपिण्डार्थं दीनानुग्रहकारणात् ।
वधबन्धपरिक्लेशान्कुर्वन्पापात्प्रमुच्यते ॥ २३
दुर्भिक्षे चात्मवृत्त्यर्थमेकायतनगस्तथा ।
अकार्यं वाऽप्यभक्ष्यं वा कृत्वा पापान्न लिप्यते२४

विधिरेष गृहस्थानां प्रायेणैवोपदिश्यते ।
अवाच्यं वाऽप्यकार्यं वा देशकालवशेन तु ॥२५
बुद्धिपूर्वं नरः कुर्वंस्तत्प्रयोजनमात्रया ।
किंचिद्वा लिप्यते पापैरथवा न च लिप्यते ॥२६
एवं देवि विजानीहि नास्ति तत्र विचारणा २७
उमोवाच ।
भगवन्पानदोषांश्च पेयापेयत्वकारणम् ।
एतदिच्छाम्यहं श्रोतुं तन्मे वद महेश्वर ॥ २८
महेश्वर उवाच ।
हन्त ते कथयिष्यामि पानोत्पत्तिं शुचिस्मिते २९
पुरा सर्वेऽभवन्मर्त्या बुद्धिमन्तो नयानुगाः ।
शुचयश्च शुभाचाराः सर्वे चोन्मनसः प्रिये ॥३०
एवंभूते तदा लोके प्रेष्यकृन्न परस्परम् ।
प्रेष्याभावान्मनुष्याणां कर्मारम्भो ननाश ह॥३१
उभयोर्लोकयोर्नाशं दृष्ट्वा कर्मक्षयात्प्रभुः ।
यज्ञकर्म कथं लोके वर्तेतेति पितामहः ॥ ३२
आज्ञापयत्सुरान्देवि मोहयध्वेति मानुषान् ।
तमसः सारमुद्धृत्य पानं बुद्धिप्रणाशनम्
न्यपातयन्मनुष्येषु पापदोषावहं प्रिये ॥ ३३
तदाप्रभृति तत्पानान्मुमुहुर्मानवा भुवि ।
कार्याकार्यमजानन्तो वाच्यावाच्यं गुणागुणम्३४
केचिद्धसन्ति तत्पीत्वा प्रवदन्ति तथा परे ।
नृत्यन्ति मुदिताः केचिद्गायन्ति च शुभाशुभान्
कलिं ते कुर्वतेऽभीष्टं प्रहरन्ति परस्परम् ।
क्वचिद्धावन्ति सहसा प्रस्खलन्ति पतन्ति च ३६
अयुक्तं बहु भाषन्ते यत्र क्वचन शोभने ।
नग्ना विक्षिप्य गात्राणि नष्टज्ञाना इवासते ॥३७
एवं बहुविधान्भावान्कुर्वन्ति भ्रान्तचेतनाः ।
ये पिबन्ति महामोहं पानं पापयुता नराः ॥३८
धृतिं लज्जां च बुद्धिं च पानं पीतं प्रणाशयेत् ।
तस्मान्नराः संभवन्ति निर्लज्जा निरपत्रपाः ॥३९
बुद्धिसत्त्वैः परिक्षीणास्तेजोहीना मलान्विताः ।
पीत्वापीत्वा तृषायुक्ताः पानपाः संभवन्ति च ४०
पानकामाः पानकथाः पानकालाभिकाङ्क्षिणः ।
पानार्थं कर्मवश्यास्ते संभवन्ति नराधमाः ॥ ४१
पानकामास्तृषायोगमद्बुद्धिसत्त्वपरिक्षयात् ।
पानदानां प्रेष्यकाराः पानपाः सहमाऽभवन्॥४२
तदाप्रभृति वै लोके दीनैः पानवशैर्नरैः ।
कारयन्ति च कर्माणि बुद्धिमन्तस्तु पानपाः॥४३
कारुत्वमथ दासत्वं प्रेष्यतामेत्य पानपाः ।
सर्वकर्मकराश्चासन्पशुवद्रज्जुबन्धिताः ॥ ४४
पानपस्तु सुरां पीत्वा तदा बुद्धिप्रणाशनात्
कार्याकार्यस्य चाज्ञानाद्यथेष्टकरणात्स्वयम् ।
विदुषामविधेयत्वात्पापमेवाभिपद्यते ॥ ४५
परिभूतो भवेल्लोके मद्यपो मित्रभेदकः ।
सर्वकालमशुद्धिं च सर्वभक्षस्तथा भवेत् ॥ ४६
विनष्टो ज्ञातिविद्वद्भ्यः सततं कलिभावगः ।
परुषं कटुकं घोरं वाक्यं वदति सर्वशः ॥ ४७
गुरूनतिवदेन्मत्तः परदारान्प्रधर्षयेत् ।
संविदं कुरुते शौण्डैर्न शृणोति हितं क्वचित् ॥४८
एवं बहुविधा दोषाः पानपे सन्ति शोभने ।
केवलं नरकं यान्ति नास्ति तत्र विचारणा ।
तस्मात्तद्वर्जितं सद्भिः पानमात्महितैषिभिः ॥४९
यदि पानं न वर्जेरन्सन्तश्चारित्रकारणात् ।
भवेदेतज्जगत्सर्वममर्यादं च निष्क्रियम् ॥ ५०
तस्माद्बुद्धेर्हि रक्षार्थं सद्भिः पानं विवर्जितम् ।
इति ते दुष्कृतं सर्वं कथितं त्रिविधं प्रिये ॥ ५१

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि एकत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३१ ॥

विनष्टो ज्ञानविद्भ्य इति ड. थ. पाठः ॥ ४७ ॥ | एकत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३१ ॥

## द्वात्रिंशदधिकद्विशततमोऽध्यायः ॥ २३२ ॥

परमेश्वरेण पार्वतींप्रति सुकृतस्य त्रेधा विभजनेन तल्लक्षणादिकथनम् ॥ १ ॥

महेश्वर उवाच ।
विधानं सुकृतस्यापि भूयः शृणु शुचिस्मिते ।
प्रोच्यते तत्रिधा देवि सुकृतं च समासतः ॥ १
यदौपरमिकं चैव सुकृतं निरुपद्रवम् ।
तथैव सोपकरणं तावता सुकृतं विदुः ॥ २
निवृत्तिः पापकर्मभ्यस्तदौपरमिकं प्रिये ।
मनोवाक्कायजा दोषाः शृणु मे वर्जनाच्छुभम्॥३
त्रैविध्यदोषोपरमे यस्तु दोषव्यपेक्षया ।
स हि प्राप्नोति सकलं सर्वदुष्कृतवर्जनात् ॥ ४
प्रथमं वर्जयेद्दोषान्युगपत्पृथगेव वा ।
तथा धर्ममवाप्नोति दोषत्यागो हि दुष्करः ।
दोषसाकल्यसंत्यागान्मुनिर्भवति मानवः ॥
सौकर्यं पश्य धर्मस्य कार्यारम्भादृतेऽपि च ।
आत्मा च लब्धोपरमो लभन्ते सुकृतं परम् ॥ ६
अहो नृशंसाः पच्यन्ते मानुषाः स्वल्पबुद्धयः ।
एतादृशं न बुध्यन्ते आत्माधीनं च निर्व्यथाः॥७
दुष्कृतत्यागमात्रेण पदमूर्ध्वं हि लभ्यते ॥
पापभीरुत्वमात्रेण दोषाणां परिवर्जनात् ।
सुशोभनो भवेद्देवि ऋजुर्धर्मव्यपेक्षया ।
इत्यौपरमिकं देवि कथितं सुकृतं तव ॥ ९
श्रुत्वा च वृद्धसंयोगादिन्द्रियाणां च निग्रहात् ।
संतोषाच्च धृतेश्चैव शक्यते दोषवर्जनम् ॥ १०
तदेव धर्ममित्याहुर्दोषसंयमनं प्रिये ।
यमधर्मेण धर्मोस्ति नान्यः शुभतरः प्रिये ।
यमधर्मेण यतयः प्राप्नुवन्त्युत्तमां गतिम् ॥ ११
ईश्वराणां प्रभवतां दरिद्राणां च वै नृणाम् ।
सफलो दोषसंत्यागो दानादपि शुभादपि ॥१२
तपो दानं महादेवि दोषमल्पं हि निर्भरेत् ।
सुकृतं यामिकं चोक्तं वक्ष्ये निरुपसाधनम् ॥१३
सुखाभिसन्धिर्लोकानां सत्यं शौचमथार्जवम् ।
व्रतोपवासः प्रीतिश्च ब्रह्मचर्यं दमः शमः ॥ १४
एवमादि शुभं कर्म सुकृतं नियमाश्रितम् ।
शृणु तेषां विशेषांश्च कीर्तयिष्यामि भामिनि १५
सत्यं स्वर्गस्य सोपानं पारावारस्य नौरिव ।
नास्ति सत्यात्परं दानं नास्ति सत्यात्परं तपः १६
यथा श्रुतं यथा दृष्टमात्मना यद्यथा कृतम् ।
तथा तस्याविकारेण वचनं सत्यलक्षणम् ॥ १७
यच्छलेनाभिसंयुक्तं सत्यरूपं मृषैव तत् ।
सत्यमेव प्रवक्तव्यं पारावर्यं विजानता ॥ १८
दीर्घायुश्च भवेत्सत्यात्कुलसंतानपालकः ।
लोकसंस्थितिपालश्च भवेत्सत्येन मानवः ॥ १९
—मोवाच ।
कथं संधारयन्मर्त्यो व्रतं शुभमवाप्नुयात् ॥ २०
महेश्वर उवाच ।
पूर्वमुक्तं तु यत्पापं मनोवाक्कायकर्मभिः ।
व्रतवत्तस्य संत्यागस्तपोव्रतमिति स्मृतम् ॥ २१
त्याज्यं वा यदि वा जोष्यमव्रतेन वृथा चरन् ।
तथा फलं न लभते तस्माद्धर्मं वृथा चरेत् ॥ २२
शुद्धकायो नरो भूत्वा स्नात्वा तीर्थे यथाविधि ।
पञ्चभूतानि चन्द्रार्कौ संध्ये धर्मयमौ पितॄन्॥२३
आत्मनैव तथाऽऽत्मानं निवेद्य व्रतवच्चरेत् ।
व्रतमामरणाद्वाऽपि कालच्छेदेन वा हरेत् ॥ २४
शाकादिषु व्रतं कुर्यात्तथा पुष्पफलादिषु ।
ब्रह्मचर्यव्रतं कुर्यादुपवासव्रतं तथा ॥ २५
एवमन्येषु बहुषु व्रतं कार्यं हितैषिणा ।
व्रतभङ्गो यथा न स्याद्रक्षितव्यं तथा बुधैः ।
व्रतभङ्गे महत्पापमिति विद्धि शुभेक्षणे ॥ २६
औषधार्थं यदज्ञानाद्गुरूणां वचनादपि ।
अनुग्रहार्थं बन्धूनां व्रतभङ्गो न दुष्यते ॥ २७
व्रतापवर्गकाले तु दैवब्राह्मणपूजनम् ।
नरेण तु यथा विद्धि कार्यसिद्धिं यथाऽऽप्नुयात्२८
उमोवाच ।
कथं शौचविधिस्तत्र तन्मे शंसितुमर्हसि ॥ २९

महेश्वर उवाच ।
बाह्यमाभ्यन्तरं चेति द्विविधं शौचमिष्यते ।
मानसं सुकृतं यत्तच्छौचमाभ्यन्तरं स्मृतम् ॥ ३०
सदाऽऽहारविशुद्धिश्च कायप्रक्षालनं च यत् ।
बाह्यशौचं भवेदेतत्तथैवाचमनादिना ॥ ३१
मृच्चैवं शुद्धदेशस्था गोशकृन्मूत्रमेव च ।
द्रव्याणि गन्धयुक्तानि यानि पुष्टिकराणि च
एतैः संमार्जयेत्कायमम्भसा च पुनः पुनः ॥ ३२
अक्षोभ्यं यत्प्रकीर्णं च नित्यस्रोतं च यज्जलम् ।
प्रायशस्तादृशे मज्जेदन्यथा च विवर्जयेत् ॥ ३३
त्रिरात्वराचमनं श्रेष्ठं निष्फेनैर्निर्मलैर्जलैः ।
तथा विण्मूत्रयोः शुद्धिरद्भिर्बहुमृदा भवेत् ।
तथैव जलसंशुद्धिर्यत्संशुद्धं तु संस्पृशेत् ॥ ३४
शकृता भूमिशुद्धिः स्याल्लोहानां भस्मना स्मृतम् ।
तक्षणं घर्षणं चैव दारवाणां विशोधनम् ॥ ३५
दहनं मृण्मयानां च मर्त्यानां कृच्छ्रधारणम् ।
शेषाणां देवि सर्वेषामातपेन जलेन च ।
ब्राह्मणानां च वाक्येन सदा संशोधनं भवेत् ॥ ३६
अदृष्टमद्भिर्निर्णिक्तं यच्च वाचा प्रशस्यते ।
एवमापदि संशुद्धिरेवं शौचं विधीयते ॥ ३७
उमोवाच ।
आहारशुद्धिस्तु कथं देवदेव महेश्वर ॥ ३८
महेश्वर उवाच
अमांसमद्यमक्लेद्यमपर्युषितमेव च
अतिकट्वम्ललवणहीनं च शुभगन्धि च ॥ ३९
क्रिमिकेशमलैर्हीनं संवृतं शुद्धदर्शनम् ।
एवंविधं सदाहार्यं देवब्राह्मणसात्कृतम् ॥ ४०
श्रुतमित्येव तज्ज्ञेयमन्यथा मन्यमेऽशुभम् ।
ग्राम्यादारण्यकैः सिद्धं श्रेष्ठमित्यवधारय ॥ ४१
अतिमात्रगृहीतात्तु अल्पदत्तं भवेच्छुचि ।
यज्ञशेषं हविःशेषं पितृशेषं च निर्मलम् ।
इति ते कथितं देवि भूयः किं श्रोतुमिच्छसि ॥४२

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि द्वात्रिंशदधिकद्विशततमोऽध्यायः ॥ २३२ ॥

## त्रयस्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३३ ॥

महेश्वरेणोमांप्रति मांसभक्षणाभक्षणयोर्दोषगुणकथनम् ॥ १ ॥ गुरुप्रशंसनपूर्वकं तत्पूजादिफलकथनम् ॥ २ ॥ तथा तीर्थस्नानोपवासादिफलकथनम् ॥ ३ ॥

उमोवाच ।
भक्षयन्त्यपरे मांसं वर्जयन्त्यपरे विभो ।
तन्मे वद महादेव भक्ष्याभक्ष्यविनिर्णयम् ॥ १
महेश्वर उवाच ।
मांसस्य भक्षणे दोषो यश्चास्याभक्षणे गुणः ।
तदहं कीर्तयिष्यामि तन्निबोध यथातथम् ॥ २
इष्टं दत्तमधीतं च क्रतवश्च सदक्षिणाः ।
अमांसभक्षणस्यैव कलां नार्हन्ति षोडशीम् ॥ ३
आत्मार्थं यः परप्राणान्हिंस्यात्स्वादुफलेप्सया ।
व्यालगृध्रसृगालैश्च राक्षसैश्च समस्तु सः ॥ ४
यो वृथा नित्यमांसाशी स पुमानधमो भवेत् ।
ततः कष्टतरं नास्ति स्वयमाहृत्य भक्षणात् ॥ ५
स्वमांसं परमांसेन यो वर्धयितुमिच्छति ।
उद्विग्नवासं लभते यत्रयत्रोपजायते ॥
संछेदनं स्वमांसस्य यथा संजनयेद्रुजम् ।
तथैव परमांसेऽपि वेदितव्यं विजानता ॥ ७
यस्तु सर्वाणि मांसानि यावज्जीवं न भक्षयेत् ।
स स्वर्गे विपुलं स्थानं लभते नात्र संशयः ॥ ८
यत्तु वर्षशतं पूर्णं तप्यते परमं तपः ।
यच्चापि वर्जयेन्मांसं सममेतन्न वा समम् ॥ ९
न हि प्राणैः प्रियतमं लोके किंचन विद्यते ।
तस्मात्प्राणिदया कार्या यथात्मनि तथा परे ॥१०
सर्वे यज्ञा न तत्कुर्युः सर्वे देवाश्च भामिनि ।
यो मांसरसमास्वाद्य पुनर्मांसं विवर्जयेत् ॥ ११
इत्येवं मुनयः प्राहुर्मांसस्याभक्षणे गुणान् ।
एवं बहुगुणं देवि नृणां मांसविवर्जनम् ॥ १२

न शक्नुयाद्यदाऽतीव त्यक्तुं मांसं कथंचन ।
पुण्यं तन्मासमात्रं वा वर्जनीयं विशेषतः ॥ १३
न शक्नुयादपि तथा कौमुदीमासमेव च ।
जन्मनक्षत्रतिथिषु सदा पर्वसु रात्रिषु ।
वर्जनीयं तथा मांसं परत्र हितमिच्छता ॥ १४
अशक्तः कारणान्मर्त्यो भोक्तुमिच्छेद्विधिं शृणु ।
अनेन खादन्विधिना कलुषेण न लिप्यते ॥ १५
सूनायां च गतप्राणान्क्रीत्वा न्यायेन भामिनि ।
ब्राह्मणातिथिपूजार्थं भोक्तव्यं हितमिच्छता ॥१६
भैषज्यकारणाद्व्याधौ खादन्पापैर्न लिप्यते ।
पितृशेषं तथैवाश्नन्मांसं नाशुभमृच्छति ॥ १७
उमोवाच ।
गुरुपूजा कथं देव क्रियते धर्मचारिभिः ॥ १८
महेश्वर उवाच ।
गुरुपूजां प्रवक्ष्यामि यथावत्तव शोभने ।
कृतज्ञानां परो धर्म इति वेदानुशासनम् ॥ १९
तस्मात्स्वगुरवः पूज्यास्ते हि पूर्वोपकारिणः ।
गुरूणां च गरीयांसस्त्रयो लोकेषु पूजिताः ॥ २०
उपाध्यायः पिता माता संपूज्यास्ते विशेषतः ।
ये पितुर्भ्रातरो ज्येष्ठा ये च तस्यानुजास्तथा ।
पितुः पिता च सर्वे ते पूजनीयाः पिता तथा॥२१
मातुर्या भगिनी ज्येष्ठा मातुर्या च यवीयसी ।
मातामही च धात्री च सर्वास्ता मातरः स्मृताः २२
उपाध्यायस्य यः पुत्रो यश्च तस्य भवेद्गुरुः ।
ऋत्विग्गुरुः पिता चेति गुरवः संप्रकीर्तिताः॥२३
ज्येष्ठो भ्राता नरेन्द्रश्च मातुलः श्वशुरस्तथा ।
भयत्राता च भर्ता च गुरवस्ते प्रकीर्तिताः॥२४
इत्येष कथितः साध्वि गुरूणां सर्वसंग्रहः ।
अनुवृत्तिं च पूजां च तेषामपि निबोध मे ॥ २५
आराध्या मातापितरावुपाध्यायस्तथैव च ।
कथंचिन्नावमन्तव्या नरेण हितमिच्छता ॥ २६
येन प्रीणन्ति पितरस्तेन प्रीतः प्रजापतिः ।
येन प्रीणाति चेन्माता प्रीताः स्युर्देवमातरः॥२७
येन प्रीणात्युपाध्यायो ब्रह्मा तेनाभिपूजितः ।
अप्रीतेषु पुनस्तेषु नरो नरकमेति हि ॥ २८
गुरूणां वैरनिर्बन्धो न कर्तव्यः कथंचन ।
नरः स्वगुरुमप्रीत्या मनसाऽपि न गच्छति ॥२९
न ब्रूयाद्विप्रियं तेषामनिष्टं न प्रवर्तयेत् ।
विगृह्य न वदेत्तेषां समीपे स्पर्धया क्वचित्॥३०
यद्यदिच्छन्ति ते कर्तुमस्वतन्त्रस्तदाचरेत् ।
वेदानुशासनसमं गुरुशासनमिष्यते ॥ ३१
कलहांश्च विवादांश्च गुरुभिः सह वर्जयेत् ।
कैतवं परिहासांश्च मन्युकामाश्रयाः कथाः ॥ ३२
गुरूणां योऽनर्हवादी करोत्याज्ञामतन्द्रितः ।
न तस्मात्सर्वमर्त्येषु विद्यते पुण्यकृत्तमः ॥ ३३
असूयामपवादं च गुरूणां परिवर्जयेत् ।
तेषां प्रियहितान्वेषी भूत्वा परिचरेत्सदा ॥ ३४
न तद्यज्ञफलं कुर्यात्तपो वाऽऽचरितं महत् ।
यत्कुर्यात्पुरुषस्येह गुरुपूजा सदा कृता ॥ ३५
अनुवृत्तेर्विना धर्मो नास्ति सर्वाश्रमेष्वपि ।
तस्मात्क्षमावृतः क्षान्तो गुरुवृत्तिं समाचरेत्॥३६
स्वमर्थं स्वशरीरं च गुर्वर्थे संत्यजेद्बुधः ।
विवादं धनहेतोर्वा मोहाद्वा तैर्न रोचयेत् ॥ ३७
ब्रह्मचर्यमहिंसा च दानानि विविधानि च ।
गुरुभिः प्रतिषिद्धस्य सर्वमेतदपार्थकम् ॥ ३८
उपाध्यायं पितरं मातरं च
येऽभिद्रुह्युर्मनसा कर्मणा वा ।
तेषां पापं भ्रूणहत्याविशिष्टं
तेभ्यो नान्यः पापकृदस्ति लोके ॥ ३९
उमोवाच ।
उपवासविधिं तत्र तन्मे शंसितुमर्हसि ॥ ४०
महेश्वर उवाच ।
शरीरमलशान्त्यर्थमिन्द्रियोच्छोषणाय च ।
एकभुक्तोपवासैस्तु धारयन्ते व्रतं नराः ॥ ४१
लभन्ते विपुलं धर्मं तथाऽऽहारपरिक्षयात् ।
बहूनामुपरोधं तु न कुर्यादात्मकारणात् ॥ ४२
जीवोपघातं च तथा स जीवन्धन्य इष्यते ।
तस्मात्पुण्यं लभेन्मर्त्यः स्वयमाहारकर्शनात् ।

तद्गृहस्थैर्यथाशक्ति कर्तव्यमिति निश्चयः ॥ ४३
उपवासार्दिते काये आपदर्थं पयो जलम् ।
भुञ्जन्न प्रतिघाती स्याद्ब्राह्मणाननुमान्य च ॥४४
उमोवाच ।
ब्रह्मचर्यं कथं देव रक्षितव्यं विजानता ॥ ४५
महेश्वर उवाच ।
तदहं ते प्रवक्ष्यामि शृणु देवि समाहिता ॥ ४६
ब्रह्मचर्यं परं शौचं ब्रह्मचर्यं परं तपः ।
केवलं ब्रह्मचर्येण प्राप्यते परमं पदम् ॥ ४७
संकल्पाद्दर्शनाच्चैव तद्युक्तवचनादपि ।
संस्पर्शादथ संयोगात्पञ्चधा रक्षितं व्रतम् ॥ ४८
व्रतवद्धारितं चैव ब्रह्मचर्यमकल्मषम् ।
नित्यं संरक्षितं तस्य नैष्ठिकानां विधीयते ।
तदिष्यते गृहस्थानां कालमुद्दिश्य कारणम् ॥ ४९
जन्मनक्षत्रयोगेषु पुण्यवासेषु पर्वसु ।
देवताधर्मकार्येषु ब्रह्मचर्यव्रतं चरेत् ॥ ५०
ब्रह्मचर्यव्रतफलं लभेद्दारव्रती सदा ।
शौचमायुस्तथाऽऽरोग्यं लभ्यते ब्रह्मचारिभिः ५१
उमोवाच ।
तीर्थचर्याव्रतं देव क्रियते धर्मकाङ्क्षिभिः ।
कानि तीर्थानि लोकेषु तन्मे शंसितुमर्हसि ॥५२
महेश्वर उवाच ।
हन्त ते कथयिष्यामि तीर्थस्नानविधिं प्रिये
पावनार्थं च शौचार्थं ब्रह्मणा निर्मितं पुरा ॥ ५३
यास्तु लोके महानद्यस्ताः सर्वास्तीर्थसंज्ञिताः ।
तासां प्राक्स्रोतसः श्रेष्ठाः संगमश्च परस्परम् ।
तासां सागरसंयोगो वरिष्ठश्चेति विद्यते ॥ ५४
तासामुभयतः कूलं तत्रतत्र मनीषिभिः ।
देवैर्वा सेवितं देवि तत्तीर्थं परमं स्मृतम् ॥ ५५
समुद्रश्च महातीर्थं पावनं परमं शुभम् ।
तस्य कूलगतास्तीर्था महद्भिश्च समाप्लुताः ॥ ५६
स्रोतसां पर्वतानां च जोषितानां महर्षिभिः ।
अपि कूपं तटाकं वा सेवितं मुनिभिः प्रिये ॥५७
तत्तु तीर्थमिति ज्ञेयं प्रभावात्तु तपस्विनाम्
तदा प्रभृति तीर्थत्वं लेभे लोकहिताय वै ॥ ५८
एवं तीर्थं भवेद्देवि तस्य स्नानविधिं शृणु ॥ ५९
जन्मना व्रतभूयिष्ठो गत्वा तीर्थानि काङ्क्षया ।
उपवासत्रयं कुर्यादेकं वा नियमान्वितः ॥ ६०
पुण्यमासेव्रते काले पौर्णमास्यां यथाविधि ।
बहिरेव शुचिर्भूत्वा तत्तीर्थं मन्मना विशेत् ॥ ६१
त्रिराप्लुत्य जलाभ्याशे दत्त्वा ब्राह्मणदक्षिणाम् ।
अभ्यर्च्य देवायतनं ततः प्रायाद्यथागतम् ॥ ६२
एतद्विधानं सर्वेषां तीर्थतीर्थमिति प्रिये ।
समीपतीर्थस्नानात्तु दूरतीर्थं सुपूजितम् ॥ ६३
आदिप्रभृतिशुद्धस्य तीर्थस्नानं शुभं भवेत्
तपोर्थं पापनाशार्थं शौचार्थं तीर्थगाहनम् ॥ ६४
एवं पुण्येषु तीर्थेषु तीर्थस्नानं शुभं भवेत् ।
एतन्नैयमिकं सर्वं सुकृतं कथितं तव ॥ ६५

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि त्रयस्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३३ ॥

## चतुस्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३४ ॥

महेश्वरेण पार्वतींप्रति दानस्य षाड्गुण्यप्रतिपादनपूर्वकं तत्फलकथनम् ॥ १ ॥

महेश्वर उवाच ।
एतदर्थमवाप्नोति नरः प्रेत्य शुभेक्षणे ॥
उमोवाच ।
लोकसिद्धं तु यद्द्रव्यं सर्वसाधारणं भवेत्
तद्दत्सर्वसामान्यं कथं धर्मं लभेन्नरः
एवं साधारणे द्रव्ये तस्य स्वत्वं कथं भवेत् ॥ २
महेश्वर उवाच ।
लोके भूतमयं द्रव्यं सर्वसाधारणं तथा ।
तथैव तद्दन्मर्त्यो लभेत्पुण्यं स तच्छृणु ॥
दाता प्रतिग्रहीता च देयं सोपक्रमं तथा ।
देशकालौ च यत्त्वेतद्दानं षड्गुणमुच्यते ।
तेषां संपद्विशेषांश्च कीर्त्यमानान्निबोध मे ॥ ४

आदिप्रभृति यः शुद्धो मनोवाक्कायकर्मभिः ।
सत्यवादी जितक्रोधस्त्वलुब्धो नाभ्यसूयकः ।
श्रद्धावानास्तिकश्चैव एवं दाता प्रशस्यते ॥ ५
शुद्धो दान्तो जितक्रोधस्तथा दीनकुलोद्भवः ।
श्रुतचारित्रसंपन्नस्तथा बहुकलत्रवान् ॥ ६
पञ्चयज्ञपरो नित्यं निर्विकारशरीरवान्
एतान्पात्रगुणान्विद्धि तादृक्पात्रं प्रशस्यते ॥ ७
पितृदेवाग्निकार्येषु तस्य दत्तं महाफलम् ।
यद्यदर्हति यो लोके पात्रं तस्य भवेच्च सः ।
मुच्येदापद आपन्नो येन पात्रं तदस्य तु ॥ ८
अन्नस्य क्षुधितं पात्रं तृषितस्तु जलस्य वै ।
एवं पात्रेषु नानात्वमिष्यते पुरुषं प्रति ॥ ९
जारश्चोरश्च षण्डश्च हिंस्रः समयभेदकः
लोकविघ्नकराश्चान्ये वर्जितव्याः सर्वशः प्रिये १०
परोपघाताद्यद्द्रव्यं चौर्याद्वा लभ्यते नृभिः ।
निर्दयाल्लभ्यते यच्च धूर्तभावेन वै तथा ॥ ११
अधर्मादर्थमोहाद्वा बहूनामुपरोधनात् ।
यल्लभ्यते धनं देवि तदत्यन्तविगर्हितम् ॥ १२
तादृशेन कृतं धर्मं निष्फलं विद्धि भामिनि ।
तस्मान्न्यायागतेनैव दातव्यं शुभमिच्छता ॥ १३
यद्यदात्मप्रियं नित्यं तत्तद्देयमिति स्थितिः ।
उपक्रममिमं विद्धि दातॄणां परमं हितम् ॥ १४
पात्रभूतं तु दूरस्थमभिगम्य प्रसाद्य च ।
दाता दानं तथा दद्याद्यथा तुष्येत तेन सः ।
एष दानविधिः श्रेष्ठः समाहूय तु मध्यमः ॥१५
पूर्वं च पात्रतां ज्ञात्वा समाहूय निवेद्य च ।
शौचाचमनसंयुक्तं दातव्यं श्रद्धया प्रिये ॥ १६
याचितॄणां तु परममाभिमुख्यं पुरस्कृतम् ।
संमानपूर्वं संग्राह्यं दातव्यं देशकालयोः ॥ १७
अपात्रेभ्योपि चान्येभ्यो दातव्यं भूतिमिच्छता ॥
पात्राणि संपरीक्ष्यैव दात्रा वै नाममात्रया ।
अतिरिक्तया परं दानं यथाशक्ति तु मध्यमम् ।
तृतीयं चापरं दानं नानुरूपमिवात्मनः ॥ १९
यथा संभाषितं पूर्वं दातव्यं तत्तथैव च ।
पुण्यक्षेत्रेषु यद्दत्तं पुण्यकालेषु वा यथा ।
तच्छोभनतरं विद्धि गौरवाद्देशकालयोः ॥ २०
उमोवाच ।
यश्च पुण्यतमो देशस्तथा कालश्च शंस मे ॥ २१
महेश्वर उवाच ।
कुरुक्षेत्रं महानद्यो यश्च देवर्षिसेवितः ।
गिरिर्वरश्च तीर्थानि देशभागेषु पूजितः
ग्रहीतुमीप्सितो यत्र तत्र दत्तं महाफलम् ॥ २२
शरद्वसन्तकालश्च पुण्यमासस्तथैव च ।
शुक्लपक्षश्च पक्षाणां पौर्णमासी च पर्वसु ॥ २३
पितृदैवतनक्षत्रनिर्मलो दिवसस्तथा ।
तच्छोभनतरं विद्धि चन्द्रसूर्यग्रहे तथा ॥ २४
प्रतिग्रहीतुर्यः कालो मनसा कीर्तितः शुभे ।
एवमादिष्टकालेषु दत्तं दानं महद्भवेत् ॥ २५
दाता देयं च पात्रं च उपक्रमयुता क्रिया ।
देशकालं तथा तेषां संपच्छुद्धिः प्रकीर्तिता ॥२६
यथैव युगपत्संपत्तत्र दानं महद्भवेत् ॥ २७
अत्यल्पमपि यद्दानमेभिः षड्भिर्गुणैर्युतम् ।
भूत्वाऽनन्तं नयेत्स्वर्गं दातारं दोषवर्जितम् ॥२८
सुमहद्वाऽपि यद्दानं गुणैरेभिर्विनाकृतम् ।
अत्यल्पफलनिर्योगमफलं वा फलोद्धृतम् ॥ २९
उमोवाच ।
एवंगुणयुतं दानं दत्तं च फलतां व्रजेत् ।
तदस्ति चेन्महद्देयं तन्मे शंसितुमर्हसि ॥ ३०
महेश्वर उवाच ।
तदप्यस्ति महाभागे नराणां भावदोषतः ॥ ३१
कृत्वा धर्मं तु विधिवत्पश्चात्तापं करोति चेत् ।
श्लाघया वा यदि ब्रूयाद्वृथा संसदि यत्कृतम् ३२
प्रकल्पयेच्च मनसा तत्फलं प्रेत्यभावतः ।
कर्म धर्मकृतं यच्च सततं फलकाङ्क्षया ।
एतत्कृतं वा दत्तं वा परत्र विफलं भवेत् ॥ ३३
एते दोषा विवर्ज्याश्च दातृभिः पुण्यकाङ्क्षिभिः ।
सनातनमिदं वृत्तं सद्भिराचरितं तथा ॥ ३४

अनुग्रहात्परेषां तु गृहस्थानामृणं हि तत् ।
इत्येवं मन आविश्य दातव्यं सततं बुधैः ॥ ३५
एवमेव कृतं नित्यं सुकृतं तद्भवेन्महत् ।
सर्वसाधारणं द्रव्यमेवं दत्त्वा महत्फलम् ॥ ३६

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि चतुस्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३४ ॥

## पञ्चत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३५ ॥

परमेश्वरेण पार्वतींप्रति अन्नस्वर्णगोभूकन्याविद्यादानानां महिमप्रतिपादनम् ॥ १ ॥

उमोवाच ।
भगवन्कानि देयानि धर्ममुद्दिश्य मानवैः ।
तान्यहं श्रोतुमिच्छामि तन्मे शंसितुमर्हसि ॥ १
महेश्वर उवाच ।
अजस्रं धर्मकार्यं च तथा नैमित्तिकं प्रिये ।
अन्नं प्रतिश्रयो दीपः पानीयं तृणमिन्धनम् ॥ २
स्नेहो गन्धश्च भैषज्यं तिलाश्च लवणं तथा ।
एवमादि तथाऽन्यच्च दानमाजस्रमुच्यते ॥ ३
अजस्रदानात्सततमाजस्रमिति निश्चितम् ।
सामान्यं सर्ववर्णानां दानं शृणु समाहिता ॥ ४
अन्नं प्राणो मनुष्याणामन्नदः प्राणदो भवेत् ।
तस्मादन्नं विशेषेण दातुमिच्छति मानवः ॥ ५
ब्राह्मणायाभिरूपाय यो दद्यादन्नमीप्सितम् ।
निदधाति निधिं श्रेष्ठं सोऽनन्तं पारलौकिकम् ॥ ६
श्रान्तमध्वपरिश्रान्तमतिथिं गृहमागतम् ।
अर्चयीत प्रयत्नेन स हि यज्ञो वरप्रदः ॥ ७
कृत्वा तु पातकं कर्म यो दद्यादन्नमर्थिनाम् ।
ब्राह्मणानां विशेषेण सोपहन्ति स्वकं तमः ॥ ८
पितरस्तस्य नन्दन्ति सुवृष्ट्या कर्षका इव ।
पुत्रो यस्य तु पौत्रो वा श्रोत्रियं भोजयिष्यति ॥ ९
अपि चण्डालशूद्राणामन्नदानं न गर्ह्यते ।
तस्मात्सर्वप्रयत्नेन दद्यादन्नममत्सरः ॥ १०
कलत्रं पीडयित्वाऽपि पोषयेदतिथीन्सदा ।
जन्मापि मानुषे लोके तदर्थं हि विधीयते ॥ ११
अन्नदानाच्च लोकांस्तान्संप्रवक्ष्याम्यनिन्दिते ।
भवनानि प्रकाशन्ते दिवि तेषां महात्मनाम् ॥ १२
अनेकशतभौमानि सान्तर्जलवनानि च ।
वैडूर्यार्चिःप्रकाशानि हेमरूप्यमयानि च ॥ १३
नानारूपाणि संस्थानां नानारत्नमयानि च ।
चन्द्रमण्डलशुभ्राणि किङ्किणीजालवन्ति च ॥ १४
तरुणादित्यवर्णानि स्थावराणि चराणि च ।
यथेष्टभक्ष्यभोज्यानि शयनासनवन्ति च ॥ १५
सर्वकामफलाश्चात्र वृक्षा भवनसंस्थिताः ।
वाप्यो वह्व्यश्च कूपाश्च दीर्घिकाश्च सहस्रशः ॥ १६
अरुजानि विशोकानि नित्यानि विविधानि च ।
भवनानि विचित्राणि प्राणदानां त्रिविष्टपे ॥ १७
विवस्वतश्च सोमस्य ब्रह्मणश्च प्रजापतेः ।
विशन्ति लोकांस्ते नित्यं जगत्यन्नोदकप्रदाः ॥ १८
तत्र ते सुचिरं कालं विहृत्याप्सरसां गणैः ।
जायन्ते मानुषे लोके सर्वकल्याणसंयुताः ॥ १९
बलसंहननोपेता नीरोगाश्चिरजीविनः ।
कुलीना मतिमन्तश्च भवन्त्यन्नप्रदा नराः ॥ २०
तस्मादन्नं विशेषेण दातव्यं भूतिमिच्छता ।
सर्वकालं च सर्वस्य सर्वत्र च सदैव च ॥ २१
सुवर्णदानं परमं स्वर्ग्यं स्वस्त्ययनं महत् ।
तस्मात्ते वर्णयिष्यामि यथावदनुपूर्वशः ॥ २२
अपि पापकृतं क्रूरं दत्तं रुक्मं प्रकाशयेत् ॥ २३
सुवर्णं ये प्रयच्छन्ति श्रोत्रियेभ्यः सुचेतसः ।
देवतास्ते तर्पयन्ति समस्ता इति वैदिकम् ॥ २४
अग्निर्हि देवताः सर्वाः सुवर्णं चाग्निरुच्यते ।
तस्मात्सुवर्णदानेन तृप्ताः स्युः सर्वदेवताः ॥ २५
अग्न्यभावे तु कुर्वन्ति वह्निस्थानेषु काञ्चनम् ।
तस्मात्सुवर्णदातारः सर्वान्कामानवाप्नुयुः ॥ २६
आदित्यस्य हुताशस्य लोकान्नानाविधाञ्शुभान् ।
काञ्चनं संप्रदायाशु प्रविशन्ति न संशयः ॥ २७
अलंकारं कृतं चापि केवलान्प्रविशिष्यते ।

सौवर्णैर्ब्राह्मणं काले तैरलंकृत्य भोजयेत् ॥ २८
य एतत्परमं दानं दत्त्वा सौवर्णमद्भुतम् ।
द्युतिं मेधां वपुः कीर्तिं पुनर्जाते लभेद्ध्रुवम् ॥२९
तस्मात्स्वशक्त्या दातव्यं काञ्चनं भुवि मानवैः ।
न ह्येतस्मात्परं लोकेष्वन्यत्पापात्प्रमुच्यते ॥ ३०
अत ऊर्ध्वं प्रवक्ष्यामि गवां दानमनिन्दिते ।
नहि गोभ्यः परं दानं विद्यते जगति प्रिये ॥३१
लोकान्सिसृक्षुणा पूर्वं गावः सृष्टाः स्वयंभुवा ।
वृत्त्यर्थं सर्वभूतानां तस्मात्ता मातरः स्मृताः ॥३२

लोकज्येष्ठा लोकवृत्त्या प्रवृत्ता
मय्यायत्ताः सोमनिष्यन्दभूताः ।
सौम्याः पुण्याः प्राणदाः कामदाश्च
तस्मात्पूज्याः पुण्यकामैर्मनुष्यैः ॥ ३३
धेनुं दत्त्वा निभृतां सुशीलां
कल्याणवत्सां च पयस्विनीं च ।
यावन्ति रोमाणि भवन्ति तस्या-
स्तावत्समाः स्वर्गफलानि भुङ्क्ते ॥ ३४
प्रयच्छते यः कपिलां सचेलां
सकांस्यदोहां कनकाग्र्यशृङ्गीम् ।
पुत्रांश्च पौत्रांश्च कुलं च सर्व-
मासप्तमं तारयते परत्र च ॥ ३५
अन्तर्जाताः क्रीतका द्यूतलब्धाः
प्राणक्रीताः सोदकाश्चौजसा वा ।
कृच्छ्रोत्सृष्टाः पोषणार्थागताश्च
द्वारैरेतैस्ताः प्रलब्धाः प्रदद्यात् ॥ ३६

कृशाय बहुपुत्राय श्रोत्रियायाहिताग्नये ।
प्रदाय नीरुजां धेनुं लोकान्प्राप्नोत्यनुत्तमान् ॥३७
नृशंसस्य कृतघ्नस्य लुब्धस्यानृतवादिनः ।
हव्यकव्यव्यपेतस्य न दद्याद्गाः कथंचन ॥ ३८
समानवत्सां यो दद्याद्धेनुं विप्रे पयस्विनीम् ।
सुवृत्तां वस्त्रसंछन्नां सोमलोके महीयते ॥ ३९
समानवत्सां यो दद्यात्कृष्णां धेनुं पयस्विनीम् ।
सुवृत्तां वस्त्रसंछन्नां लोकान्प्राप्नोत्यपांपतेः ॥४०
हिरण्यवर्णां पिङ्गाक्षीं सवत्सां कांस्यदोहनाम् ।
प्रदाय वस्त्रसंपन्नां यान्ति कौबेरसद्मनः ॥ ४१
वायुरेणुसवर्णां च सवत्सां कांस्यदोहनाम् ।
प्रदाय वस्त्रसंपन्नां वायुलोके महीयते ॥ ४२
समानवत्सां यो धेनुं दत्त्वा गौरीं पयस्विनीम् ।
सुवृत्तां वस्त्रसंछन्नामग्निलोके महीयते ॥ ४३
युवानं बलिनं श्यामं शतेन सह यूथपम् ।
गवेन्द्रं ब्राह्मणेन्द्राय भूरिशृङ्गमलंकृतम् ॥ ४४
ऋषभं ये प्रयच्छन्ति श्रोत्रियाणां महात्मनाम् ।
ऐश्वर्यमभिजायन्ते जायमानाः पुनःपुनः ॥ ४५
गवां मूत्रपुरीषाणि नोद्विजेत कदाचन ।
न चासां मांसमश्नीयाद्गोषु भक्तः सदा भवेत् ४६
ग्रासमुष्टिं परगवे दद्यात्संवत्सरं शुचि ।
अकृत्वा स्वयमाहारं व्रतं तत्सार्वकामिकम् ॥४७
गवामुभयतः काले नित्यं स्वस्त्ययनं वदेत् ।
न चासां चिन्तयेत्पापमिति धर्मविदो विदुः ॥४८
गावः पवित्रं परमं गोषु लोकाः प्रतिष्ठिताः ।
कथंचिन्नावमन्तव्या गावो लोकस्य मातरः ॥ ४९
तस्मादेव गवां दानं विशिष्टमिति कथ्यते ।
गोषु पूजा च भक्तिश्च नरस्यायुष्यतां वहेत् ॥ ५०
अतःपरं प्रवक्ष्यामि भूमिदानं महाफलम् ।
भूमिदानसमं दानं लोके नास्तीति निश्चयः ॥५१
गृहयुक्क्षेत्रयुग्वाऽपि भूमिभागः प्रदीयते ।
सुखभोगं निराक्रोशं वास्तुपूर्वं प्रकल्प्य च ॥ ५२
ग्रहीतारमलंकृत्य वस्त्रपुष्पानुलेपनैः ।
सभृत्यं सपरीवारं भोजयित्वा यथेष्टतः ।
यो दद्याद्दक्षिणां काले त्रिरद्भिर्गृह्यतामिति ॥ ५३
एवं भूम्यां प्रदत्तायां श्रद्धया वीतमत्सरैः ।
यावत्तिष्ठति सा भूमिस्तावद्दत्तफलं विदुः ॥ ५४
भूमिदः स्वर्गमारुह्य रमते शाश्वतीः समाः ।
अचला ह्यक्षया भूमिः सर्वकामान्दुधुक्षति ॥ ५५
यत्किंचित्कुरुते पापं पुरुषो वृत्तिकर्शितः ।
अपि गोकर्णमात्रेण भूमिदानेन मुच्यते ॥ ५६
सुवर्णं रजतं वस्त्रं मणिमुक्तावसूनि च ।
सर्वमेतन्महाभागे भूमिदाने प्रतिष्ठितम् ॥ ५७

भर्तुर्निःश्रेयसे युक्तास्त्यक्तात्मानो रणे हताः ।
ब्रह्मलोकाय संसिद्धा नातिक्रामन्ति भूमिदम् ॥ ५८
हलकृष्टां महीं दद्यात्सर्वबीजफलान्विताम् ।
सुकूपशरणां वाऽपि सा भवेत्सर्वकामदा ॥ ५९
निष्पन्नसस्यां पृथिवीं यो ददाति द्विजन्मनाम् ।
विमुक्तः कलुषैः सर्वैः शक्रलोकं स गच्छति ॥ ६०
यथा जनित्री क्षीरेण स्वपुत्रमभिवर्धयेत् ।
एवं सर्वफलैर्भूमिर्दातारमभिवर्धयेत् ॥ ६१
ब्राह्मणं वृत्तसंपन्नमाहिताग्निं शुचिव्रतम् ।
ग्राहयित्वा निजां भूमिं न यान्ति यमसादनम् ६२
यथा चन्द्रमसो वृद्धिरहन्यहनि दृश्यते ।
तथा भूमेः कृतं दानं सस्येसस्ये विवर्धते ॥ ६३
यथा बीजानि रोहन्ति प्रकीर्णानि महीतले ।
तथा कामाः प्ररोहन्ति भूमिदानगुणार्जिताः ६४
पितरः पितृलोकस्था देवताश्च दिवि स्थिताः ।
संतर्पयन्ति भोगैस्तं यो ददाति वसुंधराम् ॥ ६५
दीर्घायुष्यं वराङ्गत्वं स्फीतां च श्रियमुत्तमाम् ।
परत्र लभते मर्त्यः संप्रदाय वसुंधराम् ॥ ६६
एतत्सर्वं मयोद्दिष्टं भूमिदानस्य यत्फलम् ।
श्रद्दधानैर्नरैर्नित्यं श्राव्यमेतत्सनातनम् ॥ ६७
अतः परं प्रवक्ष्यामि कन्यादानं यथाविधि ।
कन्या देया महादेवि परेषामात्मनोपि वा ॥ ६८
कन्यां शुद्धव्रताचारां कुलरूपसमन्विताम् ।
यस्मै दित्सन्ति पात्राय तेनापि भृशकामिनाम् ६९
प्रथमं तत्समाकल्प्य बन्धुभिः कृतनिश्चयः ।
कारयित्वा गृहं पूर्वं दासीदासपरिच्छदैः ॥ ७०
गृहोपकरणैश्चैव पशुधान्येन संयुताम् ।
तदर्थिने तदर्हाय कन्यां तां समलंकृताम् ॥ ७१
सविवाहं यथान्यायं प्रयच्छेदग्निसाक्षिकम् ।
वृत्त्यायतीं यथा कृत्वा सद्गृहे तां निवेशयेत् ॥ ७२
एवं कृत्वा वधूदानं तस्य दानस्य गौरवात् ।
प्रेत्यभावे महीयेत स्वर्गलोके यथासुखम् ॥ ७३
पुनर्जातस्य सौभाग्यं कुलवृद्धिं तथाऽऽप्नुयात् ॥ ७४
विद्यादानं तथा देवि पात्रभूताय वै ददत् ।
प्रेत्यभावे लभेन्मर्त्यो मेधां वृद्धिं धृतिं स्मृतिम् ७५
अनुरूपाय शिष्याय यश्च विद्यां प्रयच्छति ।
यथोक्तस्य प्रदानस्य फलमानन्त्यमश्नुते ॥ ७६
दापनं त्वथ विद्यानां दरिद्रेभ्योऽर्थवेदनैः ।
स्वयं दत्तेन तुल्यं स्यादिति विद्धि शुभानने ॥ ७७
एवं ते कथितान्येव महादानानि मानिनि ।
त्वत्प्रियार्थं मया देवि भूयः श्रोतुं किमिच्छसि ७८

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि पञ्चत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३५ ॥

## षट्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३६ ॥

महेश्वरेणोमांप्रति तिलदानप्रकारतत्फलयोः कथनम् ॥ १ ॥ तथा जलान्नादिनानादानफलकथनम् ॥ २ ॥ तथा सेतुकूपतटाकनिर्माणादिधर्मफलकथनम् ॥ ३ ॥

उमोवाच ।
भगवन्देवदेवेश कथं देयं तिलान्वितम् ।
तस्य तस्य फलं ब्रूहि दत्तस्य च कृतस्य च ॥ १
महेश्वर उवाच ।
तिलकल्पविधिं देवि तन्मे शृणु समाहिता ॥ २
समृद्धैरसमृद्धैर्वा तिला देया विशेषतः ।
तिलाः पवित्राः पापघ्नाः सुपुण्या इति संस्मृताः ३
न्यायतस्तु तिलाञ्शुद्धान्संहृत्याथ स्वशक्तितः ।
तिलराशिं पुनः कुर्यात्पर्वताभं सुरत्नकम् ।
महान्तं यदि वा स्तोकं नानाद्रव्यसमन्वितम् ॥ ४
सुवर्णरजताभ्यां च मणिमुक्ताप्रवालकैः ।
अलंकृत्य यथायोगं सपताकं सवेदिकम् ।
सभूषणं सवस्त्रं च शयनासनसंमितम् ॥ ५
प्रायशः कौमुदीमासे पौर्णमास्यां विशेषतः ।
भोजयित्वा च विधिवद्ब्राह्मणानर्हतो बहून् ॥ ६
स्वयं कृतोपवासश्च वृत्तशौचसमन्वितः ।

दद्यात्प्रदक्षिणीकृत्य तिलराशिं सदक्षिणम् ॥ ७
एकस्यापि बहूनां वा दातव्यं भूतिमिच्छता ।
तस्य दानफलं देवि अग्निष्टोमेन संयुतम् ॥ ८
केवलं वा तिलैरेव भूमौ कृत्वा गवाकृतिम् ।
सवत्सकं सरत्नं च पुंसा गोदानकाङ्क्षिणा ।
तदर्हाय प्रदातव्यं तस्य गोदानतः फलम्
शरावांस्तिलसंपूर्णान्सहिरण्यान्सचम्पकान् ।
नृपोऽददद्ब्राह्मणाय स पुण्यफलभाग्भवेत् ॥ १०
एवं तिलमयं देयं नरेण हितमिच्छता ।
नानादानफलं भूयः शृणु देवि समाहिता ॥ ११
बलमायुष्यमारोग्यमन्नदानाल्लभेन्नरः ।
पानीयदस्तु सौभाग्यं रसज्ञानं लभेन्नरः ॥ १२
वस्त्रदानाद्वपुःशोभामलंकारं लभेन्नरः ।
दीपदो बुद्धिवैशद्यं द्युतिशोभां लभेन्नरः ॥ १२
राजपीडाविमोक्षं तु छत्रदो लभते फलम् ।
दासीदासप्रदानात्तु भवेत्कर्मान्तभाङ्नरः ।
दासीदासं च विविधं लभेत्प्रेत्य गुणान्वितम् १४
यानानि वाहनं चैव तदर्हाय ददन्नरः ।
पादरोगपरिक्लेशान्मुक्तः श्वसनवाहवान् ।
विचित्रं रमणीयं च लभते यानवाहनम् ॥ १५
प्रतिश्रयप्रदानं च तदर्हाय तदिच्छते ।
वर्षाकाले तु रात्रौ वा लभेत्पक्षबलं शुभम् ॥ १६
सेतुकूपतटाकानां कर्ता तु लभते नरः ।
दीर्घायुष्यं च सौभाग्यं तथा प्रेत्य गतिं शुभां ॥१७
वृक्षसंरोपको यस्तु छायापुष्पफलप्रदः ।
प्रेत्यभावे लभेत्पुण्यमभिगम्यो भवेन्नरः ॥ १८
यस्तु संक्रमकल्लोके नदीषु जलहारिणाम् ।
लभेत्पुण्यफलं प्रेत्य व्यसनेभ्यो विमोक्षणम्॥१९
मार्गकृत्सततं मर्त्यो भवेत्संतानवान्नरः ।
कायदोषविमुक्तस्तु तीर्थकृत्सततं भवेत् ॥ २०
औषधानां प्रदानात्तु सततं कृपयाऽन्वितः ।
भवेद्व्याधिविहीनश्च दीर्घायुश्च विशेषतः ॥ २१
अनाथान्पोषयेद्यस्तु कृपणान्धकपङ्गुकान् ।
स च पुण्यफलं प्रेत्य लभते कृच्छ्रमोक्षणम् ॥२२
वेदगोष्ठाः शुभाः शाला भिक्षूणां च प्रतिश्रयम् ।
यः कुर्याल्लभते नित्यं नरः प्रेत्य फलं शुभम् ॥ २३
प्रासादवासं विविधं यक्षशोभां लभेत्पुनः ।
विविधं विविधाकारं भक्ष्यभोज्यगुणान्वितम्॥२४
रम्यं तं दैवगोवाटं यः कुर्याल्लभते नरः ।
प्रेत्यभावे शुभां जातिं व्याधिमोक्षं तथैव च ॥२५
एवं नानाविधं द्रव्यं दानकर्ता लभेत्फलम् ॥ २६
उमोवाच ।
कृतं दत्तं यथा यावत्तस्य तल्लभते फलम् ।
एतन्मे देवदेवेश तत्र कौतूहलं महत् ॥ २७
महेश्वर उवाच ।
प्रेत्यभावे शृणु फलं दत्तस्य च कृतस्य च ।
दानं षड्गुणयुक्तं तु तदर्हाय यथाविधि ।
यथाविभवतो दानं दातव्यमिति मानवैः ॥ २८
बुद्धिमायुष्यमारोग्यं बलं भाग्यं तथाऽऽगमम् ।
रूपेण सप्तधा भूत्वा मानुष्यं फलति ध्रुवम् ॥२९
इदं दत्तमिदं देयमित्येवं फलकाङ्क्षया ।
यद्दत्तं तत्तदेव स्यान्न तु किंचन लभ्यते ॥ ३०
ध्रुवं देव्युत्तमे दानं मध्यमे त्वधमं फलम् ॥ ३१

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि षट्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३६ ॥

---

## सप्तत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३७ ॥

महेश्वरेण पार्वतींप्रति यज्ञप्रशंसनम् ॥ १ ॥ तथा देवानां पूजादिफलकथनम् ॥ २ ॥ तथा देवानां मनुष्यचिन्तितविज्ञानसामर्थ्यकथनम् ॥ ३ ॥

उमोवाच ।
भगवन्देवदेवेश विशिष्टं यज्ञमुच्यते ।

सहिरण्यान्सवस्त्रकानिति थ. पाठः ॥ १० ॥

लौकिकं वैदिकं चैव तन्मे शंसितुमर्हसि ॥
महेश्वर उवाच ।
देवतानां तु पूजा या यज्ञेष्वेव समाहिता ।
यज्ञा वेदेष्वधीताश्च वेदा ब्राह्मणसंयुताः ॥
इदं तु सकलं दिव्यं दिवि वा भुवि वा प्रिये ।
यज्ञार्थं विद्धि तत्सृष्टं लोकानां हितकाम्यया ॥ ३
एवं विज्ञाय तत्कर्ता सदारः सततं द्विजः ।
प्रेत्यभावे लभेल्लोकान्ब्रह्मकर्मसमाधिना ॥ ४
ब्राह्मणेष्वेव तद्ब्रह्म नित्यं देवि समाहितम् ।
तस्माद्विप्रैर्यथाशास्त्रं विधिदृष्टेन कर्मणा ॥ ५
यज्ञकर्म कृतं सर्वं देवता अभितर्पयेत् ।
ब्राह्मणाः क्षत्रियाश्चैव यज्ञार्थं प्रायशः स्मृताः ६
अग्निष्टोमादिभिर्यज्ञैर्वेदेषु परिकल्पितैः ।
सुशुद्धैर्यजमानैश्च ऋत्विग्भिश्च यथाविधि ।
शुद्धैर्द्रव्योपकरणैर्यष्टव्यमिति निश्चयः ॥ ७
तथा कृतेषु यज्ञेषु देवानां तोषणं भवेत्
तुष्टेषु सर्वदेवेषु यज्वा यज्ञफलं लभेत् ॥ ८
देवाः संतोषिता यज्ञैर्लोकान्संवर्धयन्त्युत
उभयोर्लोकयोर्भूतिर्देवि यज्ञे प्रदृश्यते ॥
तस्माद्यज्वा दिवं गत्वा अमरैः सह मोदते ।
नास्ति यज्ञसमं दानं नास्ति यज्ञसमो निधिः १०
सर्वधर्मसमुद्देशो देवि यज्ञे समाहितः ।
एषा यज्ञकृता पूजा लौकिकीमपरां शृणु ॥ ११
देवसत्कारमुद्दिश्य क्रियते लौकिकोत्सवः ॥ १२
देवगोष्ठेऽधिसंस्कृत्य चोत्सवं यः करोति वै ।
यागान्देवोपहारांश्च शुचिर्भूत्वा यथाविधि ।
देवान्संतोषयित्वा स देवि धर्ममवाप्नुयात् ॥ १३
गन्धमाल्यैश्च विविधैः परमान्नेन धूपनैः ।
वर्द्धाभिः स्तुतिभिश्चैव स्तुवद्भिः प्रयतैर्नरैः ॥ १४
नृत्तैर्वाद्यैश्च गान्धर्वैरन्यैर्दृष्टिविलोभनैः ।
देवसत्कारमुद्दिश्य कुर्वन्ते ये नरा भुवि ॥ १५
तेषां भक्तिकृतेनैव सत्कारेणैव पूजिताः
तेनैव तोषं संयान्ति देवि देवास्त्रिविष्टपे ॥ १६
मानुषैश्चोपकारैर्वा शुचिभिः सत्परायणैः ।
ब्रह्मचर्यपरैरेतत्कृतं धर्मफलं लभेत् ॥ १७
केवलैः स्तुतिभिर्देवि गन्धमाल्यसमाहितैः ।
प्रयतैः शुद्धगात्रैस्तु शुद्धदेशे सुपूजिताः ।
संतोषं यान्ति ते देवा भक्तैः संपूजितास्तथा ॥ १८
देवान्संतोषयित्वैव देवि धर्ममवाप्नुयात् ॥ १९
उमोवाच ।
त्रिविष्टपस्था वै भूमौ देवा मानुषचेष्टितम्
कथं ज्ञास्यन्ति विधिवत्तन्मे शंसितुमर्हसि । २०
महेश्वर उवाच ।
तदहं ते प्रवक्ष्यामि यथा तैर्विद्यते प्रिये ।
प्राणिनां तु शरीरेषु अन्तरात्मा व्यवस्थितः ॥ २१
आत्मानं परमं देवमिति विद्धि शुभेक्षणे ।
आत्मा मनोव्यवस्थानात्सर्वं वेत्ति शुभाशुभम् २२
आत्मैव देवास्तद्विद्युरव्यग्रमनसा कृतम् ।
सतां मनोव्यवस्थानाच्छुभं भवति वै नृणाम् ॥ २३
तस्माद्देवाऽभिसंपूज्या ब्राह्मणानां तथैव च ।
यज्ञाश्च धर्मकार्याणि गुरुपूजा च शोभने ॥ २४
शुद्धगात्रैर्व्रतयुतैस्तन्मयैस्तत्परायणैः ।
एवं व्यवस्थितैर्नित्यं कर्तव्यमिति निश्चयः ॥ २५
एवं कृत्वा शुभाकाङ्क्षी परत्रेह च मोदते ।
अन्यथा मन आविश्य कृतं न फलति प्रिये ।
ऋतेऽपि तु मनो देवि अशुभं फलति ध्रुवम् २६

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि सप्तत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३७ ॥

## अष्टत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३८ ॥

महेश्वरेण पार्वतींप्रति श्राद्धविधानादिकथनम् ॥ १ ॥

उमोवाच ।
पितृमेधः कथं देव तन्मे शंसितुमर्हसि
सर्वेषां पितरः पूज्याः सर्वसंपत्प्रदायिनः ॥ १
महेश्वर उवाच ।

पितृमेधं प्रवक्ष्यामि यथावत्तन्मना शृणु ।
देशकालौ विधानं च तत्क्रियायाः शुभाशुभम् २
लोकेषु पितरः पूज्या देवतानां च देवताः ।
शुचयो निर्मलाः पुण्या दक्षिणां दिशमाश्रिताः ३
यथा वृष्टिं प्रतीक्षन्ते भूमिष्ठाः सर्वजन्तवः ।
पितरश्च तथा लोके पितृमेधं शुभेक्षणे ॥ ४
तस्य देशाः कुरुक्षेत्रं गया गङ्गा सरस्वती ।
प्रभासं पुष्करं चेति तेषु दत्तं महाफलम् ॥ ५
तीर्थानि सरितः पुण्या विविक्तानि वनानि च ।
नदीनां पुलिनानीति देशाः श्राद्धस्य पूजिताः ६
माघप्रोष्ठपदौ मासौ श्राद्धकर्मणि पूजितौ ।
पक्षयोः कृष्णपक्षश्च पूर्वपक्षात्प्रशस्यते ॥ ७
अमावास्यां त्रयोदश्यां नवम्यां प्रतिपत्सु च ।
तिथिष्वेतासु तुष्यन्ति दत्तेनेह पितामहाः ॥ ८
पूर्वाह्णे शुक्लपक्षे च रात्रौ जन्मदिनेषु वा ।
युग्मेष्वहस्सु च श्राद्धं न च कुर्वीत पण्डितः ॥९
एष कालो मया प्रोक्तः पितृमेधस्य पूजितः ।
यस्मिंश्च ब्राह्मणं पात्रं पश्येत्कालः स च स्मृतः॥१०
अपाङ्क्त्या द्विजा वर्ज्या ग्राह्यास्ते पङ्क्तिपावनाः ।
भोजयेद्यदि पापिष्ठाञ्श्राद्धेषु नरकं व्रजेत् ॥ ११
वृत्तश्रुतकुलोपेतान्सकलत्रान्गुणान्वितान् ।
तदर्हाञ्श्रोत्रियान्विद्धि ब्राह्मणानयुजः शुभे ॥ १२
एतान्निमन्त्रयेद्विद्वान्पूर्वेद्युः प्रातरेव वा ।
तत्र श्राद्धक्रियां पश्चादारभेत यथाविधि ॥ १३
त्रीणि श्राद्धे पवित्राणि दौहित्रः कुतपस्तिलाः ।
त्रीणि चात्र प्रशंसन्ति शौचमक्रोधमत्वरा ॥ १४
कुतपः खड्गपात्रं च कुशा दर्भास्तिला मधु ।
कालशाकं गजच्छाया पवित्रं श्राद्धकर्मसु ॥ १५
तिलानवकिरेत्तत्र नानावर्णान्समन्ततः ।
अशुद्धं पितृयज्ञश्च तिलैः शुध्यति शोभने ॥ १६
नीलकाषायवस्त्रं च भिन्नवर्णं नवव्रणम् ।
हीनाङ्गमशुचिं वाऽपि वर्जयेत्तत्र दूरतः ॥ १७
कुक्कुटांश्च वराहांश्च नग्नं क्लीबं रजस्वलाम् ।
आयसं त्रपुसीसं च श्राद्धकर्मणि वर्जयेत् ॥ १८
मांसैः प्रीणन्ति पितरो मुद्गमाषयवैरिह ।
शाशरौरवमांसेन षण्मासं तृप्तिरिष्यते ॥ १९
संवत्सरं च गव्येन हविषा पायसेन च ।
वार्ध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी ॥ २०
आनन्त्याय भवेद्दत्तं खड्गमांसं पितृक्षये ।
पायसं सतिलं क्षौद्रं खड्गमांसेन संमितम् ॥ २१
महाशकलिनो मत्स्याश्छागो वा सर्वलोहितः ।
कालशाकमितीत्येव तदानन्त्याय कल्पितम् ॥२२
सापूपं सामिषं स्निग्धमाहारमुपकल्पयेत् ।
उपकल्प्य तदाहारं ब्राह्मणानर्चयेत्ततः ॥ २३
श्मश्रुकर्मशिरःस्नातान्समारोप्यासनं क्रमात् ।
सुगन्धमाल्याभरणैः स्रग्भिरेतान्विभूषयेत् ॥ २४
अलंकृत्योपविष्टांस्तान्पिण्डावापं निवेदयेत् ॥ २५
ततः प्रस्तीर्य दर्भाणां प्रस्तरं दक्षिणामुखम् ।
तत्समीपेऽग्निमिद्ध्वा च स्वधां च जुहुयात्ततः ।
समीपे त्वग्नीषोमाभ्यां पितृभ्यो जुहुयात्तदा ॥२६
तथा दर्भेषु पिण्डांस्त्रीन्निर्वपेद्दक्षिणामुखः ।
अपसव्यमपाङ्गुष्ठं नामधेयपुरस्कृतम् ॥ २७
एतेन विधिना दत्तं पितॄणामक्षयं भवेत् ।
ततो विप्रान्यथाशक्ति पूजयेन्नियतः शुचिः ।
सदक्षिणं ससंभारं यथा तुष्यन्ति ते द्विजाः ॥२८
यत्र तत्क्रियते तत्र न जल्पन्न जपेन्मिथः ।
नियम्य वाचं देहं च श्राद्धकर्म समारभेत् ॥ २९
ततो निर्वपने वृत्ते तान्पिण्डांस्तदनन्तरम् ।
ब्राह्मणोऽग्निरजो गौर्वा भक्षयेदप्सु वा क्षिपेत् ॥३०
पत्नीं वा मध्यमं पिण्डं पुत्रकामो हि प्राशयेत् ।
आधत्त पितरो गर्भं कुमारं पुष्करस्रजम् ॥ ३१
तृप्तानुत्थाप्य तान्विप्रानन्नशेषं निवेदयेत् ।
तच्छेषं बहुभिः पश्चात्सभृत्यो भक्षयेन्नरः ॥ ३२
एष प्रोक्तः समासेन पितृयज्ञः सनातनः ।
पितरस्तेन तुष्यन्ति कर्ता च फलमाप्नुयात् ॥ ३३
अहन्यहनि वा कुर्यान्मासेमासेऽथवा पुनः ।

नग्नं क्षीबमिति क. पाठः ॥ १८ ॥

अष्टत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३८ ॥

संवत्सरं द्विः कुर्याच्च चतुर्वाऽपि स्वशक्तितः॥३४
दीर्घायुश्च भवेत्स्वस्थः पितृमेधेन वा पुनः।
सपुत्रो बहुभृत्यश्च प्रभूतधनधान्यवान्॥ ३५
श्राद्धदः स्वर्गमाप्नोति निर्मलं विविधात्मकम्।
अप्सरोगणसंघुष्टं विरजस्कमनन्तरम्॥ ३६
श्राद्धानि पुष्टिकामा वै ये प्रकुर्वन्ति पण्डिताः।
तेषां पुष्टिं प्रजां चैव दास्यन्ति पितरः सदा॥३७
धन्यं यशस्यमायुष्यं स्वर्ग्यं शत्रुविनाशनम्।
कुलसंधारकं चेति श्राद्धमाहुर्मनीषिणः॥ ३८
उमोवाच।
भगवन्देवदेवेश मृतास्ते भुवि जन्तवः।
नानाजातिषु जायन्ते शीघ्रं कर्मवशात्पुनः॥ ३९
पितरः स्वस्ति ते तत्र कथं तिष्ठन्ति देववत्।
पितृणां कतमो देशः पिण्डानश्नन्ति वै कथम्॥४०
अन्ने दत्ते मृतानां तु कथमाप्यायनं भवेत्।
एवं मया संशयितं भगवन्वक्तुमर्हसि॥ ४१
नारद उवाच।
एतद्विरुद्धं पृच्छन्त्यां रुद्राण्यां परिषद्भृशम्।
बभूव सर्वा मुदिता श्रोतुं हि परमं हितम्॥ ४२
महेश्वर उवाच।
स्थाने संशयितं देवि शृणु कल्याणि तत्त्वतः।
गुह्यानां परमं गुह्यं हितानां परमं हितम्॥ ४३
यथा देवगणा देवि तथा पितृगणाः प्रिये।
दक्षिणस्यां दिशि शुभे सर्वे पितृगणाः स्थिताः॥४४
प्रेतानुदिश्य या पूजा क्रियते मानुषैरिह।
तेन तुष्यन्ति पितरो न प्रेताः पितरः स्मृताः॥ ४५
उत्तरस्यां यथा देवा रमन्ते यज्ञकर्मभिः।
दक्षिणस्यां तथा देवि तुष्यन्ति विविधैर्मखैः॥ ४६
द्विविधं क्रियते कर्म हव्यकव्यसमाश्रितम्।
तयोर्हव्यक्रिया देवान्कव्यमाप्यायते पितॄन्॥ ४७
प्रसव्यं मङ्गलैर्द्रव्यैर्हव्यकर्म विधीयते।
अपसव्यममङ्गल्यैः कव्यं चापि विधीयते॥ ४८
सदेवासुरगन्धर्वाः पितॄनभ्यर्चयन्ति च।
आप्यायन्ते च ते श्राद्धैः पुनराप्याययन्ति तान्॥४९
अनिष्ट्वा च पितॄन्पूर्वं यः क्रियां प्रकरोति चेत्।
रक्षांसि च पिशाचाश्च फलं भोक्ष्यन्ति तस्य तत्॥५०
हव्यकव्यक्रियास्तस्मात्कर्तव्या भुवि मानुषैः।
कर्मक्षेत्रं हि मानुष्यं तदन्यत्र न विद्यते॥ ५१
कव्येन संततिर्दृष्टा हव्ये भूतिः पृथग्विधा।
इति ते कथितं देवि देवगुह्यं सनातनम्॥ ५२

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि अष्टत्रिंशदधिकद्विशततमोऽध्यायः॥ २३८॥

## एकोनचत्वारिंशदधिकद्विशततमोऽध्यायः॥ २३९॥

महेश्वरेण पार्वतींप्रति दानत्रैविध्यात्तत्फलत्रैविध्यादिकथनम्॥ १॥ तथा दानफलस्य पञ्चविधत्वप्रतिपादनम्॥ २॥ तथा नानाधर्मतत्फलप्रतिपादनम्॥ ३॥

उमोवाच।
एवं कृतस्य धर्मस्य श्रोतुमिच्छाम्यहं प्रभो।
प्रमाणं फलमानानां तन्मे शंसितुमर्हसि॥ १
महेश्वर उवाच।
प्रमाणकल्पनां देवि दानस्य शृणु भामिनि॥ २
यत्सारस्तु नरो लोके तद्दानं चोत्तमं स्मृतम्।
सर्वदानविधिं प्राहुस्तदेव भुवि शोभने॥ ३
प्रस्थं सारं दरिद्रस्य शतं कोटिधनस्य च।
प्रस्थसारस्तु तत्प्रस्थं ददन्महदवाप्नुयात्॥ ४
कोटिसारस्तु तां कोटिं ददन्महदवाप्नुयात्।
उभयं तन्महत्तच्च फलेनैव समं स्मृतम्॥ ५
धर्मार्थकामभोगेषु शक्त्यभावस्तु मध्यमम्।
स्वद्रव्यादतिहीनं तु तद्दानमधमं स्मृतम्॥ ६
शृणु दत्तस्य वै देवि पञ्चधा फलकल्पनाम्।
आनन्त्यं च महच्चैव समं हीनं हि पातकम्॥ ७
तेषां विशेषं वक्ष्यामि शृणु देवि समाहिता।
दुस्त्यजस्य च वै दानं पात्र आनन्त्यमुच्यते॥ ८
दानं षड्गुणयुक्तं तु महदित्यभिधीयते।

यथाश्रद्धं तु वै दानं यथार्हं समसमुच्यते ॥ ९
गुणतस्तु तथा हीनं दानं हीनमिति स्मृतम् ।
दानं पातकमित्याहुः षड्गुणानां विपर्यये ॥ १०
देवलोके महन्कालमानन्त्यस्य फलं विदुः ।
महतस्तु तथा कालं स्वर्गलोके तु पूज्यते ॥ ११
समस्य तु तदा दानं मानुष्यं भोगमावहेत् ।
दानं निष्फलमित्याहुर्विहीनं क्रियया शुभे ॥ १२
अथवा म्लेच्छदेशेषु तत्र तत्फलतां व्रजेत् ।
नरकं प्रेत्य तिर्यक्षु गच्छेदशुभदानतः ॥ १३
उमोवाच ।
अशुभस्यापि दानस्य शुभं स्याच्च फलं कथम् ॥ १४
महेश्वर उवाच ।
मनसा तत्वतः शुद्धमानृशंस्यपुरःसरम् ।
प्रीत्या तु सर्वदानानि दत्त्वा फलमवाप्नुयात् ॥ १५
रहस्यं सर्वदानानामेतद्विद्धि शुभेक्षणे ।
अन्यानि धर्मकार्याणि शृणु सद्भिः कृतानि च १६
आरामदेवगोष्ठानि संक्रमाः कूप एव च ।
गोवाटश्च तटाकश्च सभा शाला च सर्वशः ॥ १७
पाषण्डावसथश्चैव पानीयं गोतृणानि च ।
व्याधितानां च भैषज्यमनाथानां च पोषणम् १८
अनाथशवसंस्कारस्तीर्थमार्गविशोधनम् ।
व्यसनाभ्यवपत्तिश्च सर्वेषां च स्वशक्तितः ॥ १९
एतत्सर्वं समासेन धर्मकार्यमिति स्मृतम् ।
तत्कर्तव्यं मनुष्येण स्वशक्त्या श्रद्धया शुभे ॥ २०
प्रेत्यभावे लभेत्पुण्यं नास्ति तत्र विचारणा ।
रूपं सौभाग्यमारोग्यं बलं सौख्यं लभेन्नरः ।
स्वर्गे वा मानुषे वाऽपि तैस्तैराप्यायते हि सः ॥ २१
उमोवाच ।
भगवन्लोकपालेश धर्मस्तु कतिभेदकः ।
दृश्यते परितः सद्भिस्तन्मे शंसितुमर्हसि ॥ २२
महेश्वर उवाच ।
शृणु देवि समुद्देशान्नानात्वं धर्मसंकटे ।
धर्मा बहुविधा लोके श्रुतिभेदमुखोद्भवाः ॥ २३
स्मृतिधर्मश्च बहुधा सद्भिराचार इष्यते ॥ २४
देशधर्माश्च दृश्यन्ते कुलधर्मास्तथैव च ।
जातिधर्माश्च वै धर्मा गणधर्माश्च शोभने ॥ २५
शरीरकालवैषम्यादापद्धर्मश्च दृश्यते ।
एतद्धर्मस्य नानात्वं क्रियते लोकवासिभिः ॥ २६
कारणात्तत्रतत्रैव फलं धर्मस्य चेष्यते ।
तत्कारणसमायोगे लभेत्कुर्वन्फलं नरः ॥ २७
अन्यथा न लभेत्पुण्यमतदर्हः समाविशेत् ।
एवं धर्मस्य नानात्वं फलं कुर्वँल्लभेन्नरः ॥ २८
श्रौतस्मार्तस्तु धर्माणां प्राकृतो धर्म उच्यते ।
इति ते कथितं देवि भूयः श्रोतुं किमिच्छसि ॥ २९

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि एकोनचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २३९ ॥

## चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४० ॥

महेश्वरेण पार्वतींप्रति भद्राश्वकेतुमालादिखण्डानां सुकृतिनां भोगस्थानत्वादिप्रतिपादनम् ॥ १ ॥

उमोवाच ।
भगवन्सर्वभूतेश पुरंमर्दन शंकर ।
श्रुतं पापकृतां दुःखं यमलोके वरप्रद ॥ १
श्रोतुमिच्छाम्यहं देव नृणां सुकृतकर्मणाम् ।
कथं ते भुञ्जते भोगान्स्वर्गलोके महेश्वर ॥ २
कथिताः कीदृशा लोका नृणां सुकृतकारिणाम् ।
एतन्मे वद देवेश श्रोतुं कौतूहलं हि मे ॥ ३
महेश्वर उवाच ।
शृणु कल्याणि तत्सर्वं यत्त्वमिच्छसि शोभने ।
विविधाः पुण्यलोकास्ते कर्मकर्मण्यतां गताः ॥ ४
मेरुं हि कनकात्मानं परितः सर्वतोदिशम् ।
भद्राश्वः केतुमालश्च उत्तराः कुरवस्तथा ॥ ५
जम्बूवनादयः स्वर्गा इत्येते कर्मवर्जिताः ।
तेषु भूत्वा स्वयंभूताः प्रदृश्यन्ते यतस्ततः ॥ ६
योजनानां सहस्रं च एकैकं मानमात्रया ।
नित्यं पुष्पफलोपेतास्तत्र वृक्षाः समन्ततः ॥ ७

आसक्तवस्त्राभरणाः सर्वे कनकसान्निभाः ।
द्विरेफाश्चाण्डजास्तत्र प्रवालमणिसन्निभाः ।
विचित्राश्च मनोज्ञाश्च कूजितैः शोभयन्ति तान् ८
कुशेशयवनच्छन्ना नलिन्यश्च मनोरमाः ।
तत्र वान्त्यनिला नित्यं दिव्यगन्धसुखावहाः ॥ ९
सर्वे चाम्लानमाल्याश्च विरजोम्बरसंवृताः ।
एवं बहुविधा देवि दिव्यभोगाः सुखावहाः ॥ १०
स्त्रियश्च पुरुषाश्चैव सर्वे सुकृतकारिणः ।
रमन्ते तत्र चान्योन्यं कामरागसमन्विताः ॥ ११
मनोहरा महाभागाः सर्वे ललितकुण्डलाः ।
एवं तत्र स्थिता मर्त्याः प्रमदाः प्रियदर्शनाः ॥ १२
नानाभावसमायुक्ता यौवनस्थाः सदैव तु ।
युवत्यः कल्पितास्तत्र कामजा ललितास्तथा ॥ १३
मनोनुकूला मधुरा भोगिनामुपकल्पिताः ।
प्रमदाश्चोद्भवन्त्येव स्वर्गलोके यथा तथा ॥ १४
एवंविधाः स्त्रियश्चात्र पुरुषाश्च परस्परम् ।
रमन्ते चेन्द्रियैः स्वस्थैः शरीरैर्भोगसंस्कृतैः ॥ १५
कामहर्षगुणाभ्यस्ता नान्ये क्रोधादयः प्रिये ।
क्षुत्पिपासा न चास्त्यत्र गात्रक्लेशश्च शोभने १६
सर्वतो रमणीयं च सर्वत्र कुसुमान्वितम् ।
यावत्पुण्यफलं तावद्दृश्यन्ते बहुसंगताः ।
निरन्तरं भोगयुता रमन्ते स्वर्गवासिनः ॥ १७
तत्र भोगान्यथायोगं भुक्त्वा पुण्यक्षयात्पुनः ।
नश्यन्ति जायमानास्ते शरीरैः सहसा प्रिये ॥ १८
स्वर्गलोकात्परिभ्रष्टाः जायन्ते मानुषे पुनः ।
पूर्वपुण्यावशेषेण विशिष्टाः संभवन्ति ते ॥ १९
एषा स्वर्गगतिः प्रोक्ता पृच्छन्त्यास्तव भामिनि ।
अत ऊर्ध्वं पदान्यष्टौ सुकर्माणि शृणु प्रिये ।
भोगयुक्तानि पुण्यानि उच्छ्रितानि परस्परम् २०
विद्याधराः किंपुरुषा यक्षगन्धर्वकिंनराः ।
अप्सरोदानवा देवा यथाक्रममुदाहृताः ॥ २१
तेषु स्थानेषु जायन्ते प्राणिनः पुण्यकर्मणः ।
तेषामपि च ये लोकाः स्वर्गलोकोपमाः स्मृताः २२
स्वर्गवत्तत्र ते भोगान्भुञ्जते च रमन्ति च ।
रूपसत्त्वबलोपेताः सर्वे दीर्घायुषस्तथा ॥ २३
तेषां सर्वक्रियारम्भो मानुषेष्विव दृश्यते ।
अतिमानुषमैश्वर्यमत्र मायाबलान्वितम् ॥ २४
जराप्रसूतिमरणं तेषु स्थानेषु दृश्यते ।
गुणा दोषाश्च सन्त्यत्र आकाशगमनं तथा ॥ २५
अन्तर्धानं बलं सत्त्वमायुश्च चिरजीवितम् ।
तपोविशेषाज्जायन्ते यथा कर्मणि भामिनि ॥ २६
देवलोके प्रवृत्तिस्तु तेषामेव विधीयते ।
न तथा देवलोको हि तद्विशिष्टाः सुराः स्मृताः २७
तत्र भोगमनिर्देश्यममृतत्वं च विद्यते ।
विमानगमनं नित्यमप्सरोगणसेवितम् ॥ २८
एवमन्यच्च तत्कर्म देवताभ्यो विशिष्यते ।
प्रत्यक्षं तव तत्सर्वं देवलोके प्रवर्तनम् ॥ २९
तस्मान्न वर्णये देवि विदितं च त्वया शुभे ।
तत्सर्वं सुकृतैरेव प्राप्यते चोत्तमं पदम् ॥ ३०

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४० ॥

## एकचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४१ ॥

महेश्वरेण पार्वतींप्रति प्राणिनां शुभाशुभत्वनिश्चायकलिङ्गकथनम् ॥ १ ॥

उमोवाच ।
मानुषेष्वेव जीवत्सु गतिर्विज्ञायते न वा ।
यथा शुभगतिर्जीवो नासौ त्वशुभभागिति ॥ १
एतदिच्छाम्यहं श्रोतुं तन्मे शंसितुमर्हसि ॥ २
महेश्वर उवाच ।
तदहं ते प्रवक्ष्यामि जीवितं विद्यते यथा ।
द्विविधाः प्राणिनो लोके दैवमासुरमाश्रिताः ॥ ३
मनसा कर्मणा वाचा प्रतिकूला भवन्ति ये ।
तादृशानासुरान्विद्धि मर्त्यास्ते नरकालयाः ॥ ४
हिंस्राश्चोराश्च धूर्ताश्च परदाराभिमर्शकाः ।

नीचकर्मरता ये च शौचमङ्गलवर्जिताः ॥ ५
शुचिविद्वेषिणः पापा लोकचारित्रदूषकाः ।
एवं युक्तसमाचारा जीवन्तो नरकालयाः ॥ ६
लोकोद्वेगकराश्चान्ये पशवश्च सरीसृपाः ।
वृक्षाः कण्टकिनो रूक्षास्तादृशान्विद्धि चासुरान् ७
अपरान्देवपक्षांस्तु शृणु देवि समाहिता ॥ ८
मनोवाक्कर्मभिर्नित्यमनुकूला भवन्ति ये ।
तादृशानमरान्विद्धि ते नराः स्वर्गगामिनः ॥ ९
शौचार्जवपरा धीराः परार्थं नाहरन्ति ये ।
ये समाः सर्वभूतेषु ते नराः स्वर्गगामिनः ॥ १०
भयाद्वा वृत्तिहेतोर्वा अनृतं न वदन्ति ये ।
सत्यं वदन्ति सततं ते नराः स्वर्गगामिनः ॥११
धार्मिकाः शौचसंपन्नाः शुक्ला मधुरवादिनः ।
नाकार्यं मनसेच्छन्ति ते नराः स्वर्गगामिनः ॥१२
स्वदुःखमिव मन्यन्ते परेषां दुःखवेदनम् ।
दरिद्रा अपि ये केचिद्याचिताः प्रीतिपूर्वकम् ।
ददत्येव च यत्किंचित्ते नराः स्वर्गगामिनः ॥१३
आस्तिका मङ्गलपराः सततं वृद्धसेविनः ।
पुण्यकर्मपरा नित्यं ते नराः स्वर्गगामिनः ॥ १४
व्रतिनो दानशीलाश्च धर्मशीलाश्च मानवाः ।
ऋजवो मृदवो नित्यं ते नराः स्वर्गगामिनः १५
गुरुशुश्रूषणपरा देवब्राह्मणपूजकाः ।
कृतज्ञाः कृतविद्याश्च ते नराः स्वर्गगामिनः ॥१६
जितेन्द्रिया जितक्रोधा जितमानमदाः स्मृताः ।
लोभमात्सर्यहीना ये ते नराः स्वर्गगामिनः १७
निर्ममा निरहंकाराः सानुक्रोशाः स्वबन्धुषु ।
दीनानुकम्पिनो नित्यं ते नराः स्वर्गगामिनः १८
ऐहिकेन तु वृत्तेन पारत्रमनुमीयते ।
एवंविधा नरा लोके जीवन्तः स्वर्गगामिनः॥१९
यदन्यच्च शुभं लोके प्रजानुग्रहकारि च ।
पशवश्चैव वृक्षाश्च प्रजानां हितकारिणः ।
तादृशान्देवपक्षस्थानिति विद्धि शुभानने ॥ २०
शुभाशुभमयं लोके सर्वं स्थावरजङ्गमम् ।
दैवं शुभमिति प्राहुरासुरं चाशुभं प्रिये ॥ २१

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि एकचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४१ ॥

---

## द्विचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४२ ॥

महेश्वरेण पार्वतींप्रति प्राणिनां मरणस्य स्वाभाविकत्वयत्नसाध्यत्वभेदेन द्वैविध्यकथनपूर्वकं द्वितीयस्य योगादिना शरीरत्यागादिभेदेन चातुर्विध्यकथनेन तस्य महाफलहेतुत्वकथनम् ॥ १ ॥ कामक्रोधादिना शरीरत्यागस्य नरकभोगहेतुत्वकथनम् ॥ २ ॥

उमोवाच ।
भगवन्मानुषाः केचित्कालधर्ममुपस्थिताः ।
प्राणमोक्षं कथं कृत्वा परत्र हितमाप्नुयुः ॥
महेश्वर उवाच ।
हन्त ते कथयिष्यामि शृणु देवि समाहिता ।
द्विविधं मरणं लोके स्वभावाद्यत्नतस्तथा ॥ २
तयोः स्वभावं नापायं यत्नतः करणोद्भवम् ।
एतयोरुभयोर्देवि विधानं शृणु शोभने ॥ ३
कल्याकल्यशरीरस्य यत्नजं द्विविधं स्मृतम् ।
यत्नजं नाम मरणमात्मत्यागो मुमूर्षया ॥ ४
तत्राकल्यशरीरस्य जरा व्याधिश्च कारणम् ।
महाप्रस्थानगमनं तथा प्रायोपवेशनम् ।
जलावगाहनं चैव अग्निचित्यां प्रवेशनम् ॥ ५
एवं चतुर्विधः प्रोक्त आत्मत्यागो मुमूर्षताम् ।
एतेषां क्रमयोगेन विधानं शृणु शोभने ॥ ६
स्वधर्मयुक्तं गार्हस्थ्यं चिरमूढ्वा विधानतः ।
तत्रानृण्यं च संप्राप्य वृद्धो वा व्याधितोऽपि वा ७
दर्शयित्वा स्वदौर्बल्यं सर्वानेवानुमान्य च ।
सर्वं विहाय बन्धूंश्च क्रमाणां भरणं तथा ॥ ८
दानानि विधिवत्कृत्वा धर्मकार्यार्थमात्मनः ।
अनुज्ञाप्य जनं सर्वं वाचा मधुरया ब्रुवन् ॥ ९
अहतं वस्त्रमाच्छाद्य बद्ध्वा तत्कुशरज्जुना ।
उपस्पृश्य प्रतिज्ञाय व्यवसायपुरःसरम् ॥ १०
परित्यज्य ततो ग्राम्यं धर्मं कुर्याद्यथेप्सितम् ।

महाप्रस्थानमिच्छेच्चेत्प्रतिष्ठेनोत्तरां दिशम् ॥ ११
भूत्वा तावन्निराहारो यावत्प्राणविमोक्षणम् ।
चेष्टाहानौ शयित्वाऽपि तन्मनाः प्राणमुत्सृजेत् ।
एवं पुण्यकृतां लोकानमलान्प्रतिपद्यते ॥ १२
प्रायोपवेशनं चेच्छेत्तेनैव विधिना नरः ।
देशे पुण्यतमे श्रेष्ठे निराहारस्तु संविशेत् ॥ १३
अप्राणं तु शुचिर्भूत्वा कुर्वन्दानं स्वशक्तितः ।
पुण्यं परित्यजेत्प्राणानेष धर्मः सनातनः ।
एवं कलेवरं त्यक्त्वा स्वर्गलोके महीयते ॥ १४
अग्निप्रवेशनं चेच्छेत्तेनैव विधिना शुभे ।
कृत्वा काष्ठमयं चित्यं पुण्यक्षेत्रे नदीषु वा ॥१५
दैवतेभ्यो नमस्कृत्वा कृत्वा चापि प्रदक्षिणम् ।
भूत्वा शुचिर्व्यवसितः प्रविशेदग्निसंस्तरम् ।
सोपि लोकान्यथान्यायं प्राप्नुयात्पुण्यकर्मणाम् १६
जलावगाहनं चेच्छेत्तेनैव विधिना शुभे ।
ख्याते पुण्यतमे तीर्थे निमज्जेत्सुकृतं स्मरन् ॥१७
सोपि पुण्यतमाँल्लोकान्निःसङ्गात्प्रतिपद्यते ।
ततः कल्यशरीरस्य संत्यागं शृणु तत्वतः ॥ १८
रक्षार्थं क्षत्रियः श्रेष्ठः प्रजापालनकारणात् ।
योधानां भर्तृपिण्डार्थं गुर्वर्थं ब्रह्मचारिणाम् ॥१९
गोब्राह्मणार्थं सर्वेषां प्राणत्यागो विधीयते ।
स्वराज्यरक्षणार्थं वा कुजनैः पीडिताः प्रजाः २०
मोक्तुकामस्त्यजेत्प्राणान्युद्धमार्गे यथाविधि ।
सुसन्नद्धो व्यवसितः संप्रविश्यापराङ्मुखः ।
एवं राजा मृतः सद्यः स्वर्गलोके महीयते ॥ २१
तादृशी सुगतिर्नास्ति क्षत्रियस्य विशेषतः ।
भृत्यो वा भर्तृपिण्डार्थं भर्तृकर्मण्युपस्थिते ॥ २२
कुर्वंस्तत्र तु साहाय्यमात्मप्राणानपेक्षया ।
स्वाम्यर्थं संत्यजेत्प्राणान्पुण्याँल्लोकान्स गच्छति ॥
स्पृहणीयः सुरगणैस्तत्र नास्ति विचारणा ।
एवं गोब्राह्मणार्थं वा दीनार्थं वा त्यजेत्तनुम् ॥२४
सोपि पुण्यमवाप्नोति आनृशंस्यव्यपेक्षया ।
इत्येते जीवितत्यागे मार्गास्ते समुदाहृताः ॥ २५
कामक्रोधाद्भयाद्वाऽपि यदि चेत्संत्यजेत्तनुम् ।
सोऽनन्तं नरकं याति आत्महन्तृत्वकारणात् ॥२६
स्वभावं मरणं नाम न तु चात्मेच्छया भवेत् ।
यथा मृतानां यत्कार्यं तन्मे शृणु यथाविधि ॥२७
तत्रापि मरणं त्यागो मूढत्यागाद्विशिष्यते ।
भूमौ संवेशयेद्देहं नरस्य विनशिष्यतः ॥ २८
निर्जीवं वृणुयात्सद्यो वाससा तु कलेवरम् ।
माल्यगन्धैरलंकृत्य सुवर्णेन च भामिनि ॥ २९
श्मशाने दक्षिणे देशे चिताग्नौ प्रदहेन्मृतम् ।
अथवा निक्षिपेद्भूमौ शरीरं जीववर्जितम् ॥ ३०
दिवा च शुक्लपक्षश्च उत्तरायणमेव च ।
मुमूर्षूणां प्रशस्तानि विपरीतं तु गर्हितम् ॥ ३१
औदकं चाष्टकाश्राद्धं बहुभिर्बहुभिः कृतम् ।
आप्यायनं मृतानां तत्परलोके भवेच्छुभम् ।
एतत्सर्वं मया प्रोक्तं मानुषाणां हितं वचः ॥ ३२

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि द्विचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४२ ॥

## त्रिचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४३ ॥

महेश्वरेण पार्वतींप्रति नानाधर्माणामपि प्रत्येकं साफल्यकथनेन तेषु मोक्षधर्मस्यैव श्रैष्ठ्यप्रतिपादनम् ॥ १ ॥ तथा ज्ञानस्य मोक्षसाधनत्वकथनपूर्वकं तत्प्राप्त्युपायकथनम् ॥ २ ॥

उमोवाच ।
देवदेव नमस्तेऽस्तु कालसूदन शंकर ।
लोकेषु विविधा धर्मास्त्वत्प्रसादान्मया श्रुताः ॥१
विशिष्टं सर्वधर्मेभ्यः शाश्वतं ध्रुवमव्ययम् ।
श्रोतुमिच्छाम्यहं सर्वमत्र मुह्यति मे मनः ॥ २
केचिन्मोक्षं प्रशंसन्ति केचिद्यज्ञफलं द्विजाः ।
वानप्रस्थं पुनः केचिद्गार्हस्थ्यं केचिदाश्रमम् ॥ ३
राजधर्माश्रयं केचित्केचित्स्वाध्यायमेव च ।
ब्रह्मचर्याश्रमं केचित्केचिद्वाक्संयममाश्रयम् ॥ ४
मातरं पितरं केचित्सेवमाना दिवं गताः ।

अहिंसया परः स्वर्गं सत्येन च महीयते ॥ ५
आहवेऽभिमुखाः केचिन्निहतास्त्रिदिवं गताः ।
केचिदुञ्छवृत्ते सिद्धाः स्वर्गमार्गं समाश्रिताः ॥ ६
आर्जवेनापरे युक्ता महतां पूजने रताः ।
ऋजवो नाकपृष्ठे तु शुद्धात्मानः प्रतिष्ठिताः ॥ ७
एवं बहुविधैर्लोके धर्मद्वारैः सुसंवृतैः ।
ममापि मतिराविद्धा मेघलेखेव वायुना ॥ ८
एतस्मिन्संशयस्थाने संशयच्छेदकारि यत् ।
वचनं ब्रूहि देवेश निश्चयज्ञानसंज्ञितम् ॥ ९
नारद उवाच ।
एवं पृष्टः स्वया देव्या महादेवः पिनाकधृक् ।
प्रोवाच मधुरं वाक्यं सूक्ष्ममध्यात्मसंश्रितम् ॥१०
महेश्वर उवाच ।
न्यायतस्त्वं महाभागे श्रोतुकामाऽसि निश्चयम् ।
एतदेव विशिष्टं ते यत्त्वं पृच्छसि मां प्रिये ॥ ११
सर्वत्र विहितो धर्मः स्वर्गलोकफलाश्रितः ।
बहुद्वारस्य धर्मस्य नेहास्ति विफलाः क्रियाः ॥ १२
यस्मिन्यस्मिंश्च विषये योयो याति विनिश्चयम् ।
तं तमेवाभिजानाति नान्यं धर्मं शुचिस्मिते ॥ १३
शृणु देवि समासेन मोक्षद्वारमनुत्तमम् ।
एतद्धि सर्वधर्माणां विशिष्टं शुभमव्ययम् ॥ १४
नास्ति मोक्षात्परं देवि मोक्ष एव परा गतिः ।
सुखमात्यन्तिकं श्रेष्ठमनिवृत्तं च तद्विदुः ॥ १५
नात्र देवि जरा मृत्युः शोको वा दुःखमेव वा ।
अनुत्तममचिन्त्यं च तद्देवि परमं सुखम् ॥ १६
ज्ञानानामुत्तमं ज्ञानं मोक्षज्ञानं विदुर्बुधाः ।
ऋषिभिर्देवसङ्घैश्च प्रोच्यते परमं पदम् ॥ १७
नित्यमक्षरमक्षोभ्यमजेयं शाश्वतं शिवम् ।
विशन्ति तत्पदं प्राज्ञाः स्पृहणीयं सुरोत्तमैः ॥ १८
दुःखादिश्च दुरन्तश्च संसारोयं प्रकीर्तितः ।
शोकव्याधिजरादोषैर्मरणेन च संयुतः ॥ १९
यथा ज्योतिर्गणा व्योम्नि विवर्तन्ते पुनः पुनः ।
तस्य मोक्षस्य मार्गोऽयं श्रूयतां शुभलक्षणे ॥ २०
ब्रह्मादिस्थावरान्तश्च संसारो यः प्रकीर्तितः ।
संसारे प्राणिनः सर्वे निवर्तन्ते यथा पुनः ॥ २१
तत्र संसारचक्रस्य मोक्षो ज्ञानेन दृश्यते ।
अध्यात्मतत्वविज्ञानं ज्ञानमित्यभिधीयते ॥ २२
ज्ञानस्य ग्रहणोपायमाचारं ज्ञानिनस्तथा ।
यथावत्संप्रवक्ष्यामि तत्त्वमेकमनाः शृणु ॥ २३
ब्राह्मणः क्षत्रियो वाऽपि भूत्वा पूर्वं गृहे स्थितः ।
आनृण्यं सर्वतः प्राप्य ततस्तान्संत्यजेद्गृहान् ॥ २४
ततः संत्यज्य गार्हस्थ्यं निश्चितो वनमाश्रयेत् २५
वने गुरुं समाज्ञाय दीक्षितो विधिपूर्वकम् ।
दीक्षां प्राप्य यथान्यायं स्ववृत्तं परिपालयेत् ॥ २६
गृह्णीयादप्युपाध्यायान्मोक्षज्ञानमनिन्दितः ।
द्विविधं च पुनर्मोक्षं साङ्ख्ययोगमिति स्मृतिः ॥२७
पञ्चविंशतिविज्ञानं साङ्ख्यमित्यभिधीयते ।
ऐश्वर्यं देवसारूप्यं योगशास्त्रस्य निर्णयः ।
तयोरन्यतरं ज्ञानं शृणुयाच्छिष्यतां गतः ॥ २८
नाकालो नाप्यकाषायी नाप्यसंवत्सरोषितः
नासाङ्ख्ययोगो नाश्राद्धं गुरुणा स्नेहपूर्वकम्
समः शीतोष्णहर्षादीन्विषहेत स वै मुनिः ॥ २९
अमृष्यः क्षुत्पिपासाभ्यामुचितेभ्यो निवर्तयेत् ।
त्यजेत्संकल्पजान्ग्रन्थीन्सदा ध्यानपरो भवेत् ॥३०
कुण्डिकाचमसं शिक्यं छत्रं यष्टिमुपानहौ ।
चेलमित्येव नैतेषु स्थापयेत्साम्यमात्मनः ॥ ३१
गुरोः पूर्वं समुत्तिष्ठेज्जघन्यं तस्य संविशेत् ।
नैवाविज्ञाप्य भर्तारमावश्यकमपि व्रजेत् ॥ ३२
द्विरह्नि स्नानशाटेन संध्ययोरभिषेचनम् ।
एककालाशनं चास्य विहितं यतिभिः पुरा ॥ ३३
भैक्षं सर्वत्र गृह्णीयाच्चिन्तयेत्सततं निशि ।
कारणे चापि संप्राप्ते न ज्ञाप्येत कदाचन ॥ ३४
ब्रह्मचर्यं वने वासं शौचमिन्द्रियसंयमः ।
दया च सर्वभूतेषु तस्य धर्मः सनातनः ॥ ३५
विमुक्तः सर्वपापेभ्यो लघ्वाहारो जितेन्द्रियः ।
आत्मयुक्तः परां बुद्धिं लभते पापनाशिनीम् ॥३६
यदा भावं न कुरुते सर्वभूतेषु पापकम् ।
कर्मणा मनसा वाचा ब्रह्म संपद्यते तदा ॥ ३७

अनिष्टुरोऽनहंकारो निर्द्वन्द्वो वीतमत्सरः ।
वीतशोकभयाबाधं पदं प्राप्नोत्यनुत्तमम् ॥ ३८
तुल्यनिन्दास्तुतिर्मौनी समलोष्टाश्मकाञ्चनः ।
समः शत्रौ च मित्रे च निर्वाणमधिगच्छति ॥ ३९
एवं युक्तसमाचारस्तत्परोऽध्यात्मचिन्तकः ।
ज्ञानाभ्यासेन तेनैव प्राप्नोति परमां गतिम् ॥ ४०

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि त्रिचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४३ ॥

## चतुश्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४४ ॥

महेश्वरेण पार्वतींप्रति जरामरणतारणस्य निर्वाणैकसाध्यत्वोक्त्या तस्य ज्ञानैकसाध्यत्वेप्रतिपादनेनेन्द्रियनिग्रहादिना वैराग्यस्य तत्कारणत्वोक्तिः ॥ १ ॥

महेश्वर उवाच ।
अनुद्विग्नमतेर्जन्तोरस्मिन्संसारमण्डले ।
शोकव्याधिजरादुःखैर्निर्वाणं नोपपद्यते ॥ १
तस्मादुद्वेगजननं मनोऽवस्थापनं तथा
ज्ञानं ते संप्रवक्ष्यामि तन्मूलममृतं हि वै ॥ २
शोकस्थानसहस्राणि भयस्थानशतानि च ।
दिवसेदिवसे मूढमाविशन्ति न पण्डितम् ॥ ३
नष्टे धने वा दारे वा पुत्रे पितरि वा मृते ।
अहो दुःखमिति ध्यायञ्शोकस्य पदमाव्रजेत् ॥ ४
द्रव्येषु समतीतेषु ये शुभास्तान्न चिन्तयेत् ।
ताननाद्रियमाणस्य शोकबन्धः प्रणश्यति ॥ ५
संप्रयोगादनिष्टस्य विप्रयोगात्प्रियस्य च ।
मानुषा मानसैर्दुःखैः संयुज्यन्तेऽल्पबुद्धयः ॥ ६
मृतं वा यदि वा नष्टं योऽतीतमनुशोचति ।
संतापेन च युज्येत तच्चास्य न निवर्तते ॥ ७
उत्पन्नमिह मानुष्ये गर्भप्रभृति मानवम् ।
विविधान्युपवर्तन्ते दुःखानि च सुखानि च ॥ ८
तयोरेकतरो मार्गो यद्येनमभिसंनमेत् ।
सुखं प्राप्य न संहृष्येन्न दुःखं प्राप्य संज्वरेत् ॥ ९
दोषदर्शी भवेत्तत्र यत्र स्नेहः प्रवर्तते ।
अनिष्टेनान्वितं पश्येद्यथा क्षिप्रं विरज्यते ॥ १०
यथा काष्ठं च काष्ठं च समेयातां महोदधौ ।
समेत्य च व्यपेयातां तद्वज्ज्ञातिसमागमः ॥ ११
अदर्शनादापतिताः पुनश्चादर्शनं गताः ।
स्नेहस्तत्र न कर्तव्यो विप्रयोगो हि तैर्ध्रुवम् ॥ १२
कुटुम्बपुत्रदारांश्च शरीरं धनसंचयम् ।
ऐश्वर्यं स्वस्तिता चेति न मुह्येत्तत्र पण्डितः ॥ १३
सुखमेकान्ततो नास्ति शक्रस्यापि त्रिविष्टपे ।
तत्रापि सुमहद्दुःखं न नित्यं लभते सुखम् ॥ १४
सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् ।
क्षयान्ता निचयाः सर्वे पतनान्ताः समुच्छ्रयाः ॥ १५
संयोगा विप्रयोगान्ता मरणान्तं च जीवितम् ।
उच्छ्रयांश्च निपातांश्च दृष्ट्वा प्रत्यक्षतस्त्वयम् ।
अनित्यमसुखं चेति व्यवस्येत्सर्वमेव च ॥ १६
अर्थानामार्जने दुःखमार्जितानां तु रक्षणे ।
नाशे दुःखं व्यये दुःखं धिगर्थं दुःखभाजनम् ॥ १७
अर्थवन्तं नरं नित्यं पञ्चाभिघ्नन्ति शत्रवः ।
राजा चोरश्च दायादा भूतानि क्षय एव च ॥ १८
अर्थमेव ह्यनर्थस्य मूलमित्यवधारय ।
न ह्यनर्थाः प्रबाधन्ते नरमर्थविवर्जितम् ॥ १९
अर्थप्राप्तिर्महद्दुःखमाकिंचिन्यं परं सुखम् ।
उपद्रवेषु चार्थानां दुःखं हि नियतं भवेत् ॥ २०
धनलोभेन तृष्णाया न तृप्तिरुपलभ्यते ।
लब्धाश्रयो विवर्धेत समिद्ध इव पावकः ॥ २१
जित्वाऽपि पृथिवीं कृत्स्नां चतुःसागरमेखलाम् ।
सागराणां पुनः पारं जेतुमिच्छत्यसंशयम् ॥ २२
अलं परिग्रहेणेह दोषवान्हि परिग्रहः ।
कोशकारः क्रिमिर्देवि बध्यते हि परिग्रहात् ॥ २३
एकोऽपि पृथिवीं कृत्स्नामेकच्छत्रां प्रशास्ति च ।
एकस्मिन्नेव राष्ट्रे तु स चापि निवसेन्नृपः ॥ २४

दाराश्चोराश्चेति क. पाठः ॥ १८ ॥

चतुश्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४४ ॥

तस्मिन्राष्ट्रेऽपि नगरमेकमेवाधितिष्ठति ।
नगरेऽपि गृहं चैकं भवेत्तस्य निवेशनम् ॥ २५
एक एव प्रतिष्ठः स्यादावासस्तद्गृहेऽपि च ।
आवासे शयनं चैकं निशि यत्र प्रलीयते ॥ २६
शयनस्यार्धमेवास्य स्त्रियाश्चार्धं विधीयते ।
तदनेन प्रसङ्गेन स्वल्पेनैव हि युज्यते ॥ २७
सर्वं ममेति संमूढो बलं पश्यति बालिशः ।
एवं सर्वोपयोगेषु स्वल्पमस्य प्रयोजनम् ॥ २८
तण्डुलप्रस्थमात्रेण यात्रा स्यात्सर्वदेहिनाम् ।
ततो भूयस्तरो योगो दुःखाय तपनाय च ॥ २९
नास्ति तृष्णासमं दुःखं नास्ति त्यागसमं सुखम् ।
सर्वान्कामान्परित्यज्य ब्रह्मभूयाय कल्पते ॥ ३०
या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः ।
योऽसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखम्
न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ ३२
अलाभेनैव कामानां शोकं त्यजति पण्डितः ।
आयासविटपस्तीव्रः कामाग्निः कर्षणारणिः ।
इन्द्रियार्थैश्च संमोह्य दहत्यकुशलं जनम् ॥ ३३
यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ।
नालमेकस्य पर्याप्तमिति पश्यन्न मुह्यति ॥ ३४
यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥ ३५
इन्द्रियाणीन्द्रियार्थेषु नैव धीरो नियोजयेत् ।
मनःषष्ठानि संयम्य नित्यमात्मनि योजयेत् ॥ ३६
इन्द्रियाणां विसर्गेण दोषमृच्छत्यसंशयम् ।
संनियम्य तु तान्येव ततः सिद्धिमवाप्नुयात् ॥ ३७
षण्णामात्मनि युक्तानामैश्वर्यं योऽधिगच्छति ।
न च पापैर्न चानर्थैः संयुज्येत विचक्षणः ॥ ३८
अप्रमत्तः सदा रक्षेदिन्द्रियाणि विचक्षणः ।
अरक्षितेषु तेष्वाशु नरो नरकमेति हि ॥ ३९
हृदि काममयश्चित्रो मोहसंचयसंभवः ।
अज्ञानरूढमूलस्तु विवित्सापरिषेचनः ॥ ४०
रोषलोभमहास्कन्धः पुरा दुष्कृतसारवान् ।
आयासविटपस्तीव्रशोकपुष्पो भयाङ्कुरः ॥ ४१
नानासंकल्पपत्राढ्यः प्रमादात्परिवर्धितः ।
महतीभिः पिपासाभिः समन्तात्परिवेष्टितः ॥ ४२
संरोहत्यकृतप्रज्ञे पादपः कामसंभवः ।
नैव रोहति तत्वज्ञे रूढो वा छिद्यते पुनः ॥ ४३
कृच्छ्रोपायेष्वनित्येषु निःसारेषु फलेषु च ।
दुःखादिषु दुरन्तेषु कामयोगेषु का रतिः ॥ ४४
इन्द्रियेषु च जीर्यत्सु छिद्यमाने तथाऽऽयुषि ।
पुरस्ताच्च स्थिते मृत्यौ किं सुखं पश्यतासुखे ४५
व्याधिभिः पीड्यमानस्य नित्यं शारीरमानसैः ।
नरस्याकृतकृत्यस्य किं सुखं मरणे सति ॥ ४६
संचिन्वानं तमेवार्थं कामानामवितृप्तकम् ।
व्याघ्रः पशुमिवारण्ये मृत्युरादाय गच्छति ॥ ४७
जन्ममृत्युजरादुःखैः सततं समभिद्रुतः ।
संसारे पच्यमानस्तु पापान्नोद्विजते जनः ॥ ४८
उमोवाच ।
केनोपायेन मर्त्यानां निवर्त्येते जरान्तकौ ।
यद्यस्ति भगवन्मह्यमेतदाचक्ष्व माचिरम् ॥ ४९
तपसा वा सुमहता कर्मणा वा श्रुतेन वा ।
रसायनप्रयोगैर्वा केनात्येति जरान्तकौ ॥ ५०
महेश्वर उवाच ।
नैतदस्ति महाभागे जरामृत्युनिवर्तनम् ।
सर्वलोकेषु जानीहि मोक्षादन्यत्र भामिनि ॥ ५१
न धनेन न राज्येन नोग्रेण तपसाऽपि वा ।
मरणं नातितरते विना मुक्त्या शरीरिणः ॥ ५२
अश्वमेधसहस्राणि वाजपेयशतानि च ।
न तरन्ति जरामृत्यू निर्वाणाधिगमाद्विना ॥ ५३
ऐश्वर्यं धनधान्यं च विद्यालाभस्तपस्तथा ।
रसायनप्रयोगाद्वै न तरन्ति जरान्तकौ ॥ ५४
दानयज्ञतपःशीलरसायनविदोऽपि वा ।
स्वाध्यायनिरता वाऽपि न तरन्ति जरान्तकौ ॥ ५५
देवदानवगन्धर्वकिन्नरोरगराक्षसान् ।
स्ववशे कुरुते कालो न कालस्यास्त्यगोचरः ॥ ५६
न ह्यहानि निवर्तन्ते न मासा न पुनः क्षपाः ।

सोयं प्रपद्यते ध्यानमजस्रं ध्रुवमव्ययम् ॥ ५७
स्रवन्ति न निवर्तन्ते स्रोतांसि सरितामिव ।
आयुरादाय मर्त्यानामहोरात्रेषु संततम् ॥ ५८
जीवितं सर्वभूतानामक्षयः क्षपयन्नसौ ।
आदित्यो ह्यस्तमभ्येति पुनः पुनरुदेति च ॥ ५९
यस्यां रात्र्यां व्यतीतायामायुरल्पतरं भवेत् ।
गाधोदके मत्स्य इव किंनु तस्य कुमारता ॥ ६०
मरणं हि शरीरस्य नियतं ध्रुवमेव च ।
तिष्ठन्नपि क्षणं सर्वः कालस्यैति वशं पुनः ॥ ६१
न म्रियेरन्न जीर्येरन्यदि स्युः सर्वदेहिनः ।
न चानिष्टं प्रवर्तेत शोको वा प्राणिनं क्वचित् ॥ ६२
अप्रमत्तः प्रमत्तेषु कालो भूतेषु तिष्ठति ।
अप्रमत्तस्य कालस्य क्षयं प्राप्तो न मुच्यते ॥ ६३
श्वःकार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् ।
कोपि तद्वेद यत्रासौ मृत्युना नाभिवीक्षितः ॥ ६४
वर्षास्विदं करिष्यामि इदं ग्रीष्मवसन्तयोः ।
इति बालश्चिन्तयति अन्तरायं न बुध्यति ॥ ६५
इदं मे स्यादिदं मे स्यादित्येवं मनसा नराः ।
अनवाप्तेषु कामेषु ह्रियन्ते मरणं प्रति ॥ ६६
कालपाशेन बद्धानामहन्यहनि जीर्यताम् ।
का श्रद्धा प्राणिनां मार्गे विषमे भ्रमतां सदा ॥ ६७
युवैव धर्मशीलः स्यादनिमित्तं हि जीवितम् ।
फलानामिव पक्वानां सदा हि पतनाद्भयम् ॥ ६८
मर्त्यस्य किं धनैर्दारैः पुत्रभोगैः प्रियैरपि ।
एकाह्ना सर्वमुत्सृज्य मृत्योरनु वशमन्वियात् ॥ ६९
जायमानांश्च संप्रेक्ष्य म्रियमाणांस्तथैव च ।
न संवेगोस्ति चेत्पुंसः काष्ठलोष्टसमो हि सः ॥ ७०

विनाशिनो ह्यध्रुवजीवितस्य
किं बन्धुभिर्मित्रपरिग्रहैश्च ।
विहाय यद्गच्छति सर्वमेव
क्षणेन गत्वा न निवर्तते च ॥ ७१

एवं चिन्तयतो नित्यं सर्वार्थानामनित्यताम् ।
उद्वेगो जायते शीघ्रं निर्वाणस्य पुरस्सरः ॥ ७२
तेनोद्वेगेन चाप्यस्य विमर्शो जायते पुनः ।
विमर्शो नाम वैराग्यं सर्वद्रव्येषु जायते ॥ ७३
वैराग्येण परां शान्तिं लभन्ते मानवाः शुभे ।
मोक्षस्योपनिषद्दिव्यं वैराग्यमिति निश्चितम् ॥ ७४
एतत्ते कथितं देवि वैराग्योत्पादनं वचः ।
एवं संचिन्त्य संचिन्त्य मुच्यन्ते हि मुमुक्षवः ॥ ७५

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि चतुश्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४४ ॥

## पञ्चचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४५ ॥

महेश्वरेण पार्वतींप्रति साङ्ख्यज्ञानप्रतिपादनपूर्वकमव्यक्तादिचतुर्विंशतितत्वानामुत्पत्तिप्रकारादिकथनम् ॥ १ ॥ तथा सत्त्वादिगुणानां कार्यविशेषनिरूपणम् ॥ २ ॥ तथा भूतपञ्चकादिगुणप्रतिपादनम् ॥ ३ ॥

---

महेश्वर उवाच ।
साङ्ख्यज्ञानं प्रवक्ष्यामि यथावत्ते शुचिस्मिते ।
यज्ज्ञात्वा न पुनर्मर्त्यः संसारेषु प्रवर्तते ॥ १
ज्ञानेनैव विमुक्तास्ते साङ्ख्याः संन्यासकोविदाः ।
शारीरं तु तपो घोरं साङ्ख्याः प्राहुर्निरर्थकम् ॥ २
पञ्चविंशतिकं ज्ञानं तेषां ज्ञानमिति स्मृतम् ।
मूलप्रकृतिरव्यक्तमव्यक्ताज्जायते महान् ॥ ३
महतोऽभूदहंकारस्तस्मात्तन्मात्रपञ्चकम् ।
इन्द्रियाणि दशैकं च तन्मात्रेभ्यो भवन्त्युत ॥ ४
तेभ्यो भूतानि पञ्चास्य शरीरं यैः प्रवर्तते ।
इति क्षेत्रस्य संक्षेपं चतुर्विंशतिरिष्यते ।
पञ्चविंशतिरित्याहुः पुरुषेणेह सङ्ख्यया ॥ ५
सत्वं रजस्तमश्चेति गुणाः प्रकृतिसंभवाः ।
तैः सृजत्यखिलं लोकं प्रकृतिः स्वात्मकैर्गुणैः ॥ ६
इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः ।
विकाराः प्रकृतेश्चैते वेदितव्या मनीषिभिः ॥ ७
लक्षणं चापि सर्वेषां विकल्पं चादितः पृथक् ।
विस्तरेणैव वक्ष्यामि तस्य व्याख्यामहं शृणु ॥ ८

नित्यमेकमणु व्यापि क्रियाहीनमहेतुकम् ।
अग्राह्यमिन्द्रियैः सर्वैरेतदव्यक्तलक्षणम् ॥ ९
अव्यक्तं प्रकृतिर्मूलं प्रधानं योनिरव्ययम् ।
अव्यक्तस्यैव नामानि शब्दैः पर्यायवाचकैः ॥१०
तत्सूक्ष्मत्वादनिर्देश्यं तत्सदित्यभिधीयते ।
तन्मूलं च जगत्सर्वं तन्मूला सृष्टिरिष्यते ॥ ११
सत्वादयः प्रकृतिजा गुणास्तान्प्रब्रवीम्यहम् ॥१२
सुखं तुष्टिः प्रकाशश्च त्रयस्ते सात्विका गुणाः ।
रागद्वेषौ सुखं दुःखं स्तम्भश्च रजसो गुणाः ।
अप्रकाशो भयं मोहस्तन्द्री च तमसो गुणाः॥१३
श्रद्धा प्रहर्षो विज्ञानमसंमोहो दया धृतिः ।
सत्वे प्रवृत्ते वर्धन्ते विपरीते विपर्ययः ॥ १४
कामक्रोधौ मनस्तापो लोभो मोहस्तथामृषा ।
प्रवृद्धे परिवर्धन्ते रजस्येतानि सर्वशः ॥ १५
विषादः संशयो मोहस्तन्द्री निद्रा भयं तथा ।
तमस्येतानि वर्धन्ते प्रवृद्धे हेत्वहेतुकम् ॥ १६
एवमन्योन्यमेतानि वर्धन्ते च पुनःपुनः ।
हीयन्ते च तथा नित्यमभिभूतानि भूरिशः॥१७
तत्र यत्प्रीतिसंयुक्तं कायेन मनसाऽपि वा ।
वर्तते सात्विको भाव इत्युपेक्षेत तत्तथा ॥ १८
यदा संतापसंयुक्तं चित्तक्षोभकरं भवेत् ।
वर्तते रज इत्येव तदा तदभिचिन्तयेत् ॥ १९
यदा संमोहसंयुक्तं यद्विषादकरं भवेत् ।
अप्रतर्क्यमविज्ञेयं तमस्तदुपधारयेत् ॥ २०
समासात्सात्विको धर्मः समासाद्राजसं धनम् ।
समासात्तामसः कामस्त्रिवर्गे त्रिगुणाः क्रमात्२१
ब्रह्मादिदेवसृष्टिर्या सात्विकीति प्रकीर्त्यते ।
राजसी मानवी सृष्टिस्तिर्यग्योनिस्तु तामसी २२
ऊर्ध्वं गच्छन्ति सत्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः २३
देवमानुषतिर्यक्षु यद्भूतं सचराचरम् ।
आदिप्रभृति संयुक्तं व्याप्तमेभिस्त्रिभिर्गुणैः ॥२४
अतः परं प्रवक्ष्यामि महदादीनि लिङ्गतः ।
विज्ञानं च विवेकश्च महतो लक्षणं भवेत् ॥ २५
महान्बुद्धिर्मतिः प्रज्ञा नामानि महतो विदुः ।
अहंकारः स विज्ञेयो लक्षणेन समासतः ॥ २६
अहंकारेण भूतानां सर्गो नानाविधो भवेत् ।
अहंकारनिवृत्तिर्हि निर्वाणायोपपद्यते ॥ २७
खं वायुरग्निः सलिलं पृथिवी चेति पञ्चमी ।
महाभूतानि भूतानां सर्वेषां प्रभवाप्ययौ ॥ २८
शब्दः श्रोत्रं तथा खानि त्रयमाकाशसंभवम् ।
स्पर्शवत्प्राणिनां चेष्टा पवनस्य गुणाः स्मृताः॥२९
रूपं पाकोऽक्षिणी ज्योतिश्चत्वारस्तेजसो गुणाः ।
रसः स्नेहस्तथा जिह्वा शैत्यं च जलजा गुणाः ॥३०
गन्धो घ्राणं शरीरं च पृथिव्यास्ते गुणास्त्रयः ।
इति सर्वगुणा देवि विख्याताः पाञ्चभौतिकाः३१
गुणान्पूर्वस्यपूर्वस्य प्राप्नुवन्त्युत्तराणि तु ।
तस्मान्नैकगुणाश्चेह दृश्यन्ते भूतसृष्टयः ॥ ३२
उपलभ्याप्सु ये गन्धं केचिद्ब्रूयुरनैपुणाः ।
अपां गन्धगुणं प्राज्ञा नेच्छन्ति कमलेक्षणे ॥३३
तद्गन्धत्वमपां नास्ति पृथिव्या एव तद्गुणः ।
भूमिर्गन्धे रसे स्नेहो ज्योतिश्चक्षुषि संस्थितम् ।
प्राणापानाश्रयो वायुः खेष्वाकाशः शरीरिणां३४
केशास्थिनखदन्तत्वक्पाणिपादशिरांसि च ।
पृष्ठोदरकटिग्रीवाः सर्वं भूम्यात्मकं स्मृतम् ॥३५
यत्किंचिदपि कायेऽस्मिन्धातुदोषमलाश्रितम् ।
तत्सर्वं भौतिकं विद्धि देहैरेवास्य स्वामिकम् ॥३६
बुद्धीन्द्रियाणि कर्णत्वक्चक्षुर्जिह्वाऽथ नासिका ।
कर्मेन्द्रियाणि वाक्पाणिपादौ मेढ्रं गुदस्तथा ३७
शब्दः स्पर्शश्च रूपं च रसो गन्धश्च पञ्चमः ।
बुद्धीन्द्रियार्थाञ्जानीयाद्भूतेभ्यस्त्वभिनिःसृतान्॥
वाक्यं क्रिया गतिः प्रीतिरुत्सर्गश्चेति पञ्चधा ।
कर्मेन्द्रियार्थाञ्जानीयात्ते च भूतोद्भवा मताः ३९
इन्द्रियाणां तु सर्वेषामीश्वरं मन उच्यते ।
प्रार्थनालक्षणं तच्च इन्द्रियं तु मनः स्मृतम् ॥४०
नियुङ्क्ते च सदा तानि भूतानि मनसा सह ।
नियमे च विसर्गे च मनसः कारणं प्रभुः ॥ ४१
इन्द्रियाणीन्द्रियार्थाश्च स्वभावश्चेतना धृतिः ।

भूताभूतविकारश्च शरीरमिति संस्मृतम् ॥ ४२
शरीराच्च परो देही शरीरं च व्यपाश्रितः ।
शरीरिणः शरीरस्य सोऽन्तरं वेत्ति वै मुनिः॥४३
रसः स्पर्शश्च गन्धश्च रूपं शब्दविवर्जितम् ।
अशरीरं शरीरेषु दिदृक्षेत निरिन्द्रियम् ॥ ४४
अव्यक्तं सर्वदेहेषु मर्त्येष्वमरमाश्रितम् ।
यः पश्येत्परमात्मानं बन्धनैः स विमुच्यते ॥४५
नैवायं चक्षुषा ग्राह्यो नापरैरिन्द्रियैरपि ।
मनसैव प्रदीप्तेन महानात्मा प्रदृश्यते ॥ ४६
स हि सर्वेषु भूतेषु स्थावरेषु चरेषु च ।
वसत्येको महावीर्यो नानाभावसमन्वितः ॥ ४७
नैव चोर्ध्वं न तिर्यक्च नाधस्तान्न कदाचन ।
इन्द्रियैरिव बुद्ध्या वा न दृश्येत कदाचन॥४८
नवद्वारं पुरं गत्वा स्थितोऽसौ नियतो वशी ।
ईश्वरः सर्वलोकेषु स्थावरस्य चरस्य च ॥ ४९
तमेवाहुरणुभ्योऽणुं तं महद्भ्यो महत्तरम् ।
बहुधा सर्वभूतानि व्याप्य तिष्ठति शाश्वतम्॥५०
क्षेत्रज्ञमेकतः कृत्वा सर्वं क्षेत्रमथैकतः ।
एवं स विमृशेज्ज्ञानी संयतः सततं हृदि ॥ ५१
पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान्गुणान् ।
अकर्ता लेपको नित्यो मध्यस्थः सर्वकर्मणाम् ५२
कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥ ५३
अजय्योऽयमचिन्त्योऽयमव्यक्तोऽयं सनातनः ।
देही तेजोमयो देहे तिष्ठतीत्यपरे विदुः ॥ ५४
ज्ञानमूष्मा च वायुश्च शरीरे जीवसंज्ञकः ।
इत्येते निश्चिता बुद्ध्या तत्रैते बुद्धिचिन्तकाः ५५
अपरे सर्वलोकांश्च व्याप्य तिष्ठन्तमीश्वरम् ।
ब्रुवते केचिदत्रैव तिलतैलवदाश्रितम् ॥ ५६
अपरे नास्तिका मूढा हीनत्वात्स्थूललक्षणैः ।
नास्त्यात्मेति विनिश्चित्याप्रज्ञास्ते निरयालयाः५७
एवं नानाविधा नैव विमृशन्ति महेश्वरम् ॥ ५८
उमोवाच ।
भगवन्ब्राह्मणो लोके नित्यमक्षरमव्ययम् ।
अस्त्यात्मा सर्वभूतेषु हेतुस्तत्र सुदुर्गमः ॥ ५९
महेश्वर उवाच ।
ऋषिभिश्चापि देवैश्च व्यक्तमेष न दृश्यते ।
दृष्ट्वा तु तं महात्मानं पुनस्तु न निवर्तते ॥ ६०
तस्मात्तद्दर्शनादेव विन्दते परमां गतिम् ।
इति ते कथितो देवि साङ्ख्यधर्मः सनातनः ।
कपिलादिभिराचार्यैः सेवितः परमर्षिभिः ॥ ६१

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि पञ्चचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४५ ॥

## षट्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४६ ॥

महेश्वरेण पार्वतींप्रति योगनिरूपणपूर्वकं तत्फलप्रतिपादनम् ॥ १ ॥

महेश्वर उवाच ।
साङ्ख्यज्ञाने नियुक्तानां यथावत्कीर्तितं मया ।
योगधर्मं पुनः कृत्स्नं कीर्तयिष्यामि ते शृणु ॥१
स च योगो द्विधा भिन्नो ब्रह्मदेवर्षिसंमतः ।
समानमुभयत्रापि वृत्तं शास्त्रप्रचोदितम् ॥ २
स चाष्टगुणमैश्वर्यमधिकृत्य विधीयते ।
सायुज्यं सर्वदेवानां योगधर्मं परं श्रिताः ॥ ३
ज्ञानं सर्वस्य योगस्य मूलमित्यवधारय ।
व्रतोपवासनियमैस्तत्सर्वं चापि बृंहयेत् ॥ ४
ऐकात्म्यं बुद्धिमनसोरिन्द्रियाणां च सर्वशः ।
आत्मनो वेदितं प्राज्ञ ज्ञानमेतत्तु योगिनाम् ॥५
अर्चयेद्ब्राह्मणानग्निं देवतायतनानि च ।
वर्जयेदशिवं भावं सर्वसत्त्वमुपाश्रितः ॥ ६
दानमध्ययनं श्रद्धा व्रतानि नियमास्तथा ।
सत्यमाहारशुद्धिश्च शौचमिन्द्रियनिग्रहः ।
एतैश्च वर्धते तेजः पापं चाप्यवधूयते ॥ ७

अस्त्यात्मा सर्वदेहेष्विति ड. पाठः ॥ ५९ ॥

निर्धूतपापस्तेजस्वी लघ्वाहारो जितेन्द्रियः ।
अमोघो निर्मलो दान्तः पश्चाद्योगं समाचरेत् ॥८
अवरुध्यात्मनः पूर्वं मत्स्यघात इवामिषम् ।
एकान्ते विजने देशे सर्वतः संवृते शुचौ ।
कल्पयेदासनं तत्र स्वास्तीर्णं मृदुभिः कुशैः ॥ ९
उपविश्यासने तस्मिन्नृजुकायशिरोधरः ।
अव्यग्रः सुखमासीनः स्वाङ्गानि न विकम्पयेत् ।
संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥१०
मनोऽवस्थापनं देवि योगस्योपनिषद्भवेत् ।
तस्मात्सर्वप्रयत्नेन मनोऽवस्थापयेत्सदा ॥ ११
त्वक्छ्रोत्रं च ततो जिह्वा घ्राणं चक्षुश्च संहरेत् ।
पञ्चेन्द्रियाणि संधाय मनसि स्थापयेद्बुधः ॥ १२
सर्वं चापोह्य संकल्पमात्मनि स्थापयेन्मनः ।
यदैतान्यवतिष्ठन्ते मनःषष्ठानि चात्मनि ॥ १३
प्राणापानौ तदा तस्य युगपत्तिष्ठतो वशे ।
प्राणे हि वशमापन्ने योगसिद्धिर्ध्रुवा भवेत् ॥ १४
शरीरं चिन्तयेत्सर्वं विपाट्य च समीपतः ।
अन्तर्देहगतिं चापि प्राणानां परिचिन्तयेत् ॥१५
ततो मूर्धानमग्निं च शरीरं परिपालयेत् ।
प्राणो मूर्धनि च श्वासो वर्तमाने विचेष्टते ॥ १६
सज्जस्तु सर्वभूतात्मा पुरुषः स सनातनः ।
मनो बुद्धिरहंकारो भूतानि विषयांश्च सः ॥ १७
वस्तिर्मूलं गुदं चैव पावकं च समाश्रितः ।
वहन्मूत्रं पुरीषं च सदाऽपानः प्रवर्तते ॥ १८
अतः प्रवृत्तिर्देहेषु कर्म चापानसंयुतम् ।
उदीरयन्सर्वधातूनत ऊर्ध्वं प्रवर्तते ।
उदान इति तं विद्युरध्यात्मकुशला जनाः ॥ १९
सन्धौसन्धौ स निर्विष्टः सर्वचेष्टाप्रवर्तकः ।
शरीरेषु मनुष्याणां व्यान इत्युपदिश्यते ॥ २०
धातुष्वग्नौ च विततः समानोऽग्निः समीरणः ।
स एव सर्वचेष्टानामन्तकाले निवर्तकः ॥ २१
प्राणानां सन्निपातेषु संसर्गाद्यः प्रजायते ।
ऊष्मा सोऽग्निरिति ज्ञेयः सोऽन्नं पचति देहिनाम् २२
अपानप्राणयोर्मध्ये व्यानोदानावुपाश्रितौ ।
समन्वितः समानेन सम्यक्पचति पावकः ॥ २३
शरीरमध्ये नाभिः स्यान्नाभ्यामग्निः प्रतिष्ठितः ।
अग्नौ प्राणाश्च संयुक्ताः प्राणेष्वात्मा व्यवस्थितः २४
पक्वाशयस्त्वधो नाभेरूर्ध्वमामाशयस्तथा ।
नाभिर्मध्ये शरीरस्य सर्वप्राणाश्च संश्रिताः ॥ २५
स्थिताः प्राणादयः सर्वे तिर्यगूर्ध्वमधश्चराः ।
वहन्त्यन्नरसान्नाड्यो दशप्राणाग्निचोदिताः ॥२६
योगिनामेष मार्गस्तु पञ्चस्वेतेषु तिष्ठति ।
जितश्रमः समासीनो मूर्धन्यात्मानमादधेत् ॥२७
मूर्धन्यात्मानमाधाय भ्रुवोर्मध्ये मनस्तथा ।
संनिरुध्य ततः प्राणानात्मानं चिन्तयेत्परम् २८
प्राणे त्वपानं युञ्जीत प्राणांश्चापानकर्मणि ।
प्राणापानगती रुद्ध्वा प्राणायामपरो भवेत् ॥ २९
एवमन्तः प्रयुञ्जीत पञ्च प्राणान्परस्परम् ।
विजने संमिताहारो मुनिस्तूष्णीं निरुच्छ्वसन् ॥३०
अश्रान्तश्चिन्तयेद्योगी उत्थाय च पुनःपुनः ।
तिष्ठन्गच्छन्स्वपंश्चापि युञ्जीतैवमतन्द्रितः ॥ ३१
एवं नियुञ्जतस्तस्य योगिनो युक्तचेतसः ।
प्रसीदति मनः क्षिप्रं प्रसन्ने दृश्यते परम् ॥ ३२
विधूम इव दीप्तोऽग्निरादित्य इव रश्मिवान् ।
वैद्युतोऽग्निरिवाकाशे पुरुषो दृश्यतेऽव्ययः ॥ ३३
दृष्ट्वा तदात्मनो ज्योतिरैश्वर्याष्टगुणैर्युतः ।
प्राप्नोति परमं स्थानं स्पृहणीयं सुरैरपि ॥ ३४
इमान्योगस्य दोषांश्च दशैव परिचक्षते ।
दोषैर्विघ्नैर्वरारोहे योगिनां कविभिः स्मृताः ३५
कामः क्रोधो भयं स्वप्नः स्नेहमत्यशनं तथा ।
वैचित्यं व्याधिरालस्यं लोभं च दशमं स्मृतम् ३६
एतैस्तेषां भवेद्विघ्नो दशभिर्दैवकारितैः ।
तस्मादेतानपास्यादौ युञ्जीत च परं मनः ॥ ३७
इमानपि गुणानष्टौ योगस्य परिचक्षते ।
गुणैस्तैरष्टभिर्द्रव्यमैश्वर्यमधिगम्यते ॥ ३८
अणिमा महिमा चैव प्राप्तिः प्राकाम्यमेव हि ।
ईशित्वं च वशित्वं च यत्र कामावसायिता ॥ ३९
एतानष्टौ गुणान्प्राप्य कथंचिद्योगिनां वराः ।

निपाट्य चेति ड. पाठः ॥ १५ ॥ षट्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४६ ॥

ईशाः सर्वस्य लोकस्य देवानप्यतिशेरते ॥ ४०
योगोस्ति नैवात्यशिनो न चैकान्तमनश्नतः ।
न चातिस्वप्नशीलस्य नातिजागरतस्तथा ॥ ४१
युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥ ४२
अनेनैव विधानेन सायुज्यं तत्प्रकल्प्यते ।
सायुज्यं देवसात्कृत्वा प्रयुञ्जीतात्मभक्तितः ॥४३
अनन्यमनसा देवि नित्यं तद्गतचेतसा ।
सायुज्यं प्राप्यते देवैर्यत्नेन महता चिरात् ॥ ४४
हविर्भिरर्चनैर्होमैः प्रणामैर्नित्यचिन्तया ।
अर्चयित्वा यथाशक्ति स्वकं देशं विशन्ति ते ॥ ४५
सायुज्यानां विशिष्टं च मामकं वैष्णवं तथा ।
मां प्राप्य न निवर्तन्ते विष्णुं वा शुभलोचने ॥ ४६
इति ते कथितो देवि योगधर्मः सनातनः ।
न शक्यः प्रष्टुमन्येन योगधर्मस्त्वया विना ॥ ४७

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि षट्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४६ ॥

## सप्तचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४७ ॥

महेश्वरेण पार्वतीम्प्रति स्वमाहात्म्यकथनपूर्वकं दीक्षया शिवलिङ्गार्चनाफलकथनम् ॥ १ ॥

उमोवाच ।
त्रियक्ष त्रिदशश्रेष्ठ त्र्यम्बक त्रिदशाधिप ।
त्रिपुरान्तक कामाङ्गहर त्रिपथगाधर ॥ १
दक्षयज्ञप्रशमन शूलपाणेऽरिमूदन ।
नमस्ते लोकपालेश लोकपालवरप्रद ॥ २
नैकशाखमपर्यन्तमध्यात्मज्ञानमुत्तमम् ।
अप्रतर्क्यमविज्ञेयं साङ्ख्ययोगसमन्वितम् ॥ ३
भवता परिपृष्टेन शृण्वन्त्या मम भाषितम् ।
इदानीं श्रोतुमिच्छामि सायुज्यं त्वद्गतं विभो ॥ ४
कथं परिचरन्त्येते भक्तास्त्वां परमेष्ठिनम् ।
आचारः कीदृशस्तेषां केन तुष्टो भवेद्भवान् ।
वर्ण्यमानं त्वया साक्षात्प्रीणयत्यधिकं हि मा ॥ ५
महेश्वर उवाच ।
हन्त ते कथयिष्यामि मम सायुज्यमद्भुतम् ।
येन ते न निवर्तन्ते युक्ताः परमयोगिनः ॥ ६
अव्यक्तोऽहमचिन्त्योऽहं पूर्वैरपि मुमुक्षुभिः ।
साङ्ख्ययोगौ मया सृष्टौ सर्वं चापि चराचरम् ॥ ७
अर्चनीयोऽहमीशोऽहमव्ययोऽहं सनातनः ।
अहं प्रसन्नो भक्तानां ददाम्यमरतामपि ॥ ८
न मां विदुः सुरगणा मुनयश्च तपोधनाः ।
त्वत्प्रियार्थमहं देवि मद्विभूतिं ब्रवीमि ते ॥ ९
आश्रमेभ्यश्चतुर्भ्योऽहं चतुरो ब्राह्मणाञ्शुभे ।
मद्भक्तान्निर्मलान्पुण्यान्समानीय तपस्विनः ॥ १०
व्याचख्येऽहं तथा देवि योगं पाशुपतं महत् ।
गृहीतं तच्च तैः सर्वं मुखाच्च मम दक्षिणात् ॥ ११
श्रुत्वा तत्त्रिषु लोकेषु स्थापितं चापि तैः पुनः ।
इदानीं च त्वया पृष्टो वदाम्येकमनाः शृणु ॥ १२
अहं पशुपतिर्नाम मद्भक्ता ये च मानवाः ।
सर्वे पाशुपता ज्ञेया भस्मदिग्धतनूरुहाः ॥ १३
रक्षार्थं मङ्गलार्थं च पवित्रार्थं च भामिनि ।
लिङ्गार्थं चैव भक्तानां भस्म दत्तं मया पुरा ॥ १४
तेन संदिग्धसर्वाङ्गा भस्मना ब्रह्मचारिणः ।
जटिला मुण्डिता वाऽपि नानाकारशिखण्डिनः ॥
विकृताः पिङ्गलाभिश्च नग्ना नानाप्रकारिणः ।
भैक्षं चरन्तः सर्वत्र निःस्पृहा निष्परिग्रहाः ॥१६
मृत्पात्रहस्ता मद्भक्ता मन्निवेशितबुद्धयः ।
चरन्तो निखिलं लोकं मम हर्षविवर्धनाः ॥ १७
मम पाशुपतं दिव्यं योगशास्त्रमनुत्तमम् ।
सूक्ष्मं सर्वेषु लोकेषु विमृशन्तश्चरन्ति ते ॥ १८
एवं नित्याभियुक्तानां मद्भक्तानां तपस्विनाम् ।
उपायं चिन्तयाम्याशु येन मामुपयान्ति ते ॥ १९
स्थापितं त्रिषु लोकेषु शिवलिङ्गं मया मम ।
नमस्कारेण वा तस्य मुच्यन्ते सर्वकिल्बिषैः ॥२०
इष्टं दत्तमधीतं च यज्ञाश्च बहुदक्षिणाः ।

शिवलिङ्गप्रणामस्य कलां नार्हन्ति षोडशीम् ॥ २१
अर्चया शिवलिङ्गस्य पारं तुष्याम्यहं प्रिय ।
शिवलिङ्गार्चनायां तु विधानमपि मे शृणु ॥ २२
गोक्षीरनवनीताभ्यामर्चयेद्यः शिवं मम ।
इष्टस्य हयमेधस्य यत्फलं तत्फलं भवेत् ॥ २३
घृतमण्डेन यो नित्यमर्चयेद्यः शिवं मम ।
स फलं प्राप्नुयान्मर्त्यो ब्राह्मणस्याग्निहोत्रिणः॥ २४
केवलेनापि तोयेन स्नापयेद्यः शिवं मम ।
स चापि लभते पुण्यं प्रियं च लभते नरः ॥ २५
सघृतं गुग्गुलु सम्यग्धूपयेद्यः शिवान्तिके ।
गोसवस्य तु यज्ञस्य यत्फलं तस्य तद्भवेत् ॥ २६
यस्तु गुग्गुलपिण्डेन केवलेनापि धूपयेत् ।
तस्य रुक्मप्रधानस्य यत्फलं तस्य तद्भवेत् ॥ २७
यस्तु नानाविधैः पुष्पैर्मम लिङ्गं समर्चयेत् ।
स हि धेनुसहस्रस्य दत्तस्य फलमाप्नुयात् ॥ २८
देशान्तरं गत्वा शिवलिङ्गं समर्चयेत् ।
तस्मात्सर्वमनुष्येषु नास्ति मे प्रियकृत्तमः ॥ २९
एवं नानाविधैर्द्रव्यैः शिवलिङ्गं समर्चयेत् ।
मत्समानो मनुष्येषु न पुनर्जायते नरः ॥ ३०
अर्चनाभिर्नमस्कारैरुपहारैः स्तवैरपि ।
भक्तो मामर्चयेन्नित्यं शिवलिङ्गेष्वतन्द्रितः ॥ ३१
पलाशबिल्वपत्राणि राजवृक्षस्रजं तथा ।
अर्कपुष्पाणि मेध्यानि मत्प्रियाणि विशेषतः ३२
फलं वा यदि वा शाकं पुष्पं वा यदि वा जलम् ।
दत्तं संप्रीणयेद्देवि भक्तैर्मद्गतमानसैः ॥ ३३
ममाभिपरितुष्टस्य नास्ति लोकेषु दुर्लभम् ।
तस्मात्ते सततं भक्ता मामेवाभ्यर्चयन्त्युत ॥ ३४
मद्भक्ता न विनश्यन्ति मद्भक्ता वीतकल्मषाः ।
मद्भक्ताः सर्वलोकेषु पूजनीया विशेषतः ॥ ३५
मद्द्वेषिणश्च ये मर्त्या मद्भक्तद्वेषिणश्च वा ।
यान्ति ते नरकं घोरमिष्ट्वा क्रतुशतैरपि ॥ ३६
एतत्ते सर्वमाख्यातं योगं पाशुपतं महत् ।
मद्भक्तैर्मनुजैर्देवि श्राव्यमेतद्दिनेदिने ॥ ३७
शृणुयाद्यः पठेद्वाऽपि ममेदं धर्मनिश्चयम् ।
स्वर्ग-कीर्तिं धनं धान्यं स लभेत नरोत्तमः ॥ ३८

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि सप्तचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४७ ॥

## अष्टचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४८ ॥

महेश्वरेण पार्वतींप्रति सश्लाघं स्त्रीधर्मकथनचोदना ॥ १ ॥ पार्वत्या गङ्गादिमहानदीषु तन्निवेदनम् ॥ २ ॥ गङ्गया तदनुमोदनपूर्वकं भगवति तत्कथनाभ्यनुज्ञानम् ॥ ३ ॥

नारद उवाच ।
एवमुक्त्वा महादेवः श्रोतुकामः स्वयं प्रभुः ।
अनुकूलां प्रियां भार्यां पार्श्वस्थामभ्यभाषत ॥ १
महेश्वर उवाच ।
परावरज्ञे धर्माणां तपोवननिवासिनाम् ।
दीक्षाविधिदमोपेते सततं व्रतचारिणि ।
पृच्छामि त्वां वरारोहे पृष्टा वद ममेप्सितम् ॥२
सावित्री ब्रह्मणः पत्नी कौशिकस्य शची शुभा ।
लक्ष्मीर्विष्णोः प्रिया भार्या धृतिर्भार्या यमस्य तु ३
मार्कण्डेयस्य धूमोर्णा ऋद्धिर्वैश्रवणस्य तु ।
वरुणस्य प्रिया गौरी सवितुश्च सुवर्चला ॥ ४
रोहिणी शशिनो भार्या स्वाहा चाग्नेरनिन्दिता ।
काश्यपस्यादितिश्चैव वसिष्ठस्याप्यरुन्धती ॥ ५
एताश्चान्याश्च देव्यस्तु सर्वास्ताः पतिदेवताः ।
श्रूयन्ते लोकविख्यातास्त्वया चैव सहोषिताः॥६
ताभिश्च पूजिताऽसि त्वमनुवृत्त्यनुभाषणैः ।
तस्मात्तु परिपृच्छामि धर्मज्ञे लोकसंमते ॥ ७
स्त्रीधर्मं श्रोतुमिच्छामि त्वयैव समुदाहृतम् ।
सधर्मचारिणी मे त्वं लोकसंधारिणी तथा ॥ ८
अयं हि स्त्रीगणस्त्वां तु अनुयाति न मुञ्चति ।
त्वत्प्रसादाद्धितं श्रोतुं स्त्रीवृत्तं शुभलक्षणम् ॥ ९
त्वया चोक्तं विशेषेण गुणभूतं हि तिष्ठति ।

स्त्रिय एव सदा लोके स्त्रीगणस्य गतिः प्रिये ॥ १०
शश्वद्भोगेषु गच्छेत नान्यत्र रमते नरः ।
एवं लोकगतिर्देवि आदिप्रभृति वर्तते ॥ ११
प्रमदोक्तं तु यत्किंचित्तत्स्त्रीषु बहुमन्यते ।
न तथा मन्यते स्त्रीषु पुरुषोक्तमनिन्दिते ॥ १२
त्वयैव विदितो ह्यर्थः स्त्रीणां धर्मः सनातनः ।
तस्मात्त्वां प्रति पृच्छामि पृष्टा वद ममेप्सितम् १३
नारद उवाच ।
एवमुक्ता तदा देवी महादेवेन शोभना ।
सोद्वेगा च सलज्जा च नावदत्तत्र किंचन ।
पुनः पुनस्तदा देवी देवः किमिति चाब्रवीत् १४
उमोवाच ।
भगवन्देवदेवेश सुरासुरनमस्कृत ।
त्वदन्तिके मया वक्तुं स्त्रीणां धर्मः कथं भवेत् १५
महेश्वर उवाच ।
मन्नियोगादवश्यं तु वक्तव्यं तु मम प्रिये ॥ १६
उमोवाच ।
इमा नद्यो महादेव सर्वतीर्थोदकान्विताः ।
उपस्पर्शनहेतोस्त्वां न त्यजन्ति समीपतः ॥ १७
एताभिः सह संमन्त्र्य प्रवक्ष्यामि तवेप्सितम् ।
अयुक्तं सत्सु तत्रेषु तानतिक्रम्य भाषितुम् ॥ १८
मया संमानिताश्चैव भविष्यन्ति सरिद्वराः ॥ १९
नारद उवाच ।
इति मत्वा महादेवी नदीर्देवीः समाह्वयत् ।
विपाशां च वितस्त्यां च चन्द्रभागां सरस्वतीम् २०
शतद्रुं देविकां सिन्धुं गौतमीं कौशिकीं तथा ।
यमुनां नर्मदां चैव कावेरीमथ निम्नगाम् ॥ २१
तथा देवनदीं गङ्गां श्रेष्ठां त्रिपथगां शुभाम् ।
सर्वतीर्थोदकवहां सर्वपापविनाशिनीम् ।
एता नदीः समाहूय समुद्वीक्ष्येदमब्रवीत् ॥ २२
उमोवाच ।
हे पुण्याः सरितः श्रेष्ठाः सर्वपापविनाशिकाः ।
ज्ञानविज्ञानसंपन्नाः शृणुध्वं वचनं मम ॥ २३
अयं भगवता प्रश्न उक्तः स्त्रीधर्मसाश्रितः ।
न चैकया मया साध्यं तस्माद्वस्त्वानयाम्यहम् २४
युष्माभिस्तद्विचार्यैवं वक्तुमिच्छामि शोभनाः ।
तत्कथं देवदेवाय वाच्यः स्त्रीधर्म उत्तमः ॥ २५
नारद उवाच ।
इति पृष्टास्तथा देव्या महानद्यश्चकम्पिरे ।
तासां श्रेष्ठतमा गङ्गा वचनं त्वेवमब्रवीत् ॥ २६
धन्याश्चानुगृहीताः स्म अनेन वचनेन ते ।
या त्वं सुरासुरैर्मान्या नदीराद्रियसेऽनघे ॥ २७
तवैवार्हति कल्याणि एवं सान्त्वप्रसादनम् ।
अशक्यमपि ये मूर्खाः स्वात्मसंभावनायुताः ।
वाक्यं वदन्ति संसत्सु स्वयमेव यथेष्टतः ॥ २८
शक्तो यश्चानहंवादी सुदुर्लभतमो मतः ॥ २९
त्वं हि शक्ता सती देवी वक्तुं प्रश्नमशेषतः
व्याहर्तुं नेच्छसि स्त्रीत्वात्संपूजयसि नस्तथा ॥ ३०
त्वं हि देवि महादेवी ऊहापोहविशारदा ।
दिव्यज्ञानयुता देवि दिव्यज्ञानेन्धनैधिता ॥ ३१
त्वमेवार्हसि तद्वक्तुं स्त्रीणां वृत्तं शुभाशुभम् ।
याचामहे वयं श्रोतुममृतं त्वन्मुखोद्गतम् ।
कुरु देवप्रियं देवि वद स्त्रीधर्ममुत्तमम् ॥ ३२
नारद उवाच ।
एवं प्रसादिता देवी गङ्गया लोकपूज्यया
प्राह धर्ममशेषेण स्त्रीधर्मं सुरसुन्दरी ॥ ३३
उमोवाच ।
भगवन्देवदेवेश सुरेश्वर महेश्वर ।
त्वत्प्रसादात्सुरश्रेष्ठ तवैव प्रियकाम्यया ।
तमहं कीर्तयिष्यामि यथावच्छ्रोतुमिच्छसि ॥ ३४

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि अष्टचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४८ ॥

## एकोनपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २४९ ॥

पार्वत्या परमेश्वरंप्रति देवगन्धर्वादियोषितां मध्ये स्त्रीधर्मकथनम् ॥ १ ॥

नारद उवाच ।
एवं ब्रुवन्त्यां स्त्रीधर्मं देव्यां देवस्य शासनात् ।
ऋषिगन्धर्वयक्षाणां योषितश्चाप्सरोगणाः ॥ १
नागभूतस्त्रियश्चैव नद्यश्चैव समागताः ।
श्रोतुकामाः परं वाक्यं सर्वाः पर्यवतस्थिरे ॥ २
उमादेवी मुदा युक्ता पूज्यमानाऽङ्गनागणैः ।
आनृशंस्यपरा देवी सततं स्त्रीगणं प्रति ॥ ३
स्त्रीगणस्य हितार्थाय भवप्रियचिकीर्षया ।
वक्तुं वचनमारेभे स्त्रीणां धर्माश्रयान्वितम् ॥ ४
उमोवाच ।
भगवन्सर्वभूतेश श्रूयतां वचनं मम ।
ऋतुप्राप्ता सुशुद्धा या कन्या सेत्यभिधीयते ॥ ५
तां तु कन्यां पिता माता भ्राता मातुल एव वा ।
पितृव्यश्चैव पञ्चैते दातुं प्रभवतां गताः ॥ ६
विवाहाश्च तथा पञ्च तासां धर्मार्थकारणात् ।
कामतश्च मिथो दानमितरेतरकाम्यया ॥ ७
दत्ता यस्य भवेद्भार्या एतेषां येन केन चित् ।
दातारः सुविमृश्यैव दातुमर्हन्ति नान्यथा ॥ ८
उत्तमानां तु वर्णानां मन्त्रवत्पाणिसंग्रहः ।
विवाहकरणं चाहुः शूद्राणां संप्रयोगतः ॥ ९
यदा दत्ता भवेत्कन्या तस्माद्भार्यार्थिने स्वकैः ।
तदाप्रभृति सा नारी दशरात्रं विलज्जया ।
मनसा कर्मणा वाचा अनुकूला च सा भवेत् ॥ १०
इति भर्तृव्रतं कुर्यात्पतिमुद्दिश्य शोभना ।
तदाप्रभृति सा नारी न कुर्यात्पत्युरप्रियम् ॥ ११
यद्यदिच्छति वै भर्ता धर्मकामार्थकारणात् ।
तथैवानुप्रिया भूत्वा तथैवोपचरेत्पतिम् ।
पतिव्रतात्वं नारीणामेतदेव सनातनम् ॥ १२
तादृशी सा भवेन्नित्यं यादृशस्तु भवेत्पतिः ।
शुभाशुभसमाचार एतद्वृत्तं समासतः ॥ १३
दैवतं सततं साध्वी भर्तारं या तु पश्यति ।
दैवमेव भवेत्तस्याः पतिरित्यवगम्यते ॥ १४
एतस्मिन्कारणं देव पौराणी श्रूयते श्रुतिः ।
कथयामि प्रसादात्ते शृणु देव समासतः ॥ १५
कस्य चित्त्वथ विप्रस्य भार्ये द्वे हि बभूवतुः ।
तयोरेका धर्मकामा देवानुद्दिश्य भक्तितः ॥ १६
भर्तारमवमत्यैव देवतासु समाहिता ।
चकार विपुलं धर्मं पूजयानाऽर्चयाऽन्वितम् ॥ १७
अपरा धर्मकामा च पतिमुद्दिश्य शोभना ।
भर्तारं दैवतं कृत्वा चकार किल तत्प्रियम् ॥ १८
एवं विवर्तमाने तु युगपन्मरणेऽध्वनि ।
गते किल महादेव तत्रैका या पतिव्रता ।
देवप्रियायां तिष्ठन्त्यां पुण्यलोकं जगाम सा ॥ १९
देवप्रिया च तिष्ठन्ती विललाप सुदुःखिता ।
तां यमो लोकपालस्तु बभाषे पुष्कलं वचः ॥ २०
मा शुचस्त्वं निवर्तस्व न लोकाः सन्ति तेऽनघे ।
स्वधर्मविमुखा सा त्वं तस्माल्लोका न सन्ति ते २१
देवता हि पतिर्नार्याः स्थापिता सर्वदैवतैः ।
अवमत्य शुभे तत्त्वं कथं लोकान्गमिष्यसि ॥ २२
मोहेन त्वं वरारोहे न जानीषे स्वदैवतम् ।
पतिमत्या स्त्रिया कार्यो धर्मः पत्यर्पणस्त्विति २३
तस्मात्त्वं हि निवर्तस्व कुरु पत्याश्रितं हितम् ।
तदा गन्तासि लोकांस्तान्यान्गच्छन्ति पतिव्रताः ।
नान्यथा शक्यते प्राप्तुं पतीनां लोकमुत्तमम् ॥ २४
यमेनैवंविधं चोक्ता निवृत्ता पुनरेव सा ।
बभूव पतिमालम्ब्य पतिप्रियपरायणा ॥ २५
एवमेतन्महादेव दैवतं हि स्त्रियाः पतिः ।
तस्मात्पतिपरा भूत्वा पतीनुपचरेदिति ॥ २६

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि एकोनपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २४९ ॥

## पञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५० ॥

पार्वत्या महेश्वरंप्रति स्त्रीधर्मकथनम् ॥ १ ॥ नारदेन कृष्णंप्रति उमामहेश्वरसंवादानुवादोपसंहारः ॥ २ ॥

उमोवाच
पतिमत्या दिवारात्रं वृत्तान्तं श्रूयतां शुभम् ।
पत्युः पूर्वं समुत्थाय प्रातःकर्म समाचरेत् ॥ १
पत्युर्भावं विदित्वा तु पश्चात्संबोधयेत्तु तम् ।
नित्यं पौर्वाह्णिकं कार्यं स्वयं कुर्याद्यथाविधि ॥ २
निवेद्य च तथाऽऽहारं यथा संपद्यतामिति ।
तथैव कुर्यात्तत्सर्वं यथा पत्युः प्रियं भवेत् ॥ ३
यथा भर्ता तथा नारी गुरूणां प्रतिपद्यते ॥ ४
शुश्रूषापोषणविधौ पतिप्रियचिकीर्षया ।
भर्तुर्निष्क्रमणे कार्यं संस्मरेदप्रमादतः ॥
आगतं तु पतिं दृष्ट्वा सहसा परिचारणम्
स्वयं कुर्वीत संप्रीत्या कायश्रमहरं परम्
पाद्यासनाभ्यां शयनैर्वाक्यैश्च हृदयप्रियैः ।
अतिथीनामागमेन प्रीतियुक्ता सदा भवेत् ॥ ७
कर्मणा वचनेनापि तोषयेदतिथीन्सदा ।
मङ्गलं गृहशौचं च सर्वोपकरणानि च ॥ ८
सर्वकालमवेक्षेत कारयन्ती च कुर्वती ।
धर्मकार्ये तु संप्राप्ते तद्वद्धर्मपरा भवेत् ॥ ९
अर्थकार्ये पुनर्भर्तुः प्रमादालस्यवर्जिता ।
सा यत्नं परमं कुर्यात्तस्य साहाय्यकारणात् ॥ १०
धुरंधरा भवेद्भर्तुः साध्वी धर्मार्थयोः सदा ।
विहारकाले वै भर्तुर्ज्ञात्वा भावं हृदि स्थितम् ॥ ११
अलंकृत्य यथायोगं मन्दहाससमन्वितम् ।
वाक्यैर्मधुरसंयुक्तैः स्मयन्ती तोषयेत्पतिम् ॥ १२
कठोराणि न वाच्यानि अन्यथा प्रमदान्तरे ।
यस्यां कामी भवेद्भर्ता तस्याः प्रीतिकरी भवेत् ॥ १३
अप्रमादं पुरस्कृत्य मनसा तोषयेत्पतिम् ।
अनन्तरमथान्येषां भोजनावेक्षणं चरेत् ॥ १४
दासीदासबलीवर्दांश्चण्डालं च शुनस्तथा
अनाथान्कृपणांश्चैव भिक्षुकांश्च तथैव च ।
पूजयेद्बलिभैक्षेण पत्युर्धर्मं विवर्धयेत् ॥ १५
कुपितं वाऽर्थहीनं वा श्रान्तं वोपचरेत्पतिम् ।
यथा स तुष्टः स्वस्थश्च तथा संतोषयेत्पतिम् ॥ १६
यथा कुटुम्बचिन्तायां विवादे वाऽर्थसंचये ।
आहूता तत्सहायार्थं तथा प्रियहितं वदेत् ॥ १७
अप्रियं च हितं ब्रूयात्तस्य धर्मार्थकाङ्क्षया ।
एकान्तचर्याकथनं कलहं वर्जयेत्परैः ॥ १८
बहिरालोकनं चैव मोहं व्रीडां च पैशुनम् ।
बह्वाशित्वं दिवास्वप्नमेवमादि विवर्जयेत् ॥ १९
रहस्येकासनं साध्वी न कुर्यादात्मजैरपि ।
यद्यद्दद्यान्नियतस्त्वेति न्यासवत्परिपालयेत् ॥ २०
विस्मृतं वाऽपि यद्द्रव्यं प्रतिदद्यात्स्वशौचतः ।
यत्किंचित्पतिना दत्तं लब्ध्वा तन्मा सुखी भवेत् ॥
अतीवाज्ञामतीर्ष्यां च दूरतः परिवर्जयेत् ।
बालवद्वृद्धवद्भार्या सदैवानुचरेत्पतिम् ॥ २२
भार्याया व्रतमित्येव कर्तव्यं सततं विभो
एतत्पतिव्रतावृत्तमुक्तं देव समासतः ॥ २३
न च भोगे न चैश्वर्ये न सुखे न धने तथा ।
स्पृहा यस्यास्तथा भर्तुः सा नारीणां पतिव्रता ॥ २४
पतिर्हि दैवतं स्त्रीणां पतिर्बन्धुः पतिर्गतिः ।
नान्यं गतिमहं पश्ये प्रमदाया यथा पतिः ॥ २५
जातिष्वपि च वै स्त्रीत्वं विशिष्टं मे मतिः प्रभो ।
कायक्लेशेन महता पुरुषः प्राप्नुयात्फलम् ।
तत्सर्वं लभते नारी सुखेन पतिपूजया ॥ २६
यथासुखं पतिमती सर्वं पत्यनुकूलतः ।
ईदृशं धर्मसाकल्यं पश्य त्वं प्रमदां प्रति ।
एतद्विसृज्य पच्यन्ते कुस्त्रियः पापमोहिताः ॥ २७
तपश्चर्या च दानं च पतौ तस्याः समर्पितम्
रूपं कुलं यशस्तेजः सर्वं तस्मिन्प्रतिष्ठितम् ॥ २८
एवं व्रतसमाचाराः स्ववृत्तेनैव शोभनाः ।
स्वभर्त्रा च समं गच्छेत्पुण्यलोकान्सुकर्मणा ॥ २९
वृद्धो विरूपो बीभत्सो धनवान्निर्धनोऽपि वा ।
एवंभूतोऽपि वै भर्ता स्त्रीणां भूषणमुत्तमम् ॥ ३०
आढ्यं वा रूपयुक्तं वा विरूपं धनवर्जितम् ।

या पतिं तोषयेत्साध्वी सा पत्नीनां विशिष्यते३१
दरिद्रांश्च विरूपांश्च प्रमूढान्कुष्टसंयुतान् ।
पतीनुपचरेल्लोकानक्षयान्प्रतिपद्यते ॥ ३२
एवं प्रवर्तमानायाः पतिः पूर्वं म्रियेत चेत् ।
तदाऽनुमरणं गच्छेत्पुनर्धर्मं चरेत वा ॥ ३३
एतदेवं मया प्रोक्तं स्त्रियस्तु बहुधा स्मृताः ।
देवदानवगन्धर्वा मनुष्या इति नैकधा ॥ ३४
सौम्यशीलाः शुभाचाराः सर्वास्ताः संभवन्ति च ।
यथा शुभं प्रवक्ष्यामि स्त्रीणां धर्मं महेश्वर ॥ ३५
आसुर्यश्चैव पैशाच्यो राक्षस्यश्च भवन्ति हि ।
तासां वृत्तमशेषेण श्रूयतां लोककारणात् ॥ ३६
न्यायतो वाऽन्यथा प्रोक्ता भावदोषसमन्विताः ।
भर्तॄनुपचरन्त्येव रागद्वेषबलात्कृताः ॥ ३७
स्वधर्मविमुखा भूत्वा प्रदूष्यन्ति यतस्ततः ।
प्रवृद्धविषया नित्यं प्रतिकूलं वदन्ति च ॥ ३८
अर्थान्विनाशयन्त्येवं न गृह्णन्ति हितं क्वचित् ।
स्वबुद्धिनिरता भूत्वा जीवन्ति च यथा तथा ॥ ३९
गुणवत्यः क्वचिद्भूत्वा पतिधर्मपरा इव ।
पुनर्भवन्ति पापिष्ठा विषमं वृत्तमास्थिताः ॥ ४०
अनवस्थितमर्यादा बहुवेषा व्यवस्थिताः ।
असंतुष्टाश्च लुब्धाश्च ईर्ष्याक्रोधयुता भृशम् ॥ ४१
भोगप्रिया हितद्वेष्याः कामभोगपरायणाः ।
प्रायशोऽनृतभूयिष्ठा गुरूणां प्रतिलोमकाः ॥ ४२
एवंवृत्तसमाचारा आसुरं भावमाश्रिताः ।
अपकारपरा नित्यं सततं कलहप्रियाः ॥ ४३
परुषा रूक्षवचना निर्घृणा निरपत्रपाः ।
निःस्नेहाः क्रोधनाश्चैव भर्तृपुत्रस्वबन्धुषु ॥ ४४
घोरा मांसप्रिया नित्यं हसन्ति च रुदन्ति च ।
पतीन्व्यभिचरन्त्येव दुर्मार्गेण यथा तथा ।
बन्धुभिर्भर्त्सिता भूत्वा गृहकार्याणि कुर्वते ॥४५
अथवा भर्त्सिता देव निवृत्ताः स्वेषु कर्मसु ।
तथैवात्मवधं घोरं व्यवस्येयुर्न संशयः ॥ ४६
निर्दया निरनुक्रोशाः कुटुम्बार्थविलोपकाः ।
धर्मार्थरहिता घोराः सततं कुर्वते क्रियाः ॥ ४७
अनर्थे निपुणाः पापाः परप्राणेषु निर्दयाः ।
एवंयुक्तसमाचाराः स्त्रियः पैशाचमाश्रिताः ॥ ४८
अपरा मोहसंयुक्ता निर्लज्जा रोदनप्रियाः ।
अशुद्धा मलदिग्धाङ्ग्यः पानमांसरता भृशम् ।
वदन्त्यनृतवाक्यानि हसन्ति विलपन्ति च ॥४९
दुष्प्रसादा महाक्रोधाः क्षमशीला निरन्तरम् ।
तामस्यो नष्टतत्वार्था मन्दशीला महोदराः ।
भुञ्जते विविधं सिद्धं भोजनं तीव्रसंभ्रमाः ॥ ५०
गुणरूपवयोयुक्तं पतिं कामिनमुत्तमम् ।
हित्वाऽन्येनैव गच्छन्ति सर्वथा भृशतापिताः ॥५१
निर्लज्जा धर्मसंदिग्धाः प्रतिकूलाः समन्ततः ।
एवंरूपसमाचाराः स्त्रियो राक्षसमाश्रिताः ॥ ५२
एवंविधानां सर्वासां न परत्र महासुखम् ।
नरकाद्विप्रमुक्तानां मानुष्यं दुर्लभं भवेत् ॥ ५३
कष्टं तत्रापि भुञ्जन्ते स्वकृतं दुःखजं बहु ।
दरिद्राः क्लेशभूयिष्ठाः विरूपाः कुत्सिताः परैः ।
विधवा दुर्भगा वाऽपि लभन्ते दुःखमीदृशम् ५४
शतवर्षसहस्राणि निरयं व्यभिचारिणी ।
व्रजेत्पतिं च पापेन संयोज्य स्वकुलं तथा ॥ ५५
एतद्विज्ञाय पतितं पुनश्चेद्धितमात्मनः ।
कुर्याद्भर्तारमाश्रित्य तथा धर्ममवाप्नुयात् ॥ ५६
अतिसंयान्ति ताँल्लोकान्पुण्यान्परमशोभनान् ।
अवमत्य च याः पूर्वं पतिं दुष्टेन चेतसा ॥ ५७
वर्तमानाश्च सततं भर्तॄणां प्रतिकूलतः ।
भर्त्रानुमरणं काले याः कुर्वन्ति तथाविधाः ॥ ५८
कामात्क्रोधाद्भयाल्लोभादपहास्या भवन्ति ताः ।
आदिप्रभृति कुस्त्रीणां तथाऽनुमरणं वृथा ॥ ५९
आदिप्रभृति या साध्वी पत्युः प्रियपरायणा ।
ऊर्ध्वं गच्छति सा पूता भर्त्राऽनुमरणं गता ॥ ६०
एवं मृताया वै लोकानहं पश्यामि चक्षुषा ।
स्पृहणीयान्सुरगणैर्यान्गच्छन्ति पतिव्रताः ॥ ६१
अथवा भर्तरि मृते वैधव्यं धर्ममाश्रिताः ।

सर्वाः पूता भवन्ति ता इति थ. पाठः ॥ ५९ ॥

पञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५० ॥

तूर्णीं भौमं जले नित्यमञ्जलिस्नानमुत्तमम् ।
व्रतं च पतिमुद्दिश्य कुर्युश्चैव विधिं ततः ॥ ६२
एवं गच्छति सा नारी पतिलोकमनुत्तमम् ।
रमणीयमनिर्देश्यं दुष्प्रापं देवमानुषैः ॥ ६३
प्राप्नुयात्तादृशं लोकं केवलं या पतिव्रता ।
इति ते कथितं देव स्त्रीणां धर्ममनुत्तमम् ॥ ६४
भवतः प्रियकामिन्या यन्मयोक्तं तवाग्रतः ।
चापल्यान्मम देवेश तद्भवान्क्षन्तुमर्हति ॥ ६५
नारद उवाच ।
एवं वदन्तीं रुद्राणीं लज्जाभावसमन्विताम् ।
प्रशशंस च देवेशो वाचा संजनयन्प्रियम् ॥ ६६
ऋषयो देवगन्धर्वाः प्रमदाश्च महस्रशः ।
प्रणम्य शिरसा देवीं स्तुतिभिश्चाभितुष्टुवुः ॥ ६७
पूजयामासुरव्यग्रं देवदेवं मुदा युताः ।
संवादं चिन्तयन्त्यन्ये श्रद्दधानाः सुचेतसः ॥ ६८
ततस्तु देवदेवेशो देवीं वचनमब्रवीत् ।
शृणु कल्याणि मद्वाक्यं संवादोऽयं मया तव ।
पुण्यं पवित्रं ख्यातं च भविता नात्र संशयः ॥ ६९
य इमं श्रावयेद्विद्वान्संवादं चावयोः प्रिये ।
शुचिर्भूत्वा नरान्युक्तान्स ततः स्वर्गं व्रजेत्सुखम् ७०
यस्त्वेनं शृणुयान्नित्यं संवादं चावयोः शुभम् ।
कीर्तिमायुष्यमारोग्यं लभते स गतिं पराम् ॥ ७१

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि पञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५० ॥

## एकपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५१ ॥

महेश्वरेण मुनिगणान्प्रति श्रीकृष्णस्य वंशानुक्रमवर्णनपूर्वकं गुणगणानुवर्णनम् ॥ १ ॥

ऋषय ऊचुः ।
पिनाकिन्भगनेत्रघ्न सर्वलोकनमस्कृत ।
माहात्म्यं वासुदेवस्य श्रोतुमिच्छाम शंकर ॥ १
ईश्वर उवाच ।
पितामहादपि वरः शाश्वतः पुरुषो हरिः ।
कृष्णो जाम्बूनदाभासो व्यभ्रे सूर्य इवोदितः ॥ २
दशबाहुर्महातेजा देवतारिनिषूदनः ।
श्रीवत्साङ्को हृषीकेशः सर्वदैवतपूजितः ॥ ३
ब्रह्मा तस्योदरभवस्तस्याहं च शिरोभवः ।
शिरोरुहेभ्यो ज्योतींषि रोमभ्यश्च सुराऽसुराः ॥ ४
ऋषयो देहसंभूतास्तस्य लोकाश्च शाश्वताः ।
पितामहगृहं साक्षात्सर्वदेवगृहं च सः ॥ ५
सोऽस्याः पृथिव्याः कृत्स्नायाः स्रष्टा त्रिभुवनेश्वरः ।
संहर्ता चैव भूतानां स्थावरस्य चरस्य च ॥ ६
स हि देववरः साक्षाद्देवनाथः परंतपः ।
सर्वज्ञः सर्वसंश्लिष्टः सर्वगः सर्वतोमुखः ॥ ७
परमात्मा हृषीकेशः सर्वव्यापी महेश्वरः ।
न तस्मात्परमं भूतं त्रिषु लोकेषु किंचन ॥ ८
सनातनो वै मधुहा गोविन्द इति विश्रुतः ।
स सर्वान्पार्थिवान्सङ्ख्ये घातयिष्यति मानदः ॥ ९
सुरकार्यार्थमुत्पन्नो मानुषं वपुरास्थितः ।
न हि देवगणाः शक्तास्त्रिविक्रमविनाकृताः ॥ १०
भुवने देवकार्याणि कर्तुं नायकवर्जिताः ।
नायकः सर्वभूतानां सर्वदेवनमस्कृतः ॥ ११
एतस्य देवनाथस्य देवकार्यपरस्य च ।
ब्रह्मभूतस्य सततं ब्रह्मर्षिशरणस्य च ॥ १२
ब्रह्मा वसति गर्भस्थः शरीरे सुखसंस्थितः ।
शर्वः सुखं संश्रितश्च शरीरे सुखसंस्थितः ॥ १३
सर्वाः सुखं संश्रिताश्च शरीरे तस्य देवताः ।
स देवः पुण्डरीकाक्षः श्रीगर्भः श्रीसहोषितः ॥ १४
शार्ङ्गचक्रायुधः खड्गी सर्वनागरिपुध्वजः ।
उत्तमेन स शीलेन दमेन च शमेन च ॥ १५
पराक्रमेण वीर्येण वपुषा दर्शनेन च ।
आरोहेण प्रमाणेन धैर्येणार्जवसंपदा ॥ १६
आनृशंस्येन रूपेण बलेन च समन्वितः ।
अस्त्रैः समुदितः सर्वैर्दिव्यैरद्भुतदर्शनैः ॥ १७
योगमायः सहस्राक्षो निरपायो महामनाः ।
वीरो मित्रजनश्लाघी ज्ञातिबन्धुजनप्रियः ॥ १८

क्षमावांश्चानहंवादी ब्रह्मण्यो ब्रह्मनायकः ।
भयहर्ता भयार्तानां मित्राणां नन्दिवर्धनः ॥ १९
शरण्यः सर्वभूतानां दीनानां पालने रतः ।
श्रुतवानर्थसंपन्नः सर्वभूतनमस्कृतः ॥ २०
समाश्रितानां वरदः शत्रूणामपि धर्मवित् ।
नीतिज्ञो नीतिसंपन्नो ब्रह्मवादी जितेन्द्रियः ॥ २१
भवार्थमिह देवानां बुद्ध्या परमया युतः ।
प्राजापत्ये शुभे मार्गे मानवे धर्मसंस्कृते ॥ २२
समुत्पत्स्यति गोविन्दो मनोर्वंशे महात्मनः ।
अङ्गो नाम मनोः पुत्रो अन्तर्धामा ततः परः २३
अन्तर्धाम्नो हविर्धामा प्रजापतिरनिन्दितः ।
प्राचीनबर्हिर्भविता हविर्धाम्नः सुतो महान् ॥ २४
तस्य प्रचेतःप्रमुखा भविष्यन्ति दशात्मजाः ।
प्राचेतसस्तथा दक्षो भवितेह प्रजापतिः ॥ २५
दाक्षायण्यास्तथाऽऽदित्यो मनुरादित्यतस्तथा ।
मनोश्च वंशज इला सुद्युम्नश्च भविष्यति ॥ २६
बुधात्पुरूरवाश्चापि तस्मादायुर्भविष्यति ।
नहुषो भविता तस्माद्ययातिस्तस्य चात्मजः ॥ २७
यदुस्तस्मान्महासत्वः क्रोष्टा तस्माद्भविष्यति ।
क्रोष्टुश्चैव महान्पुत्रो वृजिनीवान्भविष्यति ॥ २८
वृजिनीवतश्च भविता उषङ्गुरपराजितः ।
उषङ्गोर्भविता पुत्रः शूरश्चित्ररथस्तथा ।
तस्य त्ववरजः पुत्रः शूरो नाम भविष्यति ॥ २९
तेषां विख्यातवीर्याणां चरित्रगुणशालिनाम् ।
यज्वनां सुविशुद्धानां वंशे ब्राह्मणसंमते ॥ ३०
स शूरः क्षत्रियश्रेष्ठो महावीर्यो महायशाः ।
स्ववंशविस्तरकरं जनयिष्यति मानदः ।
वसुदेव इति ख्यातं पुत्रमानकदुन्दुभिम् ॥ ३१
तस्य पुत्रश्चतुर्बाहुर्वासुदेवो भविष्यति ॥ ३२
दाता ब्राह्मणसत्कर्ता ब्रह्मभूतो द्विजप्रियः ।
राज्ञो मागधसंरुद्धान्मोक्षयिष्यति यादवः ॥ ३३
जरासन्धं तु राजानं निर्जित्य गिरिगह्वरे ।
सर्वपार्थिवरत्नाढ्यो भविष्यति स वीर्यवान् ॥ ३४
पृथिव्यामप्रतिहतो वीर्येण च भविष्यति ।
विक्रमेण च संपन्नः सर्वपार्थिवपार्थिवः ॥ ३५
शूरसेनेषु भूत्वा स द्वारकायां वसन्प्रभुः ।
पालयिष्यति गां देवीं विजित्य नयवित्सदा ३६
तं भवन्तः समासाद्य वाङ्माल्यैरर्हणैर्वरैः ।
अर्चयन्तु यथान्यायं ब्रह्माणमिव शाश्वतम् ॥ ३७
यो हि मां द्रष्टुमिच्छेत ब्रह्माणं च पितामहम् ।
द्रष्टव्यस्तेन भगवान्वासुदेवः प्रतापवान् ॥ ३८
दृष्टे तस्मिन्नहं दृष्टो न मेऽत्रास्ति विचारणा ।
पितामहो वा देवेश इति वित्त तपोधनाः ॥ ३९
स यस्य पुण्डरीकाक्षः प्रीतियुक्तो भविष्यति ।
तस्य देवगणः प्रीतो ब्रह्मपूर्वो भविष्यति ॥ ४०
यश्च तं मानवे लोके संश्रयिष्यति केशवम् ।
तस्य कीर्तिर्जयश्चैव स्वर्गश्चैव भविष्यति ॥ ४१
धर्माणां देशिकः साक्षात्स भविष्यति धर्मभाक् ।
धर्मवद्भिः स देवेशो नमस्कार्यः सदोद्यतैः ॥ ४२
धर्म एव परो हि स्यात्तस्मिन्नभ्यर्चिते विभौ ।
सहि देवो महातेजाः प्रजाहितचिकीर्षया ॥ ४३
धर्मार्थं पुरुषव्याघ्र ऋषिकोटीः ससर्ज ह ।
ताः सृष्टास्तेन विभुना पर्वते गन्धमादने ॥ ४४
सनत्कुमारप्रमुखास्तिष्ठन्ति तपसाऽन्विताः ।
तस्मात्स वाग्मी धर्मज्ञो नमस्यो द्विजपुङ्गवाः ४५
दिवि श्रेष्ठो हि भगवान्हरिर्नारायणः प्रभुः ।
वन्दितो हि स वन्देत मानितो मानयीत च ।
अर्हितश्चार्हयेन्नित्यं पूजितः प्रतिपूजयेत् ॥ ४६
दृष्टः पश्येदहरहः संश्रितः प्रतिसंश्रयेत् ।
अर्चितश्चार्चयेन्नित्यं स देवो द्विजसत्तमाः ॥ ४७
एतत्तस्यानवद्यस्य विष्णोर्वै परमं व्रतम् ।
आदिदेवस्य महतः सज्जनाचरितं सदा ॥ ४८
भुवनेऽभ्यर्चितो नित्यं देवैरपि सनातनः ।
अभयेनानुरूपेण युज्यन्ते तमनुव्रताः ॥ ४९
कर्मणा मनसा वाचा स नमस्यो द्विजैः सदा ।
यत्नवद्भिरुपस्थाय द्रष्टव्यो देवकीसुतः ॥ ५०

---

अर्हितः पुष्पधूपादिनार्चितः । पूजितः वाचा च महीकृतः ॥ ४६ ॥ अर्चितः मनसा ध्यातः ॥ ४७ ॥

एष वोऽभिहितो मार्गो मया वै मुनिसत्तमाः ।
तं दृष्ट्वा सर्वशो देवं दृष्टाः स्युः सुरसत्तमाः ॥ ५१
महावराहं तं देवं सर्वलोकपितामहम् ।
अहं चैव नमस्यामि नित्यमेव जगत्पतिम् ॥ ५२
तत्र च त्रितयं दृष्टं भविष्यति न संशयः ।
समस्ता हि वयं देवास्तस्य देहे वसामहे ॥ ५३
तस्य चैवाग्रजो भ्राता सिताद्रिनिचयप्रभः ।
हली बल इति ख्यातो भविष्यति धराधरः ॥ ५४
त्रिशिरास्तस्य दिव्यश्च शातकुम्भमयो द्रुमः ।
ध्वजस्तृणेन्द्रो देवस्य भविष्यति रथाश्रितः ॥ ५५
शिरो नागैर्महाभोगैः परिकीर्णं महात्मभिः ।
भविष्यति महाबाहोः सर्वलोकेश्वरस्य च ॥ ५६
चिन्तितानि समेष्यन्ति शस्त्राण्यस्त्राणि चैव ह ।
अनन्तश्च स एवोक्तो भगवान्हरिरव्ययः ॥ ५७
समादिष्टश्च विबुधैर्दर्शय त्वमिति प्रभो ।
सुपर्णो यस्य वीर्येण कश्यपस्यात्मजो बली ।
अन्तं नैवाशकद्द्रष्टुं देवस्य परमात्मनः ॥ ५८
स च शेषो विचरते परया वै मुदा युतः ।
अन्तर्वसति भोगेन परिरभ्य वसुंधराम् ॥ ५९
य एव विष्णुः सोऽनन्तो भगवान्वसुधाधरः ।
यो रामः स हृषीकेशो योऽच्युतः स धराधरः ॥ ६०
तावुभौ पुरुषव्याघ्रौ दिव्यौ दिव्यपराक्रमौ ।
द्रष्टव्यौ माननीयौ च चक्रलाङ्गलधारिणौ ॥ ६१
एष वोऽनुग्रहः प्रोक्तो मया पुण्यस्तपोधनाः ।
यद्भवन्तो यदुश्रेष्ठं पूजयेयुः प्रयत्नतः ॥ ६२

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि एकपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५१ ॥

## द्विपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५२ ॥

भीष्मेण हिमवद्गिरौ नारदोदितकृष्णमहिमानुवादः ॥ १ ॥ तथा पार्थकृष्णयोर्नरनारायणात्मकत्वकथनपूर्वकं कृष्णमहिमप्रशंसनम् ॥ २ ॥

नारद उवाच ।
अथ व्योम्नि महाञ्शब्दः सविद्युत्स्तनयित्नुमान् ।
मेघैश्च गगनं नीलं संरुद्धमभवद्घनैः ॥ १
प्रावृषीव च पर्जन्यो ववृषे निर्मलं पयः ।
तमश्चैवाभवद्घोरं दिशश्च न चकाशिरे ॥ २
ततो देवगिरौ तस्मिन्रम्ये पुण्ये सनातने ।
न शर्वं भूतसङ्घं वा ददृशुर्मुनयस्तदा ॥ ३
व्यभ्रं च गगनं सद्यः क्षणेन समपद्यत ।
तीर्थयात्रां ततो विप्रा जग्मुश्चान्ये यथागतम् ॥ ४
तदद्भुतमचिन्त्यं च दृष्ट्वा ते विस्मिताऽभवन् ।
शंकरस्योमया सार्धं संवादं त्वत्कथाश्रयम् ॥ ५
स भवान्पुरुषव्याघ्र ब्रह्मभूतः सनातनः ।
यदर्थमनुशिष्टाः स्मो गिरिपृष्ठे महात्मना ॥ ६
द्वितीयं त्वद्भुतमिदं त्वत्तेजःकृतमद्य वै ।
दृष्ट्वा च विस्मिताः कृष्ण सा च नः स्मृतिरागता ७
एतत्ते देवदेवस्य माहात्म्यं कथितं प्रभो ।
कपर्दिनो गिरीशस्य महाबाहो जनार्दन ॥ ८
इत्युक्तः स तदा कृष्णस्तपोवननिवासिभिः ।
मानयामास तान्सर्वानृषीन्देवकिनन्दनः ॥ ९
अथर्षयः संप्रहृष्टाः पुनस्ते कृष्णमब्रुवन् ।
पुनःपुनर्दर्शयास्मान्सदैव मधुसूदन ॥ १०
न हि नः सा रतिः स्वर्गे या च त्वद्दर्शने विभो ।
तदृतं च महाबाहो यदाह भगवान्भवः ॥ ११
एतत्ते सर्वमाख्यातं रहस्यमरिकर्शन ।
त्वमेव ह्यर्थतत्त्वज्ञः पृष्टोऽस्मान्पृच्छसे यदा ॥ १२
तदस्माभिरिदं गुह्यं त्वत्प्रियार्थमुदाहृतम् ।
न च तेऽविदितं किंचित्त्रिषु लोकेषु विद्यते ॥ १३
जन्म चैव प्रसूतिश्च यच्चान्यत्कारणं विभो ।
वयं तु बहुचापल्यादशक्ता गुह्यधारणे ॥ १४
ततः स्थिते त्वयि विभो लघुत्वात्प्रलपामहे ।

तृणेंद्रः तालद्रुमः ॥ ५५ ॥

न हि किंचित्तदाश्चर्यं यन्न वेत्ति भवानिह ॥ १५
दिवि वा भुवि वा देव सर्वं हि विदितं तव ।
साधयाम वयं कृष्ण बुद्धिं पुष्टिमवाप्नुहि ॥ १६
पुत्रस्ते सदृशस्तात विशिष्टो वा भविष्यति ।
महाप्रभावसंयुक्तो दीप्तिकीर्तिकरः प्रभुः ॥ १७
भीष्म उवाच ।
ततः प्रणम्य देवेशं यादवं पुरुषोत्तमम् ।
प्रदक्षिणमुपावृत्य प्रजग्मुस्ते महर्षयः ॥ १८
सोयं नारायणः श्रीमान्दीप्त्या परमया युतः ।
व्रतं यथावत्तच्चीर्त्वा द्वारकां पुनरागमत् ॥ १९
पूर्णे च दशमे मासि पुत्रोऽस्य परमाद्भुतः ।
रुक्मिण्यां संमतो जज्ञे शूरो वंशधरः प्रभो ॥ २०
स कामः सर्वभूतानां सर्वभावगतो नृप ।
असुराणां सुराणां च चरत्यन्तर्गतः सदा ॥ २१
सोयं पुरुषशार्दूलो मेघवर्णश्चतुर्भुजः ।
संश्रितः पाण्डवान्प्रेम्णा भवन्तश्चैनमाश्रिताः २२
कीर्तिर्लक्ष्मीर्धृतिश्चैव स्वर्गमार्गस्तथैव च ।
यत्रैष संस्थितस्तत्र देवो विष्णुस्त्रिविक्रमः ॥ २३
सेन्द्रा देवास्त्रयस्त्रिंशदेष नात्र विचारणा ।
आदिदेवो महादेवः सर्वभूतप्रतिश्रयः ॥ २४
अनादिनिधनोऽव्यक्तो महात्मा मधुसूदनः ।
अयं जातो महातेजाः सुराणामर्थसिद्धये ॥ २५
सुदुस्तरार्थतत्त्वस्य वक्ता कर्ता च माधवः ।
तव पार्थ जयः कृत्स्नस्तव कीर्तिस्तथाऽतुला ॥ २६
तवेयं पृथिवी देवी कृत्स्ना नारायणाश्रयात् ।
अयं नाथस्तवाचिन्त्यो यस्य नारायणो गतिः २७
स भवांस्त्वमुपाध्वर्यू रणाग्नौ हुतवान्नृपान् ।
कृष्णस्रुवेण महता युगान्ताग्निसमेन वै ॥ २८
दुर्योधनश्च शोच्योसौ सपुत्रभ्रातृबान्धवः ।
कृतवान्योऽबुधः क्रोधाद्धरिगाण्डीवविग्रहम् २९
दैतेया दानवेन्द्राश्च महाकाया महाबलाः ।
चक्राग्नैः क्षयमापन्ना दावाग्नौ शलभा इव ॥ ३०
प्रतियोद्धुं न शक्यो हि मानुषैरेष संयुगे ।
विहीनैः पुरुषव्याघ्र सत्त्वशक्तिबलादिभिः ॥ ३१
जयो योगी युगान्ताभः सव्यसाची रणाग्रगः ।
तेजसा हतवान्सर्वं सुयोधनबलं नृप ॥ ३२
यत्तु गोवृषभाङ्केन मुनिभ्यः समुदाहृतम् ।
पुराणं हिमवत्पृष्ठे तन्मे निगदतः शृणु ॥ ३३
यावत्तस्य भवेत्पुष्टिस्तेजो दीप्तिः पराक्रमः ।
प्रभावः सन्नतिर्जन्म कृष्णे तत्त्रिगुणं विभो ॥ ३४
कः शक्नोत्यन्यथा कर्तुं तद्यदि स्यात्तथा शृणु ।
यत्र कृष्णो हि भगवांस्तत्र पुष्टिरनुत्तमा ॥ ३५
वयं त्विहाल्पमतयः परतन्त्राः सुविक्लवाः ।
ज्ञानपूर्वं प्रपन्नाः स्मो मृत्योः पन्थानमव्ययम् ॥ ३६
भवांश्चाप्यार्जवपरः पूर्वं कृत्वा प्रतिश्रयम् ।
राजवृत्तं न लभते प्रतिज्ञापालने रतः ॥ ३७
अप्येवात्मवधं लोके राजंस्त्वं बहु मन्यसे ।
न हि प्रतिज्ञा या दत्ता तां प्रहातुमरिंदम ॥ ३८
कालेनायं जनः सर्वो निहतो रणमूर्धनि ।
वयं च कालेन हताः कालो हि परमेश्वरः ॥ ३९
न हि कालेन कालज्ञः स्पृष्टः शोचितुमर्हसि ।
कालो लोहितरक्ताक्षः कृष्णो दण्डी सनातनः ॥ ४०
तस्मात्कुन्तीसुत ज्ञातीन्नेह शोचितुमर्हसि ।
व्यपेतमन्युर्नित्यं त्वं भव कौरवनन्दन ॥ ४१
माधवस्यास्य माहात्म्यं श्रुतं यत्कथितं मया ।
तदेव तावत्पर्याप्तं सज्जनस्य निदर्शनम् ॥ ४२
व्यासस्य वचनं श्रुत्वा नारदस्य च धीमतः ।
स्वयं चैव महाराज कृष्णस्यार्हतमस्य वै ॥ ४३
प्रभावश्चार्षपूगस्य कथितः सुमहान्मया ।
महेश्वरस्य संवादं शैलपुत्र्याश्च भारत ॥ ४४
धारयिष्यति यश्चैनं महापुरुषसंभवम् ।
शृणुयात्कथयेद्वा यः स श्रेयो लभते परम् ॥ ४५
भवितारश्च तस्याथ सर्वे कामा यथेप्सिताः ।
प्रेत्य स्वर्गं च लभते नरो नास्त्यत्र संशयः ॥ ४६
न्याय्यं श्रेयोभिकामेन प्रतिपत्तुं जनार्दनः ।
एष एवाक्षयो विप्रैः स्तुतो राजञ्जनार्दनः ॥ ४७
महेश्वरमुखोत्सृष्टा ये च धर्मगुणाः स्मृताः ।
ते त्वया मनसा धार्याः कुरुराज दिवानिशम् ॥ ४८

एवं त वर्तमानस्य सम्यग्दण्डधरस्य च ।
प्रजापालनदक्षस्य स्वर्गलोको भविष्यति ॥ ४९
धर्मेणापि सदा राजन्प्रजा रक्षितुमर्हसि ।
यस्तस्य विपुलो दण्डः सम्यग्धर्मः स कीर्त्यते ५०
य एष कथितो राजन्मया सज्जनसन्निधौ ।
शंकरस्योमया सार्धं संवादो धर्मसंहितः ॥ ५१
श्रुत्वा वा श्रोतुकामो वाऽप्यर्चयेद्वृषभध्वजम् ।
विशुद्धेनेह भावेन य इच्छेद्भूतिमात्मनः ॥ ५२
एष तस्यानवद्यस्य नारदस्य महात्मनः ।
संदेशो देवपूजार्थं तं तथा कुरु पाण्डव ॥ ५३
एतदत्यद्भुतं वृत्तं पुण्ये हि भवति प्रभो ।
वासुदेवस्य कौन्तेय स्थाणोश्चैव स्वभावजम् ॥ ५४
दशवर्षसहस्राणि बदर्यामेष शाश्वतः ।
तपश्चचार विपुलं सह गाण्डीवधन्वना ॥ ५५
त्रियुगौ पुण्डरीकाक्षौ वासुदेवधनंजयौ ।
विदितौ नारदादेतौ मम व्यासाच्च पार्थिव ॥ ५६
बाल एव महाबाहुश्चकार कदनं महत् ।
कंसस्य पुण्डरीकाक्षो ज्ञातित्राणार्थकारणात् ॥ ५७
कर्मणामस्य कौन्तेय नान्तं सङ्ख्यातुमुत्सहे ।
शाश्वतस्य पुराणस्य पुरुषस्य युधिष्ठिर ॥ ५८
ध्रुवं श्रेयः परं तात भविष्यति तवोत्तमम् ।
यस्य ते पुरुषव्याघ्रः सखा चायं जनार्दनः ॥ ५९
दुर्योधनं तु शोचामि प्रेत्य लोकेऽपि दुर्मतिम् ।
यत्कृते पृथिवी सर्वा विनष्टा सहयद्विपा
दुर्योधनापराधेन कर्णस्य शकुनेस्तथा ।
दुःशासनचतुर्थानां कुरवो निधनं गताः ६१
वैशंपायन उवाच ।
एवं संभाषमाणे तु गाङ्गेये पुरुषर्षभे
तूष्णीं बभूव कौरव्यो मध्ये तेषां महात्मनाम् ॥ ६२
तच्छ्रुत्वा विस्मयं जग्मुर्धृतराष्ट्रादयो नृपाः ।
संपूज्य मनसा कृष्णं सर्वे प्राञ्जलयोऽभवन् ॥ ६३
ऋषयश्चापि ते सर्वे नारदप्रमुखास्तदा ।
प्रतिगृह्याभ्यनन्दन्त तद्वाक्यं प्रतिपूज्य च ॥ ६४
इत्येतदखिलं सर्वैः पाण्डवो भ्रातृभिः सह ।
श्रुतवान्सुमहाश्चर्यं पुण्यं भीष्मानुशासनम् ॥ ६५
वैशंपायन उवाच ।
युधिष्ठिरस्तु गाङ्गेयं विश्रान्तं भूरिदक्षिणम् ।
पुनरेव महाबुद्धिः पर्यपृच्छन्महीपतिः ॥ ६६

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि द्विपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५२ ॥

## त्रिपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५३ ॥

भीष्मेण युधिष्ठिरंप्रति दृष्टान्ततया विप्रकन्योपाख्यानकथनपूर्वकं विद्वत्संरक्षणस्य महाफलहेतुत्वकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
कृपया परया प्रोक्तः सर्वेषां पापकर्मणाम् ।
ज्ञानस्य च परस्येह तन्मे ब्रूहि पितामह ॥ १
भीष्म उवाच ।
उपायोऽयं परप्राप्तौ परमः परिकीर्तितः ।
नारायणाख्यानुध्यानमर्चनं यजनं स्तुतिः ॥ २
श्रवणं तत्कथानां च विद्वत्संरक्षणं तथा ।
विद्वच्छुश्रूषणप्रीतिरुपदेशानुपालनम् ।
स ध्यानेन जपेनाशु मुच्यते प्राकृतोपि वा ॥ ३
जपश्चतुर्विधः प्रोक्तो वैदिकस्तान्त्रिकोपि च ।
पौराणिकोथ विद्वद्भिः कथितः स्मार्त एव च ॥ ४
विद्वच्छुश्रूषया ज्ञानं विद्वत्संरक्षणेन च ।
नासाध्यं ज्ञानिनां किंचित्तस्माद्रक्ष्यास्त्वया द्विजाः
सुव्रता बन्धुहीनैका वने पूर्वं यमेन तु ।
आसीदाश्वासिता विद्वत्संरक्षणफलात्किल ॥ ६
विप्रस्य मरणे हेतुस्तत्पत्नी पितृशोकदा ।
वैश्या त्वमतिलाभोऽयं विप्रकन्येति सांप्रतम् ॥ ७
इत्युक्ताऽऽश्वासिताऽपृच्छत्केनैवं पापसंयुता ।
जाता विप्रकुले सम्यक् श्रेयश्चापि ब्रवीहि मे ॥ ८
यम उवाच ।
अन्त्यजन्मनि विद्वांसं प्रहारैरभिपीडितम् ।
चोरशङ्काविमोक्षेण मोक्षयित्वा सुजन्मिका ॥ ९

इत्युक्ताऽष्टाक्षरध्यानजपादिश्रेयसंयुता ।
यमेनानुगृहीताऽभूत्पुण्यलोकनिवासिनी ॥ १०
तन्नित्यं विदुषां रक्षा तत्परोऽभूर्महीपते ।
तेषां संरक्षणात्सद्यः सर्वपापैः प्रमुच्यते ॥ ११

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि त्रिपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५३ ॥

## चतुःपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५४ ॥

भीष्मेण युधिष्ठिरंप्रति श्रीविष्णुसहस्रनामकथनम् ॥ १ ॥

वैशंपायन उवाच ।
श्रुत्वा धर्मानशेषेण पावनानि च सर्वशः ।
युधिष्ठिरः शान्तनवं पुनरेवाभ्यभाषत ॥ १
किमेकं दैवतं लोके किं वाऽप्येकं परायणम् ।
स्तुवन्तः कं कमर्चन्तः प्राप्नुयुर्मानवाः शुभम् ॥ २
को धर्मः सर्वधर्माणां भवतः परमो मतः ।
किं जपन्मुच्यते जन्तुर्जन्मसंसारबन्धनात् ॥ ३
भीष्म उवाच ।
जगत्प्रभुं देवदेवमनन्तं पुरुषोत्तमम् ।
स्तुवन्नामसहस्रेण पुरुषः सततोत्थितः ॥ ४
तमेव चार्चयन्नित्यं भक्त्या पुरुषमव्ययम् ।
ध्यायन्स्तुवन्नमस्यंश्च यजमानस्तमेव च ॥ ५
अनादिनिधनं विष्णुं सर्वलोकमहेश्वरम् ।
लोकाध्यक्षं स्तुवन्नित्यं सर्वदुःखातिगो भवेत् ॥ ६
ब्रह्मण्यं सर्वधर्मज्ञं लोकानां कीर्तिवर्धनम् ।
लोकनाथं महद्भूतं सर्वभूतभवोद्भवम् ॥ ७
एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः ।
यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरः सदा ॥ ८
परमं यो महत्तेजः परमं यो महत्तपः ।
परमं यो महद्ब्रह्म परमं यः परायणम् ॥ ९
पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम् ।
दैवतं देवतानां च भूतानां योऽव्ययः पिता ॥ १०
यतः सर्वाणि भूतानि भवन्त्यादियुगागमे ।
यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये ॥ ११
तस्य लोकप्रधानस्य जगन्नाथस्य भूपते ।
विष्णोर्नामसहस्रं मे शृणु पापभयापहम् ॥ १२
यानि नामानि गौणानि विख्यातानि महात्मनः ।
ऋषिभिः परिगीतानि तानि वक्ष्यामि भूतये १३
'ऋषिर्नाम्नां सहस्रस्य वेदव्यासो महामुनिः ।
छन्दोनुष्टुप्तथा देवो भगवान्देवकीसुतः ॥ १४
अमृतांशूद्भवो बीजं शक्तिर्देवकिनन्दनः ।
त्रिसाम हृदयं तस्य शान्त्यर्थे विनियुज्यते ॥' १५
ओं विश्वं विष्णुर्वषट्कारो भूतभव्यभवत्प्रभुः ।
भूतकृद्भूतभृद्भावो भूतात्मा भूतभावनः ॥ १६
पूतात्मा परमात्मा च मुक्तानां परमा गतिः ।
अव्ययः पुरुषः साक्षी क्षेत्रज्ञोऽक्षर एव च ॥ १७
योगो योगविदां नेता प्रधानपुरुषेश्वरः ।
नरसिंहवपुः श्रीमान्केशवः पुरुषोत्तमः ॥ १८
सर्वः शर्वः शिवः स्थाणुर्भूतादिर्निधिरव्ययः ।
संभवो भावनो भर्ता प्रभवः प्रभुरीश्वरः ॥ १९
स्वयंभूः शंभुरादित्यः पुष्कराक्षो महास्वनः ।
अनादिनिधनो धाता विधाता धातुरुत्तमः ॥ २०
अप्रमेयो हृषीकेशः पद्मनाभोऽमरप्रभुः ।
विश्वकर्मा मनुस्त्वष्टा स्थविष्ठः स्थविरो ध्रुवः ॥ २१
अग्राह्यः शाश्वतः कृष्णो लोहिताक्षः प्रतर्दनः ।
प्रभूतस्त्रिककुद्धाम पवित्रं मङ्गलं परम् ॥ २२
ईशानः प्राणदः प्राणो ज्येष्ठः श्रेष्ठः प्रजापतिः ।
हिरण्यगर्भो भूगर्भो माधवो मधुसूदनः ॥ २३
ईश्वरो विक्रमी धन्वी मेधावी विक्रमः क्रमः ।
अनुत्तमो दुराधर्षः कृतज्ञः कृतिरात्मवान् ॥ २४
सुरेशः शरणं शर्म विश्वरेताः प्रजाभवः ।
अहः संवत्सरो व्यालः प्रत्ययः सर्वदर्शनः ॥ २५
अजः सर्वेश्वरः सिद्धः सिद्धिः सर्वादिरच्युतः ।
वृषाकपिरमेयात्मा सर्वयोगविनिःसृतः ॥ २६
वसुर्वसुमनाः सत्यः समात्मा संमितः समः ।
अमोघः पुण्डरीकाक्षो वृषकर्मा वृषाकृतिः ॥ २७

रुद्रो बहुशिरा बभ्रुर्विश्वयोनिः शुचिश्रवाः ।
अमृतः शाश्वतः स्थाणुर्वरारोहो महातपाः ॥२८
सर्वगः सर्वविद्भानुर्विष्वक्सेनो जनार्दनः ।
वेदो वेदविदव्यङ्गो वेदाङ्गो वेदवित्कविः ॥ २९
लोकाध्यक्षः सुराध्यक्षो धर्माध्यक्षः कृताकृतः ।
चतुरात्मा चतुर्व्यूहश्चतुर्दंष्ट्रश्चतुर्भुजः ॥ ३०
भ्राजिष्णुर्भोजनं भोक्ता सहिष्णुर्जगदादिजः ।
अनघो विजयो जेता विश्वयोनिः पुनर्वसुः ॥३१
उपेन्द्रो वामनः प्रांशुरमोघः शुचिरूर्जितः ।
अतीन्द्रः संग्रहः सर्गो धृतात्मा नियमोयमः ॥ ३२
वेद्यो वैद्यः सदायोगी वीरहा माधवो मधुः ।
अतीन्द्रियो महामायो महोत्साहो महाबलः ॥३३
महाबुद्धिर्महावीर्यो महाशक्तिर्महाद्युतिः ।
अनिर्देश्यवपुः श्रीमानमेयात्मा महाद्रिधृक् ॥३४
महेष्वासो महीभर्ता श्रीनिवासः सतांगतिः ।
अनिरुद्धः सुरानन्दो गोविन्दो गोविदांपतिः ॥३५
मरीचिर्दमनो हंसः सुपर्णो भुजगोत्तमः ।
हिरण्यनाभः सुतपाः पद्मनाभः प्रजापतिः ॥३६
अमृत्युः सर्वदृक्सिंहः संधाता सन्धिमान्स्थिरः ।
अजो दुर्मर्षणः शास्ता विश्रुतात्मा सुरारिहा ॥३७
गुरुर्गुरुतमो धाम सत्यः सत्यपराक्रमः ।
निमिषोऽनिमिषः स्रग्वी वाचस्पतिरुदारधीः ३८
अग्रणीर्ग्रामणीः श्रीमान्न्यायो नेता समीरणः ।
सहस्रमूर्धा विश्वात्मा सहस्राक्षः सहस्रपात् ॥३९
आवर्तनो निवृत्तात्मा संवृतः संप्रमर्दनः ।
अहः संवर्तको वह्निरनिलो धरणीधरः ॥ ४०
सुप्रसादः प्रसन्नात्मा विश्वदृग्विश्वभुग्विभुः ।
सत्कर्ता सत्कृतिः साधुर्जह्नुर्नारायणो नरः ॥४१
असंख्येयोऽप्रमेयात्मा विशिष्टः शिष्टकृच्छुचिः ।
सिद्धार्थः सिद्धसंकल्पः सिद्धिदः सिद्धिसाधनः ४२
वृषाहिर्वृषभो विष्णुर्वृषपर्वा वृषोदरः ।
वर्धनो वर्धमानश्च विविक्तः श्रुतिसागरः ॥ ४३
सुभुजो दुर्धरो वाग्मी महेन्द्रो वसुदो वसुः ।
नैकरूपो बृहद्रूपः शिपिविष्टः प्रकाशनः ॥ ४४
ओजस्तेजोद्युतिधरः प्रकाशात्मा प्रतापनः ।
ऋद्धः स्पष्टाक्षरो मन्त्रश्चन्द्रांशुर्भास्करद्युतिः ॥ ४५
अमृतांशूद्भवो भानुः शशबिन्दुः सुरेश्वरः ।
औषधं जगतः सेतुः सत्यधर्मपराक्रमः ॥ ४६
भूतभव्यभवन्नाथः पवनः पावनोऽनलः ।
कामहा कामकृत्कान्तः कामः कामप्रदः प्रभुः ४७
युगादिकृद्युगावर्तो नैकमायो महाशनः ।
अदृश्यो व्यक्तरूपश्च सहस्रजिदनन्तजित् ॥ ४८
इष्टो विशिष्टः शिष्टेष्टः शिखण्डी नहुषो वृषः ।
क्रोधहा क्रोधकृत्कर्ता विश्वबाहुर्महीधरः ॥ ४९
अच्युतः प्रथितः प्राणः प्राणदो वासवानुजः ।
अपांनिधिरधिष्ठानमप्रमत्तः प्रतिष्ठितः ॥ ५०
स्कन्दः स्कन्दधरो धुर्यो वरदो वायुवाहनः ।
वासुदेवो बृहद्भानुरादिदेवः पुरंदरः ॥ ५१
अशोकस्तारणस्तारः शूरः शौरिर्जनेश्वरः ।
अनुकूलः शतावर्तः पद्मी पद्मनिभेक्षणः ॥ ५२
पद्मनाभोऽरविन्दाक्षः पद्मगर्भः शरीरभृत् ।
महर्द्धिर्ऋद्धो वृद्धात्मा महाक्षो गरुडध्वजः ॥ ५३
अतुलः शरभो भीमः समयज्ञो हविर्हरिः ।
सर्वलक्षणलक्षण्यो लक्ष्मीवान्समितिंजयः ॥ ५४
विक्षरो रोहितो मार्गो हेतुर्दामोदरः सहः ।
महीधरो महाभागो वेगवानमिताशनः ॥ ५५
उद्भवः क्षोभणो देवः श्रीगर्भः परमेश्वरः ।
करणं कारणं कर्ता विकर्ता गहनो गुहः ॥ ५६
व्यवसायो व्यवस्थानः संस्थानः स्थानदो ध्रुवः ।
परर्द्धिः परमस्पष्टस्तुष्टः पुष्टः शुभेक्षणः ॥ ५७
रामो विरामो विरजो मार्गो नेयो नयोऽनयः ।
वीरः शक्तिमतांश्रेष्ठो धर्मो धर्मविदुत्तमः ॥ ५८
वैकुण्ठः पुरुषः प्राणः प्राणदः प्रणवः पृथुः ।
हिरण्यगर्भः शत्रुघ्नो व्याप्तो वायुरधोक्षजः ॥ ५९
ऋतुः सुदर्शनः कालः परमेष्ठी परिग्रहः ।
उग्रः संवत्सरो दक्षो विश्रामो विश्वदक्षिणः ॥६०

विश्वधृगिति झ. पाठ. सत्कृतः साधुरिति च ॥ ४१ ॥ रामो विरमो विरमः इति क. पाठः, विरतः इति थ. पाठः ॥ ५८ ॥

विस्तारः स्थावरः स्थाणुः प्रमाणं बीजमव्ययम् ।
अर्थोऽनर्थो महाकोशो महाभोगो महाधनः ॥६१
अनिर्विण्णः स्थविष्ठो भूर्धर्मयूपो महामखः ।
नक्षत्रनेमिर्नक्षत्री क्षमः क्षामः समीहनः ॥ ६२
यज्ञ इज्यो महेज्यश्च क्रतुः सत्रं सतांगतिः ।
सर्वदर्शी विमुक्तात्मा सर्वज्ञो ज्ञानमुत्तमम् ॥ ६३
सुव्रतः सुमुखः सूक्ष्मः सुघोषः सुखदः सुहृत् ।
मनोहरो जितक्रोधो वीरबाहुर्विदारणः ॥ ६४
स्वापनः स्ववशो व्यापी नैकात्मा नैककर्मकृत् ।
वत्सरो वत्सलो वत्सी रत्नगर्भो धनेश्वरः ॥ ६५
धर्मगुब्धर्मकृद्धर्मी सदसत्क्षरमक्षरम् ।
अविज्ञाता सहस्रांशुर्विधाता कृतलक्षणः ॥ ६६
गभस्तिनेमिः सत्वस्थः सिंहो भूतमहेश्वरः ।
आदिदेवो महादेवो देवेशो देवभृद्गुरुः ॥ ६७
उत्तरो गोपतिर्गोप्ता ज्ञानगम्यः पुरातनः ।
शरीरी भूतभृद्भोक्ता कपीन्द्रो भूरिदक्षिणः ॥६८
सोमपोऽमृतपः सोमः पुरुजित्पुरुसत्तमः ।
विनयोज्यः सत्यसन्धो दाशार्हः सात्वतांपतिः ॥
जीवो विनयिता साक्षी मुकुन्दोऽमितविक्रमः ।
अम्भोनिधिरनन्तात्मा महोदधिशयोऽन्तकः ७०
अजो महार्हः स्वाभाव्यो जितामित्रः प्रमोदनः ।
आनन्दो नन्दनो नन्दः सत्यधर्मा त्रिविक्रमः ७१
महर्षिः कपिलाचार्यः कृतज्ञो मेदिनीपतिः ।
त्रिपदस्त्रिदशाध्यक्षो महाशृङ्गः कृतान्तकृत् ॥७२
महावराहो गोविन्दः सुषेणः कनकाङ्गदी ।
गुह्यो गभीरो गहनो गुप्तश्चक्रगदाधरः ॥ ७३
वेधाः स्वाङ्गोऽजितः कृष्णो दृढः संकर्षणोच्युतः ।
वरुणो वारुणो वृक्षः पुष्कराक्षो महामनाः ॥ ७४
भगवान्भगहा नन्दी वनमाली हलायुधः ।
आदित्यो ज्योतिरादित्यः सहिष्णुर्गतिसत्तमः ७५
सुधन्वा खण्डपरशुर्दारुणो द्रविणप्रदः ।
दिवस्पृक्सर्वदृग्व्यासो वाचस्पतिरयोनिजः ॥७६
त्रिसामा सामगः साम निर्वाणं भेषजं भिषक् ।
संन्यासकृच्छमः शान्तो निष्ठा शान्तिः परायणम् ॥
शुभाङ्गः शान्तिदः स्रष्टा कुमुदः कुवलेशयः ।
गोहितो गोपतिर्गोप्ता वृषभाक्षो वृषप्रियः ॥ ७८
अनिवर्ती निवृत्तात्मा संक्षेप्ता क्षेमकृच्छिवः ।
श्रीवत्सवक्षाः श्रीवासः श्रीपतिः श्रीमतांवरः ७९
श्रीदः श्रीशः श्रीनिवासः श्रीनिधिः श्रीविभावनः ।
श्रीधरः श्रीकरः श्रेयः श्रीमाँल्लोकत्रयाश्रयः ॥ ८०
स्वक्षः स्वङ्गः शतानन्दो नन्दिर्ज्योतिर्गणेश्वरः ।
विजितात्मा विधेयात्मा सत्कीर्तिश्छिन्नसंशयः ८१
उदीर्णः सर्वतश्चक्षुरनीशः शाश्वतः स्थिरः ।
भूशयो भूषणो भूतिर्विशोकः शोकनाशनः ॥८२
अर्चिष्मानर्चितः कुम्भो विशुद्धात्मा विशोधनः ।
अनिरुद्धोऽप्रतिरथः प्रद्युम्नोऽमितविक्रमः ॥ ८३
कालनेमिनिहा वीरः शौरिः शूरजनेश्वरः ।
त्रिलोकात्मा त्रिलोकेशः केशवः केशिहा हरिः ८४
कामदेवः कामपालः कामी कान्तः कृतागमः ।
अनिर्देश्यवपुर्विष्णुर्वीरोऽनन्तो धनञ्जयः ॥ ८५
ब्रह्मण्यो ब्रह्मकृद्ब्रह्मा ब्रह्म ब्रह्मविवर्धनः ।
ब्रह्मविद्ब्राह्मणो ब्रह्मी ब्रह्मज्ञो ब्राह्मणप्रियः ॥ ८६
महाक्रमो महाकर्मा महातेजा महोरगः ।
महाक्रतुर्महायज्वा महायज्ञो महाहविः ॥ ८७
स्तव्यः स्तवप्रियः स्तोत्रं स्तुतिः स्तोता रणप्रियः ।
पूर्णः पूरयिता पुण्यः पुण्यकीर्तिरनामयः ॥ ८८
मनोजवस्तीर्थकरो वसुरेता वसुप्रदः ।
वसुप्रदो वासुदेवो वसुर्वसुमना हविः ॥ ८९
सद्गतिः सत्कृतिः सत्ता सद्भूतिः सत्परायणः ।
शूरसेनो यदुश्रेष्ठः सन्निवासः सुयामुनः ॥ ९०
भूतावासो वासुदेवः सर्वासुनिलयोऽनलः ।
दर्पहा दर्पदो दृप्तो दुर्धरोऽथापराजितः ॥ ९१
विश्वमूर्तिर्महामूर्तिर्दीप्तमूर्तिरमूर्तिमान् ।
अनेकमूर्तिरव्यक्तः शतमूर्तिः शताननः ॥ ९२

सुघोषः सुहृदः सुहृदिति क.थ. पाठः ॥६४॥ शरीरभूतभृद्भोक्तेति क. ङ. झ. थ. पाठः ॥ ६८ ॥ विनयो जयः सत्यसन्धः इति क. ङ. झ. पाठः ॥ ६९ ॥ कालनेमिनिहा शौरिर्वीरः शूरो जनेश्वरः इति क. पाठः । कालनेमिनिहा वीरः शूरः शौरिर्जनेश्वरः इति थ. पाठः ॥ ८४ ॥

एको नैकः सवः कः किं यत्तत्पदमनुत्तमम् ।
लोकबन्धुर्लोकनाथो माधवो भक्तवत्सलः ॥ ९३
सुवर्णवर्णो हेमाङ्गो वराङ्गश्चन्दनाङ्गदी ।
वीरहा विषमः शून्यो घृताशीरचलश्चलः ॥ ९४
अमानी मानदो मान्यो लोकस्वामी त्रिलोकधृत् ।
सुमेधा मेधजो धन्यः सत्यमेधा धराधरः ॥ ९५
तेजो वृषो द्युतिधरः सर्वशस्त्रभृतांवरः ।
प्रग्रहो निग्रहो व्यग्रो नैकशृङ्गो गदाग्रजः ॥ ९६
चतुर्मूर्तिश्चतुर्बाहुश्चतुर्व्यूहश्चतुर्गतिः ।
चतुरात्मा चतुर्भावश्चतुर्वेदविदेकपात् ॥ ९७
समावर्तो निवृत्तात्मा दुर्जयो दुरतिक्रमः ।
दुर्लभो दुर्गमो दुर्गो दुरावासो दुरारिहा ॥ ९८
शुभाङ्गो लोकसारङ्गः सुतन्तुस्तन्तुवर्धनः ।
इन्द्रकर्मा महाकर्मा कृतकर्मा कृतागमः ॥ ९९
उद्भवः सुन्दरः सुन्दो रत्ननाभः सुलोचनः ।
अर्को वाजसनः शृङ्गी जयन्तः सर्वविज्जयी१००
सुवर्णबिन्दुरक्षोभ्यः सर्ववागीश्वरेश्वरः ।
महाह्रदो महागर्तो महाभूतो महानिधिः ॥१०१
कुमुदः कुन्दरः कुन्दः पर्जन्यः पवनोऽनिलः ।
अमृतांशोऽमृतवपुः सर्वज्ञः सर्वतोमुखः ॥ १०२
सुलभः सुव्रतः सिद्धः शत्रुजिच्छत्रुतापनः ।
न्यग्रोधोदुम्बरोश्वत्थश्चाणूरान्ध्रनिषूदनः ॥ १०३
सहस्रार्चिः सप्तजिह्वः सप्तैधाः सप्तवाहनः ।
अमूर्तिरनघोऽचिन्त्यो भयकृद्भयनाशनः॥ १०४
अणुर्बृहत्कृशः स्थूलो गुणभृन्निर्गुणो महान् ।
अधृतः स्वधृतः स्वास्थ्यः प्राग्वंशो वंशवर्धनः१०५
भारभृत्कथितो योगी योगीशः सर्वकामदः ।
आश्रमः श्रमणः क्षामः सुपर्णो वायुवाहनः १०६
धनुर्धरो धनुर्वेदो दण्डो दमयिता दमः ।
अपराजितः सर्वसहो नियन्ता नियमो यमः१०७
सत्ववान्सात्विकः सत्यः सत्यधर्मपरायणः ।
अभिप्रायः प्रियार्होऽर्हः प्रियकृत्प्रीतिवर्धनः १०८
विहायसगतिर्ज्योतिः सुरुचिर्हुतभुग्विभुः ।
रविर्विरोचनः सूर्यः सविता रविलोचनः ॥ १०९
अनन्तो हुतभुग्भोक्ता सुखदो नैकदोऽग्रजः ।
अनिर्विण्णः सदामर्षी लोकाधिष्ठानमद्भुतः ११०
सनात्सनातनतमः कपिलः कपिरव्ययः ।
स्वस्तिदः स्वस्तिकृत्स्वस्ति स्वस्तिभुक् स्वस्तिदक्षिणः
अरौद्रः कुण्डली चक्री विक्रम्यूर्जितशासनः ।
शब्दातिगः शब्दसहः शिशिरः शर्वरीकरः ११२
अक्रूरः पेशलो दक्षो दक्षिणः क्षमिणांवरः ।
विद्वत्तमो वीतभयः पुण्यश्रवणकीर्तनः ॥ ११३
उत्तारणो दुष्कृतिहा पुण्यो दुःस्वप्ननाशनः ।
वीरहा रक्षणः सन्तो जीवनः पर्यवस्थितः ॥११४
अनन्तरूपोऽनन्तश्रीर्जितमन्युर्भयापहः ।
चतुरस्रो गभीरात्मा विदिशो व्यादिशो दिशः ॥
अनादिर्भूर्भुवो लक्ष्मीः सुवीरो रुचिराङ्गदः ।
जननो जनजन्मादिर्भीमो भीमपराक्रमः ॥११६
आधारनिलयो धाता पुष्पहासः प्रजागरः ।
ऊर्ध्वगः सत्पथाचारः प्राणदः प्रणवः पणः ११७
प्रमाणं प्राणनिलयः प्राणभृत्प्राणजीवनः ।
तत्त्वं तत्त्वविदेकात्मा जन्ममृत्युजरातिगः ११८
भूर्भुवःस्वस्तरुस्तारः सविता प्रपितामहः ।
यज्ञो यज्ञपतिर्यज्वा यज्ञाङ्गो यज्ञवाहनः ॥ ११९
यज्ञभृद्यज्ञकृद्यज्ञी यज्ञभुग्यज्ञसाधनः ।
यज्ञान्तकृद्यज्ञगुह्यमन्नमन्नाद एव च ॥ १२०
आत्मयोनिः स्वयंजातो वैखानः सामगायनः ।
देवकीनन्दनः स्रष्टा क्षितीशः पापनाशनः १२१
शङ्खभृन्नन्दकी चक्री शार्ङ्गधन्वा गदाधरः ।
रथाङ्गपाणिरक्षोभ्यः सर्वप्रहरणायुधः ।
सर्वप्रहरणायुध ओंनम इति ॥ १२२
इतीदं कीर्तनीयस्य केशवस्य महात्मनः ।
नाम्नां सहस्रं दिव्यानामशेषेण प्रकीर्तितम् १२३
य इदं शृणुयान्नित्यं यश्चापि परिकीर्तयेत् ।

---

अर्को वाजसनिः शृङ्गी इति थ. पाठः ॥ १०० ॥ अमृताशोऽमृतवपुरिति झ. थ. पाठः ॥ १०२ ॥ अनन्तहुतभुग्भोक्तेति क. थ. पाठ. ॥ ११० ॥ सविता प्रपितामहः इति झ. पाठः ॥ ११९ ॥

नाशुभं प्राप्नुयात्किंचित्सोमुत्रेह च मानवः १२४
वेदान्तगो ब्राह्मणः स्यात्क्षत्रियो विजयी भवेत्।
वैश्यो धनसमृद्धः स्याच्छूद्रः सुखमवाप्नुयात् १२५
धर्मार्थी प्राप्नुयाद्धर्ममर्थार्थी चार्थमाप्नुयात्।
कामानवाप्नुयात्कामी प्रजार्थी प्राप्नुयात्प्रजाम् ॥
भक्तिमान्यः सदोत्थाय शुचिस्तद्गतमानसः।
सहस्रं वासुदेवस्य नाम्नामेतत्प्रकीर्तयेत् ॥ १२७
यशः प्राप्नोति विपुलं ज्ञातिप्राधान्यमेव च।
अचलां श्रियमाप्नोति श्रेयः प्राप्नोत्यनुत्तमम् १२८
न भयं क्वचिदाप्नोति वीर्यं तेजश्च विन्दति।
भवत्यरोगो द्युतिमान्बलरूपगुणान्वितः ॥ १२९
रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात्।
भयान्मुच्येत भीतस्तु मुच्येदापन्न आपदः १३०
दुर्गाण्यतितरत्याशु पुरुषः पुरुषोत्तमम्।
स्तुवन्नामसहस्रेण नित्यं भक्तिसमन्वितः ॥१३१
वासुदेवाश्रयो मर्त्यो वासुदेवपरायणः
सर्वपापविशुद्धात्मा याति ब्रह्म सनातनम् १३२
न वासुदेवभक्तानामशुभं विद्यते क्वचित्।
जन्ममृत्युजराव्याधिभयं नैवोपजायते ॥ १३३
इमं स्तवमधीयानः श्रद्धाभक्तिसमन्वितः।
युज्येतात्मसुखक्षान्तिश्रीधृतिस्मृतिकीर्तिभिः ॥
न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः।
भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे ॥१३५
द्यौः सचन्द्रार्कनक्षत्रा खं दिशो भूर्महोदधिः।
वासुदेवस्य वीर्येण विधृतानि महात्मनः ॥ १३६
ससुरासुरगन्धर्वं सयक्षोरगराक्षसम्।
जगद्वशे वर्ततेदं कृष्णस्य सचराचरम् ॥ १३७
इन्द्रियाणि मनो बुद्धिः सत्वं तेजो बलं धृतिः।
वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव च ॥ १३८
सर्वागमानामाचारः प्रथमं परिकल्प्यते।
आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युतः ॥ १३९
ऋषयः पितरो देवा महाभूतानि धातवः।
जङ्गमाजङ्गमं चेदं जगन्नारायणोद्भवम् ॥ १४०
योगो ज्ञानं तथा साङ्ख्यं विद्याः शिल्पादिकर्म च।
वेदाः शास्त्राणि विज्ञानमेतत्सर्वं जनार्दनात् १४१
एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः।
त्रींल्लोकान्व्याप्य भूतात्मा भुङ्क्ते विश्वभुगव्ययः ॥
इमं स्तवं भगवतो विष्णोर्व्यासेन कीर्तितम्।
पठेद्य इच्छेत्पुरुषः श्रेयः प्राप्तुं सुखानि च ॥ १४३
विश्वेश्वरमजं देवं जगतः प्रभवाप्ययम्।
भजन्ति ये पुष्कराक्षं न ते यान्ति पराभवम्।
'न ते यान्ति पराभवम् ओं नम इति ॥ १४४
अर्जुन उवाच।
पद्मपत्रविशालाक्ष पद्मनाभ सुरोत्तम।
भक्तानामनुरक्तानां त्राता भव जनार्दन ॥ १४५
भगवानुवाच।
यो मां नामसहस्रेण स्तोतुमिच्छति पाण्डव।
सोहमेकेन श्लोकेन स्तुत एव न संशयः
स्तुत एव न संशय ओं नम इति ॥ १४६
वासनाद्वासुदेवः स्या वासितं ते जगत्रयम्।
सर्वभूतनिवासोसि वासुदेव नमोस्तु ते ॥ १४७
नमोस्त्वनन्ताय सहस्रमूर्तये
सहस्रपादाक्षिशिरोरुबाहवे।
सहस्रनाम्ने पुरुषाय शाश्वते
सहस्रकोटियुगधारिणे नमः।
श्रीसहस्रकोटियुगधारिणे नम इति ॥' १४८

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि चतुःपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५४ ॥

विपुलं याति प्राधान्यमेव चेति क. पाठः ॥ १२८ ॥ चतुःपंचाशदधिकद्विशततमोऽध्यायः ॥ २५४ ॥

## पञ्चपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५५ ॥

भीष्मेण युधिष्ठिरंप्रति एकादशरुद्रद्वादशादित्यादीनां वसिष्ठादिमहर्षीणां राजर्ष्यादीनां च पृथक्पृथङ्नामनिर्देशपूर्वकं तत्तन्नामकीर्तनादेः सावित्रीजपादेश्च महाफलहेतुत्वाभिधानम् ॥ १ ॥

युधिष्ठिर उवाच* ।
पितामह महाप्राज्ञ सर्वशास्त्रविशारद ।
किं जप्यं जपतो नित्यं भवेद्धर्मफलं महत् ॥ १
प्रस्थाने वा प्रवेशे वा प्रवृत्ते वाऽपि कर्मणि ।
दैवे वा श्राद्धकाले वा किं जप्यं कर्मसाधनम् ॥ २
शान्तिकं पौष्टिकं रक्षा शत्रुघ्नं भयनाशनम् ।
जप्यं यद्ब्रह्म समितं तद्भवान्वक्तुमर्हति ॥ ३
भीष्म उवाच ।
व्यासप्रोक्तमिमं मन्त्रं शृणुष्वैकमना नृप ।
सावित्र्या विहितं दिव्यं सद्यः पापविमोचनम् ॥ ४
शृणु मन्त्रविधिं कृत्स्नं प्रोच्यमानं मयाऽनघ ।
यं श्रुत्वा पाण्डवश्रेष्ठ सर्वपापैः प्रमुच्यते ॥ ५
रात्रावहनि धर्मज्ञ जपन्पापैर्न लिप्यते ।
तत्तेऽहं संप्रवक्ष्यामि शृणुष्वैकमना नृप ॥ ६
आयुष्मान्भवते चैव यं श्रुत्वा पार्थिवात्मज
पुरुषस्तु सुसिद्धार्थः प्रेत्य चेह च मोदते ॥ ७
सेवितं सततं राजन्पुरा राजर्षिसत्तमैः ।
क्षत्रधर्मपरैर्नित्यं सत्यव्रतपरायणैः ॥
इदमाह्निकमव्यग्रं कुर्वद्भिर्नियतैः सदा ।
नृपैर्भरतशार्दूल प्राप्यते श्रीरनुत्तमा ॥
नमो वसिष्ठाय महाव्रताय
पराशरं वेदनिधिं नमस्ये ।
नमोस्त्वनन्ताय महोरगाय
नमोस्तु सिद्धेभ्य इहाक्षयेभ्यः ॥ १०
नमोस्त्वृषिभ्यः परमं परेषां
देवेषु देवं वरदं वराणाम् ।
सहस्रशीर्षाय नमः शिवाय
सहस्रनामाय जनार्दनाय ॥ ११
अजैकपादहिर्बुध्न्यः पिनाकी चापराजितः ।
ऋतश्च पितृरूपश्च त्र्यम्बकश्च महेश्वरः ॥ १२
वृषाकपिश्च शंभुश्च हवनोऽथेश्वरस्तथा ।
एकादशैते प्रथिता रुद्रास्त्रिभुवनेश्वराः ॥ १३
शतमेतत्समाम्नातं शतरुद्रे महात्मनाम् ॥ १४
अंशो भगश्च मित्रश्च वरुणश्च जलेश्वरः ।
तथा धाताऽर्यमा चैव जयन्तो भास्करस्तथा ॥ १५
त्वष्टा पूषा तथैवेन्द्रो द्वादशो विष्णुरुच्यते ।
इत्येते द्वादशादित्याः काश्यपेया इति श्रुतिः ॥ १६
धरो ध्रुवश्च सोमश्च सावित्रोऽथानिलोऽनलः ।
प्रत्यूषश्च प्रभासश्च वसवोष्टौ प्रकीर्तिताः ॥ १७
नासत्यश्चापि दस्रश्च स्मृतौ द्वावश्विनावपि ।
मार्तण्डस्यात्मजावेतौ संज्ञानासाविनिर्गतौ ॥ १८
अतः परं प्रवक्ष्यामि लोकानां कर्मसाक्षिणः ।
अपि यज्ञस्य वेत्तारो दत्तस्य सुकृतस्य च ॥ १९
अदृश्याः सर्वभूतेषु पश्यन्ति त्रिदशेश्वराः
शुभाशुभानि कर्माणि मृत्युः कालश्च सर्वशः ॥ २०
विश्वेदेवाः पितृगणा मूर्तिमन्तस्तपोधनाः ।
मुनयश्चैव सिद्धाश्च तपोमोक्षपरायणाः ।
शुचिस्मिताः कीर्तयतां प्रयच्छन्ति शुभं नृणाम् २१
प्रजापतिकृतानेतान्लोकान्दिव्येन तेजसा ।
वसन्ति सर्वलोकेषु प्रयताः सर्वकर्मसु ॥ २२
प्राणानामीश्वरानेतान्कीर्तयन्प्रयतो नरः ।
धर्मार्थकामैर्विपुलैर्युज्यते सह नित्यशः ॥ २३
लोकांश्च लभते पुण्यान्विश्वेश्वरकृताञ्शुभान् ।
एते देवास्त्रयस्त्रिंशत्सर्वभूतगणेश्वराः ॥ २४
नन्दीश्वरो महाकायो ग्रामणीर्वृषभध्वजः ।
ईश्वराः सर्वलोकानां गणेश्वरविनायकाः ॥ २५

विहित इष्टसिद्ध्यर्थं जप्तम् ॥ ४ ॥ आह्निक अहरहः कर्तव्यम् ॥ ९ ॥ वरद नमस्ये इति शेष ॥ ११ ॥ संज्ञाया अश्वारूपाया नामातः नासिकायाः सकाशाद्विनिर्गतौ ॥ १८ ॥ पञ्चपञ्चाशदधिकद्विशततमोऽध्याय ॥ २५५ ॥

* अयमध्यायः औत्तराहपाठ एव वर्तते ।

सौम्या रौद्रा गणाश्चैव योगभूतगणास्तथा ।
ज्योतींषि सरितो व्योम सुपर्णः पतगेश्वरः ॥२६
पृथिव्यां तपसा सिद्धाः स्थावराश्च चराश्च ह ।
हिमवान्गिरयः सर्वे चत्वारश्च महार्णवाः ॥ २७
भवस्यानुचराश्चैव हरतुल्यपराक्रमाः ।
विष्णुर्देवोथ जिष्णुश्च स्कन्दश्चाम्बिकया सह॥२८
कीर्तयन्प्रयतः सर्वान्सर्वपापैः प्रमुच्यते ।
अत ऊर्ध्वं प्रवक्ष्यामि मानवानृषिसत्तमान् ॥२९
यवक्रीतश्च रैभ्यश्च अर्वावसुपरावसू ।
औशिजश्चैव कक्षीवान्बलश्चाङ्गिरसः सुतः ॥ ३०
ऋषिर्मेधातिथेः पुत्रः कण्वो बर्हिषदस्तथा ।
ब्रह्मतेजोमयाः सर्वे कीर्तिता लोकभावनाः ॥३१
लभन्ते हि शुभं सर्वे रुद्रानलवसुप्रभाः ।
भुवि कृत्वा शुभं कर्म मोदन्ते दिवि दैवतैः॥३२
महेन्द्रगुरवः सप्त प्राचीं वै दिशमाश्रिताः ।
प्रयतः कीर्तयेदेताञ्शक्रलोके महीयते ॥ ३३
उन्मुचुः प्रमुचुश्चैव स्वस्त्यात्रेयश्च वीर्यवान् ।
दृढव्यश्चोर्ध्वबाहुश्च तृणसोमाङ्गिरास्तथा ॥ ३४
मित्रावरुणयोः पुत्रस्तथाऽगस्त्यः प्रतापवान् ।
धर्मराजर्त्विजः सप्त दक्षिणां दिशमाश्रिताः॥ ३५
दृढेयुश्च ऋतेयुश्च परिव्याधश्च कीर्तिमान् ।
एकतश्च द्वितश्चैव त्रितश्चादित्यसन्निभाः ॥ ३६
अत्रेः पुत्रश्च धर्मात्मा ऋषिः सारस्वतस्तथा ।
वरुणस्यर्त्विजः सप्त पश्चिमां दिशमाश्रिताः ॥३७
अत्रिर्वसिष्ठो भगवान्कश्यपश्च महानृषिः ।
गौतमश्च भरद्वाजो विश्वामित्रोथ कौशिकः ॥३८
ऋचीकतनयश्चोग्रो जमदग्निः प्रतापवान् ।
धनेश्वरस्य गुरवः सप्तैते उत्तराश्रिताः ॥ ३९
अपरे मुनयः सप्त दिक्षु सर्वास्वधिष्ठिताः ।
कीर्तिस्वस्तिकरा नृणां कीर्तिता लोकभावनाः ४०
धर्मः कामश्च कालश्च वसुर्वासुकिरेव च ।
अनन्तः कपिलश्चैव सप्तैते धरणीधराः ॥ ४१
रामो व्यासस्तथा द्रौणिरश्वत्थामा च लोमशः ।
इत्येते मुनयो दिव्या एकैकः सप्तसप्तधा ॥ ४२
शान्तिस्वस्तिकरा लोके दिशांपालाः प्रकीर्तिताः ।
यस्यांयस्यां दिशि ह्येते तन्मुखः शरणं व्रजेत् ४३
स्रष्टारः सर्वभूतानां कीर्तिता लोकपावनाः ।
संवर्तो मेरुसावर्णो मार्कण्डेयश्च धार्मिकः ॥ ४४
साङ्ख्ययोगौ नारदश्च दुर्वासाश्च महानृषिः ।
अत्यन्ततपसो दान्तास्त्रिषु लोकेषु विश्रुताः ॥४५
अपरे रुद्रसंकाशाः कीर्तिता ब्रह्मलौकिकाः ।
अपुत्रो लभते पुत्रं दरिद्रो लभते धनम् ॥ ४६
तथा धर्मार्थकामेषु सिद्धिं च लभते नरः ।
पृथुं वैन्यं नृपवरं पृथ्वी यस्याभवत्सुता ॥ ४७
प्रजापतिं सार्वभौमं कीर्तयेद्वसुधाधिपम् ।
आदित्यवंशप्रभवं महेन्द्रसमविक्रमम् ॥ ४८
पुरूरवसमैलं च त्रिषु लोकेषु विश्रुतम् ।
बुधस्य दयितं पुत्रं कीर्तयेद्वसुधाधिपम् ॥ ४९
त्रिलोकविश्रुतं वीरं भरतं च प्रकीर्तयेत् ।
गवामयेन यज्ञेन येनेष्टं वै कृते युगे ॥ ५०
रन्तिदेवं महादेवं कीर्तयेत्परमद्युतिम् ।
विश्वजित्तपसोपेतं लक्षण्यं लोकपूजितम् ॥ ५१
तथा श्वेतं च राजर्षिं कीर्तयेत्परमद्युतिम् ।
सगरस्यात्मजा येन प्लावितास्तारितास्तथा ॥ ५२
हुताशनसमानेतान्महारूपान्महौजसः ।
उग्रकायान्महासत्त्वान्कीर्तयेत्कीर्तिवर्धनान् ॥ ५३
देवानृषिगणांश्चैव नृपांश्च जगतीश्वरान् ।
साङ्ख्यं योगं च परमं हव्यं कव्यं तथैव च ॥ ५४
कीर्तितं परमं ब्रह्म सर्वश्रुतिपरायणम् ।
मङ्गल्यं सर्वभूतानां पवित्रं बहु कीर्तितम् ॥ ५५
व्याधिप्रशमनं श्रेष्ठं पौष्टिकं सर्वकर्मणाम् ।
प्रयतः कीर्तयेच्चैतान्कल्यं सायं च भारत ॥ ५६
एते वै यान्ति वर्षन्ति भान्ति वान्ति सृजन्ति च ।
एते विनायकाः श्रेष्ठा दक्षाः क्षान्ता जितेन्द्रियाः॥
नराणामशुभं सर्वे व्यपोहन्ति प्रकीर्तिताः ।
साक्षिभूता महात्मानः पापस्य सुकृतस्य च ॥५८
एतान्वै कल्यमुत्थाय कीर्तयञ्शुभमश्नुते ।
नाग्निचोरभयं तस्य न मार्गप्रतिरोधनम् ॥ ५९

एतान्कीर्तयतां नित्यं दुःस्वप्नो नश्यते नृणाम् ।
मुच्यते सर्वपापेभ्यः स्वस्तिमांश्च गृहान्व्रजेत् ६०
दीक्षाकालेषु सर्वेषु यः पठेन्नियतो द्विजः ।
न्यायवानात्मनिरतः क्षान्तो दान्तोऽनसूयकः ६१
रोगार्तो व्याधियुक्तो वा पठन्पापात्प्रमुच्यते ।
वास्तुमध्ये तु पठतः कुले स्वस्त्ययनं भवेत् ॥ ६२
क्षेत्रमध्ये तु पठतः सर्वं सस्यं प्ररोहति ।
गच्छतः क्षेममध्वानं ग्रामान्तरगतः पठन् ॥ ६३
आत्मनश्च सुतानां च दाराणां च धनस्य च ।
बीजानामोषधीनां च रक्षामेतां प्रयोजयेत् ॥ ६४
एतान्संग्रामकाले तु पठतः क्षत्रियस्य तु ।
व्रजन्ति रिपवो नाशं क्षेमं च परिवर्तते ॥ ६५
एतान्दैवे च पित्र्ये च पठतः पुरुषस्य हि ।
भुञ्जते पितरः कव्यं हव्यं च त्रिदिवौकसः ॥ ६६
न व्याधिश्वापदभयं न द्विपान्न हि तस्करात् ।
कश्मलं लघुतां याति पाप्मना च प्रमुच्यते ॥ ६७
यानपात्रे च याने च प्रवासे राजवेश्मनि ।
परां सिद्धिमवाप्नोति सावित्रीं ह्युत्तमां पठन् ॥ ६८
न च राजभयं तेषां न पिशाचान्न राक्षसात्
नाग्न्यम्बुपवनव्यालाद्भयं तस्योपजायते ॥ ६९
चतुर्णामपि वर्णानामाश्रमस्य विशेषतः ।
करोति सततं शान्तिं सावित्रीमुत्तमां पठन् ॥ ७०
नाग्निर्दहति काष्ठानि सावित्री यत्र पठ्यते
न तत्र बालो म्रियते न च तिष्ठन्ति पन्नगाः ॥७१
न तेषां विद्यते दुःखं गच्छन्ति परमां गतिम्
ये शृण्वन्ति महद्ब्रह्म सावित्रीगुणकीर्तनम् ॥ ७२
गवां मध्ये तु पठतो गावोऽस्य बहुवत्सलाः ।
प्रस्थाने वा प्रवासे वा सर्वावस्थां गतः पठेत् ॥ ७३
जपतां जुह्वतां चैव नित्यं च प्रयतात्मनाम् ।
ऋषीणां परमं जप्यं गुह्यमेतन्नराधिप ॥ ७४
याथातथ्येन सिद्धस्य इतिहासं पुरातनम्
पराशरमतं दिव्यं शक्राय कथितं पुरा ॥ ७५
तदेतत्ते समाख्यातं तथ्यं ब्रह्म सनातनम् ।
हृदयं सर्वभूतानां श्रुतिरेषा सनातनी ॥ ७६
सोमादित्यान्वयाः सर्वे राघवाः कुरवस्तथा ।
पठन्ति शुचयो नित्यं सावित्रीं प्राणिनां गतिं ७७
अभ्यासे नित्यं देवानां सप्तर्षीणां ध्रुवस्य च ।
मोक्षणं सर्वकृच्छ्राणां मोचयत्यशुभात्सदा ॥ ७८
वृद्धैः काश्यपगौतमप्रभृतिभिर्भृग्वङ्गिरोत्र्यादिभिः
शुक्रागस्त्यबृहस्पतिप्रभृतिभिर्ब्रह्मर्षिभिः सेवितम्।
भारद्वाजमतं ऋचीकतनयैः प्राप्तं वसिष्ठात्पुनः
सावित्रीमधिगम्य शक्रवसुभिः कृत्स्ना जिता दानवाः ॥ ७९

यो गोशतं कनकशृङ्गमयं ददाति
विप्राय वेदविदुषे च बहुश्रुताय ।
दिव्यां च भारतकथां कथयेच्च नित्यं
तुल्यं फलं भवति तस्य च तस्य चैव ॥ ८०
धर्मो विवर्धति भृगोः परिकीर्तनेन
वीर्यं विवर्धति वसिष्ठनमोनतेन ।
संग्रामजिद्भवति चैव रघुं नमस्य-
न्स्यादश्विनौ च परिकीर्तयतो न रोगः ८१

एषा ते कथिता राजन्सावित्री ब्रह्मशाश्वती ।
विवक्षुरसि यच्चान्यत्तत्ते वक्ष्यामि भारत ॥ ८२

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि पञ्चपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५५ ॥

## षट्पञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५६ ॥

भीष्मेण युधिष्ठिरंप्रति ब्राह्मणमहिमप्रशंसनपूर्वकं तेषां पूज्यत्वादिकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
के पूज्याः के नमस्कार्याः कथं वर्तेत केषु च ।
किमाचारः कीदृशेषु पितामह न रिष्यते ॥ १

भीष्म उवाच ।
ब्राह्मणानां परिभवः सादयेदपि देवताः ।

किमाचार. कथं धर्मः कीदृशेषु न रिष्यते इति क.पाठः॥१॥

ब्राह्मणांस्तु नमस्कृत्य युधिष्ठिर न रिष्यते ॥ २
ते पूज्यास्ते नमस्कार्या वर्तेथास्तेषु पुत्रवत् ।
ते हि लोकानिमान्सर्वान्धारयन्ति मनीषिणः॥ ३
ब्राह्मणाः सर्वलोकानां महान्तो धर्मसेतवः ।
धनत्यागाभिरामाश्च वाक्सङ्गमधुराश्च ये ॥ ४
रमणीयाश्च भूतानां नियमेन धृतव्रताः
प्रणेतारश्च कोशानां शास्त्राणां च यशस्विनः॥ ५
तपो येषां धनं नित्यं वाक्चैव विपुलं बलम् ।
प्रभवाश्चैव धर्माणां धर्मज्ञाः सूक्ष्मदर्शिनः ॥ ६
धर्मकामाः स्थिता धर्मे सुकृतैर्धर्मसेवतः
यान्समाश्रित्य तिष्ठन्ति प्रजाः सर्वाश्चतुर्विधाः॥ ७
पन्थानः सर्वनेतारो यज्ञवाहाः सनातनाः ।
पितृपैतामहीं गुर्वीमुद्वहन्ति धुरं सदा ॥ ८
धुरि ये नावसीदन्ति विषमे सद्गया इव
पितृदेवातिथिमुखा हव्यकव्याग्रभोजिनः ९
भोजनादेव लोकांस्त्रींस्त्रायन्ते महतो भयात् ।
दीपः सर्वस्य लोकस्य चक्षुश्चक्षुष्मतामपि ॥ १०
सर्वशिल्पादिनिधयो निपुणाः सूक्ष्मदर्शिनः
गतिज्ञाः सर्वभूतानामध्यात्मगतिचिन्तकाः॥ ११
आदिमध्यावसानानां ज्ञातारश्छिन्नसंशयाः ।
स्थावरविशेषज्ञा गन्तारः परमां गतिम् ॥ १२
विमुक्ता धूतपाप्मानो निर्द्वन्द्वा निष्परिग्रहाः
मानार्हा मानिता नित्यं ज्ञानविद्भिर्महात्मभिः१३
चन्दने मलपङ्के च भोजनेऽभोजने समाः ।
समं येषां दुकूलं च शाणक्षौमाजिनानि च ॥ १४
तिष्ठेयुरप्यभुञ्जाना बहूनि दिवसान्यपि ।
शोषयेयुश्च गात्राणि स्वाध्यायैः संयतेन्द्रियाः१५
अदैवं दैवतं [illegible]वत चाप्यदवतम्
लोकानन्यान्सृजेयुस्ते लोकपालांश्च कोपिताः १६
अपेयः सागरो येषामपि शापान्महात्मनाम् ।
येषां कोपाग्निरद्यापि दण्डके नोपशाम्यति ॥१७
देवानामपि ये देवाः कारणं कारणस्य च ।
प्रमाणस्य प्रमाणं च तस्मान्नाभिभवेद्बुधः ॥ १८
तेषां वृद्धाश्च बालाश्च सर्वे सन्मार्गदर्शिनः ।
तपोविद्याविशेषात्तु मानयन्ति परस्परम् ॥ १९
अविद्वान्ब्राह्मणो देवः पात्रं वै पावनं महत् ।
विद्वान्भूयस्तरो देवः पूर्णसागरसन्निभः ॥ २०
अविद्वांश्चैव विद्वांश्च ब्राह्मणो दैवतं महत् ।
प्रणीतश्चाप्रणीतश्च यथाऽग्निर्दैवतं महत् ॥ २१
श्मशाने ह्यपि तेजस्वी पावको नैव दुष्यति
हविर्यज्ञे च विधिवद्भूय एवाभिशोभते ॥ २२
एव यद्यप्यानष्टेषु वतत स
सर्वथा ब्राह्मणो मान्यो दैवतं विद्धि तत्परम् ॥२३

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि षट्पञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५६ ॥

## सप्तपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५७ ॥

भीष्मेण युधिष्ठिरंप्रति ब्राह्मणमहिमप्रकाशनाय कार्तवीर्यार्जुनकथाकथनारम्भः ॥ १ ॥ दत्तात्रेयाद्वरलाभगर्वितेन तेन दिग्जययात्रायां क्वापि पुरुषे स्वसाम्याभावकथने अशरीरवाण्या ब्राह्मणानामुत्कर्षकथनम् ॥ २ ॥ तेन दर्पात्तदवज्ञाने वायुनापि ब्राह्मणानामेवोत्कर्षे कथिते तेन वायुंप्रति तत्प्रकाशनप्रार्थना ॥ ३ ॥

युधिष्ठिर उवाच ।
कां तु ब्राह्मणपूजायां व्युष्टिं दृष्ट्वा जनाधिप ।
कं वा धर्मोदयं मत्वा तानर्चसि महामते ॥ १
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
पवनस्य च संवादमर्जुनस्य च भारत ॥ २
सहस्रभुजभृच्छ्रीमान्कार्तवीर्योऽभवत्प्रभुः ।
अस्य लोकस्य सर्वस्य माहिष्मत्यां महाबलः ॥ ३
स तु रत्नाकरवतीं सप्तद्वीपां ससागराम् ।
शशास पृथिवीं सर्वां हैहयः सत्यविक्रमः ॥ ४

अदैव दैवत कुर्युर्भस्म कुर्युश्च ते जगत् इति क थ.पाठः॥१६॥
षट्पञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५६ ॥

व्युष्टि समृद्धि फल वा । क वा कर्मोदयं मत्वा इति ङ. झ. पाठः ॥ १ ॥ स च रक्षार्थमवनि सप्तद्वीपां इति क.पाठ. ॥४॥

स्ववित्तं तेन दत्तं तु दत्तात्रेयाय कारणे ।
क्षत्रधर्मं पुरस्कृत्य विनयं श्रुतमेव च ॥ ५
आराधयामास च तं कृतवीर्यात्मजो मुनिम्
न्यमन्त्रयत संतुष्टो द्विजश्चैनं वरैस्त्रिभिः ॥ ६
स वरैश्छन्दितस्तेन नृपो वचनमब्रवीत् ।
सहस्रबाहुता मेऽस्तु चमूमध्ये ग्रहो यथा ॥ ७
मम बाहुसहस्रं तु पश्यन्तां सैनिका रणे ।
विक्रमेण महीं कृत्स्नां जयेयं संशितव्रत ॥ ८
तां च धर्मेण संप्राप्य पालयेयमतन्द्रितः ।
चतुर्थं तु वरं याचे त्वामहं द्विजसत्तम ॥ ९
तं ममानुग्रहकृते दातुमर्हस्यनिन्दित
अनुशासन्तु मां सन्तो मिथ्यावृत्तं त्वदाश्रयम् १०
इत्युक्तः स द्विजः प्राह तथास्त्विति नराधिपम् ।
एवं समभवंस्तस्य वरास्ते दीप्ततेजसः ॥ ११
ततः स रथमास्थाय ज्वलनार्कसमद्युतिम् ।
अब्रवीद्वीर्यसंमोहात्को वाऽस्ति मदृशो मम ॥ १२
धैर्यैर्वीर्यैर्यशःशौर्यैर्विक्रमेणौजसाऽपि वा ।
तद्वाक्यान्ते चान्तरिक्षे वागुवाचाशरीरिणी ॥ १३
न त्वं मूढ विजानीषे ब्राह्मणं क्षत्रियाद्वरम् ।
सहितो ब्राह्मणेनेह क्षत्रियः शास्ति वै प्रजाः ॥ १४

उवाच ।

कुर्यां भूतानि तुष्टोऽहं क्रुद्धो नाशं तथा नये ।
कर्मणा मनसा वाचा न मत्तोऽस्ति वरो द्विजः ॥ १५
पूर्वो ब्रह्मोत्तरो वादो द्वितीयः क्षत्रियोत्तरः ।
त्वयोक्तौ हेतुयुक्तौ तौ विशेषस्तत्र दृश्यते ॥ १६
ब्राह्मणाः संश्रिताः क्षत्रं न क्षत्रं ब्राह्मणाश्रितम् ।
श्रिता ब्रह्मोपधा विप्राः खादन्ति क्षत्रियान्भुवि १७
क्षत्रियेष्वाश्रितो धर्मः प्रजानां परिपालनम् ।
क्षत्राद्वृत्तिर्ब्राह्मणानां तैः कथं ब्राह्मणो वरः ॥ १८
सर्वभूतप्रधानांस्तान्भैक्षवृत्तीनहं सदा ।
आत्मसंभाविनान्विप्रान्स्थापयाम्यात्मनो वशे १९
कथितं त्वनयाऽसत्यं गायन्त्या कन्यया दिवि ।
विजेष्याम्यवशान्सर्वान्ब्राह्मणांश्चर्मवाससः ॥ २०
न च मां च्यावयेद्राष्ट्रात्त्रिषु लोकेषु कश्चन ।
देवो वा मानुषो वाऽपि तस्माज्ज्येष्ठो द्विजानहम् २१
अद्य ब्रह्मोत्तरं लोकं करिष्ये क्षत्रियोत्तरम्
नहि मे संयुगे कश्चित्सोढुमुत्सहते बलम् ॥ २२
अर्जुनस्य वचः श्रुत्वा वित्रस्ताऽभून्निशाचरी ।
अथैनमन्तरिक्षस्थस्ततो वायुरभाषत ॥ २३
त्यजैनं कलुषं भावं ब्राह्मणेभ्यो नमस्कुरु ।
एतेषां कुर्वतः पापं राष्ट्रक्षोभो भविष्यति ॥ २४
अथ च त्वां महीपाल शमयिष्यन्ति वै द्विजाः ।
निरसिष्यन्ति ते राष्ट्राद्धतोत्साहा महाबलाः ॥ २५
तं राजा कस्त्वमित्याह ततस्तं प्राह मारुतः ।
वायुर्वै देवदूतोऽस्मि हितं त्वां प्रब्रवीम्यहम् ॥ २६

अर्जुन उवाच ।

अहो त्वयाऽयं विप्रेषु भक्तिरागः प्रदर्शितः ।
यादृशं पृथिवीभूतं तादृशं ब्रूहि मे द्विजम् ॥ २७
वायोर्वा सदृशं किंचिद्ब्रूहि त्वं ब्राह्मणोत्तमम् ।
अपां वै सदृशं वह्नेः सूर्यस्य नभसोऽपि वा ॥ २८

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि सप्तपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५७ ॥

दत्तात्रेयाय कारणे इति ड. झ. पाठः ॥ ५ ॥ सहस्रबाहुर्भूया वै चमूमध्ये गृहेऽन्यथा इति ड. झ. पाठः ॥ ७ ॥ पूर्वो वादो ब्रह्मोत्तरः ब्राह्मणाधिक्यवचन पूर्वपक्ष क्षत्रियाधिक्यं सिद्धान्त इत्यर्थः । हेतुयुक्तौ प्रजापालनेन हेतुना युक्तौ सहितौ तौ ब्राह्मणक्षत्रियौ पूर्व ब्रह्मोत्तरो वादः क्षत्रिय. क्षत्रियोत्तरः मयोक्तो हेतुयुक्तौ चेति क.पाठः ॥ १६ ॥ ब्रह्म वेदो यज्ञश्च अध्यापनयाजनार्थ एव उपधा च्छल येषा ते तथा क्षत्रियान्खादन्ति उपजीवन्ति ॥ १७ ॥ चर्मवाससः अजिनवस्त्रान् । गायत्र्या कन्यया दिवीति झ.पाठः ॥ २० ॥ ब्रह्मोत्तरं सन्तम् ॥ २२ ॥ निशाचरी अन्तर्हिता सरस्वती ॥ २३ ॥ पृथिवीभूतं पृथिव्यात्मकं भूतम् ॥ २७ ॥ सप्तपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५७ ॥

## अष्टपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५८ ॥

कार्तवीर्यार्जुनंप्रति वायुना ब्राह्मणमहिमप्रशंसके स्ववाक्ये प्रामाण्यनिश्चयाय दृष्टान्ततयाऽङ्गिरःप्रभृतिब्राह्मणचरित्रविशेषप्रतिपादनम् ॥ १ ॥

वायुरुवाच ।
शृणु मूढ गुणान्कांश्चिद्ब्राह्मणानां महात्मनाम् ।
ये त्वया कीर्तिता राजंस्तेभ्योऽथ ब्राह्मणो वरः १
त्यक्त्वा महीत्वं भूमिस्तु स्पर्धया काश्यपस्य ह ।
नाशं जगाम तां विप्रो व्यस्तम्भयत कश्यपः ॥२
अक्षया ब्राह्मणा राजन्दिवि चेह च नित्यदा ।
अपिबत्तेजसा ह्यापः स्वयमेवाङ्गिराः पुरा ॥ ३
स ताः पिबन्क्षीरमिव नातृप्यत महातपाः ।
अपूरयन्महौघेन महीं सर्वां च पार्थिव ॥ ४
तस्मिन्नहं च क्रुद्धे वै जगत्त्यक्त्वा ततो भयात् ।
व्यतिष्ठमग्निहोत्रे च चिरमङ्गिरसो भयात् ॥ ५
अथ शप्तश्च भगवान्गौतमेन पुरंदरः ।
अहल्यां कामयानो वै धर्मार्थं च न हिंसितः ॥ ६
तथा समुद्रो नृपते पूर्णो दृष्टश्च वारिणा ।
ब्राह्मणैरभिशप्तश्च बभूव लवणोदकः ॥ ७
सुवर्णवर्णो निर्धूमः संगतोर्ध्वशिखः कविः
क्रुद्धेनाङ्गिरसा शप्तो गुणैरेतैर्विवर्जितः ॥
महतश्चूर्णितान्पश्य ये ह्यासन्त महोदधिम् ।
सुवर्णधारिणा नित्यमवशप्ता द्विजातिना ॥
संमतत्वं द्विजातिभ्यः श्रेष्ठं विद्धि नराधिप
गर्भस्थान्ब्राह्मणाञ्श्रश्वन्नमस्यति किल प्रभुः ॥१०
दण्डकानां महद्राज्यं ब्राह्मणेन विनाशितम् ।
तालजङ्घं महाक्षत्रमौर्वेणैकेन नाशितम् ॥ ११
त्वया च विपुलं राज्यं बलं धर्मं श्रुतं तथा ।
दत्तात्रेयप्रसादेन प्राप्तं परमदुर्लभम् ॥ १२
अग्निं त्वं यजसे नित्यं कस्माद्ब्राह्मणमर्जुन ।
स हि सर्वस्य लोकस्य हव्यवाट् किं न वेत्सि तम् १३
अथवा ब्राह्मणश्रेष्ठमनुभूतानुपालकम् ।
कर्तारं जीवलोकस्य कस्माज्जानन्विमुह्यसे ॥ १४
तथा प्रजापतिर्ब्रह्मा अव्यक्तप्रभवोऽव्ययः ।
येनेदं विपुलं विश्वं जनितं स्थावरं चरम् ॥ १५
अण्डजातं तु ब्रह्माणं केचिदिच्छिन्त्यपण्डिताः ।
अण्डाद्भिन्नाद्बभुः शैला दिशोऽम्भः पृथिवी दिवम् ॥
दृष्टवानेतदेवं हि कथं जायेदजो हि सः ।
स्थानमाकाशमण्डं तु यस्माज्जातः पितामहः ॥ १७
तिष्ठेत्कथमिति ब्रूयान्न किंचिद्धि तदा भवेत् ।
अहंकार इति प्रोक्तः सर्वतेजोगतः प्रभुः ॥ १८
नास्त्यन्तमस्ति तु ब्रह्मा स राजा लोकभावनः ।
इत्युक्तः स तदा तूष्णीमभूद्वायुस्तमब्रवीत् ॥ १९

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि अष्टपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५८ ॥

## एकोनषष्ट्यधिकद्विशततमोऽध्यायः ॥ २५९ ॥

वायुना हैहयंप्रति कश्यपचरित्रकथनम् ॥१॥ तथा उचथ्योपाख्यानकथनारम्भः ॥२॥ सोमेन भद्राभिधायाः स्वकन्याया उचथ्याय भार्यात्वेन प्रदानम् ॥ ३ ॥ पूर्वमेव तां कामितवता वरुणेन विजने तस्या अपहरणम् ॥ ४ ॥ नारदात्तच्छ्रुतवतोचथ्येन कोपात्समुद्रे शोषिते भयाद्वरुणेनोचथ्याय पुनर्भद्राप्रत्यर्पणम् ॥ ५ ॥

वायुरुवाच ।
इमां भूमिं द्विजातिभ्यो दित्सुर्वै दक्षिणां पुरा ।

रसकामः पिबन्क्षीर नाकुप्यत महातपाः इति थ.पाठः ॥४॥ अह वायुः ॥ ५ ॥ कविः अग्निः ॥ ८ ॥ महतः सगरपुत्रान् आसन्त उपासन्त । सुवर्णधारिणा शोभनो ब्राह्मणवर्णस्तस्य धारिणा धर्त्रा द्विजातिना कपिलेन महतश्चूर्णितान्पश्य । यैर्हि पूर्णो महोदधिरिति क.थ.पाठः ॥ ९ ॥ अग्निं ब्राह्मणमित्यन्वयः ॥ १३ ॥ अनुभूत प्रतिभूतम् । अनुपालक पोषकम् ॥ १४ ॥ ननु ब्रह्माण्डे जातत्वात्कथमण्डमजनयदित्यत्राह अण्डेति ॥ १६ ॥ अण्डजत्ववचन त्वस्य प्रकारान्तरेणेत्याह स्मृतमिति । द्रष्टव्य नैतदेव हीति झ. पाठः ॥ १७ ॥ अष्टपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५८ ॥

अङ्गो नाम नृपो राजंस्ततश्चिन्तां मही ययौ ॥ १
धारिणीं सर्वभूतानामयं प्राप्य वरो नृपः ।
कथमिच्छति मां दातुं द्विजेभ्यो ब्रह्मणः सुताम् २
साहं त्यक्त्वा गमिष्यामि भूमित्वं ब्रह्मणः पदम् ।
अयं सराष्ट्रो नृपतिर्माभूदिति ततोऽगमत् ॥ ३
ततस्तां कश्यपो दृष्ट्वा व्रजन्तीं पृथिवीं तदा ।
प्रविवेश महीं सद्यो युक्तात्मा सुसमाहितः ॥ ४
ऋद्धा सा सर्वतो जज्ञे तृणौषधिसमन्विता ।
धर्मोत्तरा नष्टभया भूमिरासीत्ततो नृप ॥ ५
एवं वर्षसहस्राणि दिव्यानि विपुलव्रतः ।
त्रिंशतं कश्यपो राजन्भूमिरासीदतन्द्रितः ॥ ६
अथागम्य महाराजन्नमस्कृत्य च कश्यपम् ।
पृथिवी काश्यपी जज्ञे सुता तस्य महात्मनः ॥ ७
एष राजन्नीदृशो वै ब्राह्मणः कश्यपोऽभवत् ।
अन्यं प्रब्रूहि वा त्वं च कश्यपात्क्षत्रियं वरम् ॥ ८
तूष्णीं बभूव नृपतिः पवनस्त्वब्रवीद्वचः ।
शृणु राजन्नुचथ्यस्य जातस्याङ्गिरसे कुले ॥ ९
भद्रा सोमस्य दुहिता रूपेण परमा मता ।
तस्यास्तुल्यं पतिं सोम उचथ्यं समपश्यत ॥ १०
सा च तीव्रं तपस्तेपे महाभागा यशस्विनी ।
उचथ्यं तु महाभागं तत्कृते वरयत्तदा ॥ ११
तत आहूय चोचथ्यं ददामीति यशस्विनीम् ।
भार्यार्थे स च जग्राह विधिवद्भूरिदक्षिणः ॥ १२
तां त्वकामयत श्रीमान्वरुणः पूर्वमेव ह ।
स चागम्य वनप्रस्थं यमुनायां जहार ताम् ॥ १३
जलेश्वरस्तु हृत्वा तामनयत्स्वं पुरं प्रति ।
परमाद्भुतसंकाशं षट्सहस्रशतह्रदम् ॥ १४
न हि रम्यतरं किंचित्तस्मादन्यत्पुरोत्तमम् ।
प्रासादैरप्सरोभिश्च दिव्यैः कामैश्च शोभितम् १५
तत्र देवस्तया सार्धं रेमे राजञ्जलेश्वरः ।

तदाख्यातमुचथ्याय ततः पत्न्यवमर्दनम् ॥ १६
तच्छ्रुत्वा नारदात्सर्वमुचथ्यो नारदं तदा ।
प्रोवाच गच्छ ब्रूहि त्वं वरुणं परुषं वचः ॥ १७
मद्वाक्यान्मुञ्च मे भार्यां कस्मात्तां हृतवानसि ।
लोकपालोसि लोकानां न लोकस्य विलोपकः १८
सोमेन दत्ता भार्या मे त्वया चापहृताद्य वै ।
इत्युक्तो वचनात्तस्य नारदेन जलेश्वरः ॥ १९
मुञ्च भार्यामुचथ्यस्य कस्मात्त्वं हृतवानसि ।
इति श्रुत्वा वचस्तस्य सोऽथ तं वरुणोऽब्रवीत् ॥ २०
ममैषा सुप्रिया भार्या नैनामुत्स्रष्टुमुत्सहे ।
इत्युक्तो वरुणेनाथ नारदः प्राप्य तं मुनिम् ।
उचथ्यमब्रवीद्वाक्यं नातिहृष्टमना इव ॥ २१
गले गृहीत्वा क्षिप्तोसि वरुणेन महामुने ।
न प्रयच्छति ते भार्यां यत्ते कार्यं कुरुष्व तत् ॥ २२
नारदस्य वचः श्रुत्वा क्रुद्धः प्राज्वलदङ्गिराः ।
अपिबत्तेजसा वारि विष्टभ्य सुमहातपाः ॥ २३
पीयमाने तु सर्वस्मिंस्तोयेऽपि सलिलेश्वरः ।
सुहृद्भिः क्षिप्यमाणोऽपि नैवामुञ्चत तां तदा ॥ २४
ततः क्रुद्धोऽब्रवीद्भूमिमुचथ्यो ब्राह्मणोत्तमः ।
दर्शय स्वस्थलं भद्रे षट्सहस्रशतह्रदम् ॥ २५
ततस्तदीरणं जातं समुद्रस्यावसर्पतः ।
तस्माद्देशान्नदीं चैव प्रोवाचासौ द्विजोत्तमः ॥ २६
अदृश्या गच्छ भीरु त्वं सरस्वति मरुन्प्रति ।
अपुण्यभूयो भवतु देशस्त्यक्तस्त्वया शुभे ॥ २७
ततश्चूर्णीकृते देशे भद्रामादाय वारिपः ।
अददाच्छरणं गत्वा भार्यामाङ्गिरसाय वै ॥ २८
प्रतिगृह्य तु तां भार्यामुचथ्यः सुमनाऽभवत् ।
मुमोच च जगद्दुःखान्मरुतश्चैव निर्मलाः ॥ २९
ततः स लब्ध्वा तां भार्यां वरुणं प्राह धर्मवित् ।
उचथ्यः सुमहातेजा यत्तच्छृणु नराधिप ॥ ३०

---

भूमित्वं त्यक्त्वा ब्रह्मणः पदं गमिष्यामीति संबन्धः ॥ ३ ॥ उचथ्यार्थे तु चार्वङ्गी परं नियममास्थिता । इति झ. पाठः ॥११॥ सोमः ददामीत्युक्त्वा ददावित्यध्याहारेण योजना। ददावत्रिर्यशस्विनीमिति झ. पाठः । अत्रिः सोमपिता ॥ १२ ॥ देवो वरुणः । तया भद्रया ॥ १६ ॥ दर्शयस्व बिलं भद्रे इति क. पाठः ॥ २५ ॥ ईरिणं ऊषरप्रदेशः । समुद्रश्चापसर्पतेति क. पाठः ॥ २६ ॥ अपुण्य एष भवत्विति झ. पाठः ॥ २७ ॥ दुःखाद्वरुणं चैव हैहयेति झ. पाठः । जगद्वरुणं च दुःखान्मुमोच मोचयामास ॥ २९ ॥ एकोनषष्ट्यधिकद्विशततमोऽध्यायः ॥ २५९ ॥

मयैषा तपसा प्राप्ता क्रोशतस्ते जलाधिप ।
इत्युक्त्वा तामुपादाय स्वमेव भवनं ययौ ॥ ३१
एष राजन्नीदृशो वै उचथ्यो ब्राह्मणर्षभः ।
ब्रवीमि हान्यं ब्रूहि त्वमुचथ्यात्क्षत्रियं वरम् ॥३२

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि एकोनषष्ट्यधिकद्विशततमोऽध्यायः ॥ २५९ ॥

## षष्ट्यधिकद्विशततमोऽध्यायः ॥ २६० ॥

वायुना हैहयार्जुनं प्रति स्वतेजसा दैत्यदाहनरूपागस्त्यवसिष्ठचरित्रकीर्तनम् ॥ १ ॥

भीष्म उवाच ।
इत्युक्तः स नृपस्तूष्णीमभूद्वायुस्ततोऽब्रवीत् ।
शृणु राजन्नगस्त्यस्य माहात्म्यं ब्राह्मणस्य ह ॥ १
असुरैर्निर्जिता देवा निरुत्साहाश्च ते कृताः ।
यज्ञाश्चैषां हृताः सर्वे पितॄणां च स्वधास्तथा ॥ २
कर्मेज्या मानवानां च दानवैर्हैहयर्षभ ।
भ्रष्टैश्वर्यास्ततो देवाश्चेरुः पृथ्वीमिति श्रुतिः ॥ ३
ततः कदाचित्ते राजन्दीप्तमादित्यवर्चसम् ।
ददृशुस्तेजसा युक्तमगस्त्यं विपुलव्रतम् ॥ ४
अभिवाद्य तु तं देवाः पृष्ट्वा कुशलमेव च ।
इदमूचुर्महात्मानं वाक्यं काले जनाधिप ॥ ५
दानवैर्युधि भग्नाः स्म तथैश्वर्याच्च भ्रंशिताः ।
तदस्मान्नो भयात्तीव्रात्त्राहि त्वं मुनिपुङ्गव ॥ ६
इत्युक्तः स तदा देवैरगस्त्यः कुपितोऽभवत् ।
प्रजज्वाल च तेजस्वी कालाग्निरिव संक्षये ॥ ७
तेन दीप्तांशुजालेन निर्दग्धा दानवास्तदा ।
अन्तरिक्षान्महाराज निपेतुस्ते सहस्रशः ॥ ८
दह्यमानास्तु ते दैत्यास्तस्यागस्त्यस्य तेजसा ।
उभौ लोकौ परित्यज्य गताः काष्ठां तु दक्षिणाम् ९
बलिस्तु यजते यज्ञमश्वमेधं महीं गतः ।
येन्येऽधस्था महीस्थाश्च तेन दग्धा महासुराः १०
त्यक्तलोकाः पुनः प्राप्ताः सुरैः शान्तभयैर्नृप ।
अथैनमब्रुवन्देवा भूमिष्ठानसुराञ्जहि ॥ ११
इत्युक्तः प्राह देवान्स न शक्तोसि महीगतान् ।
दग्धुं तपो हि क्षीयेन्मे न धक्ष्यामीति पार्थिव १२
एवं दग्धा भगवता दानवाः स्वेन तेजसा ।
अगस्त्येन तदा राजंस्तपसा भावितात्मना ॥१३
ईदृशश्चाप्यगस्त्यो हि कथितस्ते मयाऽनघ ।
ब्रवीम्यन्यं ब्रूहि वा त्वमगस्त्यात्क्षत्रियं वरम् १४
भीष्म उवाच ।
इत्युक्तः स तदा तूष्णीमभूद्वायुस्ततोऽब्रवीत् ।
शृणु राजन्वसिष्ठस्य मुख्यं कर्म यशस्विनः ॥ १५
'वैखानसविधानेन गङ्गातीरं समाश्रिताः ।'
आदित्याः सत्रमासन्त सरो वैखानसं प्रति ।
वसिष्ठं मनसा गत्वा ज्ञात्वा तत्वस्य गोचरम् १६
यजमानांस्तु तान्दृष्ट्वा सर्वान्दीक्षानुकर्शितान् ।
हन्तुमैच्छन्त शैलाभा बलिनो नाम दानवाः १७
अदूरात्तु ततस्तेषां ब्रह्मदत्तवरं सरः ।
हता हता वै तत्रैते जीवन्त्याप्लुत्य दानवाः ॥१८
ते प्रगृह्य महाघोरान्पर्वतान्परिघान्द्रुमान् ।
विक्षोभयन्तः सलिलमुत्थितं शतयोजनम् ॥ १९
अभ्यद्रवन्त देवांस्ते सहस्राणि दशैव हि ।
ततस्तैरर्दिता देवाः शरणं वासवं ययुः ॥ २०
स च तैर्व्यथितः शक्रो वसिष्ठं शरणं ययौ ।
ततोऽभयं ददौ तेभ्यो वसिष्ठो भगवानृषिः ॥ २१
तदा तान्दुःखितान्ज्ञात्वा आनृशंस्यपरो मुनिः ।
अयत्नेनादहत्सर्वाञ्ज्वलता स्वेन तेजसा ॥ २२
कैलासं प्रस्थितां चैव नदीं गङ्गां महातपाः ।
आनयत्तत्सरो दिव्यं तया भिन्नं च तत्सरः ॥२३
सरो भिन्नं तया नद्या सरयूः सा ततोऽभवत् ।
हताश्च बलिनो यत्र स देशो बलिनोऽभवत् ॥ २४
एवं सेन्द्रा वसिष्ठेन रक्षितास्त्रिदिवौकसः ।
ब्रह्मदत्तवराश्चैव हता दैत्या महात्मना ॥ २५

एतत्कर्म वसिष्ठस्य कथितं हि मयाऽनघ । ब्रवीम्यन्यं ब्रूहि वा त्वं वसिष्ठात्क्षत्रियं वरम् ॥२

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि षष्ट्यधिकद्विशततमोऽध्यायः ॥ २६० ॥

## एकषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६१ ॥

वायुना हैहयार्जुनंप्रति देवासुरयुद्धे राहुणा चन्द्रसूर्यपराभवेनान्धकारप्राप्तौ देवानां प्रार्थनया चन्द्रीभूय तमोनिरसनरूपात्रिमहिमोक्तिः ॥ १ ॥ तथा सवज्रेन्द्रहस्तस्तम्भनेनाश्विनोः सोमपानदापनरूपच्यवनमहिमोक्तिः ॥ २ ॥

भीष्म उवाच ।
इत्युक्तस्त्वर्जुनस्तूष्णीमभूद्वायुस्तमब्रवीत् ।
शृणु मे हैहयश्रेष्ठ कर्मात्रेः सुमहात्मनः ॥ १
घोरे तमस्ययुध्यन्त सहिता देवदानवाः ।
अविध्यत शरैस्तत्र स्वर्भानुः सोमभास्करौ ॥ २
अथ ते तमसा ग्रस्ता निहन्यन्ते स्म दानवैः ।
देवा नृपतिशार्दूल सहैव बलिभिस्तदा ॥ ३
असुरैर्वध्यमानास्ते क्षीणप्राणा दिवौकसः ।
अपश्यन्त तपस्यन्तमत्रिं विप्रं तपोधनम् ॥ ४
अथैनमब्रुवन्देवाः शान्तक्रोधं जितेन्द्रियम् ।
असुरैरिषुभिर्विद्धौ चन्द्रादित्याविमावुभौ ॥ ५
वयं वध्यामहे चापि शत्रुभिस्तमसा वृते ।
नाधिगच्छाम शान्तिं च भयात्त्रायस्व नः प्रभो ॥६
अत्रिरुवाच ।
कथं रक्षामि भवतस्तेऽब्रुवंश्चन्द्रमा भव ।
तिमिरघ्नश्च सविता दस्युहन्ता च नो भव ॥ ७
एवमुक्तस्तदात्रिर्वै तमोनुदभवच्छशी ।
अपश्यत्सौम्यभावाच्च सोमवत्प्रियदर्शनः ॥ ८
दृष्ट्वा नातिप्रभं सोमं तथा सूर्यं च पार्थिव ।
प्रकाशमकरोदत्रिस्तपसा स्वेन संयुगे ॥ ९
जगद्वितिमिरं चापि प्रदीप्तमकरोत्तदा ।
व्यजयच्छत्रुसङ्घांश्च देवानां स्वेन तेजसा ॥ १०
अत्रिणा दह्यमानांस्तान्दृष्ट्वा देवा महासुरान् ।
पराक्रमैस्तेऽपि तदा व्यघ्नन्नत्रिसुरक्षिताः ।
उद्भासितश्च सविता देवास्त्राता हतासुराः ॥ ११
अत्रिणा त्वथ सोमत्वं कृतमुत्तमतेजसा ।
द्विजेनाग्निद्वितीयेन जपता चर्मवाससा ॥ १२
फलभक्षेण राजर्षे पश्य कर्मात्रिणा कृतम् ।
तस्यापि विस्तरेणोक्तं कर्मात्रेः सुमहात्मनः ।
ब्रवीम्यन्यं ब्रूहि वा त्वमत्रितः क्षत्रियं वरम् ॥१३
इत्युक्तस्त्वर्जुनस्तूष्णीमभूद्वायुस्ततोऽब्रवीत् ।
शृणु राजन्महत्कर्म च्यवनस्य महात्मनः ॥ १४
अश्विनोः प्रतिसंश्रुत्य च्यवनः पाकशासनम् ।
प्रोवाच सहितो देवैः सोमपावश्विनौ कुरु ॥ १५
इन्द्र उवाच ।
अस्माभिर्निन्दितावेतौ भवेतां सोमपौ कथम् ।
देवैर्न संमितावेतौ तस्मान्मैवं वदस्व नः ॥ १६
अश्विभ्यां सह नेच्छामः सोमं पातुं महाव्रत ।
यदन्यद्वक्ष्यसे विप्र तत्करिष्याम ते वचः ॥ १७
च्यवन उवाच ।
पिबेतामश्विनौ सोमं भवद्भिः सहिताविमौ ।
उभावेतावपि सुरौ सूर्यपुत्रौ सुरेश्वर ॥ १८
क्रियतां मद्वचो देवा यथा वै समुदाहृतम् ।
एतद्वः कुर्वतां श्रेयो भवेन्नैतदकुर्वताम् ॥ १९
इन्द्र उवाच ।
अश्विभ्यां सह सोमं वै न पास्यामि द्विजोत्तम ।
पिबन्त्वन्ये यथाकामं नाहं पातुमिहोत्सहे ॥ २०
च्यवन उवाच ।
न चेत्करिष्यसि वचो मयोक्तं बलसूदन ।
मया प्रमथितः सद्यः सोमं पास्यसि वै मखे ॥२१
वायुरुवाच ।
ततः कर्म समारब्धं हिताय सहसाऽश्विनोः ।
च्यवनेन ततो मन्त्रैरभिभूताः सुराऽभवन् ॥ २२
तत्तु कर्म समारब्धं दृष्ट्वेन्द्रः क्रोधमूर्च्छितः ।
उद्यम्य विपुलं शैलं च्यवनं समुपाद्रवत् ॥ २३
तथा वज्रेण भगवानमर्षाकुललोचनः ।

तमापतन्तं दृष्ट्वैव च्यवनस्तपसाऽन्वितः ॥ २४
अद्भिः सिक्त्वाऽस्तम्भयत्तं सवज्रं सहपर्वतम् ।
अथेन्द्रस्य महाघोरं सोऽसृजच्छत्रुमेव हि ॥ २५
मदं नामाहुतिमयं व्यादितास्यं महामुनिः ।
तस्य दन्तसहस्रं तु बभूव शतयोजनम् ॥ २६
द्वियोजनशतास्तस्य दंष्ट्राः परमदारुणाः ।
हनुस्तस्याभवद्भूमावास्यं चास्यास्पृशद्दिवम् ॥ २७
जिह्वामूले स्थितास्तस्य सर्वे देवाः सवासवाः ।
तिमेरास्यमनुप्राप्ता यथा मत्स्या महार्णवे ॥ २८
ते संमन्त्र्य ततो देवा मदस्यास्य समीपगाः ।
अब्रुवन्सहिताः शक्रं प्रणमास्मै द्विजातये ॥ २९
अश्विभ्यां सह सोमं च पिबाम विगतज्वराः ।
ततः स प्रणतः शक्रश्चकार च्यवनस्य तत् ॥ ३०
च्यवनः कृतवानेतावश्विनौ सोमपायिनौ ।
ततः प्रत्याहरत्कर्म मदं च व्यभजन्मुनिः ॥ ३१
अक्षेषु मृगयायां च पाने स्त्रीषु च वीर्यवान् ।
एतैर्दोषैर्नरा राजन्क्षयं यान्ति न संशयः ॥ ३२
तस्मादेतान्नरो नित्यं दूरतः परिवर्जयेत् ॥ ३३
एतत्ते च्यवनस्यापि कर्म राजन्प्रकीर्तितम् ।
ब्रवीम्यन्यं ब्रूहि वा त्वं क्षत्रियं ब्राह्मणाद्वरम् ॥ ३४

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि एकषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६१ ॥

---

## द्विषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६२ ॥

वायुना हैहयंप्रति देवानां प्रार्थनया अग्निसर्जनेन कपहननरूपब्राह्मणमहिमोक्तिः ॥ १ ॥

भीष्म उवाच ।
तूष्णीमासीदर्जुनस्तु पवनस्त्वब्रवीत्पुनः ।
शृणु मे ब्राह्मणेष्वेव मुख्यं कर्म जनाधिप ॥ १
मदस्यास्यमनुप्राप्ता यदा सेन्द्रा दिवौकसः ।
तदैव च्यवनेन द्यौर्हृता तेषां वसुंधरा ॥ २
उभौ लोकौ हृतौ मत्वा ते देवा दुःखिताऽभवन् ।
शोकार्ताश्च महात्मानं ब्रह्माणं शरणं ययुः ॥ ३
देवा ऊचुः ।
मदास्यव्यतिषिक्तानामस्माकं लोकपूजित ।
च्यवनेन हृता भूमिः कपैश्चैव दिवं प्रभो ॥ ४
ब्रह्मोवाच ।
गच्छध्वं शरणं विप्रानाशु सेन्द्रा दिवौकसः ।
प्रसाद्य तानुभौ लोकाववाप्स्यथ यथापुरम् ॥ ५
ते ययुः शरणं विप्रानूचुस्ते काञ्जयामहे ।
इत्युक्तास्ते द्विजान्प्राहुर्जयतेह कपानिति ॥ ६
भूगतान्हि विजेतारो वयमित्यब्रुवन्द्विजाः ।
ततः कर्म समारब्धं ब्राह्मणैः कपनाशनम् ॥ ७
तच्छ्रुत्वा प्रेषितो दूतो ब्राह्मणेभ्यो धनी कपैः ।
स च तान्ब्राह्मणानाह धनी कपवचो यथा ॥ ८
भवद्भिः सदृशाः सर्वे कपाः किमिह वर्तते ।
सर्वे वेदविदः प्राज्ञाः सर्वे च क्रतुयाजिनः ॥ ९
सर्वे सत्यव्रताश्चैव सर्वे तुल्या महर्षिभिः ।
श्रीश्चैव रमते तेषु धारयन्ति श्रियं च ते ॥ १०
वृथा दारान्न गच्छन्ति वृथा मांसं न भुञ्जते ।
दीप्तमग्निं जुह्वते च गुरूणां वचने स्थिताः ॥ ११
सर्वे च नियतात्मानो बालानां संविभागिनः ।
उपेत्य शनकैर्यान्ति न सेवन्ति रजस्वलाम् ।
स्वर्गतिं चैव गच्छन्ति तथैव शुभकर्मिणः ॥ १२
अभुक्तवत्सु नाश्नन्ति गर्भिणीवृद्धकादिषु ।
पूर्वाह्णेषु न दीव्यन्ति दिवा चैव न शेरते ॥ १३
एतैश्चान्यैश्च बहुभिर्गुणैर्युक्तान्कथं कपान् ।
विजेष्यथ निवर्तध्वं निवृत्तानां सुखं हि वः ॥ १४
ब्राह्मणा ऊचुः ।
कपान्वयं विजेष्यामो ये देवास्ते वयं स्मृताः ।
तस्माद्वध्याः कपाऽस्माकं धनिन्याहि यथागतम् ॥ १५
धनी गत्वा कपानाह न वो विप्राः प्रियंकराः ।
गृहीत्वाऽस्त्राण्यतो विप्रान्कपाः सर्वे समाद्रवन् ॥ १६
समुदग्रध्वजान्दृष्ट्वा कपान्सर्वे द्विजातयः ।

कपैः सुरविशेषैः । दिव द्यौः ॥ ४ ॥ धनीनाम दूतः ॥ ८ ॥

द्विषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६२ ॥

व्यसृजन्ज्वलितानग्नीन्कपानां प्राणनाशनान्॥१७
ब्रह्मसृष्टा हव्यभुजः कपान्हत्वा सनातनाः ।
नभसीव यथाऽभ्राणि व्यराजन्त नराधिप ॥ १८
हत्वा वै दानवान्देवाः सर्वे संभूय संयुगे ।
ते नाभ्यजानन्हि तदा ब्राह्मणैर्निहतान्कपान्॥१९
अथागम्य महातेजा नारदोऽकथयद्विभो ।
यथा हता महाभागैस्तेजसा ब्राह्मणैः कपाः॥ २०
नारदस्य वचः श्रुत्वा प्रीताः सर्वे दिवौकसः
प्रशशंसुर्द्विजांश्चापि ब्राह्मणांश्च यशस्विनः ॥ २१
तेषां तेजस्तथा वीर्यं देवानां ववृधे ततः ।
अवाप्नुवंश्चामरत्वं त्रिषु लोकेषु पूजितम् ॥ २२
इत्युक्तवचनं वायुमर्जुनः प्रत्युवाच ह ।
प्रतिपूज्य महाबाहो यत्तच्छृणु नराधिप ॥ २३
अर्जुन उवाच ।
जीवाम्यहं ब्राह्मणार्थं सर्वथा सततं प्रभो ।
ब्रह्मण्यो ब्राह्मणेभ्यश्च प्रणमामि च नित्यशः॥२४
दत्तात्रेयप्रसादाच्च मया प्राप्तमिदं बलम् ।
लोके च परमा कीर्तिर्धर्मश्चाचरितो महान्॥ २५
अहो ब्राह्मणकर्माणि मयि मारुत तत्त्वतः ।
त्वया प्रोक्तानि कार्त्स्न्येन श्रुतानि प्रयतेन च॥२६
वायुरुवाच ।
ब्राह्मणान्क्षात्रधर्मेण पालयस्वेन्द्रियाणि च ।
विप्रेभ्यस्ते भयं घोरं तत्तु कालाद्भविष्यति॥ २७

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि द्विषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६२ ॥

## त्रिषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६३ ॥

युधिष्ठिरेण ब्राह्मणमहिमानं पृष्टेन भीष्मेण तंप्रति स्वस्य कुण्ठितेन्द्रियादिशक्तिकतया मुमूर्षानिवेदनपूर्वकं कृष्णात्तदवगमनचोदना ॥ १ ॥ तथा कृष्णस्य श्रीनारायणात्मकत्वनिवेदनेन तन्महिमानुवर्णनम् ॥ २ ॥

उवाच ।
ब्राह्मणानर्चसे राजन्सततं संशितव्रतान् ।
कं तु धर्मोदयं दृष्ट्वा तानर्चसि जनाधिप ॥
कां वा ब्राह्मणपूजायां व्युष्टिं दृष्ट्वा महाव्रत ।
तानर्चसि महाबाहो सर्वमेतद्वदस्व मे ॥
भीष्म उवाच ।
एष ते केशवः सर्वमाख्यास्यति महामतिः ।
व्युष्टिं ब्राह्मणपूजायां दृष्ट्वा व्युष्टिं महाव्रत ॥ २
बलं श्रोत्रे वाङ्मनश्चक्षुषी च
ज्ञानं तथा नविशुद्धं ममाद्य ।
देहन्यासो नातिचिरान्मतो मे
न चातितूर्णं सविताऽद्य याति ॥
उक्ता धर्मा ये पुराणे महान्तो
राजन्विप्राणां क्षत्रियाणां विशां च ।
येये शूद्राणां धर्ममुपासते ते
तानेव कृष्णादुपशिक्षस्व पार्थ ॥
अहं ह्येनं वेद्मि तत्त्वेन कृष्णं
योऽयं हि यच्चास्य बलं पुराणम् ।
अमेयात्मा केशवः कौरवेन्द्र
सोयं धर्मं वक्ष्यति सर्वमेतत् ॥ ६
कृष्णः पृथ्वीमसृजत्खं दिवं च
कृष्णस्य देहान्मेदिनी संबभूव ।
वराहोऽयं भीमबलः पुराणः
स पर्वतान्व्यसृजद्वै दिशश्च ॥ ७
अस्माद्वायुश्चान्तरिक्षं दिवं च
दिशश्चतस्रो विदिशश्चतस्रः ।
सृष्टिस्तथैवेयमनुप्रसूता
स निर्ममे विश्वमिदं पुराणः ॥
अस्य नाभ्यां पुष्करं संप्रसूतं
यत्रोत्पन्नः स्वयमेवामितौजाः ।
येनाच्छिन्नं तत्तमः पार्थ घोरं
यत्र तिष्ठन्त्यर्णवास्तच्छयानाः ॥

व्युष्टि फलम् ॥ २ ॥ दृष्टव्युष्टिरिति झ. पाठः ॥ ३ ॥
न चेति दु.खितस्य दिन महद्भवतीत्यर्थः ॥ ४ ॥

कृते युगे धर्म आसीत्समग्र-
त्रेताकाले ज्ञानमनुप्रपन्नः ।
बलं त्वासीद्द्वापरे पार्थ कृष्णः
कलौ त्वधर्मः क्षितिमेवाजगाम ॥ १०
स एव पूर्वं निजघान दैत्या-
न्स एव देवश्च बभूव सम्राट् ।
स भूतानां भावनो भूतभव्यः
स विश्वस्यास्य जगतश्चाभिगोप्ता ॥ ११
यदा धर्मो ग्लाति वंशे सुराणां
तदा कृष्णो जायते मानुषेषु ।
धर्मे स्थित्वा स तु वै भावितात्मा
परांश्च लोकानपरांश्च पाति ॥ १२
त्याज्यांस्त्यक्त्वा चासुराणां वधेन
कार्याकार्ये कारणं चैव पाति ।
कृतं करिष्यत्क्रियते च देवो
राहुं सोमं विद्धि च शक्रमेनम् ॥ १३
स विश्वकर्मा स हि विश्वरूपः
स विश्वभुग्विश्वसृग्विश्वजिच्च ।
स शूलभृच्छोणितभृत्कराल-
स्तं कर्मभिर्विदितं वै स्तुवन्ति ॥ १४
तं गन्धर्वाणामप्सरसां च नित्य-
मुपतिष्ठन्ते विबुधानां शतानि ।
तं राक्षसाश्च परिसंवदन्ति
राजन्यानां स विजिगीषुरेकः ॥ १५
तमध्वरे शंसितारः स्तुवन्ति
रथन्तरे सामगाश्च स्तुवन्ति ।
तं ब्राह्मणा ब्रह्ममन्त्रैः स्तुवन्ति
तस्मै हविरध्वर्यवः कल्पयन्ति ॥ १६
स पौराणीं ब्रह्मगुहां प्रविष्टो
महीसत्रं भारताग्रे ददर्श ।
स चैव गामुद्दधाराग्र्यकर्मा
विक्षोभ्य दैत्यानुरगान्दानवांश्च ॥ १७
तं घोषार्थे गीर्भिरिन्द्राः स्तुवन्ति
स चापीशो भारतैकः पशूनाम् ।
तस्य भक्षान्विविधान्वेदयन्ति
तमेवाजौ वाहनं वेदयन्ति ॥ १८
तस्यान्तरिक्षं पृथिवी दिवं च
सर्वं वशे तिष्ठति शाश्वतस्य ।
स कुम्भे रेतः ससृजे सुराणां
यत्रोत्पन्नमृषिमाहुर्वसिष्ठम् ॥ १९
स मातरिश्वा विभुरश्ववाजी
स रश्मिवान्सविता चादिदेवः ।
तेनासुरा विजिताः सर्व एव
तद्विक्रान्तैर्विजितानीह त्रीणि ॥ २०
स देवानां मानुषाणां पितॄणां
तमेवाहुर्यज्ञविदां वितानम् ।
स एव कालं विभजन्नुदेति
तस्योत्तरं दक्षिणं चायने द्वे ॥ २१
तस्यैवोर्ध्वं तिर्यगधश्चरन्ति
गभस्तयो मेदिनीं भासयन्तः ।
तं ब्राह्मणा वेदविदो जुषन्ति
तस्यादित्यो गामुपयुज्य भाति ॥ २२
स मासिमास्यध्वरकृद्विधत्ते
तमध्वरे वेदविदः पठन्ति ।
स एवोक्तश्चक्रमिदं त्रिनाभि
सप्ताश्वयुक्तं वहते वै त्रिधामा ॥ २३
'हिरण्मयः सप्तगूढः ससंवि-
चतुर्बाहुः पन्नगः पद्मनाभः ।'
महातेजाः सर्वगः सर्वसिंहः
कृष्णो लोकान्धारयते यथैकः ।

कलौ त्वधर्म एव बलवानिति भावः ॥ १० ॥ ग्लाति ग्लायति ॥ १२ ॥ एनं राहुं सोमं शक्रं च विद्धि ॥ १३ ॥ शोणितभृच्छरीरी ॥ १४ ॥ महीसत्र पृथिव्याश्छादन मज्जनमिति यावत् ॥ १७ ॥ घोषार्थे गोवर्द्धनोद्धरणकाले। पशूनां गवा जीवाना च। वाहन जयप्रापकम् ॥ १८ ॥ सुराणां मित्रावरुणयो रेतः कुम्भे ससृजे ॥ १९ ॥ विक्रान्तैः पादविक्षेपैः। त्रीणि भुवनानि ॥ २० ॥ देवानां आत्मेति शेषः। तमेवाहुर्यज्ञविदः पुराणमिति क. थ. पाठः ॥ २१ ॥ जुषन्ति सेवन्ते ॥ २२ ॥ विधत्तेऽध्वरमित्यर्थात्। त्रिनाभि शीतोष्णवृष्टिकालगर्भम्। चक्रं संवत्सरम्। त्रिधामेति वर्षवातोष्णप्रका-

हंसं तमोघ्नं च तमेव वीर
कृष्णं सदा पार्थ कर्तारमेहि ॥ २४
स एकदा कक्षगतो महात्मा
तुष्टो विभुः खाण्डवे धूमकेतुः ।
स राक्षसानुरगांश्चावजित्य
सर्वत्रगः सर्वमग्नौ जुहोति ॥ २५
स एव पार्थाय श्वेतमश्वं प्रायच्छ-
त्स एवाश्वानथ सर्वांश्चकार ।
सबन्धुरस्तस्य रथस्त्रिचक्र-
स्त्रिवृच्छिराश्चतुरश्वस्त्रिनाभिः ॥ २६
स विहायो व्यदधात्पञ्चनाभिः
स निर्ममे गां दिवमन्तरिक्षम् ।
सोऽरण्यानि व्यसृजत्पर्वतांश्च
हृषीकेशोऽमितदीप्ताग्नितेजाः ॥ २७
अलङ्घयद्वै सरितो जिघांस-
न्शक्रं वज्रं प्रहरन्तं निरास ।
स महेन्द्रः स्तूयते वै महाध्वरे
विप्रैरेको ऋक्सहस्रैः पुराणैः ॥ २८
दुर्वासा वै तेन नान्येन शक्यो
गृहे राजन्वासयितुं महौजाः ।
तमेवाहुर्ऋषिमेकं पुराणं
स विश्वकृद्विदधात्यात्मभावान् ॥ २९
वेदांश्च यो वेदयतेऽधिदेवो
विधींश्च यश्चाश्रयते पुराणान् ।
कामे वेदे लौकिके यत्फलं च
विष्वक्सेनः सर्वमेतत्प्रतीहि ॥ ३०
ज्योतींषि शुक्लानि हि सर्वलोके
त्रयो लोका लोकपालास्त्रयश्च ।
त्रयोऽग्नयो व्याहृतयश्च तिस्रः
सर्वे देवा देवकीपुत्र एव ॥ ३१
स वत्सरः स ऋतुः सोऽर्धमासः
सोऽहोरात्रः स कला वै स काष्ठाः ।
मात्रा मुहूर्ताश्च लवाः क्षणाश्च
विष्वक्सेनः सर्वमेतन्प्रतीहि ॥ ३२
चन्द्रादित्यौ ग्रहनक्षत्रताराः
सर्वाणि दर्शान्यथ पौर्णमासम् ।
नक्षत्रयोगा ऋतवश्च पार्थ
विष्वक्सेनात्सर्वमेतत्प्रसूतम् ॥ ३३
रुद्रादित्या वसवोऽथाश्विनौ च
साध्याश्च विश्वे मरुतां गणाश्च ।
प्रजापतिर्देवमाताऽदितिश्च
सर्वे कृष्णादृषयश्चैव सप्त ॥ ३४
वायुर्भूत्वा विक्षिपते च विश्व-
मग्निर्भूत्वा दहते विश्वरूपः ।
आपो भूत्वा मज्जयते च सर्वं
ब्रह्मा भूत्वा सृजते विश्वसङ्घान् ॥ ३५
वेद्यं च यद्वेदयते च वेद्यं
विधिश्च यश्चाश्रयते विधेयम् ।
धर्मे च वेदे च बले च सर्वं
चराचरं केशवं त्वं प्रतीहि ॥ ३६
ज्योतिर्भूतः परमोऽसौ पुरस्ता-
त्प्रकाशते यत्प्रभया विश्वरूपः ।
अपः सृष्ट्वा सर्वभूतात्मयोनिः
पुराऽकरोत्सर्वमेवाथ विश्वम् ॥ ३७
ऋतूनुत्पातान्विविधान्यद्भुतानि
मेघान्विद्युत्सर्वमैरावतं च ।
सर्वं कृष्णात्स्थावरं जङ्गमं च
विश्वात्मानं विष्णुमेनं प्रतीहि ॥ ३८
विश्वावासं निर्गुणं वासुदेवं
संकर्षणं जीवभूतं वदन्ति ।
ततः प्रद्युम्नमनिरुद्धं चतुर्थ-
माज्ञापयत्यात्मयोनिर्महात्मा ॥ ३९
स पञ्चधा पञ्चगुणोपपन्नं
संचोदयन्विश्वमिदं सिसृक्षुः ।

---

रम् ॥ २३ ॥ हंस सूर्यम् । प्राश्नन्नश्वश्च स एव धीरः कृष्ण सदा पार्थेति क. थ. पाठः ॥ २४ ॥ त्रिबन्धुरस्तास्येति क. थ. पाठः ॥२६॥ पञ्चनाभि- पञ्चभूताना नाभिराश्रय इत्यर्थः ॥२७॥ निरास पराभूतवान्॥२८॥ विधीनग्निहोत्रादीन् ॥३०॥ वेद्यं वेदप्रतिथ । वेद्य ज्ञेयम् ॥ ३६ ॥ नक्षत्रमासान्विविध कार्यजातं विद्युत्सघैरापतन्तश्च मेघाः । सर्वं कृष्णादिति क. थ. पाठः ॥ ३८॥

ततश्चकारावनिमारुतौ च
खं ज्योतिरम्भश्च तथैव पार्थ ॥ ४०
स स्थावरं जङ्गमं चैवमेत-
च्चतुर्विधं लोकमिमं च कृत्वा ।
ततो भूमिं व्यदधात्पञ्चबीजां
द्यावापृथिव्यग्निरथाम्बुवायू ॥ ४१
तेन विश्वं कृतमेतद्धि राज-
न्स जीवयत्यात्मनैवात्मयोनिः ।
ततो देवानसुरान्मानवांश्च
लोकानृषींश्चापि पितॄन्प्रजाश्च ।
समासेन विविधान्पाति लोका-
न्सर्वान्सदा भूतपतिः सिसृक्षुः ॥ ४२
शुभाशुभं स्थावरं जङ्गमं च
विष्वक्सेनात्सर्वमेतत्प्रतीहि ।
यद्वर्तते यच्च भविष्यतीह
सर्वं ह्येतत्केशवं त्वं प्रतीहि ॥ ४३
मृत्युश्चैव प्राणिनामन्तकाले
साक्षात्कृष्णः केशवो देहभाजाम् ।
भूतं च यच्चेह न विद्म किंचि-
द्विष्वक्सेनात्सर्वमेतत्प्रतीहि ॥ ४४
यत्प्रशस्तं च लोकेषु पुण्यं यच्च शुभाशुभम् ।
तत्सर्वं केशवोऽचिन्त्यो विपरीतमतः परम् ॥ ४५
एतादृशः केशवोऽतश्च भूयो
नारायणः परमश्चाव्ययश्च ।
मध्याद्यन्तस्य जगतस्तस्थुषश्च
बुभूषतां प्रभवश्चाव्ययश्च ॥ ४६

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि त्रिषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६३ ॥

## चतुःषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६४ ॥

कृष्णेन युधिष्ठिरंप्रति ब्राह्मणानां महत्तरत्वे दृष्टान्ततया स्वेन प्रद्युम्नं प्रत्युक्तदुर्वासश्चरित्रप्रतिपादनम् ॥ १ ॥

युधिष्ठिर उवाच ।
ब्रूहि ब्राह्मणपूजायां व्युष्टिं त्वं मधुसूदन ।
वेत्ता त्वमस्य चार्थस्य वेद त्वां हि पितामहः ॥ १
वासुदेव उवाच ।
शृणुष्वावहितो राजन्द्विजानां भरतर्षभ ।
यथातत्त्वेन वदतो गुणान्वै कुरुसत्तम ॥ २
द्वारवत्यां समासीनं पुरा मां कुरुनन्दन ।
प्रद्युम्नः परिपप्रच्छ ब्राह्मणैः परिकोपितः ॥ ३
किं फलं ब्राह्मणेष्वस्ति पूजायां मधुसूदन ।
ईश्वरत्वं कुतस्तेषामिहैव च परत्र च ॥ ४
सदा द्विजातीन्संपूज्य किं फलं तत्र मानद ।
एतद्ब्रूहि स्फुटं सर्वं सुमहान्संशयोऽत्र मे ॥ ५
इत्युक्ते वचने तस्मिन्प्रद्युम्नेन तथा त्वहम् ।
प्रत्यब्रुवं महाराज यत्तच्छृणु समाहितः ॥ ६
व्युष्टिं ब्राह्मणपूजायां रौक्मिणेय निबोध मे ।
एते हि सोमराजान ईश्वराः सुखदुःखयोः ॥ ७
अस्मिँल्लोके रौक्मिणेय तथाऽमुष्मिंश्च पुत्रक ।
ब्राह्मणप्रमुखं सौम्यं न मेऽत्रास्ति विचारणा ॥ ८
ब्राह्मणप्रभवं सौख्यमायुः कीर्तिर्यशो बलम् ।
लोका लोकेश्वराश्चैव सर्वे ब्राह्मणपूजकाः ॥ ९
त्रिवर्गे चापवर्गे च यशःश्रीरोगशान्तिषु ।
देवतापितृपूजासु संतोष्याश्चैव नो द्विजाः ॥ १०
तान्कथं वै नाद्रियेयमीश्वरोसीति पुत्रक ।
मा ते मन्युर्महाबाहो भवत्वत्र द्विजान्प्रति ॥ ११

पञ्चधा पञ्चप्रकारं देवासुरमनुष्यश्वापदतिर्यग्रूपेण विश्वं सिसृक्षुराज्ञापयतीति पूर्वेणान्वयः। पञ्चजनोपपन्नमिति झ. पाठः ॥४०॥ चतुर्विधं जरायुजादि । पञ्चबीजा चतुर्विधभूतग्रामः कर्म च तेषां बीजभूताम् ॥४१॥ अतः केशवात् यत्परं कल्प्यते तद्विपरीतम् । असन्मार्ग इत्यर्थः ॥ ४५ ॥ तादृशः केशवो देवो भूयो नारायणः परं । आदिरन्तश्च मध्यं च देशतः कालतो हरिः । जगतां तस्थुषां चैव भूतानां प्रभवाप्यय इति क. थ. पाठः ॥ ४६ ॥ त्रिषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६३ ॥
सौम्यं कल्याणम् ॥ ८ ॥ ब्राह्मणप्रतिपूजायामायुरिति झ. पाठः ॥ ९ ॥

ब्राह्मणा इह महद्भूतमास्मँल्लोके परत्र च ।
भस्म कुर्युर्जगदिदं क्रुद्धाः प्रत्यक्षदर्शिनः ॥ १२
हन्युस्तेऽपि सृजेयुश्च लोकाँल्लोकेश्वरांस्तथा ।
कथं तेषु न वर्तेरन्सम्यग्ज्ञानात्सुतेजसः ॥ १३
अवसन्मद्गृहे तात ब्राह्मणो हरिपिङ्गलः ।
चीरवासा बिल्वदण्डी दीर्घश्मश्रुः कृशो महान् १४
दीर्घेभ्यश्च मनुष्येभ्यः प्रमाणादधिको भुवि ।
स स्वैरं चरते लोकान्ये दिव्या ये च मानुषाः १५
इमां गाथां गायमानश्चत्वरेषु सभासु च ।
दुर्वाससं वासयेत्को ब्राह्मणं सत्कृतं गृहे ॥ १६
रोषणः सर्वभूतानां सूक्ष्मेऽप्यपकृते कृते ।
परिभाषां च मे श्रुत्वा को नु दद्यात्प्रतिश्रयम्॥१७
यो मां कश्चिद्वासयीत न स मां कोपयेदिति ।
यस्मान्नाद्रियते कश्चित्ततोऽहं समवासयम् ॥ १८
स संभुङ्क्ते सहस्राणां बहूनामन्नमेकदा ।
एकदा सोल्पकं भुङ्क्ते नचैवैति पुनर्गृहान् ॥ १९
अकस्माच्च प्रहसति तथाऽकस्मात्प्ररोदिति ।
न चास्य वयसा तुल्यः पृथिव्यामभवत्तदा ॥ २०
अथ स्वावसथं गत्वा सशय्यास्तरणानि च ।
अदहत्स महातेजास्ततश्चाभ्यपतत्स्वयम् ॥ २१
अथ मामब्रवीद्भूयः स मुनिः संशितव्रतः ।
कृष्ण पायसमिच्छामि भोक्तुमित्येव सत्वरः॥ २२
तदैव तु मया तस्य चित्तज्ञेन गृहे जनः ।
सर्वाण्यन्नानि पानानि भक्ष्याश्चोच्चावचास्तथा २३
भवन्तु सत्कृतानीह पूर्वमेव प्रचोदितः ।
ततोऽहं ज्वलमानं वै पायसं प्रत्यवेदयम् ॥ २४
तं भुक्त्वैव स तु क्षिप्रं ततो वचनमब्रवीत् ।
क्षिप्रमङ्गानि लिम्पस्व पायसेनेति स स्म ह ॥२५
अविमृश्यैव च ततः कृतवानस्मि तत्तथा ।
तेनोच्छिष्टेन गात्राणि शरीरं च समालिपम्॥२६
स ददर्श तदाऽभ्याशे मातरं ते शुभाननाम् ।
तामपि स्मयमानां स पायसेनाभ्यलेपयत् ॥ २७
मुनिः पायसदिग्धाङ्गीं रथे तूर्णमयोजयत् ।
तमारुह्य रथं चैव निर्ययौ स गृहान्मम ॥ २८
अग्निवर्णो ज्वलन्धीमान्स द्विजो रथधुर्यवत् ।
प्रतोदेनातुदद्बालां रुक्मिणीं मम पश्यतः ॥ २९
न च मे स्तोकमप्यासीद्दुःखमीर्ष्याकृतं तदा ।
तथा स राजमार्गेण महता निर्ययौ बहिः ॥ ३०
तद्दृष्ट्वा महदाश्चर्यं दाशार्हा जातमन्यवः ।
तत्राजल्पन्मिथः केचित्समाभाष्य परस्परम् ३१
ब्राह्मणा एव जायेरन्नान्यो वर्णः कथंचन ।
को ह्येनां रथमास्थाय जीवेदन्यः पुमानिह ॥ ३२
आशीविषविषं तीक्ष्णं ततस्तीक्ष्णतरो द्विजः ।
ब्रह्माहिविषदिग्धस्य नास्ति कश्चिच्चिकित्सकः ३३
तस्मिन्व्रजति दुर्धर्षे प्रास्खलद्रुक्मिणी पथि ।
अमर्षयंस्तथा श्रीमान्स्मितपूर्वमचोदयम् ॥ ३४
ततः परमसंक्रुद्धो रथात्प्रस्कन्द्य स द्विजः ।
पदातिरुत्पथेनैव प्राद्रवद्दक्षिणामुखः ॥ ३५
तमुत्पथेन धावन्तमन्वधावं द्विजोत्तमम् ।
तथैव पायसादिग्धः प्रसीद भगवन्निति ॥ ३६
ततो विलोक्य तेजस्वी ब्राह्मणो मामुवाच ह ।
जितः क्रोधस्त्वया कृष्ण प्रकृत्यैव महाभुज ॥ ३७
न तेऽपराधमिह वै दृष्टवानस्मि सुव्रत ।
प्रीतोस्मि तव गोविन्द वृणु कामान्यथेप्सितान् ॥
प्रसन्नस्य च मे तात पश्य व्युष्टिं यथाविधाम् ३९
यावदेव मनुष्याणामन्ने भावो भविष्यति ।
यथैवान्ने तथा तेषां त्वयि भावो भविष्यति ४०
यावच्च पुण्या लोकेषु त्वयि कीर्तिर्भविष्यति ।
त्रिषु लोकेषु तावच्च वैशिष्ट्यं प्रतिपत्स्यसे ।
सुप्रियः सर्वलोकस्य भविष्यसि जनार्दन ॥ ४१
यत्ते भिन्नं च दग्धं च यच्च किंचिद्विनाशितम् ।
सर्वं तथैव द्रष्टासि विशिष्टं वा जनार्दन ॥ ४२
यावदेतत्प्रलिप्तं ते गात्रेषु मधुसूदन ।
अतो मृत्युभयं नास्ति यावदिच्छसि चाच्युत ४३
न तु पादतले लिप्ते तस्मात्ते मृत्युरत्र वै ।
नैतन्मे प्रियमित्येवं स मां प्रीतोऽब्रवीत्तदा ॥४४

दीर्घश्मश्रुनखादिमानिति. थ. ध. पाठः ॥ १४ ॥ जन इति प्रचोदित इति शेषपूर्त्या संबन्धः ॥ २३ ॥ लिप्ते कस्मात्ते पुत्रकाद्य वै इति झ. पाठ ॥ ४४ ॥ चतुःपष्ट्यधिकद्विशततमोऽध्यायः ॥ २६४ ॥

इत्युक्तोऽहं शरीरं स्वं ददर्श श्रीसमायुतम् ४५
रुक्मिणीं चाब्रवीत्प्रीतः सर्वस्त्रीणां वरं यशः
कीर्तिं चानुत्तमां लोके समवाप्स्यसि शोभने ४६
न त्वां जरा वा रोगो वा वैवर्ण्यं चापि भामिनि।
स्प्रक्ष्यन्ति पुण्यगन्धा च कृष्णमाराधयिष्यसि ॥
षोडशानां सहस्राणां वधूनां केशवस्य ह।
वरिष्ठा च सलोक्या च केशवस्य भविष्यसि ४८
तव मातरमित्युक्त्वा ततो मां पुनरब्रवीत्।
प्रस्थितः सुमहातेजा दुर्वासाऽग्निरिव ज्वलन् ४९
एषैव ते बुद्धिरस्तु ब्राह्मणान्प्रति केशव।
इत्युक्त्वा स तदा पुत्र तत्रैवान्तरधीयत ॥ ५०
तस्मिन्नन्तर्हिते चाहमुपांशु व्रतमाचरम्।
यत्किंचिद्ब्राह्मणो ब्रूयात्सर्वं कुर्यामिति प्रभो ॥५१
एतद्व्रतमहं कृत्वा मात्रा ते सह पुत्रक
ततः परमहृष्टात्मा प्राविशं गृहमेव च ॥ ५२
प्रविष्टमात्रश्च गृहे सर्वं पश्यामि तन्नवम्।
यद्भिन्नं यच्च वै दग्धं तेन विप्रेण पुत्रक ॥ ५३
ततोऽहं विस्मयं प्राप्तः सर्वं दृष्ट्वा नवं दृढम्।
अपूजयं च मनसा रौक्मिणेय सदा द्विजान् ५४
इत्यहं रौक्मिणेयस्य पृच्छतो भरतर्षभ।
माहात्म्यं द्विजमुख्यस्य सर्वमाख्यातवांस्तदा ५५
तथा त्वमपि कौन्तेय ब्राह्मणान्सततं प्रभो।
पूजयस्व महाभागान्वाग्भिर्दानैश्च नित्यदा ॥५६
एवं व्युष्टिमहं प्राप्तो ब्राह्मणस्य प्रसादजाम्।
यच्च मामाह भीष्मोऽयं तत्सत्यं भरतर्षभ ॥ ५७

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि चतुःषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६४ ॥

---

## पञ्चषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६५ ॥

कृष्णेन युधिष्ठिरंप्रति दक्षाध्वरविध्वंसनत्रिपुरदहनादिरूपरुद्रचरित्रपरिकीर्तनम् ॥ १ ॥

उवाच।
दुर्वाससः प्रसादात्ते शंकरांशस्य माधव।
अवाप्तमिह विज्ञानं तन्मे व्याख्यातुमर्हसि ॥ १
महाभाग्यं च यत्तस्य नामानि च महात्मनः।
तत्त्वतो ज्ञातुमिच्छामि सर्वं मतिमतांवर ॥ २
वासुदेव उवाच।
हन्त ते कीर्तयिष्यामि नमस्कृत्य कपर्दिने।
यदवाप्तं मया राजञ्श्रेयो यच्चार्जितं यशः ॥ ३
प्रयतः प्रातरुत्थाय यस्त्वधीयेद्विशांपते।
प्राञ्जलिः शतरुद्रीयं नास्य किंचन दुर्लभम् ॥ ४
'शिवः सर्वगतो रुद्रः स्रष्टा यस्त्वं शृणुष्व मे।'
प्रजापतिस्तमसृजत्तपसोऽन्ते महातपाः।
शंकरस्त्वसृजत्तात प्रजाः स्थावरजङ्गमाः ॥ ५
नास्ति किंचित्परं भूतं महादेवाद्विशांपते।
इह त्रिष्वपि लोकेषु भूतानां प्रभवो हि सः ॥ ६
न चैवोत्सहते स्थातुं कश्चिदग्रे महात्मनः।
न हि भूतं समं तेन त्रिषु लोकेषु विद्यते ॥ ७
गन्धेनापि हि संग्रामे तस्य क्रुद्धस्य शत्रवः।
विसंज्ञा हतभूयिष्ठा वेपन्ते च पतन्ति च ॥ ८
घोरं च निनदं तस्य पर्जन्यनिनदोपमम्।
श्रुत्वा विशीर्येद्धृदयं देवानामपि संयुगे।
यं चाक्ष्णा घोररूपेण पश्येद्दग्धः पतेदधः ॥ ९
न सुरा नासुरा लोके न गन्धर्वा न पन्नगाः।
कुपिते सुखमेधन्ते तस्मिन्नपि गुहागताः ॥ १०
प्रजापतेश्च दक्षस्य यजतो वितते क्रतौ।
विव्याध कुपितो यज्ञं निर्भयस्तु भवस्तदा ॥ ११
धनुषा बाणमुत्सृज्य सुघोरं विननाद च ॥ १२
ते न शर्म कुतः शान्तिं विषादं लेभिरे सुराः।
विद्धे च सहसा यज्ञे कुपिते च महेश्वरे ॥ १३
तेन ज्यातलघोषेण सर्वे लोकाः समाकुलाः।
बभूवुरवशाः पार्थ विषेदुश्च सुरासुराः ॥ १४
आपश्चुक्षुभिरे चैव चकम्पे च वसुंधरा।
व्यद्रवन्गिरयश्चापि द्यौः पफाल च सर्वशः ॥१५
अन्धेन तमसा लोकाः प्रावृता न चकाशिरे।

प्रनष्टा ज्योतिषां भाश्च सह सूर्येण भारत ॥ १६
भृशं भीतास्ततः शान्तिं चक्रुः स्वस्त्ययनानि च।
ऋषयः सर्वभूतानामात्मनश्च हितैषिणः ॥ १७
ततः सोऽभ्यद्रवद्देवान्रुद्रो रौद्रपराक्रमः।
भगस्य नयने क्रुद्धः प्रहारेण व्यशातयत् ॥ १८
पूषणं चाभिदुद्राव घोरेण वपुषाऽन्वितः।
पुरोडाशं भक्षयतो दशनान्वै व्यशातयत् ॥ १९
ततः प्रणेमुर्देवास्ते वेपमानाः स्म शङ्करम्।
पुनश्च संदधे रुद्रो दीप्तं सुनिशितं शरम् ॥ २०
रुद्रस्य विक्रमं दृष्ट्वा भीता देवाः सहर्षिभिः।
ततः प्रसादयामासुः शर्वं ते विबुधोत्तमाः ॥ २१
जेपुश्च शतरुद्रीयं देवाः कृत्वाञ्जलिं तदा।
संस्तूयमानस्त्रिदशैः प्रससाद महेश्वरः ॥ २२
रुद्रस्य भागं यज्ञे च विशिष्टं ते त्वकल्पयन्।
भयेन त्रिदशा राजञ्शरणं च प्रपेदिरे ॥ २३
तेन चैव हि तुष्टेन स यज्ञः सन्धितोऽभवत्।
यद्यच्चापहृतं तत्र तत्तथैवान्वजीवयत् ॥ २४
असुराणां पुराण्यासंस्त्रीणि वीर्यवतां दिवि।
आयसं राजतं चैव सौवर्णमपि चापरम् ॥ २५
नाशकत्तानि मघवा भेत्तुं सर्वायुधैरपि।
अथ सर्वेऽमरा रुद्रं जग्मुः शरणमर्दिताः ॥ २६
तत ऊचुर्महात्मानो देवाः सर्वे समागताः।
रुद्र रौद्रा भविष्यन्ति पशवः सर्वकर्मसु ॥ २७
जहि दैत्यान्सह पुरैर्लोकांस्त्रायस्व मानद।
स तथोक्तस्तथेत्युक्त्वा कृत्वा विष्णुं शरोत्तमम् २८
शल्यमग्निं तथा कृत्वा पुङ्खं वैवस्वतं यमम्।
ओंकारं च धनुः सर्वाङ्ग्यां च सावित्रिमुत्तमां॥२९
ब्रह्माणं सारथिं कृत्वा विनियुज्य च सर्वशः
त्रिपर्वणा त्रिशल्येन तेन तानि बिभेद सः ॥३०
शरेणादित्यवर्णेन कालाग्निसमतेजसा।
तेऽसुराः सपुरास्तत्र दग्धा रुद्रेण भारत ॥ ३१
तं चैवाङ्कगतं दृष्ट्वा बालं पञ्चशिखं पुनः।
उमा जिज्ञासमाना वै कोऽयमित्यब्रवीत्तदा ॥३२
असूयतश्च शक्रस्य वज्रेण प्रहरिष्यतः।
सवज्रं स्तम्भयामास तं बाहुं परिघोपमम् ॥ ३३
न संबुबुधिरे चैव देवास्तं भुवनेश्वरम्।
सप्रजापतयः सर्वे तस्मिन्मुमुहुरीश्वरे ॥ ३४
ततो ध्यात्वा च भगवान्ब्रह्मा तममितौजसम्।
अयं श्रेष्ठ इति ज्ञात्वा ववन्दे तमुमापतिम् ॥३५
ततः प्रसादयामासुरुमां रुद्रं च ते सुराः।
बभूव स तदा बालः प्रयया तु यथापुरम् ॥ ३६
स चापि ब्राह्मणो भूत्वा दुर्वासा नाम वीर्यवान्।
द्वारवत्यां मम गृहे चिरं कालमुपावसत् ॥ ३७
विप्रकारान्प्रयुङ्क्ते स सुबहून्मम वेश्मनि।
तानुदारतया चाहं चक्षमे चातिदुःसहान् ॥ ३८
स वै रुद्रः स च शिवः सोऽग्निः सर्वः स सर्वजित्।
स चैवेन्द्रश्च वायुश्च सोऽश्विनौ स च विद्युतः ३९
स चन्द्रमाः स चेशानः स सूर्यो वरुणश्च सः।
स कालः सोन्तको मृत्युः स यमो रात्र्यहानि च॥
मासार्धमासा ऋतवः सन्ध्ये संवत्सरश्च सः।
स धाता स विधाता च विश्वकर्मा स सर्ववित् ४१
नक्षत्राणि ग्रहाश्चैव दिशोऽथ प्रदिशस्तथा।
विश्वमूर्तिरमेयात्मा भगवान्परमद्युतिः ॥ ४२
एकधा च द्विधा चैव बहुधा च स एव हि।
शतधा सहस्रधा चैव तथा शतसहस्रधा ॥ ४३
ईदृशः स महादेवो भूयश्च भगवानतः।
न हि शक्या गुणा वक्तुमपि वर्षशतैरपि ॥ ४४

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि पञ्चषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६५ ॥

# षट्षष्ट्यधिकद्विशततमोऽध्यायः ॥ २६६ ॥

कृष्णेन युधिष्ठिरंप्रति महेश्वरादिनामनिर्वचनपूर्वकं शिवमहिमोक्तिः ॥ १ ॥

वासुदेव उवाच ।
युधिष्ठिर महाबाहो महाभाग्यं महात्मनः ।
रुद्राय बहुरूपाय बहुनाम्ने निबोध मे ॥ १
वदन्त्युग्रं महादेवं तथा स्थाणुं महेश्वरम् ।
एकाक्षं त्र्यम्बकं चैव विश्वरूपं शिवं तथा ॥ २
द्वे तनू तस्य देवस्य वेदज्ञा ब्राह्मणा विदुः ।
घोरामन्यां शिवामन्यां ते तनू बहुधा पुनः ॥ ३
उग्रा घोरा तनुर्याऽस्य सोऽग्निर्विद्युत्स भास्करः ।
शिवा सौम्या च या त्वस्य धर्मस्त्वापोथ चन्द्रमाः ४
आत्मनोऽर्धं तु तस्याग्निः सोमोऽर्धं पुनरुच्यते ।
ब्रह्मचर्यं चरत्येका शिवा चास्य तनुस्तथा ॥ ५
याऽस्य घोरतमा मूर्तिर्जगत्संहरते तथा ।
ईश्वरत्वान्महत्त्वाच्च महेश्वर इति स्मृतः ॥ ६
यन्निर्दहति यत्तीक्ष्णो यदुग्रो यत्प्रतापवान् ।
मांसशोणितमज्जादो यत्ततो रुद्र उच्यते ॥ ७
देवानां सुमहान्यच्च यच्चास्य विषयो महान् ।
यच्च विश्वं जगत्पाति महादेवस्ततः स्मृतः ॥ ८
धूम्ररूपा जटा यस्माद्धूर्जटीत्यत उच्यते ॥ ९
स मेधयति यन्नित्यं सर्वान्वै सर्वकर्मभिः ।
शिवमिच्छन्मनुष्याणां तस्मादेष शिवः स्मृतः ॥ १०
दहत्यूर्ध्वं स्थितो यच्च प्राणान्नॄणां स्थिरश्च यत् ।
स्थिरलिङ्गश्च यन्नित्यं तस्मात्स्थाणुरिति स्मृतः ११
यदस्य बहुधा रूपं भूतं भव्यं भवत्तथा ।
स्थावरं जङ्गमं चैव बहुरूपस्ततः स्मृतः ॥ १२
विश्वेदेवाश्च यत्तस्मिन्विश्वरूपस्ततः स्मृतः ।
सहस्राक्षोऽयुताक्षो वा सर्वतोक्षिमयोपि वा ।
चक्षुषः प्रभवं तेजः सर्वतश्चक्षुरेव तत् ॥ १३
सर्वथा यत्पशून्पाति तैश्च यद्रमते सह ।
तेषामधिपतिर्यच्च तस्मात्पशुपतिः स्मृतः ॥ १४
नित्येन ब्रह्मचर्येण लिङ्गमस्य यदा स्थितम् ।
'भक्तानुग्रहणार्थाय गूढलिङ्गस्ततः स्मृतः ।'
महयत्यस्य लोकश्च प्रियं ह्येतन्महात्मनः ॥ १५
विग्रहं पूजयेद्यो वै लिङ्गं वाऽपि महात्मनः ।
लिङ्गं पूजयिता नित्यं महतीं श्रियमश्नुते ॥ १६
ऋषयश्चापि देवाश्च गन्धर्वाप्सरसस्तथा ।
लिङ्गमेवार्चयन्ति स्म यत्तदूर्ध्वं समास्थितम् ॥ १७
पूज्यमाने ततस्तस्मिन्मोदते स महेश्वरः ।
सुखं ददाति प्रीतात्मा भक्तानां भक्तवत्सलः १८
एष एव श्मशानेषु देवो वसति निर्दहन् ।
यजन्ते ये जनास्तत्र वीरस्थाननिषेविणः ॥ १९
विषमस्थः शरीरेषु स मृत्युः प्राणिनामिह ।
स च वायुः शरीरेषु प्राणपालः शरीरिणाम् ॥ २०
तस्य घोराणि रूपाणि दीप्तानि च बहूनि च ।
लोके यान्यस्य पूज्यन्ते विप्रास्तानि विदुर्बुधाः ॥
नामधेयानि देवेषु बहून्यस्य यथार्थवत् ।
निरुच्यन्ते महत्त्वाच्च विभुत्वात्कर्मभिस्तथा ॥ २२
वेदे चास्य विदुर्विप्राः शतरुद्रीयमुत्तमम् ।
व्यासेनोक्तं च यच्चापि उपस्थानं महात्मनः ॥ २३
प्रदाता सर्वलोकानां विश्वसाक्षी निरामयः ।
ज्येष्ठभूतं वदन्त्येनं ब्राह्मणा ऋषयोऽपरे ॥ २४
प्रथमो ह्येष देवानां मुखादग्निमजीजनत् ।
ग्रहैर्बहुविधैः प्राणान्संरुद्धानुत्सृजत्यपि ॥ २५
विमोक्षयति तुष्टात्मा शरण्यः शरणागतान्
आयुरारोग्यमैश्वर्यं हितं कामांश्च पुष्कलान् ॥ २६
स ददाति मनुष्येभ्यः स एवाक्षिपते पुनः ।
शक्रादिषु च देवेषु तस्य चैश्वर्यमुच्यते ॥ २७
स एव स्थापको नित्यं त्रैलोक्यस्य शुभाशुभे ।
ऐश्वर्याच्चैव कामानामीश्वरः पुनरुच्यते ॥ २८
महेश्वरश्च लोकानां महतामीश्वरश्च सः ।

सा अग्निविद्युत्समप्रभेति क, ट, थ, पाठः ॥ ४ ॥

षट्षष्ट्यधिकद्विशततमोऽध्यायः ॥ २६६ ॥

बहुभिर्विविधै रूपैर्विश्वं व्याप्तमिदं जगत् । तस्य देवस्य यद्वक्त्रं समुद्रे वडवामुखम् ॥ ८९

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि षट्षष्ट्यधिकद्विशततमोऽध्यायः ॥ २६६ ॥

## सप्तषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६७ ॥

भीष्मेण युधिष्ठिरंप्रति धर्मप्रमाणनिरूपणम् ॥ १ ॥

वैशंपायन उवाच ।
इत्युक्तवति तद्वाक्यं कृष्णे देवकिनन्दने ।
भीष्मं शान्तनवं भूयः पर्यपृच्छद्युधिष्ठिरः ॥ १
निर्णये वा महाबुद्धे सर्वधर्मविदांवर ।
प्रत्यक्षमागमो वेति किं तयोः कारणं भवेत् ॥ २
भीष्म उवाच ।
नास्त्यत्र संशयः कश्चिदिति मे वर्तते मतिः ।
शृणु वक्ष्यामि ते प्राज्ञ सम्यक्त्वं मेऽनुपृच्छसि ३
संशयः सुगमस्तत्र दुर्गमस्तस्य निर्णयः ।
दृष्टं श्रुतमनन्तं हि यत्र संशयदर्शनम् ॥ ४
प्रत्यक्षं कारणं दृष्टं हैतुकं प्राज्ञमानिनः ।
नास्तीत्येवं व्यवस्यन्ति सत्यमागममेव वा ॥ ५
तदयुक्तं व्यवस्यन्ति बालाः पण्डितमानिनः ।
अथ संचिन्त्यमेवैकं कारणं किं भवेदिति ॥ ६
शक्यं दीर्घेण कालेन युक्तेनामन्त्रितेन च ।
प्राणयात्रामनेकां च कल्पयानेन भारत ॥ ७
तत्परेणैव नान्येन शक्यते तत्तु कारणम् ।
हेतूनामन्तमासाद्य विपुलं ज्ञानमुत्तमम् ॥ ८
ज्योतिः सर्वस्य लोकस्य विपुलं प्रतिपद्यते ।
न त्वेव गमनं राजन्हेतुतो गमनं तथा ।
अग्राह्यमनिबद्धं च वाचा संपरिवर्जयेत् ॥ ९

युधिष्ठिर उवाच ।
प्रत्यक्षं लोकतः सिद्धिर्लोकश्चागमपूर्वकः ।
शिष्टाचारो बहुविधस्तन्मे ब्रूहि पितामह ॥ १०
भीष्म उवाच ।
धर्मस्य ह्रियमाणस्य बलवद्भिर्दुरात्मभिः ।
संस्था यत्नैरपि कृता कालेन प्रतिभिद्यते ॥ ११
अधर्मो धर्मरूपेण तृणैः कूप इवावृतः ।
ततस्तैर्भिद्यते वृत्तं शृणु चैव युधिष्ठिर ॥ १२
अवृत्त्या ये तु निन्दन्ति श्रुतत्यागपरायणाः ।
धर्मविद्वेषिणो मन्दा इत्युक्तस्तेषु संशयः ॥ १३
अतृप्यन्तस्तु साधूनां यावदागमबुद्धयः ।
परमित्येव संतुष्टास्तानुपास्स्व च पृच्छ च ॥ १४
कामार्थौ पृष्ठतः कृत्वा लोभमोहानुसारिणौ ।
धर्म इत्येव संबुद्धस्तानुपास्स्व च पृच्छ च ॥ १५
न तेषां भिद्यते वृत्तं यज्ञाः स्वाध्यायकर्म च ।
आचारः कारणं चैव धर्मश्चैकस्त्रयं पुनः ॥ १६
युधिष्ठिर उवाच ।
पुनरेव हि मे बुद्धिः संशये परिमुह्यति ।
अपारे मज्जमानस्य परं तीरमपश्यतः ॥ १७
वेदः प्रत्यक्षमाचारः प्रमाणं तत्त्रयं यदि ।
पृथक्त्वं लभ्यते चैषां धर्मश्चैतत्त्रयं कथम् ॥ १८

श्रुतिप्रत्यक्षयोः किं बलवदिति प्रश्नः ॥ २ ॥ श्रुत्यपेक्षया प्रत्यक्ष प्रबल क्वचित्प्रत्यक्षापेक्षया श्रुतिरित्यर्थः ॥ ४ ॥ यदि त्वमपि एकमसंहतं ब्रह्म कारण कथ भवेदिति संशयवानसि तर्हि दीर्घकालसेवनादिनाऽयमर्थो युक्तेन योगेन वेदितुं शक्यः ॥ ६ ॥ हेतूनामन्त्रिते वापि धर्मशास्त्रेण चोत्तमम् इति क. ट. थ. पाठः ॥ ८ ॥ लोकस्य प्रकाश प्रतिपद्यत इति । तत्वागमसमे राजन्हेत्वन्तगमने तथेति च क. ट. थ. पाठः ॥ ९ ॥ लोकतः सिद्धिरनुमानं आगमपूर्वः शिष्टाचारश्चेति प्रमाणानि एतेषां मध्ये किं प्रबलमिति प्रश्नार्थः ॥ १० ॥ धर्मस्य ध्रीय-माणस्य बलवद्भिर्महात्मभिः इति, काले विपरिविद्यन इति च क. ट. थ. पाठ ॥ ११ ॥ वृत्त शिष्टाचारः ॥ १२ ॥ निन्दन्ति वृत्तम् । तेषु प्रत्यक्षानुमानाचारेषु ॥ १३ ॥ अतृप्यन्तो नित्य सोत्कण्ठाः । आगमजन्या बुद्धयो येषां ते । परं श्रेष्ट प्रमाणमित्यन्वयः ॥ १४ ॥ वृत्तं शीलम् । आचारः शौचादिः । कारण वेदः । त्रय मिलित्वा एको धर्मः । स धर्मः साधनीय इत्यर्थः । येनैषां भिद्यते वृत्त यज्ञस्वाध्यायकर्मभिः । मूलाचारस्तु साधूनां यज्ञस्वाध्यायवृत्तत इति क. ट. थ. पाठः ॥ १६ ॥

भीष्म उवाच ।
धर्मस्य ह्रियमाणस्य बलवद्भिर्दुरात्मभिः ।
यद्येवं मन्यसे राजंस्त्रिधा धर्मविचारणा ॥ १९
एक एवेति जानीहि त्रिधा धर्मस्य दर्शनम् ।
पृथक्त्वे च न मे बुद्धिस्त्रयाणामपि वै तथा ॥ २०
[उक्तो मार्गस्त्रयाणां च तत्तथैव समाचर ।
जिज्ञासा न तु कर्तव्या धर्मस्य परितर्कणात् ॥ २१
सदैव भरतश्रेष्ठ मा ते भूदत्र संशयः ।
अन्धो जड इवाशङ्की यद्ब्रवीमि तदाचर ॥ २२
अहिंसा सत्यमक्रोधो दानमेतच्चतुष्टयम् ।
अजातशत्रो सेवस्व धर्म एष सनातनः ॥] २३
ब्राह्मणेषु च वृत्तिर्या पितृपैतामहोचिता ।
तामन्वेहि महाबाहो धर्मस्यैते हि देशिकाः ॥ २४
प्रमाणमप्रमाणं वै यः कुर्यादबुधो जनः ।
न स प्रमाणतामर्हो विषादजननो हि सः ॥ २५
ब्राह्मणानेव सेवस्व सत्कृत्य बहुमान्य च ।
एतेष्वेव त्विमे लोकाः कृत्स्ना इति निबोध तान् ॥

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि सप्तषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६७ ॥

---

## अष्टषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६८ ॥

भीष्मेण युधिष्ठिरंप्रति धार्मिकाधार्मिकाणां स्वर्गनरकप्राप्तिप्रतिपादनम् ॥ १ ॥ तथा साध्वसाधुजनलक्षणाभिधानपूर्वकं सामान्यतो नानाधर्मप्रतिपादनम् ॥ २ ॥

उवाच ।
ये च धर्ममसूयन्ते ये चैनं पर्युपासत
ब्रवीतु मे भवानेतत्क ते गच्छन्ति तादृशाः ॥ १
भीष्म उवाच ।
रजसा तमसा चैव समवस्तीर्णचेतसः ।
नरकं प्रतिपद्यन्ते धर्मविद्वेषिणो जनाः ॥ २
ये तु धर्मं महाराज सततं पर्युपासते ।
सत्यार्जवपराः सन्तस्ते वै स्वर्गभुजो नराः ॥ ३
धर्म एव रतिस्तेषामाचार्योपासनाद्भवेत् ।
देवलोकं प्रपद्यन्ते ये धर्मं पर्युपासते ॥ ४
मनुष्या यदि वा देवाः शरीरमुपताप्य वै ।
धर्मिणः सुखमेधन्ते लोभद्वेषविवर्जिताः ॥ ५
प्रथमं ब्रह्मणः पुत्रं धर्ममाहुर्मनीषिणः ।
धर्मिणः पर्युपासन्ते फलं पक्वमिवाशिनः ॥ ६
युधिष्ठिर उवाच ।
असाधोः कीदृशं शीलं साधोश्चैव तु कीदृशम् ।
ब्रवीतु मे भवानेतत्सन्तोऽसन्तश्च कीदृशाः ॥ ७
भीष्म उवाच ।
दुराचाराश्च दुर्धर्षा दुर्मुखाश्चाप्यसाधवः ।
साधवः शीलसंपन्नाः शिष्टाचारस्य लक्षणम् ॥ ८
राजमार्गे गवां मध्ये जनमध्ये च धर्मिणः ।
नोपसेवन्ति राजेन्द्र सर्गं मूत्रपुरीषयोः ॥ ९
पञ्चानां यजनं कृत्वा शेषमश्नन्ति साधवः ।
न जल्पन्ति च भुञ्जाना न निद्रान्त्यार्द्रपाणयः १०
चित्रभानुमपां देवं गोष्ठं चैव चतुष्पथम् ।
ब्राह्मणं धार्मिकं वृद्धं ये कुर्वन्ति प्रदक्षिणम् ॥ ११
वृद्धानां भारतप्तानां स्त्रीणां बालातुरस्य च ।
ब्राह्मणानां गवां राज्ञां पन्थानं ददते च ये ॥ १२
अतिथीनां च सर्वेषां प्रेष्याणां स्वजनस्य च ।
'सामान्यं भोजनं कुर्यात्स्वयं नाग्र्याशनं व्रजेत् १३
न सत्यार्जवधर्मस्य तुल्यमन्यच्च विद्यते ।
बहुला नाम गौस्तेन गतिमग्र्यां गता किल ॥ १४

---

हे राजन्, यद्येव धर्मत्रय मन्यसे तन्नेति शेष । किंतु ह्रियमाणस्यैकस्यैव धर्मस्य त्रिधा त्रिप्रकारा विचारणा । एकएव प्रमाणत्रयसंवादेन परीक्षणीय इत्यर्थः ॥ १९ ॥ त्रिधेत्यस्य व्याख्यान एकएवेति । त्रयाणां प्रमाणानां पृथक्त्वे प्रत्येक स्वातन्त्र्येण धर्मप्रतिपादकत्वे मम बुद्धिर्न च । एवमेव विजानीहि इति क. ट. थ. पाठः ॥ २० ॥ अशङ्की शङ्काशून्यः ॥ २२ ॥ सप्तषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६७ ॥

कीदृशाः किंलक्षणाः ॥ ७ ॥ सर्ग उत्सर्गम् ॥ ९ ॥ पञ्चानां देवपितृभूतातिथिकुटुम्बानाम् ॥ १० ॥

मुनिशापाद्विजः कश्चिद्व्याघ्रतां समुपागतः
बहुलां भक्षणरुचिरास्वाद्य शपथेन नु ॥ १५
विमुच्य पीतवत्सां तां दृष्ट्वा स्मृत्वा पुरातनम् ।
जगाम लोकानमलान्सा स्वराष्ट्रं तथा पुनः ॥ १६
तस्मात्सत्यार्जवरतो राजन्राष्ट्रं समानवम् ।
तारयित्वा सुखं स्वर्गं गन्तासि भरतर्षभ ॥ १७
तथा शरणकामानां गोप्ता स्यात्स्वागतप्रदः ॥ १८
सायं प्रातर्मनुष्याणामशनं देवनिर्मितम् ।
नान्तरा भोजनं दृष्टमुपवासविधिर्हि सः ॥ १९
होमकाले यथा वह्निः काले होमं प्रतीक्षते ।
ऋतुकाले तथाऽऽधानं पितरश्च प्रतीक्षते ।
नान्यदा गच्छते यस्तु ब्रह्मचर्यं च तत्स्मृतम् ॥२०
अमृतं ब्राह्मणा गाव इत्येतत्त्रयमेकतः ।
तस्माद्गोब्राह्मणान्नित्यमर्चयेत यथाविधि ॥ २१
यजुषा संस्कृतं मांसमुपभुञ्जन्न दुष्यति ।
पृष्ठमांसं वृथामांसं पुत्रमांसं च तत्समम् ॥ २२
स्वदेशे परदेशे वाऽप्यतिथिं नोपवासयेत् ।
कर्म वै सफलं कृत्वा गुरूणां प्रतिपादयेत् ॥ २३
गुरुभ्यस्त्वासनं देयमभिवाद्याभिपूज्य च ।
गुरुमभ्यर्च्य वर्धन्ते आयुषा यशसा श्रिया ॥ २४
वृद्धान्नाभिभवेज्जातु न चैतान्प्रेषयेदिति ।
नासीनः स्यात्स्थितेष्वेवमायुरस्य न रिष्यते ॥ २५
न नग्नामीक्षते नारीं न नग्नान्पुरुषानपि ।
मैथुनं सततं गुप्तं तपश्चैव समाचरेत् ॥ २६
तीर्थानां गुरवस्तीर्थं शुचीनां हृदयं शुचि ।
दर्शनानां परं ज्ञानं संतोषः परमं सुखम् ॥ २७
सायं प्रातश्च वृद्धानां शृणुयात्पुष्कला गिरः ।
श्रुतमाप्नोति हि नरः सततं वृद्धसेवया ॥ २८
स्वाध्याये भोजने चैव दक्षिणं पाणिमुद्धरेत् ।
यच्छेद्वाङ्मनसी नित्यमिन्द्रियाणि तथैव च ॥ २९
संस्कृतं पायसं नित्यं यावकं कृसरं हविः ।
अष्टकाः पितृदैवत्या ग्रहाणामभिपूजनम् ॥ ३०
श्मश्रुकर्मणि मङ्गल्यं क्षुतानामभिनन्दनम् ।
व्याधितानां च सर्वेषामायुषामभिनन्दनम् ॥ ३१
न जातु त्वमिति ब्रूयादापन्नोपि महत्तरम् ।
त्वंकारो वा वधो वेति विद्वत्सु न विशिष्यते ।
अवराणां समानानां शिष्याणां च समाचरेत् ॥ ३२
पापमाचरते नित्यं हृदयं पापकर्मणाम्
ज्ञानपूर्वकृतं कर्म च्छादयन्ते ह्यसाधवः ३३
ज्ञानपूर्वं विनश्यन्ति गूहमाना महाजने
न मां मनुष्याः पश्यन्ति न मां पश्यन्ति देवताः ॥
पापेनाभिहितः पापः पापमेवाभिजायते ॥ ३५
यथा वार्धुषिको वृद्धिं दिनभेदे प्रतीक्षते ।
धर्मेण पिहितं पापं धर्ममेवाभिवर्धयेत् ॥ ३६
यथा लवणमम्भोभिराप्लुतं प्रविलीयते ।
प्रायश्चित्तहतं पापं तथा सद्यः प्रणश्यति ॥ ३७
तस्मात्पापं न गूहेत गूहमानं विवर्धते ।
कृत्वा तु साधुष्वाख्यायाधर्मं प्रशमयन्त्युत ॥ ३८
आशया संचितं द्रव्यं स्वकाले नोपभुज्यते ।
अन्ये चैतत्प्रपद्यन्ते वियोगे तस्य देहिनः ॥ ३९
'तद्धर्मसाधनं नित्यं संकल्पाद्धनमार्जयेत् ।'
मननं सर्वभूतानां धर्ममाहुर्मनीषिणः ।
तस्मात्सर्वाणि भूतानि धर्ममेव समासते ॥ ४०
एक एव चरेद्धर्मं न धर्मध्वजिको भवेत् ।
धर्मवाणिजका ह्येते ये धर्ममुपभुञ्जते ॥ ४१
अर्चेद्देवानदम्भेन सेवेताऽमायया गुरून् ।
धनं निदध्यात्पात्रेषु परत्रार्थं समाहृतम् ॥ ४२

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि अष्टषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६८ ॥

ऋतुकाले तथा नारी ऋतुमेव प्रतीक्षते इति झ. पाठः । नचान्या गच्छते यस्तु ब्रह्मचर्यं च तस्य तत् इति क. ट. थ. पाठः ॥२०॥ कर्म अध्ययनम् । प्रतिपादयेत् दक्षिणामिति शेषः ॥ २३ ॥ वृद्धान्नातिवदेज्जात्विति क. ट. थ. पाठः ॥ २५ ॥ दक्षिणं पाणि उद्धरेत् यज्ञोपवीती भवेत् ॥ २९ ॥ मङ्गल्यं मङ्गलवचनम् । अभिनन्दन शत जीवेति वचनेन सुखोत्पादनं च । कुर्यादिति शेषः ॥ ३१ ॥ लकारो वा वदस्वेतीति क. ट. थ. पाठः ॥ ३२ ॥ धर्मध्वजिकस्तत्प्रकाशकः ॥ ४१ ॥ अष्टषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६८ ॥

## एकोनसप्तत्यधिकद्विशततमोऽध्यायः ॥ २६९ ॥

भीष्मेण युधिष्ठिरंप्रत्यन्वयव्यतिरेकाभ्यां सुकृतदुष्कृतयोः सदृष्टान्तप्रदर्शनं सुखदुःखकारणत्वोपपादनम् ॥ १ ॥

उवाच ।
नाभागधेयः प्राप्नोति धनं सुबलवानपि ।
भागधेयान्वितस्त्वर्थान्कृशो बालश्च विन्दति ॥ १
नालाभकाले लभते प्रयत्नेऽपि कृते सति ।
लाभकालेऽप्रयत्नेन लभते विपुलं धनम् ॥
कृतयत्नाफलाश्चैव दृश्यन्ते शतशो नराः ।
अयत्नेनैधमानाश्च दृश्यन्ते बहवो जनाः ॥
यदि यत्नो भवेन्मर्त्यः स सर्वं फलमाप्नुयात्
नालभ्यं चोपलभ्येत नृणां भरतसत्तम ॥ ४
प्रयत्नं कृतवन्तोपि दृश्यन्ते ह्यफला नराः ।
मार्गन्त्यायशतैरर्थानमार्गश्चापरः सुखी ॥ ५
अकार्यमसकृत्कृत्वा दृश्यन्ते ह्यधना नराः ।
धनयुक्ताः स्वकर्मस्था दृश्यन्ते चापरेऽधनाः ॥ ६
अधीत्य नीतिशास्त्राणि नीतियुक्तो न दृश्यते ।
अनभिज्ञश्च साचिव्यं गमितः केन हेतुना ॥ ७
विद्यायुक्तो ह्यविद्यश्च धनवान्दुर्मतिस्तथा ।
यदि विद्यामुपाश्रित्य नरः सुखमवाप्नुयात् ॥ ८
न विद्वान्विद्यया हीनं वृत्त्यर्थमुपसंश्रयेत् ।
यथा पिपासां जयति पुरुषः प्राप्य वै जलम् ॥ ९
इष्टार्थो विद्यया ह्येव न विद्यां प्रजहेन्नरः ॥ १०
नाप्राप्तकालो म्रियते विद्धः शरशतैरपि ।
तृणाग्रेणापि संस्पृष्टः प्राप्तकालो न जीवति ॥ ११
भीष्म उवाच ।
ईहमानः समारम्भान्यदि नासादयेद्धनम् ।
उग्रं तपः समारोहेन्न ह्यनुप्तं प्ररोहति ॥ १२
दानेन भोगी भवति मेधावी वृद्धसेवया ।
अहिंसया च दीर्घायुरिति प्राहुर्मनीषिणः ॥ १३
तस्माद्दद्यान्न याचेत पूजयेद्धार्मिकानपि ।
सुभाषी प्रियकृच्छान्तः सर्वसत्वाविहिंसकः ॥ १४
यदा प्रमाणं प्रसवः स्वभावश्च सुखासुखे ।
दंशकीटपिपीलानां स्थिरो भव युधिष्ठिर ॥ १५

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि एकोनसप्तत्यधिकद्विशततमोऽध्यायः ॥ २६९ ॥

---

## सप्तत्यधिकद्विशततमोऽध्यायः ॥ २७० ॥

भीष्मेण युधिष्ठिरंप्रति धर्मप्रशंसनम् ॥ १ ॥

भीष्म उवाच ।
कार्यते यच्च क्रियते सच्चासच्च कृताकृतम् ।
तत्राश्वसीत सत्कृत्वा असत्कृत्वा न विश्वसेत् ॥ १
काल एवान्तराशक्तिर्निग्रहानुग्रहौ ददत् ।
बुद्धिमाविश्य भूतानां धर्माधर्मौ प्रवर्तते ॥
यदा त्वस्य भवेद्बुद्धिर्धर्मार्थस्य प्रदर्शनात् ।
तदाश्वसीत धर्मात्मा दृढबुद्धिर्न विश्वसेत् ॥ ३
एतावन्मात्रमेतद्धि भूतानां प्राज्ञलक्षणम् ।
कालयुक्तोऽप्युभयविच्छेषं युक्तं समाचरेत् ॥ ४
यथा ह्युपस्थितैश्वर्याः पूजयन्ति नरा जनान् ।
एवमेवात्मनाऽऽत्मानं पूजयन्तीह धार्मिकाः ॥ ५
'भावशुद्धिस्तु तपसा देवतानां च पूजया ।

कृतो यत्नोऽफलो येषा ते कृतयत्नाफला' ॥ ३ ॥ भवेत्समर्थः स्यात् ॥ ४ ॥ आयशतैः उपायशतैः । सुखी धनेन ॥५॥ तपसेह भोगी भवतीति ट. थ. पाठ' ॥ १३ ॥ प्रसवः प्रसवकारण कर्मैव । दशादीनां सुखाद्यासौ प्रमाण नियामकम् । एवं स्वस्यापि ज्ञात्वा स्थिरोऽचञ्चलो भव ॥ १५ ॥ एकोनसप्तत्यधिकद्विशततमोऽध्यायः ॥ २६९ ॥

प्रवर्तते प्रवर्तयति ॥ २ ॥ धर्मार्थस्य धर्मफलस्य प्रदर्शनात् । यदा धर्म एव श्रेयस्कर इति बुद्धिर्भवेत्तदाय धर्मात्मा धर्मचित्तः धर्मे आश्वसीत विश्वासं कुर्वीत । अदृढबुद्धिस्तु न विश्वसेत् धर्मफले ॥ ३ ॥ एतावद्धर्मे विश्वासवत्त्वम् । उभय-

सनातनेन शुद्ध्या च श्रुतदानजपैरपि ।
न ह्यशुद्धस्तु तां दद्याद्धर्मकाले कथंचन ॥ ६
न ह्यधर्मतया धर्मं दद्यात्कालः कथंचन ।
तस्माद्विशुद्धमात्मानं जानीयाद्धर्मचारिणम् ॥ ७
स्प्रष्टुमप्यसमर्थौ हि ज्वलन्तमिव पावकम् ।
अधर्मः संततो धर्मं कालेन परिरक्षितम् ॥ ८
कार्याविेतौ हि धर्मेण धर्मो हि विजयावहः ।
त्रयाणामपि लोकानामालोकः कारणं भवेत् ॥ ९
न तु कश्चिन्नयेत्प्राज्ञो गृहीत्वैव करे नरम् ।
उह्यमानस्तु धर्मेण प्राप्नुयात्परमच्युतम् ।
विश्वास एव कर्तव्यो बहुधर्मे शुभच्छले ॥ १०
शूद्रोऽहं नाधिकारो मे चातुराश्रम्यसेवने ।
इति विज्ञानमपरे नात्मन्युपदधन्त्युत ॥ ११
विशेषेण च वक्ष्यामि चातुर्वर्ण्यस्य लिङ्गतः ।
पञ्चभूतशरीराणां सर्वेषां सदृशात्मनाम् ॥ १२
लोकधर्मे च धर्मे च विशेषकरणं कृतम् ।
यथैकत्वं पुनर्यान्ति प्राणिनस्तत्र विस्तरः ॥ १३
अध्रुवो हि कथं लोकः स्मृतो धर्मः कथं ध्रुवः ।
यत्र कालो ध्रुवस्तात तत्र धर्मः सनातनः ॥ १४
सर्वेषां तुल्यदेहानां सर्वेषां सदृशात्मनाम् ।
कालो धर्मेण संयुक्तः शेष एव स्वयं गुरुः ॥ १५
एवं सति न दोषोऽस्ति भूतानां धर्मसेवने ।
तिर्यग्योनावपि सतां लोक एव मतो गुरुः ॥ १६

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि सप्तत्यधिकद्विशततमोऽध्यायः ॥ २७० ॥

---

## एकसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७१ ॥

भीष्मेण युधिष्ठिरंप्रति देवदेवर्षिगिरिनदीतीर्थक्षेत्रादीनां विस्तरेण पृथङ्नामनिर्देशपूर्वकं प्रातःसायं तत्कीर्तनस्य दुरितनिवृत्तिसुकृतप्राप्तिहेतुत्वोत्कीर्तनम् ॥ १ ॥

वैशंपायन उवाच ।
शरतल्पगतं भीष्मं पाण्डवोऽथ कुरूद्वहः ।
हितं प्रेप्सुरपृच्छत्कल्मषापहम् ॥ १
उवाच ।
किं श्रेयः पुरुषस्येह किं कुर्वन्सुखमेधते ।
विपाप्मा स भवेत्केन किं वा कल्मषनाशनम् ॥ २
वैशंपायन उवाच ।
तस्मै शुश्रूषमाणाय भूयः शान्तनवस्तदा ।
दैवं वंशं यथान्यायमाचष्ट पुरुषर्षभ ॥ ३
भीष्म उवाच ।
अयं दैवतवंशो वै ऋषिवंशसमन्वितः ।
त्रिसंध्यं पठितः पुत्र कल्मषापहरः परः ॥ ४
यदह्ना कुरुते पापमिन्द्रियैः पुरुषश्चरन् ।
बुद्धिपूर्वमबुद्धिर्वा रात्रौ यच्चापि सन्ध्ययोः ॥ ५
मुच्यते सर्वपापेभ्यः कीर्तयन्वै शुचिः सदा ।
नान्धो न बधिरः काले कुरुते स्वस्तिमान्सदा ॥ ६
तिर्यग्योनिं न गच्छेच्च नरकं संकराणि च ।
न च दुःखभयं तस्य मरणे स न मुह्यति ॥ ७

---

वित्कर्तव्याकर्तव्यवित् ॥ ४ ॥ धर्मः कदाप्यधर्मो न भवेदित्याह नहीति । अधर्मतया दुःखहेतुतया ॥ ७ ॥ अधर्मसंततौ धर्मं कुरुते परकारणात् इति क. पाठः ॥ ८ ॥ एतौ विशुद्धताऽधर्मास्पर्शौ ॥ ९ ॥ उच्यमानस्तु धर्मेण धर्मलोकभयच्छले इति झ. पाठः ॥ ११ ॥ विशेषेणेति युग्मम् । सर्वेषां प्राणिना पाञ्चभौतिकत्वे प्रत्यक्षेपि विशेषकरणमिद पवित्रमिदमपवित्रमिति व्यवस्थापन लोकधर्मे शास्त्रीयधर्मे च निमित्ते सति कृतम् ॥ १४ ॥ अत्र शङ्कते अध्रुव इति । लोकस्य धर्मस्य च कार्यकारणभावात्कार्यस्याध्रुवत्वं कारणस्य ध्रुवत्व च न युक्तं तन्तुनाशमन्तरेण पटनाशायोगादित्यर्थः । उत्तरमाह । कालः सङ्कल्पः । निष्कामधर्म एव ध्रुवस्तत्फल नतु सकाम इत्यर्थः ॥ १५ ॥ स्वय गुरुरिति । धर्मबलात्स्वयमेव च स उदेति न शिक्षयेदित्यर्थः ॥ १६ ॥ यदा भूतानां प्राक्कर्मैव तत्रतत्र सुखदुःखसाधने प्रवर्तकमतो धर्मसेवने कर्मफलभोगे असमञ्जसेपि भूताना दोषो नास्ति । यतः तिर्यग्योनावपि सता विद्यमानाना भूताना सदसत्प्रवृत्तौ पूर्वकर्मानुसाराल्लोक एव गुरुर्दृष्टः ॥ १७ ॥ सप्तत्यधिकद्विशततमोऽध्यायः ॥ २७० ॥

देवासुरगुरुर्देवः सर्वभूतनमस्कृतः ।
अचिन्त्योऽथाप्यनिर्देश्यः सर्वप्राणो ह्ययोनिजः॥८
पितामहो जगन्नाथः सावित्री ब्रह्मणः सती ।
वेदभूरथ कर्ता च विष्णुर्नारायणः प्रभुः ॥ ९
उमापतिर्विरूपाक्षः स्कन्दः सेनापतिस्तथा ।
विशाखो हुतभुग्वायुश्चन्द्रसूर्यौ प्रभाकरौ ॥ १०
शक्रः शचीपतिर्देवो यमो धूमोर्णया सह ।
वरुणः सह गौर्या च सह ऋद्ध्या धनेश्वरः॥११
सौम्या गौः सुरभिर्देवी विश्रवाश्च महानृषिः ।
संकल्पः सागरो गङ्गा स्रवन्त्योऽथ मरुद्गणः ॥१२
वालखिल्यास्तपःसिद्धाः कृष्णद्वैपायनस्तथा ।
नारदः पर्वतश्चैव विश्वावसुर्हहाहुहूः ॥ १३
तुम्बुरुश्चित्रसेनश्च देवदूतश्च विश्रुतः ।
देवकन्या महाभागा दिव्याश्चाप्सरसां गणाः॥१४
उर्वशी मेनका रम्भा मिश्रकेशी ह्यलम्बुषा ।
विश्वाची च घृताची च पञ्चचूडा तिलोत्तमा॥१५
आदित्या वसवो रुद्राः साश्विनः पितरोपि च ।
धर्मः श्रुतं तपो दीक्षा व्यवसायः पितामहः॥ १६
शर्वर्यो दिवसाश्चैव मारीचः कश्यपस्तथा ।
शुक्रो बृहस्पतिर्भौमो बुधो राहुः शनैश्चरः ॥१७
नक्षत्राण्यृतवश्चैव मासाः पक्षाः सवत्सराः ।
वैनतेयाः समुद्राश्च कद्रुजाः पन्नगास्तथा ॥ १८
शतद्रुश्च विपाशा च चन्द्रभागा सरस्वती ।
सिन्धुश्च देविका चैव प्रभासं पुष्कराणि च॥१९
गङ्गा महानदी वेणा कावेरी नर्मदा तथा ।
कुलंपुना विशल्या च करतोयाम्बुवाहिनी ॥ २०
सरयूर्गण्डकी चैव लोहितश्च महानदः ।
ताम्रारुणा वेत्रवती पर्णाशा गौतमी तथा ॥ २१
गोदावरी च वेण्या च कृष्णवेणा तथाऽद्रिजा ।
दृषद्वती च कावेरी चक्षुर्मन्दाकिनी तथा ॥ २२
प्रयागं च प्रभासं च पुण्यं नैमिषमेव च ।
तच्च विश्वेश्वरस्थानं यत्र तद्विमलं सरः ॥ २३
पुण्यतीर्थं सुसलिलं कुरुक्षेत्रं प्रकीर्तितम् ।
सिंधूत्तमं तपो दानं जम्बूमार्गमथापि च ॥ २४
हिरण्वती वितस्ता च तथा प्लक्षवती नदी ।
वेदस्मृतिर्वेदवती मालवाऽथाश्ववत्यपि ॥ २५
भूमिभागास्तथा पुण्या गङ्गाद्वारमथापि च ।
ऋषिकुल्यास्तथा मेध्या नद्यः सिन्धुवहास्तथा २६
चर्मण्वती नदी पुण्या कौशिकी यमुना तथा ।
नदी भीमरथी चैव बाहुदा च महानदी ॥ २७
माहेन्द्रवाणी त्रिदिवा नीलिका च सरस्वती ।
नन्दा चापरनन्दा च तथा तीर्थमहाह्रदः ॥ २८
गयाऽथ फल्गुतीर्थं च धर्मारण्यं सुरैर्वृतम् ।
तथा देवनदी पुण्या सरश्च ब्रह्मनिर्मितम् ॥ २९
पुण्यं त्रिलोकविख्यातं सर्वपापहरं शिवम् ।
हिमवान्पर्वतश्चैव दिव्यौषधिसमन्वितः ॥ ३०
विन्ध्यो धातुविचित्राङ्गस्तीर्थवानौषधान्वितः ।
मेरुर्महेन्द्रो मलयः श्वेतश्च रजतावृतः ॥ ३१
शृङ्गवान्मन्दरो नीलो निषधो दर्दुरस्तथा ।
चित्रकूटोऽञ्जनाभश्च पर्वतो गन्धमादनः ॥ ३२
पुण्यः सोमगिरिश्चैव तथैवान्ये महीधराः ।
दिशश्च विदिशश्चैव क्षितिः सर्वे महीरुहाः ॥ ३३
विश्वेदेवा नभश्चैव नक्षत्राणि ग्रहास्तथा ।
पान्तु नः सततं देवाः कीर्तिताऽकीर्तिता मया ३४
कीर्तयानो नरो ह्येतान्मुच्यते सर्वकिल्बिषैः ।
स्तुवंश्च प्रतिनन्दंश्च मुच्यते सर्वतो भयात् ॥ ३५
सर्वसंकरपापेभ्यो देवतास्तवनन्दकः ।
देवतानन्तरं विप्रांस्तपःसिद्धांस्तपोधिकान् ॥ ३६
कीर्तितान्कीर्तयिष्यामि सर्वपापप्रमोचनान् ।
यवक्रीतोऽथ रैभ्यश्च कक्षीवानौशिजस्तथा ॥ ३७
भृग्वङ्गिरास्तथा कण्वो मेधातिथिरथ प्रभुः ।
बर्ही च गुणसंपन्नः प्राचीं दिशमुपाश्रिताः ॥ ३८
भद्रां दिशं महाभागा उल्मुचुः प्रमुचुस्तथा ।
मुमुचुश्च महाभागः स्वस्त्यात्रेयश्च वीर्यवान् ॥ ३९
मित्रावरुणयोः पुत्रस्तथाऽगस्त्यः प्रतापवान् ।
दृढायुश्चोर्ध्वबाहुश्च विश्रुतावृषिसत्तमौ ॥ ४०
पश्चिमां दिशमाश्रित्य य एधन्ते निबोध तान् ।
उषङ्गुः सह सोदर्यैः परिव्याधश्च वीर्यवान् ॥ ४१

ऋषिर्दीर्घतमाश्चैव गौतमः काश्यपस्तथा ।
एकतश्च द्वितश्चैव त्रितश्चैव महानृषिः ॥ ४२
अत्रेः पुत्रश्च धर्मात्मा तथा सारस्वतः प्रभुः ।
उत्तरां दिशमाश्रित्य य एधन्ते निबोध तान् ४३
अत्रिर्वसिष्ठः शक्तिश्च पाराशर्यश्च वीर्यवान् ।
विश्वामित्रो भरद्वाजो जमदग्निस्तथैव च ॥ ४४
ऋचीकपुत्रो रामश्च ऋषिरौद्दालकिस्तथा ।
श्वेतकेतुः कोहलश्च विपुलो देवलस्तथा ॥ ४५
देवशर्मा च धौम्यश्च हस्तिकाश्यप एव च ।
लोमशो नाचिकेतश्च लोमहर्षण एव च ॥ ४६
ऋषिरुग्रश्रवाश्चैव भार्गवश्च्यवनस्तथा ।
एष वै समवायश्च ऋषिदेवसमन्वितः ॥ ४७
आद्यः प्रकीर्तितो राजन्सर्वपापप्रमोचनः ।
नृगो ययातिर्नहुषो यदुः पूरुश्च वीर्यवान् ॥ ४८
धुन्धुमारो दिलीपश्च सगरश्च प्रतापवान् ।
कृशाश्वो यौवनाश्वश्च चित्राश्वः सत्यवांस्तथा ॥४९
दुष्यन्तो भरतश्चैव चक्रवर्ती महायशाः ।
पवनो जनकश्चैव तथा दृष्टरथो नृपः ॥ ५०
रघुर्नरवरश्चैव तथा दशरथो नृपः ।
रामो राक्षसहा वीरः शशबिन्दुर्भगीरथः ॥ ५१
हरिश्चन्द्रो मरुत्तश्च तथा दृढरथो नृपः ।
महोदर्यो ह्यलर्कश्च ऐलश्चैव नराधिपः ॥ ५२
करंधमो नरश्रेष्ठः कध्मोरश्च नराधिपः ।
दक्षोऽम्बरीषः कुकुरो रैवतश्च महायशाः ॥ ५३
कुरुः संवरणश्चैव मांधाता सत्यविक्रमः ।
मुचुकुन्दश्च राजर्षिर्जह्नुर्जाह्नविमेवितः ॥ ५४
आदिराजः पृथुर्वैन्यो मित्रभानुः प्रियंकरः ।
त्रसदस्युस्तथा राजा श्वेतो राजर्षिसत्तमः ॥ ५५
महाभिषश्च विख्यातो निमी राजा तथाऽष्टकः ।
आयुः क्षुपश्च राजर्षिः कक्षेयुश्च नराधिपः ॥ ५६
प्रतर्दनो दिवोदासः सुदासः कोसलेश्वरः ।
ऐलो नलश्च राजर्षिर्मनुश्चैव प्रजापतिः ॥ ५७
हविध्रश्च पृषध्रश्च प्रतीपः शान्तनुस्तथा ।
अजः प्राचीनबर्हिश्च तथेक्ष्वाकुर्महायशाः ॥ ५८
अनरण्यो नरपतिर्जानुजङ्घस्तथैव च ।
कक्षसेनश्च राजर्षिर्ये चान्ये चानुकीर्तिताः ॥ ५९
कल्यमुत्थाय यो नित्यं सन्ध्ये द्वेऽस्तमयोदये ।
पठेच्छुचिरनावृत्तः स धर्मफलभाग्भवेत् ॥ ६०
देवा देवर्षयश्चैव स्तुता राजर्षयस्तथा
पुष्टिमायुर्यशः स्वर्गं विधास्यन्ति ममेश्वराः ॥ ६१
मा विघ्नं मा च मे पापं मा च मे परिपन्थिनः ।
ध्रुवो जयो मे नित्यः स्यात्परत्र च शुभा गतिः ६२
'पालय त्वं प्रजाः सर्वाः शान्तात्मा त्वनुशासिता ।
द्वैपायनः स्वयंचक्षुः कृष्णस्तेऽस्तु परायणम् ॥६३
वैशंपायन उवाच ।
इत्युक्त्वोपासनार्थाय विरराम महामतिः ॥' ६४

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि एकसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७१ ॥

## द्विसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७२ ॥

युधिष्ठिराय निखिलधर्मोपदेशानन्तरं स्वावसानकालाऽऽसत्त्यवगमेन भगवद्ध्यानाय वाक्प्रसारणादुपरते भीष्मे तंप्रति व्यासेन युधिष्ठिरस्य नगरगमनाभ्यनुज्ञानचोदना ॥ १ ॥ युधिष्ठिरेण भीष्माभ्यनुज्ञया सहकृष्णादिभिर्हास्तिनपुरप्रवेशनम् ॥ २ ॥

जनमेजय उवाच ।
शरतल्पगते भीष्मे कौरवाणां धुरंधरे ।
शयाने वीरशयने पाण्डवैः समुपस्थिते ॥ १
युधिष्ठिरो महाप्राज्ञो मम पूर्वपितामहः ।
धर्माणामागमं श्रुत्वा विदित्वा सर्वसंशयान् ॥ २
दानानां च विधिं श्रुत्वा च्छिन्नधर्मार्थसंशयः ।
यदन्यदकरोद्विप्र तन्मे शंसितुमर्हसि ॥ ३
वैशंपायन उवाच ।
अभून्मुहूर्तं स्तिमितं सर्वं तद्राजमण्डलम् ।
तूर्ष्णींभूते ततस्तस्मिन्पटे चित्रमिवार्पितम् ॥ ४
मुहूर्तमिव च ध्यात्वा व्यासः सत्यवतीसुतः ।

पटे चित्रं इवार्पिते इति थ. पाठः ॥ ४ ॥

नृपं शयानं गाङ्गेयमिदमाह वचस्त्वरन् ॥ ५
राजन्प्रकृतिमापन्नः कुरुराजो युधिष्ठिरः ।
सहितो भ्रातृभिः सर्वैः पार्थिवैश्चानुयायिभिः॥ ६
उपास्ते त्वां नरव्याघ्र सह कृष्णेन धीमता ।
तमिमं पुरयानाय समनुज्ञातुमर्हसि ॥ ७
एवमुक्तो भगवता व्यासेन पृथिवीपतिः ।
युधिष्ठिरं सहामात्यमनुजज्ञे नदीसुतः ॥ ८
उवाच चैनं मधुरं नृपं शान्तनवो नृपः ।
प्रविशस्व पुरीं राजन्धर्मे च ध्रियतां मनः ॥ ९
यजस्व विविधैर्यज्ञैर्बह्वन्नैः स्वाप्तदक्षिणैः ।
ययातिरिव राजेन्द्र श्रद्धादमपुरःसरः ॥ १०
क्षत्रधर्मरतः पार्थ पितॄन्देवांश्च तर्पय
श्रेयसा योक्ष्यसे चैव व्येतु ते मानसो ज्वरः॥११
रञ्जयस्व प्रजाः सर्वाः प्रकृतीः परिसान्त्वय ।
सुहृदः फलसत्कारैरर्चयस्व यथार्हतः ॥ १२
अनु त्वां तात जीवन्तु मित्राणि सुहृदस्तथा ।
चैत्यस्थाने स्थितं वृक्षं फलवन्तमिव द्विजाः ॥१३
आगन्तव्यं च भवता समये मम पार्थिव ।
विनिवृत्ते दिनकरे प्रवृत्ते चोत्तरायणे ॥ १४
तथेत्युक्त्वा च कौन्तेयः सोभिवाद्य पितामहम् ।
प्रययौ सपरीवारो नगरं नागसाह्वयम् ॥ १५
धृतराष्ट्रं पुरस्कृत्य गान्धारीं च पतिव्रताम् ।
सह तैर्ऋषिभिः सर्वैर्भ्रातृभिः केशवेन च ॥ १६
पौरजानपदैश्चैव मन्त्रिवृद्धैश्च पार्थिव ।
प्रविवेश कुरुश्रेष्ठः पुरं वारणसाह्वयम् ॥ १७

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि द्विसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७२ ॥

समाप्तं दानधर्मपर्व ॥ १ ॥

# (अथ भीष्मस्वर्गारोहणपर्व ॥ २ ॥)

## त्रिसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७३ ॥

युधिष्ठिरेण भीष्मसंस्कारोपयोगिसंभारप्रस्थापनपूर्वकं कृष्णधृतराष्ट्रादिभिःसह भीष्मसमीपं प्रत्यागमनम् ॥ १ ॥ युधिष्ठिरेणाभिवादनपूर्वकं कृष्णाद्यागमनं निवेदितेन भीष्मेण स्वस्य कृष्णयाथात्म्यज्ञानप्रकाशनेन तत्प्रणामस्तुतिपूर्वकं व्यासकृष्णधृतराष्ट्रादिभ्यः स्वस्य प्राणोत्सर्गाभ्यनुज्ञानप्रार्थना ॥ २ ॥

वैशंपायन उवाच ।
ततः कुन्तीसुतो राजा पौरजानपदं जनम् ।
पूजयित्वा यथान्यायमनुजज्ञे गृहान्प्रति ॥ १
सान्त्वयामास नारीश्च हतपुत्रा हतेश्वराः ।
विपुलैरर्थदानैः स तदा पाण्डुसुतो नृपः ॥ २
सोभिषिक्तो महाप्राज्ञः प्राप्य राज्यं युधिष्ठिरः ।
अवस्थाप्य नरश्रेष्ठः सर्वाः स्वप्रकृतीस्तथा ॥ ३
द्विजेभ्यो बलमुख्येभ्यो नैगमेभ्यश्च सर्वशः ।
प्रतिगृह्याशिषो मुख्यास्तथा धर्मभृतांवरः ॥ ४
उषित्वा शर्वरीः श्रीमान्पञ्चाशन्नगरोत्तमे ।
समयं कौरवाग्र्यस्य सस्मार पुरुषर्षभः ॥ ५
स निर्ययौ गजपुराद्याजकैः परिवारितः ।
दृष्ट्वा निवृत्तमादित्यं प्रवृत्तं चोत्तरायणम् ॥ ६
घृतं माल्यं च गन्धांश्च क्षौमाणि च युधिष्ठिरः ।
चन्दनागरुमुख्यानि तथा कालागरूणि च ॥ ७
प्रस्थाप्य पूर्वं कौन्तेयो भीष्मसंस्करणाय वै ।
माल्यानि च वरार्हाणि रत्नानि विविधानि च ॥८
धृतराष्ट्रं पुरस्कृत्य गान्धारीं च यशस्विनीम् ।
मातरं च पृथां धीमान्भ्रातॄंश्च पुरुषर्षभान् ॥ ९
जनार्दनेनानुगतो विदुरेण च धीमता ।
युयुत्सुना च कौरव्यो युयुधानेन चाभिभोः॥ १०
महता राजभोगेन पारिबर्हेण संवृतः ।

तमिम पुनरागन्तुमिति थ. पाठः ॥ ७ ॥

द्विसप्तत्यधिकद्विशततमोऽध्याय. ॥ २७२ ॥

स्तूयमानो महातेजा भीष्मस्याग्नीननुव्रजन् ॥ ११
निश्चक्राम पुरात्तस्माद्यथा देवपतिस्तथा ।
आससाद कुरुक्षेत्रं ततः शान्तनवं नृपः ॥ १२
उपास्यमानं व्यासेन पाराशर्येण धीमता ।
नारदेन च राजर्षे देवलेनासितेन च ॥ १३
हतशिष्टैर्नृपैश्चान्यैर्नानादेशसमागतैः ।
रक्षिभिश्च महात्मानं रक्ष्यमाणं समन्ततः ॥ १४
शयानं वीरशयने ददर्श नृपतिस्ततः ।
ततो रथादवारोहद्भ्रातृभिः सह धर्मराट् ॥ १५
अभिवाद्याथ कौन्तेयः पितामहमरिंदमम् ।
द्वैपायनादीन्विप्रांश्च तैश्च प्रत्यभिनन्दितः ॥ १६
ऋत्विग्भिर्ब्रह्मकल्पैश्च भ्रातृभिः सह धर्मजः ।
आसाद्य शरतल्पस्थमृषिभिः परिवारितम् ॥ १७
अब्रवीद्भरतश्रेष्ठं धर्मराजो युधिष्ठिरः ।
भ्रातृभिः सह कौरव्यः शयानं निम्नगासुतम् ॥ १८
युधिष्ठिरोऽहं नृपते नमस्ते जाह्नवीसुत ।
शृणोषि चेन्महाबाहो ब्रूहि किं करवाणि ते ॥ १९
प्राप्तोऽस्मि समये राजन्नग्नीनादाय ते विभो ।
आचार्यान्ब्राह्मणांश्चैव ऋत्विजो भ्रातरश्च मे ॥ २०
पुत्रश्च ते महातेजा धृतराष्ट्रो जनेश्वरः ।
उपस्थितः सहामात्यो वासुदेवश्च वीर्यवान् ॥ २१
हतशिष्टाश्च राजानः सर्वे च कुरुजाङ्गलाः ।
तान्पश्य नरशार्दूल समुन्मीलय लोचने ॥ २२
यच्चेह किंचित्कर्तव्यं तत्सर्वं प्रापितं मया ।
यथोक्तं भवता काले सर्वमेव च तत्कृतम् ॥ २३
वैशंपायन उवाच ।
एवमुक्तस्तु गाङ्गेयः कुन्तीपुत्रेण धीमता ।
ददर्श भारतान्सर्वान्स्थितान्संपरिवार्य ह ॥ २४
ततश्चलवपुर्भीष्मः प्रगृह्य विपुलं भुजम् ।
ओघमेघस्वरो वाग्मी काले वचनमब्रवीत् ॥ २५
दिष्ट्या प्राप्तोऽसि कौन्तेय सहामात्यो युधिष्ठिर ।
परिवृत्तो हि भगवान्सहस्रांशुर्दिवाकरः ॥ २६
अष्टपञ्चाशतं रात्र्यः शयानस्याद्य मे गताः ।
शरेषु निशिताग्रेषु यथा वर्षशतं तथा ॥ २७
माघोऽयं समनुप्राप्तो मासः पुण्यो युधिष्ठिर ।
त्रिभागशेषः पक्षोऽयं शुक्लो भवितुमर्हति ॥ २८
एवमुक्त्वा तु गाङ्गेयो धर्मपुत्रं युधिष्ठिरम् ।
धृतराष्ट्रमथामन्त्र्य काले वचनमब्रवीत् ॥ २९
भीष्म उवाच ।
राजन्विदितधर्मोऽसि सुनिर्णीतार्थसंशयः ।
बहुश्रुता हि ते विप्रा बहवः पर्युपासिताः ॥ ३०
वेद शास्त्राणि सूक्ष्माणि धर्मांश्च मनुजेश्वर ।
वेदांश्च चतुरः सर्वान्षडङ्गैरुपबृंहितान् ॥ ३१
न शोचितव्यं कौरव्य भवितव्यं हि तत्तथा ।
श्रुतं देवरहस्यं ते कृष्णद्वैपायनादपि ॥ ३२
यथा पाण्डोः सुता राजंस्तथैव तव धर्मतः ।
तान्पालय स्थितो धर्मे गुरुशुश्रूषणे रतान् ॥ ३३
धर्मराजो हि शुद्धात्मा निदेशे स्थास्यते तव ।
आनृशंस्यपरं ह्येनं जानामि गुरुवत्सलम् ॥ ३४
तव पुत्रा दुरात्मानः क्रोधलोभपरायणाः ।
ईर्ष्याभिभूता दुर्वृत्तास्तान्न शोचितुमर्हसि ॥ ३५
वैशंपायन उवाच ।
एतावदुक्त्वा वचनं धृतराष्ट्रं मनीषिणम् ।
वासुदेवं महाबाहुमभ्यभाषत कौरवः ॥ ३६
भीष्म उवाच ।
भगवन्देवदेवेश सुरासुरनमस्कृत ।
त्रिविक्रम नमस्तुभ्यं शङ्खचक्रगदाधर ॥ ३७
वासुदेवो हिरण्यात्मा पुरुषः सविता विराट् ।
जीवभूतोऽनुरूपस्त्वं परमात्मा सनातनः ॥ ३८
त्वद्भक्तं त्वद्गतिं शान्तमुदारमपरिग्रहम् ।
त्रायस्व पुण्डरीकाक्ष पुरुषोत्तम नित्यशः ।
अनुजानीहि मां कृष्ण वैकुण्ठ पुरुषोत्तम ॥ ३९
रक्ष्याश्च ते पाण्डवेया भवान्येषां परायणम् ।
उक्तवानसि दुर्बुद्धिं मन्दं दुर्योधनं तदा ॥ ४०

मासः सौम्य इति झ. पाठः । सौम्यश्चान्द्रः । मासस्य चतुर्भागकरणे सार्धसप्ततिथेरेकैकभागत्वात् । अष्टम्यर्धस्यानतीतत्वेन प्रथमभागस्य विद्यमानत्वात् त्रिभागशेषो भवितुमर्हतीत्यर्थः । तेनाद्याष्टमीत्यर्थः ॥ २८ ॥ त्रिसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७३ ॥

यतः कृष्णस्ततो धर्मो यतो धर्मस्ततो जयः ।
वासुदेवेन तीर्थेन पुत्र संशाम्य पाण्डवैः ॥ ४१
संधानस्य परः कालस्तवेति च पुनःपुनः ।
न च मे तद्वचो मूढः कृतवान्स सुमन्दधीः ।
घातयित्वेह पृथिवीं ततः स निधनं गतः ॥४२
त्वां तु जानाम्यहं देवं पुराणमृषिसत्तमम् ।
नरेण सहितं देव बदर्यां सुचिरोषितम् ॥ ४३
तथा मे नारदः प्राह व्यासश्च सुमहातपाः ।
नरनारायणावेतौ संभूतौ मनुजेष्विति ॥ ४४
स मां त्वमनुजानीहि कृष्ण मोक्ष्ये कलेवरम् ।
त्वयाऽहं समनुज्ञातो गच्छेयं परमां गतिम् ॥ ४५
वासुदेव उवाच ।
अनुजानामि भीष्म त्वां वसून्प्राप्नुहि पार्थिव
न तेऽस्ति वृजिनं किंचिच्छुद्धात्मैश्वर्यसंयुतः॥४६
पितृभक्तोसि राजर्षे मार्कण्डेय इवापरः ।
तेन मृत्युस्तव वशे स्थितो भृत्य इवानतः ॥ ४७
वैशंपायन उवाच ।
एवमुक्तस्तु गाङ्गेयः पाण्डवानिदमब्रवीत् ।
धृतराष्ट्रमुखांश्चापि सर्वांश्च सुहृदस्तथा ॥ ४८
प्राणानुत्स्रष्टुमिच्छामि तत्रानुज्ञातुमर्हथ ।
सत्येषु यतितव्यं वः सत्यं हि परमं बलम् ॥ ४९
आनृशंस्यपरैर्भाव्यं सदैव नियतात्मभिः ।
ब्रह्मण्यैर्धर्मशीलैश्च तपोनित्यैश्च भारताः ॥ ५०
इत्युक्त्वा सुहृदः सर्वांस्तथा संपूज्य चैव ह ।
'धनं बहुविधं राजन्दत्त्वा नित्यं द्विजातिषु ।'
पुनरेवाब्रवीद्धीमान्युधिष्ठिरमिदं वचः ॥ ५१
ब्राह्मणाश्चैव ते नित्यं प्राज्ञाश्चैव विशेषतः ।
आचार्या ऋत्विजश्चैव पूजनीया जनाधिप ॥ ५२

॥ इति श्रीमन्महाभारते अनुशासनपर्वणि भीष्मस्वर्गारोहणपर्वणि त्रिसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७३ ॥

## चतुःसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७४ ॥

भीष्मेण भगवद्ध्यानपूर्वकं स्वशरीरमूर्धमध्योद्भेदनेन तेजो ज्वालारूपेण सर्वापरोक्षमाकाशप्रवेशनेन क्षणादन्तर्धानम् ॥ १ ॥ ततो धृतराष्ट्रयुधिष्ठिरादिभी राजवैभवेन चितारोपणेन विधिवदग्निना समुद्दीपनम् ॥ २ ॥ ततो गङ्गामवगाह्य कृतोदकेषु युधिष्ठिरादिषु मूर्तीभूय जलादुद्गत्य भीष्मंप्रति सकरुणं विलापेन शोचन्तीं गङ्गांप्रति कृष्णादिभिराश्वासनम्॥३॥

वैशंपायन उवाच ।
एवमुक्त्वा कुरून्सर्वान्भीष्मः शान्तनवस्तदा ।
तूष्णीं बभूव कौरव्यः स मुहूर्तमरिंदम ॥ १
धारयामास चात्मानं धारणासु यथाक्रमम् ।
तस्योर्ध्वमगमन्प्राणाः सन्निरुद्धा महात्मनः ॥ २
इदमाश्चर्यमासीच्च मध्ये तेषां महात्मनाम् ।
सहितैर्ऋषिभिः सर्वैस्तदा व्यासादिभिः प्रभो ॥३
यद्यन्मुञ्चति गात्रं हि स शन्तनुसुतस्तदा ।
तत्तद्विशल्यमभवद्योगयुक्तस्य वै क्रमात् ।
क्षणेन प्रेक्षतां तेषां विशल्यः सोऽभवत्तदा ॥ ४
तद्दृष्ट्वा विस्मिताः सर्वे वासुदेवपुरोगमाः ।
सह तैर्मुनिभिः सर्वैस्तदा व्यासादिभिर्नृप ॥ ५
सन्निरुद्धस्तु तेनात्मा सर्वेष्वायतनेषु च ।
जगाम भित्त्वा मूर्धानं दिवमभ्युत्पपात ह ॥ ६
देवदुन्दुभिनादश्च पुष्पवर्षैः सहाभवत् ।
सिद्धा ब्रह्मर्षयश्चैव साधुसाध्विति हर्षिताः ॥ ७
महोल्केव च भीष्मस्य मूर्धदेशाज्जनाधिप ।
निःसृत्याकाशमाविश्य क्षणेनान्तरधीयत ॥ ८
एवं स राजशार्दूल नृपः शान्तनवस्तदा ।
समयुज्यत लोकैः स्वैर्भरतानां कुलोद्वहः ॥ ९
ततस्त्वादाय दारूणि गन्धांश्च विविधान्बहून् ।
चितां चक्रुर्महात्मानः पाण्डवा विदुरस्तथा ।
युयुत्सुश्चापि कौरव्यं प्रेक्षकास्त्वितरेऽभवन् ॥ १०
युधिष्ठिरश्च गाङ्गेयं धृतराष्ट्रश्च दुःखितौ ।
छादयामासतुरुभौ क्षौमैर्माल्यैश्च कौरवम् ॥ ११
धारयामास तस्याथ युयुत्सुश्छत्रमुत्तमम् ।

समादधत्स्वमात्मानं धारणानुक्रमस्थितः । इति क. ध. पाठः ॥ २ ॥

चामरे व्यजने शुभ्रे भीमसेनार्जुनावुभौ ।
उष्णीषे परिगृह्णीतां माद्रीपुत्रावुभौ तथा ॥ १२
युधिष्ठिरेण सहितो धृतराष्ट्रश्च पादतः ।
वृद्धाः स्त्रियः कौरवाणां भीष्मं कुरुकुलोद्वहम् ।
तालवृन्तान्युपादाय पर्यवीजन्त सर्वशः ॥ १३
ततोऽस्य विधिवच्चक्रुः पितृमेधं महात्मनः
याजका जुहुवुश्चाग्निं जगुः सामानि सामगाः १४
ततश्चन्दनकाष्ठैश्च तथा कालीयकैरपि
कालागुरुप्रभृतिभिर्गन्धैश्चोच्चावचैस्तथा १५
समवच्छाद्य गाङ्गेयं संप्रज्वाल्य हुताशनम् ।
अपसव्यमकुर्वन्त धृतराष्ट्रमुखाश्चिताम् ॥ १६
संस्कृत्य च कुरुश्रेष्ठं गाङ्गेयं कुरुसत्तमाः ।
जग्मुर्भागीरथीं पुण्यामृषिजुष्टां कुरूद्वहाः ॥ १७
अनुगम्यमाना व्यासेन नारदेनासितेन च ।
कृष्णेन भरतस्त्रीभिर्ये च पौराः समागताः ॥ १८
उदकं चक्रिरे सर्वे गाङ्गेयस्य महात्मनः ।
विधिवत्क्षत्रियश्रेष्ठाः स च सर्वो जनस्तदा ॥ १९
ततो भागीरथी देवी तनयस्योदके कृते ।
उत्थाय सलिलात्तस्माद्रुदती शोकविह्वला ।
परिदेवयती तत्र कौरवानभ्यभाषत ॥ २०
निबोधत यथावृत्तमुच्यमानं मया नृपाः ।
राजवृत्तेन संपन्नः प्रज्ञयाभिजनेन च ।
सत्कर्ता कुरुवृद्धानां पितृभक्तो दृढव्रतः ॥ २१
जामदग्न्येन रामेण यः पुरा न पराजितः ।
दिव्यैरस्त्रैर्महावीर्यः स हतोऽद्य शिखण्डिना ॥ २२
अश्मसारमयं नूनं हृदयं मम पार्थिवाः ।
अपश्यन्त्याः प्रियं पुत्रं यन्न दीर्यति मेऽद्य वै ॥ २३
समेतं पार्थिवं क्षत्रं काशिपुर्यां स्वयंवरे ।
विजित्यैकरथेनाजौ कन्याश्चायं जहार ह ॥ २४
यस्य नास्ति बले तुल्यः पृथिव्यामपि कश्चन ।
हतं शिखण्डिना श्रुत्वा यन्न दीर्यति मे मनः ॥ २५
जामदग्न्यः कुरुक्षेत्रे युधि येन महात्मना ।
पीडितो नातियत्नेन स हतोऽद्य शिखण्डिना ॥ २६
एवंविधं बहु तदा विलपन्तीं महानदीम् ।
आश्वासयामास तदा साम्ना दामोदरो विभुः ॥ २७
समाश्वसिहि भद्रे त्वं मा शुचः शुभदर्शने ।
गतः स परमं लोकं तव पुत्रो न संशयः २८
वसुरेष महातेजाः शापदोषेण शोभने ।
मानुषत्वमनुप्राप्तो नैनं शोचितुमर्हसि ॥ २९
स एष क्षत्रधर्मेण युध्यमानो रणाजिरे ।
धनंजयेन निहतो नैष देवि शिखण्डिना ॥ ३०
भीष्मं हि कुरुशार्दूलमुद्यतेषुं महारणे ।
न शक्तः संयुगे हन्तुं साक्षादपि शतक्रतुः ॥ ३१
स्वच्छन्दतस्तव सुतो गतः स्वर्गं शुभानने ।
न शक्ता विनिहन्तुं हि रणे तं सर्वदेवताः ॥ ३२
तस्मान्मा त्वं सरिच्छ्रेष्ठे शोचस्व कुरुनन्दनम् ।
वसूनेष गतो देवि पुत्रस्ते विज्वरा भव ॥ ३३
वैशंपायन उवाच
इत्युक्ता सा तु कृष्णेन व्यासेन तु सरिद्वरा ।
त्यक्त्वा शोकं महाराज स्वं वार्यवततार ह ॥ ३४
सत्कृत्य ते तां सरितं ततः कृष्णमुखा नृप ।
अनुज्ञातास्तया सर्वे न्यवर्तन्त जनाधिपाः ॥ ३५

॥ इति श्रीमन्महाभारते शतसाहस्रिकायां संहितायां वैयासिक्यां अनुशासनपर्वणि भीष्मस्वर्गारोहणपर्वणि चतुःसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७४ ॥

## इति अनुशासनपर्व समाप्तम् ॥ १३ ॥

---

उष्णीषे किरीटशिरोवेष्टे ॥ १२ ॥ समर्थः कुरुवृद्धानामिति ट. थ. पाठः ॥ २१ ॥ दृष्ट्वाप्येवंविधं पुत्रं न दीर्यति सहस्रधेति क. ङ. थ. पाठः ॥ २३ ॥ अनुज्ञाप्य च ते सर्वे इति ट. थ. ध. पाठः ॥ ३५ ॥ चतुःसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७४ ॥

अतः परमाश्वमेधिकं पर्व भविष्यति ॥ १४ ॥
तस्यायमाद्यः श्लोकः ॥
वैशंपायन उवाच ।

कृतोदकं तु राजानं धृतराष्ट्रं युधिष्ठिरः ।
पुरस्कृत्य महाबाहुरुत्ताराकुलेन्द्रियः ॥ १

इदं अनुशासनपर्व कुंभघोणस्थेन टी. आर्. कृष्णाचार्येण टी. आर्. व्यासाचार्येण च मुंबय्यां निर्णयसागरमुद्रायन्त्रे मुद्रापितम्। शकाब्दाः १८३१ सन १९१०.

# SRIMANMAHABHARATAM

A NEW EDITION

MAINLY BASED ON

**THE SOUTH INDIAN TEXTS,**

With footnotes and Readings.

---

## ASHVAMEDHIKAPARVA XIV.

---

EDITED BY

T. R. KRISHNACHARYA & T. R. VYASACHARYA,

Proprietors, Madhva Vilas Book Depot, Kumbakonam.

---

*Printed by B. R. Ghanekar for the proprietors,*

*at Tukaram Javaji's "Nirnaya-sagar" Press,*

**BOMBAY.**

1910.

॥ श्रीः ॥

# श्रीमन्महाभारतम् ।

## सटिप्पणम् ।



## आश्वमेधिकपर्व १४.

एतच्च

कुम्भघोणस्थेन श्रीमन्मध्वविलासपुस्तकालयाधिपतिना

टी. आर्. कृष्णाचार्येण टी. आर्. व्यासाचार्येण च

अनेकेषां विदुषां साहाय्येन दाक्षिणात्यबहुकोशानुसारेण

संशोध्य

मुंबापुर्यां

जावजी दादाजी इत्येतेषां निर्णयसागरमुद्रणयन्त्रे मुद्रयित्वा प्रकाशितम् ।

शाके १८२१ सौम्यनामसंवत्सरे ।

श्रीः ।

# श्रीमन्महाभारतम् ।



## आश्वमेधिकपर्व १४ ।

### (अश्वमेधपर्व ॥ १ ॥)

### प्रथमोऽध्यायः ॥ १ ॥

गङ्गायां भीष्मायोदकदानानन्तरं बन्धुशोकविषण्णं युधिष्ठिरंप्रति धृतराष्ट्रेण समाश्वासनम् ॥ १ ॥ तथा विदुरवचनानादरेण स्वस्यैतादृशानर्थप्राप्तिकथनम् ॥ २ ॥

श्रीवेदव्यासाय नमः ।

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥ १

वैशंपायन उवाच ।

कृतोदकस्तु राजानं धृतराष्ट्रं युधिष्ठिरः ।
पुरस्कृत्य महाबाहुरुत्तताराकुलेन्द्रियः ॥ २
उत्तीर्य तु महाबाहुर्बाष्पव्याकुललोचनः ।
पपात तीरे गङ्गाया व्याधविद्ध इव द्विपः ॥ ३
तं सीदमानं जग्राह भीमः कृष्णेन चोदितः ।
मैवमित्यब्रवीच्चैनं कृष्णः परबलार्दनः ॥ ४
तमार्तं पतितं भूमौ श्वसन्तं च पुनः पुनः ।
ददृशुः पार्थिवा राजन्धर्मपुत्रं युधिष्ठिरम् ॥ ५
तं दृष्ट्वा दीनमनसं गतसत्वं नरेश्वरम् ।
भूयः शोकसमाविष्टाः पाण्डवाः समुपाविशन् ॥ ६
राजा तु धृतराष्ट्रस्तं तथा दीनो महाभुजम् ।
वाक्यमाह महाबुद्धिः प्रज्ञाचक्षुर्नरेश्वरम् ॥ ७
उत्तिष्ठ कुरुशार्दूल कुरु कार्यमनन्तरम् ।
क्षत्रधर्मेण कौन्तेय जितेयमवनी त्वया ॥ ८
भुङ्क्ष्व सार्धं भ्रातृभिस्तां सुहृद्भिश्च जनेश्वर ।
शोचितव्यं न पश्यामि त्वया धर्मभृतांवर ॥ ९
शोचितव्यं मया चैव गान्धार्या च महीपते ।
ययोः पुत्रशतं नष्टं स्वप्नलब्धं यथा धनम् ॥ १०
अश्रुत्वा हितकामस्य विदुरस्य महात्मनः ।
वाक्यानि सुमहार्थानि परितप्यामि दुर्मतिः ॥ ११
उक्तवान्विदुरो यन्मां धर्मात्मा दिव्यदर्शनः ।
दुर्योधनापराधेन कुलं ते विनशिष्यति ॥ १२
स्वस्ति चेदिच्छसे राजन्कुलस्य कुरु मे वचः ।
वध्यतामेष दुष्टात्मा मन्दो राजा सुयोधनः ॥ १३
कर्णश्च शकुनिश्चैव नैनं पश्यतु कर्हिचित् ।
द्यूतसङ्घातमप्येषामप्रमादेन वारय ॥ १४
अभिषेचय राजानं धर्मात्मानं युधिष्ठिरम् ।
स पालयिष्यति वशी धर्मेण पृथिवीमिमाम् ॥ १५
अथ नेच्छसि राजानं कुन्तीपुत्रं युधिष्ठिरम् ।
'विनाशमुपयास्यन्ति तव पुत्रा न संशयः ।'
मेढीभूतः स्वयं राज्यं प्रतिगृह्णीष्व पार्थिव ॥ १६
समं सर्वेषु भूतेषु वर्तमानं नराधिप ।
अनुजीवन्तु सर्वे त्वां ज्ञातयो ज्ञातिवर्धन ॥ १७
एवं ब्रुवति कौन्तेय विदुरे दीर्घदर्शिनि ।
दुर्योधनमहं पापमन्ववर्तं वृथामतिः ॥ १८

कृतोदक स्त्विति झ. पाठः ॥ १ ॥ उत्ततार गङ्गात इति शेषः ॥ २ ॥ प्रथमोऽध्यायः ॥ १ ॥

अश्रुत्वा तस्य धीरस्य वाक्यानि मधुराण्यहम् । फलं प्राप्य महद्दुःखं निमग्नः शोकसागरे ॥ १९
वृद्धौ हि तेऽद्य पितरौ पश्य नौ दुःखितौ नृप न शोचितव्यं भवता पश्यामीह जनाधिप ॥ २०

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अश्वमेधपर्वणि प्रथमोऽध्यायः ॥ १ ॥

## द्वितीयोऽध्यायः ॥ २ ॥

धृतराष्ट्रेण समाश्वासनेपि तूष्णीं तिष्ठन्तो युधिष्ठिरस्य कृष्णेन परिसान्त्वनम् ॥ १ ॥ पुनर्भीष्मद्रोणकर्णमारणानुस्मरणविषादेनारण्यगमनाय कृष्णानुज्ञानमभ्काङ्क्षमाणस्य युधिष्ठिरस्य व्यासेन परिसान्त्वनम् ॥ २ ॥

---

वैशंपायन उवाच
एवमुक्तस्तु राजाऽसौ धृतराष्ट्रेण धीमता ।
तूर्णींबभूव मेधावी तमुवाचाथ केशवः ॥ १
अतीव मनसा शोकः क्रियमाणो जनाधिप
संतापयति चैतस्य पूर्वप्रेतान्पितामहान् ॥
यजस्व विविधैर्यज्ञैर्बहुभिः स्वाप्तदक्षिणैः ।
देवांस्तर्पय सोमेन स्वधया च पितॄनपि ॥ ३
अतिथीनन्नपानेन कामैरन्यैरकिंचनान् ।
'त्वद्विधस्य महाबुद्धे नैतदद्योपपद्यते ।'
विदितं वेदितव्यं ते कर्तव्यमपि ते कृतम् ॥ ४
श्रुताश्च राजधर्मास्ते भीष्माद्भागीरथीसुतात् ।
कृष्णद्वैपायनाच्चैव नारदाद्विदुरात्तथा ॥ ५
नेमामर्हसि मूढानां वृत्तिं त्वमनुवर्तितुम् ।
पितृपैतामहं वृत्तमास्थाय धुरमुद्वह ॥ ६
युक्तं हि यशसा क्षात्रं स्वर्गं प्राप्तुमसंशयम् ।
नहि कश्चिद्धि शूराणां निहतोऽत्र पराङ्मुखः ॥ ७
त्यज शोकं महाराज भवितव्यं हि तत्तथा ।
न शक्यास्ते पुनर्द्रष्टुं त्वया येऽस्मिन्रणे हताः ॥ ८
एतावदुक्त्वा गोविन्दो धर्मराजं युधिष्ठिरम् ।
विरराम महातेजास्तमुवाच युधिष्ठिरः ॥ ९
गोविन्द मयि या प्रीतिस्तव सा विदिता मम ।
सौहृदेन तथा प्रेम्णा सदा मय्यनुकम्पसे ॥ १०
प्रियं तु मे स्यात्सुमहत्कृतं चक्रगदाधर ।
श्रीमन्प्रीतेन मनसा सर्वं यादवनन्दन ॥ ११
यदि मामनुजानीयाद्भवान्गन्तुं तपोवनम् ।
'कृतकृत्यो भविष्यामि इति मे निश्चिता मतिः' १२
न हि शान्तिं प्रपश्यामि पातयित्वा पितामहम् ।
'नृशंसः पुरुषव्याघ्रं गुरुं वीर्यबलान्वितम् ।'
कर्णं च पुरुषव्याघ्रं संग्रामेष्वपलायिनम् ॥ १३
कर्मणा येन मुच्येयमस्मात्क्रूरादरिंदम ।
कर्मणा तद्विधत्स्वेह येन शुध्यति मे मनः ॥ १४
तमेवंवादिनं पार्थं व्यासः प्रोवाच धर्मवित् ।
सान्त्वयन्सुमहातेजाः शुभं वचनमर्थवत् ॥ १५
सुकृता ते मतिस्तात पुनर्बाल्येन मुह्यसे ।
किमाकाशे वयं सर्वे प्रलपामो मुहुर्मुहुः ॥ १६
विदिताः क्षत्रधर्मास्ते येषां युद्धेन जीविका ।
तथा प्रवृत्तो नृपतिर्नाधिबन्धेन युज्यसे ॥ १७
मोक्षधर्माश्च निखिला याथातथ्येन ते श्रुताः ।
'यथा वै कामजां मायां परित्यक्तुं त्वमर्हसि ॥' १८
असकृच्चापि संदेहाश्छिन्नास्ते कामजा मया ।
अश्रद्दधानो दुर्मेधा लुप्तस्मृतिरसि ध्रुवम् ॥ १९
मैवं भव न ते युक्तमिदमज्ञानमीदृशम् ॥ २०
प्रायश्चित्तानि सर्वाणि विदितानि च तेऽनघ ।
राजधर्माश्च ते सर्वे दानधर्माश्च ते श्रुताः ॥ २१
स कथं सर्वधर्मज्ञः सर्वागमविशारदः ।
परिमुह्यसि भूयस्त्वमज्ञानादिव भारत ॥ २२

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अश्वमेधपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

---

मुह्यसे इति क.ट. थ. पाठ. ॥ १६ ॥

द्वितीयोऽध्यायः ॥ २ ॥

## तृतीयोऽध्यायः ॥ ३ ॥

व्यासेन युधिष्ठिरंप्रति पुरुषकर्मणामीश्वरप्रेरणायत्ततया दोषानापादकत्वकथनपूर्वकं तदभ्युपगमेनापि पापापनोदायाश्वमेधादिविधानम् ॥ १ ॥ युधिष्ठिरेण स्वस्य तावद्द्रव्याभावनिवेदने व्यासेन तंप्रति हिमवति गिरौ विद्यमानमरुत्तयागावशिष्टद्रव्यानयनेनाश्वमेधकरणचोदना ॥ २ ॥

व्यास उवाच
युधिष्ठिर तव प्रज्ञा न सम्यगिति मे मतिः ।
न हि कश्चित्स्वयं मर्त्यः स्ववशः कुरुते क्रियाम् ॥ १
ईश्वरेण च युक्तोऽयं साध्वसाधु च मानवः
करोत्यसुकरं कर्म तत्र का परिदेवना ॥
आत्मानं मन्यसे चाथ पापकर्माणमन्ततः ।
शृणु तत्र यथा पापमपकृष्येत भारत ॥
तपोभिः क्रतुभिश्चैव दानेन च युधिष्ठिर ।
तरन्ति नित्यं पुरुषा ये स्म पापानि कुर्वते ॥ ४
यज्ञेन तपसा चैव दानेन च नराधिप ।
पूयन्ते नरशार्दूल नरा दुष्कृतकारिणः ॥ ५
असुराश्च सुराश्चैव पुण्यहेतोर्मखक्रियाम् ।
प्रवर्तन्ते महात्मानस्तस्माद्यज्ञः परायणम् ॥ ६
यज्ञैरेव महात्मानो बभूवुरधिकाः सुराः ।
ततो देवाः क्रियावन्तो दानवानभ्यधर्षयन् ॥ ७
राजसूयाश्वमेधौ च सर्वमेधं च भारत ।
नरमेधं च नृपते त्वमाहर युधिष्ठिर ॥ ८
यजस्व वाजिमेधेन विधिवद्दक्षिणावता ।
बहुकामान्नवित्तेन रामो दाशरथिर्यथा ॥ ९
यथा च भरतो राजा दौष्यन्तिः पृथिवीपतिः ।
शाकुन्तलो महावीर्यस्तव पूर्वपितामहः ॥ १०
युधिष्ठिर उवाच ।
असंशयं वाजिमेधः पारयेत्पृथिवीमपि ।
अभिप्रायस्तु मे कश्चित्तं त्वं श्रोतुमिहार्हसि ॥ ११
इमं ज्ञातिवधं कृत्वा सुमहान्तं द्विजोत्तम ।
'अहमाराधयिष्यामि कथं शोकपरायणः ।'
दानमल्पं न शक्नोमि दातुं वित्तं च नास्ति मे ॥ १२
न तु बालानिमान्दीनानुत्सहे वसु याचितुम्
तथैवाद्रविणान्कृच्छ्रे वर्तमानान्नृपात्मजान् ॥ १३
स्वयं विनाश्य पृथिवीं यज्ञार्थे द्विजसत्तम ।
करमाहारयिष्यामि कथं शोकपरायणः ॥ १४
दुर्योधनापराधेन वसुधायां नराधिपाः ।
प्रनष्टा योजयित्वाऽस्मानकीर्त्या मुनिसत्तम ॥ १५
दुर्योधनेन पृथिवी क्षपिता जयकारणात् ।
कोशश्चापि विशीर्णोऽसौ धार्तराष्ट्रस्य दुर्मतेः ॥ १६
पृथिवी दक्षिणा चात्र वाजिमेधे महाक्रतौ ।
विद्वद्भिः परिदृष्टोऽयं शिष्टो विधिविपर्ययः ॥ १७
न च प्रतिनिधिं कर्तुं चिकीर्षामि तपोधन ।
अत्र मे भगवन्सम्यक्साचिव्यं कर्तुमर्हसि ॥ १८
एवमुक्तस्तु पार्थेन कृष्णद्वैपायनस्तदा ।
मुहूर्तमनुसंचिन्त्य धर्मराजानमब्रवीत् ॥ १९
कोशश्चापि विशीर्णोऽयं परिपूर्णो भविष्यति ।
विद्यते द्रविणं पार्थ गिरौ हिमवति स्थितम् ॥ २०
उत्सृष्टं ब्राह्मणैर्यज्ञे मरुत्तस्य महीपते ।
तदानयस्व कौन्तेय पर्याप्तं तद्भविष्यति ॥ २१
युधिष्ठिर उवाच ।
कथं यज्ञे मरुत्तस्य द्रविणं तत्समाचितम् ।
कस्मिंश्च काले स नृपो बभूव वदतांवर ॥ २२
व्यास उवाच ।
यदि शुश्रूषसे पार्थ शृणु कारंधमं नृपम् ।
यस्मिन्काले महावीर्यः स राजाऽऽसीन्महाधनः ॥ २३

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अश्वमेधपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

प्रतिनिधिमनुकल्पम् ॥ १८ ॥

तृतीयोऽध्यायः ॥ ३ ॥

## चतुर्थोऽध्यायः ॥ ४ ॥

व्यासेन युधिष्ठिरंप्रति संवर्तमरुत्तीयोपाख्यानकथनारम्भः ॥ १ ॥ मरुत्तेन राज्ञा हिमवदुत्तरपार्श्वे सौवर्णैरेव ण्डाद्युपकरणैर्यज्ञारम्भः ॥ २ ॥

युधिष्ठिर उवाच ।
शुश्रूषे तस्य धर्मज्ञ राजर्षेः परिकीर्तनम् ।
द्वैपायन मरुत्तस्य कथां प्रब्रूहि मेऽनघ ॥ १
व्यास उवाच ।
आसीत्कृतयुगे तात मनुर्दण्डधरः प्रभुः ।
तस्य पुत्रो महेष्वासः प्रजातिरभवन्नृपः ॥ २
प्रजातेरभवत्पुत्रः क्षुत इत्यभिविश्रुतः ।
क्षुतस्य पुत्र इक्ष्वाकुर्महीपालोऽभवत्प्रभुः ॥ ३
तस्य पुत्रशतं राजन्नासीत्परमधार्मिकम् ।
तांस्तु सर्वान्महीपालानिक्ष्वाकुरकरोत्प्रभुः ॥ ४
तेषां ज्येष्ठस्तु विंशोऽभूत्प्रतिमानं धनुष्मताम् ।
विंशस्य पुत्रः कल्याणो विविंशो नाम भारत ॥ ५
विविंशस्य सुता राजन्बभूवुर्दश पञ्च च ।
सर्वे धनुषि विक्रान्ता ब्रह्मण्याः सत्यवादिनः ॥ ६
दानधर्मरताः शान्ताः सततं प्रियवादिनः ।
तेषां ज्येष्ठः खनीनेत्रः स तान्सर्वानपीडयत् ॥ ७
खनीनेत्रस्तु विक्रान्तो जित्वा राज्यमकण्टकम् ।
नाशकद्रक्षितुं राज्यं नान्वरज्यन्त तं प्रजाः ॥ ८
तमपास्य च तद्राज्ये तस्य पुत्रं सुवर्चसम् ।
अभ्यषिञ्चन्त राजेन्द्र मुदिता ह्यभवंस्तदा ॥ ९
स पितुर्विक्रियां दृष्ट्वा राज्यान्निरसनं च तत् ।
नियतो वर्तयामास प्रजाहितचिकीर्षया ॥ १०
ब्रह्मण्यः सत्यवादी च शुचिः शमदमान्वितः ।
प्रजास्तं चान्वरज्यन्त धर्मनित्यं मनस्विनम् ॥ ११
तस्य धर्मप्रवृत्तस्य व्यशीर्यत्कोशवाहनम् ।
तं क्षीणकोशं सामन्ताः समन्तात्पर्यपीडयन् १२
स पीड्यमानो बहुभिः क्षीणकोशाश्ववाहनः ।
आर्तिमार्च्छत्परां राजा सह भृत्यैः पुरेण च ॥ १३
न चैनमभिहन्तुं ते शक्नुवन्ति बलक्षये ।
सम्यग्वृत्तो हि राजा स धर्मनित्यो युधिष्ठिर ॥ १४
यदा तु परमामार्तिं गतोऽसौ सपुरो नृपः ।
ततः प्रदध्मौ स करं प्रादुरासीत्ततो बलम् ॥ १५
ततस्तानजयत्सर्वान्प्रातिसीमान्नराधिपान् ।
एतस्मात्कारणाद्राजन्विश्रुतः स करंधमः ॥ १६
आवीक्षित्तस्य पुत्रोऽभूत्त्रेतायुगमुखे पुरा ।
इन्द्रादनवरः श्रीमान्देवैरपि सुदुर्जयः ॥ १७
'कारंधम इति ख्यातो बभूव जगतीपतिः ।'
तस्य सर्वे महीपाला वर्तन्ते स्म वशे तदा ।
स हि सम्राडभूत्तेषां वृत्तेन च बलेन च ॥ १८
अविक्षिन्नाम धर्मात्मा शौर्येणेन्द्रसमोऽभवत् ।
यज्ञशीलो धर्मरतिर्धृतिमान्संयतेन्द्रियः ॥ १९
तेजसाऽऽदित्यसदृशः क्षमया पृथिवीसमः ।
बृहस्पतिसमो बुद्ध्या हिमवानिव सुस्थिरः ॥ २०
कर्मणा मनसा वाचा दमेन प्रशमेन च ।
मनांस्याराधयामास प्रजानां स महीपतिः ॥ २१
य ईजे हयमेधानां शतेन विधिवत्प्रभुः ।
याजयामास यं विद्वान्स्वयमेवाङ्गिराः प्रभुः ॥ २२
तस्य पुत्रोऽतिचक्राम पितरं गुणवत्तया ।
मरुत्तो नाम धर्मज्ञश्चक्रवर्ती महायशाः ।
नागायुतसमप्राणः साक्षाद्विष्णुरिवापरः ॥ २३
स यक्ष्यमाणो धर्मात्मा शातकुम्भमयान्युत ।
कारयामास शुभ्राणि भाजनानि सहस्रशः ॥ २४
मेरुं पर्वतमासाद्य हिमवत्पार्श्व उत्तरे ।
काञ्चनः सुमहान्पादस्तत्र कर्म चकार सः ॥ २५
ततः कुण्डानि पात्रीश्च पिठराण्यासनानि च ।
चक्रुः सुवर्णकर्तारो येषां सङ्ख्या न विद्यते ॥ २६
तस्यैव च समीपे तु यज्ञवाटो बभूव ह ।

शुश्रूषे श्रोतुमिच्छामि ॥ १ ॥ पूर्वजानां महीपतिरिति° क. थ. पाठः ॥ २१ ॥ दैव तत्र सम्पासाद्येति क. थ. पाठः ॥ २५ ॥

चतुर्थोऽध्यायः ॥ ४ ॥

ईजे तत्र स धर्मात्मा विधिवत्पृथिवीपतिः । मरुत्तः सहितैः सर्वैः प्रजापालैर्नराधिपः ॥ २७

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अश्वमेधपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥

## पञ्चमोऽध्यायः ॥ ५ ॥

अङ्गिरसः पुत्रेण संवर्तेनाकारणवैरिणः स्वाग्रजन्मनो बृहस्पतेरुपद्रवासहनेन सर्वस्वत्यागपूर्वकमरण्यप्रवेशः ॥ १ ॥ इन्द्रेण स्वातिशायिनि मरुत्ते राजनि स्पर्धया बृहस्पतिसाचिव्येन ततोऽप्यतिशयलिप्सया मरुत्तपुरोहितस्य बृहस्पतेर्भेदोपायेन वशीकरणम् ॥ २ ॥ बृहस्पतिनेन्द्रंप्रति मरुत्तस्य स्वेनायाजनप्रतिज्ञानम् ॥ ३ ॥

युधिष्ठिर उवाच ।
कथंवीर्यः समभवत्स राजा ददतांवरः ।
कथं च जातरूपेण समयुज्यत वै नृपः ॥ १
क्व च तत्सांप्रतं द्रव्यं भगवन्नवतिष्ठते ।
कथं च शक्यमस्माभिस्तदवाप्तुं तपोधन ॥ २
व्यास उवाच ।
असुराश्चैवं देवाश्च दक्षस्यासन्प्रजापतेः ।
अपत्यं बहुलं तात तेऽस्पर्धन्त परस्परम् ॥ ३
तथैवाङ्गिरसः पुत्रौ पितृतुल्यौ बभूवतुः ।
बृहस्पतिर्बृहत्तेजाः संवर्तश्च तपोधनः ॥ ४
तावपि स्पर्धिनौ राजन्पृथगास्तां परस्परम् ।
बृहस्पतिः स संवर्तं बाधते स्म पुनःपुनः ॥ ५
स बाध्यमानः सततं भ्रात्रा ज्येष्ठेन भारत ।
अर्थानुत्सृज्य दिग्वासा वने वासमरोचयत् ॥ ६
वासवोऽप्यसुरान्सर्वान्विजित्य च निपात्य च ।
इन्द्रत्वं प्राप्य लोकेषु ततो वव्रे पुरोहितम् ॥ ७
पुत्रमङ्गिरसो ज्येष्ठं विप्रज्येष्ठं बृहस्पतिम् ।
याज्यस्त्वङ्गिरसः पूर्वमासीद्राजा करंधमः ॥ ८
वीर्येणाप्रतिमो लोके वृत्तेन च बलेन च ।
शतक्रतुरिवौजस्वी धर्मात्मा संशितव्रतः ॥ ९
वाहनं यस्य योधाश्च मित्राणि विविधानि च ।
शयनानि च मुख्यानि महार्हाणि च सर्वशः ॥ १०
ध्यानादेवाभवद्राजन्मुखवातेन सर्वशः ।
स गुणैः पार्थिवान्सर्वान्वशे चक्रे नराधिपः ॥ ११
संजीव्य कालमिष्टं च सशरीरो दिवं गतः ।
बभूव तस्य पुत्रस्तु ययातिरिव धर्मवित् ॥ १२
अविक्षिन्नाम शत्रुंजित्स वशे कृतवान्महीम् ।
विक्रमेण गुणैश्चैव पितेवासीत्स पार्थिवः ॥ १३
तस्य वासवतुल्योऽभून्मरुत्तो नाम वीर्यवान् ।
पुत्रस्तमनुरक्ताऽभूत्पृथिवी सागराम्बरा ॥ १४
स्पर्धते स स्म सततं देवराजेन नित्यदा ।
वासवोऽपि मरुत्तेन स्पर्धते पाण्डुनन्दन ॥ १५
शुचिः स गुणवानासीन्मरुत्तः पृथिवीपतिः ।
यतमानोपि यं शक्रो न विशेषयति स्म ह ॥ १६
सोऽशक्नुवन्विशेषाय समाहूय बृहस्पतिम् ।
उवाचेदं वचो देवैः सहितो हरिवाहनः ॥ १७
बृहस्पते मरुत्तस्य मा स्म कार्षीः कथंचन ।
दैवं कर्माथ पित्र्यं वा कर्तासि मम चेत्प्रियम् १८
अहं हि त्रिषु लोकेषु सुराणां च बृहस्पते ।
इन्द्रत्वं प्राप्तवानेको मरुत्तस्तु महीपतिः ॥ १९
कथं ह्यमर्त्यं ब्रह्मंस्त्वं याजयित्वा सुराधिपम् ।
याजयेर्मृत्युसंयुक्तं मरुत्तमविशङ्कया ॥ २०
मां वा वृणीष्व भद्रं ते मरुत्तं वा महीपतिम् ।
परित्यज्य मरुत्तं वा यथाजोषं भजस्व माम् ॥ २१
एवमुक्तः स कौरव्य देवराज्ञा बृहस्पतिः ।
मुहूर्तमिव संचिन्त्य देवराजानमब्रवीत् ॥ २२
त्वं भूतानामधिपतिस्त्वयि लोकाः प्रतिष्ठिताः ।
नमुचेर्विश्वरूपस्य निहन्ता त्वं बलस्य च ॥ २३
त्वमाजहर्थ देवानामेको वीरश्रियं पराम् ।
त्वं बिभर्षि भुवं द्यां च सदैव बलसूदन ॥ २४
पौरोहित्यं कथं कृत्वा तव देवगणेश्वर ।
याजयेयमहं मर्त्यं मरुत्तं पाकशासन ॥ २५
समाश्वसिहि देवेन्द्र नाहं मर्त्यस्य कर्हिचित् ।

ग्रहीष्यामि स्रुवं यज्ञे शृणु चेदं वचो मम ॥ २६
हिरण्यरेता नोष्णः स्यात्परिवर्तेत मेदिनी ।
भासं तु न रविः कुर्यान्न तु सत्यं चलेन्मयि ॥ २७

व्यास उवाच ।
बृहस्पतिवचः श्रुत्वा शक्रो विगतमत्सरः ।
प्रशस्यैनं विवेशाथ स्वमेव भवनं तदा ॥ २८

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अश्वमेधपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥

## षष्ठोऽध्यायः ॥ ६ ॥

बृहस्पतिना इन्द्रे स्वेन मरुत्तस्यायाजनप्रतिज्ञानश्रवणामर्षिणा मरुत्तेन स्वयाजनप्रार्थने तत्प्रत्याख्यानम् ॥ १ ॥ ततः प्रतिनिवृत्तस्य मरुत्तस्य मध्येमार्गं नारदसमागमः ॥ २ ॥ नारदचोदनया मरुत्तेन वाराणसीद्वारे स्वेन स्थापितकुणपावलोकनेन पलायमानं संवर्तं प्रत्यनुगमनम् ॥३॥ संवर्तेन तत्प्रतिनिवर्तनाय पांसुकर्दमप्रक्षेपेप्यनिवर्तमानं तमवलोक्य विजने न्यग्रोधमूले समुपवेशः ॥ ४ ॥

व्यास उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
बृहस्पतेश्च संवादं मरुत्तस्य च धीमतः ॥ १
देवराजस्य समयं कृतमाङ्गिरसेन ह ।
श्रुत्वा मरुत्तो नृपतिर्मन्युमाहारयत्परम् ॥ २
संकल्प्य मनसा यज्ञं करंधमसुतात्मजः ।
बृहस्पतिमुपागम्य वाग्मी वचनमब्रवीत् ॥ ३
भगवन्यन्मया पूर्वमभिगम्य तपोधन ।
कृतोऽभिसन्धिर्यज्ञस्य भवतो वचनाद्गुरो ॥ ४
तमहं यष्टुमिच्छामि संभाराः संभृताश्च मे ।
याज्योस्मि भवतः साधो तत्प्राप्नुहि विधत्स्व च ५
बृहस्पतिरुवाच ।
न कामये याजयितुं त्वामहं पृथिवीपते ।
वृतोस्मि देवराजेन प्रतिज्ञातं च तस्य मे ॥ ६
मरुत्त उवाच ।
पित्र्यमस्मि तव क्षेत्रं बहुमन्ये च ते भृशम् ।
तवास्मि याज्यतां प्राप्तो भजमानं भजस्व माम् ॥ ७
बृहस्पतिरुवाच ।
अमर्त्यं याजयित्वाऽहं याजयिष्ये कथं नरम् ।
मरुत्त गच्छ वा मा वा निवृत्तोस्म्यद्य याजनात् ८
न त्वां याजयितास्म्यद्य वृणु यं त्वमिहेच्छसि ।
उपाध्यायं महाबाहो यस्ते यज्ञं करिष्यति ॥ ९

व्यास उवाच ।
एवमुक्तस्तु नृपतिर्मरुत्तो व्रीडितोऽभवत् ।
प्रत्यागच्छन्सुसंविग्नो ददर्श पथि नारदम् ॥ १०
देवर्षिणा समागम्य नारदेन स पार्थिवः ।
विधिवत्प्राञ्जलिस्तस्थावथैनं नारदोऽब्रवीत् ॥ ११
राजर्षे नातिहृष्टोसि कच्चित्क्षेमं तवानघ ।
क्व गतोसि कुतश्चेदमप्रीतिस्थानमागतम् ॥ १२
श्रोतव्यं चेन्मया राजन्ब्रूहि मे पार्थिवर्षभ ।
व्यपनेष्यामि ते मन्युं सर्वयत्नैर्नराधिप ॥ १३
एवमुक्तो मरुत्तः स नारदेन महर्षिणा ।
विप्रलम्भमुपाध्यायात्सर्वज्ञे तं न्यवेदयत् ॥ १४
मरुत्त उवाच ।
गतोस्म्यङ्गिरसः पुत्रं देवाचार्यं बृहस्पतिम् ।
यज्ञार्थमृत्विजं द्रष्टुं स च मां नाभ्यनन्दत ॥ १५
प्रत्याख्यातश्च तेनाहं जीवितुं नाद्य कामये ।
परित्यक्तश्च गुरुणा दूषितश्चास्मि नारद ॥ १६
व्यास उवाच ।
एवमुक्तस्तु राज्ञा स नारदः प्रत्युवाच ह ।
आविक्षितं महाराज वाचा संजीवयन्निव ॥ १७
राजन्नङ्गिरसः पुत्रः संवर्तो नाम धार्मिकः ।
चङ्क्रमीति दिशः सर्वा दिग्वासा मोहयन्प्रजाः १८
तं गच्छ यदि याज्यं त्वां न वाञ्छति बृहस्पतिः ।
प्रसन्नस्त्वां महातेजाः संवर्तो याजयिष्यति ॥ १९

मन्यु दैन्यम् ॥ १३ ॥

मरुत्त उवाच ।
संजीवितोऽहं भवता वाक्येनानेन नारद ।
पश्येयं क नु संवर्तं शंस मे वदतांवर ॥ २०
कथं च तस्मै वर्तेयं कथं मां न परित्यजेत् ।
प्रत्याख्यातश्च तेनापि नाहं जीवितुमुत्सहे ॥ २१
नारद उवाच ।
उन्मत्तवेषं बिभ्रत्स चङ्क्रमीति यथासुखम् ।
वाराणसीं तु नगरीमभीक्ष्णमुपसेवते ॥ २२
तस्या द्वारं समासाद्य न्यसेथाः कुणपं क्वचित् ।
तं दृष्ट्वा यो निवर्तेत संवर्तः स महीपते ॥ २३
तं पृष्ठतोऽनुगच्छेथा यत्र गच्छेत्स वीर्यवान् ।
तमेकान्ते समासाद्य प्राञ्जलिः शरणं व्रजेः ॥ २४
पृच्छेत्त्वां यदि केनाहं तवाख्यात इति स्म ह ।
ब्रूयास्त्वं नारदेनेति स कुत्र इति शत्रुहन् ॥ २५
स चेत्त्वामनुयुञ्जीत ममानुगमनेप्सया ।
शंसेथा वह्निमारूढं मामपि त्वमशङ्कया ॥ २६

व्यास उवाच ।
स तथेति प्रतिश्रुत्य पूजयित्वा च नारदम् ।
अभ्यनुज्ञाय राजर्षिर्ययौ वाराणसीं पुरीम् ॥ २७
तत्र गत्वा यथोक्तं स पुर्या द्वारे महायशाः ।
कुणपं स्थापयामास नारदस्य वचः स्मरन् ॥ २८
यौगपद्येन विप्रश्च पुरीद्वारमथाविशत् ।
ततः स कुणपं दृष्ट्वा सहसा संन्यवर्तत ॥ २९
स तं निवृत्तमालक्ष्य प्राञ्जलिः पृष्ठतोऽन्वगात् ।
आविक्षितो महीपालः संवर्तमुपशिक्षितुम् ॥ ३०
स च तं विजने दृष्ट्वा पांसुभिः कर्दमेन च ।
श्लेष्मणा चैव राजानं ष्ठीवनैश्च समाकिरत् ॥ ३१
स तथा बाध्यमानो वै संवर्तेन महीपतिः ।
अन्वगादेव तमृषिं प्राञ्जलिः संप्रसादयन् ॥ ३२
ततो निवर्त्य संवर्तः परिश्रान्त उपाविशत् ।
शीतलच्छायमासाद्य न्यग्रोधं बहुशाखिनम् ॥ ३३

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अश्वमेधपर्वणि षष्ठोऽध्यायः ॥ ६ ॥

## सप्तमोऽध्यायः ॥ ७ ॥

संवर्तमरुत्तसंवादः ॥ १ ॥ संवर्तेन समयबन्धनपूर्वकं मरुत्तंप्रति याजनप्रतिज्ञानम् ॥ २ ॥

संवर्त उवाच ।
कथमस्मि त्वया ज्ञातः केन वा कथितोस्मि ते ।
एतदाचक्ष्व मे तत्त्वमिच्छसे चेन्मम प्रियम् ॥ १
सत्यं ते ब्रुवतः सर्वे संपत्स्यन्ते मनोरथाः ।
मिथ्या च ब्रुवतो मूर्धा शतधा ते स्फुटिष्यति २
मरुत्त उवाच ।
नारदेन भवान्मह्यमाख्यातो ह्यटता पथि ।
गुरुपुत्रो ममेति त्वं ततो मे प्रीतिरुत्तमा ॥ ३
संवर्त उवाच ।
सत्यमेतद्भवानाह स मां जानाति सत्रिणम् ।
कथयस्व तदेतन्मे क नु संप्रति नारदः ॥ ४

मरुत्त उवाच ।
भवन्तं कथयित्वा तु मम देवर्षिसत्तमः ।
ततो मामभ्यनुज्ञाय प्रविष्टो हव्यवाहनम् ॥
व्यास उवाच ।
श्रुत्वा तु पार्थिवस्यैतत्संवर्तः प्रमुदं गतः ।
एतावदहमप्येवं शक्नुयामिति सोऽब्रवीत् ॥
ततो मरुत्तमुन्मत्तो वाचा निर्भर्त्सयन्निव ।
रूक्षया ब्राह्मणो राजन्पुनःपुनरथाब्रवीत् ॥
वातप्रधानेन मया स्वचित्तवशवर्तिना ।
एवं विकृतरूपेण कथं याजितुमिच्छसि ॥
भ्राता मम समर्थश्च वासवेन च संगतः ।

मे सत्यं जीवितं चेत्प्रियं तवेति क. थ. पाठः ॥ १ ॥ सत्रिणं कपटवेषच्छन्नम् ॥ ४ ॥ अहमप्येनं कुर्यामिति तमब्रवीदिति क. थ. पाठ ॥ ६ ॥ मधुप्रयोगदानेन स्वचित्तपरिवर्तिनेति क. थ. पाठः ॥ ८ ॥

वर्तते याजने चैव तेन कर्माणि कारय ॥ ९
गार्हस्थ्यं चैव याज्याश्च सर्वा गृह्याश्च देवताः ।
पूर्वजेन ममाक्षिप्तं शरीरं वर्जितं त्विदम् ॥ १०
नाहं तेनाननुज्ञातस्त्वामाविक्षित कर्हिचित् ।
याजयेयं कथंचिद्वै स हि पूज्यतमो मम ॥ ११
स त्वं बृहस्पतिं गच्छ तमनुज्ञाप्य चाव्रज ।
ततोऽहं याजयिष्ये त्वां यदि यष्टुमिहेच्छसि ॥ १२
मरुत्त उवाच ।
बृहस्पतिं गतः पूर्वमहं संवर्त तच्छृणु ।
न मां कामयते याज्यं मुनिर्वासववारितः ॥ १३
अमरं याज्यमासाद्य याजयिष्ये न मानुषम् ।
शक्रेण प्रतिषिद्धोऽहं मरुत्तं मा स्म याजयः ॥ १४
स्पर्धते हि मया विप्र सदा हि स तु पार्थिवः ।
एवमस्त्विति चाप्युक्तो भ्रात्रा ते बलसूदनः॥ १५
स मामधिगतं प्रेम्णा याज्यत्वे न बुभूषति ।
देवराजं समाश्रित्य तद्विद्धि मुनिपुङ्गव ॥ १६
सोहमिच्छामि भवता सर्वस्वेनापि याजितुम् ।
कामये समतिक्रान्तुं वासवं त्वत्कृतैर्गुणैः ॥ १७
न हि मे वर्तते बुद्धिर्गन्तुं ब्रह्मन्बृहस्पतिम् ।
प्रत्याख्यातो हि तेनास्मि तथाऽनपकृते सति १८
संवर्त उवाच ।
चिकीर्षसि यथाकामं सर्वमेतत्त्वयि ध्रुवम् ।
यदि सर्वानभिप्रायान्कर्तासि मम पार्थिव ॥ १९
याज्यमानं मया हि त्वां बृहस्पतिपुरंदरौ ।
द्विषेतां समभिक्रुद्धावेतदेकं समर्थये ॥ २०
स्थैर्यमत्र कथं मे स्यात्स त्वं निःसंशयं कुरु ।
कुपितस्त्वां न हीदानीं भस्म कुर्यां सबान्धवम् २१
मरुत्त उवाच ।
यावत्तपेत्सहस्रांशुस्तिष्ठेरंश्चापि पर्वताः ।
तावल्लोकान्न लभेयं त्यजेयं संगतं यदि ॥ २२
मा चापि शुभबुद्धित्वं लभेयमिह कर्हिचित् ।
विषयैः संगतं चास्तु त्यजेयं संगतं यदि ॥ २३
संवर्त उवाच ।
आविक्षित शुभा बुद्धिर्वर्ततां तव कर्मसु ।
याजनं हि ममाप्येव वर्तते हृदि पार्थिव ॥ २४
अभिधास्ये च ते राजन्नक्षयं द्रव्यमुत्तमम् ।
येन देवान्सगन्धर्वाञ्शक्रं चाभिभविष्यसि ॥ २५
न तु मे वर्तते बुद्धिर्धने याज्येषु वा पुनः ।
विप्रियं तु करिष्यामि भ्रातुश्चेन्द्रस्य चोभयोः २६
गमयिष्यामि शक्रेण समतामपि ते ध्रुवम् ।
प्रियं च ते करिष्यामि सत्यमेतद्ब्रवीमि ते ॥ २७

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अश्वमेधपर्वणि सप्तमोऽध्यायः ॥ ७ ॥

## अष्टमोऽध्यायः ॥ ८ ॥

संवर्तेन मरुत्तंप्रति हिमवत्संनिहिते मुञ्जवतिगिरौ महादेवस्य निवासकथनपूर्वकं स्वोक्तनामशतकेन स्तुत्वा तत्प्रसादनेन यागाय तत्रत्यबहुसुवर्णहरणचोदना ॥ १ ॥ संवर्तेन तदाहरणेन शिल्पिभिर्यागोपयोगिभाण्डनिर्मापणम् ॥२॥ इन्द्रेण तच्छ्रवणनिर्विण्णस्य बृहस्पतेः समीपं प्रत्यागमनम् ॥ ३ ॥

संवर्त उवाच ।
गिरेर्हिमवतः पृष्ठे मुञ्जवान्नाम पर्वतः ।
तप्यते यत्र भगवांस्तपो नित्यमुमापतिः ॥
वनस्पतीनां मूलेषु शृङ्गेषु विषमेषु च ।
गुहासु शैलराजस्य यथाकामं यथासुखम् ॥
उमासहायो भगवान्यत्र नित्यं महेश्वरः ।
आस्ते शूली महातेजा नानाभूतगणावृतः ॥ ३
तत्र रुद्राश्च साध्याश्च विश्वेऽथ वसवस्तथा ।
यमश्च वरुणश्चैव कुबेरश्च सहानुगः ॥ ४
भूतानि च पिशाचाश्च नासत्यावपि चाश्विनौ ।
गन्धर्वाप्सरसश्चैव यक्षा देवर्षयस्तथा ॥ ५
आदित्या मरुतश्चैव यातुधानाश्च सर्वशः ।

भोगेषु सम्यग्भोगांश्च क. थ. पाठः ॥ २३ ॥

सप्तमोऽध्यायः ॥ ७ ॥

उपासन्ते महात्मानं बहुरूपमुमापतिम् ॥ ६
रमते भगवांस्तत्र कुबेरानुचरैः सह ।
विकृतैर्विकृताकारैः क्रीडद्भिः पृथिवीपते ॥ ७
श्रिया ज्वलन्दृश्यते वै बालादित्यसमद्युतिः ।
न रूपं शक्यते तस्य संस्थानं वा कदाचन ।
निर्देष्टुं प्राणिभिः कैश्चित्प्राकृतैर्मांसलोचनैः ॥ ८
नोष्णं न शिशिरं तत्र न वायुर्न च भास्करः ।
न जरा क्षुत्पिपासे वा न मृत्युर्न भयं नृप ॥ ९
तस्य शैलस्य पार्श्वेषु सर्वेषु जयतांवर ।
धातवो जातरूपस्य रश्मयः सवितुर्यथा ॥ १०
रक्ष्यन्ते ते कुबेरस्य सहायैरुद्यतायुधैः ।
चिकीर्षद्भिः प्रियं राजन्कुबेरस्य महात्मनः ॥ ११
'तत्र गत्वा समन्वास्य महायोगेश्वरं शिवम् ।
कुरु प्रणामं राजर्षे भक्त्या परमया यतः ॥' १२
तस्मै भगवते कृत्वा नमः शर्वाय वेधसे ।
'एभिस्त्वं नामभिर्देवं सर्वविद्याधरं स्तुहि ॥' १३
रुद्राय शितिकण्ठाय सुरूपाय सुवर्चसे ।
कपर्दिने करालाय हर्यक्ष्णे वरदाय च ॥ १४
त्र्यक्ष्णे पूष्णो दन्तभिदे वामनाय शिवाय च ।
याम्यायाव्यक्तरूपाय सद्वृत्ते शंकराय च ॥ १५
क्षेम्याय हरिकेशाय स्थाणवे पुरुषाय च ।
हरिनेत्राय मुण्डाय क्रुद्धायोत्तरणाय च ॥ १६
भास्कराय सुतीर्थाय देवदेवाय रंहसे ।
उष्णीषिणे सुवक्त्राय सहस्राक्षाय मीढुषे ॥ १७
गिरिशाय प्रशान्ताय यतये चीरवाससे ।
बिल्वदण्डाय सिद्धाय सर्वदण्डधराय च ॥ १८
मृगव्याधाय महते धन्विनेऽथ भवाय च ।
वराय सोमवक्त्राय सिद्धमन्त्राय चक्षुषे ॥ १९
हिरण्यबाहवे राजन्नुग्राय पतये दिशाम् ।
लेलिहानाय गोष्ठाय सिद्धमन्त्राय वृष्णये ॥ २०
पशूनां पतये चैव भूतानां पतये नमः ।
वृषाय मातृभक्ताय सेनान्ये मध्यमाय च ॥ २१
'अभिवक्त्राय पतये सर्वदेवमयाय च ।'
स्रुवहस्ताय पतये धन्विने भार्गवाय च ।
अजाय कृष्णनेत्राय विरूपाक्षाय चैव ह ॥ २२
तीक्ष्णदंष्ट्राय तीक्ष्णाय वैश्वानरमुखाय च ।
महात्मने चानङ्गाय सर्वाय पतये विशाम् ॥ २३
'तथा रुद्राय पतये पृथवे कृत्तिवाससे ।'
विलोहिताय दीप्ताय दीप्ताक्षाय महौजसे ।
वसुरेतःसुवपुषे पृथवे कृत्तिवाससे ॥ २४
कपालमालिने चैव सुवर्णमुकुटाय च ।
महादेवाय कृष्णाय त्र्यम्बकायानघाय च ॥ २५
क्रोधनायानृशंसाय मृदवे बाहुशालिने ।
'दण्डिने तप्ततपसे तथैवाक्रूरकर्मणे ॥ २६
सहस्रशिरसे चैव सहस्रचरणाय च ।
नमः स्वधास्वरूपाय बहुरूपाय दंष्ट्रिणे ॥ २७
पिनाकिनं महादेवं महाभोगिनमव्ययम् ।
त्रिशूलहस्तं वरदं त्र्यम्बकं भुवनेश्वरम् ॥ २८
त्रिपुरघ्नं त्रिनयनं त्रिलोकेशं महौजसम् ।
प्रभवं सर्वभूतानां दातारं धरणीधरम् ॥ २९
ईशानं शंकरं सर्वं शिवं विश्वेश्वरं भवम् ।
उमापतिं पशुपतिं विश्वरूपं महेश्वरम् ॥ ३०
विरूपाक्षं दशभुजं विष्यन्दं गोवृषध्वजम् ।
उग्रं स्थाणुं शिवं रौद्रं शर्वं गौरीशमीश्वरम् ॥ ३१
शितिकण्ठमजं शुक्रं पृथुं पृथुहरं वरम् ।
विश्वरूपं विरूपाक्षं बहुरूपमुमापतिम् ॥ ३२
प्रणम्य शिरसा देवमनङ्गाङ्गहरं हरम् ।
शरण्यं शरणं याहि महादेवं चतुर्मुखम् ॥ ३३
'विरोचमानं वपुषा दिव्याभरणभूषितम् ।
अनाद्यन्तमजं शंभुं सर्वव्यापिनमीश्वरम् ॥ ३४
निस्त्रैगुण्यं निरुद्वेगं निर्मलं निधिमोजसाम् ।
प्रणम्य प्राञ्जलिः शर्वं प्रयामि शरणं हरम् ॥ ३५
संमान्यं निश्चलं नित्यमकारुण्यमलेपनम् ।
अध्यात्मवेदमासाद्य प्रयामि शरणं मुहुः ॥ ३६

दैत्यानामशिवाय चेति क. ट. थ. पाठः ॥ १५ ॥ धन्विने भार्गवाय चेति ट. पाठः । वराय सौम्यवक्त्राय पशुहस्ताय वर्षिणे इति क. ट. थ. पाठः ॥ १९ ॥ विरूपाय सुरूपाय महारूपाय दंष्ट्रिणे इति थ. पाठः ॥२७॥ अष्टमोऽध्यायः ॥८॥

यस्य नित्यं विदुः स्थानं मोक्षमध्यात्मचिन्तकाः ।
योगीशं तत्वमार्गस्थाः कैवल्यं पदमक्षरम् ॥ ३७
यं विदुः सङ्गिनं मुक्ताः सामान्यं समदर्शिनः ।
तं प्रपद्ये जगद्योनिमयोनिं निर्गुणात्मकम् ॥ ३८
असृजद्यस्तु भूतादीन्सप्त लोकान्सनातनान् ।
स्थितः सत्योपरि स्थाणुस्तं प्रपद्ये सनातनम् ॥ ३९
भक्तानां सुलभं तं हि दुर्लभं दूरपातिनाम् ।
अदूरस्थममुं देवं प्रकृतेः परतः स्थितम् ॥ ४०
नमामि सर्वलोकस्थं व्रजामि शरणं शिवम् ।'
एवं कृत्वा नमस्तस्मै महादेवाय रंहसे ।
महात्मने क्षितिपते तत्सुवर्णमवाप्स्यसि ॥ ४१
'लभन्ते गाणपत्यं च तदेकाग्रा हि मानवाः ।
किं पुनः स्वर्णभाण्डानि तस्मात्त्वं गच्छ मा चिरं४२
महत्तरं हि ते लाभं हस्त्यश्वोष्ट्रादिभिः सह ।'
सुवर्णमाहरिष्यन्तस्तत्र गच्छन्तु ते नराः ॥ ४३
व्यास उवाच ।
इत्युक्तः स वचस्तस्य चक्रे कारन्धमात्मजः ।
'गङ्गाधरं नमस्कृत्य लब्धवान्धनमुत्तमम् ॥ ४४
कुबेर इव तत्प्राप्य महादेवप्रसादतः ।'
ततोऽतिमानुषं सर्वं चक्रे यज्ञस्य संविधिम् ॥ ४५
सौवर्णानि च भाण्डानि संचक्रुस्तत्र शिल्पिनः ।
'शालाश्च सर्वसंभारांस्तत्र संवर्तशासनात् ॥' ४६
बृहस्पतिस्तु तां श्रुत्वा मरुत्तस्य महीपतेः ।
समृद्धिमति देवेभ्यः संतापमकरोद्भृशम् ॥ ४७
संतप्यमानो वैवर्ण्यं कृशत्वं चागमत्परम् ।
भविष्यति हि मे शत्रुः संवर्तो वसुमानिति ॥ ४८
तं श्रुत्वा भृशसंतप्तं देवराजो बृहस्पतिम् ।
अभिगम्यामरवृतः प्रोवाचेदं वचस्तदा ॥ ४९

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अश्वमेधपर्वणि अष्टमोऽध्यायः ॥ ८ ॥

## नवमोऽध्यायः ॥ ९ ॥

बृहस्पतिना इन्द्रंप्रति स्वानुजेन संवर्तेन मरुत्तस्य याजनकथनपूर्वकं तद्विघटनचोदना ॥ १ ॥ अग्निना मरुत्तमेत्य याजनाय बृहस्पतिस्वीकरणरूपेन्द्रसंदेशकथनम् ॥ २ ॥ तथा पुनरिन्द्रमेत्य मरुत्तेन स्वसंदेशापरिग्रहणनिवेदनम् ॥ ३ ॥ तथा इन्द्रेण पुनर्मरुत्ते स्वसंदेशनिवेदनचोदने संवर्ततपोभयात्तदनङ्गीकरणम् ॥ ४ ॥

इन्द्र उवाच ।
कच्चित्सुखं स्वपिषि त्वं बृहस्पते
कच्चिन्मनोज्ञाः परिचारकास्ते ।
कच्चिद्देवानां सुखकामोसि विप्र
कच्चिद्देवास्त्वां परिपालयन्ति ॥
बृहस्पतिरुवाच ।
सुखं शये शयने देवराज
तथा मनोज्ञाः परिचारका मे ।
तथा देवानां सुखकामोसि नित्यं
देवाश्च मां सुभृशं पालयन्ति ॥
इन्द्र उवाच ।
कुतो दुःखं मानसं देहजं वा
पाण्डुर्विवर्णश्च कुतस्त्वमद्य ।
आचक्ष्व मे ब्राह्मण यावदेतां-
न्निहन्मि सर्वांस्तव दुःखकर्तॄन् ॥
बृहस्पतिरुवाच ।
मरुत्तमाहुर्मघवन्यक्ष्यमाणं
महायज्ञेनोत्तमदक्षिणेन ।
संवर्तो याजयतीति मे श्रुतं
तदिच्छामि न स तं याजयेत ॥
इन्द्र उवाच ।
सर्वान्कामाननुयातोसि विप्र
त्वं देवानां मन्त्रयसे पुरोधाः ।
उभौ च ते जरामृत्यू व्यतीतौ
किं संवर्तस्तव कर्ताऽद्य विप्र ॥
बृहस्पतिरुवाच ।
देवैः सह त्वमसुरान्संप्रणुद्य
जिघांससे चाप्युत सानुबन्धान् ।
यंयं समृद्धं पश्यसि तत्रतत्र
दुःखं सपत्नेषु समृद्धिभावः ॥

अतोसि देवेन्द्र विवर्णरूपः
सपत्नो मे वर्धते तन्निशम्य ।
सर्वोपायैर्मघवन्संनियच्छ
संवर्तं वा पार्थिवं वा मरुत्तम् ॥ ७
इन्द्र उवाच ।
एहि गच्छ प्रहितो जातवेदो
बृहस्पतिं परिदातुं मरुत्ते ।
अयं वै त्वां याजयिता बृहस्पति-
स्तथाऽमरं चैव करिष्यतीति ॥ ८
अग्निरुवाच ।
अहं गच्छामि तव शक्राद्य दूतो
बृहस्पतिं परिदातुं मरुत्ते ।
वाचं सत्यां पुरुहूतस्य कर्तुं
बृहस्पतेश्चापचितिं चिकीर्षुः ॥ ९
व्यास उवाच ।
ततः प्रायाद्धूमकेतुर्महात्मा
वनस्पतीन्वीरुधश्चावमृद्नन् ।
कामाद्धिमान्ते परिवर्तमानः
काष्ठातिगो मातरिश्वेव नर्दन् ॥ १०
मरुत्त उवाच ।
आश्चर्यमद्य पश्यामि रूपिणं वह्निमागतम् ।
आसनं सलिलं पाद्यं गां चोपानय वै मुने ॥ ११
अग्निरुवाच ।
आसनं सलिलं पाद्यं प्रतिनन्दामि तेऽनघ ।
इन्द्रेण तु समादिष्टं विद्धि मां दूतमागतम् ॥ १२
मरुत्त उवाच ।
कच्चिच्छ्रीमान्देवराजः सुखी च
कच्चिच्चास्मान्प्रीयते धूमकेतो ।
कच्चिद्देवा अस्य वशे यथाव-
त्प्रब्रूहि त्वं मम कार्त्स्न्येन देव ॥ १३
अग्निरुवाच ।
शक्रो भृशं सुसुखी पार्थिवेन्द्र
प्रीतिं चेच्छत्यजरां वै त्वया सः ।
देवाश्च सर्वे वशगास्तस्य राज-
न्संदेशं त्वं शृणु मे देवराज्ञः ॥ १४
यदर्थं मां प्राहिणोत्त्वत्सकाशं
बृहस्पतिं परिदातुं मरुत्ते ।
अयं गुरुर्याजयतां नृप त्वां
मर्त्यं सन्तममरं त्वां करोतु ॥ १५
मरुत्त उवाच ।
संवर्तोऽयं याजयिता द्विजो मां
बृहस्पतेरञ्जलिरेष तस्य ।
न चैवासौ याजयित्वा महेन्द्रं
मर्त्यं सन्तं याजयन्नद्य शोभेत् ॥ १६
अग्निरुवाच ।
ये वै लोका देवलोके महान्तः
संप्राप्स्यसे तान्देवराजप्रसादात् ।
त्वां चेदसौ याजयेद्वै बृहस्पति-
र्नूनं स्वर्गं त्वं जयेः कीर्तियुक्तः ॥ १७
तथा लोका मानुषा ये च दिव्याः
प्रजापतेश्चापि ये वै महान्तः ।
ते ते जिता देवराज्यं च कृत्स्नं
बृहस्पतिर्याजयेच्चेन्नरेन्द्र ॥ १८
संवर्त उवाच ।
मा स्मैव त्वं पुनरागाः कथंचि-
द्बृहस्पतिं परिदातुं मरुत्ते ।
मा त्वां धक्ष्ये चक्षुषा दारुणेन
संक्रुद्धोऽहं पावक त्वं निबोध ॥ १९
व्यास उवाच ।
ततो देवानगमद्धूमकेतु-
र्दाहाद्भीतो व्यथितोऽश्वत्थपर्णवत् ।
तं वै दृष्ट्वा प्राह शक्रो महात्मा
बृहस्पतेः सन्निधौ हव्यवाहम् ॥ २०
यस्त्वं गतः प्रहितो जातवेदो
बृहस्पतिं परिदातुं मरुत्ते ।
तत्किं प्राह स नृपो यक्ष्यमाणः
कच्चिद्वचः प्रतिगृह्णाति तच्च ॥ २१
अग्निरुवाच ।
न ते वाचं रोचयते मरुत्तो
बृहस्पतेरञ्जलिं प्राहिणोत्सः ।

संवर्तो मां याजयितेत्युवाच
पुनः पुनः स मया याच्यमानः ॥ २२
उवाचेदं मानुषा ये च दिव्याः
प्रजापतेर्ये च लोका महान्तः ।
तांश्चेल्लभेयं संविदं तेन कृत्वा
तथापि नेच्छेयमिति प्रतीतः ॥ २३

इन्द्र उवाच ।
पुनर्गत्वा पार्थिवं त्वं समेत्य
वाक्यं मदीयं प्रापय स्वार्थयुक्तम् ।
पुनर्यद्युक्तो न करिष्यते वच-
स्त्वत्तो वज्रं संप्रहर्तास्मि तस्मै ॥ २४

अग्निरुवाच ।
गन्धर्वराड्यात्वयं तत्र दूतो
बिभेम्यहं वासव तत्र गन्तुम् ।
संरब्धो मामब्रवीत्तीक्ष्णरोषः
संवर्तो वाक्यं चरितब्रह्मचर्यः ॥ २५
यद्यागच्छेः पुनरेवं कथंचि-
द्बृहस्पतिं परिदातुं मरुत्ते ।
दहेयं त्वां चक्षुषा दारुणेन
संक्रुद्ध इत्येतदवैहि शक्र ॥ २६

शक्र उवाच ।
त्वमेवान्यान्दहसे जातवेदो
न हि त्वदन्यो विद्यते भस्मकर्ता ।
त्वत्संस्पर्शात्सर्वलोको बिभेति
अश्रद्धेयं वदसे हव्यवाह ॥ २७

अग्निरुवाच ।
दिवं देवेन्द्र पृथिवीं च सर्वां
संवेष्टयेस्त्वं स्वबलेनैव शक्र ।
एवंविधस्येह सतस्तवासौ
कथं वृत्रस्त्रिदिवं प्राग्जहार ॥ २८

इन्द्र उवाच ।
नगण्डिकाकारयोगं करेऽणुं
न चारिसोमं प्रपिबामि वह्ने ।
न क्षीणशक्तौ प्रहरामि वज्रं
को मे सुखाय प्रहरेत मर्त्यः ॥ २९
प्रव्राजयेयं कालकेयान्पृथिव्या-
मपाकर्षन्दानवानन्तरिक्षात् ।
दिवः प्रह्लादमवसानमानयं
को मेऽसुखाय प्रहरेत मानवः ॥ ३०

अग्निरुवाच ।
यत्र शर्यातिं च्यवनो याजयिष्य-
न्सहाश्विभ्यां सोममगृह्णदेकः ।
तं त्वं क्रुद्धः प्रत्यषेधीः पुरस्ता-
च्छर्यातियज्ञं स्मर तं महेन्द्र ॥ ३१
वज्रं गृहीत्वा च पुरन्दर त्वं
संप्राहार्षीश्च्यवनस्यातिघोरम् ।
स ते विप्रः सह वज्रेण बाहु-
मपागृह्णात्तपसा जातमन्युः ॥ ३२
ततो रोषात्सर्वतो घोररूपं
सपत्नं ते जनयामास भूयः ।
मदं नाम्ना चासुरं विश्वरूपं
यं त्वं दृष्ट्वा चक्षुषी संन्यमीलः ॥ ३३
हनुरेका जगतीस्था तथैका
दिवं गता महतो दानवस्य ।
सहस्रं दन्तानां शतयोजनानां
सुतीक्ष्णानां घोररूपं बभूव ॥ ३४
वृत्ताः स्थूला रजतस्तम्भवर्णा
दंष्ट्राश्चतस्रो द्वे शते योजनानाम् ।
स त्वां दन्तान्विदशन्नभ्यधाव-
ज्जिघांसया शूलमुद्यम्य घोरम् ॥ ३५

---

नाहं दौर्बल्याद्वृत्रेण जित इति वक्तुं स्वसामर्थ्यमिन्द्रो वह्निंप्रति वदति नगण्डिकाकारयोग करेणुम् । नग पर्वत डीयते विहायसा गच्छतीति डीः पक्षी अल्पो डीर्डिका मक्षिकामशकादिस्तस्या आकारेग योगोस्यास्तीत्येवंरूप अणु सूक्ष्मं करे कुर्वे । कृञरछान्दसं भौवादिकत्वम् । करेणेतिपाठे करोमीत्यध्याहारः । पाथोधिं करे कर्तुमगस्त्य इवाहं पर्वतमपि मशकीकर्तुं समर्थोस्मीत्यर्थः । कुतस्तर्हि वृत्रस्त्वां नाराधितवानित्यत आह न चारिसोम प्रपिबामि वह्ने । अरिसोम शत्रुदत्त सोमम् । त्वयैव स कुती न निर्जित इत्यत आह न क्षीणशक्तौ प्रहरामि वज्रमित्यादिना न दण्डकान्नारकान्नो कलिङ्गान्न करूशान्सोमं प्रपिबामि वह्ने । न दुर्बलायावसृजामि वज्रं को मे सुखी यः प्रहरेन्मनुष्यः इति क. थ. पाठः ॥२९॥ नवमोऽध्यायः ॥ ९ ॥

तं नापश्यस्त्वं तदा घोररूपं
सर्वे वै त्वां ददृशुर्दर्शनीयम् ।
यस्माद्भीतः प्राञ्जलिस्त्वं महर्षि-
मागच्छेथाः शरणं दानवघ्न ॥ ३६

क्षात्राद्बलाद्ब्रह्मबलं गरीयो
न ब्रह्मतः किंचिदन्यद्गरीयः ।
सोहं जानन्ब्रह्मतेजो यथाव-
न्न संवर्तं गन्तुमिच्छामि शक्र ॥ ३७

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अश्वमेधपर्वणि नवमोऽध्यायः ॥ ९ ॥

## दशमोऽध्यायः ॥ १० ॥

इन्द्रेण गन्धर्वमुखात्स्वेन याजनाय बृहस्पतिवरणं चोदितेनापि मरुत्तेन तदनङ्गीकारे यज्ञविघाताय साटोपं यज्ञवाटं प्रत्यागमनम् ॥ १ ॥ संवर्तेन मरुत्तप्रार्थनया विद्याबलेनेन्द्रादीनां संस्तम्भनम् ॥ २ ॥ ततः संवर्तानुवर्तिनेन्द्रेण सभानिर्मापणादिना यज्ञनिर्वर्तनपूर्वकं देवैः सह हविर्ग्रहणम् ॥ ३ ॥ व्यासेनैवं युधिष्ठिरंप्रति मरुत्तयज्ञप्रवृत्तिप्रकारकथनपूर्वकं तच्छिष्टद्रव्याहरणेनाश्वमेधकरणविधानम् ॥ ४ ॥

इन्द्र उवाच ।
एवमेतद्ब्रह्मबलं गरीयो
न ब्राह्मणात्किंचिदन्यद्गरीयः ।
आविक्षितस्य तु बलं न मृष्ये
वज्रमस्मै प्रहरिष्यामि घोरम् ॥ १
धृतराष्ट्र गच्छ प्रहितो मरुत्तं
संवर्तेन संगतं तं वदस्व ।
बृहस्पतिं त्वमुपशिक्षस्व राजन्
वज्रं वा ते प्रहरिष्यामि घोरम् ॥ २
व्यास उवाच ।
ततो गत्वा धृतराष्ट्रो नरेन्द्रं
प्रोवाचेदं वचनं वासवस्य ॥ ३
गन्धर्वं मां धृतराष्ट्रं निबोध
त्वामागतं वक्तुकामं नरेन्द्र ।
ऐन्द्रं वाक्यं शृणु मे राजसिंह
यत्प्राह लोकाधिपतिर्महात्मा ॥ ४
बृहस्पतिं याजकं त्वं वृणीष्व
वज्रं वा ते प्रहरिष्यामि घोरम् ।
वचश्चेदेतन्न करिष्यसे मे
प्राहैतदेतावदचिन्त्यकर्मा ॥ ५
मरुत्त उवाच ।
त्वं चैवैतद्वेत्थ पुरन्दरश्च
विश्वेदेवा वसवश्चाश्विनौ च ।
मित्रद्रोहे निष्कृतिर्नास्ति लोके
महत्पापं ब्रह्महत्यासमं तत् ॥
बृहस्पतिर्याजयतां महेन्द्रं
देवश्रेष्ठं वज्रभृतां वरिष्ठम् ।
संवर्तो मां याजयिताऽद्य राज-
न्न ते वाक्यं तस्य वा रोचयामि ॥
गन्धर्व उवाच ।
घोरो नादः श्रूयतां वासवस्य
नभस्तले गर्जतो राजसिंह ।
व्यक्तं वज्रं मोक्ष्यते ते महेन्द्रः
क्षेमं राजंश्चिन्त्यतामेष कालः ॥
व्यास उवाच ।
इत्येवमुक्तो धृतराष्ट्रेण राज-
ञ्श्रुत्वा नादं नदतो वासवस्य ।
तपोनित्यं धर्मविदां वरिष्ठं
संवर्तं तं ज्ञापयामास कार्यम् ॥
मरुत्त उवाच ।
पश्यात्मानं प्लवमानं समारा-
दध्वा दूरं तेन न दृश्यतेऽद्य ।

मित्रद्रोहे निष्कृतिर्वै यथेह नास्तीति लोकेषु सदैव वाद इति क. ट. थ. पाठः ॥ ६ ॥ क्षम राजन्निति क. ट. थ. पाठः ॥८॥

प्रपद्येऽहं शर्म विप्रेन्द्र त्वत्तः
प्रयच्छ तस्मादभयं विप्रमुख्य ॥ १०
अयमायाति वै वज्री दिशो विद्योतयन्दश ।
अमानुषेण घोरेण सदस्यास्त्रासिता हि नः ॥ ११
संवर्त उवाच ।
भयं शक्राद्व्येतु ते राजसिंह
प्रणोत्स्येऽहं भयमेतत्सुघोरम् ।
संस्तम्भिन्या विद्यया क्षिप्रमेव
मा भैस्त्वमस्माभिभवात्प्रतीतः ॥ १२
अहं संस्तम्भयिष्यामि मा भैस्त्वं शक्रतो नृप ।
सर्वेषामेव देवानां क्षयितान्यायुधानि मे ॥ १३
दिशो वज्रं व्रजतां वायुरेतु
वर्षं भूत्वा वर्षतां काननेषु ।
आपः प्लवन्त्वन्तरिक्षे वृथा च
सौदामनी दृश्यते माऽपि भैस्त्वम् ॥ १४
वह्निर्देवस्त्रातु वा सर्वतस्ते
कामान्सर्वान्वर्षतु वासवो वा ।
वज्रं तथा स्थापयतां वधाय
महाघोरं प्लवमानं जलौघैः ॥ १५
मरुत्त उवाच ।
घोरः शब्दः श्रूयते वै महास्वनो
वज्रस्यैष सहितो मारुतेन ।
आत्मा हि मे प्रव्यथते मुहुर्मुहु-
र्न मे स्वास्थ्यं जायते चाद्य विप्र ॥ १६
संवर्त उवाच ।
वज्रादुग्राद्व्येतु भयं तवाद्य
वातो भूत्वा व्रजतु नरेन्द्र वज्रम् ।
भयं त्यक्त्वा वरमन्यं वृणीष्व
कं ते कामं तपसा साधयामि ॥ १७
मरुत्त उवाच ।
इन्द्रः साक्षात्सहसाऽभ्येतु विप्र
हविर्यज्ञे प्रतिगृह्णातु चैव ।
स्वंस्वं हविश्चैव जुषन्तु देवा
हुतं सोमं प्रतिगृह्णन्तु चैव ॥ १८
संवर्त उवाच ।
अयमिन्द्रो हरिभिरायाति राज-
न्देवैः सर्वैस्त्वरितैः स्तूयमानः ।
मन्त्राहूतो यज्ञमिमं मयाऽद्य
पश्यस्वैनं मन्त्रविस्रस्तकायम् ॥ १९
व्यास उवाच ।
ततो देवैः सहितो देवराजो
रथे युङ्क्त्वा तान्हरीन्वाजिमुख्यान् ।
आयाद्यज्ञमथ राज्ञः पिपासु-
राविक्षितस्याप्रमेयस्य सोमम् ॥ २०
तमायान्तं सहितं देवसङ्घैः
प्रत्युद्ययौ सपुरोधा मरुत्तः ।
चक्रे पूजां देवराजाय चाग्र्यां
यथाशास्त्रं विधिवत्प्रीयमाणः ॥ २१
संवर्त उवाच ।
सुस्वागतं ते पुरुहूतेह विद्व-
न्यज्ञोऽप्ययं सन्निहिते त्वयीन्द्र ।
शोशुभ्यते बलवृत्रघ्न भूयः
पिबस्व सोमं सुतमुद्यतं मया ॥ २२
मरुत्त उवाच ।
शिवेन मां पश्य नमश्च तेऽस्तु
प्राप्तो यज्ञः सफलं जीवितं मे ।
अयं यज्ञं कुरुते मे सुरेन्द्र
बृहस्पतेरवरो जन्मना च ॥ २३
इन्द्र उवाच ।
जानामि ते गुरुमेनं तपोधनं
बृहस्पतेरनुजं तिग्मतेजसम् ।
यस्याह्वानादागतोऽहं नरेन्द्र
प्रीतिर्मेऽद्य त्वयि मन्युः प्रनष्टः ॥ २४
संवर्त उवाच ।
यदि प्रीतस्त्वमसि वै देवराज
तस्मात्स्वयं शाधि यज्ञे विधानम् ।
स्वयं सर्वान्कुरु भागान्सुरेन्द्र
जानात्वयं सर्वलोकश्च देव ॥ २५

व्यास उवाच ।
एवमुक्तस्त्वाङ्गिरसेन शक्रः
समादिदेश स्वयमेव देवान् ।
सभाः क्रियन्तामावसथाश्च मुख्याः
सहस्रशश्चित्रभूताः समृद्धाः ॥ २६
क्लृप्ताः स्थूणाः कुरुतारोहणानि
गन्धर्वाणामप्सरसां च शीघ्रम् ।
यत्र नृत्येरन्नप्सरसः समस्ताः
स्वर्गोपमः क्रियतां यज्ञवाटः ॥ २७
इत्युक्तास्ते चक्रुराशु प्रतीता
दिवौकसः शक्रवाक्यान्नरेन्द्र ।
ततो वाक्यं प्राह राजानमिन्द्रः
प्रीतो राजन्पूज्यमानो मरुत्तम् ॥ २८
एष त्वयाऽहमिह राजन्समेत्य
ये चाप्यन्ये तव पूर्वे नरेन्द्र ।
सर्वाश्चान्या देवताः प्रीयमाणा
हविस्तुभ्यं प्रतिगृह्णन्तु राजन् ॥ २९
आग्नेयं वै लोहितमालभन्तां
वैश्वदेवं बहुरूपं हि राजन् ।
निलं चोक्षाणं मेध्यमप्यालभन्तां
चलच्छिश्नं संप्रदिष्टं द्विजाग्र्याः ॥ ३०
ततो यज्ञो ववृधे तस्य राज-
न्यत्र देवाः स्वयमन्नानि जह्रुः ।
यस्मिञ्शक्रो ब्राह्मणैः पूज्यमानः
सदस्योऽभूद्धरिमान्देवराजः ॥ ३१
ततः संवर्तश्चैत्यगतो महात्मा
यथा वह्निः प्रज्वलितो द्वितीयः
हवींष्युच्चैराह्वयन्देवसङ्घा-
ञ्जुहावाग्नौ मन्त्रवत्सुप्रतीतः ॥ ३२
ततः पीत्वा बलभित्सोममग्र्यं
ये चाप्यन्ये सोमपा देवसङ्घाः ।
सर्वेऽनुज्ञाताः प्रययुः पार्थिवेन
यथाजोषं तर्पिताः प्रीतिमन्तः ॥ ३३
ततो राजा जातरूपस्य राशी-
न्पदेपदे कारयामास हृष्टः ।
द्विजातिभ्यो विसृजन्भूरि वित्तं
रराज वित्तेश इवारिहन्ता ॥ ३४
ततो वित्तं विविधं सन्निधाय
यथोत्साहं कारयित्वा च कोशम् ।
अनुज्ञातो गुरुणा संनिवृत्त्य
शशास गामखिलां सागरान्ताम् ॥ ३५
एवंगुणः संबभूवेह राजा
यस्य क्रतौ तत्सुवर्णं प्रभूतम् ।
तत्त्वं समादाय नरेन्द्र वित्तं
यजस्व देवांस्तपनीयैर्विधानैः ॥ ३६
वैशंपायन उवाच
ततो राजा पाण्डवो हृष्टरूपः
श्रुत्वा वाक्यं सत्यवत्याः सुतस्य ।
मनश्चक्रे तेन वित्तेन यष्टुं
ततोऽमात्यैर्मन्त्रयामास भूयः ॥ ३७

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अश्वमेधपर्वणि दशमोऽध्यायः ॥ १० ॥

## एकादशोऽध्यायः ॥ ११ ॥

कृष्णेन युधिष्ठिरंप्रति इन्द्रवृत्रासुरयुद्धप्रकारकथनम् ॥ १ ॥

वैशंपायन उवाच ।
इत्युक्ते नृपतौ तस्मिन्व्यासेनाद्भुतकर्मणा
वासुदेवो महातेजास्ततो वचनमाददे ॥ १
तं नृपं दीनमनसं निहतज्ञातिबान्धवम् ।
उपप्लुतमिवादित्यं सधूममिव पावकम्
निर्विण्णमनसं पार्थं ज्ञात्वा वृष्णिकुलोद्वहः

विलोभ्य च्छित्त्वा मत्प्रतिष्ठा द्विजेन्द्राः इति क. ट. थ. पाठः ॥ ३० ॥ देवांस्तर्पयानो निवापैः इति झ. पाठः ॥ ३६ ॥

दशमोऽध्यायः ॥ १० ॥

उपप्लुत राहुग्रस्तम् ॥ २ ॥

आश्वासयन्धर्मसुतं प्रवक्तुमुपचक्रमे ॥ ३
वासुदेव उवाच ।
सर्वं जिह्मं मृत्युपदमजिह्मं ब्रह्मणः पदम् ।
एतावाञ्ज्ञानविषयः किं प्रलापः करिष्यति ॥ ४
नैव तेऽनुष्ठितं कर्म नैव ते शत्रवो जिताः ।
कथं शत्रुं शरीरस्थमात्मनो नावबुध्यसे ॥ ५
अत्र ते वर्तयिष्यामि यथाधर्मं यथाश्रुतम् ।
इन्द्रस्य सह वृत्रेण यथा युद्धमवर्तत ॥ ६
वृत्रेण पृथिवी व्याप्ता पुरा किल नराधिप ।
दृष्ट्वा स पृथिवीं व्याप्तां गन्धस्य विषये हृते ।
धराहरणदुर्गन्धो विषयः समपद्यत ॥ ७
शतक्रतुश्चुकोपाथ गन्धस्य विषये हृते ।
वृत्रस्य सततः क्रुद्धो घोरं वज्रमवासृजत् ॥ ८
स वध्यमानो वज्रेण सुभृशं भूरितेजसा ।
विवेश सहसा तोयं जग्राह विषयं ततः ॥ ९
अप्सु वृत्रगृहीतासु रसे च विषये हृते ।
शतक्रतुरतिक्रुद्धस्तत्र वज्रमवासृजत् ॥ १०
स वध्यमानो वज्रेण तस्मिन्नमिततेजसा ।
विवेश सहसा ज्योतिर्जग्राह विषयं ततः ॥ ११
व्याप्ते ज्योतिषि वृत्रेण रूपेऽथ विषये हृते ।
शतक्रतुरतिक्रुद्धस्तत्र वज्रमवासृजत् ॥ १२
स वध्यमानो वज्रेण तस्मिन्नमिततेजसा ।
विवेश सहसा वायुं जग्राह विषयं ततः ॥ १३
व्याप्ते वायौ तु वृत्रेण स्पर्शेऽथ विषये हृते ।
शतक्रतुरतिक्रुद्धस्तत्र वज्रमवासृजत् ॥ १४
स वध्यमानो वज्रेण तस्मिन्नमिततेजसा ।
आकाशमभिदुद्राव जग्राह विषयं ततः ॥ १५
आकाशे वृत्रभूतेऽथ शब्दे च विषये हृते ।
शतक्रतुरभिक्रुद्धस्तत्र वज्रमवासृजत् ॥ १६
स वध्यमानो वज्रेण तस्मिन्नमिततेजसा ।
विवेश सहसा शक्रं जग्राह विषयं ततः ॥ १७
तस्य वृत्रगृहीतस्य मोहः समभवन्महान् ।
रथन्तरेण तं साम्ना वसिष्ठः प्रत्यबोधयत् ॥ १८
ततो वृत्रं शरीरस्थं जघान भरतर्षभ ।
शतक्रतुरदृश्येन वज्रेणेतीह नः श्रुतम् ॥ १९
इदं धर्म्यं रहस्यं वै शक्रेणोक्तं महर्षिषु ।
ऋषिभिश्च मम प्रोक्तं तन्निबोध जनाधिप ॥ २०

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अश्वमेधपर्वणि एकादशोऽध्यायः ॥ ११ ॥

## द्वादशोऽध्यायः ॥ १२ ॥

कृष्णेन युधिष्ठिरंप्रति शारीरमानसभेदेन व्याधेर्द्वैविध्याभिधानपूर्वकं तत्परिहारोपायकथनम् ॥ १ ॥

वासुदेव उवाच ।
द्विविधो जायते व्याधिः शारीरो मानसस्तथा ।
परस्परं तयोर्जन्म निर्द्वन्द्वं नोपपद्यते ॥ १
शरीरे जायते व्याधिः शारीरः स निगद्यते ।
मानसे जायते व्याधिर्मानसस्तु निगद्यते ॥ २
शीतोष्णे चैव वायुश्च गुणा राजञ्शरीरजाः ।
तेषां गुणानां साम्यं चेत्तदाहुः स्वस्थलक्षणम् ॥ ३
उष्णेन बाध्यते शीतं शीतेनोष्णं च बाध्यते ॥ ४
सत्त्वं रजस्तमश्चेति त्रय आत्मगुणाः स्मृताः ।
तेषां गुणानां साम्यं चेत्तदाहुः स्वस्थलक्षणम् ॥ ५
तेषामन्यतमोत्सेके विधानमुपदिश्यते ।
हर्षेण बाध्यते शोको हर्षः शोकेन बाध्यते ॥ ६
कश्चिद्दुःखे वर्तमानः सुखस्य स्मर्तुमिच्छति ।
कश्चित्सुखे वर्तमानो दुःखस्य स्मर्तुमिच्छति ॥ ७

---

जिह्मं कामादि। मृत्युपदं संसारप्रापकम्। अजिह्मं शमादि। ब्रह्मणः पदं मोक्षस्य प्रापकम्। ज्ञानविषयो हेयोपादेयतया ज्ञातव्योर्थः। आर्जवं ब्रह्मणः पदमिति झ. ध. पाठः ॥ ४ ॥ धराहरणनिस्सार इति क. थ. पाठः ॥ ७ ॥ एकादशोऽध्यायः ॥ ११ ॥

शीतोष्णे कफपित्ते वायुर्वातः तेषां साम्ये स्वास्थ्यं वैषम्ये व्याधिर्भवतीत्यर्थः. ॥ ३ ॥ शीतोष्णयोरन्यतराधिक्यजं दोषमितरस्वर्धकेनौषधादिनापनयेदित्यर्थः ॥ ४ ॥

स त्वं न दुःखी दुःखस्य न सुखी सुसुखस्य वा।
सर्तुमिच्छसि कौन्तेय दैवं हि बलवत्तरम्।
अथवा ते स्वभावोऽयं येन पार्थावकृष्यसे॥ ८
दृष्ट्वा सभागतां कृष्णामेकवस्त्रां रजस्वलाम्।
मिषतां पाण्डवेयानां न तस्य सर्तुमिच्छसि॥ ९
प्रव्राजनं च नगरादजिनैश्च विवासनम्।
महारण्यनिवासश्च न तस्य सर्तुमिच्छसि॥ १०
जटासुरात्परिक्लेशश्चित्रसेनेन चाहवः।
सैन्धवाच्च परिक्लेशो न तस्य सर्तुमिच्छसि॥ ११
पुनरज्ञातचर्यायां कीचकेन पदा वधः।
याज्ञसेन्यास्तथा पार्थ न तस्य सर्तुमिच्छसि॥ १२
यच्च ते द्रोणभीष्माभ्यां युद्धमासीदरिंदम।
मनसैकेन योद्धव्यं तत्ते युद्धमुपस्थितम्॥ १३
तस्मादभ्युपगन्तव्यं युद्धाय भरतर्षभ।
परमव्यक्तरूपस्य पारं युक्त्या स्वकर्मभिः॥ १४
यत्र नैव शरैः कार्यं न भृत्यैर्न च बन्धुभिः।
आत्मनैकेन योद्धव्यं तत्ते युद्धमुपस्थितम्॥ १५
तस्मिन्ननिर्जिते युद्धे कामवस्थां गमिष्यसि।
एतज्ज्ञात्वा तु कौन्तेय कृतकृत्यो भविष्यसि॥ १६
एतां बुद्धिं विनिश्चित्य भूतानामागतिं गतिम्।
पितृपैतामहे वृत्ते शाधि राज्यं यथोचितम्॥ १७

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अश्वमेधपर्वणि द्वादशोऽध्यायः॥ १२॥

## त्रयोदशोऽध्यायः॥ १३॥

कामस्य शक्तिकथनेन दुर्जयत्वकथनपूर्वकं तज्जयोपायकथनम्॥ १॥

वासुदेव उवाच।
न बाह्यं द्रव्यमुत्सृज्य सिद्धिर्भवति भारत।
शारीरं द्रव्यमुत्सृज्य सिद्धिर्भवति वा न वा॥ १
बाह्यद्रव्यविमुक्तस्य शारीरेषु च गृध्यतः।
यो धर्मो यत्सुखं चैव द्विषतामस्तु तत्तव॥ २
द्व्यक्षरस्तु भवेन्मृत्युस्त्र्यक्षरं ब्रह्म शाश्वतम्।
ममेति द्व्यक्षरो मृत्युर्नममेति च शाश्वतम्॥ ३
ब्रह्ममृत्यू ततो राजन्नात्मन्येव व्यवस्थितौ।
अदृश्यमानौ भूतानि योधयेतामसंशयम्॥ ४
अविनाशोऽस्य तत्त्वस्य नियतो यदि भारत।
भित्त्वा शरीरं भूतानामहिंसां प्रतिपद्यते॥ ५
लब्ध्वा हि पृथिवीं कृत्स्नां सहस्थावरजङ्गमाम्।
ममत्वं यस्य नैव स्यात्किं तया स करिष्यति॥ ६
अथवा वसतः पार्थ वने वन्येन जीवतः।
ममता यस्य वित्तेषु मृत्योरास्ये स वर्तते॥ ७
बाह्यान्तराणां शत्रूणां स्वभावं पश्य भारत।
यन्न पश्यति तद्भूतं मुच्यते स महाभयात्॥ ८
कामात्मानं न प्रशंसन्ति लोके
नेहाकामा काचिदस्ति प्रवृत्तिः।
सर्वे कामा मनसोऽङ्ग प्रभूता
यान्पण्डितः संहरते विचिन्त्य।
भूयोभूयो जन्मनोऽभ्यासयोगा-
द्योगी योगं सारमार्गं विचिन्त्य॥ ९
दानं च वेदाध्ययनं तपश्च
काम्यानि कर्माणि च वैदिकानि।
व्रतं यज्ञान्नियमान्ध्यानयोगा-
न्कामेन यो नारभते विदित्वा।
यद्यच्चायं कामयते स धर्मो
नयो धर्मो नियमस्तस्य मूलम्॥ १०
अत्र गाथाः कामगीताः कीर्तयन्ति पुराविदः।

---

कीचकेन पराभवं इति क. पाठः॥ १२॥ आत्मना मनसा॥ १५॥ द्वादशोऽध्यायः॥ १२॥

न बाह्यस्य राज्यादेरर्थस्य त्यागात्त्यागी भवति किंतु शारीरं कामादिकं त्यक्त्वैव सिद्धिर्मोक्षः नवेति शुष्कवैराग्यवतो विवेकशून्यस्य सिद्ध्यभाव सूचयति। उत्सृज्य सिद्धिर्भवति भारतेतिक. ध. पाठः॥ १॥ गृध्यतः सक्तस्य यो धर्मः सः अधर्म एव यत्सुख तद्दुःखमेव॥ २॥ मम त्व ससारहेतुः तदभावो ब्रह्मप्राप्तिहेतुरित्यर्थः॥ ३॥ त्रयोदशोऽध्यायः॥ १३॥

शृणु संकीर्त्यमानास्ता अखिलेन युधिष्ठिर ॥ ११
काम उवाच ।
नाहं शक्योऽनुपायेन हन्तुं भूतेन केनचित् ॥ १२
यो मां प्रयतते हन्तुं ज्ञात्वा प्रहरणे बलम् ।
तस्य तस्मिन्प्रहरणे पुनः प्रादुर्भवाम्यहम् ॥ १३
यो मां प्रयतते हन्तुं यज्ञैर्विविधदक्षिणैः ।
जङ्गमेष्विव धर्मात्मा पुनःप्रादुर्भवाम्यहम् ॥ १४
यो मां प्रयतते हन्तुं वेदैर्वेदान्तसाधनैः ।
स्थावरेष्विव भूतात्मा तस्य प्रादुर्भवाम्यहम् ॥ १५
यो मां प्रयतते हन्तुं धृत्या सत्यपराक्रमः ।
भावो भवामि तस्याहं स च मां नावबुध्यते ॥ १६
यो मां प्रयतते हन्तुं तपसा संशितव्रतः ।
ततस्तपसि तस्याथ पुनः प्रादुर्भवाम्यहम् ॥ १७
यो मां प्रयतते हन्तुं मोक्षमास्थाय पण्डितः ।
तस्य मोक्षरतिस्थस्य नृत्यामि च हसामि च ।
अवध्यः सर्वभूतानामहमेकः सनातनः ॥ १८
तस्मात्त्वमपि तं कामं यज्ञैर्विविधदक्षिणैः ।
धर्मे कुरु महाराज तत्र ते स भविष्यति ॥ १९
यजस्व वाजिमेधेन विधिवद्दक्षिणावता ।
अन्यैश्च विविधैर्यज्ञैः समृद्धैराप्तदक्षिणैः ॥ २०
मा ते व्यथाऽस्तु निहतान्बन्धून्वीक्ष्य पुनः पुनः ।
न शक्यास्ते पुनर्द्रष्टुं येऽहतास्मिन्रणाजिरे ॥ २१
स त्वमिष्ट्वा महायज्ञैः समृद्धैराप्तदक्षिणैः ।
कीर्तिं लोके परां प्राप्य गतिमग्र्यां गमिष्यसि ॥ २२

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अश्वमेधपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥

## चतुर्दशोऽध्यायः ॥ १४ ॥

व्यासनारदकृष्णादिभिर्बन्धुनिधनपरिशोचिनो युधिष्ठिरस्य समाश्वासनेन तत्रान्तर्धानम् ॥ १ ॥ युधिष्ठिरेण भीष्मादीनामौर्ध्वदेहिकदानेन हास्तिननगरप्रवेशः ॥ २ ॥

वैशंपायन उवाच ।
एवं बहुविधैर्वाक्यैर्मुनिभिस्तैस्तपोधनैः ।
समाश्वस्यत राजर्षिर्हतबन्धुर्युधिष्ठिरः ॥ १
सोऽनुनीतो भगवता विष्टरश्रवसा स्वयम् ।
द्वैपायनेन कृष्णेन देवस्थानेन चाभिभूः ॥ २
नारदेनाथ भीमेन नकुलेन च पार्थिव ।
कृष्णया सहदेवेन विजयेन च धीमता ॥ ३
अन्यैश्च पुरुषव्याघ्रैर्ब्राह्मणैः शास्त्रदृष्टिभिः ।
व्यजहाच्छोकजं दुःखं संतापं चैव मानसम् ॥ ४
अर्चयामास देवांश्च ब्राह्मणांश्च युधिष्ठिरः ।
कृत्वाऽथ प्रेतकार्याणि सर्वेषां कुरुनन्दनः ।
अन्वशासच्च धर्मात्मा पृथिवीं सागराम्बराम् ॥ ५
प्रशान्तचेताः कौरव्यः स्वराज्यं प्राप्य केवलम् ।
व्यासं च नारदं चैव तांश्चान्यानब्रवीन्नृपः ॥ ६
आश्वासितोऽहं प्राग्वृद्धैर्भवद्भिर्मुनिपुङ्गवैः ।
न सूक्ष्ममपि मे किंचिद्व्यलीकमिह विद्यते ॥ ७
अर्थश्च सुमहान्प्राप्तो येन यक्ष्यामि देवताः ।
पुरस्कृत्याद्य भवतः समानेष्यामहे मखम् ॥ ८
हिमवन्तं त्वया गुप्ता गमिष्यामः पितामह ।
बह्वाश्चर्यो हि देशः स श्रूयते द्विजसत्तम ॥ ९
तथा भगवता चित्रं कल्याणं बहु भाषितम् ।
देवर्षिणा नारदेन देवस्थानेन चैव ह ॥ १०
नाभागधेयः पुरुषः कश्चिदेवंविधान्गुरून् ।
लभते व्यसनं प्राप्य सुहृदः साधुसंमतान् ॥ ११
वैशंपायन उवाच
एवमुक्तास्तु ते राज्ञा सर्व एव महर्षयः ।
अभ्यनुज्ञाप्य राजानं तथोभौ कृष्णफल्गुनौ ॥ १२
पश्यतामेव सर्वेषां तत्रैवादर्शनं ययुः ।
ततो धर्मसुतो राजा तत्रैवोपाविशत्प्रभुः ॥ १३
एवं नातिमहान्कालः स तेषां संन्यवर्तत ।
कुर्वतां शौचकार्याणि भीष्मस्य निधने तदा ।
महादानानि विप्रेभ्यो ददतामौर्ध्वदेहिकम् ॥ १४
भीष्मकर्णपुरोगाणां कुरूणां कुरुसत्तम ।
सहितो धृतराष्ट्रेण स ददावौर्ध्वदेहिकम् ॥ १५

ततो दत्त्वा बहुधनं विप्रेभ्यः पाण्डवर्षभः । धृतराष्ट्रं पुरस्कृत्य विवेश गजसाह्वयम् ॥ १६

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अश्वमेधपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥

## पञ्चदशोऽध्यायः ॥ १५ ॥

वैशंपायनेन जनमेजयंप्रति युधिष्ठिरस्य प्रजापालनकाले प्रजादीनामभ्युदयप्रकारवर्णनम् ॥ १ ॥

*वैशंपायन उवाच
स समाश्वास्य पितरं प्रज्ञाचक्षुषमीश्वरम् ।
अन्वशासत धर्मात्मा पृथिवीं भ्रातृभिः सह ॥ १
यथा मनुर्महाराजो रामो दाशरथिर्यथा ।
तथा भरतसिंहोऽपि पालयामास मेदिनीम् ॥ २
नाधर्म्यमभवत्तत्र सर्वो धर्मरुचिर्जनः ।
बभूव नरशार्दूल यथा कृतयुगे तथा ॥ ३
कलिमासन्नमाविष्टं निवार्य नृपनन्दनः ।
भ्रातृभिः सहितो धीमान्बभौ धर्मबलोद्धतः ॥ ४
ववर्ष भगवान्देवः काले देशे यथेप्सितम् ।
निरामयं जगद्भूत्क्षुत्पिपासे न किंचन ॥ ५
आधिर्नास्ति मनुष्याणां व्यसने नाभवन्मतिः ।
ब्राह्मणप्रमुखा वर्णास्ते स्वधर्मोत्तराः शुभाः ॥ ६
धर्मसत्यप्रधानाश्च सत्यं सद्विषयान्वितम् ।
धर्मासनस्थः सद्भिः स स्त्रीबालातुरवृद्धकान् ।
वर्णक्रमान्पूर्णभृतान्साकल्याद्रक्षणोद्यतः ॥ ७
अवृत्तिवृत्तिदानाद्यैर्यज्ञाद्यैर्व्याधितैरपि ।
आमुष्मिकं भयं नास्ति लौकिकं कृतमेव तु ॥ ८
स्वर्गलोकोपमो लोकस्तदा तस्मिन्प्रशासति ।
बभूव सुखमेवाग्र्यं तद्विशिष्टतरं परम् ॥
नार्यः पतिव्रताः सर्वा रूपवत्यः स्वलंकृताः ।
यथोक्तवृत्ताः स्वगुणैर्बभूवुः प्रीतिहेतवः ॥ १०
पुमांसः पुण्यशीलाढ्याः स्वंस्वं धर्ममनुव्रताः
सुखिनः सूक्ष्ममप्येनो न कुर्वन्ति कदाचन ॥ ११
सर्वे नराश्च नार्यश्च सततं प्रियवादिनः ।
अजिह्मनसः शुक्ला बभूवुः श्रमवर्जिताः ॥ १२
भूषिताः कुण्डलैर्हारैः कटकैः कटिसूत्रकैः ।
सुवाससः सुगन्धाढ्याः प्रायशः पृथिवीतले ॥ १३
सर्वे ब्रह्मविदो विप्राः सर्वत्र परिनिष्ठिताः ।
वलीपलितहीनास्तु सुखिनो दीर्घदर्शिनः ॥ १४
इच्छा न जायतेऽन्यत्र वर्णेषु न च संकरः ।
मनुष्याणां महाराज मर्यादा सुव्यवस्थिता ॥ १५
तस्मिञ्शासति राजेन्द्रे मृगव्यालसरीसृपाः ।
अन्योन्यमपि चान्येषु न बाधन्ते कदाचन ॥ १६
गावः सुक्षीरभूयिष्ठाः सुखवालमुखोदराः ।
अपीडिताः कर्षकाद्यैर्हृतव्याधिकवत्सकाः ॥ १७
अवन्ध्यकाला मनुजाः पुरुषार्थेषु च क्रमात् ।
विषयेष्वनिषिद्धेषु वेदशास्त्रेषु चोद्यताः ॥ १८
सुवृत्ता वृषभाः पुष्टा रसनाभाः सुखोदयाः॥ १९
अतीव मधुरः शब्दः स्पर्शश्चातिसुखं रसम् ।
रूपं दृष्टिक्षमं रम्यं मनोज्ञं गन्धवद्बभौ ॥ २०
धर्मार्थकामसंयुक्तं मोक्षाभ्युदयसाधनम् ।
प्रह्लादजननं पुण्यं संबभूवाथ मानसम् ॥ २१
स्थावरा बहुपुष्पाढ्याः फलच्छायावहास्तथा ।
सुस्पर्शा विषहीनाश्च सुपत्रत्वक्प्ररोहिणः ॥ २२
मनोनुकूलाः सर्वेषां चेष्टाभूतापवर्जिताः ।
तथा बभूव राजर्षिस्तद्वृत्तमभवद्भुवि ॥ २३
सर्वलक्षणसंपन्नाः पाण्डवा धर्मचारिणः ।
ज्येष्ठानुवर्तिनः सर्वे बभूवुः प्रियदर्शनाः ॥ २४
सिंहोरस्का जितक्रोधास्तेजोबलसमन्विताः ।
आजानुबाहवः सर्वे दानशीला जितेन्द्रियाः॥२५
तेषु शासत्सु धरणीमृतवः स्वगुणैर्बभुः ।
सुखोदयाय वर्तन्ते ग्रहास्तारागणैः सह ॥ २६
मही च सस्यबहुला सर्वरत्नगुणोदया ।

* अयमध्यायो दाक्षिणात्यकोशेष्वेव दृश्यते

कामधुग्धेनुवद्भोगान्फलन्ति स्म सहस्रधा ॥ २७
मन्वादिभिः कृताः पूर्वं मर्यादा मानवेषु याः ।
अनतिक्रम्य ताः सर्वाः कुलेषु समयानि च ।
अन्वशासत राजानो धर्मपुत्रप्रियंकराः ॥ २८
महाकुलानि धर्मिष्ठा वर्धयन्तो विशेषतः ।
मनुप्रणीतया वृत्त्या तेऽन्वशासन्वसुंधराम् ॥ २९
राजवृत्तिर्हि सा शश्वद्धर्मिष्ठाऽभून्महीतले ।
प्रायो लोकमतिस्तात राजवृत्तानुगामिनी ॥ ३०
एवं भारतवर्षं स्वं राजा स्वर्गे सुरेन्द्रवत् ।
शशास जिष्णुना सार्धं गोत्रां गाण्डीवधन्वना' ३१

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अश्वमेधपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥

## षोडशोऽध्यायः ॥ १६ ॥

वैशंपायनेन कुरुविजयानन्तरं हास्तिनपुरे कृष्णार्जुनविहारप्रकारवर्णनम् ॥ १ ॥ कृष्णेनार्जुनंप्रति युधिष्ठिरे स्वस्य निजनगरजिगमिषानिवेदनचोदना ॥ २ ॥

जनमेजय उवाच ।
विजिते पाण्डवेयैस्तु प्रशान्ते च द्विजोत्तम ।
राष्ट्रे ते चक्रतुर्वीरौ वासुदेवधनंजयौ ॥ १
वैशंपायन उवाच ।
विजिते पाण्डवै राजन्प्रशान्ते च विशांपतौ ।
राष्ट्रे बभूवतुर्हृष्टौ वासुदेवधनंजयौ ॥ २
विजह्राते मुदा युक्तौ दिवि देवेश्वराविव ।
तौ वनेषु विचित्रेषु पर्वतेषु ससानुषु ॥ ३
तीर्थेषु चैव पुण्येषु पल्वलेषु नदीषु च ।
चंक्रम्यमाणौ संहृष्टावश्विनाविव नन्दने ॥ ४
इन्द्रप्रस्थे महात्मानौ रेमाते कृष्णपाण्डवौ ।
प्रविश्य तां सभां रम्यां विजह्राते च भारत ॥ ५
तत्र युद्धकथाश्चित्राः परिक्लेशांश्च पार्थिव ।
कथायोगे कथायोगे कथयामासतुः सदा ॥ ६
ऋषीणां देवतानां च वंशांस्तावाहतुः सदा ।
प्रीयमाणौ महात्मानौ पुराणावृषिसत्तमौ ॥ ७
मधुरास्तु कथाश्चित्राश्चित्रार्थपदनिश्चयाः ।
निश्चयज्ञः स पार्थाय कथयामास केशवः ॥ ८
पुत्रशोकाभिसंतप्तं ज्ञातीनां च सहस्रशः ।
कथाभिः शमयामास पार्थं शौरिर्जनार्दनः ॥ ९
स तमाश्वास्य विधिवद्विधानज्ञो महातपाः ।
अपहृत्यात्मनो भारं विशश्रामेव सात्वतः ॥ १०
ततः कथान्ते गोविन्दो गुडाकेशमुवाच ह ।
सान्त्वयञ्श्लक्ष्णया वाचा हेतुयुक्तमिदं वचः ११
विजितेयं धरा कृत्स्ना सव्यसाचिन्परंतप ।
त्वद्बाहुबलमाश्रित्य राज्ञा धर्मसुतेन ह ॥ १२
असपत्नां महीं भुङ्क्ते धर्मराजो युधिष्ठिरः ।
भीमसेनानुभावेन यमयोश्च नरोत्तम ॥ १३
धर्मेण राज्ञा धर्मज्ञ प्राप्तं राज्यमकण्टकम् ।
धर्मेण निहतः सङ्ख्ये स च राजा सुयोधनः ॥ १४
अधर्मरुचयो लुब्धाः सदा चाप्रियवादिनः ।
धार्तराष्ट्रा दुरात्मानः सानुबन्धा निपातिताः १५
प्रशान्तामखिलां पार्थ पृथिवीं पृथिवीपतिः ।
भुङ्क्ते धर्मसुतो राजा त्वया गुप्तः कुरूद्वह ॥ १६
रमे चाहं त्वया सार्धमरण्येष्वपि पाण्डव ।
किमु यत्र जनोऽयं वै पृथा चामित्रकर्शन ॥ १७
यत्र धर्मसुतो राजा यत्र भीमो महाबलः ।
यत्र माद्रवतीपुत्रौ रतिस्तत्र परा मम ॥ १८
तथैव स्वर्गलोकेषु सभोद्देशेषु कौरव ।
रमणीयेषु पुण्येषु सहितस्य त्वयाऽनघ ॥ १९
कालो महांस्त्वतीतो मे शूरसूनुमपश्यतः ।
बलदेवं च कौरव्य तथाऽन्यान्वृष्णिपुङ्गवान् ॥ २०
सोऽहं गन्तुमभीप्सामि पुरीं द्वारवतीं प्रति ।
रोचतां गमनं तुभ्यं ममापि पुरुषर्षभ ॥ २१

---

शशास विष्णुना सार्धं गुप्तो गाण्डीवधन्वनेति थ. पाठः ॥ ३१ ॥ पञ्चदशोऽध्यायः ॥ १५ ॥

शैलेषु गह्वरारण्ये पल्वलेष्विति क. थ. पाठः ॥ ४ ॥ षोडशोऽध्यायः ॥ १६ ॥

उक्तो बहुविधं राजा तत्रतत्र युधिष्ठिरः।
सह भीष्मेण यद्युक्तमस्माभिः शोककर्शितः॥ २२
शिष्टो युधिष्ठिरोऽस्माभिः शास्ता सन्नपि पाण्डवः।
तेन तत्तु वचः सम्यग्गृहीतं सुमहात्मना॥ २३
धर्मपुत्रे हि धर्मज्ञे कृतज्ञे सत्यवादिनि।
सत्यं धर्मो मतिश्चाग्र्या स्थितिश्च सततं स्थिरा॥२४
तत्र गत्वा महात्मानं यदि ते रोचतेऽर्जुन।
अस्मद्गमनसंयुक्तं वचो ब्रूहि जनाधिपम्॥ २५
न हि तस्याप्रियं कुर्यां प्राणत्यागेऽप्युपस्थिते।
कुतो गन्तुं महाबाहो पुरीं द्वारावतीं प्रति॥२६
सर्वं त्विदमहं पार्थ त्वत्प्रीतिहितकाम्यया।
ब्रवीमि सत्यं कौरव्य न मिथ्यैतत्कथंचन॥२७
प्रयोजनं च निर्वृत्तमिह वासेन मेऽर्जुन।
धार्तराष्ट्रो हतो राजा सबलः सपदानुगः॥ २८
पृथिवी च वशे तात धर्मपुत्रस्य धीमतः।
स्थिता समुद्रवसना सशैलवनकानना॥ २९
चिता रत्नैर्बहुविधैः कुरुराजस्य पाण्डव।
धर्मेण राजा धर्मज्ञः पातु सर्वां वसुंधराम्॥ ३०
उपास्यमानो मुनिभिः सिद्धैश्चापि महात्मभिः।
स्तूयमानश्च सततं बन्दिभिर्भरतर्षभ॥ ३१
तं मया सह गत्वाऽद्य राजानं कुरुवर्धनम्।
आपृच्छ कुरुशार्दूल गमनं द्वारकां प्रति॥ ३२
इदं शरीरं वसु यच्च मे गृहे
निवेदितं पार्थ सदा युधिष्ठिरे।
प्रियश्च मान्यश्च हि मे युधिष्ठिरः
सदा कुरूणामधिपो महामतिः॥ ३३
प्रयोजनं चापि निवासकारणे
न विद्यते मे त्वदृते नृपात्मज।
स्थिता हि पृथ्वी तव पार्थ शासने
गुरोः सुवृत्तस्य युधिष्ठिरस्य च॥ ३४
इतीदमुक्तः स तदा महात्मना
जनार्दनेनामितविक्रमोऽर्जुनः।
तथेति दुःखादिव वाक्यमैरय-
ज्जनार्दनं संप्रतिपूज्य पार्थिव॥ ३५

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अश्वमेधपर्वणि षोडशोऽध्यायः॥ १६॥

समाप्तं च अश्वमेधपर्व॥ १॥

# (अथानुगीतापर्व॥ २॥)

## सप्तदशोऽध्यायः॥ १७॥

अर्जुनेन कृष्णंप्रति पूर्वोपदिष्टगीतार्थस्य विस्मरणोक्त्या पुनस्तदुपदेशप्रार्थना॥ १॥ कृष्णेनार्जुनंप्रति स्वस्मै ब्राह्मणोक्तसिद्धकाश्यपसंवादानुवादः॥ २॥

जनमेजय उवाच।
सभायां वसतोस्तत्र निहत्यारीन्महात्मनोः।
केशवार्जुनयोः का नु कथा समभवद्द्विज॥ १
वैशंपायन उवाच।
कृष्णेन सहितः पार्थः स्वं राज्यं प्राप्य केवलम्।
तस्यां सभायां दिव्यायां विजहार मुदा युतः॥ २
तत्र कंचित्सभोद्देशं स्वर्गोद्देशसमं नृप।
यदृच्छया तौ मुदितौ जग्मतुः स्वजनावृतौ॥ ३
ततः प्रतीतः कृष्णेन सहितः पाण्डवोऽर्जुनः।
निरीक्ष्य तां सभां रम्यामिदं वचनमब्रवीत्॥ ४
विदितं मे महाबाहो संग्रामे समुपस्थिते।
माहात्म्यं देवकीपुत्र तच्च ते रूपमैश्वरम्॥ ५
यत्तु तद्भवता प्रोक्तं पुरा केशव सौहृदात्।
तत्सर्वं पुरुषव्याघ्र नष्टं मे व्यग्रचेतसः॥ ६
मम कौतूहलं त्वस्ति तेष्वर्थेषु पुनः पुनः।
भवांस्तु द्वारकां गन्ता नचिरादिव माधव॥ ७
वैशंपायन उवाच।
एवमुक्तस्तु तं कृष्णः फाल्गुनं प्रत्यभाषत।

परिष्वज्य महातेजा वचनं वदतांवरः ॥ ८
वासुदेव उवाच ।
श्रावितस्त्वं मया गुह्यं ज्ञापितश्च सनातनम् ।
धर्मं स्वरूपिणं पार्थ सर्वलोकांश्च शाश्वतान् ॥ ९
अबुद्ध्या यन्न गृह्णीथास्तन्मे सुमहदप्रियम् ।
न च साऽद्य पुनर्भूयः स्मृतिर्मे संभविष्यति ॥ १०
नूनमश्रद्दधानोऽसि दुर्मेधा ह्यसि पाण्डव ।
न च शक्यं पुनर्वक्तुमशेषेण धनंजय ॥ ११
स हि धर्मः सुपर्याप्तो ब्रह्मणः पदवेदने ।
न शक्यं तन्मया भूयस्तथा वक्तुमशेषतः ॥ १२
परं हि ब्रह्म कथितं योगयुक्तेन तन्मया ।
इतिहासं तु वक्ष्यामि तस्मिन्नर्थे पुरातनम् ॥ १३
यथा तां बुद्धिमास्थाय गतिमग्र्यां गमिष्यसि ।
शृणु धर्मभृतांश्रेष्ठ गदतः सर्वमेव मे ॥ १४
आगच्छद्ब्राह्मणः कश्चित्स्वर्गलोकादरिंदम ।
ब्रह्मलोकाच्च दुर्धर्षः सोऽस्माभिः पूजितोऽभवत् १५
अस्माभिः परिपृष्टश्च यदाह भरतर्षभ ।
दिव्येन विधिना पार्थ तच्छृणुष्वाविचारयन् ॥ १६
ब्राह्मण उवाच ।
मोक्षधर्मं समाश्रित्य कृष्ण यन्माऽनुपृच्छसि ।
भूतानामनुकम्पार्थं मन्मोहच्छेदनं विभो ॥ १७
तत्तेऽहं संप्रवक्ष्यामि यथावन्मधुसूदन ।
शृणुष्वावहितो भूत्वा गदतो मम माधव ॥ १८
कश्चिद्विप्रस्तपोयुक्तः काश्यपो धर्मवित्तमः ।
आससाद द्विजं कंचिद्धर्माणामागतागमम् ॥ १९
गतागमं सुबहुशो ज्ञानविज्ञानपारगम् ।
लोकतत्त्वार्थकुशलं ज्ञातारं सुखदुःखयोः ॥ २०
जातिमरणतत्त्वज्ञं कोविदं पापपुण्ययोः ।
द्रष्टारमुच्चनीचानां कर्मभिर्देहिनां गतिम् ॥ २१
चरन्तं मुक्तवत्सिद्धं प्रशान्तं संयतेन्द्रियम् ।
दीप्यमानं श्रिया ब्राह्म्या क्रममाणं च सर्वशः २२
अन्तर्धानगतिज्ञं च श्रुत्वा तत्त्वेन काश्यपः ।
तथैवान्तर्हितैः सिद्धैर्यान्तं चक्रधरैः सह ॥ २३
संभाषमाणमेकान्ते समासीनं च तैः सह ।
यदृच्छया च गच्छन्तमसक्तं पवनं यथा ॥ २४
तं समासाद्य मेधावी स तदा द्विजसत्तमः ।
चरणौ धर्मकामो वै स तस्य सुसमाहितः ।
प्रतिपेदे यथान्यायं भक्त्या परमया युतः ॥ २५
विस्मितश्चाद्भुतं दृष्ट्वा काश्यपस्तं द्विजोत्तमम् ।
परिचारेण महता गुरुं तं पर्यतोषयत् ॥ २६
उपपन्नं च तत्सर्वं श्रुतचारित्रसंयुतम् ।
भावेनातोषयच्चैनं गुरुवृत्तिं समास्थितः ॥ २७
तस्मै तुष्टः स शिष्याय यत्प्रसन्नोऽब्रवीद्गुरुः ।
सिद्धिं परामभिप्रेक्ष्य शृणु मत्तो जनार्दन ॥ २८
सिद्ध उवाच ।
विविधैः कर्मभिस्तात पुण्ययोगैश्च केवलैः ।
गच्छन्तीह गतिं मर्त्या देवलोके च वा स्थितिम् २९
न क्वचित्सुखमत्यन्तं न क्वचिच्छाश्वती स्थितिः ।
स्थानाच्च महतो भ्रंशो दुःखलब्धात्पुनः पुनः ३०
अशुभा गतयः प्राप्ताः कष्टा मे पापसेवनात् ।
काममन्युपरीतेन तृष्णया मोहितेन च ॥ ३१
पुनः पुनश्च मरणं जन्म चैव पुनः पुनः ।
आहारा विविधा भुक्ताःपीता नानाविधाःस्तनाः॥
मातरो विविधा दृष्टाः पितरश्च पृथग्विधाः ।
सुखानि च विचित्राणि दुःखानि च मयाऽनघ ३३
प्रियैर्विवासो बहुशः संवासश्चाप्रियैः सह ।
धननाशश्च संप्राप्तो लब्ध्वा दुःखेन तद्धनम् ॥ ३४
अवमानाः सुकष्टाश्च परतः स्वजनात्तथा ।
शारीरा मानसा वाऽपि वेदना भृशदारुणाः॥३५
प्राप्ता विमाननाश्चोग्रा वधबन्धाश्च दारुणाः ।
पतनं निरये चैव यातनाश्च यमक्षये ॥ ३६
जरारोगाश्च सततं व्यसनानि च भूरिशः ।
लोकेऽस्मिन्ननुभूतानि द्वन्द्वजानि भृशं मया ॥ ३७
ततः कदाचिन्निर्वेदान्निकारान्निकृतेन च ।
लोकतन्त्रं परित्यक्तं दुःखार्तेन भृशं मया ॥ ३८
लोकेऽस्मिन्ननुभूयाहमिमं मार्गमनुष्ठितः ।
ततः सिद्धिरियं प्राप्ता प्रसादादात्मनो मया ।

आगतागमं प्राप्तशास्त्ररहस्यमूहापोहकुशलमित्यर्थः ॥ १९ ॥

नाहं पुनरिहागन्ता लोकानालोकयाम्यहम् ॥ ३९
आसिद्धेराप्रजासर्गादात्मनोपि गतीः शुभाः ।
उपलब्धा द्विजश्रेष्ठ तथेयं सिद्धिरुत्तमा ॥ ४०
इतः परं गमिष्यामि ततः परतरं पुनः ।
ब्रह्मणः पदमव्यक्तं मा तेऽभूदत्र संशयः ॥ ४१
नाहं पुनरिहागन्ता मर्त्यलोकं परंतप ।
प्रीतोस्मि ते महाप्राज्ञ ब्रूहि किं करवाणि ते ॥ ४२
यदीप्सुरुपपन्नस्त्वं तस्य कालोऽयमागतः ।
अभिजाने च तदहं यदर्थं मामुपागतः ॥ ४३
अचिरात्तु गमिष्यामि येनाहं त्वामचूचुदम् ।
भृशं प्रीतोस्मि भवतश्चारित्रेण विचक्षण ॥ ४४
परिपृच्छ यावद्भवतो भाषे यद्यत्तवेप्सितम् ॥ ४५
बहुमन्ये च ते बुद्धिं भृशं संपूजयामि च ।
येनाहं भवता बुद्धो मेधावी ह्यसि काश्यप ॥ ४६

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि सप्तदशोऽध्यायः ॥ १७ ॥

## अष्टादशोऽध्यायः ॥ १८ ॥

ब्राह्मणेन कृष्णंप्रति प्राणिनां जननमरणादिप्रतिपादकसिद्धकश्यपसंवादानुवादः ॥ १ ॥

वासुदेव उवाच ।
ततस्तस्योपसंगृह्य पादौ प्रश्नान्सुदुर्वचान् ।
पप्रच्छ तांश्च धर्मान्स प्राह धर्मभृतांवरः ॥ १
काश्यप उवाच ।
कथं शरीराच्च्यवते कथं चैवोपपद्यते ।
कथं कष्टाच्च संसारात्संसरन्परिमुच्यते ॥ २
आत्मानं वा कथं युक्त्वा तच्छरीरं विमुञ्चति ।
शरीरे च विनिर्मुक्तो कथमन्यत्प्रपद्यते ॥ ३
कथं शुभाशुभे चायं कर्मणी स्वकृते नरः ।
उपभुङ्क्ते क्व वा कर्म विदेहस्योपतिष्ठते ॥ ४
ब्राह्मण उवाच ।
एवं संचोदितः सिद्धः प्रश्नांस्तान्प्रत्यभाषत ।
आनुपूर्व्येण वार्ष्णेय तन्मे निगदतः शृणु ॥ ५
सिद्ध उवाच ।
'अस्मिन्नेवाशु फलदा आयुष्यास्तु क्रियाः स्मृताः ।
आयुःकीर्तिकराणीह यानि कृत्यानि सेवते ।'
शरीरग्रहणेऽन्यस्मिंस्तेषु क्षीणेषु सर्वशः ॥ ६
आयुःक्षयपरीतात्मा विपरीतानि सेवते ।
बुद्धिर्व्यावर्तते चास्य विनाशे प्रत्युपस्थिते ॥ ७
सत्त्वं बलं च कालं चाविदित्वा चात्मनस्तथा ।
अतिवेलमुपाश्नाति स्वविरुद्धान्यनात्मवान् ॥ ८
यदाऽयमतिकष्टानि सर्वाण्युपनिषेवते ।
अत्यर्थमपि वा भुङ्क्ते न वा भुङ्क्ते कदाचन ॥ ९
दुष्टान्नामिषपानं च यदन्योन्यविरोधि च ।
गुरु चाप्यमितं भुङ्क्ते नातिजीर्णे दिवा पुनः ॥ १०
व्यायाममतिमात्रं च व्यवायं चोपसेवते ।
सततं कर्मलोभाद्वा प्राप्तं वेगं विधारयेत् ॥ ११
रसाभियुक्तमन्नं वा दिवास्वप्नं च सेवते ।
अपक्वानागते काले स्वयं दोषान्प्रकोपयेत् ॥ १२
स्वदोषकोपनाद्रोगं लभते मरणान्तिकम् ।
अपि वोद्बन्धनादीनि परीतानि व्यवस्यति ॥ १३
तस्य तैः कारणैर्जन्तोः शरीरं च्यवते तदा ।
जीवितं प्रोच्यमानं तद्यथावदुपधारय ॥ १४
ऊष्मा प्रकुपितः काये तीव्रवायुसमीरितः ।
शरीरमनुपर्येत्य सर्वान्प्राणान्रुणद्धि वै ॥ १५
अत्यर्थं बलवानूष्मा शरीरे परिकोपितः ।
भिनत्ति जीवस्थानानि तानि कर्माणि विद्धि च ॥ १६
ततः सवेदनः सद्यो जीवः प्रच्यवते क्षरन् ।
शरीरं त्यजते जन्तुश्छिद्यमानेषु मर्मसु ।
वेदनाभिः परीतात्मा तद्विद्धि द्विजसत्तम ॥ १७
जनीमरणसंविग्नाः सततं सर्वजन्तवः ।
दृश्यन्ते संत्यजन्तश्च शरीराणि द्विजर्षभ ॥' १८

बहुमन्ये भृशं पूजये । अहमन्तर्धानगतोऽपि यतस्त्वया ज्ञातः ॥ ४६ ॥ सप्तदशोऽध्यायः ॥ १७ ॥

दुष्टान्न विषमान्न वेति क॰ ट॰ थ॰ पाठः ॥ १० ॥ अपक्वाशं गते काले स्वयं दोषप्रकोपनमिति क॰ ठ॰ थ॰ पाठः ॥ १२ ॥

गर्भसंक्रमणे चापि गर्भाणामुपसर्पणे
तादृशीमेव लभते वेदनां मानवः पुनः ॥ १९
भिन्नसंधिरथ क्रुदमांद्रः स लभते नरः ॥ २०
यथा पञ्चसु भूतेषु संभूतत्वं नियच्छति ।
शैत्यात्प्रकुपितः काये तीव्रवायुसमीरितः ॥ २१
यः स पञ्चसु भूतेषु प्राणापाने व्यवस्थितः ।
स गच्छत्यूर्ध्वगो वायुः कृच्छ्रान्मुक्त्वा शरीरिणः
शरीरं च जहात्येवं निरुच्छ्वासश्च दृश्यते ॥ २२
स निरूष्मा निरुच्छ्वासो निःश्रीको गतचेतनः ।
कर्मणा संपरित्यक्तो मृत इत्युच्यते नरः ॥ २३
स्रोतोभिर्यैर्विजानाति इन्द्रियार्थाञ्शरीरभृत् ।
तैरेव न विजानाति प्राणानाहारसंभवान् ॥ २४
तत्रैव कुरुते काये यः स जीवः सनातनः ॥ २५
तथा यद्यद्भवेन्मुक्तं सन्निपाते क्वचित्क्वचित् ।
तत्तन्मर्म विजानीहि शास्त्रदृष्टं हि तत्तथा ॥ २६
तेषु मर्मसु भिन्नेषु ततः स समुदीरयन् ।
आविश्य हृदयं जन्तोः सत्त्वं चाशु रुणद्धि वै ॥२७
ततः सचेतनो जन्तुर्नाभिजानाति किंचन ।
तमसा संवृतज्ञानः संवृतेष्वेव मर्मसु ।
स जीवो निरधिष्ठानश्चाल्यते मातरिश्वना ॥ २८
ततः स तं महोच्छ्वासं भृशमुच्छ्वस्य दारुणम् ।
निष्क्रमन्कम्पयत्याशु तच्छरीरमचेतनम् ॥ २९
स जीवः प्रच्युतः कायात्कर्मभिः स्वैः समावृतः ।
अङ्कितः स्वैः शुभैः पुण्यैः पापैर्वाऽप्युपपद्यते ॥ ३०
ब्राह्मणा ज्ञानसंपन्ना यथावच्छ्रुतनिश्चयाः ।
इतरं कृतपुण्यं वा तं विजानन्ति लक्षणैः ॥३१
यथान्धकारे खद्योतं दीप्यमानं ततस्ततः ।
चक्षुष्मन्तः प्रपश्यन्ति तथा च ज्ञानचक्षुषः ॥ ३२
पश्यन्त्येवंविधं सिद्धा जीवं दिव्येन चक्षुषा ।
च्यवन्तं जायमानं च योनिं चानुप्रवेशितम् ॥३३
तस्य स्थानानि दृष्टानि विविधानीह शास्त्रतः ।
कर्मभूमिरियं भूमिर्यत्र तिष्ठन्ति जन्तवः ॥ ३४
ततः शुभाशुभं कृत्वा लभन्ते सर्वदेहिनः
इहैवोच्चावचान्भोगान्प्राप्नुवन्ति स्वकर्मभिः ॥ ३५
इहैवाशुभकर्माणः कर्मभिर्निरयं गताः ।
अवाग्गतिरियं कष्टा यत्र पच्यन्ति मानवाः ।
तस्मात्सुदुर्लभो मोक्षो रक्ष्यश्चात्मा ततो भृशम् ३६
ऊर्ध्वं तु जन्तवो गत्वा येषु स्थानेष्ववस्थिताः ।
कीर्त्यमानानि तानीह तत्त्वतः संनिबोध मे ॥३७
तच्छ्रुत्वा नैष्ठिकीं बुद्धिं बुध्येथाः कर्मनिश्चयम् ।
तारारूपाणि सर्वाणि यत्रैतच्चन्द्रमण्डलम् ॥ ३८
यत्र विभ्राजते लोके स्वभासा सूर्यमण्डलम् ।
स्थानान्येतानि जानीहि जनानां पुण्यकर्मणाम् ॥
कर्मक्षयाच्च ते सर्वे च्यवन्ते वै पुनः पुनः ।
तत्रापि च विशेषोस्ति दिवि नीचोच्चमध्यमः ॥४०
न च तत्रापि संतोषो दृष्ट्वा दीप्ततरां श्रियम् ।
इत्येता गतयः सर्वाः पृथक्ते समुदीरिताः ॥ ४१
उपपत्तिं तु वक्ष्यामि गर्भस्याहमतः परम् ।
तथावत्तां निगदतः शृणुष्वावहितो द्विज ॥ ४२

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि अष्टादशोऽध्यायः ॥ १८ ॥

## एकोनविंशोऽध्यायः ॥ १९ ॥

ब्राह्मणेन कृष्णंप्रति जीवस्य गर्भप्रवेशादिप्रतिपादककाश्यपसिद्धसंवादानुवादः ॥ १ ॥

ब्राह्मण उवाच ।
शुभानामशुभानां च नेह नाशोस्ति कर्मणाम् ।
प्राप्यप्राप्यानुपच्यन्ते क्षेत्रेक्षेत्रे तथातथा ॥ १
यथा प्रसूयमानस्तु फली दद्यात्फलं बहु ।
तथा स्याद्विपुलं पुण्यं शुद्धेन मनसा कृतम् ॥ २
पापं चापि तथैव स्यात्पापेन मनसा कृतम् ।

गर्भसंक्रमणे गर्भस्थदेहप्रवेशे ॥ १९ ॥ श्लेष्मा प्रकुपित इति क. थ. पाठः ॥ २१ ॥ स्रोतोभिरिन्द्रियैः ॥ २४ ॥
अष्टादशोऽध्यायः ॥ १८ ॥
फली वृक्ष. ॥ २ ॥

पुरोधाय मनो हीह कर्मण्यात्मा प्रवर्तते ॥ ३
यथा कर्मसमाविष्टः काममन्युसमावृतः ।
नरो गर्भं प्रविशति तत्रापि शृणु चोत्तरम् ॥ ४
शुक्रं शोणितसंसृष्टं स्त्रिया गर्भाशयं गतम् ।
क्षेत्रं कर्मजमाप्नोति शुभं वा यदि वाऽशुभम् ॥ ५
सौक्ष्म्यादव्यक्तभावाच्च न च क्वचन सज्जति ।
संप्राप्य ब्राह्मणः कायं तस्मात्तद्ब्रह्म शाश्वतम् ॥ ६
तद्बीजं सर्वभूतानां तेन जीवन्ति जन्तवः ॥ ७
स जीवः सर्वभूतानां गर्भमाविश्य भागशः ।
दधाति चेतनां सद्यः प्राणस्थानेष्ववस्थितः ।
ततः स्पन्दयतेऽङ्गानि स गर्भश्चेतनान्वितः ॥ ८
यथा लोहस्य निष्यन्दो निषिक्तो बिम्बविग्रहम् ।
उपैति तद्वज्जानीहि गर्भे जीवप्रवेशनम् ॥ ९
लोहपिण्डं यथा वह्निः प्रविश्य ह्यतितापयेत् ।
तथा त्वमपि जानीहि गर्भे जीवोपपादनम् ॥ १०
यथा च दीपः शरणं दीप्यमानः प्रकाशयेत् ।
एवमेव शरीराणि प्रकाशयति चेतनः ॥ ११
यद्यच्च कुरुते कर्म शुभं वा यदि वाऽशुभम् ।
पूर्वदेहकृतं सर्वमवश्यमुपभुज्यते ॥ १२
ततस्तु क्षीयते चैव पुनश्चान्यत्प्रचीयते ।
यावत्तु मोक्षयोगस्थं धर्मं नैवावबुध्यते ॥ १३
तत्र धर्मं प्रवक्ष्यामि सुखी भवति येन वै ।
आवर्तमानो जातीषु यथाऽन्योन्यासु सत्तम १४
दानं व्रतं ब्रह्मचर्यं यथोक्तव्रतधारणम् ।
दमः प्रशान्तता चैव भूतानां चानुकम्पनम् ॥ १५
संयमश्चानृशंस्यं च परस्वादानवर्जनम् ।
व्यलीकानामकरणं भूतानां मनसा भुवि ॥ १६
मातापित्रोश्च शुश्रूषा देवतातिथिपूजनम् ।
गुरुपूजा घृणा शौचं नित्यमिन्द्रियसंयमः ॥ १७
प्रवर्तनं शुभानां च तत्सतां व्रतमुच्यते ।
ततो धर्मः प्रभवति यः प्रजाः पाति शाश्वतीः १८
सद्भिराचरितो धर्मः सदाचार प्रतिष्ठितः ।
उभयार्थो भवत्येव स्वर्गार्थो मोक्षतस्तथा ॥ १९
एवं सत्सु सदा पश्येत्तत्राप्येषा ध्रुवा स्थितिः ।
आचारो धर्ममाचष्टे यस्मिन्सन्तो व्यवस्थिताः २०
तेषु तत्कर्म निक्षिप्तं यः स धर्मः सनातनः ।
यस्तं समभिपद्येत न स दुर्गतिमाप्नुयात् ॥ २१
अतो नियम्यते लोकः प्रच्यवन्धर्मवर्त्मसु ।
यश्च योगी च मुक्तश्च स एतेभ्यो विशिष्यते ॥ २२
वर्तमानस्य धर्मेण पुरुषस्य यथा तथा ।
संसारतारणं ह्यस्य कालेन महता भवेत् ॥ २३
एवं पूर्वकृतं कर्म सर्वो जन्तुः प्रपद्यते ।
सर्वं तत्कारणं येन निकृतोऽयमिहागतः ॥ २४
शरीरग्रहणं चास्य केन पूर्वं प्रकल्पितम् ।
इत्येवं संशये लोके तच्च वक्ष्याम्यतः परम् ॥ २५
शरीरमात्मनः कृत्वा सर्वलोकपितामहः ।
त्रैलोक्यमसृजद्ब्रह्मा कृत्स्नं स्थावरजङ्गमम् ॥ २६
ततः प्रधानमसृजच्चेतनां तु शरीरिणाम् ।
यया सर्वमिदं व्याप्तं यां लोके परमां विदुः ॥ २७
इदं तत्क्षरमित्युक्तं परं त्वमृतमक्षरम् ।
त्रयाणां मिथुनं सर्वमेकैकस्य पृथक्पृथक् ॥ २८
असृजत्सर्वभूतानि पूर्वसृष्टः प्रजापतिः ।
स्थावराणि च भूतानि इत्येषा पौर्विकी श्रुतिः २९
तस्य कालपरीमाणमकरोत्स पितामहः ।
भूतेषु परिवृत्तिं च पुनरावृत्तिमेव च ॥ ३०
यथा तु कश्चिन्मेधावी दृष्टात्मा पूर्वजन्मनि ।
यत्प्रवक्ष्यामि तत्सर्वं यथावदुपपद्यते ॥ ३१
...ःखे यथा सम्यगनित्ये यः प्रपश्यति ।
कायं चामेध्यसंस्थानं विनाशं कर्मसंहितम् ॥ ३२
यच्च किंचित्सुखं तच्च दुःखं दृष्टमिति स्मरन् ।
संसारसागरं घोरं तरिष्यति सुदुस्तरम् ॥ ३३
जनीमरणरोगैश्च समाविष्टः प्रधानवित् ।
चेतनावत्सु चैतन्यं समं भूतेषु पश्यति ॥ ३४

तथापि तेजसा सम्यक्प्राणस्थाने इति थ. पाठः ॥ ८ ॥ यथा स्वर्णद्रवः स्वल्पोपि कृत्स्नां ताम्रप्रतिमां स्वर्णमयीमिव करोत्येव गर्भे जीवप्रवेशन। शरीरे सूक्ष्मस्यापि चैतन्यस्य व्याप्तिरित्याद्यस्य परिहारः ॥ ९॥ क्षरं जडम् ॥ २८॥ एकोनविंशोऽध्यायः ॥ १९॥

निर्विद्यते ततः कश्चिन्मार्गमाणः परं पदम् ।
तस्योपदेशं वक्ष्यामि याथातथ्येन सत्तम ॥ ३५
शाश्वतस्याव्ययस्याथ यदस्य ज्ञानमुत्तमम् ।
प्रोच्यमानं मया विप्र निबोधेदमशेषतः ॥ ३६

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि एकोविंशोऽध्यायः ॥ १९ ॥

## विंशोऽध्यायः ॥ २० ॥

कृष्णेनार्जुनंप्रति मोक्षसाधनादिप्रतिपादकसिद्धकाश्यपसंवादरूपानुगीतोपदेशः ॥ १ ॥

ब्राह्मण उवाच ।
यः स्यादेकान्त आसीनस्तूर्ष्णीं किंचिदचिन्तयन् ।
परित्यज्य स निरारम्भको भवेत् ॥ १
सर्वमित्रः सर्वसहः शमे रक्तो जितेन्द्रियः
व्यपेतभयमन्युश्च कामहा मुच्यते नरः ॥ २
आत्मवत्सर्वभूतेषु यश्चरेन्नियतः शुचिः ।
'नित्यमेव यथान्यायं यश्चरेन्नियतेन्द्रियः ।'
अमानी निरभीमानः सर्वतो मुक्त एव सः ॥ ३
जीवितं मरणं चोभे सुखदुःखे तथैव च ।
लाभालाभे प्रियद्वेष्ये यः समः स च मुच्यते ॥ ४
न कस्यचित्स्पृहयते नावजानाति किंचन ।
निर्द्वन्द्वो वीतरागात्मा सर्वथा मुक्त एव सः ॥ ५
अनमित्रश्च निर्बन्धुरनपत्यश्च यः क्वचित् ।
त्यक्तधर्मार्थकामश्च निराकाङ्क्षी च मुच्यते ॥ ६
नैव धर्मी न चाधर्मी पूर्वोपचितहा च यः ।
क्षीणधातुः प्रशान्तात्मा निर्द्वंद्वः स विमुच्यते ॥ ७
अकर्मा चाविकाङ्क्षश्च पश्येज्जगदशाश्वतम्
अस्वस्थमवशं नित्यं जन्ममृत्युजरायुतम् ॥ ८
वैराग्यबुद्धिः सततं तावद्दोषव्यपेक्षकः ।
आत्मबन्धविनिर्मोक्षं स करोत्यचिरादिव ॥ ९
अगन्धमरसस्पर्शमशब्दमपरिग्रहम् ।
अरूपमनभिज्ञेयं दृष्ट्वाऽऽत्मानं विमुच्यते ॥ १०
पञ्चभूतगुणैर्हीनममूर्तिमदलेपकम् ।
अगुणं गुणभोक्तारं यः पश्यति स मुच्यते ॥ ११
विहाय सर्वसंकल्पान्बुद्ध्या शारीरमानसान् ।
शनैर्निर्वाणमाप्नोति निरिन्धन इवानलः ॥ १२
सर्वसंस्कारनिर्मुक्तो निर्द्वन्द्वो निष्परिग्रहः ।
तपसा इन्द्रियग्रामं यश्चरेन्मुक्त एव सः ॥ १३
विमुक्तः सर्वसंस्कारैस्ततो ब्रह्म सनातनम् ।
परमाप्नोति संशान्तमचलं नित्यमक्षरम् ॥ १४
अतः परं प्रवक्ष्यामि योगशास्त्रमनुत्तमम् ।
यज्ज्ञात्वा सिद्धमात्मानं लोके पश्यन्ति योगिनः ॥
तस्योपदेशं वक्ष्यामि यथावत्तन्निबोध मे ।
यैर्योगैर्भावयन्नित्यं पश्यत्यात्मानमात्मनि ॥ १६
इन्द्रियाणि तु संहृत्य मन आत्मनि धारयेत् ।
तीव्रं तप्त्वा तपः पूर्वं मोक्षयोगं समाचरेत् ॥ १७
तपस्वी नित्यसंकल्पो दम्भाहङ्कारवर्जितः ।
मनीषी मनसा विप्रः पश्यत्यात्मानमात्मनि ॥ १८
स चेच्छक्नोत्ययं साधुर्योक्तुमात्मानमात्मनि ।
तत एकान्तशीलः स पश्यत्यात्मानमात्मनि ॥ १९
संयतः सततं युक्त आत्मवान्विजितेन्द्रियः ।
यथा य आत्मनाऽऽत्मानं संप्रयुक्तः प्रपश्यति २०
यथाहि पुरुषः स्वप्ने दृष्ट्वा पश्यत्यसाविति
तथारूपमिवात्मानं साधुयुक्तः प्रपश्यति ॥ २१
इषीकां च यथा मुञ्जात्कश्चिन्निष्कृष्य दर्शयेत् ।
योगी निष्कृष्य चात्मानं तथा पश्यति देहतः २२
मुञ्जं शरीरमित्याहुरिषीकामात्मनि श्रिताम् ।
एतन्निदर्शनं प्रोक्तं योगविद्भिरनुत्तमम् ॥ २३
यदा हि युक्तमात्मानं सम्यक् पश्यति देहभृत् ।
न तस्येहेश्वरः कश्चित्त्रैलोक्यस्यापि यः प्रभुः ॥ २४
अन्यान्याश्चैव तनवो यथेष्टं प्रतिपद्यते ।
विनिर्भिद्य जरां मृत्युं न शोचति न हृष्यति ॥ २५

---

सर्वमित्रोऽद्रोही । सर्वसहः क्षमी ॥ २ ॥ अनमित्रः शत्रुहीनः ॥ ६ ॥ अमूर्तिमदहेतुकमिति झ. पाठः ॥ ११ ॥

विंशोऽध्यायः ॥ २० ॥

देवानामपि देवत्वं युक्तः कारयते वशी ।
ब्रह्म चाव्ययमाप्नोति हित्वा देहमशाश्वतम् ॥२६
विनश्यत्सु च लोकेषु न भयं तस्य जायते ।
क्लिश्यमानेषु भूतेषु न स क्लिश्यति केनचित् २७
दुःखशोकमलैर्घोरैः सङ्गस्नेहसमुद्भवैः ।
न विचाल्यति युक्तात्मा निस्पृहः शान्तमानसः॥
नैनं शस्त्राणि विध्यन्ते न मृत्युश्चास्य विद्यते ।
नातः सुखतरं किंचिल्लोके क्वचन दृश्यते ॥ २९
सम्यग्युक्त्वा स आत्मानमात्मन्येव प्रतिष्ठिते ।
विनिवृत्तजरादुःखः सुखं स्वपिति चापि सः॥ ३०
देहान्यथेष्टमभ्येति हित्वेमां मानुषीं तनुम् ।
निर्वेदस्तु न कर्तव्यो भुञ्जानेन कथंचन ॥ ३१
सम्यग्युक्तो यदात्मानमात्मन्येव प्रपश्यति ।
तदैव न स्पृहयते साक्षादपि शतक्रतोः ॥ ३२
योगमेकान्तशीलस्तु यथा विन्दति तच्छृणु ।
दृष्टपूर्वां दिशं चिन्त्य यस्मिन्संनिवसेत्पुरे ॥ ३३
पुरस्याभ्यन्तरे तस्य मनः स्थाप्यं न बाह्यतः ।
पुरस्याभ्यन्तरे तिष्ठन्यस्मिन्नावसथे वसेत् ।
तस्मिन्नावसथे धार्यं सबाह्याभ्यन्तरं मनः ॥ ३४
प्रचिन्त्यावसथे कृत्स्नं यस्मिन्काये स पश्यति ।
तस्मिन्काये मनश्चास्य न च किंचन बाह्यतः॥ ३५
सन्नियम्येन्द्रियग्रामं निर्घोषे निर्जने वने ।
कायमभ्यन्तरं कृत्स्नमेकाग्रः परिचिन्तयेत् ॥ ३६
दन्तांस्तालु च जिह्वां च गलं ग्रीवां तथैव च ।
हृदयं चिन्तयेच्चापि तथा हृदयबन्धनम् ॥ ३७
इत्युक्तः स मया शिष्यो मेधावी मधुसूदन ।
पप्रच्छ पुनरेवेमं मोक्षधर्मं सुदुर्वचम् ॥ ३८
भुक्तं भुक्तमिदं कोष्ठे कथमन्नं विपच्यते ।
कथं रसत्वं व्रजति शोणितत्वं कथं पुनः ॥ ३९
तथा मांसं च मेदश्च स्नाय्वस्थीनि च पोषयेत् ।
कथमेतानि सर्वाणि शरीराणि शरीरिणाम् ॥४०
वर्धन्ते वर्धमानस्य वर्धते च कथं बलम् ।
निरासनं निष्कसनं मलानां च पृथक् पृथक् ॥ ४१
कुतो वाऽयं प्रश्वसिति उच्छ्वसित्यपि वा पुनः ।
कं च देशमधिष्ठाय तिष्ठत्यात्माऽयमात्मनि ॥ ४२
जीवः कथं वहति च चेष्टमानः कलेवरम् ।
किंवर्णं कीदृशं चैव निवेशयति वै मनः ॥ ४३
याथातथ्येन भगवन्वक्तुमर्हसि मेऽनघ ।
इति संपरिपृष्टोऽहं तेन विप्रेण माधव ॥ ४४
प्रत्यब्रवं महाबाहो यथाश्रुतमरिंदम ।
यथा स्वकोष्ठे प्रक्षिप्य भाण्डं भाण्डमना भवेत् ४५
तथा स्वकाये प्रक्षिप्य मनोद्वारैरनिश्चलैः ।
आत्मानं तत्र मार्गेत प्रमादं परिवर्जयेत् ॥ ४६
एवं सततमुद्युक्तः प्रीतात्मा नचिरादिव ।
आसादयति तद्ब्रह्म यद्दृष्ट्वा स्यात्प्रधानवित् ॥ ४७
न त्वसौ चक्षुषा ग्राह्यो न च सर्वैरपीन्द्रियैः ।
मनसैव प्रदीपेन महानात्मा प्रदृश्यते ॥ ४८
सर्वतः पाणिपादान्तः सर्वतोक्षिशिरोमुखः ।
सर्वतः श्रुतिमाँल्लोके सर्वमावृत्य तिष्ठति ॥ ४९
जीवो निष्क्रान्तमात्मानं शरीरात्संप्रपश्यति ।
स तमुत्सृज्य देहं स्वं धारयेद्ब्रह्म केवलम् ॥ ५०
आत्मानमालोकयति मनसा प्रहसन्निव ।
तदेवमाश्रयं कृत्वा मोक्षं याति ततो मयि ॥ ५१
इदं सर्वरहस्यं ते मया प्रोक्तं द्विजोत्तम ।
आपृच्छे साधयिष्यामि गच्छ विप्र यथासुखम् ५२
इत्युक्तः स तदा कृष्ण मया शिष्यो महातपाः ।
अगच्छत यथाकामं ब्राह्मणश्छिन्नसंशयः ॥ ५३
वासुदेव उवाच ।
इत्युक्त्वा स तदा वाक्यं मां पार्थ द्विजसत्तमः ।
मोक्षधर्माश्रितं सम्यक् तत्रैवान्तरधीयत ॥ ५४
कच्चिदेतत्त्वया पार्थ श्रुतमेकाग्रचेतसा ।
तदापि हि रथस्थस्त्वं श्रुतवानेतदेव हि ॥ ५५
नैतत्पार्थ सुविज्ञेयं व्यामिश्रेणेति मे मतिः ।
नरेणाकृतसञ्ज्ञेन विशुद्धेनान्तरात्मना ॥ ५६
सुरहस्यमिदं प्रोक्तं देवानां भरतर्षभ ।
कच्चिन्विदं श्रुतं पार्थ मनुष्येणेह कर्हिचित् ॥५७
न ह्येतच्छ्रोतुमर्होऽन्यो मनुष्यस्त्वामृतेऽनघ ।
नैतदन्येन विज्ञेयं व्यामिश्रेणान्तरात्मना ॥ ५८

क्रियावद्भिर्हि कौन्तेय देवलोकः समावृतः ।
न चैतदिष्टं देवानां मर्त्यैरुपरि वर्तनम् ॥ ५९
परा हि सा गतिः पार्थ यत्तद्ब्रह्म सनातनम् ।
यत्रामृतत्वं प्राप्नोति त्यक्त्वा दुःखं सदा सुखी ६०
इमं धर्मं समास्थाय येऽपि स्युः पापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम्
किं पुनर्ब्राह्मणाः पार्थ क्षत्रिया वा बहुश्रुताः ।
स्वधर्मरतयो नित्यं ब्रह्मलोकपरायणाः ॥ ६२
हेतुमच्चैतदुद्दिष्टमुपायाश्चास्य साधने ।
सिद्धिं फलं च मोक्षश्च दुःखस्य च विनिर्णयः ६३
नातः परं सुखं त्वन्यत्किंचित्स्याद्भरतर्षभ ।
श्रुतवाञ्श्रद्दधानश्च पराक्रान्तश्च पाण्डव ॥ ६४
यः परित्यज्यते मर्त्यो लोकसारमसारवत् ।
एतैरुपायैः स क्षिप्रं परां गतिमवाप्नुते ॥ ६५
एतावदेव वक्तव्यं नान्तो भूयोस्ति किंचन ।
षण्मासान्नित्ययुक्तस्य योगः पार्थ प्रवर्तते ॥ ६६

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि विंशोऽध्यायः ॥ २० ॥

## एकविंशोऽध्यायः ॥ २१ ॥

कृष्णेनार्जुनंप्रति भूतप्राणादिसृष्ट्यादिप्रतिपादकब्राह्मणदंपतिसंवादानुवादः ॥ १ ॥

वासुदेव उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
दंपत्योः पार्थ संवादो योऽभवद्भरतर्षभ ॥ १
ब्राह्मणी ब्राह्मणं कंचिज्ज्ञानविज्ञानपारगम् ।
दृष्ट्वा विविक्त आसीनं भार्या भर्तारमब्रवीत् ॥२
कं नु लोकं गमिष्यामि त्वामहं पतिमाश्रिता ।
न्यस्तकर्माणमासीनं कीनाशमविचक्षणम् ॥ ३
भार्याः पतिकृताँल्लोकानाप्नुवन्तीति नः श्रुतम् ।
त्वामहं पतिमासाद्य कां गमिष्यामि वै गतिम् ४
एवमुक्तः स शान्तात्मा तामुवाच हसन्निव ।
सुभगे नाभ्यसूयामि वाक्यस्यास्य तवानघे ॥ ५
ग्राह्यं दृश्यं तथा श्राव्यं यदिदं कर्म विद्यते ।
एतदेव व्यवस्यन्ति कर्म कर्मेति कर्मिणः ॥ ६
मोहमेव निगच्छन्ति कर्मिणो ज्ञानवर्जिताः ।
नैष्कर्म्यं न च लोकेऽस्मिन्मौर्तमित्युपलभ्यते ॥ ७
कर्मणा मनसा वाचा शुभं वा यदि वाऽशुभम् ।
जन्मादिमूर्तिभेदानां कर्म भूतेषु वर्तते ॥ ८
रक्षोभिर्वध्यमानेषु दृश्यश्राव्येषु कर्मसु ।
आत्मस्थमात्मना तेन दृष्टमायतनं मया ॥ ९
यत्र तद्ब्रह्म निर्द्वन्द्वं यत्र सोमः सहाग्निना ।
व्यवायं कुरुते नित्यं धीरो भूतानि धारयन् ॥ १०
यत्र ब्रह्मादयो युक्तास्तदक्षरमुपासते ।
विद्वांसः सुव्रता यत्र शान्तात्मानो जितेन्द्रियाः ॥
घ्राणेन न तदाघ्रेयं नास्वाद्यं चैव जिह्वया ।
स्पर्शनेन तदस्पृश्यं मनसा त्ववगम्यते ॥ १२
चक्षुषा न विषह्यं च यत्किंचिच्छ्रवणात्परम् ।
अगन्धमरसस्पर्शमरूपं शब्दवर्जितम् ।
यतः प्रवर्तते तन्त्रं यत्र चैतत्प्रतिष्ठितम् ॥ १३
प्राणोऽपानः समानश्च व्यानश्चोदान एव च ।
तत एव प्रवर्तन्ते तदेव प्रविशन्ति च ॥ १४
समानव्यानयोर्मध्ये प्राणापानौ विचेरतुः ।
तस्मिन्सुप्ते प्रलीयेते समानो व्यान एव च ॥१५
अपानप्राणयोर्मध्ये उदानो व्याप्य तिष्ठति ।
तस्माच्छयानं पुरुषं प्राणापानौ न मुञ्चतः ॥ १६
प्राणैर्नोपहते यत्तु तमुदानं प्रचक्षते ।
तस्मात्तपो व्यवस्यन्ति तद्भवं ब्रह्मवादिनः ॥ १७
तेषामन्योन्यसक्तानां सर्वेषां देहचारिणाम् ।
अग्निर्वैश्वानरो मध्ये सप्तधा विहितोऽन्तरा ॥१८
घ्राणं जिह्वा च चक्षुश्च त्वक्च श्रोत्रं च पञ्चमम् ।
मनो बुद्धिश्च सप्तैता जिह्वा वैश्वानरार्चिषः ॥१९

कर्म अग्निहोत्रादिकं न्यस्तं येन तम् । कीनाशं कर्कशं मयि निरनुक्रोशम् । अविचक्षणं मम अनन्यगतिकत्वमजानन्तम् ॥ ३ ॥
मौख्र्यमित्युपलभ्यते इति थ. द. पाठ. ॥ ७ ॥ तत्परं ब्रह्मवादिन इति द. पाठः ॥ १७ ॥ एकविंशोऽध्यायः ॥ २१ ॥

घ्रेयं दृश्यं च पेयं च स्पृश्यं श्राव्यं तथैव च ।
मन्तव्यमवबोद्धव्यं ताः सप्त समिधो मताः॥२०
घ्राता भक्षयिता द्रष्टा स्प्रष्टा श्रोता च पञ्चमः ।
मन्ता बोद्धा च सप्तैते भवन्ति परमर्त्विजः॥ २१
घ्रेये पेये च दृश्ये च स्पृश्ये श्राव्ये तथैव च ।
मन्तव्येऽप्यथ बोद्धव्ये सुभगे पश्य सर्वदा ॥२२
हवींष्यग्निषु होतारः सप्तधा सप्तसप्तसु ।
सम्यक्प्रक्षिप्य विद्वांसो जनयन्ति स्वयोनिषु २३
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ।
मनो बुद्धिश्च सप्तैता योनिरित्येव शब्दिताः॥२४
हविर्भूतगुणाः सर्वे प्रविशन्त्यग्निजं मुखम् ।
अन्तर्वासमुषित्वा च जायन्ते स्वासु योनिषु॥२५
तत्रैव च निरुध्यन्ते प्रलये भूतभावने ।
ततः संजायते गन्धस्ततः संजायते रसः ॥ २६
ततः संजायते रूपं ततः स्पर्शोऽभिजायते ।
ततः संजायते शब्दः संशयस्तत्र जायते ।
ततः संजायते निष्ठा जन्मैतत्सप्तधा विदुः॥ २७
अनेनैव प्रकारेण प्रगृहीतं पुरातनैः ।
पूर्णाहुतिभिरापूर्णास्ते पूर्यन्ते हि तेजसा ॥ २८

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि एकविंशोऽध्यायः ॥ २१ ॥

## द्वाविंशोऽध्यायः ॥ २२ ॥

कृष्णेनार्जुनंप्रति दशेन्द्रियगुणादिप्रतिपादकब्राह्मणदंपतिसंवादानुवादः ॥ १ ॥

ब्राह्मण उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
निबोध दशहोतॄणां विधानमिह यादृशम् ॥ १
श्रोत्रं त्वक्चक्षुषी जिह्वा नासिका चरणौ करौ ।
उपस्थं पायुरिति वाग्घोतॄणि दश भामिनि ॥ २
शब्दस्पर्शौ रूपरसौ गन्धो वाक्यं क्रिया गतिः ।
रेतोमूत्रपुरीषाणां त्यागो दश हवींषि च ॥ ३
दिशो वायू रविश्चन्द्रः पृथ्व्यग्नी विष्णुरेव च ।
इन्द्रः प्रजापतिर्मित्रमग्नयो दश भामिनि ॥ ४
दशेन्द्रियाणि होतॄणि हवींषि दश भामिनि ।
विषया नाम समिधो हूयन्ते तु दशाग्निषु ॥ ५
चित्तं स्रुवश्च वित्तं च पवित्रं ज्ञानमुत्तमम् ।
सुविभक्तमिदं पूर्वं जगदासीदिति श्रुतम् ॥ ६
'ततो विविक्ता चित्तासीत्सा चित्तं पर्यवेक्षते ।'
सर्वमेवात्र विज्ञेयं चित्ते ज्ञानमवेक्षता ।
रेतः शरीरभृत्काये विज्ञाता तु शरीरभृत् ॥ ७
शरीरभृद्गार्हपत्यस्तस्मादग्निः प्रणीयते ।
मनश्चाहवनीयस्तु तस्मिन्प्रक्षिप्यते हविः ॥ ८
ततो वाचस्पतिर्जज्ञे तं मनः पर्यवेक्षते ।
रूपं भवति वै वक्रं तदनुद्रवते मनः ॥ ९
ब्राह्मण्युवाच ।
कस्माद्वागभवत्पूर्वं कस्मात्पश्चान्मनोऽभवत् ।
मनसा चिन्तितं पूर्वं वाक्यं समभिपद्यते ॥ १०
केन विज्ञानयोगेन मतिश्चित्तं समास्थिता ।
समुन्नीता नाध्यगच्छत्को वै तां प्रतिबाधते ॥११
ब्राह्मण उवाच ।
तन्मनस्थः पतिर्भूत्वा तस्मात्प्रेहन्निवायति ।
तां मतिं मनसः प्राहुर्मनस्तस्मादपेक्षते ॥ १२
प्रश्नं तु वाङ्मनसयोर्यस्मात्त्वमनुपृच्छसि ।
तस्मात्ते वर्तयिष्यामि तयोरेव समाह्वयम् ॥ १३
उभे वाङ्मनसी गत्वा भूतात्मानमपृच्छताम् ।
आवयोः श्रेष्ठमाचक्ष्व च्छिन्धि नौ संशयं विभो१४
मन इत्येव भगवांस्तदा प्राह सरस्वतीम् ।
अहं वै कामधुक्तुभ्यमिति तं प्राह वागथ ॥१५
ब्राह्मण उवाच ।
स्थावरं जंगमं चैव विद्ध्युभे मनसी मम ।

जज्ञे समानः पर्युपेक्षत इति ट. थ. पाठः ॥ ९ ॥ समाह्वय सम्यक्सुख आह्वयन्ते विजिगीषवोऽस्मिन्निति समाह्वयः संवादस्तम् ॥ १३ ॥

स्थावरं मत्सकाशे वै जङ्गमं विषये तव ॥ १६
यस्तु ते विषये गच्छन्मन्त्रो वर्णः स्वरोपि वा ।
तन्मनो जङ्गमं नाम तस्मादसि गरीयसी ॥ १७
तस्माद्भवितुमर्हामि स्वयमभ्येत्य शोभने ।
तस्मादुच्छ्वासमासाद्य प्रवक्ष्यामि सरस्वति ॥ १८
प्राणापानावन्तरे यद्वाग्वै नित्यं स्म तिष्ठति ।
प्रीयमाणा महाभागे विना प्राणांश्च मामपि ।
प्रजापतिमुपाधावत्प्रसीद भगवन्निति ॥ १९
ततः प्राणः प्रादुरभूद्वाचमाप्याययन्पुनः ।
तस्मादुच्छ्वासमासाद्य न वाग्वदति कर्हिचित् २०
घोषिणी जातनिर्घोषा नित्यमेव प्रवर्तते ।
तयोरपि च घोषिण्या निर्घोषैव गरीयसी ॥ २१
गौरिव प्रस्रवत्यर्थान्रसमुत्तमशालिनी ।
सततं स्यन्दते ह्येषा शाश्वतं ब्रह्मवादिनी ॥ २२
दिव्यादिव्यप्रभावेन भारती गौः शुचिस्मिते ।
एतयोरन्तरं पश्य सूक्ष्मयोर्यतमानयोः ॥ २३
ब्राह्मण्युवाच ।
अनुत्पन्नेषु वाक्येषु चोद्यमाना सिसृक्षया ।
किंनु पूर्वं तदा देवी व्याजहार सरस्वती ॥ २४
ब्राह्मण उवाच ।
प्राणेन या संभवते शरीरे
प्राणादपानं प्रतिपद्यते च ।
उदानभूता च विसृज्य देहं
व्यानेन सर्वं दिवमावृणोति ॥ २५
ततः समाने प्रतितिष्ठतीह
इत्येव पूर्वं प्रजजल्प वागपि ।
तस्मान्मनः स्थावरत्वाद्विशिष्टं
तथा देवी जङ्गमत्वाद्विशिष्टा ॥ २६

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि द्वाविंशोऽध्यायः ॥ २२ ॥

## त्रयोविंशोऽध्यायः ॥ २३ ॥

कृष्णेनार्जुनंप्रति पृथग्घ्राणादीन्द्रियगुणप्रतिपादनपूर्वकं तेषां मनसा सह विवादप्रतिपादकब्राह्मणदंपतिसंवादानुवादः॥१॥

ब्राह्मण उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
सुभगे सप्तहोतॄणां विधानमिह यादृशम् ॥ १
घ्राणश्चक्षुश्च जिह्वा च त्वक् श्रोत्रं चैव पञ्चमम् ।
मनो बुद्धिश्च सप्तैते होतारः पृथगाश्रिताः ॥ २
सूक्ष्माकाशे समं प्राप्ते न पश्यन्तीतरेतरम् ।
एतद्वै सप्तहोतृत्वं स्वभावाद्विद्धि शोभने ॥ ३
ब्राह्मण्युवाच ।
सूक्ष्मे तु काशे संप्राप्ते कथं नान्योन्यदर्शिनः ।
कथं स्वभावाद्भगवन्नेतदाचक्ष्व मे प्रभो ॥ ४
ब्राह्मण उवाच ।
गुणज्ञानेषु विज्ञानं गुणज्ञानामभिज्ञता ।
परस्परं गुणानेते नाभिजानन्ति कर्हिचित् ॥ ५
जिह्वा चक्षुस्तथा श्रोत्रं त्वङ्मनो बुद्धिरेव च ।
न गन्धानधिगच्छन्ति घ्राणस्तानधिगच्छति ॥ ६
घ्राणं चक्षुस्तथा श्रोत्रं त्वङ्मनो बुद्धिरेव च ।
न रसानधिगच्छन्ति जिह्वा तानधिगच्छति ॥ ७
घ्राणं जिह्वा तथा श्रोत्रं त्वङ्मनो बुद्धिरेव च ।
न रूपाण्यधिगच्छन्ति चक्षुस्तान्यधिगच्छति ॥ ८
घ्राणं जिह्वा ततश्चक्षुः श्रोत्रं बुद्धिर्मनस्तथा ।
न स्पर्शानधिगच्छन्ति त्वक्च तानधिगच्छति ॥ ९
घ्राणं जिह्वा च चक्षुश्च त्वङ्मनो बुद्धिरेव च ।
न शब्दानधिगच्छन्ति श्रोत्रं तानधिगच्छति ॥१०
घ्राणं जिह्वा च चक्षुश्च त्वक् श्रोत्रं बुद्धिरेव च ।
संकल्पान्नाधिगच्छन्ति मनस्तानधिगच्छति ॥ ११
घ्राणं जिह्वा च चक्षुश्च त्वक् श्रोत्रं मन एव च ।
न निष्ठामधिगच्छन्ति बुद्धिस्तामधिगच्छति ॥१२
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
इन्द्रियाणां च संवादं मनसश्चैव भामिनि ॥ १३

---

मासमुत्तमशालिनीति क. ट. थ. पाठः ॥ २२ ॥

मन उवाच ।
नाघ्राति मामृते घ्राणं रसं जिह्वा न वेत्ति च ।
रूपं चक्षुर्न गृह्णाति त्वक् स्पर्शं नावबुध्यते ॥ १४
न श्रोत्रं बुध्यते शब्दं मया हीनं कथंचन ।
प्रवरं सर्वभूतानामहमस्मि सनातनम् ॥ १५
अगाराणीव शून्यानि शान्तार्चिष इवाग्नयः ।
इन्द्रियाणि न भासन्ते मया हीनानि नित्यशः १६
काष्ठानीवार्द्रशुष्काणि यतमानैरपीन्द्रियैः ।
गुणार्थान्नाधिगच्छन्ति मामृते सर्वजन्तवः ॥ १७
इन्द्रियाण्यूचुः ।
एवमेतद्भवेत्सत्यं यथैतन्मन्यते भवान् ।
ऋतेऽस्मानस्मदर्थांस्त्वं भोगान्भुङ्क्षे भवान्यदि॥१८
यद्यस्मासु प्रलीनेषु तर्पणं प्राणधारणम् ।
भोगान्भुङ्क्षे भवान्सत्यं यथैतन्मन्यते तथा ॥ १९
अथवाऽस्मासु लीनेषु तिष्ठत्सु विषयेषु च ।
यदि संकल्पमात्रेण भुङ्क्षे भोगान्यथार्थवत् ॥ २०
अथ चेन्मन्यसे सिद्धिमस्मदर्थेषु नित्यदा ।
घ्राणेन रूपमादत्स्व रसमादत्स्व चक्षुषा ॥ २१
श्रोत्रेण गन्धानादत्स्व स्पर्शानादत्स्व जिह्वया ।
त्वचा च शब्दमादत्स्व बुद्ध्या स्पर्शमथापि च॥२२
बलवन्तो ह्यनियमा नियमा दुर्बलीयसाम् ।
भोगानपूर्वानादत्स्व नोच्छिष्टं भोक्तुमर्हति ॥ २३
यथा हि शिष्यः शास्तारं श्रुत्यर्थमभिधावति ।
ततः श्रुतमुपादाय श्रुतार्थमुपतिष्ठति ॥ २४
विषयानेवमस्माभिर्दर्शितानभिमन्यसे ।
अनुभूतानतीतांश्च स्वप्ने जागरणे तथा ॥ २५
वैमनस्यं गतानां च जन्तूनामल्पचेतसाम्
अस्मदर्थे कृते कार्ये दृश्यते प्राणधारणम् । २६
बहूनपि हि संकल्पान्मत्वा स्वप्नानुपास्य च ।
बुभुक्षया पीड्यमानो विषयानेव धावति ॥ २७
अगारमद्वारमिव प्रविश्य
संकल्पभोगान्विषयानविन्दन् ।
प्राणक्षये शान्तिमुपैति नित्यं
दारुक्षयेऽग्निर्ज्वलितो यथैव ॥ २८
कामं तु नष्टेषु गुणेषु सङ्गः
कामं च नान्योन्यगुणोपलब्धिः
अस्मान्विना नास्ति तपोपलब्धि-
स्तामप्यृते त्वां न भजेत्प्रहर्षः ॥ २९

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥

## चतुर्विंशोऽध्यायः ॥ २४ ॥

कृष्णेनार्जुनंप्रति प्राणापानादीनां स्वस्वश्रैष्ठ्यप्रकारकविवादादिप्रतिपादकब्राह्मणदंपतिसंवादानुवादः ॥ १ ॥

ब्राह्मण उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
सुभगे पञ्चहोतॄणां विधानमिह यादृशम् ॥
प्राणापानावुदानश्च समानो व्यान एव च ।
पञ्चहोतॄंस्तथैतान्वै परं भावं विदुर्बुधाः ॥
ब्राह्मण्युवाच ।
स्वभावात्सप्तहोतार इति मे पूर्विका मतिः ।
यथा वै पञ्च होतारः परो भावस्तदुच्यताम्
ब्राह्मण उवाच ।
प्राणेन संभृतो वायुरपानो जायते ततः ।
अपाने संभृतो वायुस्ततो व्यानः प्रवर्तते ॥ ४
व्यानेन संभृतो वायुस्ततोदानः प्रवर्तते ।
उदाने संभृतो वायुः समानो नाम जायते ॥ ५
तेऽपृच्छन्त पुरो गत्वा पूर्वजातं पितामहम् ।
यो नः श्रेष्ठस्तमाचक्ष्व स नः श्रेष्ठो भविष्यति॥६
ब्रह्मोवाच ।
यस्मिन्प्रलीने प्रलयं व्रजन्ति
सर्वे प्राणाः प्राणभृतां शरीरे ।
यस्मिन्प्रवृत्ते च पुनश्चरन्ति
स वै श्रेष्ठो गच्छत यत्र कामः ॥ ७

प्राण उवाच ।
मयि प्रलीने प्रलयं व्रजन्ति
सर्वे प्राणाः प्राणभृतां शरीरे ।
मयि प्रवृत्ते च पुनश्चरन्ति
श्रेष्ठो ह्यहं पश्यत मां प्रलीनम् ॥ ८
ब्राह्मण उवाच ।
प्राणः प्रालीयत ततः पुनश्च प्रचचार ह ।
समानश्चाप्युदानश्च वचो ब्रूतां पुनः शुभे ॥ ९
न त्वं सर्वमिदं व्याप्य तिष्ठसीह यथा वयम् ।
न त्वं श्रेष्ठो हि नः प्राण अपानो हि वशे तव ।
प्रचचार पुनः प्राणस्ततोऽपानोऽभ्यभाषत ॥१०
अपान उवाच ।
मयि प्रलीने प्रलयं व्रजन्ति
सर्वे प्राणाः प्राणभृतां शरीरे
मयि प्रवृत्ते च पुनश्चरन्ति
श्रेष्ठो ह्यहं पश्यत मां प्रलीनम् ॥ ११
ब्राह्मण उवाच ।
व्यानश्च तमुदानश्च भाषमाणमथोचतुः ।
अपान न त्वं श्रेष्ठोसि प्राणो हि वशगस्तव ॥ १२
अपानः प्रचचाराथ व्यानस्तं पुनरब्रवीत् ।
श्रेष्ठोऽहमस्मि सर्वेषां श्रूयतां येन हेतुना ॥ १३
मयि प्रलीने प्रलयं व्रजन्ति
सर्वे प्राणाः प्राणभृतां शरीरे ।
मयि प्रवृत्ते च पुनश्चरन्ति
श्रेष्ठो ह्यहं पश्यत मां प्रलीनम् ॥ १४
ब्राह्मण उवाच ।
प्रालीयत ततो व्यानः पुनश्च प्रचचार ह ।
प्राणापानावुदानश्च समानश्च तमब्रुवन् ॥ १५
न त्वं श्रेष्ठोसि नो व्यान समानस्तु वशे तव ।
प्रचचार पुनर्व्यानः समानः पुनरब्रवीत् ।
श्रेष्ठोऽहमस्मि सर्वेषां श्रूयतां येन हेतुना ॥ १६
मयि प्रलीने प्रलयं व्रजन्ति
सर्वे प्राणाः प्राणभृतां शरीरे ।
मयि प्रवृत्ते च पुनश्चरन्ति
श्रेष्ठो ह्यहं पश्यत मां प्रलीनम् ॥ १७
'ततः समानः प्रालिल्ये पुनश्च प्रचचार ह ।
प्राणापानावुदानश्च व्यानश्चैव तमब्रवीत् ।
न त्वं समान श्रेष्ठोसि व्यान एव वशे तव ॥' १८
समानः प्रचचाराथ उदानस्तमुवाच ह ।
श्रेष्ठोऽहमस्मि सर्वेषां श्रूयतां येन हेतुना ॥ १९
मयि प्रलीने प्रलयं व्रजन्ति
सर्वे प्राणाः प्राणभृतां शरीरे ।
मयि प्रवृत्ते च पुनश्चरन्ति
श्रेष्ठो ह्यहं पश्यत मां प्रलीनम् ॥ २०
ततः प्रालीयतोदानः पुनश्च प्रचचार ह ।
प्राणापानौ समानश्च व्यानश्चैव तमब्रुवन् ।
उदान न त्वं श्रेष्ठोसि व्यान एव वशे तव ॥ २१
ब्राह्मण उवाच ।
ततस्तानब्रवीत्सर्वान्स्मयमानः प्रजापतिः ।
सर्वे श्रेष्ठा न च श्रेष्ठाः सर्वे चान्योन्यकाङ्क्षिणः ॥ २२
सर्वे स्वविषये श्रेष्ठाः सर्वे चान्योन्यधर्मिणः ।
इति तानब्रवीत्सर्वान्समवेतान्प्रजापतिः ॥ २३
एकः स्थिरश्चराश्चान्ये विशेषात्पञ्च वायवः ।
एक एव च सर्वात्मा बहुधाऽप्युपचीयते ॥ २४
परस्परस्य सुहृदो भावयन्तः परस्परम् ।
स्वस्ति व्रजत भद्रं वो धारयध्वं परस्परम् ॥ २५

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥

---

## पञ्चविंशोऽध्यायः ॥ २५ ॥

कृष्णेनार्जुनंप्रति ब्राह्मणेन ब्राह्मणींप्रत्युक्तसृष्ट्यादिप्रतिपादकनारददेवमतसंवादानुवाद. ॥ १ ॥

ब्राह्मण उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम्

बहुधाप्युपलीयते इति क. थ. पाठः ॥ २४ ॥

नारदस्य च संवादमृषेर्देवमतस्य च ॥ १
देवमत उवाच ।
जन्तोः संजायमानस्य किंनु पूर्वं प्रवर्तते ।
प्राणोऽपानः समानो वा व्यानो वोदान एव च ॥ २
नारद उवाच ।
येनायं सृज्यते जन्तुस्ततोऽन्यः पूर्वमेति तम् ।
प्राणद्वन्द्वं हि विज्ञेयं तिर्यगूर्ध्वमधश्च यत् ॥ ३
देवमत उवाच ।
केनायं सृज्यते जन्तुः कश्चान्यः पूर्वमेति तम् ।
प्राणद्वन्द्वं च मे ब्रूहि तिर्यगूर्ध्वमधश्च यत् ॥ ४
नारद उवाच ।
संकल्पाज्जायते हर्षः शब्दादपि च जायते ।
रसात्संजायते चापि रूपादपि च जायते ॥ ५
'स्पर्शात्संजायते चापि गन्धादपि च जायते ।'
शुक्राच्छोणितसंसृष्टात्पूर्वं प्राणः प्रवर्तते ।
प्राणेन विकृते शुक्रे ततोऽपानः प्रवर्तते ॥ ६
शुक्रात्संजायते चापि रसादपि च जायते ।
एतद्रूपमुदानस्य हर्षो मिथुनमन्तरा ॥ ७
कामात्संजायते शुक्रं शुक्रात्संजायते रजः ।
समानव्यानजनिते सामान्ये शुक्रशोणिते ॥ ८
प्राणापानाविदं द्वन्द्वमवाक् चोर्ध्वं च गच्छतः ।
व्यानः समानश्चैवोभौ तिर्यग्द्वन्द्वत्वमुच्यते ॥ ९
अग्निर्वै देवताः सर्वा इति देवस्य शासनात् ।
संजायते हि प्राणेषु ज्ञानं बुद्धिसमन्वितम् ॥ १०
तस्य धूमस्तमोरूपं रजो भस्म सुतेजसः ।
सर्वं संजायते तस्य यत्र प्रक्षिप्यते हविः ॥ ११
हविः समानो व्यानश्च इति यज्ञविदो विदुः ।
प्राणापानावाज्यभागौ तयोर्मध्ये हुताशनः ॥ १२
एतद्रूपमुदानस्य परमं ब्राह्मणा विदुः ।
निर्द्वन्द्वमिति यत्त्वेतत्तन्मे निगदतः शृणु ॥ १३
अहोरात्रमिदं द्वन्द्वं तयोर्मध्ये हुताशनः ।
एतद्रूपमुदानस्य परमं ब्राह्मणा विदुः ॥ १४
'उभे सत्यानृते द्वन्द्वं तयोर्मध्ये हुताशनः ।
एतद्रूपमुदानस्य परमं ब्राह्मणा विदुः ॥' १५
सच्चासच्चैव तद्द्वन्द्वं तयोर्मध्ये हुताशनः ।
एतद्रूपमुदानस्य परमं ब्राह्मणा विदुः ॥ १६
'उभे शुभाशुभे द्वन्द्वं तयोर्मध्ये हुताशनः ।
एतद्रूपमुदानस्य परमं ब्राह्मणा विदुः ॥' १७
ऊर्ध्वं समानो व्यानश्च व्यस्यते कर्म तेन तत् ।
द्वितीयं तु समानेन पुनरेव व्यवस्यते ॥ १८
शान्त्यर्थं वामदेव्यं च शान्तिर्ब्रह्म सनातनम् ।
एतद्रूपमुदानस्य परमं ब्राह्मणा विदुः ॥ १९

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥

## षड्विंशोऽध्यायः ॥ २६ ॥

कृष्णेन युधिष्ठिरंप्रति कर्तृकर्मादिप्रतिपादकब्राह्मणदंपतिसंवादानुवादः ॥ १ ॥

ब्राह्मण उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
चातुर्होत्रविधानस्य विधानमिह यादृशम् ॥ १
तस्य सर्वस्य विधिवद्विधानमुपदेक्ष्यते ।
शृणु मे गदतो भद्रे रहस्यमिदमद्भुतम् ॥ २
करणं कर्म कर्ता च मोक्ष इत्येव भामिनि ।
चत्वार एते होतारो यैरिदं जगदावृतम् ॥ ३
होतॄणां साधनं चैव शृणु सर्वमशेषतः ।
घ्राणं जिह्वा च चक्षुश्च त्वक्च श्रोत्रं च पञ्चमम् ।
मनो बुद्धिश्च सप्तैते ज्ञेयाः कारणहेतवः ॥ ४
गन्धो रसश्च रूपं च शब्दः स्पर्शश्च पञ्चमः ।
मन्तव्यमवबोद्धव्यं सप्तैते कर्महेतवः ॥ ५
घ्राता भक्षयिता द्रष्टा स्प्रष्टा श्रोता च पञ्चमः ।
मन्ता बोद्धा च सप्तैते विज्ञेयाः कर्तृहेतवः ॥ ६
स्वगुणान्भक्षयन्त्येते गुणवन्तः शुभाशुभान् ।
असन्तो निर्गुणाश्चैते सप्तैते मोक्षहेतवः ॥ ७

पूर्वं समानो व्यानोऽथ व्यस्यते तेन कर्मकृत् इति क. ट. पाठः ॥ १८ ॥ पञ्चविंशोऽध्यायः ॥ २५ ॥

विदुषां बुध्यमानानां स्वंस्वं स्थानं यथाविधि ।
गुणास्ते देवता भूत्वा सततं भुञ्जते हविः ॥ ८
'अदन्हवींषि चान्नानि ममत्वेन विहन्यते ।'
आत्मार्थे पाचयन्नन्नं ममत्वेनोपहन्यते ॥ ९
अभक्ष्यभक्षणं चैव मद्यपानं च हन्ति तम् ।
स चान्नं हन्ति तं चान्नं स हत्वा हन्यते पुनः १०
हन्ता ह्यन्नमिदं विद्वान्पुनर्जनयतीश्वरः ।
न चान्नाज्जायते तस्मिन्सूक्ष्मो नाम व्यतिक्रमः ११
मनसा मन्यते यच्च यच्च वाचा निगद्यते ।
श्रोत्रेण श्रूयते यच्च चक्षुषा यच्च दृश्यते ॥ १२
स्पर्शेन स्पृश्यते यच्च घ्राणेन घ्रायते च यत् ।
मनस्येतानि संयम्य हवींष्येतानि सर्वशः ॥ १३
गुणवत्पावको मह्यं दीप्यतेऽन्तःशरीरगः ।
योगयज्ञः प्रवृत्तो मे ज्ञानं ब्रह्ममयो हविः ।
प्राणस्तोत्रोऽपानशस्त्रः सर्वत्यागसुदक्षिणः ॥ १४
कर्ताऽनुमन्ता ब्रह्मात्मा होताऽध्वर्युः कृतस्तुतिः ।
ऋतं प्रशास्ता तच्छस्त्रमपवर्गोऽस्य दक्षिणा ॥ १५
ऋचश्चाप्यत्र शंसन्ति नारायणविदो जनाः ।
नारायणाय देवाय यदविन्दन्पशून्पुरा ॥ १६
तत्र सामानि गायन्ति तत्र चाहुर्निदर्शनम् ।
देवं नारायणं भीरु सर्वात्मानं निबोध तम् ॥ १७

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि षड्विंशोऽध्यायः ॥ २६ ॥

## सप्तविंशोऽध्यायः ॥ २७ ॥

कृष्णेन युधिष्ठिरंप्रति प्रजापतिना एकेनैव शब्देन परब्रह्मोपदेशे देवर्ष्यादीनां स्वस्वयोग्यतानुसारेण नानार्थावगमप्रतिपादकब्राह्मणदंपतिसंवादानुवादः ॥ १ ॥

ब्राह्मण उवाच ।
एकः शास्ता न द्वितीयोस्ति शास्ता
यो हृच्छयस्तमहमनु ब्रवीमि ।
तेनैव युक्तः प्रवणादिवोदकं
यथा नियुक्तोस्मि तथा वहामि ॥ १
एको गुरुर्नास्ति ततो द्वितीयो
यो हृच्छयस्तमहमनु ब्रवीमि ।
तेनानुशिष्टा गुरुणा सदैव
पुरा हता दानवाः सर्व एव ॥ २
एको बन्धुर्नास्ति ततो द्वितीयो
यो हृच्छयस्तमहमनु ब्रवीमि ।
तेनानुशिष्टा बान्धवा बन्धुमन्तः
सप्तर्षयः पार्थ दिवि प्रभान्ति ॥ ३
एकः श्रोता नास्ति ततो द्वितीयो
यो हृच्छयस्तमहमनु ब्रवीमि ।
तस्मिन्गुरौ गुरुवासं निरुष्य
शक्रो गतः सर्वलोकामरत्वम् ॥ ४
एको द्वेष्टा नास्ति ततो द्वितीयो
यो हृच्छयस्तमहमनु ब्रवीमि ।
तेनानुशिष्टा गुरुणा सदैव
लोके द्विष्टाः पन्नगाः सर्व एव ॥ ५
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
प्रजापतौ पन्नगानां देवर्षीणां च संविदम् ॥ ६
देवर्षयश्च नागाश्चाप्यसुराश्च प्रजापतिम् ।
पर्यपृच्छन्नुपासीनं श्रेयो नः प्रोच्यतामिति ॥ ७
तेषां प्रोवाच भगवाञ्श्रेयः समनुपृच्छताम् ।
ओमित्येकाक्षरं ब्रह्म ते श्रुत्वा प्राद्रवन्दिशः ॥ ८
तेषां प्रद्रवमाणानामुपदेशं च शृण्वताम् ।
सर्पाणां दंशने भावः प्रवृत्तः पूर्वमेव तु ॥ ९
असुराणां प्रवृत्तस्तु दंभभावः स्वभावजः ।

---

अद्यमन्नमदन्नहि पुनरिति क. पाठः ॥ ११ ॥ दीप्यते हव्यवाहन इति क. ट. थ. पाठः ॥ १४ ॥ षड्विंशोऽध्यायः ॥ २६ ॥
एकः शास्ता न द्वितीयोस्ति कश्चिद्यथा नियुक्तोऽस्मि तथा चरामि । हृद्येष तिष्ठन्पुरुषः शास्ति शास्ता तेनानुयुक्तः प्रवणादिवोदकमिति क. ट. द. पाठः ॥ १ ॥ देवाश्च ऋषयश्चेति द्वन्द्वः ॥ ७ ॥ प्राद्रवन्प्रतिपेदिरे । दिशो बहून्मार्गान् ॥ ८ ॥

दानं देवा व्यवसिता दममेव महर्षयः ॥ १०
एकं शास्तारमासाद्य शब्देनैकेन संस्कृताः ।
नानाव्यवसिताः सर्वे सर्पदेवर्षिदानवाः ॥ ११
शृणोत्ययं प्रोच्यमानं गृह्णाति च यथातथम् ।
पृच्छतस्तदतो भूयो गुरुरन्यो न विद्यते ॥ १२
तस्य चानुमते कर्म ततः पश्चात्प्रवर्तते ।
गुरुर्बन्धुश्च शास्ता च द्वेष्टा च हृदि संश्रिताः॥१३
पापेन विचरँल्लोके पापचारी भवत्ययम् ।
शुभेन विचरँल्लोके शुभचारी भवत्युत ॥ १४
कामचारी तु कामेन य इन्द्रियसुखे रतः ।
ब्रह्मचारी सदैवैष य इन्द्रियजये रतः ॥ १५
अपेतव्रतकर्मा तु केवलं ब्रह्मणि स्थितः ।
ब्रह्मभूतश्चरँल्लोके ब्रह्मचारी भवत्ययम् ॥ १६
ब्रह्मैव समिधस्तस्य ब्रह्माग्निर्ब्रह्मसंस्तरः ।
आपो ब्रह्म गुरुर्ब्रह्म स ब्रह्मणि समाहितः ॥ १७
एतदेवेदृशं सूक्ष्मं ब्रह्मचर्यं विदुर्बुधाः ।
विदित्वा चान्वपद्यन्त क्षेत्रज्ञेनानुदर्शिताः ॥ १८

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥

## अष्टाविंशोऽध्यायः ॥ २८ ॥

कृष्णेन युधिष्ठिरंप्रति विद्याब्रह्मणोररण्यत्वरूपणपरब्राह्मणदंपतिसंवादानुवादः ॥ १ ॥

ब्राह्मण उवाच ।
संकल्पदंशमशकं शोकहर्षहिमातपम् ।
मोहान्धकारतिमिरं लोभव्याधिसरीसृपम् ॥ १
विषयैकात्ययाध्वानं कामक्रोधकिरातकम् ।
तदतीत्य महादुर्गं प्रविष्टोस्मि महद्वनम् ॥ २
ब्राह्मण्युवाच ।
क्व तद्वनं महाप्राज्ञ के वृक्षाः सरितश्च काः ।
कियन्तः पर्वताश्चैव कियत्यध्वनि तद्वनम् ॥ ३
ब्राह्मण उवाच ।
नैतदस्ति पृथग्भावः किंचिदन्यत्ततः सुखम् ।
नैतदस्त्यपृथग्भावः किंचिद्दुःखतरं ततः ॥ ४
तस्माद्ध्रस्वतरं नास्ति न ततोस्ति महत्तरम् ।
नास्ति तस्माद्दुःखतरं नास्त्यन्यत्तत्समं सुखम् ॥ ५
न तत्राविश्य शोचन्ति न प्रहृष्यन्ति च द्विजाः ।
न च बिभ्यति केभ्यश्चित्तेभ्यो बिभ्यति केचन ६
तस्मिन्वने सप्त महाद्रुमाश्च
फलानि सप्तातिथयश्च सप्त ।
सप्ताश्रमाः सप्त समाधयश्च
दीक्षाश्च सप्तैतदरण्यरूपम् ॥ ७
पञ्चवर्णानि दिव्यानि पुष्पाणि च फलानि च ।
सृजन्तः पादपास्तत्र व्याप्य तिष्ठन्ति तद्वनम् ॥ ८
सुवर्णानि द्विवर्णानि पुष्पाणि च फलानि च ।
सृजन्तः पादपास्तत्र व्याप्य तिष्ठन्ति तद्वनम् ॥ ९
'शंकराणि त्रिवर्णानि पुष्पाणि च फलानि च ।
सृजन्तः पादपास्तत्र व्याप्य तिष्ठन्ति तद्वनम्' १०
सुरभीणि द्विवर्णानि पुष्पाणि च फलानि च ।
सृजन्तः पादपास्तत्र व्याप्य तिष्ठन्ति तद्वनम् ११
सुरभीण्येकवर्णानि पुष्पाणि च फलानि च ।
सृजन्तः पादपास्तत्र व्याप्य तिष्ठन्ति तद्वनम् १२
बहून्यव्यक्तवर्णानि पुष्पाणि च फलानि च ।
विसृजन्तौ महावृक्षौ तद्वनं व्याप्य तिष्ठतः ॥ १३
एको वह्निः सुमना ब्राह्मणोत्र
पञ्चेन्द्रियाणि समिधश्चात्र सन्ति ।
तेभ्यो वृक्षाः सप्त फलन्ति दीक्षा
गुणाः फलान्यतिथयः फलाशाः ॥ १४
आतिथ्यं प्रतिगृह्णन्ति तत्र सप्त महर्षयः ।
अर्चितेषु प्रलीनेषु तेष्वन्यद्रोचते वनम् ॥ १५
प्रज्ञावृक्षं मोक्षफलं शान्तिच्छायासमन्वितम् ।

---

गुरुर्बोद्धा च श्रोता च द्वेष्टा च हृदि निःसृत इति झ. पाठः ॥ १३ ॥ सप्तविंशोऽध्यायः ॥ २७ ॥
सप्तर्षयः सप्त तथेन्धनानि इति क. थ. पाठः ॥ ७ ॥
चतुर्वर्णानि दिव्यानीति क. थ. पाठः ॥ ९ ॥ सृजन्तः पादपास्तत्र व्याप्य तिष्ठन्ति तद्वनमिति क, ट. थ. पाठः ॥ १३ ॥

ज्ञानाश्रयं तृप्तितोयमन्तःक्षेत्रज्ञभास्करम् ॥ १६
येऽधिगच्छन्ति तत्सन्तस्तेषां नास्ति पुनर्भवः ।
ऊर्ध्वं चाधश्च तिर्यक्च तस्य नान्तोऽधिगम्यते १७
सप्त स्त्रियस्तत्र चरन्ति सत्या-
स्त्ववाङ्मुखा भानुमत्यो जनित्र्यः ।
ऊर्ध्वं रसानाददते प्रजाभ्यः
सर्वान्यथा नित्यमनित्यता च ॥ १८
तत्रैव प्रतितिष्ठन्ति पुनस्तत्रोदयन्ति च ।
सप्त सप्तर्षयः सिद्धा वसिष्ठप्रमुखैः सह ॥ १९
यशो वर्चो भगश्चैव विजयः सिद्धतेजसः ।
एतमेवानुवर्तन्ते सप्त ज्योतींषि भास्करम् ॥ २०
ऋषयः पर्वताश्चैव सन्ति तत्र समासतः ।
नद्यश्च परितो वारि वहन्त्यो ब्रह्मसंभवम् ॥ २१
नदीनां संगमश्चैव वैताने समुपह्वरे ।
स्वात्मतृप्ता यतो यान्ति साक्षादेव पितामहम् २२
कृशाशाः सुव्रताः शान्तास्तपसा दग्धकिल्बिषाः ।
आत्मन्यात्मानमावेश्य ब्राह्मणास्तमुपासते ॥ २३
शममप्यत्र शंसन्ति विद्यारण्यविदो जनाः ।
तदरण्यमभिप्रेत्य यथातत्वमजायत ॥ २४
एतदेवेदृशं पुण्यमरण्यं ब्राह्मणा विदुः ।
विदित्वा चानुतिष्ठन्ति क्षेत्रज्ञेनानुदर्शिना ॥ २५

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥

## एकोनत्रिंशोऽध्यायः ॥ २९ ॥

कृष्णेनार्जुनंप्रति यागीयहिंसाया अधर्म्यत्वाभावप्रतिपादकाध्वर्युयतिसंवादानुवादः ॥ १ ॥

ब्राह्मण उवाच ।
गन्धान्न जिघ्रामि रसान्न वेद्मि
रूपं न पश्यामि न च स्पृशामि ।
न चापि शब्दान्विविधाञ्शृणोमि
न चापि संकल्पमुपैमि कंचित् ॥ १
अर्थानिष्टान्कामयते स्वभावः
सर्वान्द्वेष्यान्प्रद्विषते स्वभावः ।
कामद्वेषावुद्भवतः स्वभावा-
त्प्राणापानौ जन्तुदेहान्निवेश्य ॥ २
तेभ्यश्चान्यांस्तेषु नित्यांश्च भावा-
न्भूतात्मानं लक्षयेऽहं शरीरे ।
तस्मिंस्तिष्ठन्नास्मि सक्तः कथंचि-
त्कामक्रोधाभ्यां जरया मृत्युना च ॥ ३
अकामयानस्य च सर्वकामा-
नविद्विषाणस्य च सर्वदोषान् ।
न मे स्वभावेषु भवन्ति लेपा-
स्तोयस्य बिन्दोरिव पुष्करेषु ॥ ४
नित्यस्य चैतस्य भवन्ति नित्या
निरीक्ष्यमाणस्य बहून्स्वभावान् ।
न सज्जते कर्मसु भोगजालं
दिवीव सूर्यस्य मयूखजालम् ॥ ५
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
अध्वर्युयतिसंवादं तं निबोध यशस्विनि ॥ ६
प्रोक्ष्यमाणं पशुं दृष्ट्वा यज्ञकर्मण्यथाब्रवीत् ।
यतिरध्वर्युमासीनो हिंसेयमिति कुत्सयन् ॥ ७
तमध्वर्युः प्रत्युवाच नायं छागो विनश्यति ।
श्रेयसा योक्ष्यते जन्तुर्यज्ञाच्छ्रुतिरियं तथा ॥ ८
यो ह्यस्य पार्थिवो भागः पृथिवीं स गमिष्यति ।
यदस्य वारिजं किंचिदपस्तत्संप्रवेक्ष्यति ॥ ९
सूर्यं चक्षुर्दिशः श्रोत्रे प्राणोऽस्य दिवमेव च ।

तत्रोपयन्ति चेति झ. पाठः । तेंच सप्तर्षयः सिद्धा इति क. थ. पाठः ॥ १९ ॥ भगश्चोजो विजयः सिद्धितेजसी इति क. थ. पाठः ॥ २० ॥ ऋचमप्यत्र पश्यन्ति विद्यारण्येति क. थ. पाठः ॥ २४ ॥ विदित्वा नानुपश्यन्ति क्षेत्रज्ञा नानुदर्शनमिति क. थ. पाठः ॥ २५ ॥ अष्टाविंशोऽध्यायः ॥ २८ ॥
सर्वानेतान्द्वेष्टि चैव स्वभाव इति क. ट. थ. पाठः । जन्तुदेहानिहैत्येति क. ट. थ. पाठः ॥ २ ॥ नास्मि शक्यः कथंचिदिति क. ट. थ. पाठः ॥ ३ ॥

आगमे वर्तमानस्य नमे दोषोस्ति कश्चन ॥ १०
यतिरुवाच ।
प्राणैर्वियोगे च्छागस्य यदि श्रेयः प्रपश्यसि ।
छागार्थे वर्तते यज्ञो भवतः किं प्रयोजनम् ॥ ११
अनु त्वां मन्यते माता अनु त्वां मन्यते पिता ।
मन्त्रविज्ञानमुन्नीय परिवर्ते विशेषतः ॥ १२
एवमेवानुमन्येरंस्तान्भवान्द्रष्टुमर्हति ।
तेषामनुमतिं श्रुत्वा शक्या कर्तुं विचारणा ॥ १३
अध्वर्युरुवाच ।
प्राणा अप्यस्य च्छागस्य प्रापितास्ते स्वयोनिषु ।
शरीरं केवलं शिष्टं निश्चेष्टमिति मे मतिः ॥ १४
इन्धनस्य तु तुल्येन शरीरेण विचेतसा ।
हिंसा हि यष्टुकामानामिन्धनं पशुसंज्ञितम् ॥ १५
अहिंसा सर्वधर्माणामिति वृद्धानुशासनम् ।
यदहिंस्रं भवेत्कर्म तत्कार्यमिति विद्महे ॥ १६
अहिंसेति प्रतिज्ञेयं यदि वक्ष्याम्यतः परम् ।
शक्यं बहुविधं वक्तुं भवता कार्यदूषणम् ॥ १७
अहिंसा सर्वभूतानां नित्यमस्मासु रोचते ।
प्रत्यक्षतः साधयामो न परोक्षमुपास्महे ॥ १८
अध्वर्युरुवाच ।
भूमेर्गन्धगुणान्भुङ्क्ष्व पिबस्यापोमयान्रसान् ।
ज्योतिषां पश्यसे रूपं स्पृशस्यनिलजान्गुणान् १९
शृणोष्याकाशजाञ्शब्दान्मनसा मन्यसे मतिम् ।
सर्वाण्येतानि भूतानि प्राणा इति च मन्यसे ॥ २०
प्राणादाने निवृत्तोसि हिंसायां वर्तते भवान् ।
नास्ति चेष्टा विना हिंसां किं वा त्वं मन्यसे द्विज २१
यतिरुवाच ।
अक्षरं च क्षरं चैव द्वैधीभावोऽयमात्मनः ।
अक्षरं तत्र सद्भावः स्वभावः क्षर उच्यते ॥ २२
प्राणो जिह्वा मनः सत्त्वं सद्भावो रजसा सह ।
भावैरेतैर्विमुक्तस्य निर्द्वन्द्वस्य निराशिषः ॥ २३
समस्य सर्वभूतेषु निर्ममस्य जितात्मनः ।
समन्तात्परिमुक्तस्य न भयं विद्यते क्वचित् ॥ २४
अध्वर्युरुवाच ।
सद्भिरेवेह संवादः कार्यो मतिमतांवर ।
भवतो हि मतं श्रुत्वा प्रतिभाति मतिर्मम ॥ २५
भगवन्भगवद्बुद्ध्या प्रतिबुद्धो ब्रवीम्यहम् ।
व्रतं मन्त्रकृतं कर्तुर्नापराधोस्ति मे द्विज ॥ २६
ब्राह्मण उवाच ।
उपपत्त्या यतिस्तूष्णीं वर्तमानस्ततः परम् ।
अध्वर्युरपि निर्मोहः प्रचचार महामखे ॥ २७
एवमेतादृशं मोक्षं सुसूक्ष्मं ब्राह्मणा विदुः ।
विदित्वा चानुतिष्ठन्ति क्षेत्रज्ञेनार्थदर्शिना ॥ २८

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि एकोनत्रिंशोऽध्यायः ॥ २९ ॥

## त्रिंशोऽध्यायः ॥ ३०

ब्राह्मणेन स्वभार्यांप्रति हिंसाया अकर्तव्यत्वे महर्षिवचसां प्रमाणीकरणोपयोगितया परशुरामचरित्रकथनारम्भः ॥ १ ॥ रामेण कार्तवीर्ये निहते तदनुयायिभिर्जमदग्नेर्हननम् ॥ २ ॥ ततः क्रुद्धेन रामेण त्रिःसप्तकृत्वः सर्वक्षत्रियहनने तत्पितृभी रामस्य परिसान्त्वप्रयतनम् ॥ ३ ॥

ब्राह्मण उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
कार्तवीर्यस्य संवादं समुद्रस्य च भामिनि ॥ १
कार्तवीर्यार्जुनो नाम राजा बाहुसहस्रवान् ।
येन सागरपर्यन्ता धनुषा निर्जिता मही ॥ २
स कदाचित्समुद्रान्ते विचरन्बलदर्पितः ।

---

अत्र त्वां मन्यतां भ्राता पिता माता सखेति च । मन्त्रयस्वैनमुन्नीय परवन्तं विशेषत इति झ. द. पाठः ॥१२॥ भूमेरिति भानुपहत्य भूतानि भोगः संभवतीति न्यायाज्जीवतोऽपरिहार्यैव हिंसेत्यर्थः ॥ १९ ॥ किं कथं त्वं मन्यसेऽहिंसामिति शेषः ॥ २१ ॥ मतं मन्तुं कतु कर्तुमिति थ. पाठः ॥ २६ ॥ एकोनत्रिंशोऽध्यायः ॥ २९ ॥

अर्वाकिरच्छरशतैः समुद्रमिति नः श्रुतम् ॥ ३
तं समुद्रो नमस्कृत्य कृताञ्जलिरुवाचह ।
मा मुञ्च वीर नाराचान्ब्रूहि किं करवाणि ते ॥ ४
मदाश्रयाणि भूतानि त्वद्विसृष्टैर्महेषुभिः ।
वध्यन्ते राजशार्दूल तेभ्यो देह्यभयं विभो ॥ ५
अर्जुन उवाच ।
मत्समो यदि संग्रामे शरासनधरः क्वचित् ।
विद्यते तं समाचक्ष्व यः समो मे महामृधे ॥ ६
समुद्र उवाच ।
महर्षिर्जमदग्निस्ते यदि राजन्पुरा श्रुतः ।
तस्य पुत्रस्तवातिथ्यं यथावत्कर्तुमर्हति ॥ ७
ततः स राजा प्रययौ क्रोधेन महता वृतः ।
स तमाश्रममागम्य राममेवान्वपद्यत ॥ ८
स रामप्रतिकूलानि चकार सह बन्धुभिः ।
आयासं जनयामास रामस्य च महात्मनः ॥ ९
ततस्तेजः प्रजज्वाल रामस्यामिततेजसः ।
प्रदहन्रिपुसैन्यानि तदा कमललोचने ॥ १०
ततः परशुमादाय स तं बाहुसहस्रिणम् ।
चिच्छेद सहसा रामो बहुशाखमिव द्रुमम् ॥ ११
तं हतं पतितं दृष्ट्वा समेताः सर्वबान्धवाः ।
असीनादाय शक्तीश्च भार्गवं पर्यधावयन् ॥ १२
रामोऽपि धनुरादाय रथमारुह्य सत्वरः ।
विसृजञ्शरवर्षाणि व्यधमत्पार्थिवं बलम् ॥ १३
ततस्तु क्षत्रियाः केचिज्जमदग्निं निहत्य च ।
विविशुर्गिरिदुर्गाणि मृगाः सिंहार्दिता इव ॥ १४
तेषां स्वविहितं कर्म तद्भयान्नानुतिष्ठताम् ।
प्रजा वृषलतां प्राप्ता ब्राह्मणानामदर्शनात् ॥ १५
एवं ते द्रविडाऽभीराः पुण्ड्राश्च शबरैः सह ।
वृषलत्वं परिगता व्युत्थानात्क्षत्रधर्मतः ॥ १६
ततश्च हतवीरासु क्षत्रियासु पुनः पुनः ।
द्विजैरुत्पादितं क्षत्रं जामदग्न्यो न्यकृन्तत ॥ १७
एकविंशतिमे याते रामं वागशरीरिणी ।
दिव्या प्रोवाच मधुरा सर्वलोकपरिश्रुता ॥ १८
रामराम निवर्तस्व कं गुणं तात पश्यसि ।
क्षत्रबन्धूनिमान्प्राणैर्विप्रयोज्य पुनः पुनः ॥ १९
तथैव तं महात्मानमृचीकप्रमुखास्तदा ।
पितामहा महाभाग निवर्तस्वेत्यथाब्रुवन् ॥ २०
पितुर्वधममृष्यंस्तु रामः प्रोवाच तानृषीन् ।
नार्हन्तीह भवन्तो मां निवारयितुमित्युत ॥ २१
पितर ऊचुः ।
नार्हसे क्षत्रबन्धूंस्त्वं निहन्तुं जयतांवर ।
नेह युक्तं त्वया हन्तुं ब्राह्मणेन सता नृपान् ॥ २२

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि त्रिंशोऽध्यायः ॥ ३० ॥

## एकत्रिंशोऽध्यायः ॥ ३१ ॥

परशुरामंप्रति तत्पितृभिः रामनिवर्तनायालर्कोपाख्यानकथनम् ॥ १ ॥ रामेण तच्छ्रवणाद्धिंसातो निवर्त्य तपश्चरणम् ॥ २ ॥

पितर ऊचुः ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
श्रुत्वा च तत्तथा कार्यं भवता द्विजसत्तम ॥ १
अलर्को नाम राजर्षिरभवत्सुमहातपाः ।
धर्मज्ञः सत्यवादी च महात्मा सुदृढव्रतः ॥ २
स सागरान्तां धनुषा विनिर्जित्य महीमिमाम् ।
कृत्वा सुदुष्करं कर्म मनः सूक्ष्मे समादधे ॥ ३
स्थितस्य वृक्षमूलेऽथ तस्य चिन्ता बभूव ह ।
उत्सृज्य सुमहद्राज्यं सूक्ष्मं प्रति महामते ॥ ४
अलर्क उवाच ।
मनसो मे बलं जातं मनो जित्वा ध्रुवो जयः ।
अन्यत्र बाणानस्यामि शत्रुभिः परिवारितः ॥ ५

---

तेषामुपरत कर्मेति ट. पाठः ॥ १५ ॥ व्युत्थानात्क्षत्रधर्मिण इति झ. पाठः ॥ १६ ॥ त्रिंशोऽध्यायः ॥ ३० ॥

अत्र हिंसाया अकार्यत्वे ॥ १ ॥ अन्यत्र बाह्यशत्रुभ्य इति शेषः । शत्रुभिरिन्द्रियाख्यवैरिभिः ॥५॥ एकत्रिंशोऽध्यायः ॥ ३१ ॥

यदिदं चापलात्कर्म सर्वान्मर्त्यांश्चिकीर्षति ।
मनः प्रति सुतीक्ष्णाग्रानहं मोक्ष्यामि सायकान् ६
मन उवाच ।
नेमे बाणास्तरिष्यन्ति मामलर्क कथंचन ।
तवैव मर्म भेत्स्यन्ति भिन्नमर्मा मरिष्यसि ॥ ७
अन्यान्बाणान्समीक्षस्व यैस्त्वं मां सूदयिष्यसि ।
तच्छ्रुत्वा स विचिन्त्याथ ततो वचनमब्रवीत् ॥ ८
आघ्राय सुबहून्गन्धांस्तानेव प्रतिगृध्यति ।
तस्माद्घ्राणं प्रति शरान्प्रतिमोक्ष्याम्यहं शितान् ९
घ्राण उवाच ।
नेमे बाणास्तरिष्यन्ति मामलर्क कथंचन ।
तवैव मर्म भेत्स्यन्ति भिन्नमर्मा मरिष्यसि ॥ १०
अन्यान्बाणान्समीक्षस्व यैस्त्वं मां सूदयिष्यसि ।
तच्छ्रुत्वा स विचिन्त्याथ ततो वचनमब्रवीत् ११
इयं स्वादून्रसान्भुक्त्वा तानेव प्रति गृध्यति
तस्माज्जिह्वां प्रति शरान्प्रतिमोक्ष्याम्यहं शितान् ॥
वाच
नेमे बाणास्तरिष्यन्ति मामलर्क कथंचन ।
तवैव मर्म भेत्स्यन्ति ततो हास्यसि जीवितम् ॥ १३
अन्यान्बाणान्समीक्षस्व यैस्त्वं मां सूदयिष्यसि ।
तच्छ्रुत्वा स विचिन्त्याथ ततो वचनमब्रवीत् ॥ १४
स्पृष्ट्वा त्वग्विविधान्स्पर्शांस्तानेव प्रतिगृध्यति ।
तस्मात्त्वचं पाटयिष्ये विविधैः कङ्कपत्रिभिः ॥ १५
त्वगुवाच ।
नेमे बाणास्तरिष्यन्ति मामलर्क कथंचन ।
तवैव मर्म भेत्स्यन्ति भिन्नमर्मा मरिष्यसि ॥ १६
अन्यान्बाणान्समीक्षस्व यैस्त्वं मां सूदयिष्यसि ।
तच्छ्रुत्वा स विचिन्त्याथ ततो वचनमब्रवीत् १७
श्रुत्वा तु विविधाञ्शब्दांस्तानेव प्रतिगृध्यति ।
तस्माच्छ्रोत्रं प्रति शरान्प्रति मुञ्चाम्यहं शितान् १८
श्रोत्रमुवाच ।
नेमे बाणास्तरिष्यन्ति मामलर्क कथंचन ।
तवैवं मर्म भेत्स्यन्ति ततो हास्यसि जीवितम् ॥ १९
अन्यान्बाणान्समीक्षस्व यैस्त्वं मां सूदयिष्यसि ।
तच्छ्रुत्वा स विचिन्त्याथ ततो वचनमब्रवीत् २०
दृष्ट्वा रूपाणि बहुशस्तान्येव प्रतिगृध्यति ।
तस्माच्चक्षुर्हनिष्यामि निशितैः सायकैरहम् ॥ २१
चक्षुरुवाच ।
नेमे बाणास्तरिष्यन्ति मामलर्क कथंचन ।
तवैव मर्म भेत्स्यन्ति भिन्नमर्मा मरिष्यसि ॥ २२
अन्यान्बाणान्समीक्षस्व यैस्त्वं मां सूदयिष्यसि ।
तच्छ्रुत्वा स विचिन्त्याथ ततो वचनमब्रवीत् २३
इयं निष्ठा बहुविधा प्रज्ञया त्वध्यवस्यति ।
तस्माद्बुद्धिं प्रति शरान्प्रतिमोक्ष्याम्यहं शितान् ॥
बुद्धिरुवाच ।
नेमे बाणास्तरिष्यन्ति मामलर्क कथंचन ।
तवैव मर्म भेत्स्यन्ति भिन्नमर्मा मरिष्यसि ।
अन्यान्बाणान्समीक्षस्व यैस्त्वं मां सूदयिष्यसि २५
पितर ऊचुः ।
ततोऽलर्कस्तपो घोरं तत्रैवास्थाय दुष्करम् ।
नाध्यगच्छत्परं शक्त्या बाणमेतेषु सप्तसु ॥ २६
सुसमाहितचेतास्तु स ततोऽचिन्तयत्प्रभुः ।
स विचिन्त्य चिरं कालमलर्को द्विजसत्तम ।
नाध्यगच्छत्परं श्रेयो योगान्मतिमतांवरः ॥ २७
स एकाग्रं मनः कृत्वा निश्चलो योगमास्थितः ।
इन्द्रियाणि जघानाशु बाणेनैकेन वीर्यवान् ॥ २८
योगेनात्मानमाविश्य सिद्धिं परमिकां गतः ।
विस्मितश्चापि राजर्षिरिमां गाथां जगाद ह ॥ २९
अहो कष्टं यदस्माभिः सर्वं बाह्यमनुष्ठितम् ।
भोगतृष्णासमायुक्तैः पूर्वं राज्यमुपासितम् ।
इति पश्चान्मया ज्ञातं योगान्नास्ति परं सुखम् ३०
इति त्वमनुजानीहि राम मा क्षत्रियान्वधीः ।
तपो घोरमुपातिष्ठ ततः श्रेयोऽभिपत्स्यसे ॥ ३१
इत्युक्तः पितृभिः सोथ तपो घोरं समास्थितः ।
जामदग्न्यो महाभागो सिद्धिं च परमां गतः ॥ ३२

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि एकत्रिंशोऽध्यायः ॥ ३१ ॥

## द्वात्रिंशोऽध्यायः ॥ ३२ ॥

ब्राह्मणेन स्वभार्यांप्रति कामक्रोधादिपरित्यागपूर्वकं भगवदवबोधस्य परमपुरुषार्थसाधनतावबोधकाम्बरीषगीतगाथा-कथनम् ॥ १ ॥

ब्राह्मण उवाच ।
त्रयो वै रिपवो लोके नवधा गुणतः स्मृताः ।
हर्षः स्तंभोतिमानश्च त्रयस्ते सात्विका गुणाः ॥१
शोकः क्रोधाभिसंरंभो राजसास्ते गुणाः स्मृताः ।
स्वप्नस्तन्द्रा च मोहश्च त्रयस्ते तामसा गुणाः ॥ २
एतान्निकृत्य धृतिमान्बाणसङ्घैरतन्द्रितः ।
परानुत्सहते प्रशान्तात्मा जितेन्द्रियः ॥ ३
अत्र गाथाः कीर्तयन्ति पुराकल्पविदो जनाः ।
अंबरीषेण या गीता राज्ञा राज्यं प्रशासता ॥ ४
समुदीर्णेषु दोषेषु बाध्यमानेषु साधुषु ।
जग्राह तरसा राज्यमंबरीष इति श्रुतिः ॥ ५
स निगृह्यात्मनो दोषान्साधून्समभिपूज्य च ।
जगाम महतीं सिद्धिं गाथाश्चेमा जगाद ह ॥ ६
भूयिष्ठं विजिता दोषा निहताः सर्वशत्रवः ।
एको दोषो वरिष्ठश्च वध्यः स न हतो मया ॥ ७
यत्प्रयुक्तो जन्तुरयं वैतृष्ण्यं नाधिगच्छति ।
तृष्णार्त इव निम्नानि धावमानो न बुध्यते ॥ ८
अकार्यमपि येनेह प्रयुक्तः सेवते नरः ।
तं लोभमसिभिस्तीक्ष्णैर्निकृत्य सुखमेधते ॥ ९
लोभाद्धि जायते तृष्णा ततश्चिन्ता प्रवर्तते ।
स लिप्समानो लभते भूयिष्ठं राजसान्गुणान् ।
तदवाप्तौ तु लभते भूयिष्ठं तामसान्गुणान् ॥१०
स तैर्गुणैः संहतदेहबन्धनः
पुनःपुनर्जायति कर्म चेहते ।
जन्मक्षये भिन्नविकीर्णदेहो
मृत्युं पुनर्गच्छति जन्मनैव ॥ ११
तस्मादेतं सम्यगवेक्ष्य लोभं
निगृह्य धृत्याऽऽत्मनि राज्यमिच्छेत् ।
एतद्राज्यं नान्यदस्तीह राज्य-
मात्मैव राजा विदितो यथावत् ॥ १२
इति राज्ञाऽम्बरीषेण गाथा गीता यशस्विना ।
आधिराज्यं पुरस्कृत्य लोभमेकं निकृन्तता ॥ १३

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि द्वात्रिंशोऽध्यायः ॥ ३२ ॥

## त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

ब्राह्मणेन स्वभार्यांप्रति ममतावर्जनस्य पुरुषार्थसाधनतायां दृष्टान्ततया ब्राह्मणजनकसंवादानुवादः ॥ १ ॥

ब्राह्मण उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
ब्राह्मणस्य च संवादं जनकस्य च भामिनि ॥ १
ब्राह्मणं जनको राजा सन्नं कस्मिंश्चिदागसि ।
विषये मे न वस्तव्यमिति शिष्टयर्थमब्रवीत् ॥ २
इत्युक्तः प्रत्युवाचाथ ब्राह्मणो राजसत्तमम् ।
आचक्ष्व विषयं राजन्यावांस्तव वशे स्थितः ॥ ३
सोऽन्यस्य विषये राज्ञो वस्तुमिच्छाम्यहं विभो ।
वचस्ते कर्तुमिच्छामि यथाशास्त्रं महीपते ॥ ४
इत्युक्तस्तु तदा राजा ब्राह्मणेन यशस्विना ।
मुहुरुष्णं विनिःश्वस्य न किंचित्प्रत्यभाषत ॥ ५
तमासीनं ध्यायमानं राजानममितौजसम् ।

---

गुणतः वृत्तिभेदात् ॥ १ ॥ अभिसंरम्भो द्वेषाभिनिवेशः ॥ २ ॥ निकृत्य च्छित्त्वा । बाणसंघैः शमादिभिः ॥ ३ ॥ पुनर्जायति चेह तत्फलम् । फलक्षये भिन्नविदीर्णदेहः पुनर्मृत्यु गच्छति चैव जन्मनीति क. थ. पाठः ॥ ११ ॥ नान्यदस्तीति विद्या यैश्चैष राजा विजितो मयैक इति क. थ. पाठः ॥ १२ ॥

द्वात्रिंशोऽध्यायः ॥ ३२ ॥

अत्र लोभे निकृन्तनीये ॥ १ ॥ क्लान्त कस्मिंश्चिदागमे इति द. पाठः । क्षान्तं कस्मिंश्चिदागमे इति क. ठ. थ. पाठः । शिष्यर्थमब्रवीदिति पाठान्तरम् ॥ २ ॥ त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

कश्मलं सहसाऽगच्छद्भानुमन्तमिव ग्रहः ॥ ६
समाश्वास्य ततो राजा विगते कश्मले तदा ।
ततो मुहूर्तादिव तं ब्राह्मणं वाक्यमब्रवीत् ॥ ७
पितृपैतामहे राज्ये वश्ये जनपदे सति ।
विषयं नाधिगच्छामि विचिन्वन्पृथिवीमहम् ॥ ८
नाध्यगच्छं यदा पृथ्व्यां मिथिला मार्गिता मया ।
नाध्यगच्छं यदा तस्यां स्वप्रजा मार्गिता मया ॥ ९
नाध्यगच्छं यदा तस्यां तदा मे कश्मलोऽभवत् ।
ततो मे कश्मलस्यान्ते मतिः पुनरुपस्थिता ॥ १०
तदा न विषयं मन्ये सर्वो वा विषयो मम ।
आत्माऽपि चायं न मम सर्वा वा पृथिवी मम ११
यथा मम तथाऽन्येषामिति मन्ये द्विजोत्तम ।
उष्यतां यावदुत्साहो भुज्यतां यावदिष्यते ॥ १२
ब्राह्मण उवाच ।
पितृपैतामहे राज्ये वश्ये जनपदे सति ।
ब्रूहि कां मतिमास्थाय ममत्वं वर्जितं त्वया ॥ १३
कां वै बुद्धिं समाश्रित्य सर्वो वै विषयस्तव ।
नावैषि विषयं येन सर्वो वा विषयस्तव ॥ १४
जनक उवाच ।
अन्तवन्त इहारम्भा विदिताः सर्वकर्मसु ।
नाध्यगच्छमहं तस्मान्ममेदमिति यद्भवेत् ॥ १५
कस्येदमिति कस्य स्वमिति वेदवचस्तथा ।
नाध्यगच्छमहं बुद्ध्या ममेदमिति यद्भवेत् ॥ १६
एतां बुद्धिं समाश्रित्य ममत्वं वर्जितं मया ।
शृणु बुद्धिं च यां ज्ञात्वा सर्वत्र विषयो मम ॥ १७
नाहमात्मार्थमिच्छामि गन्धान्घ्राणगतानपि ।
तस्मान्मे निर्जिता भूमिर्वशे तिष्ठति नित्यदा १८
नाहमात्मार्थमिच्छामि रसानास्येऽपि वर्ततः ।
आपो मे निर्जितास्तस्माद्वशे तिष्ठन्ति नित्यदा १९
नाहमात्मार्थमिच्छामि रूपं ज्योतिश्च चक्षुषः ।
तस्मान्मे निर्जितं ज्योतिर्वशे तिष्ठति नित्यदा ॥ २०
नाहमात्मार्थमिच्छामि स्पर्शांस्त्वचि गताश्च ये ।
तस्मान्मे निर्जितो वायुर्वशे तिष्ठति नित्यदा ॥ २१
नाहमात्मार्थमिच्छामि शब्दाञ्श्रोत्रगतानपि ।
आकाशं मे जितं तस्माद्वशे तिष्ठति नित्यदा ॥ २२
नाहमात्मार्थमिच्छामि मनो नित्यं मनोन्तरे ।
मनो मे निर्जितं तस्माद्वशे तिष्ठति नित्यदा ॥ २३
देवेभ्यश्च पितृभ्यश्च भूतेभ्योऽतिथिभिः सह ।
इत्यर्थं सर्व एवेति समारंभा भवन्ति वै ॥ २४
ततः प्रहस्य जनकं ब्राह्मणः पुनरब्रवीत् ।
त्वज्जिज्ञासार्थमद्येह विद्धि मां धर्ममागतम् ॥ २५
त्वमस्य ब्रह्मनाभस्य दुर्वारस्यानिवर्तिनः ।
सत्वनेमिनिरुद्धस्य चक्रस्यैकः प्रवर्तकः ॥ २६

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

## चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

ब्राह्मणेन ब्राह्मणींप्रति स्वमाहात्म्यप्रकाशनम् ॥ १ ॥

ब्राह्मण उवाच ।
नाहं तथा भीरु चरामि लोके
यथा त्वं मां तर्जयसे स्वबुद्ध्या ।
विप्रोस्मि मुक्तोस्मि वनेचरोस्मि
गृहस्थधर्मा व्रतवांस्तथाऽस्मि ॥ १
नाहमस्मि यथा मां त्वं पश्यसे च शुभाशुभे ।
मया व्याप्तमिदं सर्वं यत्किंचिज्जगतीगतम् ॥ २
ये केचिज्जन्तवो लोके जङ्गमाः स्थावराश्च ह ।
तेषां मामन्तकं विद्धि दारूणामिव पावकम् ॥ ३
राज्ये पृथिव्यां सर्वस्यामथवापि त्रिविष्टपे ।
तथा बुद्धिरियं वेत्ति बुद्धिरेव धनं मम ॥ ४
एकः पन्था ब्राह्मणानां येन गच्छन्ति तद्विदः ।
गृहेषु वनवासेषु गुरुवासेषु भिक्षुषु ॥ ५
लिङ्गैर्बहुभिरव्यग्रैरेका बुद्धिरुपास्यते ।
नानालिङ्गाश्रमस्थानां येषां बुद्धिः शमात्मिका ६

तेषामन्तर्गतं विद्धि इति क. घ. पाठः ॥ ३ ॥

ते भावमेकमायान्ति सरितः सागरं यथा ।
बुद्ध्याऽयं गम्यते मार्गः शरीरेण न गम्यते ।
आद्यन्तवन्ति कर्माणि शरीरं कर्मबन्धनम् ॥ ७
तस्मान्मे सुभगे नास्ति परलोककृतं भयम्
तद्भावभावनिरता ममैवात्मानमेष्यसि ॥

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

## पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

कृष्णेनार्जुनंप्रति ब्राह्मणीब्राह्मणशब्दनिर्दिष्टयोः क्रमेण बुद्धिमनस्त्वकथनम् ॥ १ ॥

ब्राह्मण्युवाच ।
नेदमल्पात्मना शक्यं वेदितुं वाऽकृतात्मना ।
बहु चाल्पं च संक्षिप्तं विस्तृतं च मतं मम ॥ १
उपायं तं मम ब्रूहि येनैषा लभ्यते मतिः ।
तन्मन्ये कारणं कर्म यत एषा प्रवर्तते ॥ २
ब्राह्मण उवाच ।
अरणीं ब्राह्मणीं विद्धि गुरुरस्योत्तरारणिः ।
तपःश्रुतेभिमथिनी ज्ञानाग्निर्जायते ततः ॥ ३
ब्राह्मण्युवाच ।
यदिदं ब्रह्मणो लिङ्गं क्षेत्रज्ञ इति संज्ञितम् ।
ग्रहीतुं येन यच्छक्यं लक्षणं तस्य तद्वद ॥ ४
ब्राह्मण उवाच ।
अलिङ्गो निर्गुणश्चैव कारणं नास्य विग्रहे ।
उपायमेव वक्ष्यामि येन गृह्येत भावना ॥
सम्यगप्युपदिष्टस्य ह्यमृतस्येव तृप्यसे ।
कर्मबुद्धिरबुद्धित्वाज्ज्ञानलिङ्गान्निपातितः ॥
इदं कार्यमिदं नेति न मोक्षेषूपदिश्यते ।
पश्यतः शृण्वतो बुद्धिरात्मनैवोपजायते ॥ ७
यावन्त इह शक्येरंस्तावतोंऽशान्प्रकल्पयेत्
अव्यक्तान्व्यक्तरूपांश्च शतशोऽथ सहस्रशः ॥ ८
सर्वानुमानयुक्तांश्च सर्वान्प्रत्यक्षहेतुकान् ।
यतः परं न विद्येत ततोऽभ्यासे भविष्यति ॥ ९
श्रीभगवानुवाच ।
ततस्तु तस्या ब्राह्मण्या मतिः क्षेत्रज्ञसंशये ।
क्षेत्रज्ञानेन परतः क्षेत्रज्ञोऽन्यः प्रवर्तते ॥ १०
अर्जुन उवाच ।
क्व नु सा ब्राह्मणी कृष्ण क्व चासौ ब्राह्मणर्षभः ।
याभ्यां सिद्धिरियं प्राप्ता तावुभौ वद मेऽच्युत ११
श्रीभगवानुवाच ।
मनो मे ब्राह्मणं विद्धि बुद्धिं मे विद्धि ब्राह्मणीम् ।
क्षेत्रज्ञ इति यश्चोक्तः सोऽहमेव धनंजय ॥ १२

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

## षट्त्रिंशोऽध्यायः ॥ ३६ ॥

कृष्णेनार्जुनंप्रति परब्रह्मस्वरूपतत्प्राप्तिसाधनादिप्रतिपादकगुरुशिष्यसंवादानुवादः ॥ १ ॥

न उवाच ।
ब्रह्म यत्परमं ज्ञेयं तन्मे व्याख्यातुमर्हसि ।
भवतो हि प्रसादेन सूक्ष्मे मे रमते मतिः ॥ १
वासुदेव उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
संवादं मोक्षसंयुक्तं शिष्यस्य गुरुणा सह ॥ २

---

विद्यन्तवन्ति कर्माणीति क. थ. पाठः ॥ ७ ॥ तस्मात्ते सुभगे इति झ. पाठः । मद्भावभावनिरता भामेवैष्यस्यथात्मनेति क. पाठः ॥ ८ ॥ चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

सम्यगुपायो दृष्टश्च भ्रमरैरिव लक्ष्यत इति झ. पाठः ॥ ६ ॥ पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

कश्चिद्ब्राह्मणमासीनमाचार्यं संशितव्रतम् ।
शिष्यः पप्रच्छ मेधावी किंस्विच्छ्रेयः परंतप ॥ ३
भगवन्तं प्रपन्नोऽहं निःश्रेयसपरायणः ।
याचे त्वां शिरसा विप्र यद्ब्रूयां ब्रूहि तन्मम ॥ ४
तमेवंवादिनं पार्थ शिष्यं गुरुरुवाच ह ।
कथयस्व प्रवक्ष्यामि यत्र ते संशयो द्विज ॥ ५
इत्युक्तः स कुरुश्रेष्ठ गुरुणा गुरुवत्सलः ।
प्राञ्जलिः परिपप्रच्छ यत्तच्छृणु महामते ॥ ६
शिष्य उवाच ।
कुतश्चाहं कुतश्च त्वं तत्सत्यं ब्रूहि यत्परम् ।
कुतो जातानि भूतानि स्थावराणि चराणि च ॥ ७
केन जीवन्ति भूतानि तेषामायुश्च किं परम् ।
किं सत्यं किं तपो विप्र के गुणाः सद्भिरीरिताः ॥ ८
के पन्थानः शिवाश्च स्युः किं सुखं किं च दुष्कृतम् ।
एतान्मे भगवन्प्रश्नान्याथातथ्येन सुव्रत ॥ ९
वक्तुमर्हसि विप्रर्षे यथावदिह तत्त्वतः ।
त्वदन्यः कश्च न प्रश्नानेतान्वक्तुमिहार्हति ॥ १०
ब्रूहि धर्मविदां श्रेष्ठ परं कौतूहलं मम ।
मोक्षधर्मार्थकुशलो भवाँल्लोकेषु गीयते ॥ ११
सर्वसंशयसंच्छेत्ता त्वदन्यो न च विद्यते ।
संसारभीरवश्चैव मोक्षकामास्तथा वयम् ॥ १२
वासुदेव उवाच ।
तस्मै संप्रतिपन्नाय यथावत्परिपृच्छते ।
शिष्याय गुणयुक्ताय शान्ताय गुरुवर्तिने ॥ १३
छायाभूताय दान्ताय यतते ब्रह्मचारिणे ।
तान्प्रश्नानब्रवीत्पार्थ मेधावी स धृतव्रतः ।
गुरुः कुरुकुलश्रेष्ठ सम्यक्सर्वानरिंदम ॥ १४
गुरुरुवाच ।
ब्रह्मणोक्तमिदं धर्ममृषिप्रवरसेवितम् ।
वेदविद्यासमावाप्तं तत्त्वभूतार्थभावनम् ॥ १५
ज्ञानं त्वेव परं विद्मः संन्यासं तप उत्तमम् ।
यस्तु वेद निराबाधं ज्ञानतत्त्वं विनिश्चयात् ।
सर्वभूतस्थमात्मानं स सर्वगतिरिष्यते ॥ १६
यो विद्वान्सहसंवासं विवासं चैव पश्यति ।
तथैवैकत्वनानात्वे स दुःखात्परिमुच्यते ॥ १७
यो न कामयते किंचिन्न किंचिदभिमन्यते ।
इह लोकस्थ एवैष ब्रह्मभूयाय कल्पते ॥ १८
प्रधानगुणतत्त्वज्ञः सर्वभूतविधानवित् ।
निर्ममो निरहंकारो मुच्यते नात्र संशयः ॥ १९
अव्यक्तबीजप्रभवो बुद्धिस्कन्धमयो महान् ।
महाहंकारविटप इन्द्रियाङ्कुरकोटरः ॥ २०
महाभूतविशेषश्च विशेषप्रतिशाखवान् ।
सदापर्णः सदापुष्पः शुभाशुभफलोदयः ॥ २१
आजीवः सर्वभूतानां ब्रह्मबीजः सनातनः ।
एतज्ज्ञात्वा च तत्त्वानि ज्ञानेन परमासिना ।
छित्त्वा चामरतां प्राप्य जहाति मृत्युजन्मनी २२
भूतभव्यभविष्यादिधर्मकामार्थनिश्चयम् ।
सिद्धसङ्घपरिज्ञातं पुराकल्पं सनातनम् ॥ २३
प्रवक्ष्येऽहं महाप्राज्ञ पदमुत्तममद्य ते ।
बुद्ध्वा यदिह संसिद्धा भवन्तीह मनीषिणः ॥ २४
उपगम्यर्षयः पूर्वं जिज्ञासन्तः परस्परम् ।
प्रजापतिभरद्वाजौ गौतमो भार्गवस्तथा ॥ २५
वसिष्ठः कश्यपश्चैव विश्वामित्रोऽत्रिरेव च ।
मार्गान्सर्वान्परिक्रम्य परिश्रान्ताः स्वकर्मभिः २६
ऋषिमाङ्गिरसं वृद्धं पुरस्कृत्य तु ते द्विजाः ।
ददृशुर्ब्रह्मभवने ब्रह्माणं वीतकल्मषम् ॥ २७
तं प्रणम्य महात्मानं सुखासीनं महर्षयः ।
पप्रच्छुर्विनयोपेता नैःश्रेयसमिदं परम् ॥ २८
कथं कर्म कृतं साधु कथं मुच्येत किल्बिषात् ।
के नो मार्गाः शिवाश्च स्युः किं सत्यं किं च दुष्कृतं ॥
कौ चोभौ कर्मणां मार्गौ प्राप्नुयुर्दक्षिणोत्तरौ ।
निरयं चापवर्गं च भूतानां प्रभवाप्ययौ ॥ ३०
इत्युक्तः स मुनिश्रेष्ठैर्यदाह प्रपितामहः ।
तत्तेऽहं संप्रवक्ष्यामि शृणु शिष्य यथागमम् ॥ ३१
ब्रह्मोवाच ।
सत्याद्भूतानि जातानि स्थावराणि चराणि च ।

कश्च कोऽपि ॥ १० ॥ कथ कर्म क्रियात्साधु इति ज्ञ. पाठः । क्रियात्कुर्वीत । के । नोऽस्माकम् ॥ २९ ॥

तपसा तानि जीवन्ति जीवितं तद्धि सुव्रतम् ।
स्वां योनिं पुनरागम्य वर्तते स्वेन कर्मणा ॥ ३२
सत्यं हि गुणसंयुक्तं नियतं पञ्चलक्षणम् ॥ ३३
ब्रह्म सत्यं तपः सत्यं सत्यं चैव प्रजापतिः ।
सत्याद्भूतानि जातानि सत्यं भूतमयं जगत्॥ ३४
तस्मात्सत्याश्रया विप्रा नित्यं योगपरायणाः ।
अतीतक्रोधसंतापा नियता धर्मसेतवः ॥ ३५
अन्योन्यनियतान्वैद्यान्धर्मसेतुप्रवर्तकान् ।
तानहं संप्रवक्ष्यामि शाश्वताँल्लोकभावनान्॥ ३६
चातुर्विद्यं तथा वर्णांश्चातुराश्रमिकान्पृथक् ।
धर्ममेकं चतुष्पादं नित्यमाहुर्मनीषिणः ॥ ३७
पन्थानं वः प्रवक्ष्यामि शिवं क्षेमकरं द्विजाः ।
नियतं ब्रह्मभावाय यातं पूर्वं मनीषिभिः ॥ ३८
गदन्तस्तु ममाद्येह पन्थानं दुर्विदं परैः
निबोधत महाभागा निखिलेन परं पदम् ॥ ३९
ब्रह्मचर्यमिहैवाहुराश्रमं प्रथमं पदम्
गार्हस्थ्यं तु द्वितीयं स्याद्वानप्रस्थमतः परम् ।
ततः परं तु विज्ञेयमध्यात्मं परमं पदम् ॥ ४०
ज्योतिराकाशमादित्यो वायुरिन्द्रः प्रजापतिः ।
नोपैति यावदध्यात्मं तावदेतान्न पश्यति ॥ ४१
तस्योपायं प्रवक्ष्यामि पुरस्तात्तं निबोधत ।
फलमूलानिलभुजां मुनीनां वसतां वने ॥ ४२
वानप्रस्थं द्विजातीनां त्रयाणामुपदिश्यते ।
सर्वेषामेव वर्णानां गृहस्थोऽयं विशिष्यते ॥ ४३
श्रद्धालक्षणमित्येकं धर्मं धीराः प्रचक्षते ।
'नैष्ठिकोऽथ यतिर्वाऽपि विरक्तो ब्रह्मदर्शनः॥' ४४
इत्येवं देवयाना वः पन्थानः परिकीर्तिताः ।
सद्भिरध्यासिता धीरैः कर्मभिर्धर्मसेतवः ॥ ४५
एतेषां पृथगध्यास्ते यो धर्मं संशितव्रतः ।
कालात्पश्यति भूतानां सदैव प्रभवाप्ययौ ॥ ४६
अतस्तत्त्वानि वक्ष्यामि याथातथ्येन हेतुना ।
विषयस्थानि सर्वाणि वर्तमानानि भागशः ॥ ४७
महानात्मा तथाऽव्यक्तमहंकारस्तथैव च ।
इन्द्रियाणि दशैकं च महाभूतानि पञ्च च ॥ ४८
विशेषाः पञ्चभूतानामित्येषा वैदिकी श्रुतिः
चतुर्विंशतिरेषा वस्तत्वानां परिकीर्तिता ॥ ४९
तत्वानामथ यो वेद सर्वेषां प्रभवाप्ययौ ।
स धीरः सर्वभूतेषु न मोऽहमधिगच्छति ॥ ५०
तत्त्वानि यो वेदयते यथातथं
गुणांश्च सर्वानखिलाश्च देवताः ।
विधूतपाप्मा प्रविमुच्य बन्धनं
स सर्वलोकानमलान्समश्नुते ॥ ५१

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि षट्त्रिंशोऽध्यायः ॥ ३६ ॥

## सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

ब्रह्मणा कश्यपादिमहर्षीन्प्रति तमोगुणकार्यनिरूपणम् ॥ १ ॥

ब्रह्मोवाच ।
तदव्यक्तमनुद्रिक्तं सर्वव्यापि ध्रुवं स्थिरम् ।
नवद्वारं पुरं विद्यात्त्रिगुणं पञ्चधातुकम् ॥ १
एकादशपरिक्षेपं मनोव्याकरणात्मकम् ।
बुद्धिस्वामिकमित्येतत्परमेकादशं भवेत् ॥ २
त्रीणि स्रोतांसि यान्यस्मिन्नाप्यायन्ते पुनःपुनः ।
प्रनाड्यस्तिस्र एवैताः प्रवर्तन्ते गुणात्मिकाः ॥ ३
तमो रजस्तथा सत्त्वं गुणानेतान्प्रचक्षते ।
अन्योन्यमिथुनाः सर्वे तथाऽन्योन्यानुजीविनः ४
अन्योन्यापाश्रयाश्चापि तथाऽन्योन्यानुवर्तिनः ।
अन्योन्यव्यतिषक्ताश्च त्रिगुणाः पञ्चधातवः ॥ ५
तमसो मिथुनं सत्वं सत्वस्य मिथुनं रजः ।
रजसश्चापि सत्वं स्यात्सत्वस्य मिथुनं तमः ॥ ६
नियम्यते तमो यत्र रजस्तत्र निवर्तते ।
नियम्यते रजो यत्र सत्वं तत्र प्रवर्तते ॥ ७
नैशात्मकं तमो विद्यात्त्रिगुणं मोहसंज्ञितम् ।

गार्हस्थ्यं तद्विधीयते इति झ. पाठः ॥ ४३ ॥

षट्त्रिंशोऽध्यायः ॥ ३६ ॥

अधर्मलक्षणं चैव नियतं पापकर्मसु ।
तामसं रूपमेतत्तु दृश्यते चापि संगतम् ॥ ८
प्रकृत्यात्मकमेवाहू रजः पर्यायकारकम् ।
सत्त्वे तु सर्वभूतेषु दृश्यमुत्पत्तिलक्षणम् ॥ ९
प्रकाशं सर्वभूतेषु लाघवं श्रद्दधानता ।
सात्विकं रूपमेवं तु लाघवं साधुसंमितम् ॥ १०
एतेषां गुणतत्त्वानि वक्ष्यन्ते तत्त्वहेतुभिः ।
समासव्यासयुक्तानि तत्त्वतस्तानि बोधत ॥ ११
संमोहो ज्ञानमत्यागः कर्मणामविनिर्णयः ।
स्वप्नः स्तंभो भयं लोभः शोकः सुकृतदूषणम् १२
अस्मृतिश्चाविपाकश्च नास्तिक्यं भिन्नवृत्तिता ।
निर्विशेषत्वमन्धत्वं जघन्यगुणवृत्तिता ॥ १३
अकृते कृतमानित्वमज्ञाने ज्ञानमानिता ।
अमैत्री विकृतो भावो ह्यश्रद्धा मूढभावना ॥ १४
अनार्जवमसंज्ञत्वं कर्म पापमचेतना ।
गुरुत्वं सन्नभावत्वमवशित्वमवाग्गतिः ॥ १५
सर्व एते गुणा वृत्तास्तामसाः संप्रकीर्तिताः ।
ये चान्ये विहिता भावा लोकेऽस्मिन्भावसंज्ञिताः॥
तत्रतत्र नियम्यन्ते सर्वे ते तामसा गुणाः ।
परिवादकथा नित्यं देवब्राह्मणवैरिता ॥ १७
अत्यागश्चातिमानश्च मोहो मन्युस्तथाऽक्षमा ।
मत्सरश्चैव भूतेषु तामसं वृत्तमिष्यते ॥ १८
वृथारंभा हि ये केचिद्वृथा दानानि यानि च ।
वृथाभक्षणमित्येतत्तामसं वृत्तमिष्यते ॥ १९
अतिवादोऽतितिक्षा च मात्सर्यमभिमानिता ।
अश्रद्दधानता चैव तामसं वृत्तमिष्यते ॥ २०
एवंविधाश्च ये केचिल्लोकेऽस्मिन्पापकर्मिणः ।
मनुष्या भिन्नमर्यादास्ते सर्वे तामसाः स्मृताः॥२१
तेषां योनीः प्रवक्ष्यामि नियताः पापकर्मिणाम् ।
अवाङ्निरयभावा ये तिर्यङ्निरयगामिनः ॥ २२
स्थावराणि च भूतानि पशवो वाहनानि च ।
क्रव्यादा दंदशूकाश्च कृमिकीटविहंगमाः ॥ २३
अण्डजा जन्तवश्चैव सर्वे चापि चतुष्पदाः ।
उन्मत्ता बधिरा मूका ये चान्ये पापरोगिणः २४
मग्नास्तमसि दुर्वृत्ताः स्वकर्मकृतलक्षणाः ।
अवाक्स्रोतस इत्येते मग्नास्तमसि तामसाः ॥ २५
तेषामुत्कर्षमुद्रेकं वक्ष्याम्यहमतः परम् ।
यथा ते सुकृतां लोकाँल्लभन्ते पुण्यकर्मिणः ॥२६
अन्यथा प्रतिपन्नास्तु विवृद्धा ये च कर्मसु ।
स्वकर्मनिरतानां च ब्राह्मणानां शुभैषिणाम् ॥२७
संस्कारेणोर्ध्वमायान्ति यतमानाः सलोकताम् ।
स्वर्गं गच्छन्ति देवानामित्येषा वैदिकी श्रुतिः२८
अन्यथा प्रतिपन्नास्ते विबुद्धाः स्वेषु कर्मसु ।
पुनरावृत्तिधर्माणस्ते भवन्तीह मानुषाः ॥ २९
पापयोनिं समापन्नाश्चण्डाला मूकचूचुकाः ।
वर्णान्पर्यायशश्चापि प्राप्नुवन्त्युत्तरोत्तरम् ॥ ३०
शूद्रयोनिमतिक्रम्य ये चान्ये तामसा गुणाः ।
स्रोतोमध्ये समागम्य वर्तन्ते तामसे गुणे ॥ ३१
अभिष्वङ्गस्तु कामेषु महामोह इति स्मृतः ।
ऋषयो मुनयो देवा मुह्यन्त्यत्र सुखेप्सवः ॥ ३२
तमोमोहो महामोहस्तामिस्रो ह्यन्धसंज्ञितः ।
मरणं त्वन्धतामिस्रस्तामिस्रः क्रोध उच्यते ॥ ३३
वर्णतो गुणतश्चैव योनितश्चैव तत्त्वतः ।
सर्वमेतत्तमो विप्राः कीर्तितं वो यथाविधि ॥ ३४
को न्वेतद्बुध्यते साधु को न्वेतत्साधु पश्यति ।
अतत्त्वे तत्त्वदर्शी यस्तमसस्तच्च लक्षणम् ॥ ३५
तमोगुणा बहुविधाः प्रकीर्तिता
यथावदुक्तं च तमः परावरम् ।
नरो हि यो वेद गुणानिमान्सदा
स तामसैः सर्वगुणैः प्रमुच्यते ॥ ३६

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

अण्डजा जन्तव इति झ. पाठः ॥ २४ ॥ चूचुकाः स्खलद्गिरः । पुष्पचूँचुका इति क. पाठः ॥ ३० ॥ कामेषु रूपाद्येषु । अभिष्वङ्ग आसक्तिः ॥ ३२ ॥ सप्तत्रिंशोऽध्यायः॥३७॥

## अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

ब्रह्मणा महर्षीन्प्रति रजोगुणकार्यनिरूपणम् ॥ १ ॥

ब्रह्मोवाच ।
रजोऽहं वः प्रवक्ष्यामि याथातथ्येन सत्तमाः ।
निबोधत महाभागा गुणवृत्तं च राजसम् ॥ १
संतापो रूपमायासः सुखदुःखे हिमातपौ ।
ऐश्वर्यं विग्रहः सिद्धिर्हेतुवादोऽरतिः क्षमा ॥ २
बलं शौर्यं मदो रोषो व्यायामकलहावपि ।
ईर्ष्येप्सा पैशुनं युद्धं ममत्वं परिपालनम् ॥ ३
वधबन्धपरिक्लेशाः क्रयो विक्रय एव च ।
निकृन्त च्छिन्धि भिन्धीति परवर्मावकर्तनम् ॥ ४
उग्रं दारुणमाक्रोशः परवित्तानुरागिता ।
लोकचिन्ताऽनुचिन्ता च मत्सरः परिभाषणम् ५
वृथाशास्त्रं मृषावादो विकल्पपरिभाषणम् ।
निन्दा स्तुतिः प्रशंसा च प्रतापः परिधर्षणम् ॥६
परिचर्या च शुश्रूषा सेवा तृष्णा व्यपाश्रयः ।
व्यूहो नयः प्रमादश्च परिवादः परिग्रहः ॥ ७
संस्कारा ये च लोकेषु प्रवर्तन्ते पृथक्पृथक् ।
नृषु नारीषु भूतेषु द्रव्येषु शरणेषु च ॥ ८
संतापोऽप्रत्ययश्चैव व्रतानि नियमाश्च ये ।
प्रधानमाशीर्युक्तं च सततं मे भवत्विति ॥ ९
स्वाहाकारो नमस्कारः स्वधाकारो वषट्क्रिया ।
याजनाध्यापने चोभे यजनाध्ययने अपि ॥ १०
दानं प्रतिग्रहश्चैव प्रायश्चित्तानि मङ्गलम् ।
इदं मे स्यादिदं मे स्यात्स्नेहो गुणसमुद्भवः ॥ ११
अभिद्रोहस्तथा माया निकृतिर्मान एव च ।
स्तैन्यं हिंसा जुगुप्सा च परितापः प्रजागरः ॥१२
दंभो दर्पोऽथ रागश्च भक्तिः प्रीतिः प्रमोदनम् ।
द्यूतं च जनवादश्च संबन्धाः स्त्रीकृताश्च ये ॥ १३
नृत्यवादित्रगीतानां प्रसंगा ये च केचन ।
सर्वे एते गुणा विप्रा राजसाः संप्रकीर्तिताः ॥ १४
भूतभव्यभविष्याणां भावानां भुवि भावनाः ।
त्रिवर्गनिरता नित्यं धर्मोऽर्थः काम इत्यपि ॥१५
कामवृत्ताः प्रमोदन्ते सर्वकामसमृद्धिभिः ।
अर्वाक्स्रोतस इत्येते मनुष्या रजसा वृताः ॥१६
अस्मिँलोके प्रमोदन्ते जायमानाः पुनःपुनः ।
प्रेत्यभाविकमीहन्ते ऐहलौकिकमेव च ।
ददति प्रतिगृह्णन्ति तर्पयन्त्यथ जुह्वति ॥ १७
रजोगुणा वो बहुधानुकीर्तिता
यथावदुक्तं गुणवृत्तमेव च ।
नरोपि यो वेद गुणानिमान्सदा
स राजसैः सर्वगुणैर्विमुच्यते ॥ १८

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

## एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

ब्रह्मणा महर्षीन्प्रति सत्त्वगुणकार्यनिरूपणम् ॥ १ ॥

ब्रह्मोवाच
अतः परं प्रवक्ष्यामि तृतीयं गुणमुत्तमम्
सर्वभूतहितं लोके सतां धर्ममनिन्दितम् १
आनन्दः प्रीतिरुद्रेकः प्राकाश्यं सुखमेव च ।
अकार्पण्यमसंरंभः संतोषः श्रद्दधानता ॥ २
क्षमा धृतिरहिंसा च समता सत्यमार्जवम् ।

---

संघातो रूपमायास इति क. ट. थ. पाठः ॥ २ ॥ उग्र निष्ठुरं दारुण हिंस्रत्वम् ॥ ५ ॥ परिभाषण विकृत्य भाषणम् ॥ ६ ॥ व्यूहः व्यवहाररचनाकौशलम् ॥ ७ ॥ शरणेषु रक्षितृषु ॥ ८ ॥ अप्रत्ययः अविश्वासः ॥ ९ ॥ परितापः स्वजनकैवल्यनिमित्तो दाहः । पाठान्तरे परिवादः सर्वनिन्दा ॥ १२ ॥ प्रसङ्गा येन केनचिदिति क. थ. पाठः ॥ १४ ॥ अर्वाक् स्वर्गादधः भूमेरुपरि स्रोतः प्रवाहो येषां ते तथा ॥ १६ ॥ प्रेत्यभाविक जन्मान्तरीय कुशलम् ॥ १७ ॥ अष्टत्रिंशोऽध्यायः ३८

अक्रोधश्चानसूया च शौचं दाक्ष्यं पराक्रमः ॥३
मुधाज्ञानं मुधावृत्तं मुधासेवा मुधाश्रमः।
एवं यो युक्तधर्मः स्यात्सोमुत्रात्यन्तमश्नुते ॥ ४
निर्ममो निरहंकारो निराशीः सर्वतः समः।
अकामहत इत्येव सतां धर्मः सनातनः ॥ ५
विश्रंभो ह्रीस्तितिक्षा च त्यागः शौचमतन्द्रिता।
आनृशंस्यमसंमोहो दया भूतेष्वपैशुनम् ॥ ६
हर्षस्तुष्टिर्विस्मयश्च विनयः साधुवृत्तिता
शान्तिकर्मविशुद्धिश्च भावशुद्धिर्विमोचनम् ॥ ७
उपेक्षा ब्रह्मचर्यं च परित्यागश्च सर्वशः
निर्ममत्वमनाशीष्ट्वमपरिक्षतधर्मता ॥
मुधादानं मुधायज्ञो मुधाधीतं मुधाव्रतम्।
मुधाप्रतिग्रहश्चैव मुधाधर्मो मुधातपः ॥
एवंवृत्तास्तु ये केचिल्लोकेऽस्मिन्सत्वसंश्रयाः
ब्राह्मणा ब्रह्मयोनिस्थास्ते धीराः साधुदर्शिनः१०
हित्वा सर्वाणि पापानि निःशोका ह्यजरामराः।
दिव्यं प्राप्य तु ते धीराः कुर्वते वै ततस्तनूः ११
ईशित्वं च वशित्वं च लघुत्वं चाणुता तथा।
विकुर्वते महात्मानो देवास्त्रिदिवगा इव ॥ १२
ऊर्ध्वस्रोतस इत्येते देवा वैकारिकाः स्मृताः।
विकुर्वन्तः प्रकृत्या वै दिवं प्राप्तास्ततस्ततः॥१३
यद्यदिच्छन्ति तत्सर्वं भजन्ते विभजन्ति च।
इत्येतत्सात्विकं वृत्तं कथितं वो द्विजर्षभाः
एतद्विज्ञाय लभते विधिवद्यद्यदिच्छति ॥ १४
प्रकीर्तिताः सत्त्वगुणा विशेषतो
यथावदुक्तं गुणवृत्तमेव च।
नरस्तु यो वेद गुणानिमान्सदा
गुणान्स भुङ्क्ते न गुणैः स युज्यते ॥ १५

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

## चत्वारिंशोऽध्यायः ॥ ४० ॥

ब्रह्मणा महर्षीन्प्रति सत्वादिगुणत्रयनिरूपणम् ॥ १ ॥

ब्रह्मोवाच।
नैव शक्या गुणा वक्तुं पृथक्त्वेनैव सर्वशः।
अविच्छिन्नानि दृश्यन्ते रजः सत्वं तमस्तथा ॥ १
अन्योन्यमनुरज्यन्ते ह्यन्योन्येनानुजीविनः।
अन्योन्यापाश्रयाः सर्वे तथाऽन्योन्यानुवर्तिनः॥२
यावत्सत्वं रजस्तावद्वर्तते नात्र संशयः।
यावत्तमश्च सत्वं च रजस्तावदिहोच्यते ॥ ३
संहत्य कुर्वते यात्रां सहिताः सङ्घचारिणः।
सङ्घातवृत्तयो ह्येते वर्तन्ते हेत्वहेतुभिः ॥ ४
उद्रेकव्यतिरिक्तानां तेषामन्योन्यवर्तिनाम्।
वक्ष्यते तद्यथाऽन्यूनं व्यतिरिक्तं च सर्वशः ॥ ५
व्यतिरिक्तं तमो यत्र तिर्यग्भावगतं भवेत्।
अल्पं तत्र रजो ज्ञेयं सत्वमल्पतरं तथा ॥ ६
उद्रिक्तं च रजो यत्र मध्यस्रोतोगतं भवेत्।
अल्पं तत्र तमो ज्ञेयं सत्वमल्पतरं तथा ॥ ७
उद्रिक्तं च यदा सत्वमूर्ध्वस्रोतोगतं भवेत्।
अल्पं तत्र तमो ज्ञेयं रजश्चाल्पतरं तथा ॥ ८
सत्वं वैकारिकी योनिरिन्द्रियाणां प्रकाशिका।
न हि सत्वात्परो भावः कश्चिदन्यो विधीयते॥९
ऊर्ध्वं गच्छन्ति सत्वस्था मध्ये तिष्ठन्ति राजसाः।
जघन्यगुणसंयुक्ता यान्त्यधस्तामसा जनाः॥ १०
तमः शूद्रे रजः क्षत्रे ब्राह्मणे सत्वमुत्तमम्।
इत्येवं त्रिषु वर्णेषु विवर्तन्ते गुणास्त्रयः॥ ११
दूरादपि हि दृश्यन्ते सहिताः सङ्घचारिणः।

---

हर्षः पुत्रजन्मादिजं सुखम्। तुष्टिरलबुद्धिः। शान्तिकर्मणि मृत्त्युपाये शुद्धिः आर्जवेन प्रवृत्तिः ॥ ७ ॥ उपेक्षा औदासीन्यम् ॥ ८ ॥ एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

अविच्छिन्नानि अपृथग्भूतानि। इद सात्विकमिद राजसमिदं तामसं कार्यमिति व्यपदेशस्तु तत्तद्गुणप्राधान्यमात्रादित्यर्थः ॥ १ ॥ सहत्य मिश्रीभूय यात्रा व्यवहारं कुर्वते। यतः संघचारिणः संहतस्वभावाश्चरन्ति ॥ ४ ॥ चत्वारिंशोऽध्यायः ॥ ४० ॥

तमः सत्वं रजश्चैव पृथक्त्वेनानुशुश्रुम ॥ १२
दृष्ट्वा त्वादित्यमुद्यन्तं कुचोराणां भयं भवेत् ।
अध्वगाः परितप्येयुरुष्णतो दुःखभागिनः ॥ १३
आदित्यः सत्वमुद्दिष्टः कुचोरास्तु तथा तमः ।
परितापोऽध्वगानां च रजसो गुण उच्यते ॥ १४
प्राकाश्यं सत्वमादित्यः संतापो रजसो गुणः ।
उपप्लवस्तु विज्ञेयस्तामसस्तस्य-पर्वसु ॥ १५
एवं ज्योतिषु सर्वेषु प्रवर्तन्ते गुणास्त्रयः ।
पर्यायेण च वर्त्तन्ते तत्रतत्र तथातथा ॥ १६
स्थावरेषु तु भावेषु तिर्यग्भावगतं तमः ।
राजसास्तु विवर्तन्ते स्नेहभावस्तु सात्विकः॥१७
अहस्त्रिधा तु विज्ञेयं त्रिधा रात्रिर्विधीयते ।
मासार्धमासवर्षाणि ऋतवः सन्धयस्तथा ॥ १८
त्रिधा दानानि दीयन्ते त्रिधा यज्ञः प्रवर्तते ।
त्रिधा लोकास्त्रिधा देवास्त्रिधा विद्यास्त्रिधा गतिः॥
भूतं भव्यं भविष्यं च धर्मोऽर्थः काम एव च ।
प्राणापानावुदानश्चाप्येत एव त्रयो गुणाः ॥ २०
पर्यायेण प्रवर्तन्ते तत्रतत्र तथातथा ।
यत्किंचिदिह लोकेऽस्मिन्सर्वमेते त्रयो गुणाः २१
त्रयो गुणाः प्रवर्तन्ते ह्यव्यक्ता नित्यमेव तु ।
सत्वं रजस्तमश्चैव गुणसर्गः सनातनः ॥ २२
तमोऽव्यक्तं शिवं धाम रजो योनिः सनातनः ।
प्रकृतिर्विकारः प्रलयः प्रधानं प्रभवाप्ययौ ॥ २३
अनुद्रिक्तमनूनं वाऽप्यकंपमचलं ध्रुवम् ।
सदसच्चैव तत्सर्वमव्यक्तं त्रिगुणं स्मृतम् ।
ज्ञेयानि नामधेयानि नरैरध्यात्मचिन्तकैः ॥ २४
अव्यक्तनामानि गुणांश्च तत्त्वतो
यो वेद सर्वाणि गतीश्च केवलाः ।
विमुक्तदेहः प्रविभागतत्त्ववि-
त्स मुच्यते सर्वगुणैर्निरामयः ॥ २५

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि चत्वारिंशोऽध्यायः ॥ ४० ॥

## एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

ब्रह्मणा महर्षीन्प्रति महदहंकारतत्वनिरूपणम् ॥ १ ॥

ब्रह्मोवाच ।
अव्यक्तात्पूर्वमुत्पन्नो महानात्मा महामतिः ।
आदिर्गुणानां सर्वेषां प्रथमः सर्ग उच्यते ॥ १
महानात्मा मतिर्विष्णुर्जिष्णुः शंभुश्च वीर्यवान् ।
बुद्धिः प्रज्ञोपलब्धिश्च तथा ख्यातिर्धृतिःस्मृतिः २
पर्यायवाचकैः शब्दैर्महानात्मा विभाव्यते ।
तं जानन्ब्राह्मणो विद्वान्प्रमोहं नाधिगच्छति ॥ ३
सर्वतःपाणिपादं च सर्वतोक्षिशिरोमुखम् ।
सर्वतःश्रुतिमल्लोके सर्वं व्याप्यावतिष्ठति ॥ ४
महाप्रभावः पुरुषः सर्वस्य हृदि निष्ठितः ।
अणिमा लघिमा प्राप्तिरीशानो ज्योतिरव्ययः ॥ ५
तत्र बुद्धिमतां लोके सद्भावनिरताश्च ये ।
ध्यानिनो नित्ययोगाश्च सत्यसन्धा जितेन्द्रियाः६
ज्ञानवन्तश्च ये केचिदलुब्धा जितमन्यवः ।
प्रसन्नमनसो धीरा निर्ममा निरहंक्रियाः ॥ ७
विमुक्ताः सर्व एवैते महत्त्वमुपयान्त्युत ।
आत्मनो महतो वेद यः पुण्यां गतिमुत्तमाम् ॥८
अहंकारात्प्रसूतानि महाभूतानि पञ्च वै ।
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ॥ ९
तेषु भूतानि युज्यन्ते महाभूतेषु पञ्चसु ।
ते शब्दस्पर्शरूपेषु रसगन्धक्रियासु च ॥ १०
महाभूतविनाशान्ते प्रलये प्रत्युपस्थिते ।
सर्वप्राणभृतां धीरा महदुत्पद्यते भयम् ॥ ११
स धीरः सर्वलोकेषु न मोहमधिगच्छति ।
विष्णुरेवादिसर्गेषु स्वयंभूर्भवति प्रभुः ॥ १२
एवं हि यो वेद गुहाशयं प्रभुं
परं पुराणं पुरुषं विश्वरूपम् ।
हिरण्मयं बुद्धिमतां परां गतिं
स बुद्धिमान्बुद्धिमतीत्य तिष्ठति ॥ १३ ॥

य उत्पन्नो महान्पूर्वमहंकारः स उच्यते ।
अहमित्येव संभूतो द्वितीयः सर्ग उच्यते ॥ १४
अहंकारश्च भूतादिर्वैकारिक इति स्मृतः ।
तेजसश्चेतना धातुः प्रजासर्गः प्रजापतिः ॥ १५
देवानां प्रभवो देवो मनसश्च त्रिलोककृत् ।
अहमित्येव तत्सर्वमभिमानः स उच्यते ॥ १६
अध्यात्मज्ञानतृप्तानां मुनीनां भावितात्मनाम् ।
स्वाध्यायक्रतुसिद्धानामेष लोकः सनातनः ॥१७
अहंकारेणाहरतो गुणानिमा-
न्भूतादिरेवं सृजते स भूतकृत् ।
वैकारिकः सर्वमिदं विचेष्टते
स्वतेजसा रञ्जयते जगत्तथा ॥ १८

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

---

## द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

ब्रह्मणा महर्षीन्प्रत्यहंकारतत्त्वाद्भूतादिसृष्टिप्रकारकथनम् ॥ १ ॥

---

अहंकारात्प्रसूतानि महाभूतानि पञ्च वै ।
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ॥ १
तेषु भूतानि मुह्यन्ति महाभूतेषु पञ्चसु ।
शब्दस्पर्शनरूपेषु रसगन्धक्रियासु च ॥ २
महाभूतविकारान्ते प्रलये प्रत्युपस्थिते ।
सर्वप्राणभृतां धीरा महदुत्पद्यते भयम् ॥ ३
यद्यस्माज्जायते भूतं तत्र तत्प्रविलीयते ।
लीयन्ते प्रतिलोमानि जायन्ते चोत्तरोत्तरम् ॥ ४
ततः प्रलीने सर्वस्मिन्भूते स्थावरजङ्गमे ।
स्मृतिमन्तस्तदा धीरा न लीयन्ते कदाचन ॥ ५
शब्दः स्पर्शस्तथा रूपं रसो गन्धश्च पञ्चमः ।
क्रियाः करणयुक्ताः स्युरनित्या मोहसंज्ञिताः ॥६
लोभप्रजनसंभूता निर्विशेषा ह्यकिंचनाः ।
मांसशोणितसङ्घाता अन्योन्यस्योपजीविनः ॥ ७
बहिरात्मान इत्येते दीनाः कृपणजीविनः ।
प्राणापानावुदानश्च समानो व्यान एव च ॥ ८
अन्तरात्मनि चाप्येते नियताः पञ्च वायवः ।
वाङ्मनोबुद्धिरित्येभिः सार्धमष्टात्मकं जगत् ॥ ९
त्वग्घ्राणश्रोत्रचक्षूंषि रसना वाक्च संयताः ।
विशुद्धं च मनो यस्य बुद्धिश्चाव्यभिचारिणी ॥ १०
अष्टौ यस्याग्नयो ह्येते दहन्तेऽहंक्रियाः सदा ।
स तद्ब्रह्म शुभं याति तस्माद्भूयो न विद्यते ॥ ११
एकादश च यान्याहुरिन्द्रियाणि विशेषतः ।
अहंकारात्प्रसूतानि तानि वक्ष्यामि नामतः १२
श्रोत्रं त्वक् चक्षुषी जिह्वा नासिका चैव पञ्चमी ।
पादौ पायुरुपस्थश्च हस्तौ वाग्दशमी भवेत् ॥१३
इन्द्रियग्राम इत्येष मन एकादशं भवेत् ।
एतं ग्रामं जयेत्पूर्वं ततो ब्रह्म प्रकाशते ॥ १४
बुद्धीन्द्रियाणि पञ्चाहुः पञ्च कर्मेन्द्रियाणि च ।
श्रोत्रादीन्यपि पञ्चाहुर्बुद्धियुक्तानि तत्त्वतः ॥१५
अविशेषाणि चान्यानि कर्मयुक्तानि यानि तु ।
उभयत्र मनो ज्ञेयं बुद्धिस्तु द्वादशी भवेत् ॥१६
इत्युक्तानीन्द्रियाण्येतान्येकादश यथाक्रमम् ।
मन्यन्ते कृतमित्येवं विदित्वा तानि पण्डिताः१७
'त्रीणि स्थानानि भूतानां चतुर्थं नोपपद्यते ।'
स्थलमापस्तथाऽऽकाशं जन्म चापि चतुर्विधम्१८
अण्डजोद्भिज्जसंस्वेदजरायुजमथापि च ।
चतुर्धा जन्म इत्येतद्भूतग्रामस्य लक्ष्यते ॥ १९
अपराण्यथ भूतानि खेचराणि तथैव च ।
अण्डजानि विजानीयात्सर्वांश्चैव सरीसृपान् ॥२०
स्वेदजाः कृमयः प्रोक्ता जन्तवश्च यथाक्रमम् ।
जन्मद्वितीयमित्येतज्जघन्यतरमुच्यते ॥ २१
भित्त्वा तु पृथिवीं यानि जायन्ते कालपर्ययात् ।
उद्भिज्जानि च तान्याहुर्भूतानि द्विजसत्तमाः ॥२२
द्विपादबहुपादानि तिर्यग्गतिमतीनि च ।

---

लोकप्रजनसयुक्ता इति क. ट. पाठः ॥ ७ ॥ अन्तरात्मान इत्युक्ता इति क. पाठः ॥ ९ ॥

जरायुजानि भूतानि विकृतान्यपि सत्तमाः॥२३
द्विविधा खलु विज्ञेया ब्रह्मयोनिः सनातना ।
तपः कर्म च यत्पुण्यमित्येष विदुषां नयः ॥२४
विविधं कर्म विज्ञेयमिज्या दानं च तन्मखे ।
वेदस्याध्ययनं पुण्यमिति वृद्धानुशासनम् ॥ २५
एतद्यो वेत्ति विधिवत्स मुक्तः स्याद्द्विजर्षभाः ।
विमुक्तः सर्वपापेभ्य इति चैव निबोधत ॥ २६
'अतः परं प्रवक्ष्यामि सर्वं विविधमिन्द्रियम्॥'२७
आकाशं प्रथमं भूतं श्रोत्रमध्यात्ममुच्यते ।
अधिभूतं तथा शब्दो दिशश्चात्राधिदैवतम् ॥२८
द्वितीयं मारुतं भूतं त्वगध्यात्मं च विश्रुतम् ।
स्प्रष्टव्यमधिभूतं तु विद्युत्तत्राधिदैवतम् ॥ २९
तृतीयं ज्योतिरित्याहुश्चक्षुरध्यात्ममिष्यते ।
अधिभूतं ततो रूपं सूर्यस्तत्राधिदैवतम् ॥ ३०
चतुर्थमापो विज्ञेयं जिह्वा चाध्यात्ममिष्यते ।
अधिभूतं रसश्चात्र सोमस्तत्राधिदैवतम् ॥ ३१
पृथिवी पञ्चमं भूतं घ्राणश्चाध्यात्ममुच्यते ।
अधिभूतं तथा गन्धो वायुस्तत्राधिदैवतम् ॥ ३२
एषु पञ्चसु भूतेषु चतुष्टयविधिः स्मृतः ।
अतः परं प्रवक्ष्यामि सर्वं त्रिविधमिन्द्रियम् ॥३३
पादावध्यात्ममित्याहुर्ब्राह्मणास्तत्त्वदर्शिनः ।
अधिभूतं तु गन्तव्यं विष्णुस्तत्राधिदैवतम् ॥ ३४
अवाग्गतिरपानश्च पायुरध्यात्ममिष्यते ।
अधिभूतं विसर्गश्च मित्रस्तत्राधिदैवतम् ॥ ३५
प्रजनः सर्वभूतानामुपस्थोऽध्यात्ममुच्यते ।
अधिभूतं तथा शुक्रं दैवतं च प्रजापतिः ॥ ३६
हस्तावध्यात्ममित्याहुरध्यात्मविदुषो जनाः ।
अधिभूतं च कर्माणि शक्रस्तत्राधिदैवतम् ॥ ३७
वैश्वदेवी मनःपूर्वा वागध्यात्ममिहोच्यते ।
वक्तव्यमधिभूतं च वह्निस्तत्राधिदैवतम् ॥ ३८
अध्यात्मं मन इत्याहुः पञ्चभूतात्मचारकम् ।
अधिभूतं च संकल्पश्चन्द्रमाश्चाधिदैवतम् ॥ ३९
अहंकारस्तथाऽध्यात्मं सर्वसंसारकारणम् ।
अभिमानोऽधिभूतं च रुद्रस्तत्राधिदैवतम् ॥ ४०
अध्यात्मं बुद्धिरित्याहुः षडिन्द्रियविचारिणी ।
अधिभूतं तु विज्ञेयमहस्तत्राधिदैवतम् ॥ ४१
यथावदध्यात्मविधिरेष वः कीर्तितो मया ।
ज्ञानमस्य हि धर्मज्ञाः प्राप्तं ज्ञानवतामिह ॥ ४२
इन्द्रियाणीन्द्रियार्थाश्च महाभूतानि पञ्च च ।
सर्वाण्येतानि संधाय मनसा संप्रधारयेत् ॥ ४३
क्षीणे मनसि सर्वस्मिन्न जन्मसुखमिष्यते ।
ज्ञानसंपन्नसत्त्वानां तत्सुखं विदुषां मतम् ॥ ४४
अतः परं प्रवक्ष्यामि सूक्ष्मभावकरीं शिवाम् ।
निवृत्तिं सर्वभूतेषु मृदुना दारुणेन वा ॥ ४५
गुणागुणमनासङ्गमेकचर्यमनन्तरम् ।
एतद्ब्राह्मणजं वृत्तमाहुरेकपदं सुखम् ॥ ४६
विद्वान्कूर्म इवाङ्गानि कामान्संहृत्य सर्वशः ।
विरजाः सर्वतो मुक्तो यो नरः स सुखी सदा ४७
कामानात्मनि संयम्य क्षीणतृष्णः समाहितः ।
सर्वभूतसुहृन्मैत्रो ब्रह्मभूयाय कल्पते ॥ ४८
इन्द्रियाणां निरोधेन सर्वेषां विषयैषिणाम् ।
मुनेर्जनपदत्यागादध्यात्माग्निः समिध्यते ॥ ४९
यथाऽग्निरिन्धनैरिद्धो महाज्योतिः प्रकाशते ।
तथेन्द्रियनिरोधेन महानात्मा प्रकाशते ॥ ५०
यदा पश्यति भूतानि प्रसन्नात्माऽऽत्मनो हृदि ।
स्वयंज्योतिस्तदा सूक्ष्मात्सूक्ष्मं प्राप्नोत्यनुत्तमम्५१
अग्नी रूपं रसं स्रोतो वायुः स्पर्शनमेव च ।
मही गन्धधरा घ्राणमाकाशः श्रवणं तथा ।
'दृश्यमादित्यमेवाहुरध्यात्मविदुषो जनाः ॥' ५२
रोगशोकसमाविष्टं पञ्चस्रोतःसमावृतम् ।
पञ्चभूतसमायुक्तं नवद्वारं द्विदैवतम् ॥ ५३
रजस्वलमथादृश्यं त्रिगुणं सप्तधातुकम् ।
संसर्गाभिरतं मूढं शरीरमिति धारणा ॥ ५४
दुश्चरं जीवलोकेऽस्मिन्सत्वं प्रति समाश्रितम् ।
एतदेव हि लोकेऽस्मिन्कालचक्रं प्रवर्तते ॥ ५५
एतन्महार्णवं घोरमगाधं मोहसंज्ञितम् ।
विसृजन्संक्षिपेच्चैव मोहयन्स्थापयञ्जगत् ॥ ५६

---

जातस्याध्ययन पुण्यमिति झ. पाठः ॥ २५ ॥

कामं क्रोधं भयं लोभमभिद्रोहमथानृतम् ।
इन्द्रियाणां निरोधेन सततस्त्यजति दुस्त्यजान्॥५७
यस्यैते निर्जिता लोके त्रिगुणाः पञ्चधातवः ।
व्योम्नि तस्य परं स्थानमानन्तमथ लक्ष्यते ॥५८
पञ्चेन्द्रियमहाकूलां मनःस्रोतोभयावहाम् ।
नदीं मोहह्रदां तीर्त्वा कामक्रोधावुभौ जयेत्॥५९
स सर्वदोषनिर्मुक्तस्ततः पश्यति तत्परम् ।
मनो मनसि सन्धाय पश्यन्नात्मानमात्मनि॥६०
सर्ववित्सर्वभूतेषु द्रक्ष्यत्यात्मानमात्मनि ।
एकधा बहुधा चैव विकुर्वाणस्ततस्ततः ॥ ६१
ध्रुवं पश्यति रूपाणि दीपाद्दीपशतं यथा ।
स वै विष्णुश्च मित्रश्च वरुणोऽग्निः प्रजापतिः ६२
स हि धाता विधाता च स प्रभुः सर्वतोमुखः ।
हृदयं सर्वभूतानां महानात्मा प्रकाशते ॥ ६३
तं विप्रसङ्घाश्च सुरासुराश्च
यक्षाः पिशाचाः पितरो वयांसि ।
रक्षोगणा भूतगणाश्च सर्वे
महर्षयश्चैव सदा स्तुवन्ति ॥ ६४

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

## त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

ब्रह्मणा महर्षीन्प्रति मनुष्येषु क्षत्रियाणां रजोगुणकार्यबलप्रधानतया तेषां सत्वप्रधानब्राह्मणरक्षणस्य कर्तव्यत्वकथनप्रसङ्गेन तत्तज्जातिश्रेष्ठवस्तुकथनम् ॥ १ ॥ तथाऽहिंसादिधर्मादिप्रतिपादनम् ॥ २ ॥

ब्रह्मोवाच ।
मनुष्याणां तु राजन्यः क्षत्रियो मध्यमो गुणः ।
कुञ्जरो वाहनानां च सिंहश्चारण्यवासिनाम् ॥ १
अविः पशूनां सर्वेषामहिस्तु बिलवासिनाम् ।
गवां गोवृषभश्चैव स्त्रीणां पुरुष एव च ॥ २
न्यग्रोधो जंबुवृक्षश्च पिप्पलः शाल्मलिस्तथा ।
शिंशपा मेषशृङ्गश्च तथा कीचकवेणवः ॥ ३
एते द्रुमाणां राजानो गणानां मरुतस्तथा
हिमवान्पारियात्रश्च सह्यो विन्ध्यस्त्रिकूटवान् ॥४
श्वेतो नीलश्च भासश्च राष्ट्रवांश्चैव पर्वतः ।
भृशस्कन्धो महेन्द्रश्च माल्यवान्पर्वतस्तथा ॥ ५
एते पर्वतराजानो गणानां मरुतस्तथा ।
सूर्यो ग्रहाणामधिपो नक्षत्राणां च चन्द्रमाः॥६
यमः पितॄणामधिपः सरितामथ सागरः ।
अंभसां वरुणो राजा मरुतामिन्द्र उच्यते ॥ ७
अर्कोऽधिपतिरुष्णानां ज्योतिषामिन्दुरुच्यते ।
अग्निर्भूतपतिर्नित्यं ब्राह्मणानां बृहस्पतिः ॥ ८
ओषधीनां पतिः सोमो विष्णुर्बलवतां वरः ।
त्वष्टाऽधिराजो रूपाणां पशूनामीश्वरः शिवः ॥९
दक्षिणानां तथा यज्ञो वेदानामृच एव च !
दिशामुदीची विप्राणां सोमो राजा प्रतापवान्१०
कुबेरः सर्वरत्नानां देवतानां पुरंदरः ।
एष भूताधिपः सर्गः प्रजानां च प्रजापतिः॥११
सर्वेषामेव भूतानामहं ब्रह्ममयो महान् ।
भूतं परतरं मत्तो विष्णोर्वाऽपि न विद्यते ॥ १२
राजाधिराजः सर्वेषां विष्णुर्ब्रह्ममयो महान् ।
ईश्वरं तं विजानीमः स विभुः स प्रजापतिः ॥१३
नरकिन्नरयक्षाणां गन्धर्वोरगरक्षसाम् ।
देवदानवनागानां सर्वेषामीश्वरो हि सः ॥ १४
भगदेवानुयातानां सर्वासां वामलोचना ।
माहेश्वरी महादेवी प्रोच्यते पार्वती हि सा ॥१५
उमां देवीं विजानीध्वं नारीणामुत्तमां शुभाम् ।

पितरश्च सिद्धा इति क. पाठः ॥ ६४ ॥ द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

आखुश्च बिलवासिनामिति क. थ. पाठः ॥ २ ॥ राजासत्त्वाना मित्र उच्यत इति क. ट. थ. ॥ ७ ॥ उष्णानां देवानामिन्द्र उच्यत इति क. ट. थ. पाठः ॥ ८ ॥ भगदेवाः कामुकास्तैरनुयातानामनुसृतानां स्त्रीणां, सर्वासां मध्ये माहेश्वरी वामलोचनेति संबन्धः । भद्रादेवाभिजातानां सर्वेषा वारिजेक्षणेति क. ट. पाठः ॥ १५ ॥

रतीनां वसुमत्यस्तु स्त्रीणामप्सरसस्तथा ॥ १६
धर्मकामाश्च राजानो ब्राह्मणा धर्मसेतवः ।
तस्माद्राजा द्विजातीनां प्रयतेतेह रक्षणे ॥ १७
राज्ञां हि विषये येषामवसीदन्ति साधवः ।
हीनास्ते स्वगुणैः सर्वैः प्रेत्यावाङ्मार्गगामिनः १८
राज्ञां हि विषये येषां साधवः परिरक्षिताः ।
तेऽस्मिँल्लोके प्रमोदन्ते प्रेत्य चानन्दमेव च ॥ १९
प्राप्नुवन्ति महात्मान इति वित्त द्विजर्षभाः ।
अत ऊर्ध्वं प्रवक्ष्यामि नियतं धर्मलक्षणम् ॥ २०
अहिंसालक्षणो धर्मो हिंसा चाधर्मलक्षणा ।
प्रकाशलक्षणा देवा मनुष्याः कर्मलक्षणाः ॥ २१
शब्दलक्षणमाकाशं वायुस्तु स्पर्शलक्षणः ।
ज्योतिषां लक्षणं रूपमापश्च रसलक्षणाः ॥ २२
धारिणी सर्वभूतानां पृथिवी गन्धलक्षणा ।
स्वरव्यञ्जनसंस्कारा भारती शब्दलक्षणा ॥ २३
मनसो लक्षणं चिन्ता तथोक्ता बुद्धिरन्वयात् ।
मनसा चिन्तितानर्थान्बुद्ध्या चेह व्यवस्यति २४
बुद्धिर्हि व्यवसायेन लक्ष्यते नात्र संशयः ।
लक्षणं मनसो ध्यानमव्यक्तं साधुलक्षणम् ॥ २५
प्रवृत्तिलक्षणो योगो ज्ञानं संन्यासलक्षणम् ।
तस्माज्ज्ञानं पुरस्कृत्य संन्यसेदिह बुद्धिमान् ॥ २६
संन्यासी ज्ञानसंयुक्तः प्राप्नोति परमां गतिम् ।
अतीतो द्वन्द्वमभ्येति तमोमृत्युजरातिगः ॥ २७
धर्मलक्षणसंयुक्तमुक्तं वो विधिवन्मया ।
गुणानां ग्रहणं सम्यग्वक्ष्याम्यहमतः परम् ॥ २८
पार्थिवो यस्तु गन्धो वै घ्राणेन हि स गृह्यते ।
घ्राणस्थश्च तथा वायुर्गन्धज्ञाने विधीयते ॥ २९
अपां धातू रसो नित्यं जिह्वया स तु गृह्यते ।
जिह्वास्थश्च तथा सोमो रसज्ञाने विधीयते ॥ ३०
तेजसस्तु गुणो रूपं चक्षुषा तच्च गृह्यते ।
चक्षुःस्थश्च तथादित्यो रूपज्ञाने विधीयते ॥ ३१
वायव्यस्तु सदा स्पर्शस्त्वचा प्रज्ञायते च सः ।
त्वक्स्थश्चैव सदा वायुः स्पर्शने स विधीयते ॥ ३२
आकाशस्य गुणो घोषः श्रोत्रेण च स गृह्यते ।
श्रोत्रस्थाश्च दिशः सर्वाः शब्दज्ञाने प्रकीर्तिताः ३३
मनसश्च गुणश्चिन्ता प्रज्ञया स तु गृह्यते ।
हृदिस्थश्चेतनो धातुर्मनोज्ञाने विधीयते ॥ ३४
बुद्धिरध्यवसायेन ध्यानेन च महांस्तथा ।
निश्चित्य ग्रहणाद्व्यक्तमव्यक्तं नात्र संशयः ॥ ३५
अलिङ्गग्रहणो नित्यः क्षेत्रज्ञो निर्गुणात्मकः ।
तस्मादलिङ्गः क्षेत्रज्ञः केवलं ज्ञानलक्षणः ॥ ३६
अव्यक्तं क्षेत्रमुद्दिष्टं गुणानां प्रभवाप्ययम् ।
सदा पश्याम्यहं लीनं विजानामि शृणोमि च ॥ ३७
पुरुषस्तद्विजानीते तस्मात्क्षेत्रज्ञ उच्यते ।
गुणवृत्तं तथा कृत्स्नं क्षेत्रज्ञः परिपश्यति ॥ ३८
आदिमध्यावसानं तत्सृज्यमानमचेतनम् ।
न गुणा विदुरात्मानं सृज्यमानाः पुनःपुनः ३९
न सत्यं वेद वै कश्चित्क्षेत्रज्ञस्त्वेव विन्दति ।
गुणानां गुणभूतानां यत्परं परतो महत् ॥ ४०
तस्माद्गुणांश्च तत्वं च परित्यज्येह तत्ववित् ।
क्षीणदोषो गुणान्हित्वा क्षेत्रज्ञं प्रविशत्यथ ॥ ४१
निर्द्वन्द्वो निर्नमस्कारो निःस्वधाकार एव च ।
अचलश्चानिकेतश्च क्षेत्रज्ञः स परो विधिः ॥ ४२

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

## चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

ब्रह्मणा महर्षीन्प्रति स्वस्वजातिषु श्रेष्ठवस्तुप्रतिपादनपूर्वकं ज्ञानस्याविनाशित्वकथनेन तस्यैव श्रेयःसाधनत्वोक्तिः ॥ १ ॥

ब्रह्मोवाच ।
यदादिमध्यपर्यन्तं ग्रहणोपायमेव च ।
नामलक्षणसंयुक्तं सर्वं वक्ष्यामि तत्त्वतः ॥ १
अहः पूर्वं ततो रात्रिर्मासाः शुक्लादयः स्मृताः ।

रतीनां प्रीतिसुखानाम् । वसुमत्यः धनवत्यः । धनलाभगर्वित यत्प्रीतिसुखं तदेव महदित्यर्थः ॥ १६ ॥ वर्णकमाश्च राजान इति क. ट थ. पाठः ॥ १७ ॥ लक्षण महतो ध्यानमिति क. पाठः ॥ २५ ॥ त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

श्रवणादीनि ऋक्षाणि ऋतवः शिशिरादयः ॥ २
भूमिरादिस्तु गन्धानां रसानामाप एव च ।
रूपाणामादिरग्निस्तु स्पर्शादिर्वायुरुच्यते ॥ ३
शब्दस्यादिस्तथाऽऽकाशमेष भूतकृतो गुणः ।
अतः परं प्रवक्ष्यामि भूतानामादिमुत्तमम् ॥ ४
आदित्यो ज्योतिषामादिरग्निर्भूतादिरुच्यते ।
सावित्री सर्वविद्यानां देवतानां प्रजापतिः ॥ ५
ओंकारः सर्ववेदानां वचसां प्राण एव च ।
यदस्मिन्नियतं लोके सर्वं सावित्रमुच्यते ॥ ६
गायत्री च्छन्दसामादिः प्रजानां सर्ग उच्यते ।
गावश्चतुष्पदामादिर्मनुष्याणां द्विजातयः ॥ ७
श्येनः पतत्रिणामादिर्यज्ञानां हुतमुत्तमम् ।
प्रसर्पिणां तु सर्वेषां ज्येष्ठः सर्पो द्विजोत्तमाः ॥ ८
कृतमादिर्युगानां च सर्वेषां नात्र संशयः ।
हिरण्यं सर्वरत्नानामोषधीनां यवास्तथा ॥ ९
सर्वेषां भक्ष्यभोज्यानामन्नं परममुच्यते ।
द्रवाणां चैव सर्वेषां पेयानामाप उत्तमाः ॥ १०
स्थावराणां तु भूतानां सर्वेषामविशेषतः ।
ब्रह्मक्षेत्रं सदा पुण्यं प्लक्षः प्रवरजः स्मृतः ॥ ११
अहं प्रजापतीनां च सर्वेषां नात्र संशयः ।
मम विष्णुरचिन्त्यात्मा स्वयंभूरिति संस्मृतः॥१२
पर्वतानां महामेरुः सर्वेषामग्रजः स्मृतः ।
दिशां च प्रदिशां चोर्ध्वं दिक्पूर्वा प्रथमा तथा १३
तथा त्रिपथगा गङ्गा नदीनामग्रजा स्मृता ।
तथा सरोदपानानां सर्वेषां सागरोऽग्रजः ॥ १४
देवदानवभूतानां पिशाचोरगरक्षसाम्
नरकिन्नरयक्षाणां सर्वेषामीश्वरः प्रभुः ॥ १५
आदिर्विश्वस्य जगतो विष्णुर्ब्रह्ममयो महान्
ततः परतरं यस्मात्त्रैलोक्ये नेह विद्यते ॥ १६
आश्रमाणां च सर्वेषां गार्हस्थ्यं नात्र संशयः ।
लोकानामादिरव्यक्तं सर्वस्यान्तस्तदेव च ॥ १७
अहान्यस्तमयान्तानि उदयान्ता च शर्वरी ।
सुखस्यान्तं सदा दुःखं दुःखस्यान्तं सदा सुखम् ॥
सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः ।
संयोगाश्च वियोगान्ता मरणान्तं च जीवितम्॥१९
सर्वं कृतं विनाशान्तं जातस्य मरणं ध्रुवम् ।
अशाश्वतं हि लोकेऽस्मिन्सदा स्थावरजङ्गमम् २०
इष्टं दत्तं तपोऽधीतं व्रतानि नियमाश्च ये ।
सर्वमेतद्विनाशान्तं ज्ञानस्यान्तो न विद्यते ॥ २१
तस्माज्ज्ञानेन शुद्धेन प्रशान्तात्मा जितेन्द्रियः ।
निर्ममो निरहंकारो मुच्यते सर्वपाप्मभिः ॥ २२

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

## पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

ब्रह्मणा महर्षीन्प्रति शरीरस्य कालचक्रवत्सर्वनाशकत्वोक्तिपूर्वकं गृहस्थधर्मानुष्ठानस्य श्रेयःसाधनत्वोक्तिः ॥ १ ॥

ब्रह्मोवाच ।
बुद्धिसारं मनस्तम्भमिन्द्रियग्रामबन्धनम् ।
महाभूतारविष्कम्भं निमेषपरिवेष्टनम् ॥ १
जराशोकसमाविष्टं व्याधिव्यसनसंचरम् ।
देशकालविचारीदं श्रमव्यायामनिःस्वनम् ॥ २
अहोरात्रपरिक्षेपं शीतोष्णपरिमण्डलम् ।
सुखदुःखान्तसंश्लेषं क्षुत्पिपासावकीलकम् ॥ ३
छायातपविलेखं च निमेषोन्मेषविह्वलम् ।
शोकमोहजराकीर्णं वर्तमानमचेतनम् ॥ ४
मासार्धमासगुणितं विषमं लोकसंचरम् ।

---

श्रविष्ठादीनि सर्वाणीति क. ट. थ. पाठः ॥ २ ॥ रूपाणां ज्योतिरादित्य इति झ. पाठः ॥ ३ ॥ हुतं अग्नौ ब्राह्मणे वा देवतोद्देशेन दत्तम् ॥ ८ ॥ ब्रह्मवृक्षः सदा पुण्यः इति क. थ. पाठः ॥ ११ ॥ सरोदपानाना सरसां कूपादीना च । संधिरार्षः । तथाचाश्वो वाहनानां सर्वेषा सागरोग्रज इति क. पाठः ॥ १४ ॥ ईश्वरः रुद्रः ॥ १५ ॥ चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

इन्द्रियग्रामवर्धनमिति क. ट. थ. पाठः ॥ १ ॥

तमोनिचयपङ्कं च रजोवेगप्रवर्तकम् ॥ ५
सत्त्वालङ्कारदीप्तं च गुणसंघातमण्डलम् ।
विरतिग्रहणाभीकं शोकसंहारवर्तनम् ॥ ६
क्रियाकारणसंयुक्तं रागविस्तारमायतम् ।
लोभेप्सापरिविक्षोभं विविक्तज्ञानसंभवम् ॥ ७
भयमोहपरीवारं भूतसंमोहकारकम् ।
आनन्दप्रीतिचारं च कामक्रोधपरिग्रहम् ॥ ८
महदादिविशेषान्तमव्यक्तं प्रभवाप्ययम् ।
मनोजवनमश्रान्तं कालचक्रं प्रवर्तते ॥ ९
एतद्द्वन्द्वसमायुक्तं कालचक्रमचेतनम् ।
विसृजेत्संक्षिपेच्चापि बोधयेत्स्थापयेज्जगत् ॥ १०
कालचक्रप्रवृत्तिं च निवृत्तिं चैव तत्त्वतः
यस्तु वेद नरो नित्यं न स भूतेषु मुह्यति ॥ ११
विमुक्तः सर्वसंक्लेशैः सर्वद्वन्द्वातिगो मुनिः ।
विमुक्तः सर्वपापेभ्यः प्राप्नोति परमां गतिम् ॥ १२
गृहस्थो ब्रह्मचारी च वानप्रस्थोऽथ भिक्षुकः ।
चत्वार आश्रमाः प्रोक्ताः सर्वे गार्हस्थ्यमूलकाः ॥
यः कश्चिदिह लोकेऽस्मिन्नाश्रमः परिकीर्तितः ।
तस्यान्तगमनं श्रेयः कीर्तिरेषा सनातनी ॥ १४
संस्कारैः संस्कृतः पूर्वं यथावच्चरितव्रतः ।
जातौ गुणविशिष्टायां समावर्तेत वेदवित् ॥ १५
स्वदारनिरतो नित्यं शिष्टाचारो जितेन्द्रियः ।
पञ्चभिश्च महायज्ञैः श्रद्दधानो यजेदिह ॥ १६
देवतातिथिशिष्टाशी निरतो वेदकर्मसु ।
इज्याप्रदानयुक्तश्च यथाशक्ति यथाविधि ॥ १७
न पाणिपादचपलो न नेत्रचपलो मुनिः ।
न च वागङ्गचपल इति शिष्टस्य गोचरः ॥ १८
नित्यं यज्ञोपवीती स्याच्छुक्लवासाः शुचिव्रतः ।
नियतो यमदानाभ्यां सदा शिष्टैश्च संविशेत् १९
जितशिश्नोदरो मैत्रः शिष्टाचारसमन्वितः ।
वैणवीं धारयेद्यष्टिं सोदकं च कमण्डलुम् ॥ २०
'त्रीणि धारयते नित्यं कमण्डलुमतन्द्रितः ।
एकमाचमनार्थाय एकं वै पादधावनम् ।
एकं शौचविधानार्थमित्येतत्त्रितयं तथा'' २१
अधीत्याध्यापनं कुर्यात्तथा यजनयाजने ।
दानं प्रतिग्रहं वाऽपि षड्गुणां वृत्तिमाचरेत् ॥ २२
त्रीणि कर्माणि जानीत ब्राह्मणानां तु जीविकाः ।
याजनाध्यापने चोभे शुद्धाच्चापि प्रतिग्रहः ॥ २३
अथ शेषाणि चान्यानि त्रीणि कर्माणि यानि तु ।
दानमध्ययनं यज्ञो धर्मयुक्तानि तानि तु ॥ २४
तेष्वप्रमादं कुर्वीत त्रिषु कर्मसु धर्मवित्
दान्तो मैत्रः क्षमायुक्तः सर्वभूतसमो मुनिः ॥ २५
सर्वमेतद्यथाशक्ति विप्रो निर्वर्तयञ्शुचिः ।
एवं युक्तो जयेत्स्वर्गं गृहस्थः संशितव्रतः ॥ २६

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

## षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

ब्रह्मणा महर्षीन्प्रति ब्रह्मचारिवनस्थधर्मनिरूपणपूर्वकं तदनुष्ठानस्य श्रेयःसाधनत्वोक्तिः ॥ १

ब्रह्मोवाच ।
एवमेतेन मार्गेण पूर्वोक्तेन यथाविधि ।
अधीतवान्यथाशक्ति तथैव ब्रह्मचर्यवान् ॥ १
स्वधर्मनिरतो विद्वान्सर्वेन्द्रिययतो मुनिः ।
गुरोः प्रियहिते युक्तः सत्यधर्मपरः शुचिः ॥ २
गुरुणा समनुज्ञातो भुञ्जीतान्नमकुत्सयन् ।
हविष्यभैक्ष्यभुक् चापि स्थानासनविहारवान् ॥ ३
द्विकालमग्निं जुह्वानः शुचिर्भूत्वा समाहितः ।
धारयीत सदा दण्डं बैल्वं पालाशमेव वा ॥ ४
क्षौमं कार्पासिकं वाऽपि मृगाजिनमथापि वा ।
सर्वं काषायरक्तं वा वासो वाऽपि द्विजस्य ह ॥ ५
मेखला च भवेन्मौञ्जी जटी नित्योदकस्तथा ।

अनन्तप्रतिसारं चेति ट. पाठः ॥ ८ ॥ मोहयेत्सामर जगदिति क. ट. थ. पाठः ॥ १० ॥ पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

यज्ञोपवीती स्वाध्यायी अलुप्तनियतव्रतः ॥
पूताभिश्च तथैवाद्भिः सदा दैवततर्पणम् ।
भावेन नियतः कुर्वन्ब्रह्मचारी प्रशस्यते ॥ ७
एवं युक्तो जयेत्स्वर्गमूर्ध्वरेताः समाहितः ।
न संसरति जातीषु परमं स्थानमाश्रितः ॥ ८
संस्कृतः सर्वसंस्कारैस्तथैव ब्रह्मचर्यवान् ।
ग्रामान्निष्क्रम्य चारण्ये मुनिः प्रव्रजितो वसेत् ९
चर्मवल्कलसंवासी सायं प्रातरुपस्पृशेत् ।
अरण्यगोचरो नित्यं न ग्रामं प्रविशेत्पुनः ॥ १०
अर्चयन्नतिथीन्काले दद्याच्चापि प्रतिश्रयम् ।
फलपत्रावरैर्मूलैः श्यामाकेन च वर्तयन् ॥ ११
स नित्यमुदकं वायुं सर्वं वानेयमाश्रयेत् ।
प्राश्नीयादानुपूर्व्येण यथादीक्षमतन्द्रितः ॥ १२
समूलफलशाकाद्यैरर्चेदतिथिमागतम् ।
यद्भक्षः स्यात्ततो दद्याद्भिक्षां नित्यमतन्द्रितः॥१३
देवतातिथिपूर्वं च सदा प्राश्नीत वाग्यतः ।
अस्कन्दितमनाश्चैव लघ्वाशी देवताश्रयः ॥ १४
दान्तो मैत्रः क्षमायुक्तः केशाञ्श्मश्रु च धारयन् ।
जुह्वन्स्वाध्यायशीलश्च सत्यधर्मपरायणः ॥ १५
न्यस्तदेहः सदा दक्षो वननित्यः समाहितः ।
एवं युक्तो जयेत्स्वर्गं वानप्रस्थो जितेन्द्रियः॥१६
गृहस्थो ब्रह्मचारी च वानप्रस्थोऽथवा पुनः ।
य इच्छेन्मोक्षमास्थातुमुत्तमां वृत्तिमाश्रयेत् ॥ १७
अभयं सर्वभूतेभ्यो दत्त्वा नैष्कर्म्यमाचरेत् ।
सर्वभूतहितो मैत्रः सर्वेन्द्रिययतो मुनिः ॥ १८
अयाचितमसंक्लृप्तमुपपन्नं यदृच्छया ।
कृत्वा प्राह्णे चरेद्भैक्ष्यं विधूमे भुक्तवज्जने ॥ १९
वृत्ते शरावसंपाते भैक्ष्यं लिप्सेत मोक्षवित् ।
लाभेन च न हृष्येत नालाभे विमना भवेत् ।
न चातिभिक्षां भिक्षेत केवलं प्राणयात्रिकः २०
यात्रार्थी कालमाकाङ्क्षंश्चरेद्भैक्ष्यं समाहितः ।
लाभं साधारणं नेच्छेन्न भुञ्जीताभिपूजितः ॥२१
अभिपूजितलाभाद्धि विजुगुप्सेत भिक्षुकः ।
भुक्तान्यन्नानि तिक्तानि कषायकटुकानि च २२
नास्वादयीत भुञ्जानो रसांश्च मधुरांस्तथा ।
यात्रामात्रं च भुञ्जीत केवलं प्राणधारणम् ॥२३
असंरोधेन भूतानां वृत्तिं लिप्सेत मोक्षवित् ।
न चान्यमन्नं लिप्सेत भिक्षमाणः कथंचन ॥२४
न सन्निकाशयेद्धर्मं विविक्ते चारजाश्चरेत् ।
शून्यागारमरण्यं वा वृक्षमूलं नदीं तथा ॥ २५
प्रतिश्रयार्थं सेवेत पार्वतीं वा पुनर्गुहाम् ।
ग्रामैकरात्रिको ग्रीष्मे वर्षास्वेकत्र वा वसेत् ॥२६
अध्वा सूर्येण निर्दिष्टः कीटवच्च चरेन्महीम् ।
दयार्थं चैव भूतानां समीक्ष्य पृथिवीं चरेत्॥२७
संचयांश्च न कुर्वीत स्नेहवासं च वर्जयेत् ।
पूताभिरद्भिर्नित्यं वै कार्यं कुर्वीत मोक्षवित्॥२८
उपस्पृशेदुद्धृताभिरद्भिश्च पुरुषः सदा ।
अहिंसा ब्रह्मचर्यं च सत्यमार्जवमेव च ॥ २९
अक्रोधश्चानसूया च दमो नित्यमपैशुनम् ।
अष्टस्वेतेषु युक्तः स्याद्व्रतेषु नियतेन्द्रियः ॥ ३०
अपापमशठं वृत्तमजिह्मं नित्यमाचरेत् ।
जोषयेत सदा भोज्यं ग्रासमागतमस्पृहः ॥ ३१
यात्रामात्रं च भुञ्जीत केवलं प्राणयात्रिकम्
धर्मलब्धमथाश्नीयान्न काममनुवर्तयेत् ॥ ३२
ग्रासादाच्छादनादन्यन्न गृह्णीयात्कथंचन ।
यावदाहारयेत्तावत्प्रतिगृह्णीत नाधिकम् ॥ ३३
परेभ्यो न प्रतिग्राह्यं न च देयं कदाचन ।
दैन्यभावाच्च भूतानां संविभज्य सदा बुधः ॥ ३४
नाददीत परस्वानि न गृह्णीयान्न याचयेत् ।
न किंचिद्विषयं भुक्त्वा स्पृहयेत्तस्य वै पुनः ॥३५
मृदमापस्तथाऽन्नानि पत्रपुष्पफलानि च ।
असंवृतानि गृह्णीयात्प्रवृत्तानि च कार्यवान् ॥ ३६
न शिल्पजीविकां जीवेद्द्विरन्नं नोत कामयेत् ।
न द्वेष्टा नोपदेष्टा च भवेच्च निरुपस्कृतः ॥ ३७

---

जयेल्लोकान्वानप्रस्थो जितेन्द्रिय इति झ. पाठः ॥ ८ ॥ साय प्रातरपः स्पृशेदिति क. पाठः ॥ १० ॥ न किंचिद्विषयेद्भुक्त्वा तस्मै नो गर्हयेत्पुनरिति क. पाठः । स्पृहयेदितरस्य वै इति ट. थ. पाठः ॥ ३५ ॥ षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

श्रद्धापूतानि भुञ्जीत निमित्तानि च वर्जयेत् ।
सुधावृत्तिरसक्तश्च सर्वभूतैरसंधितः ॥ ३८
आशीर्युक्तानि सर्वाणि हिंसायुक्तानि यानि च।
लोकसंग्रहधर्मं च नैव कुर्यान्न कारयेत् ॥ ३९
सर्वभावानतिक्रम्य लघुमात्रः परिव्रजेत् ।
समः सर्वेषु भूतेषु स्थावरेषु चरेषु च ॥ ४०
परं नोद्वेजयेत्किंचिन्न च कस्यचिदुद्विजेत् ।
विश्वास्यः सर्वभूतानामग्र्यो मोक्षविदुच्यते ॥४१
अनागतं च न ध्यायेन्नातीतमनुचिन्तयेत् ।
वर्तमानमुपेक्षेत कालाकाङ्क्षी समाहितः ॥ ४२
न चक्षुषा न मनसा न वाचा दूषयेत्क्वचित् ।
न प्रत्यक्षं परोक्षं वा किंचिद्दुष्टं समाचरेत् ॥ ४३
इन्द्रियाण्युपसंहृत्य कूर्मोऽङ्गानीव सर्वशः ।
क्षीणेन्द्रियमनोबुद्धिर्निरीहः सर्वतत्त्ववित् ॥ ४४
निर्द्वन्द्वो निर्नमस्कारो निःस्वाहाकार एव च ।
निर्ममो निरहंकारो निर्योगक्षेम आत्मवान्॥ ४५
निराशीर्निर्गुणः शान्तो निरासक्तो निराश्रयः ।
आत्मसङ्गी च तत्त्वज्ञो मुच्यते नात्र संशयः ॥४६
अपादपाणिपृष्ठं तदशिरस्कमनूदरम्
अभिन्नगुणकर्माणं केवलं विमलं स्थिरम् ॥ ४७
अगन्धमरसस्पर्शमरूपाशब्दमेव च ।
अनुगम्यमनासक्तममांसमपि चैव यत् ॥ ४८
निश्चिन्तमव्ययं दिव्यं गृहस्थमपि सर्वदा ।
सर्वभूतस्थमात्मानं ये पश्यन्ति न ते मृताः ॥ ४९
न तत्र क्रमते बुद्धिर्नेन्द्रियाणि न देवताः ।
वेदा यज्ञाश्च लोकाश्च न तपो न व्रतानि च ॥ ५०
यत्र ज्ञानवतां प्राप्तिरलिङ्गग्रहणा स्मृता ।
तस्मादलिङ्गधर्मज्ञो धर्मतत्त्वमुपाचरेत् ॥ ५१
गूढधर्माश्रितो विद्वान्विज्ञानचरितं चरेत् ।
अमूढो मूढरूपेण चरेद्धर्ममदूषयन् ॥ ५२
यथैनमवमन्येरन्परे सततमेव हि ।
तथावृत्तश्चरेच्छान्तः सतां धर्मानकुत्सयन् ॥ ५३
य एवं वृत्तसंपन्नः स मुनिः श्रेष्ठ उच्यते ।
इन्द्रियाणीन्द्रियार्थाश्च महाभूतानि पञ्च च॥ ५४
मनो बुद्धिरहंकारमव्यक्तं पुरुषं तथा ।
एतत्सर्वं प्रसङ्ख्याय यथावत्तत्त्वनिश्चयात् ॥ ५५
ततः स्वर्गमवाप्नोति विमुक्तः सर्वबन्धनैः ।
एतावदन्तवेलायां परिसङ्ख्याय तत्त्ववित् ॥ ५६
ध्यायेदेकान्तमास्थाय मुच्यतेऽथ निराश्रयः ।
निर्मुक्तः सर्वसङ्गेभ्यो वायुराकाशगो यथा ॥५७
क्षीणकोशो निरातङ्कस्तथेदं प्राप्नुयात्परम् ॥ ५८

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

---

## सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

ब्रह्मणा महर्षीन्प्रति संन्यासज्ञानतपसां परमपुरुषार्थसाधनत्वोक्तिः ॥ १ ॥

ब्रह्मोवाच ।
संन्यासं तप इत्याहुर्वृद्धा निश्चितवादिनः ।
ब्राह्मणा ब्रह्मयोनिस्था ज्ञानं ब्रह्म परं विदुः ॥ १
अतिदूरात्मकं ब्रह्म वेदविद्याव्यपाश्रयम् ।
निर्द्वन्द्वं निर्गुणं नित्यमचिन्त्यगुणमुत्तमम् ॥ २
ज्ञानेन तपसा चैव धीराः पश्यन्ति तत्परम् ।
निर्णिक्तमनसः पूता व्युत्क्रान्तरजसोऽमलाः ॥३
तपसा क्षेममध्वानं गच्छन्ति परमेश्वरम् ।
संन्यासनिरता नित्यं ये च ब्रह्मविदो जनाः ॥४
तपः प्रदीप इत्याहुराचारो धर्मसाधकः ।
ज्ञानं वै परमं विद्यात्संन्यासं तप उत्तमम् ॥ ५
यस्तु वेद निराबाधं ज्ञानं तत्त्वविनिश्चयात् ।
सर्वभूतस्थमात्मानं स सर्वविदिहोच्यते ॥ ६
यो विद्वान्सहवासं च विवासं चैव पश्यति ।
तथैवैकत्वनानात्वे स दुःखात्प्रतिमुच्यते ॥ ७
यो न कामयते किंचिन्न किंचिदवमन्यते ।
इह लोकस्थ एवैष ब्रह्मभूयाय कल्पते ॥
प्रधानगुणतत्त्वज्ञः सर्वभूतविधानवित् ।

निर्ममो निरहंकारो मुच्यते नात्र संशयः ॥ ९
निर्द्वन्द्वो निर्नमस्कारो निःस्वधाकार एव च
निर्गुणं नित्यमद्वन्द्वं प्रशमेनैव गच्छति ॥ १०
हित्वा गुणमयं सर्वं कर्म जन्तुः शुभाशुभम् ।
उभे सत्यानृते हित्वा मुच्यते नात्र संशयः॥ ११
अव्यक्तबीजप्रभवो बुद्धिस्कन्धमयो महान् ।
महाहंकारविटप इन्द्रियान्तरकोटरः ॥ १२
महाभूतविशाखश्च विशेषप्रतिशाखवान् ।
सदापत्रः सदापुष्पः शुभाशुभफलोदयः ॥ १३
आजीव्यः सर्वभूतानां ब्रह्मवृक्षः सनातनः ।
एनं छित्वा च भित्त्वा च तत्त्वज्ञानासिना बुधः १४
हित्वा सङ्गमयान्पाशान्मृत्युजन्मजरोदयान् ।
निर्ममो निरहङ्कारो मुच्यते नात्र संशयः ॥ १५
द्वाविमौ पक्षिणौ नित्यौ संक्षेपौ चाप्यचेतनौ ।
एताभ्यां तु परो योऽन्यश्चेतनावान्स उच्यते १६
अचेतनः सत्वसङ्घाविमुक्तः
सत्त्वात्परं चेतयतेऽन्तरात्मा ।
स क्षेत्रवित्सर्वसङ्घातबुद्धि-
र्गुणातिगो मुच्यते सर्वपापैः ॥ १७

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

## अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

ब्रह्मणा महर्षीन्प्रति योगिनां चातुर्विध्यादिकथनपूर्वकं मुमुक्षुवेद्यनानार्थकथनम् ॥

ब्रह्मोवाच ।
केचिद्ब्रह्ममयं वृक्षं केचिद्ब्रह्ममयं वनम् ।
केचित्परममव्यक्तं केचित्परमनामयम् ।
मन्यन्ते सर्वमप्येतदव्यक्तप्रभवाव्ययम् ॥ १
उच्छ्वासमात्रमपि चेद्योऽन्तकाले समो भवेत् ।
आत्मानमुपसङ्गम्य सोमृतत्वाय कल्पते ॥ २
निमेषमात्रमपि चेत्संयम्यात्मानमात्मनि ।
गच्छत्यात्मप्रसादेन विदुषां प्राप्तिमव्ययाम् ॥ ३
प्राणायामैरथ प्राणान्संयम्य स पुनःपुनः ।
दशद्वादशभिर्वापि चतुर्विंशात्समन्ततः ॥ ४
एवं पूर्वं प्रसन्नात्मा लभते यद्यदिच्छति ।
अव्यक्तात्सत्वमुद्रिक्तममृतत्वाय कल्पते ॥ ५
सत्वात्परतरं नान्यत्प्रशंसन्तीह तद्विदः ।
अनुमानाद्विजानीमः पुरुषं सत्वसंश्रयम् ।
न शक्यमन्यथा गन्तुं पुरुषं द्विजसत्तमाः ॥ ६
क्षमा धृतिरहिंसा च समता सत्यमार्जवम् ।
ज्ञानं त्यागोथ संन्यासः सात्विकं वृत्तमिष्यते ॥ ७
एतेनैवानुमानेन मन्यन्ते वै मनीषिणः ।
सत्वं च पुरुषश्चैव तत्र नास्ति विचारणा ॥ ८
आहुरेके च विद्वांसो ये ज्ञाने सुप्रतिष्ठिताः ।
क्षेत्रज्ञसत्वयोरैक्यमित्येतन्नोपपद्यते ॥ ९
पृथग्भूतस्तथा नित्यमित्येतदविचारितम् ।
पृथग्भावश्च विज्ञेयः सहजश्चापि तत्त्वतः ॥ १०
तथैवैकत्वनानात्वमिष्यते विदुषां नयः ।
मशकोदुंबरे चैक्यं पृथक्त्वमपि दृश्यते ॥ ११
मत्स्यो यथाऽन्यः स्यादप्सु संप्रयोगस्तथा तयोः ।
संबन्धस्तोयबिन्दूनां पर्णैः कोकनदस्य च ॥ १२
गुरुरुवाच ।
इत्युक्तवन्तस्ते विप्रास्तदा लोकपितामहम् ।
पुनः संशयमापन्नाः पप्रच्छुर्मुनिसत्तमाः ॥ १३

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

---

हित्वा चामरता प्राप्य जह्यायो मृत्युजन्मनीति क. ठ. थ. पाठः ॥ १५ ॥ पक्षिणौ जीवेश्वरौ ॥ १६ ॥ अचेतनस्तत्व-संघातयुक्तस्तत्वात्परं चेतयतेन्तरात्मा । स क्षेत्रज्ञस्तत्वसं-घातबुद्धिर्गुणातिगो मुच्यते मृत्युपाशादिति क. थ. पाठः ॥ १७ ॥ सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

भोक्तुः कालेन वै भवेदिति ट. पाठः ॥ २ ॥ उक्तं विद्यते येषु ते उक्तवन्तः उक्तमर्थं सम्यगवधृतवन्त इत्यर्थः ॥ १३ ॥ अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

## एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥

महर्षिभिर्ब्रह्माणंप्रति धर्मविषये नानाविधवादिविप्रतिपत्तिप्रदर्शनपूर्वकं तत्प्रयुक्तस्वीयसंशयनिवर्तनप्रार्थना ॥ १ ॥

ऋषय ऊचुः ।
को वा स्विदिह धर्माणामनुष्ठेयतमो मतः ।
व्याहतामिव पश्यामो धर्मस्य विविधां गतिम् ॥ १
ऊर्ध्वं देहाद्वदन्त्येके नैतदस्तीति चापरे ।
केचित्संशयितं सर्वं निःसंशयमथापरे ॥ २
अनित्यं नित्यमित्येके नास्त्यस्तीत्यपि चापरे ।
त्रिधेत्येके द्विधेत्येके व्याकीर्णमिति चापरे ॥ ३
मन्यन्ते ब्राह्मणा एव ब्रह्मज्ञास्तत्त्वदर्शिनः ।
एकमेके पृथक्चान्ये बहुत्वमिति चापरे ॥ ४
देशकालावुभौ केचिन्नैतदस्तीति चापरे ।
जटाजिनधराश्चान्ये मुण्डाः केचिदसंवृताः ॥
अस्नानं केचिदिच्छन्ति स्नानमप्यपरे जनाः
मन्यन्ते ब्राह्मणा देवा ब्रह्मज्ञास्तत्त्वदर्शिनः ॥ ६
आहारं केचिदिच्छन्ति केचिच्चानशने रताः ।
कर्म केचित्प्रशंसन्ति प्रशान्तिं चापरे जनाः ॥ ७
केचिन्मोक्षं प्रशंसन्ति केचिद्भोगान्पृथग्विधान् ।
धनानि केचिदिच्छन्ति निर्धनत्वमथापरे ।
उपास्य साधनं त्वेके नैतदस्तीति चापरे ॥
अहिंसानिरताश्चान्ये केचिद्धिंसापरायणाः ।
पुण्येन यशसा चान्ये नैतदस्तीति चापरे ॥ ९
सद्भावनिरताश्चान्ये केचित्संशयिते स्थिताः ।
दुःखादन्ये सुखादन्ये ध्यानमित्यपरे जनाः ॥ १०
यज्ञ इत्यपरे विप्राः प्रदानमिति चापरे ।
तपस्त्वन्ये प्रशंसन्ति स्वाध्यायमपरे जनाः ॥ ११
ज्ञानं संन्यासमित्येके स्वभावं भूतचिन्तकाः ।
सर्वमेके प्रशंसन्ति न सर्वमिति चापरे ॥ १२
एवं व्युत्थापिते धर्मे बहुधा विप्रबोधिते ।
निश्चयं नाधिगच्छामः श्रेयः किमिति सत्तम १३
इदं श्रेय इदं श्रेय इत्येवं व्युत्थितो जनः ।
यो हि यस्मिन्रतो धर्मे स तं पूजयते सदा ॥ १४
तेन नोऽविहिता प्रज्ञा मनश्च बहुलीकृतम् ।
एतदाख्यातमिच्छामः श्रेयः किमिति सत्तम १५
अतः परं तु यद्गुह्यं तद्भवान्वक्तुमर्हति ।
सत्वक्षेत्रज्ञयोश्चापि संबन्धः केन हेतुना ॥ १६
एवमुक्तः स तैर्विप्रैर्भगवाँल्लोकभावनः ।
तेभ्यः शशंस धर्मात्मा याथातथ्येन बुद्धिमान् ॥

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥

न कर्मणेति कुर्वन्नेवेह कर्माणीत्युभयविधश्रुतिदर्शनान्मुह्यामहे इति भाव. ॥ १० ॥ ऊर्ध्वं देहात् देहनाशादूर्ध्वमपि आत्मास्तीत्येके वदन्तीति संबन्धः । नैतदिति लोकायताः । सर्वं सशयितमिति स्याद्वादिनः सप्तभङ्गीनयज्ञाः । निःसशयमिति प्रातिस्विकं सर्वं तैर्थिकाः ॥ २ ॥ अनित्य सर्वं सृष्टिप्रलययुक्तमिति तार्किकादयः । नित्य प्रवाहनित्यमिति मीमासकाः । नास्तीति शून्यवादिनः । अस्ति परंतु क्षणिकमिति सौगताः ॥ ३ ॥ अस्नाब नैष्ठिकब्रह्मचर्यम् । स्नानं गार्हस्थ्यम् ॥ ६ ॥ साधनं ध्यानादिकमुपास्य कृत्वापि नैतदस्तीति पश्चात्सर्वमपवदन्ति ॥ ८ ॥ पुण्येन पुण्यार्थमेव यतेतेत्यन्ये । एतत्पुण्य नास्त्येवेत्यन्ये लोकायताः ॥ ९ ॥ संशयिते कृतमस्ति नवेति सदिग्धे पथि । दुःखात् दुःखनिवृत्त्यर्थं सुखात्सुखप्राप्त्यर्थं ध्यान कर्तव्यम् । निष्काममेवेत्यपरे ॥ १० ॥ सत्यमेके प्रशसन्ति असत्यमिति चापरे इति थ. पाठः ॥ ११ ॥ ज्ञान संन्यासं संन्यासैकप्राप्यम् । भूतचिन्तकाः वस्तुतत्त्वविचारकाः । स्वभाव साधनपौष्कल्यम् । साधनपौष्कल्यस्वाभाव्यादेव ज्ञानमुत्पद्यते आश्रमान्तरेपि न सन्यासमात्रेणेत्याहुः ॥ १२ ॥ अविहिता अशिक्षिता । आख्यात त्वयेति शेषः ॥ १५ ॥ एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥

## पञ्चाशोऽध्यायः ॥ ५० ॥

ब्रह्मणा महर्षीन्प्रति धर्मप्रदर्शनपूर्वकं तदनुष्ठानसहकृतज्ञानस्यैव दृष्टान्तप्रदर्शनेन परमपुरुषार्थसाधनत्वोक्तिः ॥ १ ॥ तथा क्षेत्रक्षेत्रज्ञसंबन्धकथनम् ॥ २ ॥ तथा पृथिव्यादिभूतगुणादिप्रतिपादनम् ॥ ३ ॥

ब्रह्मोवाच ।
हन्त वः संप्रवक्ष्यामि यन्मां पृच्छथ सत्तमाः ।
गुरुणा शिष्यमासाद्य यदुक्तं तन्निबोधत ॥ १
समस्तमिह तच्छ्रुत्वा सम्यगेवावधार्यताम् ।
अहिंसा सर्वभूतानामेतत्कृत्यतमं मतम् ॥ २
एतत्पदमनुद्विग्नं वरिष्ठं धर्मलक्षणम् ।
ज्ञानं निःश्रेय इत्याहुर्वृद्धा निश्चितदर्शिनः ।
तस्माज्ज्ञानेन शुद्धेन मुच्यते सर्वकिल्बिषैः ॥ ३
हिंसापराश्च ये केचिद्ये च नास्तिकवृत्तयः ।
लोभमोहसमायुक्तास्ते वै निरयगामिनः ॥ ४
आशीर्युक्तानि कर्माणि कुर्वते ये त्वतन्द्रिताः ।
तेऽस्मिंल्लोके प्रमोदन्ते जायमानाः पुनः पुनः ५
कुर्वते ये तु कर्माणि श्रद्दधाना विपश्चितः ।
अनाशीर्योगसंयुक्तास्ते धीराः साधुदर्शिनः ॥ ६
अतः परं प्रवक्ष्यामि सत्वक्षेत्रज्ञयोर्यथा ।
संयोगो विप्रयोगश्च तन्निबोधत सत्तमाः ॥ ७
विषयो विषयित्वं च संबन्धोऽयमिहोच्यते ।
विषयी पुरुषो नित्यं सत्वं च विषयः स्मृतः ॥ ८
व्याख्यातं पूर्वकल्पेन मशकोदुंबरं यथा ।
भुज्यमानं न जानीते नित्यं सत्वमचेतनम् ।
यस्त्वेवं तं विजानीते यो भुङ्क्ते यश्च भुज्यते ॥ ९
अनित्यं द्वन्द्वसंयुक्तं सत्वमाहुर्मनीषिणः ।
निर्द्वन्द्वो निष्कलो नित्यः क्षेत्रज्ञो निर्गुणात्मकः ॥
समः संज्ञानुगश्चैव स सर्वत्र व्यवस्थितः ।
न सज्जते सदा सत्वमापः पुष्करपर्णवत् ॥ ११
सर्वैरपि गुणैर्विद्वान्व्यतिषक्तो न लिप्यते ।
जलबिन्दुर्यथा लोलः पद्मिनीपत्रसंस्थितः ॥ १२
एवमेवाप्यसंयुक्तः पुरुषः स्यान्न संशयः ।
द्रव्यमात्रमभूत्सत्वं पुरुषस्येति निश्चयः ॥ १३
यथा द्रव्यं च कर्ता च संयोगोऽप्यनयोस्तथा ।
यथा प्रदीपमादाय कश्चित्तमसि गच्छति ।
तथा सत्त्वप्रदीपेन गच्छन्ति परमर्षयः ॥ १४
यावद्द्रव्यं गुणस्तावत्प्रदीपः संप्रकाशते ।
क्षीणे द्रव्ये गुणे ज्योतिरन्तर्धानाय गच्छति ॥ १५
व्यक्तः सत्वगुणस्त्वेवं पुरुषो द्रव्यमुच्यते ।
एतद्विप्रा विजानीत हन्त भूयो ब्रवीमि वः ॥ १६
सहस्रेणापि दुर्मेधा न बुद्धिमधिगच्छति ।
चतुर्थेनाप्यथांशेन बुद्धिमान्सुखमेधते ॥ १७
एवं धर्मस्य विज्ञेयं संसाधनमुपायतः ।
उपायज्ञो हि मेधावी सुखमत्यन्तमश्नुते ॥ १८
यथाऽध्वानमपाथेयः प्रपन्नो मनुजः क्वचित् ।
क्लेशेन याति महता विनश्यत्यन्तराऽपि च ॥ १९
तथा कर्मसु विज्ञेयं फलं भवति वा न वा ।
पुरुषस्यात्मनिःश्रेयः शुभाशुभनिदर्शनम् ॥ २०
यथा च दीर्घमध्वानं पद्भ्यामेव प्रपद्यते ।
अदृष्टपूर्वं सहसा तत्त्वदर्शनवर्जितः ॥ २१
तमेव च यथाऽध्वानं रथेनेहाशुगामिना ।
गच्छत्यश्वप्रयुक्तेन तथा बुद्धिमतां गतिः ॥ २२
ऊर्ध्वं पर्वतमारुह्य नान्ववेक्षेत भूतलम् ।
रथेन रथिनं पश्येत्क्लिश्यमानमचेतनम् ॥ २३
यावद्रथपथस्तावद्रथेन स तु गच्छति ।
क्षीणे रथपदे विद्वान्रथमुत्सृज्य गच्छति ॥ २४
एवं गच्छति मेधावी तत्त्वयोगविधानवित् ।
परिज्ञाय गुणज्ञश्च उत्तरादुत्तरोत्तरम् ॥ २५
यथाऽर्णवं महाघोरमप्लवः संप्रगाहते ।
बाहुभ्यामेव संमोहाद्वधं वाञ्छत्यसंशयम् ॥ २६
नावा चापि यथा प्राज्ञो विभागज्ञः स्वरित्रया ।
अश्रान्तः सलिलं गाहेच्छीघ्रं संतरते ह्रदम् ॥ २७
तीर्णो गच्छेत्परं पारं नावमुत्सृज्य निर्ममः ।
व्याख्यातं पूर्वकल्पेन यथा रथपदातिनोः ॥ २८
स्नेहात्संमोहमापन्नो नावि दाशो यथा तथा ।
ममत्वेनाभिभूतः संस्तत्रैव परिवर्तते ॥ २९

नावं न शक्यमारुह्य स्थले विपरिवर्तितुम् ।
तथैव रथमारुह्य नाप्सु चर्या विधीयते ॥ ३०
एवं कर्म कृतं चित्त विषयस्थं पृथक्पृथक् ।
यथा कर्म कृतं लोके तथा तदुपपद्यते ॥ ३१
यन्नैव गन्धि नो रस्यं न रूपस्पर्शशब्दवत् ।
मन्यते न मनो बुद्ध्या तत्प्रधानं प्रचक्षते ॥३२
तत्र प्रधानमव्यक्तमव्यक्तस्य गुणो महान् ।
महत्प्रधानभूतस्य गुणोऽहंकार एव च ॥ ३३
अहंकारात्तु संभूतो महाभूतकृतो गुणः ।
पृथक्त्वेन हि भूतानां विषया वै गुणाःस्मृताः ३४
बीजधर्म यथाऽव्यक्तं तथैव प्रसवात्मकम् ।
बीजधर्मा महानात्मा प्रसवश्चेति नः श्रुतम् ॥३५
बीजधर्मात्साहंकारात्प्रसवश्च पुनःपुनः ।
बीजप्रसवधर्माणि महाभूतानि पञ्च वै ॥ ३६
बीजधर्मिण इत्याहुः प्रसवं च प्रकुर्वते ।
विशेषाः पञ्चभूतानां तेषां वित्त विशेषणम् ॥३७
तत्रैकगुणमाकाशं द्विगुणो वायुरुच्यते ।
त्रिगुणं ज्योतिरित्याहुरापश्चापि चतुर्गुणाः ॥३८
पृथ्वी पञ्चगुणा ज्ञेया चरस्थावरसंकुला ।
सर्वभूतकरी देवी शुभाशुभनिदर्शिनी ॥ ३९
शब्दः स्पर्शस्तथा रूपं रसो गन्धश्च पञ्चमः
एते पञ्चगुणा भूमेर्विज्ञेया द्विजसत्तमाः ॥ ४०
पार्थिवश्च सदा गन्धो गन्धश्च बहुधा स्मृतः ।
तस्य गन्धस्य वक्ष्यामि विस्तरेण बहून्गुणान् ४१
इष्टश्चानिष्टगन्धश्च मधुरोऽम्लः कटुस्तथा ।
निर्हारी संहतः स्निग्धो रूक्षो विशद एव च ॥ ४२
एवं दशविधो ज्ञेयः पार्थिवो गन्ध इत्युत ।
शब्दः स्पर्शस्तथा रूपं द्रवश्चापां गुणाः स्मृताः ॥
रसज्ञानं तु वक्ष्यामि रसस्तु बहुधा स्मृतः ।
मधुरोऽम्लः कटुस्तिक्तः कषायो लवणस्तथा ॥४४
एवं षड्विधविस्तारो रसो वारिमयः स्मृतः ।
शब्दः स्पर्शस्तथा रूपं त्रिगुणं ज्योतिरुच्यते ॥४५
ज्योतिषश्च गुणो रूपं रूपं च बहुधा स्मृतम् ।
शुक्लं कृष्णं तथा रक्तं नीलं पीतारुणं तथा ॥ ४६
ह्रस्वं दीर्घं कृशं स्थूलं चतुरश्राणुवृत्तकम् ।
एवं द्वादशविस्तारं तेजसो रूपमुच्यते ॥ ४७
विज्ञेयं ब्राह्मणैर्वृद्धैर्धर्मज्ञैः सत्यवादिभिः ।
शब्दस्पर्शौ च विज्ञेयौ द्विगुणो वायुरुच्यते ॥ ४८
वायोश्चापि गुणः स्पर्शः स्पर्शश्च बहुधा स्मृतः ।
उष्णः शीतः सुखो दुःखः स्निग्धो विशद एव च ॥
कठिनश्चिक्कणः श्लक्ष्णः पिच्छिलो दारुणो मृदुः ।
एवं द्वादशविस्तारो वायव्यो गुण उच्यते ॥ ५०
विधिवद्ब्राह्मणैः सिद्धैर्धर्मज्ञैस्तत्त्वदर्शिभिः ॥ ५१
तत्रैकगुणमाकाशं शब्द इत्येव च स्मृतः ।
तस्य शब्दस्य वक्ष्यामि विस्तरेण बहून्गुणान् ॥५२
षड्जर्षभः सगान्धारो मध्यमः पञ्चमस्तथा ।
अतः परं तु विज्ञेयो निषादो धैवतस्तथा ।
इष्टश्चानिष्टशब्दश्च संहतः प्रतिभानवान् ॥ ५३
एवं बहुविधो ज्ञेयः शब्द आकाशसंभवः
आकाशमुत्तमं भूतमहंकारस्ततः परः ॥ ५४
अहंकारात्परा बुद्धिर्बुद्धेरात्मा ततः परः ।
तस्मात्तु परमव्यक्तमव्यक्तात्पुरुषः परः ॥ ५५
परावरज्ञो भूतानां विधिज्ञः सर्वकर्मणाम् ।
सर्वभूतात्मभूतात्मा यं प्राप्यानन्त्यमश्नुते ॥ ५६

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि पञ्चाशोऽध्यायः ॥ ५० ॥

## एकपञ्चाशोऽध्यायः ॥ ५१ ॥

कृष्णेनार्जुनंप्रति मुक्त्युपायप्रतिपादकगुरुशिष्यसंवादानुवादसमापनपूर्वकं स्वस्य निजनगरजिगमिषानिवेदनम् ॥ १ ॥ अर्जुनेन तंप्रति युधिष्ठिराभ्यनुज्ञानसंपादनपूर्वकगमनानुज्ञानम् ॥ २ ॥

ब्रह्मोवाच ।
भूतानामथ पञ्चानामथैषामीश्वरं मनः ।
नियमे च विसर्गे च भूतानां मन एव च ॥ १
अधिष्ठातृमनो नित्यं भूतानां महतां तथा ।

क्षेत्रज्ञश्च स उच्यते ॥ २
इन्द्रियाणि मनो युङ्क्ते सदश्वानिव सारथिः ।
इन्द्रियाणि मनो बुद्धिः क्षेत्रज्ञे युज्यते सदा ॥ ३
महदश्वसमायुक्तं बुद्धिसंयमनं रथम् ।
समारुह्य स भूतात्मा समन्तात्परिधावति ॥ ४
इन्द्रियग्रामसंयुक्तो मनःसारथिरेव च ।
बुद्धिसंयमनो नित्यं महान्ब्रह्ममयो रथः ॥ ५
एवं यो वेत्ति विद्वान्वै सदा ब्रह्ममयं रथम् ।
स धीरः सर्वलोकेषु न मोहमधिगच्छति ॥ ६
अव्यक्तादिविशेषान्तं सहस्थावरजङ्गमम् ।
सूर्यचन्द्रप्रभालोकं ग्रहनक्षत्रमण्डितम् ॥ ७
नदीपर्वतजालैश्च सर्वतः परिभूषितम् ।
विविधाभिस्तथा चाद्भिः सततं समलंकृतम् ॥ ८
अजितं सर्वभूतानां सर्वप्राणभृतां गतिः ।
एतद्ब्रह्मवनं नित्यं तस्मिंश्चरति क्षेत्रवित् ॥ ९
लोकेऽस्मिन्यानि सत्वानि त्रसानि स्थावराणि च ।
तान्येवाग्रे प्रलीयन्ते पश्चाद्भूतकृता गुणाः ।
गुणेभ्यः पञ्च भूतानि एष भूतसमुच्छ्रयः ॥ १०
देवा मनुष्या गन्धर्वाः पिशाचासुरराक्षसाः ।
सर्वे स्वभावतः सृष्टा न क्रियाभ्यो न कारणात् ११
एते विश्वसृजो विप्रा जायन्तीह पुनः पुनः ।
तेभ्यः प्रसूतास्तेष्वेव महाभूतेषु पञ्चसु ।
प्रलीयन्ते यथाकालमूर्मयः सागरे यथा ॥ १२
विश्वसृग्भ्यस्तु भूतेभ्यो महाभूतास्तु सर्वशः ।
भूतेभ्यश्चापि पञ्चभ्यो मुक्तो गच्छेत्परां गतिम् ॥
प्रजापतिरिदं सर्वं मनसैवासृजत्प्रभुः ।
तथैव देवानृषयस्तपसा प्रतिपेदिरे ॥ १४
तपसश्चानुपूर्व्येण फलमूलाशिनस्तथा ।
त्रैलोक्यं तपसा सिद्धाः पश्यन्तीह समाहिताः १५
औषधान्यगदादीनि नानाविद्याश्च सर्वशः ।
तपसैव प्रसिध्यन्ति तपोमूलं हि साधनम् ॥ १६
यद्दुरापं दुराम्नायं दुराधर्षं दुरन्वयम् ।
तत्सर्वं तपसा साध्यं तपो हि दुरतिक्रमम् ॥ १७
सुरापो ब्रह्महा स्तेनो भ्रूणहा गुरुतल्पगः ।
तपसैव सुतप्तेन मुच्यते किल्बिषात्ततः ॥ १८
मनुष्याः पितरो देवाः पशवो मृगपक्षिणः ।
यानि चान्यानि भूतानि चराणि स्थावराणि च १९
तपःपरायणा नित्यं सिध्यन्ते तपसा सदा ।
तथैव तपसा देवा महाभागा दिवं गताः ॥ २०
आशीर्युक्तानि कर्माणि कुर्वते ये त्वतन्द्रिताः ।
अहंकारसमायुक्तास्ते सकाशे प्रजापतेः ॥ २१
ध्यानयोगेन शुद्धेन निर्ममा निरहंकृताः ।
आप्नुवन्ति महात्मानो महान्तं लोकमुत्तमम् ॥ २२
ध्यानयोगमुपागम्य प्रसन्नमतयः सदा ।
सुखोपचयमव्यक्तं प्रविशन्त्यात्मवित्तमाः ॥ २३
ध्यानयोगादुपागम्य निर्ममा निरहंकृताः ।
अव्यक्तं प्रविशन्तीह महतां लोकमुत्तमम् ॥ २४
अव्यक्तादेव संभूताः समयज्ञा गताः पुनः ।
तमोरजोभ्यां निर्मुक्ताः सत्वमास्थाय केवलम् २५
निर्मुक्तः सर्वपापेभ्यः सर्वं त्यजति निष्कलः ।
क्षेत्रज्ञ इति तं विद्याद्यस्तं वेद स वेदवित् ॥ २६
चित्तं चित्तादुपागम्य मुनिरासीत संयतः ।
यच्चित्तस्तन्मना भूत्वा ग्राह्यमेतत्सनातनम् ॥ २७
अव्यक्तादिविशेषान्तमविद्यालक्षणं स्मृतम् ।
निबोधत तथा ज्ञानं गुणैर्लक्षणमित्युत ॥ २८
द्व्यक्षरस्तु भवेन्मृत्युस्त्र्यक्षरं ब्रह्म शाश्वतम् ।
ममेति च भवेन्मृत्युर्न ममेति च शाश्वतम् ॥ २९
कर्म केचित्प्रशंसन्ति मन्दबुद्धितया नराः ।
ये तु वृद्धा महात्मानो न प्रशंसन्ति कर्म ते ॥ ३०
कर्मणा जायते जन्तुर्मूर्तिमान्षोडशात्मकः ।
पुरुषं ग्रसते विद्या तद्ग्राह्यममृताशिनम् ॥ ३१
तस्मात्कर्मसु निःस्नेहा ये केचित्पारदर्शिनः ।
विद्यामयोऽयं पुरुषो न तु कर्ममयः स्मृतः ॥ ३२
य एवममृतं नित्यमग्राह्यं शश्वदक्षरम् ।
वश्यात्मानमसंश्लिष्टं यो वेद न मृतो भवेत् ॥ ३३
अपूर्वमकृतं नित्यं य एनमविचारिणम् ।

महाभूतानि गच्छतीति क. ट. थ. पाठः ॥ १३ ॥

विममो य. स पुरुष इति क. पाठः ॥ ३२ ॥

य एवं विन्देदात्मानमग्राह्यममृताशनम् ।
अग्राह्यो ह्यमृतो भवति स एभिः कारणैर्ध्रुवः ॥३४
आयोज्य सर्वसंस्कारान्संयम्यात्मानमात्मनि ।
स तद्ब्रह्म शुभं वेत्ति यस्माद्भूयो न विद्यते ॥ ३५
प्रसादे चैव सत्वस्य प्रसादं समवाप्नुयात् ।
लक्षणं हि प्रसादस्य यथा स्यात्स्वप्नदर्शनम् ॥ ३६
गतिरेषा तु मुक्तानां ये ज्ञानपरिनिष्ठिताः ।
प्रवृत्तयश्च याः सर्वाः पश्यन्ति परिणामजाः ॥ ३७
एषा गतिर्विरक्तानामेष धर्मः सनातनः ।
एषा ज्ञानवतां प्राप्तिरेतद्वृत्तमनिन्दितम् ॥ ३८
समेन सर्वभूतेषु निस्पृहेण निराशिषा ।
शक्या गतिरियं गन्तुं सर्वत्र समदर्शिना ॥ ३९
एतद्वः सर्वमाख्यातं मया विप्रर्षिसत्तमाः ।
एवमाचरत क्षिप्रं ततः सिद्धिमवाप्स्यथ ॥ ४०
गुरुरुवाच ।
इत्युक्तास्ते तु मुनयो गुरुणा ब्रह्मणा तथा ।
कृतवन्तो महात्मानस्ततो लोकमवाप्नुवन् ॥ ४१
त्वमप्येतन्महाभाग मयोक्तं ब्रह्मणो वचः ।
सम्यगाचर शुद्धात्मंस्ततः सिद्धिमवाप्स्यसि ॥ ४२
वासुदेव उवाच ।
इत्युक्तः स तदा शिष्यो गुरुणा धर्ममुत्तमम् ।
चकार सर्वं कौन्तेय ततो मोक्षमवाप्तवान् ॥ ४३
कृतकृत्यश्च स तदा शिष्यः कुरुकुलोद्वह ।
तत्पदं समनुप्राप्तो यत्र गत्वा न शोचति ॥ ४४

अर्जुन उवाच ।
को न्वसौ ब्राह्मणः कृष्ण कश्च शिष्यो जनार्दन ।
श्रोतव्यं चेन्मयैतद्वै तत्त्वमाचक्ष्व मे विभो ॥ ४५
वासुदेव उवाच ।
अहं गुरुर्महाबाहो मनः शिष्यं च विद्धि मे ।
त्वत्प्रीत्या गुह्यमेतच्च कथितं ते धनंजय ॥ ४६
मयि चेदस्ति ते प्रीतिर्नित्यं कुरुकुलोद्वह ।
अध्यात्ममेतच्छ्रुत्वा त्वं सम्यगाचर सुव्रत ॥ ४७
ततस्त्वं सम्यगाचीर्णे धर्मेऽस्मिन्नरिकर्शन ।
सर्वपापविनिर्मुक्तो मोक्षं प्राप्स्यसि केवलम् ॥ ४८
पूर्वमप्येतदेवोक्तं युद्धकाल उपस्थिते ।
मया तव महाबाहो तस्मादत्र मनः कुरु ॥ ४९
मया तु भरतश्रेष्ठ चिरदृष्टः पिता प्रभुः ।
तमहं द्रष्टुमिच्छामि संमते तव फल्गुन ॥ ५०
वैशंपायन उवाच ।
इत्युक्तवचनं कृष्णं प्रत्युवाच धनंजयः ।
'यदिष्टं कुरु सर्वेषामीश्वरोऽस्मान्प्रपालय ॥ ५१
नमस्ते सर्वलोकात्मन्नारायण परात्पर ।
मनोमलात्तपोशक्यं कर्म चाविद्यया हतम् ।
दानमप्यर्थदोषेण नाम तस्मात्कलौ स्मरेत् ॥ ५२
यदि गन्तुं कृता बुद्धिर्वासुदेव नमोस्तु ते ।'
गच्छावो नगरं कृष्ण गजसाह्वयमद्य वै ॥ ५३
समेत्य तत्र राजानं धर्मात्मानं युधिष्ठिरम् ।
समनुज्ञाप्य राजानं स्वां पुरीं यातुमर्हसि ॥ ५४

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि एकपञ्चाशोऽध्यायः ॥ ५१ ॥

## द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

अनुगीतोपदेशानन्तरं कृष्णार्जुनाभ्यां हास्तिनपुरंप्रति प्रस्थानम् ॥ १ ॥ तत्र मध्येमार्गमर्जुनेन कृष्णंप्रति स्तुतिपूर्वकं व्यासनारदादिभ्यः स्वस्य कृष्णयाथात्म्यावगतिनिवेदनम् ॥ २ ॥ ततः कृष्णेन सहार्जुनेन हास्तिनपुरमेत्य धृतराष्ट्रादिभ्यः पादाभिवादनम् ॥ ३ ॥ ततो युधिष्ठिराद्यनुमत्या सुभद्रामानीय सहसात्यकिना द्वारकांप्रति प्रस्थानम् ॥ ४ ॥

वैशंपायन उवाच ।
ततोऽभ्यनोदयत्कृष्णो युज्यतामिति दारुकम् ।
मुहूर्तादिव चाचष्ट युक्तमित्येव दारुकः ॥ १
तथैव चानुयात्राणि चोदयामास पाण्डवः ।

अपोह्य सर्वान्सकल्पान्संयतात्मानमात्मनीति थ. पाठः ॥३५॥
एकपञ्चाशोऽध्यायः ॥ ५१ ॥

रथ इति रथमिति चार्धद्वयेपि शेषः ॥ १ ॥

सन्नह्यध्वं प्रयास्यामो नगरं गजसाह्वयम् ॥ २
इत्युक्ताः सैनिकास्ते तु सज्जीभूता विशांपते ।
आचख्युः सज्जमित्येवं पार्थायामिततेजसे ॥ ३
ततस्तौ रथमास्थाय प्रयातौ कृष्णपाण्डवौ ।
विकुर्वाणौ कथाश्चित्राः प्रीयमाणौ विशांपते ॥४
रथस्थं तु महातेजा वासुदेवं धनञ्जयः ।
पुनरेवाब्रवीद्वाक्यमिदं भरतसत्तम ॥ ५
त्वत्प्रसादाज्जयः प्राप्तो राज्ञा वृष्णिकुलोद्वह ।
निहताः शत्रवश्चापि प्राप्तं राज्यमकण्टकम् ॥ ६
नाथवन्तश्च भवता पाण्डवा मधुसूदन ।
भवन्तं प्लवमासाद्य तीर्णाः स्म कुरुसागरम् ।
'भक्तांस्त्वमाश्रितानस्मान्पालयामुत्र चेह च ॥' ७
विश्वकर्मन्नमस्तेऽस्तु विश्वात्मन्विश्वसत्तम ।
तथा त्वामभिजानामि तथा चाहं भवान्मतः ॥८
त्वत्तेजःसंभवो नित्यं हुताशो मधुसूदन ।
रतिः क्रीडामयी तुभ्यं माया ते रोदसी विभो ॥९
त्वयि सर्वमिदं विश्वं यदिदं स्थाणु जङ्गमम् ।
त्वं हि सर्वं विकुरुषे भूतग्रामं चतुर्विधम् ॥ १०
पृथिवीं चान्तरिक्षं च तथा स्थावरजङ्गमम् ।
हसितं तेऽमला ज्योत्स्ना ऋतवश्चेन्द्रियाणि ते ११
प्राणो वायुः सततगः क्रोधो मृत्युः सनातनः ।
प्रसादे चापि पद्मा श्रीर्नित्यं त्वयि महामते ॥१२
रतिस्तुष्टिर्धृतिः क्षान्तिर्मतिः कान्तिश्चराचरम् ।
त्वमेवेह युगान्तेषु निधनं प्रोच्यसेऽनघ ॥ १३
सुदीर्घेणापि कालेन न ते शक्या गुणा मया ।
आत्मा च परमो वक्तुं नमस्ते नलिनेक्षण ॥ १४
विदितो मे सुदुर्धर्ष नारदाद्देवलात्तथा ।
कृष्णद्वैपायनाच्चैव तथा कुरुपितामहात् ॥ १५
त्वयि सर्वं समासक्तं त्वमेवैको जनेश्वरः ।
यच्चानुग्रहसंयुक्तमेतदुक्तं त्वयाऽनघ ॥ १६
एतत्सर्वमहं सम्यगाचरिष्ये जनार्दन ।
इदं चाद्भुतमत्यन्तं कृतमस्मत्प्रियेप्सया ॥ १७
यत्पापो निहतः सङ्ख्ये कौरव्यो धृतराष्ट्रजः ।
त्वया दग्धं हि तत्सैन्यं मया विजितमाहवे ॥१८
भवता तत्कृतं कर्म येनावाप्तो जयो मया ।
दुर्योधनस्य संग्रामे तव बुद्धिपराक्रमैः ॥ १९
कर्णस्य च वधोपायो यथावत्संप्रदर्शितः ।
सैन्धवस्य च पापस्य भूरिश्रवस एव च ॥ २०
'तस्मात्त्वमेव संचिन्त्य हितं कुरु यथा तथा ।'
अहं च प्रीयमाणेन त्वया देवकिनन्दन ।
यदुक्तस्तत्करिष्यामि न हि मेऽत्र विचारणा ॥२१
राजानं च समासाद्य धर्मात्मानं युधिष्ठिरम् ।
चोदयिष्यामि धर्मज्ञ गमनार्थं तवानघ ॥ २२
आहतं हि ममैतच्चे द्वारकागमनं प्रभो ।
अचिरादेव द्रष्टा त्वं मातुलं मे जनार्दन ।
बलदेवं च दुर्धर्षं तथाऽन्यान्वृष्णिपुङ्गवान् ॥२३
एवं संभाषमाणौ तौ प्राप्तौ वारणसाह्वयम् ।
तथा विविशतुश्चोभौ संप्रहृष्टनराकुलम् ॥ २४
तौ गत्वा धृतराष्ट्रस्य गृहं शक्रगृहोपमम् ।
ददृशाते महाराज धृतराष्ट्रं जनेश्वरम् ॥ २५
विदुरं च महाबुद्धिं राजानं च युधिष्ठिरम् ।
भीमसेनं च दुर्धर्षं माद्रीपुत्रौ च पाण्डवौ ॥ २६
धृतराष्ट्रमुपासीनं युयुत्सुं चापराजितम् ।
गान्धारीं च महाप्रज्ञां पृथां कृष्णां च भामिनीम् ॥
सुभद्राद्याश्च ताः सर्वा भरतानां स्त्रियस्तथा ।
ददृशाते स्त्रियः सर्वा गान्धारीपरिचारिकाः ॥२८
ततः समेत्य राजानं धृतराष्ट्रमरिंदमौ ।
निवेद्य नामधेये स्वे तस्य पादावगृह्णताम् ॥ २९
गान्धार्याश्च पृथायाश्च धर्मराजस्य चैव हि ।
भीमस्य च महात्मानौ तथा पादावगृह्णताम् ३०
क्षत्तारं चापि संगृह्य पृष्ट्वा कुशलमव्ययम् ।
'परिष्वज्य महात्मानं वैश्यापुत्रं महारथम् ।'
तैः सार्धं नृपतिं वृद्धं ततस्तौ पर्युपासताम् ॥ ३१
ततो निशि महाराजो धृतराष्ट्रः कुरूद्वहान् ।
जनार्दनं च मेधावी व्यसर्जयत वै गृहान् ॥ ३२
तेऽनुज्ञाता नृपतिना ययुः स्वं स्वं निवेशनम् ।

---

अनुग्रहः एतत्सम्यगाचरेत्याज्ञारूपः ॥ १६ ॥

द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

धनंजयगृहानेव ययौ कृष्णस्तु वीर्यवान् ॥ ३३
तत्रार्चितो यथान्यायं सर्वकामैरुपस्थितः ।
कृष्णः सुष्वाप मेधावी धनंजयसहायवान् ॥ ३४
प्रभातायां तु शर्वर्यां कृत्वा पौर्वाह्णिकीं क्रियाम् ।
धर्मराजस्य भवनं जग्मतुः परमार्चितौ ।
यत्रास्ते स सहामात्यो धर्मराजो महाबलः ॥ ३५
तौ प्रविश्य महात्मानौ तद्गृहं परमार्चितम् ।
धर्मराजं ददृशतुर्देवराजमिवाश्विनौ ॥ ३६
समासाद्य तु राजानं वार्ष्णेयकुरुपुङ्गवौ ।
निषीदतुरनुज्ञातौ प्रीयमाणेन तेन तौ ॥ ३७
ततः स राजा मेधावी विवक्षू प्रेक्ष्य तावुभौ ।
प्रोवाच वदतां श्रेष्ठो वचनं राजसत्तमः ॥ ३८
विवक्षू हि युवां मन्ये वीरौ यदुकुरूद्वहौ ।
ब्रूतं कर्तास्मि सर्वं वां नचिरान्मा विचार्यताम् ३९
इत्युक्तः फल्गुनस्तत्र धर्मराजानमब्रवीत् ।
विनीतवदुपागम्य वाक्यं वाक्यविशारदः ॥ ४०
अयं चिरोषितो राजन्वासुदेवः प्रतापवान् ।
भवन्तं समनुज्ञाप्य पितरं द्रष्टुमिच्छति ॥ ४१
स गच्छेदभ्यनुज्ञातो भवता यदि मन्यसे ।
आनर्तनगरीं वीरस्तदनुज्ञातुमर्हसि ॥ ४२
युधिष्ठिर उवाच ।
पुण्डरीकाक्ष भद्रं ते गच्छ त्वं मधुसूदन ।
पुरीं द्वारवतीमद्य द्रष्टुं शूरसुतं प्रभो ॥ ४३
रोचते मे महाबाहो गमनं तव केशव ।
मातुलश्चिरदृष्टो मे त्वया देवी च देवकी ॥ ४४
समेत्य मातुलं गत्वा बलदेवं च मानद ।
पूजयेथा महाप्राज्ञ मद्वाक्येन यथाऽर्हतः ॥ ४५
स्मरेथाश्चापि मां नित्यं भीमं च बलिनां वरम् ।
फाल्गुनं सहदेवं च नकुलं चैव मानद ॥ ४६
आनर्तानवलोक्य त्वं पितरं च महाभुज ।
वृष्णींश्च पुनरागच्छेर्हयमेधे ममानघ ॥ ४७
स गच्छ रत्नान्यादाय विविधानि वसूनि च ।
यच्चाप्यन्यन्मनोज्ञं ते तदप्यादत्स्व सात्वत ॥ ४८
इयं च वसुधा कृत्स्ना प्रसादात्तव केशव ।
अस्मानुपागता वीर निहताश्चापि शत्रवः ॥ ४९
स्वर्गापवर्गविषयं त्वद्भक्तानां न दुर्लभम् ।
संसारगहने चेद्धपापाग्निप्रशमाम्बुद ॥' ५०
एवं ब्रुवति कौरव्ये धर्मराजे युधिष्ठिरे ।
वासुदेवो वरः पुंसामिदं वचनमब्रवीत् ॥ ५१
तवैव रत्नानि धनं च केवलं
धरा तु कृत्स्ना तु महाभुजाद्य वै ।
यदस्ति चान्यद्द्रविणं गृहे मम
त्वमेव तस्येश्वर नित्यमीश्वरः ॥ ५२
तथेत्यथोक्तः प्रतिपूजितस्तदा
गदाग्रजो धर्मसुतेन वीर्यवान् ।
पितृष्वसारं त्ववदद्यथाविधि
संपूजितश्चाप्यगमत्प्रदक्षिणम् ॥ ५३
तया स सम्यक् प्रतिनन्दितस्तत-
स्तथैव सर्वैर्विदुरादिभिस्तथा ।
विनिर्ययौ नागपुराद्गदाग्रजो
रथेन दिव्येन चतुर्भुजः स्वयम् ॥ ५४
रथे सुभद्रामधिरोप्य भामिनीं
युधिष्ठिरस्यानुमते जनार्दनः ।
पितृष्वसुश्चापि तथा महाभुजो
विनिर्ययौ पौरजनाभिसंवृतः ॥ ५५
तमन्वयाद्वानरवर्यकेतनः
ससात्यकिर्माद्रवतीसुतावपि ।
अगाधबुद्धिर्विदुरश्च माधवं
स्वयं च भीमो गजराजविक्रमः ॥ ५६
निवर्तयित्वा कुरुराष्ट्रवर्धनां-
स्ततः स सर्वान्विदुरं च वीर्यवान् ।
जनार्दनो दारुकमाह सत्वरः
प्रचोदयाश्वानिति सात्यकिं तथा ॥ ५७
ततो ययौ शत्रुगणप्रमर्दनः
शिनिप्रवीरानुगतो जनार्दनः ।
यथा निहत्यारिगणं शतक्रतु-
र्दिवं तथाऽऽनर्तपुरीं प्रतापवान् ॥ ५८

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

## त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

कुरुपुराद्द्वारकां गच्छता कृष्णेन मध्येमार्गं दृष्टेनोदङ्केन सह संवादः ॥ १ ॥ तथा कौरवादिविनाशे स्वोपेक्षाया हेतुत्वधिया स्वंप्रति शापदानोद्यतोदङ्कपरिसान्त्वनाय तंप्रति तत्वकथनोपक्रमः ॥ २ ॥

वैशंपायन उवाच
तथा प्रयान्तं वार्ष्णेयं द्वारकां भरतर्षभाः ।
परिष्वज्य न्यवर्तन्त सानुयात्राः परंतपाः ॥ १
पुनःपुनश्च वार्ष्णेयं पर्यष्वजत फल्गुनः ।
आचक्षुर्विषयाच्चैनं स ददर्श पुनःपुनः ॥ २
कृच्छ्रेणैव तु तां पार्थो गोविन्दे विनिवेशिताम् ।
संजहार ततो दृष्टिं कृष्णश्चाप्यपराजितः ॥ ३
तस्य प्रयाणे यान्यासन्निमित्तानि महात्मनः ।
बहून्यद्भुतरूपाणि तानि मे गदतः शृणु ॥ ४
वायुर्वेगेन महता रथस्य पुरतो ववौ ।
कुर्वन्निःशर्करं मार्गं विरजस्कमकण्टकम् ॥ ५
ववर्ष वासवश्चैव तोयं शुचि सुगन्धि च ।
दिव्यानि चैव पुष्पाणि पुरतः शार्ङ्गधन्वनः ॥६
स प्रयातो महाबाहुः समेषु मरुधन्वसु ।
ददर्शाथ मुनिश्रेष्ठमुदङ्कममितौजसम् ॥ ७
'महर्षिं सिद्धतपसं सर्वलोकान्तविश्रुतम् ।'
स तं संपूज्य तेजस्वी मुनिं पृथुललोचनः ।
पूजितस्तेन च तदा पर्यपृच्छदनामयम् ॥ ८
स पृष्टः कुशलं तेन संपूज्य मधुसूदनम् ।
उदङ्को ब्राह्मणश्रेष्ठस्ततः पप्रच्छ माधवम् ॥ ९
कच्चिच्छौरे त्वया गत्वा कुरुपाण्डवसद्म तत् ।
कृतं सौभ्रात्रमचलं तन्मे व्याख्यातुमर्हसि ॥१०
अपि सन्धाय तान्वीरानुपावृत्तोसि केशव ।
संबन्धिनः स्वदयितान्सततं वृष्णिपुङ्गव ॥ ११
कच्चित्पाण्डुसुताः पञ्च धृतराष्ट्रस्य चात्मजाः ।
लोकेषु विहरिष्यन्ति त्वया सह परंतप ॥ १२
स्वराष्ट्रे ते च राजानः कच्चित्प्राप्स्यन्ति वै सुखम् ।
कौरवेषु प्रशान्तेषु त्वया नाथेन केशव ॥ १३
या मे संभावना तात त्वयि नित्यमवर्तत ।
अपि सा सफला तात कृता ते भरतान्प्रति ॥१४
श्रीभगवानुवाच ।
कृतो यत्नो मया पूर्वं सौशाम्ये कौरवान्प्रति ।
नाशक्यन्त यदा साम्ये ते स्थापयितुमञ्जसा
ततस्ते निधनं प्राप्ताः सर्वे ससुतबान्धवाः ॥ १५
न दिष्टमप्यतिक्रान्तुं शक्यं बुद्ध्या बलेन वा ।
महर्षे विदितं भूयः सर्वमेतत्तवानघ ॥ १६
तेऽत्यक्रामन्मतिं मह्यं भीष्मस्य विदुरस्य च
ततो यमक्षयं जग्मुः समासाद्येतरेतरम् ॥ १७
पञ्चैव पाण्डवाः शिष्टा हतमित्रा हतात्मजाः ।
धार्तराष्ट्राश्च निहताः सर्वे ससुतबान्धवाः ॥ १८
इत्युक्तवचने कृष्णे भृशं क्रोधसमन्वितः ।
उदङ्क इत्युवाचैनं रोषादुत्फुल्ललोचनः ॥ १९
यस्माच्छक्तेन ते कृष्ण न त्राताः कुरुपुङ्गवाः ।
संबन्धिनः प्रियास्तस्माच्छप्स्येऽहं त्वामसंशयम् २०
न च ते प्रसभं यस्मात्ते निगृह्य निवारिताः ।
तस्मान्मन्युपरीतस्त्वां शप्स्यामि मधुसूदन ॥२१
त्वया शक्तेन हि सता मिथ्याचारेण माधव ।
ते परीताः कुरुश्रेष्ठा नश्यन्तः स ह्युपेक्षिताः ॥२२
वासुदेव उवाच ।
शृणु मे विस्तरेणेदं यद्वक्ष्ये भृगुनन्दन ।
गृहाणानुनयं चापि तपस्वी ह्यसि भार्गवम् ॥२३
श्रुत्वा च मे तदध्यात्मं मुञ्चेथाः शापमद्य वै ।
न च मां तपसाऽल्पेन शक्तोऽभिभवितुं पुमान् २४
न च ते तपसो नाशमिच्छामि तपतां वर ।
तपस्ते सुमहद्दीप्तं गुरवश्चापि तोषिताः ॥ २५
कौमारं ब्रह्मचर्यं ते जानामि द्विजसत्तम ।
दुःखार्जितस्य तपसस्तस्मान्नेच्छामि तेऽव्ययम् २६

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

---

सौशाम्ये सौरस्ये ॥ १५ ॥ परीताः परितः प्राप्ता. ॥ २२ ॥ अनुनयं शिक्षाम् ॥ २३ ॥ मे मत्तः ॥ २४ ॥

त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

## चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

कृष्णेनोदङ्कंप्रति स्वमाहात्म्यप्रकाशनपूर्वकं कुरूणां स्ववचनातिक्रमणादिरूपस्वापराधेनैव निधनोक्तिः ॥ १ ॥

उदङ्क उवाच ।
ब्रूहि केशव तत्त्वेन त्वमध्यात्ममनिन्दितम् ।
श्रुत्वा श्रेयोऽभिधास्यामि शापं वा ते जनार्दन १
वासुदेव उवाच ।
तमो रजश्च सत्वं च विद्धि भावान्मदाश्रयान् ।
'स्थितिसृष्टिलयाध्यक्षो विष्णुब्रह्मेशसंज्ञितः ॥ २
कदाचित्तमसा रुद्रो विष्णुः सत्त्वगुणे स्थितः ।
रजस्यपि तथा ब्रह्मा स्वगुणान्यगुणानुभौ ॥ ३
प्रणवात्मा च शब्दादींस्त्रिगुणात्मा चराचरम् ।'
तथा रुद्रान्वसून्वाऽपि विद्धि मत्प्रभवान्द्विज ॥४
मयि सर्वाणि भूतानि सर्वभूतेषु चाप्यहम् ।
स्थित इत्यभिजानीहि मा ते भूदत्र संशयः ॥ ५
तथा दैत्यगणान्सर्वान्यक्षगन्धर्वराक्षसान् ।
नागानप्सरसश्चैव विद्धि मत्प्रभवान्द्विज ॥ ६
सदसच्चैव यत्प्राहुरव्यक्तं व्यक्तमेव च ।
अक्षरं च क्षरं चैव सर्वमेतन्मदात्मकम् ॥ ७
ये चाश्रमेषु वै धर्माश्चतुर्षु विहिता मुने ।
वैदिकानि च कर्माणि विद्धि सर्वं मदात्मकम् ॥८
असच्च सच्चैव च यद्विश्वं सदसतः परम् ।
ततः परतरं नास्ति देवदेवात्सनातनात् ॥ ९
ओंकारप्रभवान्वेदान्विद्धि मां त्वं भृगूद्वह ।
यूपं सोमं चरुं होमं त्रिदशाप्यायनं मखे ॥ १०
होतारमपि हव्यं च विद्धि मां भृगुनन्दन ।
अध्वर्युः कल्पकृच्चापि हविः परमसंस्कृतम् ॥११
उद्गाता चापि मां स्तौति गीतघोषैर्महाध्वरे ।
प्रायश्चित्तेषु मां ब्रह्मञ्शान्तिमङ्गलवाचकाः ॥१२
स्तुवन्ति विश्वकर्माणं सततं द्विजसत्तम ।
मम विद्धि सुतं धर्ममग्रजं द्विजसत्तम ॥ १३
मानसं दयितं विप्र सर्वभूतदयात्मकम् ।
तत्राहं वर्तमानैश्च निवृत्तैश्चैव मानवैः ॥ १४
बह्वीः संसरमाणो वै योनीर्वर्तामि सत्तम ।
लोकसंरक्षणार्थाय धर्मसंस्थापनाय च ॥ १५
तैस्तैर्वेषैश्च रूपैश्च त्रिषु लोकेषु भार्गव ।
अहं विष्णुरहं ब्रह्मा शक्रोऽथ प्रभवाप्ययः ॥१६
भूतग्रामस्य सर्वस्य स्रष्टा संहार एव च ।
अधर्मे वर्तमानानां सर्वेषामहमच्युतः ॥ १७
धर्मस्य सेतुं बध्नामि चलिते चलिते युगे ।
तास्ता योनीः प्रविश्याहं प्रजानां हितकाम्यया १८
यदा त्वहं देवयोनौ वर्तामि भृगुनन्दन ।
तदाऽहं देववत्सर्वमाचरामि न संशयः ॥ १९
यदा गन्धर्वयोनौ तु वर्तामि भृगुनन्दन ।
तदा गन्धर्ववच्चेष्टाः सर्वाश्चेष्टामि भार्गव ॥ २०
नागयोनौ यदा चैव तदा वर्तामि नागवत् ।
यक्षराक्षसयोन्योस्तु यथावद्विचराम्यहम् ॥ २१
मानुष्ये वर्तमाने तु कृपणं याचिता मया ।
न च ते जातसंमोहा वचोऽगृह्णन्त मोहिताः ॥२२
भयं च महदुद्दिश्य त्रासिताः कुरवो मया ।
क्रुद्धेन भूत्वा तु पुनर्यथावदनुदर्शिताः ॥ २३
तेऽधर्मेणेह संयुक्ताः परीताः कालधर्मणा ।
धर्मेण निहता युद्धे गताः स्वर्गं न संशयः ॥२४
लोकेषु पाण्डवाश्चैव गताः ख्यातिं द्विजोत्तम ।
एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ॥२५

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

---

दैवतानि च कर्माणि विद्धि सर्वान्गुणान्ममेति ट. थ. पाठ. ॥ ८ ॥ ओंकारप्रमुखानिति झ. पाठः ॥ १० ॥ अध्वर्युः कल्पन इति ट. थ. पाठः ॥ ११ ॥ गतमोक्षे महाध्वरे इति ट. थ. पाठः ॥ १२ ॥ सर्वभूतगुणात्मकमिति क. ट. थ. पाठः ॥ १४ ॥ पुनस्त्वहं देवयोनाविति ट. थ. पाठः ॥ १९ ॥ चतुष्पञ्चाशोऽध्यायः ॥ ५४ ॥

## पञ्चपञ्चाशोऽध्यायः　५५

कृष्णेनोदङ्काय विश्वरूपप्रदर्शनपूर्वकं पिपासाकाले जललाभरूपवरदानम् ॥ १ ॥ कृष्णेनोदङ्कायामृतदानं चोदितेनेन्द्रेण कदाचिद्वनमध्ये पिपासुमुदङ्कंप्रति चण्डालवेषेण जलस्वीकारप्रार्थने उदङ्केन चण्डालत्वबुद्ध्या तदधिक्षेपः ॥ २ ॥ पश्चात्तस्य तिरोधानेन परितप्यन्तमुदङ्कंप्रति तत्र सनिहितेन कृष्णेनेन्द्रकृतवञ्चनानिवेदनपूर्वकं मरुप्रदेशे जललाभरूपवरदानम् ॥ ३ ॥

उदङ्क उवाच ।
अभिजानामि जगतः कर्तारं त्वां जनार्दन ।
नूनं भवत्प्रसादोऽयमिति मे नास्ति संशयः ॥ १
चित्तं च सुप्रसन्नं मे त्वद्भावगतमच्युत ।
विनिवृत्तश्च मे कोप इति विद्धि परंतप ॥ २
यदि त्वनुग्रहं कंचित्त्वत्तोऽर्हामि जनार्दन ।
द्रष्टुमिच्छामि ते रूपं वैष्णवं तन्निदर्शय ॥ ३
वैशंपायन उवाच ।
ततः स तस्मै प्रीतात्मा दर्शयामास तद्वपुः ।
शाश्वतं वैष्णवं धीमान्ददृशे यद्धनंजयः ॥ ४
स ददर्श महात्मानं विश्वरूपं महाभुजम् ।
सहस्रसूर्यप्रतिमं दीप्तिमत्पावकोपमम् ।
सर्वमाकाशमावृत्य तिष्ठन्तं सर्वतोमुखम् ॥ ५
तद्दृष्ट्वा परमं रूपं विष्णोर्वैष्णवमद्भुतम् ।
विस्मयं च ययौ विप्रस्तं दृष्ट्वा परमेश्वरम् ॥ ६
उदङ्क उवाच ।
नमोनमस्ते सर्वात्मन्नारायण परात्मक ।
परमात्मन्पद्मनाभ पुण्डरीकाक्ष माधव ॥ ७
हिरण्यगर्भरूपाय संसारोत्तारणाय च ।
पुरुषाय पुराणाय शान्तश्यामाय ते नमः ॥ ८
अविद्यातिमिरादित्यं भवव्याधिमहौषधिम् ।
संसारार्णवसारं त्वां प्रणमामि गतिर्भव ॥ ९
सर्ववेदैकवेद्याय सर्ववेदमयाय च ।
वासुदेवाय नित्याय नमो भक्तप्रियाय ते ॥ १०
दयया दुःखमोहान्मां समुद्धर्तुमिहार्हसि ।
कर्मभिर्बहुभिः पापैर्बद्धं पाहि जनार्दन ॥ ११
विश्वकर्मन्नमस्तेऽस्तु विश्वात्मन्विश्वसंभव ।
पद्भ्यां ते पृथिवी व्याप्ता शिरसा चावृतं नभः ॥ १२
द्यावापृथिव्योर्यन्मध्यं जठरेण तवावृतम् ।
भुजाभ्यामावृताश्चाशास्त्वमिदं सर्वमच्युत ॥ १३
संहरस्व पुनर्देव रूपमक्षय्यमुत्तमम् ।
पुनस्त्वां स्वेन रूपेण द्रष्टुमिच्छामि शाश्वतम् ॥ १४
वैशंपायन उवाच ।
तमुवाच प्रसन्नात्मा गोविन्दो जनमेजय ।
वरं वृणीष्वेति तदा तमुदङ्कोऽब्रवीदिदम् ॥ १५
पर्याप्त एष एवाद्य वरस्त्वत्तो महाद्युते ।
यत्ते रूपमिदं कृष्ण पश्यामि प्रभवाप्ययम् ॥ १६
तमब्रवीत्पुनः कृष्णो मा त्वमत्र विचारय ।
अवश्यमेतत्कर्तव्यममोघं दर्शनं मम ॥ १७
उदङ्क उवाच ।
अवश्यं करणीयं च यद्येतन्मन्यसे विभो ।
तोयमिच्छामि यत्रेष्टं मरुष्वेतद्धि दुर्लभम् ॥ १८
ततः संहृत्य तत्तेजः प्रोवाचोदङ्कमीश्वरः ।
एष्टव्ये सति चिन्त्योऽहमित्युक्त्वा द्वारकां ययौ ॥ १९
ततः कदाचिद्भगवानुदङ्कस्तोयकाङ्क्षया ।
तृषितः परिचक्राम मरौ सस्मार चाच्युतम् ॥ २०
ततो दिग्वाससं धीमान्मातङ्गं मलपङ्किनम् ।
अपश्यत मरौ तस्मिञ्श्वयूथपरिवारितम् ॥ २१
भीषणं बद्धनिस्त्रिंशं बाणकार्मुकधारिणम् ।
तस्याधःस्रोतसोऽपश्यद्वारि भूरि द्विजोत्तमः ॥ २२
स्मरन्नेव च तं प्राह मातङ्गः प्रहसन्निव ।
एह्युदङ्क प्रतीच्छस्व मत्तो वारि भृगूद्वह ।
कृपा हि मे सुमहती त्वां दृष्ट्वा तृट्समाश्रितम् २३
इत्युक्तस्तेन स मुनिस्तत्तोयं नाभ्यनन्दत ।
चिक्षेप च स तं धीमान्वाग्भिरुग्राभिरच्युतम् २४
पुनःपुनश्च मातङ्गः पिबस्वेति तमब्रवीत् ।

ते रूपमैश्वरमिति झ. पाठः ॥ ३ ॥ एष्टव्ये जलेऽपेक्षिते सति ॥ १९ ॥ मातङ्गं चण्डालविशेषम् ॥ २१ ॥ अधः पाददेशे स्रोतसो इतर्वारीति संबन्धः । ततः शङ्कितमानस इति क. ट. थ. पाठः ॥ २२ ॥ चिक्षेप निन्दितवान् ॥ २४ ॥

न चापिवत्स सक्रोधः क्षुभितेनान्तरात्मना॥२५
स तथा निश्चयात्तेन प्रत्याख्यातो महात्मना ।
श्वभिः सह महाराज तत्रैवान्तरधीयत ॥ २६
उदङ्कस्तं तथा दृष्ट्वा ततो व्रीडितमानसः ।
मेने प्रलब्धमात्मानं कृष्णेनामित्रघातिना ॥२७
अथ तेनैव मार्गेण शङ्खचक्रगदाधरः ।
आजगाम महाबाहुरुदङ्कश्चैनमब्रवीत् ॥ २८
न युक्तं तादृशं दातुं त्वया पुरुषसत्तम ।
सलिलं विप्रमुख्येभ्यो मातङ्गस्रोतसा विभो ॥२९
इत्युक्तवचनं तं तु महाबुद्धिर्जनार्दनः ।
उदङ्कं श्लक्ष्णया वाचा सान्त्वयन्निदमब्रवीत्॥३०
यादृशेनेह रूपेण योग्यं दातुं धृतेन वै ।
तादृशं खलु ते दत्तं यच्च त्वं नावबुध्यथाः ॥३१
मया त्वदर्थमुक्तो वै वज्रपाणिः पुरंदरः ।
उदङ्कायामृतं देहि तोयरूपमिति प्रभुः ॥ ३२
स मामुवाच देवेन्द्र न मर्त्योऽमर्त्यतां व्रजेत् ।
अन्यमस्मै वरं देहीत्यसकृद्भृगुनन्दन ॥ ३३
अमृतं देयमित्येव मयोक्तः स शचीपतिः ।
स मां प्रसाद्य देवेन्द्रः पुनरेवेदमब्रवीत् ॥ ३४
यदि देयमवश्यं वै मातङ्गोऽहं महामते ।
भूत्वाऽमृतं प्रदास्यामि भार्गवाय महात्मने ॥ ३५
यद्येवं प्रतिगृह्णाति भार्गवोऽमृतमद्य वै ।
प्रदातुमेष गच्छामि भार्गवस्यामृतं विभो ।
प्रत्याख्यातस्त्वहं तेन दास्यामि न कथंचन ॥३६
स तथा समयं कृत्वा तेन रूपेण वासवः ।
उपस्थितस्त्वया चापि प्रत्याख्यातोऽमृतं ददत् ।
चाण्डालरूपी भगवान्सुमहांस्ते व्यतिक्रमः॥३७
यत्तु शक्यं मया कर्तुं भूय एव तवेप्सितम् ।
तोयेप्सां तव दुर्धर्षां करिष्ये सफलामहम् ॥३८
येष्वहःसु च ते ब्रह्मन्सलिलेप्सा भविष्यति ।
तदा मरौ भविष्यन्ति जलपूर्णाः पयोधराः ॥३९
रसवच्च प्रदास्यन्ति तोयं ते भृगुनन्दन ।
उदङ्कमेघा इत्युक्ताः ख्यातिं यास्यन्ति चापि ते४०
इत्युक्तः प्रीतिमान्विप्रः कृष्णेन स बभूव ह ।
अद्याप्युदङ्कमेघाश्च मरौ वर्षन्ति भारत ॥ ४१

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

## षट्पञ्चाशोऽध्यायः ॥ ५६ ॥

वैशंपायनेन जनमेजयंप्रत्युदङ्कोपाख्यानकथनारम्भः ॥ १ ॥ उदङ्ककृतपरिचर्याविशेषतुष्टेन गौतमेन तस्मै प्रीत्यतिशयेन चिरादपि गृहगमनायाभ्यननुज्ञानम् ॥ २ ॥ कदाचन गुरुशासनेन काष्ठभारमाहृतवतोदङ्केन काष्ठलग्नजरापलितनिजकेशावलोकनेन परिदेवनम् ॥ ३ ॥ ततस्तदवोधितनिजरोदनहेतुना गुरुणा तस्मै निजतनयाप्रतिपादनम् ॥ ४ ॥ ततस्तेन गुरुपत्नीनिदेशेन कुण्डलयाचनाय सौदासंप्रति गमनम् ॥ ५ ॥

जनमेजय उवाच ।
उदङ्कः केन तपसा संयुक्तो वै महामनाः ।
यः शापं दातुकामोऽभूद्विष्णवे प्रभविष्णवे ॥ १
वैशंपायन उवाच ।
उदङ्को महता युक्तस्तपसा जनमेजय ।
गुरुभक्तः स तेजस्वी नान्यत्किंचिदपूजयत् ॥ २
सर्वेषामृषिपुत्राणामेष आसीन्मनोरथः ।
औदङ्कीं गुरुवृत्तिं वै प्राप्नुयामेति भारत ॥ ३
गौतमस्य तु शिष्याणां बहूनां जनमेजय ।
उदङ्केऽभ्यधिका प्रीतिः स्नेहश्चैवाभवत्तदा ॥ ४
स तस्य दमशौचाभ्यां विक्रान्तेन च कर्मणा ।
सम्यक्चैवोपचारेण गौतमः प्रीतिमानभूत् ॥ ५
अथ शिष्यसहस्राणि समनुज्ञाय गौतमः ।
उदङ्कं परया प्रीत्या नाभ्यनुज्ञातुमैच्छत ॥ ६
तं क्रमेण जरा तात प्रतिपेदे महामुनिम् ।
न चान्वबुध्यत तदा स मुनिर्गुरुवत्सलः ॥ ७

प्रलब्धं वञ्चितम् ॥ २७ ॥

ततः कदाचिद्राजेन्द्र काष्ठान्यानयितुं ययौ ।
उदङ्कः काष्ठभारं च महान्तं समुपानयत् ॥ ८
स तद्भाराभिभूतात्मा काष्ठभारमरिंदम ।
निचिक्षेप क्षितौ राजन्परिश्रान्तो बुभुक्षितः ॥ ९
तस्य काष्ठे विलग्नाऽभूज्जटा रूप्यसमप्रभा ।
ततः काष्ठैः सह तदा पपात धरणीतलम् ॥ १०
ततः स भारनिष्पिष्टः क्षुधाविष्टश्च भारत ।
दृष्ट्वा तां वयसोऽवस्थां रुरोदार्तस्वरं तदा ॥ ११
ततो गुरुसुता तस्य पद्मपत्रनिभानना ।
जग्राहाश्रूणि सुश्रोणी करेण पृथुलोचना ।
पितुर्नियोगाद्धर्मज्ञा शिरसाऽवनता तदा ॥ १२
तस्या निपेततुर्दग्धौ करौ तैरश्रुबिन्दुभिः ।
न हि तानश्रुपातांस्तु शक्ता धारयितुं मही ।
गौतमस्त्वब्रवीद्विप्रमुदङ्कं प्रीतमानसः ॥ १३
कस्मात्तात तवाद्येह शोकोत्तरमिदं मनः ।
स स्वैरं ब्रूहि विप्रर्षे श्रोतुमिच्छामि तत्त्वतः ॥ १४
उदङ्क उवाच ।
भवद्गतेन मनसा भवत्प्रियचिकीर्षया ।
भवद्भक्तिगतेनेह भवद्भावानुगेन च ॥ १५
जरेयं नावबुद्धा मे नाभिज्ञातं सुखं च मे ।
शतवर्षोषितं मां हि न त्वमभ्यनुजानिथाः ॥ १६
भवता त्वभ्यनुज्ञाताः शिष्याः प्रत्यवरा मम ।
उपपन्ना द्विजश्रेष्ठ शतशोऽथ सहस्रशः ॥ १७
गौतम उवाच ।
त्वत्प्रीतियुक्तेन मया गुरुशुश्रूषया तव ।
व्यतिक्रामन्महाकालो नावबुद्धो द्विजर्षभ ॥ १८
किं त्वद्य यदि ते श्रद्धा गमनं प्रति भार्गव ।
अनुज्ञां प्रतिगृह्य त्वं स्वगृहान्गच्छ माचिरम् ॥ १९
उदङ्क उवाच ।
गुर्वर्थं कं प्रयच्छामि ब्रूहि त्वं द्विजसत्तम ।
तमुपाहृत्य गच्छेयमनुज्ञातस्त्वया विभो ॥ २०
गौतम उवाच ।
दक्षिणापरितोषो वै गुरूणां सद्भिरुच्यते ।
तव ह्याचरतो धर्मं तुष्टोऽहं वै न संशयः ।
इत्थं च परितुष्टं मां विजानीहि भृगूद्वह ॥ २१
युवा षोडशवर्षो हि यद्यद्य भविता भवान् ।
ददानि पत्नीं कन्यां च स्वां ते दुहितरं द्विज ।
एतामृतेऽङ्गना नान्या त्वत्तेजोऽर्हति सेवितुम् ॥ २२
ततस्तां प्रतिजग्राह युवा भूत्वा यशस्विनीम् ।
गुरुणा चाभ्यनुज्ञातो गुरुपत्नीमथाब्रवीत् ॥ २३
किं भवत्यै प्रयच्छामि गुर्वर्थं विनियुङ्क्ष माम् ।
प्रियं हितं च काङ्क्षामि प्राणैरपि धनैरपि ॥ २४
यद्दुर्लभं हि लोकेऽस्मिन्रत्नमत्यद्भुतं महत् ।
तदानयेयं तपसा न हि मेऽत्रास्ति संशयः ॥ २५
अहल्योवाच ।
परितुष्टाऽस्मि ते विप्र नित्यं भक्त्या तवानघ ।
पर्याप्तमेतद्भद्रं ते गच्छ तात यथेप्सितम् ॥ २६
वैशंपायन उवाच ।
उदङ्कस्तु महाराज पुनरेवाब्रवीद्वचः ।
आज्ञापयस्व मां मातः कर्तव्यं च तव प्रियम् ॥ २७
अहल्योवाच ।
सौदासपत्न्या विधृते दिव्ये ये मणिकुण्डले ।
ते समानय भद्रं ते गुर्वर्थः सुकृतो भवेत् ॥ २८
वैशंपायन उवाच ।
स तथेति प्रतिश्रुत्य जगाम जनमेजय ।
गुरुपत्नीप्रियार्थं वै ते समानयितुं तदा ॥ २९
स जगाम ततः शीघ्रमुदङ्को ब्राह्मणर्षभः ।
सौदासं पुरुषादं वै भिक्षितुं मणिकुण्डले ॥ ३०
गौतमस्त्वब्रवीत्पत्नीमुदङ्को नात्र दृश्यते ।
इति पृष्टा तमाचष्ट कुण्डलार्थं गतं च सा ॥ ३१
ततः प्रोवाच पत्नीं स न ते सम्यगिदं कृतम् ।
शप्तः स पार्थिवो नूनं ब्राह्मणं तं वधिष्यति ॥ ३२

---

निष्पिष्टः चूर्णीभूत इव । कवेरार्तस्य धीमत इति क. ट. थ. पाठः ॥ ११ ॥ अभ्यनुजानिथाः अभ्यन्वजानीथा अभ्यनुज्ञातवानसि ॥ १६ ॥ नित्य भगवता सहेति क. थ. पाठः ॥ २६ ॥ षट्पञ्चाशोऽध्यायः ॥ ५६ ॥

अहल्योवाच ।
अजानन्त्या नियुक्तः स भगवन्ब्राह्मणो मया ।
भवत्प्रसादान्न भयं किंचित्तस्य भविष्यति ॥३३
इत्युक्तः प्राह तां पत्नीमेवमस्त्विति गौतमः ।
उदङ्कोऽपि वने शून्ये राजानं तं ददर्श ह ॥३४

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि षट्पञ्चाशोऽध्यायः ॥ ५६ ॥

## सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

शापाद्राक्षसत्वं गतेन सौदासेनोदङ्कभक्षणोद्यमे उदङ्केन पुनः प्रत्यागमनप्रतिज्ञापूर्वकं तंप्रति कुण्डलयाचनम् ॥ १ ॥ उदङ्केन सौदासवचसा तत्पत्नींप्रति कुण्डलयाचने तथा तंप्रति मणिकुण्डलमहिमादिकथनपूर्वकं राजाभिज्ञानानयनचोदना॥२॥

पायन उवाच ।
स तं दृष्ट्वा तथाभूतं राजानं घोरदर्शनम् ।
दीर्घश्मश्रुधरं नृणां शोणितेन समुक्षितम् ॥ १
चकार न व्यथां विप्रो राजा त्वेनमथाब्रवीत् ।
प्रत्युत्थाय महातेजा भयकर्ता यमोपमः ॥ २
दिष्ट्या त्वमसि कल्याण षष्ठे काले ममान्तिकम् ।
भक्ष्यं मृगयमाणस्य संप्राप्तो द्विजसत्तम ॥ ३
उदङ्क उवाच ।
राजन्गुर्वर्थिनं विद्धि चरन्तं मामिहागतम् ।
न च गुर्वर्थमुद्युक्तं हिंस्यमाहुर्मनीषिणः ॥ ४
राजोवाच ।
षष्ठे काले ममाहारो विहितो द्विजसत्तम ।
न शक्यस्त्वं समुत्स्रष्टुं क्षुधितेन मयाऽद्य वै ॥५
उदङ्क उवाच ।
एवमस्तु महाराज समयः क्रियतां तु मे ।
गुर्वर्थमभिनिर्वर्त्य पुनरेष्यामि ते वशम् ॥ ६
संश्रुतश्च मया योऽर्थो गुरवे राजसत्तम ।
त्वदधीनः स राजेन्द्र तं त्वां भिक्षे नरेश्वर ॥ ७
ददासि विप्रमुख्येभ्यस्त्वं हि रत्नानि नित्यदा ।
दाता च त्वं नरव्याघ्र पात्रभूतः क्षिताविह ।
पात्रं प्रतिग्रहे चापि विद्धि मां नृपसत्तम ॥ ८
उपाहृत्य गुरोरर्थं त्वदायत्तमरिंदम ।
समयेनेह राजेन्द्र पुनरेष्यामि ते वशम् ॥ ९
सत्यं ते प्रतिजानामि नात्र मिथ्या कथंचन ।
अनृतं नोक्तपूर्वं मे स्वैरेष्वपि कुतोऽन्यथा ॥ १०
सौदास उवाच ।
यदि मत्तस्त्वायत्तो गुर्वर्थः कृत एव सः ।
यदि चास्ति प्रतिग्राह्यं सांप्रतं तद्वदस्व मे ॥ ११
उदङ्क उवाच ।
प्रतिग्राह्यो मतो मे त्वं सदैव पुरुषर्षभ ।
सोऽहं त्वामनुसंप्राप्तो भिक्षितुं मणिकुण्डले ॥ १२
सौदास उवाच ।
पत्न्यास्ते मम विप्रर्षे उचिते मणिकुण्डले ।
वरयार्थं त्वमन्यं वै तं ते दास्यामि सुव्रत ॥ १३
उदङ्क उवाच ।
अलं ते व्यपदेशेन प्रमाणं यदि ते वयम् ।
प्रयच्छ कुण्डले मह्यं सत्यवाग्भव पार्थिव ॥ १४
वैशंपायन उवाच ।
इत्युक्तस्त्वब्रवीद्राजा तमुदङ्कं पुनर्वचः ।
गच्छ मद्वचनाद्देवीं ब्रूहि देहीति सत्तम ॥ १५
सैवमुक्ता त्वया नूनं मद्वाक्येन शुचिव्रता ।
प्रदास्यति द्विजश्रेष्ठ कुण्डले ते न संशयः ॥ १६
उदङ्क उवाच ।
क पत्नी भवतः शक्या मया द्रष्टुं नरेश्वर ।
स्वयं वाऽपि भवान्पत्नीं किमर्थं नोपसर्पति ॥१७
सौदास उवाच ।
तां द्रक्ष्यति भवानद्य कस्मिंश्चिद्वननिर्झरे ।
षष्ठे काले न हि मया सा शक्या द्रष्टुमद्य वै ॥ १८
वैशंपायन उवाच ।
उदङ्कस्तु तथोक्तः स जगाम भरतर्षभ ।
मदयन्तीं च दृष्ट्वा स ज्ञापयत्स्वप्रयोजनम् ॥१९

सौदासवचनं श्रुत्वा ततः सा पृथुलोचना ।
प्रत्युवाच महाबुद्धिमुदङ्कं जनमेजय ॥ २०
एवमेतन्महाब्रह्मन्नानृतं वदसेऽनघ ।
अभिज्ञानं तु किंचित्त्वं समानयितुमर्हसि ॥ २१
इमे हि दिव्ये मणिकुण्डले मे
देवाश्च यक्षाश्च महर्षयश्च ।
तैस्तैरुपायैरपहर्तुकामा-
श्छिद्रेषु नित्यं परितर्कयन्ति ॥ २२
निक्षिप्तमेतद्भुवि पन्नगास्तु
रत्नं समासाद्य परामृशेयुः ।
यक्षास्तथोच्छिष्टधृतं सुराश्च
निद्रावशाद्वा परिधर्षयेयुः ॥ २३
छिद्रेष्वेतेष्विमे नित्यं ह्रियेते द्विजसत्तम ।
देवराक्षसनागानामप्रमत्तेन धार्यते ॥ २४
एते दिवापि भासेते रात्रौ च द्विजसत्तम ।
नक्तं नक्षत्रताराणां प्रभामाक्षिप्य वर्ततः ॥ २५
एते ह्यामुच्य भगवन्क्षुत्पिपासाभयं कुतः ।
विषाग्निश्वापदेभ्यश्च भयं जातु न विद्यते ॥ २६
ह्रस्वेन चैते आमुक्ते भवतो ह्रस्वके तदा ।
अनुरूपेण चामुक्ते जायेते तत्प्रमाणके ॥ २७
एवंविधे ममैते वै कुण्डले परमार्चिते ।
त्रिषु लोकेषु विज्ञाते तदभिज्ञानमानय ॥ २८

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

## अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

उदङ्केनाभिज्ञाननिवेदनेन मदयन्तीतः कुण्डलग्रहणपूर्वकं प्रतिनिवर्तनम् ॥ १ ॥ मध्येमार्गं क्षुधाविष्टेन तेन बिल्वतरुमारुह्य शाखायां कुण्डलासञ्जनपूर्वकं फलपातनाय शाखाचालनम् ॥ २ ॥ तत्र पतत्फलघट्टनेन कुण्डलयोरधःपतने केनचिदुरगवरेण तदपहृत्य नागलोकगमनम् ॥ ३ ॥ तत इन्द्रसाहाय्याद्भूविदारणेन नागलोकंगतेनोदङ्केन तत्राश्ववचसा तदपानदेशधमने तन्निर्गतधूमपटलनिरुद्धैः सर्पैरुदङ्काय कुण्डलप्रत्यर्पणम् ॥ ४ ॥ तत उदङ्केन गुरुपत्न्यै कुण्डलप्रदानम् ॥ ५ ॥

वैशंपायन उवाच ।
स मित्रसहमासाद्य अभिज्ञानमयाचत ।
तस्मै ददावभिज्ञानं स चेक्ष्वाकुवरस्तदा ॥ १
सौदास उवाच ।
न चैवैषा गतिः क्षेम्या न चान्या विद्यते गतिः ।
एतन्मे तत्त्वमाज्ञाय प्रयच्छ मणिकुण्डले ॥ २
इत्युक्तस्तामुदङ्कस्तु भर्तुर्वाक्यमथाब्रवीत् ।
श्रुत्वा च सा तदा प्रादात्ततस्ते मणिकुण्डले ॥३
अवाप्य कुण्डले ते तु राजानं पुनरब्रवीत् ।
किमेतद्गुह्यवचनं श्रोतुमिच्छामि पार्थिव ॥ ४
सौदास उवाच ।
प्रजाविसर्गाद्विप्रान्वै क्षत्रियाः पूजयन्ति ह ।
विप्रेभ्यश्चापि बहवो दोषाः प्रादुर्भवन्ति नः ॥५
सोऽहं द्विजेभ्यः प्रणतो विप्राद्दोषमवाप्तवान् ।
गतिमन्यां न पश्यामि मदयन्तीसहायवान् ॥ ६
न चान्यामपि पश्यामि गतिं गतिमतां वर ।
स्वर्गद्वारस्य गमने स्थाने चेह द्विजोत्तम ॥ ७
न हि राज्ञा विशेषेण विरुद्धेन द्विजातिभिः ।
शक्यं हि लोके स्थातुं वै प्रेत्य वा सुखमेधितुम् ॥८
तदिष्टे ते मया दत्ते एते स्वे मणिकुण्डले ।
यः कृतस्तेऽद्य समयः सफलं तं कुरुष्व मे ॥ ९
उदङ्क उवाच ।
राजंस्तथेह कर्तास्मि पुनरेष्यामि ते वशम् ।
प्रश्नं च कंचित्प्रष्टुं त्वां व्यवसिष्ये परंतप ॥१०
सौदास उवाच ।
ब्रूहि विप्र यथाकामं प्रतिवक्तास्मि ते वचः ।

छिद्रेष्वेतेष्विमे इति पूर्वान्वयि । नागानां नागैः ह्रियेत इति संबन्धः ॥ २४ ॥ सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥
मित्रसहः सौदासः । अभिज्ञानं श्लोकरूपं ज्ञापकम् ॥ १ ॥ एषा रक्षोयोनिरूपा । अन्या इतो मुक्तिरूपा ॥ २ ॥ ततोदकाय वै प्रादात्तस्मै ते मणिकुण्डले इति क. ट. थ. पाठः ॥३॥ निवृत्तोस्मि परं तपेति झ. पाठः ॥ १० ॥

छेत्तासि संशयं नेऽद्य न मेऽत्रास्ति विचारणा ११
उदङ्क उवाच ।
प्राहुर्वाक्संयतं विप्रं धर्मनैपुणदर्शिनः ।
मित्रेषु यश्च विषमः स्तेन इत्येव तं विदुः ॥ १२
स भवान्मित्रतामद्य संप्राप्तो मम पार्थिव ।
स मे बुद्धिं प्रयच्छस्व संमतां पुरुषर्षभ ॥ १३
अवाप्तार्थोऽहमद्येह भवांश्च पुरुषादकः ।
भवत्सकाशमागन्तुं क्षमं मम न वेति वै ॥ १४
सौदास उवाच ।
क्षमं चेदिह वक्तव्यं मया द्विजवरोत्तम ।
मत्समीपं द्विजश्रेष्ठ नागन्तव्यं कथंचन ॥ १५
एवं तव प्रपश्यामि श्रेयो भृगुकुलोद्वह ।
आगच्छतो हि ते विप्र भवेन्मृत्युर्न संशयः॥१६
वैशंपायन उवाच ।
इत्युक्तः स तदा राजा क्षमं बुद्धिमता हितम् ।
अनुज्ञाप्य स राजानमहल्यां प्रति जग्मिवान्॥१७
गृहीत्वा कुण्डले दिव्ये गुरुपत्न्याः प्रियंकरः ।
जवेन महता प्रायाद्गौतमस्याश्रमं प्रति ॥ १८
यथा तयो रक्षणं च मदयन्त्याऽभिभाषितम् ।
तथा ते कुण्डले बध्वा तदा कृष्णाजिनेऽनयत् १९
स कस्मिंश्चित्क्षुधाविष्टः फलभारसमन्वितम् ।
बिल्वं ददर्श विप्रर्षिरारुरोह च तं ततः ॥ २०
शाखास्वासज्य तस्यैव कृष्णाजिनमरिंदम ।
पातयामास बिल्वानि तदा स द्विजपुङ्गवः॥२१
अथ पातयमानस्य बिल्वापहृतचक्षुषः ।
न्यपतंस्तानि बिल्वानि तस्मिन्नेवाजिने विभो २२
यस्मिंस्ते कुण्डले बद्धे तदा द्विजवरेण वै ।
बिल्वप्रहारैस्तस्याथ व्यशीर्यद्बन्धनं ततः ॥ २३
सकुण्डलं तदजिनं पपात सहसा तरोः ।
विशीर्णबन्धने तस्मिन्गते कृष्णाजिने महीम् २४
अपश्यद्भुजगः कश्चित्ते तत्र मणिकुण्डले ।
ऐरावतकुलोद्भूतः शीघ्रो भूत्वा तदा हि सः ॥२५
विदश्यास्येन वल्मीकं विवेशाथ स कुण्डले ।
ह्रियमाणे तु दृष्ट्वा स कुण्डले भुजगेन ह ॥ २६
पपात वृक्षात्सोद्वेगो दुःखात्परमकोपनः ।
स दण्डकाष्ठमादाय वल्मीकमखनत्तदा ॥ २७
[अहानि त्रिंशदव्यग्रः पञ्च चान्यानि भारत ।]
क्रोधामर्षाभिसंतप्तस्तदा ब्राह्मणसत्तमः ॥ २८
तस्य वेगमसह्यं तमसहन्ती वसुंधरा ।
दण्डकाष्ठाभिनुन्नाङ्गी चचाल भृशमाकुला ।
ततः खनत एवाथ विप्रर्षेर्धरणीतलम् ।
नागलोकस्य पन्थानं कर्तुकामस्य निश्चयात् ॥२९
रथेन हरियुक्तेन तं देशमुपजग्मिवान् ।
वज्रपाणिर्महातेजास्तं ददर्श द्विजोत्तमम् ॥ ३०
वैशंपायन उवाच ।
स तु तं ब्राह्मणो भूत्वा तस्य दुःखेन दुःखितः ।
उदङ्कमब्रवीद्वाक्यं नैतच्छक्यं त्वयेति वै ॥ ३१
इतो हि नागलोको वै योजनानि सहस्रशः ।
न दण्डकाष्ठसाध्यं च मन्ये कार्यमिदं तव ॥३२
उदङ्क उवाच ।
नागलोके यदि ब्रह्मन्न शक्ये कुण्डले मया ।
प्राप्तुं प्राणान्विमोक्ष्यामि पश्यतस्ते द्विजोत्तम॥३३
वैशंपायन उवाच ।
यदा स नाशकत्तस्य निश्चयं कर्तुमन्यथा ।
वज्रपाणिस्तदा दण्डं वज्रास्त्रेण युयोज ह ॥ ३४
ततो वज्रप्रहारैस्तैर्दार्यमाणा वसुंधरा ।
नागलोकस्य पन्थानमकरोज्जनमेजय ॥ ३५
स तेन मार्गेण तदा नागलोकं विवेश ह ।
ददर्श नागलोकं च योजनानि सहस्रशः ॥ ३६
प्राकारनिचयैर्दिव्यैर्मणिमुक्तास्वलंकृतैः ।
उपपन्नं महाभाग शातकुम्भमयैस्तथा ॥ ३७
वापीः स्फटिकसोपाना नदीश्च विमलोदकाः ।
ददर्श वृक्षांश्च बहून्नानाद्विजगणायुतान् ॥ ३८
तस्य लोकस्य च द्वारं स ददर्श भृगूद्वहः ।

प्राप्तवान्संगतिं मित्र धर्मनैपुण्यदर्शनादिति क. ट. थ पाठः ॥ १२ ॥ तत्रैव तु प्रवक्ष्यामि श्रेयो भृगुकुलोद्वहेति क. ट. थ. पाठः ॥ १६ ॥ आस्येन कुण्डले विदश्य धृत्वा वल्मीकं विवेशेति संबन्धः ॥ २६ ॥

पञ्चयोजनविस्तारमायतं शतयोजनम् ॥ ३९
नागलोकमुदङ्कस्तु प्रेक्ष्य दीनोऽभवत्तदा ।
निराशश्चाभवत्तत्र कुण्डलाहरणे पुनः ॥ ४०
तत्र प्रोवाच तुरगस्तं कृष्णश्वेतवालधिः ।
ताम्रास्यनेत्रः कौरव्यः प्रज्वलन्निव तेजसा ॥ ४१
धमस्वापानमेतन्मे ततस्त्वं विप्र लप्स्यसे ।
ऐरावतसुतेनेह तवानीते हि कुण्डले ॥ ४२
मा जुगुप्सां कृथाः पुत्र त्वमत्रार्थे कथंचन ।
त्वयैतद्धि समाचीर्णं गौतमस्याश्रमे तदा ॥ ४३
उदङ्क उवाच ।
कथं भवन्तं जानीयामुपाध्यायाश्रमं प्रति ।
यन्मया चीर्णपूर्वं हि श्रोतुमिच्छामि तद्ध्यहम् ४४
अश्व उवाच ।
गुरोर्गुरुं मां जानीहि ज्वलन्तं जातवेदसम् ।
त्वया ह्यहं सदा विप्र गुरोरर्थेऽभिपूजितः ॥ ४५
विधिवत्सततं विप्र शुचिना भृगुनन्दन ।
तस्माच्छ्रेयो विधास्यामि तवैवं कुरु माचिरम् ४६
इत्युक्तस्तु तथाऽकार्षीदुदङ्कश्चित्रभानुना ।
त्रग्मार्चिः प्रीतिमांश्चापि प्रजज्वाल दिधक्षया ४७
ततोऽस्य रोमकूपेभ्यो ध्मायमानस्य भारत ।
घनः प्रादुरभूद्धूमो नागलोकभयावहः ॥ ४८
तेन धूमेन महता वर्धमानेन भारत ।
नागलोके महाराज न प्राज्ञायत किंचन ॥ ४९
हाहाकृतमभूत्सर्वमैरावतनिवेशनम् ।
वासुकिप्रमुखानां च नागानां जनमेजय ॥ ५०
न प्राकाशन्त वेश्मानि धूमरुद्धानि भारत ।
नीहारसंवृतानीव वनानि गिरयस्तथा ॥ ५१
ते धूमरक्तनयना वह्नितेजोभितापिताः ।
आजग्मुर्निश्चयं ज्ञातुं भार्गवस्य महात्मनः ॥ ५२
श्रुत्वा च निश्चयं तस्य महर्षेरतितेजसः ।
संभ्रान्तनयनाः सर्वे पूजां चक्रुर्यथाविधि ॥ ५३
सर्वे प्राञ्जलयो नागा वृद्धबालपुरोगमाः ।
शिरोभिः प्रणिपत्योचुः प्रसीद भगवन्निति ॥ ५४
प्रसाद्य ब्राह्मणं ते तु पाद्यमर्घ्यं निवेद्य च ।
प्रायच्छन्कुण्डले दिव्ये पन्नगाः परमार्चिते ॥ ५५
ततः स पूजितो नागैस्तदोदङ्कः प्रतापवान् ।
अग्निं प्रदक्षिणं कृत्वा जगाम गुरुसद्म तत् ॥ ५६
स गत्वा त्वरितो राजन्गौतमस्य निवेशनम् ।
प्रायच्छत्कुण्डले दिव्ये गुरुपत्न्यास्तदाऽनघ ॥ ५७
वासुकिप्रमुखानां च नागानां जनमेजय ।
सर्वं शशंस गुरवे यथावद्द्विजसत्तमः ॥ ५८
एवं महात्मना तेन त्रींल्लोकाञ्जनमेजय ।
परिक्रम्याहृते दिव्ये ततस्ते मणिकुण्डले ॥ ५९
एवंप्रभावः स मुनिरुदङ्को भरतर्षभ ।
परेण तपसा युक्तो यन्मां त्वं परिपृच्छसि ॥ ६०

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

## एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

उदङ्काय वरदानात्परं द्वारकामागच्छता कृष्णेन मध्ये रैवतकप्रवेशः ॥ १ ॥ रैवतकोत्सववर्णनम् ॥ २ ॥ ततः स्वभवनमेत्य मातापितृभ्यामभिवादनम् ॥ ३ ॥

जनमेजय उवाच ।
उदङ्कस्य वरं दत्त्वा गोविन्दो द्विजसत्तम ।
अत ऊर्ध्वं महाबाहुः किं चकार महायशाः ॥ १
वैशंपायन उवाच ।
उदङ्काय वरं दत्त्वा प्रायात्सात्यकिना सह ।
द्वारकामेव गोविन्दः शीघ्रवेगैर्महाहयैः ॥ २
सरांसि सरितश्चैव वनानि च गिरींस्तथा ।
अतिक्रम्याससादाथ रम्यां द्वारवतीं पुरीम् ॥ ३
वर्तमाने महाराज महे रैवतकस्य च ।
उपायात्पुण्डरीकाक्षो युयुधानानुगस्तदा ॥ ४
अलंकृतस्तु स गिरिर्नानारूपैर्विचित्रितैः ।
बभौ रत्नमयैः कोशैः संवृतः पुरुषर्षभ ॥ ५

महे उत्सवे ॥ ४ ॥

काञ्चनस्रग्भिरग्र्याभिः सुमनोभिस्तथैव च
वासोभिश्च महाशैलः कल्पवृक्षैस्तथैव च ॥
दीपवृक्षैश्च सौवर्णैरभीक्ष्णमुपशोभितः ।
गुहानिर्झरदेशेषु दिवाभूतो बभूव ह ॥ ७
पताकाभिर्विचित्राभिः सघण्टाभिः समन्ततः ।
पुंभिः स्त्रीभिश्च संघुष्टः प्रगीत इव चाभवत् ।
अतीव प्रेक्षणीयोऽभून्मेरुर्मुनिगणैरिव ॥ ८
मत्तानां हृष्टरूपाणां स्त्रीणां पुंसां च भारत ।
गायतां पर्वतेन्द्रस्य दिविस्पृगिव निःस्वनः ॥ ९
प्रमत्तमत्तसंमत्तक्ष्वेडितोत्कुष्टसंकुलः ।
तथा किलकिलाशब्दैर्भूधरोऽभून्मनोहरः ॥ १०
विपणापणवान्रम्यो भक्ष्यभोज्यविहारवान् ।
वस्त्रमाल्योत्करयुतो वीणावेणुमृदङ्गवान् ॥ ११
सुरामैरेयमिश्रेण भक्ष्यभोज्येन चैव ह ।
दीनान्धकृपणादिभ्यो दीयमानेन चानिशम् ।
बभौ परमकल्याणो महस्तस्य महागिरेः ॥ १२
पुण्यावसथवान्वीरैः पुण्यकृद्भिर्निषेवितः ।
विहारो वृष्णिवीराणां महे रैवतकस्य ह ॥ १३
स नानावेश्मसंकीर्णो देवलोक इवाबभौ
तदा च कृष्णसान्निध्यान्मुदा देवगणैर्युतः ॥१४

'स्तुवन्त्यन्तर्हिता देवा गन्धर्वाश्च सहर्षिभिः ।
साधकः सर्वधर्माणामसुराणां विनाशकः ॥ १५
त्वं स्रष्टा सृज्यमाधारं कारणं धर्मवेदवित् ।
त्वया सत्क्रियते देव न जानीमोऽत्र मायया ॥१६
केवलं त्वाऽभिजानीमः शरणं परमेश्वरम् ।
ब्रह्मादीनां च गोविन्द सान्निध्यं शरणं नमः ॥१७
इति स्तुते मानुषैश्च पूजिते देवकीसुते ।'
शक्रसद्मप्रतीकाशो बभूव स हि शैलराट् ॥ १८
ततः संपूज्यमानः स विवेश भवनं शुभम् ।
गोविन्दः सात्यकिश्चैव जग्मतुर्भवनं स्वकम् ॥१९
विवेश च प्रहृष्टात्मा चिरकालप्रवासतः ।
कृत्वा नसुकरं कर्म दानवेष्विव वासवः ॥ २०
उपायान्तं तु वार्ष्णेयं भोजवृष्ण्यन्धकास्तथा ।
अभ्यगच्छन्महात्मानं देवा इव शतक्रतुम् ॥२१
स तानभ्यर्च्य मेधावी पृष्ट्वा च कुशलं तदा ।
अभ्यवादयत प्रीतः पितरं मातरं तदा ॥ २२
ताभ्यां स संपरिष्वक्तः सान्त्वितश्च महाभुजः ।
उपोपविष्टैः सर्वैस्तैर्वृष्णिभिः परिवारितः ॥ २३
स विश्रान्तो महातेजाः कृतपादावनेजनः ।
कथयामास तत्सर्वं पृष्टः पित्रा महाहवम् ॥ २४

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

## षष्टितमोऽध्यायः ॥ ६० ॥

कृष्णेन वसुदेवादीन्प्रति कुरुपाण्डवयुद्धप्रकारकथनम् ॥ १ ॥

वसुदेव उवाच ।
श्रुतवानस्मि वार्ष्णेय संग्रामं परमाद्भुतम् ।
नराणां वदतां पुत्र कथोद्घातेषु नित्यशः ॥ १
त्वं तु प्रत्यक्षदर्शी च कार्यज्ञश्च महाभुजः ।
तस्मात्प्रब्रूहि संग्रामं याथातथ्येन मेऽनघ ॥ २
यथा तदभवद्युद्धं पाण्डवानां महात्मनाम् ।
भीष्मकर्णकृपद्रोणशल्यादिभिरनुत्तमम् ॥ ३
अन्येषां क्षत्रियाणां च कृतास्त्राणामनेकशः ।

नानावेषाकृतिमतां नानादेशनिवासिनाम् ॥ ४
वैशंपायन उवाच ।
इत्युक्तः पुण्डरीकाक्षः पित्रा मातुस्तदाऽन्तिके ।
शशंस कुरुवीराणां संग्रामे निधनं यथा ॥ ५
वासुदेव उवाच ।
अत्यद्भुतानि कर्माणि क्षत्रियाणां महात्मनाम् ।
बहुलत्वान्न सङ्ख्यातुं शक्यान्यब्दशतैरपि ॥ ६
प्राधान्यतस्तु गदतः समासेनैव मे शृणु ।

दीपभूतो बभूवहेति क. थ. पाठः ॥ ७ ॥ प्रमत्ताः क्रीडाया-सक्त्यानवहिताः । मत्ताः मद्यादिना । संमत्ता हृष्टाः ॥ १० ॥

सात्यकिश्च महाभुज इति क. पाठः ॥ २३ ॥ एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

कर्माणि पृथिवीशानां यथावदमरद्युते ॥ ७
भीष्मः सेनापतिरभूदेकादशचमूपतिः ।
कौरव्यः कौरवेन्द्राणां देवानामिव पावकिः ॥८
शिखण्डी पाण्डुपुत्राणां नेता सप्तचमूपतिः ।
बभूव रक्षितो धीमाञ्श्रीमता सव्यसाचिना ॥९
तेषां तदभवद्युद्धं दशाहानि महात्मनाम् ।
कुरूणां पाण्डवानां च सुमहद्रोमहर्षणम् ॥ १०
अयुध्यमानं गाङ्गेयं शिखण्डी तं महाद्युतिम् ।
जघान बहुभिर्बाणैः सह गाण्डीवधन्वना ॥११
अकरोत्स ततः कालं शरतल्पगतो मुनिः ।
अयनं दक्षिणं हित्वा संप्राप्ते चोत्तरायणे ॥ १२
ततः सेनापतिरभूद्द्रोणोऽस्त्रविदुषांवरः ।
प्रवीरः कौरवेन्द्रस्य काव्यो दैत्यपतेरिव ॥ १३
अक्षौहिणीभिः शिष्टाभिर्नवभिर्द्विजसत्तमः ।
संवृतः समरश्लाघी गुप्तः कृपसुतादिभिः ॥ १४
धृष्टद्युम्नस्त्वभून्नेता पाण्डवानां महास्त्रवित् ।
गुप्तो भीमेन मेधावी मित्रेण वरुणो यथा ॥१५
स च सेनापरिवृतो द्रोणप्रेप्सुर्महामनाः ।
पितुर्निकारान्संस्मृत्य रणे कर्माकरोन्महत् ॥१६
तस्मिंस्ते पृथिवीपाला द्रोणपार्षतसंगरे ।
नानादिगागता वीराः प्रायशो निधनं गताः॥१७
दिनानि पञ्च तद्युद्धमभूत्परमदारुणम् ।
ततो द्रोणः परिश्रान्तो धृष्टद्युम्नवशं गतः ॥ १८
ततः सेनापतिरभूत्कर्णो दौर्योधने बले ।
अक्षौहिणीभिः शिष्टाभिर्वृतः पञ्चभिराहवे ॥१९
तिस्रस्तु पाण्डुपुत्राणां चम्वो बीभत्सुपालिताः ।
हतप्रवीरभूयिष्ठा बभूवुः समवस्थिताः ॥ २०
ततः पार्थं समासाद्य पतङ्ग इव पावकम् ।
पञ्चत्वमगमत्सौतिर्द्वितीयेऽहनि दारुणः ॥ २१
हते कर्णे तु कौरव्या निरुत्साहा हतौजसः ।
अक्षौहिणीभिस्तिसृभिर्मद्रेशं पर्यवारयन् ॥ २२
हतवाहनभूयिष्ठाः पाण्डवास्तु युधिष्ठिरम् ।
अक्षौहिण्या निरुत्साहाः शिष्टया पर्यवारयन्॥२३
अवधीन्मद्रराजानं कुरुराजो युधिष्ठिरः ।
तस्मिंस्तदाऽर्धदिवसे कृत्वा कर्म सुदुष्करम् ॥२४
हते शल्ये तु शकुनिं सहदेवो महामनाः ।
आहर्तारं कलेस्तस्य जघानामितविक्रमः ॥ २५
निहते शकुनौ राजा धार्तराष्ट्रः सुदुर्मनाः ।
अपाक्रामद्गदापाणिर्हतभूयिष्ठसैनिकः ॥ २६
तमन्वधावत्संक्रुद्धो भीमसेनः प्रतापवान् ।
ह्रदे द्वैपायने चापि सलिलस्थं ददर्श तम् ॥ २७
हतशिष्टेन सैन्येन समन्तात्पर्यवार्य तम् ।
अथोपविविशुर्हृष्टा ह्रदस्थं पञ्च पाण्डवाः ॥ २८
विगाह्य सलिलं त्वाशु वाग्बाणैर्भृशविक्षतः ।
उत्थाय स गदापाणिर्युद्धाय समुपस्थितः ॥ २९
ततः स निहतो राजा धार्तराष्ट्रो महारणे ।
भीमसेनेन विक्रम्य पश्यतां पृथिवीक्षिताम् ॥३०
ततस्तत्पाण्डवं सैन्यं प्रसुप्तं शिबिरे निशि ।
निहतं द्रोणपुत्रेण पितुर्वधममृष्यता ॥ ३१
हतपुत्रा हतबला हतमित्रा मया सह ।
युयुधानसहायेन पञ्च शिष्टास्तु पाण्डवाः ॥ ३२
सहैव कृपभोजाभ्यां द्रौणिर्युद्धादमुच्यत ।
युयुत्सुश्चापि कौरव्यो मुक्तः पाण्डवसंश्रयात्॥३३
निहते कौरवेन्द्रे तु सानुबन्धे सुयोधने ।
विदुरः संजयश्चैव धर्मराजमुपस्थितौ ॥ ३४
एवं तदभवद्युद्धमहान्यष्टादश प्रभो ।
यत्र ते पृथिवीपाला निहताः स्वर्गमावसन् ॥ ३५
वैशंपायन उवाच ।
शृण्वतां तु महाराज कथां तां रोमहर्षणीम् ।
दुःखशोकपरिक्लेशा वृष्णीनामभवंस्तदा ॥ ३६

॥ इति श्रीमन्महाभारते अश्वमेधिकपर्वणि अनुगीतापर्वणि षष्टितमोऽध्यायः ॥ ६० ॥

ततः शिखण्डी गाङ्गेयं युध्यमान महाहवे । इति झ० पाठः | ॥ ११ ॥ षष्टितमोऽध्यायः ॥ ६० ॥

## एकषष्टितमोऽध्यायः ॥ ६१ ॥

कृष्णेन सभायां वसुदेवंप्रति अभिमन्युनिधनाकथने सुभद्रया तंप्रति तत्कथनचोदनापूर्वकं शोकान्मोहावेशेन भुवि निपतनम् ॥ १ ॥ ततः कृष्णेन वसुदेवपरिसान्त्वनम् ॥ २ ॥

वैशंपायन उवाच ।
कथयन्नेव तु तदा वासुदेवः प्रतापवान् ।
महाभारतयुद्धं तत्कथान्ते पितुरग्रतः ॥ १
अभिमन्योर्वधं वीरः सोत्यक्रामन्महामतिः ।
अप्रियं वसुदेवस्य माभूदिति महामनाः ॥ २
मा दौहित्रवधं श्रुत्वा वसुदेवो महात्ययम् ।
दुःखशोकाभिसंतप्तो भवेदिति महामतिः ॥ ३
सुभद्रा तु तमुत्क्रान्तमात्मजस्य वधं रणे ।
आचक्ष्व कृष्ण सौभद्रवधमित्यपतद्भुवि ॥ ४
तामपश्यन्निपतितां वसुदेवः क्षितौ तदा ।
दृष्ट्वैव च पपातोर्व्यां सोऽपि दुःखेन मूर्छितः॥५
ततः स दौहित्रवधाद्दुःखशोकसमाहतः ।
वसुदेवो महाराज कृष्णं वाक्यमथाब्रवीत् ॥ ६
ननु त्वं पुण्डरीकाक्ष सत्यवाग्भुवि विश्रुतः ।
यद्दौहित्रवधं मेऽद्य न ख्यापयसि शत्रुहन् ॥ ७
तद्भागिनेयनिधनं तत्त्वेनाचक्ष्व मे प्रभो ।
त्वत्सदृक्षस्तव कथं शत्रुभिर्निहतो रणे ॥ ८
दुर्मरं बत वार्ष्णेय कालेऽप्राप्ते नृभिः सह ।
यत्र मे हृदयं दुःखाच्छतधा न विदीर्यते ॥ ९
किमब्रवीत्त्वां संग्रामे सुभद्रां मातरं प्रति ।
मां चापि पुण्डरीकाक्ष चपलाक्षः प्रियो मम॥१०
आहवं पृष्ठतः कृत्वा कच्चिन्न निहतः परैः ।
कच्चिन्मुखं न गोविन्द तेनाजौ विकृतं कृतम् ११
स हि कृष्ण महातेजाः श्लाघन्निव ममाग्रतः ।
बालभावेन विजयमात्मनोऽकथयत्प्रभुः ॥ १२
कच्चिन्न निकृतो बालो द्रोणकर्णकृपादिभिः ।
धरण्यां निहतः शेते तन्ममाचक्ष्व केशव ॥ १३
स हि द्रोणं च भीष्मं च कर्णं च बलिनां वरम् ।
स्पर्धते स्म रणे नित्यं दुहितुः पुत्रको मम ॥ १४
एवंविधं बहु तदा विलपन्तं सुदुःखितम् ।
पितरं दुःखिततरं गोविन्दो वाक्यमब्रवीत् ॥ १५
न तेन विकृतं वक्त्रं कृतं संग्राममूर्धनि ।
न पृष्ठतः कृतश्चापि संग्रामस्तेन दुस्तरः ॥ १६
निहत्य पृथिवीपालान्सहस्रशतसङ्घशः ।
खेदितो द्रोणकर्णाभ्यां दौःशासनिवशं गतः॥१७
एको ह्येकेन सततं युध्यमानो यदि प्रभो ।
न स शक्येत संग्रामे निहन्तुमपि वज्रिणा ॥१८
समाहूते च संग्रामे पार्थे संशप्तकैस्तदा ।
पर्यवार्यत संक्रुद्धैः स द्रोणादिभिराहवे ॥ १९
ततः शत्रुवधं कृत्वा सुमहान्तं रणे पितः ।
दौहित्रस्तव वार्ष्णेय दौःशासनिवशं गतः ॥ २०
नूनं च स गतः स्वर्गं जहि शोकं महामते ।
न हि व्यसनमासाद्य सीदन्ति कृतबुद्धयः ॥२१
द्रोणकर्णप्रभृतयो येन प्रतिसमासिताः ।
रणे महेन्द्रप्रतिमाः स कथं नाप्नुयाद्दिवम् ॥ २२
स शोकं जहि दुर्धर्ष मा च मन्युवशं गमः ।
शस्त्रपूतां हि स गतिं गतः परपुरंजयः ॥ २३
तस्मिंस्तु निहते वीरे सुभद्रेयं स्वसा मम ।
दुःखार्ताऽथो सुतं प्राप्य कुररीव ननाद ह ॥२४
द्रौपदीं च समासाद्य पर्यतप्यत दुःखिता ।
आर्ये क्व दारकाः सर्वे द्रष्टुमिच्छामि तानहम् २५
अस्यास्तु वचनं श्रुत्वा सर्वास्ताः कुरुयोषितः ।
भुजाभ्यां परिगृह्यैनां चुक्रुशुः परमार्तवत् ॥ २६
उत्तरां चाब्रवीद्भद्रे भर्ता स क्व नु ते गतः ।
क्षिप्रमागमनं मह्यं तस्य त्वं वेदयस्व ह ॥ २७
ननु नामाद्य वैराटि श्रुत्वा मम गिरं सदा ।
भवनान्निष्पतत्याशु कस्मान्नाभ्येति ते पतिः २८
अभिमन्योऽनुशयिनो मातुलास्ते महारथाः ।

कच्चिद्दुःखेन गोविन्द तत्राजौ विमुखीकृतः इति थ. पाठः ॥ ११ ॥ समाहृते च संग्रामादिति झ. पाठः । पर्यवार्यत रिति थ. पाठः ॥ १९ ॥ एकषष्टितमोऽध्यायः ॥ ६१ ॥

कुशलं चाब्रुवन्सर्वे त्वां युयुत्सुमिहागतम् ॥ २९
आचक्ष्व मेऽद्य संग्रामं यथापूर्वमरिन्दम ।
कस्मादेवं विलपतीं नाद्येह प्रतिभाषसे ॥ ३०
एवमादि तु वार्ष्णेय्यास्तस्यास्तत्परिदेवितम् ।
श्रुत्वा पृथा सुदुःखार्ता शनैर्वाक्यमथाब्रवीत् ३१
सुभद्रे वासुदेवेन तथा सात्यकिना रणे ।
पित्रा च लालितो बालः स हतः कालधर्मणा ३२
ईदृशो मर्त्यधर्मोऽयं मा शुचो यदुनन्दिनि ।
पुत्रो हि तव दुर्धर्षः संप्राप्तः परमां गतिम् ॥ ३३
कुले महति जातासि क्षत्रियाणां महात्मनाम् ।
मा शुचश्चपलाक्षं त्वं पद्मपत्रनिभेक्षणे ॥ ३४
उत्तरां त्वमवेक्षस्व गुर्विणीं मा शुचः शुभे ।
पुत्रमेषा हि तस्याशु जनयिष्यति भामिनी ॥ ३५
एवमाश्वासयित्वैनां कुन्ती यदुकुलोद्वह ।
विहाय शोकं दुर्धर्षं श्राद्धमस्य ह्यकल्पयत् ॥ ३६
समनुज्ञाप्य धर्मज्ञं राजानं भीममेव च ।
यमौ यमोपमौ चैव ददौ दानान्यनेकशः ॥ ३७
ततः प्रदाय बह्वीर्गा ब्राह्मणेभ्यो यदूद्वह ।
समाहूय तु वार्ष्णेयी वैराटीमब्रवीदिदम् ॥ ३८
वैराटि नेह संतापस्त्वया कार्यो ह्यनिन्दिते ।
भर्तारं प्रति सुश्रोणि गर्भस्थं रक्ष वै शिशुम् ॥ ३९
एवमुक्त्वा ततः कुन्ती विरराम महाद्युते ।
तामनुज्ञाप्य चैवेमां सुभद्रां समुपानयम् ॥ ४०
एवं स निधनं प्राप्तो दौहित्रस्तव मानद ।
संतापं त्यज दुर्धर्ष मा च शोके मनः कृथाः ४१

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि एकषष्टितमोऽध्यायः ॥ ६१ ॥

---

## द्विषष्टितमोऽध्यायः ॥ ६२ ॥

वसुदेवादिभिरभिमन्यवे श्राद्धदानम् ॥ १ ॥ व्यासेन हास्तिनपुरमेत्य उत्तरादिपरिसान्त्वपूर्वकं युधिष्ठिरंप्रत्यश्वमेधसंचोदनेन पुनरन्तर्धानम् ॥ २ ॥

वैशंपायन उवाच ।
एतच्छ्रुत्वा तु पुत्रस्य वचः शूरात्मजस्तदा ।
विहाय शोकं धर्मात्मा ददौ श्राद्धमनुत्तमम् ॥ १
तथैव वासुदेवश्च स्वस्रीयस्य महात्मनः ।
दयितस्य पितुर्नित्यमकरोदौर्ध्वदैहिकम् ॥ २
षष्टिं शतसहस्राणि ब्राह्मणानां महौजसाम् ।
विधिवद्भोजयामास भोज्यं सर्वगुणान्वितम् ॥ ३
आच्छाद्य च महाबाहुर्धनतृष्णामपानुदत् ।
ब्राह्मणानां तदा कृष्णस्तदभूद्रोमहर्षणम् ॥ ४
सुवर्णं चैव गाश्चैव शयनाच्छादनानि च ।
दीयमानं तदा विप्रः प्रभूतमिति चाब्रुवन् ॥ ५
वासुदेवोऽथ दाशार्हो बलदेवः ससात्यकिः ।
अभिमन्योस्तदा श्राद्धमकुर्वन्सत्यकस्तदा ।
अतीव दुःखसंतप्ता न शमं चोपलेभिरे ॥ ६
तथैव पाण्डवा वीरा नगरे नागसाह्वये ।
नोपागच्छन्त वै शान्तिमभिमन्युविनाकृताः ॥ ७
सुबहूनि च राजेन्द्र दिवसानि विराटजा ।
नाभुङ्क्त पतिदुःखार्ता तदभूत्करुणं महत् ॥ ८
म्रियमाणे तु तस्मिंस्तु गर्भे कुक्षिस्थ एव च ।
आजगाम ततो व्यासो ज्ञात्वा दिव्येन चक्षुषा ९
समागम्याब्रवीद्धीमान्पृथां पृथुललोचनाम् ।
उत्तरां च महातेजाः शोकः संत्यज्यतामयम् १०
जनिष्यते महातेजाः पुत्रस्तव यशस्विनि ।
प्रभावाद्वासुदेवस्य मम व्याहरणादपि ।
पाण्डवानामयं चान्ते पालयिष्यति मेदिनीम् ११
धनञ्जयं च संप्रेक्ष्य धर्मराजस्य शृण्वतः ।
व्यासो वाक्यमुवाचेदं हर्षयन्निव भारत ॥ १२
पौत्रस्तव महाभागो जनिष्यति महामनाः ।
पृथ्वीं सागरपर्यन्तां पालयिष्यति धर्मतः ॥ १३
तस्माच्छोकं कुरुश्रेष्ठ जहि त्वमरिकर्शन ।

---

कुक्षिस्थ एव तस्याथ गर्भो वै संप्रलीयतेति झ. पाठः ॥९॥

ष्टितमोऽध्यायः ॥ ६२ ॥

विचार्यमत्र न हि ते सत्यमेतद्भविष्यति ॥ १४
यच्चापि वृष्णिवीरेण कृष्णेन कुरुनन्दन ।
पुरोक्तं तत्तथा भावि मा तेऽत्रास्तु विचारणा१५
विबुधानां गतो लोकानक्षयानात्मनिर्जितान् ।
न स शोच्यस्त्वया वीरो न चान्यैः कुरुभिस्तथा॥
एवं पितामहेनोक्तो धर्मात्मा स धनञ्जयः ।
त्यक्त्वा शोकं महाराज हृष्टरूपोऽभवत्तदा ॥१७
पिताऽपि तव धर्मज्ञ गर्भे तस्मिन्महामते ।
अवर्धत यथाकामं शुक्लपक्षे यथा शशी ॥ १८
ततः संचोदयामास व्यासो धर्मात्मजं नृपम् ।
अश्वमेधं प्रति तदा ततः सोऽन्तर्हितोऽभवत् १९
धर्मराजोपि मेधावी श्रुत्वा व्यासस्य तद्वचः ।
वित्तोपनयने तात चकार गमने मतिम् ॥ २०

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि द्विषष्टितमोऽध्यायः ॥ ६२ ॥

## त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

युधिष्ठिरेण व्यासाज्ञया भीमादिभिः सहालोच्य यज्ञार्थं धनाहरणाय सहभ्रात्रादिभिर्हिमवत्पार्श्वंप्रति प्रस्थानम् ॥ १ ॥

जनमजय उवाच ।
श्रुत्वैतद्वचनं ब्रह्मन्व्यासेनोक्तं महात्मना
अश्वमेधं प्रति तदा किं भूयः प्रचकार ह ॥ १
रत्नं च यन्मरुत्तेन निहितं वसुधातले ।
तदवाप कथं चेति तन्मे ब्रूहि द्विजोत्तम ॥ २
वैशंपायन उवाच ।
श्रुत्वा द्वैपायनवचो धर्मराजो युधिष्ठिरः ।
भ्रातॄन्सर्वान्समानाय्य काले वचनमब्रवीत् ॥ ३
अर्जुनं भीमसेनं च माद्रीपुत्रौ यमावपि ।
श्रुतं वो वचनं वीराः सौहृदाद्यन्महात्मना ॥ ४
कुरूणां हितकामेन प्रोक्तं कृष्णेन धीमता ।
तपोवृद्धेन महता सुहृदां भूतिमिच्छता ॥ ५
गुरुणा धर्मशीलेन व्यासेनाद्भुतकर्मणा ।
भीष्मेण च महाप्राज्ञ गोविन्देन च धीमता॥६
संस्मृत्य तदहं सम्यक्कर्तुमिच्छामि पाण्डवाः ।
आयत्यां च तदात्वे च सर्वेषां तद्धि नो हितम्॥७
अनुबन्धे च कल्याणं यद्वचो ब्रह्मवादिनः ।
इयं हि वसुधा सर्वा क्षीणरत्ना कुरूद्वहाः ॥ ८
तच्चाचष्ट तदा व्यासो मरुत्तस्य धनं नृपाः ।
यद्येतद्वो बहुमतं मन्यध्वं वा क्षमं यदि ।
तदानयामहे सर्वे कथं वा भीम मन्यसे ॥ ९
इत्युक्तवाक्ये नृपतौ तदा कुरुकुलोद्वह ।
भीमसेनो नृपश्रेष्ठं प्राञ्जलिर्वाक्यमब्रवीत् ॥ १०
रोचते मे महाबाहो यदिदं भाषितं त्वया ।
व्यासाख्यातस्य वित्तस्य समुपानयनं प्रति ॥ ११
तत्प्राप्नुयामहे धर्मायद्धनं काङ्क्षितं प्रभो ।
कृतमेव महाराज भवेदिति मतिर्मम ॥ १२
ते वयं प्रणिपातेन गिरीशस्य महात्मनः ।
तदानयाम भद्रं ते समभ्यर्च्य कपर्दिनम् ॥ १३
'तं विभुं देवदेवेशं शूलपाणिं त्रिलोचनम् ।
अनादिनिधनं शंभुं नमस्याम महेश्वरम् ॥' १४
लोकनाथं गणाध्यक्षं तस्यैवानुचरांश्च तान् ।
प्रसाद्यार्थमवाप्स्यामो नूनं वाग्बुद्धिकर्मभिः ॥ १५
रक्षन्ते ये च तद्द्रव्यं किन्नरा रौद्रदर्शनाः ।
ते च वश्या भविष्यन्ति प्रसन्ने वृषभध्वजे ॥ १६
'स हि देवः प्रसन्नात्मा भक्तानां परमेश्वरः ।
ददात्यमरतां चापि किं पुनः काञ्चनं प्रभुः ॥ १७
वनस्थस्य पुरा जिष्णोरस्त्रं पाशुपतं महत् ।
रौद्रं ब्रह्मशिरश्चादात्प्रसन्नः किं पुनर्धनम् ॥ १८
वयं सर्वे हि तद्भक्ताः स चास्माकं प्रसीदति ।
तत्प्रसादादिदं राज्यं प्राप्तं कौरवनन्दन ॥ १९
अभिमन्योर्वधे वृत्ते प्रतिज्ञाते धनञ्जये ।
जयद्रथवधार्थाय स्वप्ने लोकगुरुर्निशि ।
प्रसाद्य लब्धवानस्त्रमर्जुनः सहकेशवः ॥ २०
तत्र प्रभातां रजनीं फल्गुनस्याग्रतः प्रभुः ।
जघान सैन्यं शूलेन प्रत्यक्षं सव्यसाचिनः ॥२१

कस्तां सेनां महाराज मनसाऽपि प्रधर्षयेत् ।
द्रोणकर्णबलैर्युक्तां महेष्वासैः प्रहारिभिः ।
ऋते देवान्महेष्वासाद्बहुरूपान्महेश्वरात् ॥ २२
तस्यैव च प्रसादेन निहतास्तव शत्रवः ।
अश्वमेधस्य संसिद्धिं तव संपादयिष्यति ।' २३
श्रुत्वैवं वदतस्तस्य वाक्यं भीमस्य भारत ।
प्रीतो धर्मात्मजो राजा बभूवातीव भारत ।
अर्जुनप्रमुखाश्चापि तथेत्येवाब्रुवन्वचः ॥ २४
कृत्वा तु पाण्डवाः सर्वे रत्नाहरणनिश्चयम् ।
सेनामाज्ञापयामासुर्नक्षत्रेऽहनि च ध्रुवे ॥ २५
ततो ययुः पाण्डुसुता ब्राह्मणान्स्वस्ति वाच्य च ।
अर्चयित्वा सुरश्रेष्ठं पूर्वमेव महेश्वरम् ॥ २६
मोदकैः पायसेनाथ मांसापूपैस्तथैव च ।
आशास्य च महात्मानं प्रययुर्मुदिता भृशम् ॥ २७
तेषां प्रयास्यतां तत्र मङ्गलानि शुभान्यथ ।
प्राहुः प्रहृष्टमनसो द्विजाग्र्या नागराश्च ते ॥ २८
ततः प्रदक्षिणीकृत्य शिरोभिः प्रणिपत्य च ।
ब्राह्मणानग्निसहितान्प्रययुः पाण्डुनन्दनाः ॥ २९
समनुज्ञाप्य राजानं पुत्रशोकसमाहतम् ।
धृतराष्ट्रं सभार्यं वै पृथां च पृथुलोचनाम् ॥ ३०
मूले निक्षिप्य कौरव्यं युयुत्सुं धृतराष्ट्रजम् ।
संपूज्यमानाः पौरैश्च ब्राह्मणैश्च मनीषिभिः ।
'प्रययुः पाण्डवा वीरा नियमस्थाः शुचिव्रताः' ३१

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

## चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

युधिष्ठिरेण हिमवद्गिरिमेत्य सेनानिवेशनम् ॥ १ ॥ तत्र ब्राह्मणचोदनया तैः सहोपवासादिव्रताचरणपूर्वकं निशायापनम् ॥ २ ॥

वैशंपायन उवाच ।
ततस्ते प्रययुर्हृष्टाः प्रहृष्टनरवाहनाः ।
रथघोषेण महता पूरयन्तो वसुंधराम् ॥ १
संस्तूयमानाः स्तुतिभिः सूतमागधबन्दिभिः ।
स्वेन सैन्येन संवीता यथाऽऽदित्याः स्वरश्मिभिः २
पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्धनि ।
बभौ युधिष्ठिरस्तत्र पौर्णमास्यामिवोडुराट् ॥ ३
जयाशिषः प्रहृष्टानां नराणां पथि पाण्डवः ।
प्रत्यगृह्णाद्यथान्यायं यथावत्पुरुषर्षभः ॥ ४
तथैव सैनिका राजन्राजानमनुयान्ति ये ।
तेषां हलहलाशब्दो दिवं स्तब्ध्वा व्यतिष्ठत ॥ ५
सरांसि सरितश्चैव वनान्युपवनानि च ।
अत्यक्रामन्महाराजो गिरिं चाप्यन्वपद्यत ॥ ६
तस्मिन्देशे च राजेन्द्र यत्र तद्द्रव्यमुत्तमम् ।
चक्रे निवेशनं राजा पाण्डवः सहसैनिकैः ।
शिवे देशे समे चैव तदा भरतसत्तम ॥ ७
अग्रतो ब्राह्मणान्कृत्वा तपोविद्यादमान्वितान् ।
पुरोहितं च कौरव्य वेदवेदाङ्गपारगम् ॥ ८
आग्निवेश्यं च राजानो ब्राह्मणाः सपुरोधसः ।
कृत्वा शान्तिं यथान्यायं सर्वशः पर्यवारयन् ॥ ९
कृत्वा तु मध्ये राजानममात्यांश्च यथाविधि ।
षट्पदं नवसङ्ख्यानं निवेशं चक्रिरे जनाः ॥ १०
मत्तानां वारणेन्द्राणां निवेशं च यथाविधि ।
कारयित्वा स राजेन्द्रो ब्राह्मणानिदमब्रवीत् ॥ ११
अस्मिन्कार्ये द्विजश्रेष्ठा नक्षत्रे दिवसे शुभे ।
यथा भवन्तो मन्यन्ते कर्तुमर्हन्ति तत्तथा ॥ १२
न नः कालात्ययो वै स्यादिहैव परिलम्बताम् ।
इति निश्चित्य विप्रेन्द्राः क्रियतां यदनन्तरम् ॥ १३

---

ध्रुवे नक्षत्रे रोहिण्यामुत्तरात्रये च । अहनि वारे ध्रुवे रविवारे । उत्तरार्केऽमृतसिद्धयोगे इत्यर्थः ॥ २५ ॥ मूले वंशस्याद्ये । कुन्तीधृतराष्ट्रसमीपे इत्यर्थः ॥ ३१ ॥ त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

आग्निवेश्य धौम्यम् ॥ ९ ॥ चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

श्रुत्वैतद्वचनं राज्ञो ब्राह्मणाः सपुरोधसः ।
इदमूचुर्वचो हृष्टा धर्मराजप्रियेप्सवः ॥ १४
अद्यैव नक्षत्रमहश्च पुण्यं
यतामहे श्रेष्ठतमक्रियासु ।
तपोभिरद्येह वसाम राज-
न्नुपोष्यतां चापि भवद्भिरद्य ॥ १५
श्रुत्वा तु तेषां द्विजसत्तमानां
कृतोपवासा रजनीं नरेन्द्राः ।
ऊषुः प्रतीताः कुशसंस्तरेषु
यथाऽध्वरे प्रज्वलिता हुताशाः ॥ १६
ततो निशा सा व्यगमन्महात्मनां
संशृण्वतां विप्रसमीरिता गिरः ।
ततः प्रभाते विमले द्विजर्षभा
वचोऽब्रुवन्धर्मसुतं नराधिपम् ॥ १७

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

## पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

युधिष्ठिरेण विधिवन्नानाबलिहरणादिना सपरिचरमहेश्वरपरितोषणेन विविधकनकभाण्डाहरणेन पुनर्नगरंप्रत्यागमनम् १॥

ब्राह्मणा ऊचुः ।
क्रियतामुपहारोऽद्य त्र्यम्बकस्य महात्मनः ।
दत्त्वोपहारं नृपते ततः स्वार्थे यतामहे ॥ १
वैशंपायन उवाच ।
श्रुत्वा तु वचनं तेषां ब्राह्मणानां युधिष्ठिरः ।
गिरीशस्य यथान्यायमुपहारमुपाहरत् ॥ २
आज्येन तर्पयित्वाऽग्निं विधिवत्संस्कृतेन च ।
मन्त्रसिद्धं चरुं कृत्वा पुरोधाः स ययौ तदा ॥ ३
स गृहीत्वा सुमनसो मन्त्रपूता जनाधिप ।
मोदकैः पायसेनाथ मांसैश्चोपाहरद्बलिम् ॥ ४
सुमनोभिश्च चित्राभिर्लाजैरुच्चावचैरपि ।
सर्वं स्विष्टकृतं हुत्वा विधिवद्वेदपारगः ।
किंकराणां ततः पश्चाच्चकार बलिमुत्तमम् ॥ ५
यक्षेन्द्राय कुबेराय माणिभद्राय चैव ह ।
तथाऽन्येषां च यक्षाणां भूतानां पतयश्च ये ॥ ६
कृसरेण च मांसेन निवापैस्तिलसंयुतैः ।
ओदनं कुंभशः कृत्वा पुरोधाः समुपाहरत् ॥ ७
ब्राह्मणेभ्यः सहस्राणि गवां दत्त्वा तु भूमिपः ।
नक्तंचराणां भूतानां व्यादिदेश बलिं तदा ॥ ८
धूपगन्धनिरुद्धं तत्सुमनोभिश्च संवृतम् ।
शुशुभे स्थानमत्यर्थं देवदेवस्य पार्थिव ॥ ९
कृत्वा पूजां तु रुद्रस्य गणानां चैव सर्वशः ।
ययौ व्यासं पुरस्कृत्य नृपो रत्ननिधिं प्रति ॥ १०
पूजयित्वा धनाध्यक्षं प्रणिपत्याभिवाद्य च ।
सुमनोभिर्विचित्राभिरपूपैः कृसरेण च ॥ ११
शङ्खादींश्च निधीन्सर्वान्निधिपालांश्च सर्वशः ।
अर्चयित्वा द्विजाग्र्यान्स स्वस्ति वाच्य च वीर्यवान् ।
तेषां पुण्याहघोषेण तेजसा समवस्थितः ।
प्रीतिमान्स कुरुश्रेष्ठः खानयामास तं निधिम् ॥ १३
ततः पात्रीः सकरकां बहुरूपा मनोरमाः ।
भृङ्गाराणि कटाहानि कलशान्वर्धमानकान् ॥ १४
बहूनि च विचित्राणि भाजनानि सहस्रशः ।
उद्धारयामास तदा धर्मराजो युधिष्ठिरः ॥ १५
तेषां रक्षणमप्यासीन्महान्करपुटस्तथा ।
नद्धं च भाजनं राजंस्तुलार्धमभवन्नृप ॥ १६
वाहनं पाण्डुपुत्रस्य तत्रासीत्तु विशांपते ।
षष्टिरुष्ट्रसहस्राणि शतानि द्विगुणा हयाः ॥ १७
वारणाश्च महाराज सहस्रशतसंमिताः ।
शकटानि रथाश्चैव तावदेव करेणवः ।
खराणां पुरुषाणां च परिसङ्ख्या न विद्यते ॥ १८
एतद्वित्तं तदभवद्यदुद्दध्रे युधिष्ठिरः ।
षोडशाष्टौ चतुर्विंशत्सहस्रं भारलक्षणम् ॥ १९

पात्रीः महान्ति ओदनोद्धरणपात्राणि । करकां अल्पघटाः । भृङ्गाराणि गडुकान् । वर्धमानकान् शरावाणि ॥ १४ ॥
करपुटः करसंपुटाकारं द्विदलभाजनं उष्ट्रादिवाह्यम् संदूख इति प्रसिद्धम् ॥ १६ ॥ पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

एतेष्वादाय तद्द्रव्यं पुनरभ्यर्च्य पाण्डवः ।
महादेवं प्रति ययौ पुरं नागाह्वयं प्रति ॥ २०
द्वैपायनाभ्यनुज्ञातः पुरस्कृत्य पुरोहितम् ।
गोरुते गोरुते चैव न्यवसत्पुरुषर्षभः ॥ २१
सा पुराऽभिमुखा राजन्नुवाह महती चमूः ।
कृच्छ्राद्द्रविणभारार्ता हर्षयन्ती कुरूद्वहान् ॥ २२

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

## षट्षष्टितमोऽध्यायः ॥ ६६ ॥

कृष्णेन बलभद्रसुभद्रादिभिः सह यज्ञार्थं हास्तिनपुरं प्रत्यागमनम् ॥ १ ॥ तत्र उत्तरायां परिक्षितो जननम् ॥ २ ॥ अश्वत्थामास्त्रेण जननकालएव शवभूतस्य तस्योज्जीवनाय कुन्त्यादिभिः श्रीकृष्णंप्रति प्रार्थना ॥ ३ ॥

वैशंपायन उवाच ।
एतस्मिन्नेव काले तु वासुदेवोऽपि वीर्यवान् ।
उपायाद्वृष्णिभिः सार्धं पुरं वारणसाह्वयम् ॥ १
समयं वाजिमेधस्य विदित्वा पुरुषर्षभः ।
यथोक्तो धर्मपुत्रेण प्रव्रजन्स्वपुरीं प्रति ॥ २
रौक्मिणेयेन सहितो युयुधानेन चैव ह ।
चारुदेष्णेन सांबेन गदेन कृतवर्मणा ॥ ३
सारणेन च वीरेण निशठेनोन्मुखेन च ।
बलदेवं पुरस्कृत्य सुभद्रासहितस्तदा ॥ ४
द्रौपदीमुत्तरां चैव पृथां चाप्यवलोककः ।
समाश्वासयितुं चापि क्षत्रिया निहतेश्वराः ॥ ५
तानागतान्समीक्ष्यैव धृतराष्ट्रो महीपतिः ।
प्रत्यगृह्णाद्यथान्यायं विदुरश्च महामनाः ॥ ६
तत्रैव न्यवसत्कृष्णः स्वर्चितः पुरुषोत्तमः ।
विदुरेण महातेजास्तथैव च युयुत्सुना ॥ ७
वसत्सु वृष्णिवीरेषु तत्राथ जनमेजय ।
जज्ञे तव पिता राजन्परिक्षित्परवीरहा ॥ ८
स तु राजा महाराज ब्रह्मास्त्रेणावपीडितः ।
शवो बभूव निश्चेष्टो हर्षशोकविवर्धनः ॥ ९
हृष्टानां सिंहनादेन जनानां तत्र निःस्वनः ।
आविवेश दिशःसर्वाः पुनरेवाभ्युपागमत् ॥ १०
ततः सोतित्वरः कृष्णो विवेशान्तःपुरं तदा ।
युयुधानद्वितीयो वै व्यथितेन्द्रियमानसः ॥ ११
ततस्त्वरितमायान्तीं ददर्श स्वां पितृष्वसाम् ।
क्रोशन्तीमभिधावेति वासुदेवं पुनःपुनः ॥ १२
पृष्ठतो द्रौपदीं चैव सुभद्रां च यशस्विनीम् ।
विक्रोशन्त्यश्च करुणं पाण्डवानां स्त्रियो नृप ॥ १३
ततः कृष्णं समासाद्य कुन्ती भोजसुता तदा ।
प्रोवाच राजशार्दूल बाष्पगद्गदया गिरा ॥ १४
वासुदेव महाबाहो सुप्रजा देवकी त्वया ।
त्वं नो गतिः प्रतिष्ठा च त्वदायत्तमिदं कुलम् ॥ १५
यदुप्रवीर योऽयं ते स्वस्रीयस्यात्मजः प्रभो ।
अश्वत्थाम्ना हतो जातस्तमुज्जीवय केशव ॥ १६
त्वया ह्येतत्प्रतिज्ञातमैषीके यदुनन्दन ।
अहं संजीवयिष्यामि मृतं जातमिति प्रभो ॥ १७
सोयं जातो मृतस्तात पश्यैनं पुरुषर्षभ ।
उत्तरां च सुभद्रां च द्रौपदीं मां च माधव ॥ १८
धर्मपुत्रं च भीमं च फल्गुनं नकुलं तथा ।
सहदेवं च दुर्धर्षं सर्वान्नस्त्रातुमर्हसि ॥ १९
अस्मिन्प्राणाः समायत्ताः पाण्डवानां ममैव च ।
पाण्डोश्च पिण्डो दाशार्ह तथैव श्वशुरस्य मे ॥ २०
अभिमन्योश्च भद्रं ते प्रियस्य सदृशस्य च ।
प्रियमुत्पादयाद्य त्वं प्रेतस्यापि जनार्दन ॥ २१
उत्तरा हि पुरोक्तं वै कथयत्यरिसूदन ।
अभिमन्योर्वचः कृष्ण प्रियत्वात्तन्न संशयः ॥ २२
अब्रवीत्किल दाशार्ह वैराटीमार्जुनिस्तदा ।
मातुलस्य कुलं भद्रे तव पुत्रो गमिष्यति ॥ २३
गत्वा वृष्ण्यन्धककुलं धनुर्वेदं ग्रहीष्यति ।
अस्त्राणि च विचित्राणि नीतिशास्त्रं च केवलं ॥ २४

क्षत्रियाः स्त्रियः ॥ ५ ॥ प्रविश्य प्रदिशः सर्वाः पुनरेव व्युपारमत् इति झ. पाठः ॥ १० ॥ विक्रोशन्त्यः विक्रोशन्तीः ॥ १३ ॥ मातुलस्य अभिमन्युमातुलस्य कृष्णस्य । तत्तुल्यपराक्रम इत्यर्थः ॥ २३ ॥ षट्षष्टितमोऽध्यायः ॥ ६६ ॥

इत्येतत्प्रणयात्तात सौभद्रः परवीरहा ।
कथयामास दुर्धर्षस्तथा चैतन्न संशयः ॥ २५
तास्त्वां वयं प्रणम्येह याचामो मधुसूदन ।
कुलस्यास्य हितार्थं च कुरु कल्याणमुत्तमम् ॥२६
एवमुक्त्वा तु वार्ष्णेयं पृथा पृथुललोचना ।
उद्धृत्य बाहू दुःखार्ता ताश्चान्याः प्रापतन्भुवि२७
अब्रुवंश्च महाराज सर्वाः सास्राविलेक्षणाः ।
स्वस्रीयो वासुदेवस्य मृतो जात इति प्रभो ॥२८
एवं गते ततः कुन्तीं पर्यगृह्णाज्जनार्दनः ।
भूमौ निपतितां चैनां सान्त्वयामास भारत २९

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि षट्षष्टितमोऽध्यायः ॥ ६६ ॥

## सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

सुभद्रया श्रीकृष्णंप्रति तन्महिमसंस्तवनपूर्वकं परिक्षिदुज्जीवनप्रार्थना ॥ १ ॥

वैशंपायन उवाच ।
उत्थितायां पृथायां तु सुभद्रा भ्रातरं तदा ।
दृष्ट्वा चुक्रोश दुःखार्ता वचनं चेदमब्रवीत् ॥ १
पुण्डरीकाक्ष पश्य त्वं पौत्रं पार्थस्य धीमतः ।
परिक्षीणेषु कुरुषु परिक्षीणं गतायुषम् ॥ २
इषीका द्रोणपुत्रेण भीमसेनार्थमुद्यता ।
सोत्तरायां निपतिता विजये मयि चैव ह ॥ ३
सेयं ज्वलन्ती हृदये मयि तिष्ठति केशव ।
यन्न पश्यामि दुर्धर्ष सहपुत्रं तु तं प्रभो ॥ ४
किंनु वक्ष्यति धर्मात्मा धर्मराजो युधिष्ठिरः ।
भीमसेनार्जुनौ चापि माद्रवत्याः सुतौ च तौ ५
श्रुत्वाऽभिमन्योस्तनयं जातं च मृतमेव च ।
मुषिता इव वार्ष्णेय द्रोणपुत्रेण पाण्डवाः ॥ ६
अभिमन्युः प्रियः कृष्ण पितॄणां नात्र संशयः ।
ते श्रुत्वा किंनु वक्ष्यन्ति द्रोणपुत्रास्त्रनिर्जिताः ७
भविता नः परं दुःखं किंनु मन्ये जनार्दन ।
अभिमन्योः सुतं कृष्ण मृतं जातमरिंदम ॥ ८
साऽहं प्रसादये कृष्ण त्वामद्य शिरसा नता ।
पृथेयं द्रौपदी चैव ताः पश्य पुरुषोत्तम ॥ ९
यदा द्रोणसुतो गर्भान्पाण्डूनां हन्ति माधव ।
तदा किल त्वया द्रौणिः क्रुद्धेनोक्तोऽरिमर्दन १०
अकामं त्वां करिष्यामि ब्रह्मबन्धो नराधम ।
अहं संजीवयिष्यामि किरीटितनयात्मजम् ॥ ११
इत्येतद्वचनं श्रुत्वा जानानाऽहं बलं तव ।
प्रसादये त्वां दुर्धर्ष जीवतामभिमन्युजः ॥ १२
यद्येतत्त्वं प्रतिश्रुत्य न करोषि वचः शुभम् ।
सकलं वृष्णिशार्दूल मृतां मामवधारय ॥ १३
अभिमन्योः सुतो वीर न संजीवति यद्ययम् ।
जीवति त्वयि दुर्धर्ष किं करिष्याम्यहं त्वया १४
संजीवयैनं दुर्धर्ष मृतं त्वमभिमन्युजम् ।
सदृशाक्षसुतं वीर सस्यं वर्षन्निवाम्बुदः ॥ १५
त्वं हि केशव धर्मात्मा सत्यवान्सत्यविक्रमः ।
स तां वाचमृतां कर्तुमर्हसि त्वमरिंदम ॥ १६
इच्छन्नपि हि लोकांस्त्रीञ्जीवयेथा मृतानिमान् ।
किं पुनर्दयितं जातं स्वस्रीयस्यात्मजं मृतम् ॥ १७
प्रभावज्ञाऽस्मि ते कृष्ण तस्मात्त्वां याचयाम्यहम् ।
कुरुष्व पाण्डुपुत्राणामिमं परमनुग्रहम् ॥ १८
स्वसेति वा महाबाहो हतपुत्रेति वा पुनः ।
प्रपन्ना मामियं चेति दयां कर्तुमिहार्हसि ॥ १९

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

घृतेन सिक्तैरिति शेषः ॥ ४ ॥

## अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

कृष्णेन परिक्षित्सूतिकागृहप्रवेशनम् ॥ १ ॥ तत्रोत्तरया कृष्णसमीपे बहुधा विलापपूर्वकं पुत्रोज्जीवनप्रार्थना ॥ २ ॥

शंपायन उवाच ।
एवमुक्तस्तु राजेन्द्र केशिहा दुःखमूर्च्छितः ।
तथेति व्याजहारोच्चैर्ह्लादयन्निव तं जनम् ॥ १
वाक्येनैतेन हि तदा तं जनं पुरुषर्षभः ।
ह्लादयामास स विभुर्घर्मार्तं सलिलैरिव ॥ २
ततः स प्राविशत्तूर्णं जन्मवेश्म पितुस्तव ।
अर्चितं पुरुषव्याघ्र सितैर्माल्यैर्यथाविधि ॥ ३
अपां कुम्भैः सुपूर्णैश्च विन्यस्तैः सर्वतोदिशम् ।
घृतेन तिन्दुकालातैः सर्षपैश्च महाभुज ॥ ४
अस्त्रैश्च विमलैर्न्यस्तैः पावकैश्च समन्ततः ।
वृद्धाभिश्चापि रामाभिः परिवारार्थमावृतः ।
दक्षैश्च परितो धीर भिषग्भिः कुशलैस्तथा ॥ ५
ददर्श च स तेजस्वी रक्षोघ्नान्यपि सर्वशः ।
द्रव्याणि स्थापितानि स विधिवत्कुशलैर्जनैः ॥६
तथायुक्तं च तद्दृष्ट्वा जन्मवेश्म पितुस्तव ।
हृष्टोऽभवद्धृषीकेशः साधुसाध्विति चाब्रवीत् ॥७
तथा ब्रुवति वार्ष्णेये प्रहृष्टवदने तदा ।
द्रौपदी त्वरिता गत्वा वैराटीं वाक्यमब्रवीत् ॥८
अयमायाति ते भर्तुर्मातुलो मधुसूदनः ।
पुराणर्षिरचिन्त्यात्मा समीपमपराजितः ॥ ९
साऽपि बाष्पकलां वाचं निगृह्याश्रूणि चैव ह ।
असंवीताऽभवद्देवी देववत्कृष्णमीयुषी ॥ १०
सा तथा दूयमानेन हृदयेन तपस्विनी ।
दृष्ट्वा गोविन्दमायान्तं कृपणं पर्यदेवयत् ॥ ११
पुण्डरीकाक्ष पश्यावां बालेन हि विनाकृतौ
अभिमन्युं च मां चैव हठात्तुल्यं जनार्दन ॥१२
वार्ष्णेयमधुहन्वीर शिरसा त्वां प्रसादये
द्रोणपुत्रास्त्रनिर्दग्धं जीवयैनं ममात्मजम् ॥ १३
यदि स धर्मराज्ञा वा भीमसेनेन वा पुनः ।
त्वया वा पुण्डरीकाक्ष वाक्यमुक्तमिदं भवेत् १४
अजानतीमिषीकेयं जनित्रीं हन्त्विति प्रभो ।
अहमेव विनष्टा स्यां नायमेवं गतो भवेत् ॥ १५
गर्भस्थस्यास्य बालस्य ब्रह्मास्त्रेण निपातनम् ।
कृत्वा नृशंसं दुर्बुद्धिर्द्रौणिः किं फलमश्नुते ॥१६
सा त्वां प्रसाद्य शिरसा याचे शत्रुनिबर्हण ।
प्राणांस्त्यक्ष्यामि गोविन्द नायं संजीवते यदि ॥
अस्मिन्हि बहवः साधो ये ममासन्मनोरथाः ।
ते द्रोणपुत्रेण हताः किंनु जीवामि केशव ॥ १८
आसीन्मम मतिः कृष्ण पूर्णोत्सङ्गा जनार्दन ।
अभिवादयिष्ये हृष्टेति तदिदं वितथीकृतम् ॥१९
चपलाक्षस्य दायादे मृतेऽस्मिन्पुरुषर्षभ ।
विफला मे कृताः कृष्ण हृदि सर्वे मनोरथाः २०
चपलाक्षः किलातीव प्रियस्ते मधुसूदन ।
सुतं पश्य त्वमस्यैनं ब्रह्मास्त्रेण निपातितम् ॥२१
कृतघ्नोऽयं नृशंसोऽयं यथाऽस्य जनकस्तथा ।
यः पाण्डवीं श्रियं त्यक्त्वा गतोऽद्य यमसादनं २२
मया चैतत्प्रतिज्ञातं रणमूर्धनि केशव ।
अभिमन्यौ हते वीर त्वामेष्याम्यचिरादिति २३
तच्च नाकरवं कृष्ण नृशंसा जीवितप्रिया ।
इदानीं मां गतां तत्र किंनु वक्ष्यति फाल्गुनिः २४

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

## एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

कृष्णेन सशपथं संस्पर्शनेन परिक्षितः समुज्जीवनम् ॥ १ ॥

वैशंपायन उवाच ।
सैवं विलप्य करुणं सोन्मादेव तपस्विनी
उत्तरा न्यपतद्भूमौ कृपणा पुत्रगृद्धिनी ॥ १
तां तु दृष्ट्वा निपतितां हतपुत्रपरिच्छदाम् ।

पुत्रोत्सङ्गा जनार्दनेति झ. पाठः ॥ १९ ॥

अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

चुक्रोश कुन्ती दुःखार्ता सर्वाश्च भरतस्त्रियः ॥२
मुहूर्तमिव राजेन्द्र पाण्डवानां निवेशनम् ।
अप्रेक्षणीयमभवदार्तस्वनविनादितम् ॥ ३
सा मुहूर्तं च राजेन्द्र पुत्रशोकाभिपीडिता ।
कश्मलाभिहता वीर वैराटी त्वभवत्तदा ॥ ४
प्रतिलभ्य तु सा संज्ञामुत्तरा भरतर्षभ ।
अङ्कमारोप्य तं पुत्रमिदं वचनमब्रवीत् ॥ ५
धर्मज्ञस्य सुतः संस्त्वं न धर्ममवबुध्यसे ।
यस्त्वं वृष्णिप्रवीरस्य कुरुषे नाभिवादनम् ॥ ६
पुत्र गत्वा मम वचो ब्रूयास्त्वं पितरं त्विदम्
दुर्मरं प्राणिनां वीर काले प्राप्ते कथंचन ॥ ७
याऽहं त्वया विनाऽद्येह पत्या पुत्रेण चैव ह ।
मरणं नाभिगच्छामि हतस्वस्तिरकिंचना ॥ ८
अथवा धर्मराज्ञाऽहमनुज्ञाता महाभुज ।
भक्षयिष्ये विषं घोरं प्रवेक्ष्ये वा हुताशनम् ॥९
अथवा दुर्भरं तात यदिदं मे सहस्रधा ।
पतिपुत्रविहीनाया हृदयं न विदीर्यते ॥ १०
उत्तिष्ठ पुत्र पश्येमां दुःखितां प्रपितामहीम् ।
आर्तामुपप्लुतां दीनां निमग्नां शोकसागरे ॥११
आर्यां च पश्य पाञ्चालीं सात्वतीं च तपस्विनीम् ।
मां च पश्य सुदुःखार्तां व्याधविद्धां मृगीमिव १२
उत्तिष्ठ पश्य वदनं लोकनाथस्य धीमतः ।
पुण्डरीकपलाशाक्षं पुरेव चपलेक्षणः ॥ १३
एवं विप्रलपन्तीं तु दृष्ट्वा निपतितां पुनः ।
उत्तरां तां स्त्रियः सर्वाः पुनरुत्थापयन्त्युत ॥१४
उत्थाय च पुनर्धैर्यात्तदा मत्स्यपतेः सुता
प्राञ्जलिः पुण्डरीकाक्षं भूमावेवाभ्यवादयत् ॥१५
श्रुत्वा स तस्या विपुलं विलापं पुरुषर्षभः ।
उपस्पृश्य ततः कृष्णो ब्रह्मास्त्रं प्रत्यसंहरत् ॥१६
प्रतिजज्ञे च दाशार्हस्तस्य जीवितमच्युतः ।
अब्रवीच्च विशुद्धात्मा सर्वं विश्रावयञ्जगत् ॥ १७
न ब्रवीम्युत्तरे मिथ्या सत्यमेतद्भविष्यति ।
एष संजीवयाम्येनं पश्यतां सर्वदेहिनाम् ॥ १८
नोक्तपूर्वं मया मिथ्या स्वैरेष्वपि कदाचन ।
न च युद्धात्परावृत्तस्तथा संजीवतामयम् ॥ १९
यथा मे दयितो धर्मो ब्राह्मणश्च विशेषतः ।
अभिमन्योः सुतो जातो मृतो जीवत्वयं तथा२०
यथाऽहं नाभिजानामि विजये तु कदाचन ।
विरोधं तेन सत्येन मृतो जीवत्वयं शिशुः ॥२१
यथा सत्यं च धर्मश्च मयि नित्यं प्रतिष्ठितौ ।
तथा मृतः शिशुरयं जीवतादभिमन्युजः ॥ २२
यथा कंसश्च केशी च धर्मेण निहतौ मया ।
तेन सत्येन बालोऽयं पुनः संजीवतामिह ॥२३
इत्युक्त्वा वासुदेवोऽथ तं बालं भरतर्षभ ।
'पादेन कमलाभेन ब्रह्मरुद्रार्चितेन च ।
पस्पर्श पुण्डरीकाक्ष आपादतलमस्तकम् ॥ २४
स्पृष्टमात्रस्तु कृष्णेन स बालो भरतर्षभ ।
शनैःशनैर्महाराज प्रापद्यत स चेतनाम् ॥' २५
शनैःशनैर्महाराज प्रास्पन्दत सचेतनः ॥ २६

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

## सप्ततितमोऽध्यायः ॥ ७० ॥

कृष्णेनाभिमन्युसुतस्य पदप्रवृत्तिनिमित्तकथनपूर्वकं नामकरणम् ॥ १ ॥ अत्रान्तरे युधिष्ठिरादीनां स्वर्णभारानयनेन हस्तिनपुरंप्रत्यागमनश्रवणेन कृष्णादिभिस्तत्प्रत्युद्यानम् ॥ २ ॥

वैशंपायन उवाच ।
ब्रह्मास्त्रं तु यदा राजन्कृष्णेन प्रतिसंहृतम् ।
तदा तद्वेश्म ते पित्रा तेजसाऽभिविदीपितम् ॥१
ततो रक्षांसि सर्वाणि नेशुस्त्यक्त्वा गृहं तु तत् ।
अन्तरिक्षे च वागासीत्साधु केशव साध्विति ॥२
तदस्त्रं ज्वलितं चापि पितामहमगात्तदा ।

धर्मजस्य सुत इति क. थ. पाठः ॥ ६ ॥

एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

ततः प्राणान्पुनर्लेभे पिता तव नरेश्वर ॥ ३
व्यचेष्टत च बालोसौ यथोत्साहं यथाबलम् ।
बभूवुर्मुदिता राजंस्ततस्ता भरतस्त्रियः ॥ ४
ब्राह्मणा वाचयामासुर्गोविन्दस्यैव शासनात् ।
ततस्ता मुदिताः सर्वाः प्रशशंसुर्जनार्दनम् ॥ ५
स्त्रियो भरतसिंहानां नावं लब्ध्वेव पारगाः ।
कुन्ती द्रुपदपुत्री च सुभद्रा चोत्तरा तथा ।
स्त्रियश्चान्या नृसिंहानां बभूवुर्हृष्टमानसाः ॥ ६
तत्र मल्ला नटाश्चैव ग्रन्थिकाः सौख्यशायिकाः ।
सूतमागधसङ्घाश्चाप्यस्तुवंस्तं जनार्दनम् ॥ ७
कुरुवंशस्तवाख्याभिराशीर्भिर्भरतर्षभ ।
'सभाजयत संहृष्टो महाराज महाजनः ॥' ८
उत्थाय तु यथाकालमुत्तरा यदुनन्दनम् ।
अभ्यवादयत प्रीता सह पुत्रेण भारत ॥ ९
ततस्तस्मै ददौ प्रीतो बहुरत्नं विशेषतः ।
तथैव वृष्णिशार्दूलो नाम चास्याकरोत्प्रभुः ।
पितुस्तव महाराज सत्यसन्धो जनार्दनः ॥ १०
परिक्षीणे कुले यस्माज्जातोऽयमभिमन्युजः ।
परिक्षिदिति नामास्य भवत्वित्यब्रवीत्तदा ॥ ११
सोऽवर्धत यथाकालं पिता तव जनाधिप ।
मनःप्रह्लादनश्चासीत्सर्वलोकस्य भारत ॥ १२
मासजातस्तु ते वीर पिता भवति भारत ।
अथाजग्मुः सुबहुलं रत्नमादाय पाण्डवाः ॥ १३
'मेरुकूटनिभान्भाण्डान्कलशान्भाजनानि च ।
कृताकृतं महद्भीममादाय पुरुषोत्तमाः ॥ १४
भारैर्वाहनैस्तत्र गोरुते गोरुते पथि ।
निवसन्तो ययुर्देवं स्मरन्तः परमेष्ठिनः ॥ १५
नासीत्तत्र नृपः कश्चिद्भारार्तो नृपं विना ।
भीमादयोऽपि यज्ञार्थं वहन्ते किं पुनर्जनाः॥'१६
तान्समीपगताञ्श्रुत्वा निर्ययुर्वृष्णिपुङ्गवाः ।
अलंचक्रुश्च माल्यौघैर्नगरं नागसाह्वयम् ॥ १७
पताकाभिर्विचित्राभिर्ध्वजैश्च विविधैरपि ।
वेश्मानि समलंचक्रुः पौराश्चापि जनेश्वर ॥ १८
देवतायतनानां च पूजाः सुविविधास्तथा ।
संदिदेशाथ विदुरः पाण्डुपुत्रप्रियेप्सया ॥ १९
राजमार्गाश्च तत्रासन्सुमनोभिरलंकृताः ।
शुशुभे तत्पुरं चापि समुद्रौघनिभस्वनम् ॥ २०
नर्तकैश्चापि नृत्यद्भिर्गायकानां च निःस्वनैः ।
आसीद्वैश्रवणस्येव निवासस्तत्पुरं तदा ॥ २१
बन्दिभिश्च नरै राजन्स्त्रीसहायैश्च सर्वशः ।
तत्रतत्र विविक्तेषु समन्तादुपशोभितम् ॥ २२
पताका धूयमानाश्च समन्तान्मातरिश्वना ।
अदर्शयन्निव तदा कुरून्वै दक्षिणोत्तरान् ॥ २३
अघोषयंस्तदा चापि पुरुषा राजमार्गतः ।
सर्वरात्रविहारोऽद्य रत्नाभरणलक्षणः ॥ २४

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि सप्ततितमोऽध्यायः ॥ ७० ॥

## एकसप्ततितमोऽध्यायः ॥ ७१ ॥

कृष्णादिभिः प्रत्युद्गम्यमानैर्युधिष्ठिरादिभिः स्वर्णभारपुरस्कारेण हास्तिनपुरप्रवेशः ॥ १ ॥ ततस्तत्रोपागतेन व्यासेन युधिष्ठिरंप्रत्यश्वमेधप्रशंसनपूर्वकं तत्करणविधानम् ॥ २ ॥ युधिष्ठिरेणाश्वमेधे स्वयं दीक्षास्वीकारं प्रार्थितेन कृष्णेन सहेतुकथनं तंप्रत्येव दीक्षास्वीकारविधानम् ॥ ३ ॥

वैशंपायन उवाच ।
तान्समीपगताञ्श्रुत्वा पाण्डवाञ्शत्रुकर्शनः ।
वासुदेवः सहामात्यः प्रययौ ससुहृद्गणः ।
ते समेत्य यथान्यायं प्रत्युद्याता दिदृक्षया ॥ १
ते समेत्य यथाधर्मं पाण्डवा वृष्णिभिः सह ।
विविशुः सहिता राजन्पुरं वारणसाह्वयम् ॥ २

वाचयामासुः स्वस्तीति शेषः ॥ ५ ॥ ग्रन्थिकाः दैवज्ञाः सुखावह सौख्य शयन इति पृच्छन्ति ते सौख्यशायिकाः ॥ ७ ॥ कुरुवंशस्य स्तव आचक्षते ताभिः कुरुवंशस्तवाख्याभिः ॥ ८ ॥ उत्थाय तु यथाकाममिति क. ट. थ. पाठः ॥ ९ ॥ तस्य कृष्णो ददौ हृष्टो बहुरत्नं विशेषतः । तथान्ये वृष्णिशार्दूला इति झ. पाठः ॥ १० ॥ सप्ततितमोऽध्यायः ॥ ७० ॥

विशतस्तस्य सैन्यस्य खुरनेमिस्वनेन ह ।
द्यावापृथिव्यौ खं चैव सर्वमासीत्समावृतम् ॥ ३
ते कोशानग्रतः कृत्वा विविशुः स्वं पुरं तदा ।
पाण्डवाः प्रीतमनसः सामात्याः ससुहृद्गणाः ॥४
ते समेत्य यथान्यायं धृतराष्ट्रं जनाधिपम् ।
कीर्तयन्तः स्वनामानि तस्य पादौ ववन्दिरे ॥ ५
धृतराष्ट्राभ्यनुज्ञाता गान्धारीं सुबलात्मजाम् ।
कुन्तीं च राजशार्दूल तदा भरतसत्तम ॥ ६
विदुरं पूजयित्वा च वैश्यापुत्रं समेत्य च ।
पूज्यमानाः स ते वीरा व्यरोचन्त विशांपते ॥७
ततस्तत्परमाश्चर्यं विचित्रं महदद्भुतम् ।
शुश्रुवुस्ते तदा वीराः पितुस्ते जन्म भारत ॥ ८
तदुपश्रुत्य तत्कर्म वासुदेवस्य धीमतः ।
पूजार्हं पूजयामासुः कृष्णं देवकिनन्दनम् ॥ ९
ततः कतिपयाहस्य व्यासः सत्यवतीसुतः ।
आजगाम महातेजा नगरं नागसाह्वयम् ॥ १०
तस्य सर्वे यथान्यायं पूजां चक्रुः कुरूद्वहाः ।
सह वृष्ण्यन्धकव्याघ्रैरुपासांचक्रिरे तदा ॥ ११
तत्र नानाविधाकाराः कथाः समभिकीर्त्य वै
धर्मसुतो व्यासं वचनमब्रवीत् ॥ १२
भवत्प्रसादाद्भगवन्यदिदं रत्नमाहृतम् ।
उपयोक्तुं तदिच्छामि वाजिमेधे महाक्रतौ ॥ १३
तमनुज्ञातुमिच्छामि भवता मुनिसत्तम
त्वदधीना वयं सर्वे कृष्णस्य च महात्मनः ॥१४
व्यास उवाच ।
अनुजानामि राजंस्त्वां क्रियतां यदनन्तरम् ।
यजस्व वाजिमेधेन विधिवद्दक्षिणावता ॥ १५
अश्वमेधो हि राजेन्द्र पावनः सर्वपाप्मनाम् ।
तेनेष्ट्वा त्वं विपाप्मा वै भविता नात्र संशयः १६
इत्युक्तः स तु धर्मात्मा कुरुराजो युधिष्ठिरः ।
अश्वमेधस्य कौरव्य चकाराहरणे मतिम् ॥ १७
समनुज्ञाप्य तत्सर्वं कृष्णद्वैपायनं नृपः ।
वासुदेवमथाभ्येत्य वाग्मी वचनमब्रवीत् ॥ १८
देवकी सुप्रजा देवी त्वया पुरुषसत्तम ।
यद्ब्रूयां त्वां महाबाहो तत्कृथास्त्वमिहाच्युत १९
त्वत्प्रभावार्जितान्भोगानश्नीम यदुनन्दन ।
पराक्रमेण बुद्ध्या च त्वयेयं निर्जिता मही ॥२०
दीक्षयस्व त्वमात्मानं त्वं हि नः परमो गुरुः ।
त्वयीष्टवति दाशार्ह विपाप्मा भविता ह्यहम् ॥२१
त्वं हि यज्ञो गुरुश्च त्वं धर्मज्ञस्त्वं प्रजापतिः ।
त्वं गतिः सर्वभूतानामिति मे निश्चिता मतिः २२
वासुदेव उवाच ।
त्वमेवैतन्महाबाहो कर्तुमर्हस्यरिंदम ।
त्वं गतिः सर्वभूतानामिति मे निश्चिता मतिः २३
त्वं चाद्य कुरुवीराणां धर्मेण हि विराजसे ।
गुणीभूताः स ते राजंस्त्वं नो राजन्गुरुर्मतः ।
यजस्व मदनुज्ञातः प्राप्य एष क्रतुस्त्वया ॥ २४
युनक्तु नो भवान्कार्ये यत्र वाञ्छसि भारत ।
सत्यं ते प्रतिजानामि सर्वं कर्तास्मि तेऽनघ ॥२५
भीमसेनार्जुनौ चैव तथा माद्रवतीसुतौ ।
इष्टवन्तो भविष्यन्ति त्वयीष्टवति पार्थिवे ॥ २६

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि एकसप्ततितमोऽध्यायः ॥ ७१ ॥

## द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

व्यासेन युधिष्ठिरंप्रति पृथिवीसंचाराय मेध्याश्वोत्सर्जनचोदना ॥ १ ॥ तथाऽश्वरक्षणेऽर्जुनस्य नियोजनम् ॥ २ ॥

शंपायन उवाच ।
एवमुक्तस्तु कृष्णेन धर्मपुत्रो युधिष्ठिरः ।
व्यासमामन्त्र्य मेधावी ततो वचनमब्रवीत् ॥ १
यदा कालं भवान्वेत्ति हयमेधस्य तत्त्वतः ।
दीक्षयस्व तदा मां त्वं त्वय्यायत्तो हि मे क्रतुः २
व्यास उवाच ।
अयं पैलोथ कौन्तेय याज्ञवल्क्यस्तथैव च ।
विधानं यद्यथा कालं तत्कर्तारौ न संशयः ॥ ३

वैश्यापुत्रं युयुत्सुम् ॥ ७ ॥ पावनः नाशकः ॥ १६ ॥

एकसप्ततितमोऽध्यायः ॥ ७१ ॥

चैत्र्यां हि पौर्णमास्यां तु तव दीक्षा भविष्यति ।
संभाराः संभ्रियन्तां च यज्ञार्थं पुरुषर्षभ ॥ ४
अश्वविद्याविदश्चैव सूता विप्राश्च तद्विदः ।
मेध्यमश्वं परीक्षन्तां तव यज्ञार्थसिद्धये ॥ ५
तमुत्सृज यथाशास्त्रं पृथिवीं सागराम्बराम् ।
सपर्येतु यशो नाम्ना तव पार्थिव बर्धयन् ॥ ६
इत्युक्तः स तथेत्युक्त्वा पाण्डवः पृथिवीपतिः ।
चकार सर्वं राजेन्द्र यथोक्तं ब्रह्मवादिना ॥ ७
संभाराश्चैव राजेन्द्र सर्वे संकल्पितास्तथा ॥ ८
स संभारान्समाहृत्य नृपो धर्मसुतस्तदा ।
न्यवेदयदमेयात्मा कृष्णद्वैपायनाय वै ॥ ९
ततोऽब्रवीन्महातेजा व्यासो धर्मात्मजं नृपम् ।
यथाकालं यथायोगं सज्जाः स्म तव दीक्षणे ॥ १०
स्फ्यश्च कूर्चश्च सौवर्णो यच्चान्यदपि कौरव ।
यत्तु योग्यं भवेत्किंचिद्रौक्मं तत्क्रियतामिति ११
अश्वश्चोत्सृज्यतामद्य पृथ्व्यामथ यथाक्रमम् ।
सुगुप्तं चरतां चापि यथाशास्त्रं यथाविधि ॥ १२
युधिष्ठिर उवाच ।
अयमश्वो यथा ब्रह्मन्नुत्सृष्टः पृथिवीमिमाम् ।
चरिष्यति यथाकामं तत्र वै संविधीयताम् ॥ १३
पृथिवीं पर्यटन्तं हि तुरगं कामचारिणम् ।
कः पालयेदिति मुने तद्भवान्वक्तुमर्हति ॥ १४
इत्युक्तः स तु राजेन्द्र कृष्णद्वैपायनोऽब्रवीत् ।
भीमसेनादवरजः श्रेष्ठः सर्वधनुष्मताम् ।
जिष्णुः सहिष्णुर्धृष्णुश्च स एनं पालयिष्यति ॥ १५
शक्तः स हि महीं जेतुं निवातकवचान्तकः ।
तस्मिन्ह्यस्त्राणि दिव्यानि दिव्यं संहननं तथा ।
दिव्यं धनुश्चेषुधी च स एनमनुयास्यति ॥ १६
स हि धर्मार्थकुशलः सर्वविद्याविशारदः ।
यथाशास्त्रं नृपश्रेष्ठ चारयिष्यति ते हयम् ॥ १७
राजपुत्रो महाबाहुः श्यामो राजीवलोचनः ।
अभिमन्योः पिता वीरः स एनमनुयास्यति ॥ १८
भीमसेनोपि तेजस्वी कौन्तेयोऽमितविक्रमः ।
समर्थो रक्षितुं राष्ट्रं नकुलश्च विशांपते ॥ १९
सहदेवस्तु कौरव्य समायास्यति बुद्धिमान् ।
कुटुम्बतन्त्रं विधिवत्सर्वमेव महायशाः ॥ २०
स तु सर्वं यथान्यायमुक्तः कुरुकुलोद्वहः ।
चकार फल्गुनं चापि संदिदेश हयं प्रति ॥ २१
युधिष्ठिर उवाच ।
एह्यर्जुन त्वया वीर हयोऽयं परिपाल्यताम् ।
त्वमर्हो रक्षितुं ह्येनं नान्यः कश्चन मानवः ॥ २२
ये चापि त्वां महाबाहो प्रत्युद्यान्ति नराधिपाः ।
तैर्विग्रहो यथा न स्यात्तथा कार्यं त्वयाऽनघ २३
आख्यातव्यश्च भवता यज्ञोऽयं मम सर्वशः ।
पार्थिवेभ्यो महाबाहो समये गम्यतामिति ॥ २४
वैशंपायन उवाच ।
एवमुक्त्वा स धर्मात्मा भ्रातरं सव्यसाचिनम् ।
भीमं च नकुलं चैव पुरगुप्तौ समादधत् ॥ २५
कुटुम्बतन्त्रे च तदा सहदेवं युधांपतिम् ।
अनुमान्य महीपालं धृतराष्ट्रं युधिष्ठिरः ॥ २६

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

## त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

अर्जुनेन युधिष्ठिरनियोगाद्ब्राह्मणैः क्षत्रियैश्च सह प्रथममुत्तरदिश्यश्वसंचारणेन रक्षणाय तदनुसरणम् ॥ १ ॥

वैशंपायन उवाच ।
दीक्षाकाले तु संप्राप्ते ततस्ते सुमहर्त्विजः ।
विधिवद्दीक्षयामासुरश्वमेधाय पार्थिवम् ॥ १
कृत्वा स पशुमेधांश्च दीक्षितः पाण्डुनन्दनः ।
धर्मराजो महातेजाः सहर्त्विग्भिर्व्यरोचत ॥ २
हयश्च हयमेधार्थं स्वयं स ब्रह्मवादिना ।

---

स्फ्यः काष्ठखड्गः स चात्र सौवर्णः । कूर्चं आसनार्थं कुशमुष्टिः सोऽप्यत्र सौवर्णः ॥ ११ ॥ सुगुप्तं सुरक्षितं यथा स्यात्तथा ॥ १२ ॥ द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

उत्सृष्टः शास्त्रविधिना व्यासेनामिततेजसा ॥ ३
स राजा राजधर्मेण दीक्षितो विबभौ तदा ।
हेममाली रुक्मकण्ठः प्रदीप्त इव पावकः ॥ ४
कृष्णाजिनी दण्डपाणिः क्षौमवासाः स धर्मजः ।
विबभौ द्युतिमान्भूयः प्रजापतिरिवाध्वरे ॥ ५
तथैवास्यर्त्विजः सर्वे तुल्यवेषा विशांपते ।
बभूवुरर्जुनश्चापि प्रदीप्त इव पावकः ॥ ६
श्वेताश्वः कपिकेतुश्च ससाराश्वं धनञ्जयः ।
विधिवत्पृथिवीपाल धर्मराजस्य शासनात् ॥ ७
विक्षिपन्गाण्डिवं राजन्बद्धगोधाङ्गुलित्रवान् ।
तमश्वं पृथिवीपाल मुदा युक्तः ससार च ॥ ८
अनुमार्गं तदा राजन्नागमत्तत्पुरं विभो ।
द्रष्टुकामं कुरुश्रेष्ठं प्रयास्यन्तं धनञ्जयम् ॥ ९
तेषामन्योन्यसंमर्दादूष्मेव समजायत ।
दिदृक्षूणां हयं तं च तं चैव हयसारिणम् ॥ १०
ततः शब्दो महाराज दिशः खं प्रतिपूरयन् ।
बभूव प्रेक्षतां नृणां कुन्तीपुत्रं धनंजयम् ॥ ११
एष गच्छति कौन्तेयस्तुरगश्चैव दीप्तिमान् ।
समन्वेति महाबाहुः संस्पृशन्धनुरुत्तमम् ॥ १२
एवं शुश्राव वदतां गिरो जिष्णुरुदारधीः ।
स्वस्ति तेऽस्तु व्रजारिष्टं पुनश्चैहीति भारत ॥ १३
अथापरे मनुष्येन्द्र पुरुषा वाक्यमब्रुवन् ।
नैनं पश्याम संमर्दे धनुरेतत्प्रदृश्यते ॥ १४
एतद्धि भीमनिर्ह्रादं विश्रुतं गाण्डिवं धनुः ।
स्वस्ति गच्छत्वरिष्टो वै पन्थानमकुतोभयम् ।
निवृत्तमेनं द्रक्ष्यामः पुनरेष्यति च ध्रुवम् ॥ १५
एवमाद्या मनुष्याणां स्त्रीणां च भरतर्षभ ।
शुश्राव मधुरा वाचः पुनःपुनरुदारधीः ॥ १६
याज्ञवल्क्यस्य शिष्यश्च कुशलो यज्ञकर्मणि ।
प्रायात्पार्थेन सहितः शान्त्यर्थं वेदपारगः ॥ १७
ब्राह्मणाश्च महीपाल बहवो वेदपारगाः ।
अनुजग्मुर्महात्मानं क्षत्रियाश्च विशांपते ।
विधिवत्पृथिवीपाल धर्मराजस्य शासनात् ॥ १८
पाण्डवैः पृथिवीमश्वो निर्जितामस्त्रतेजसा ।
चचार स महाराज यथादेशं च सत्तम ॥ १९
तत्र युद्धानि वृत्तानि यान्यासन्पाण्डवस्य ह ।
तानि वक्ष्यामि ते वीर विचित्राणि महान्ति च २०
स हयः पृथिवीं राजन्प्रदक्षिणमवर्तत ।
ससारोत्तरतः पूर्वं तन्निबोध महीपते ॥ २१
अवमृद्नन्स राष्ट्राणि पार्थिवानां हयोत्तमः ।
शनैस्तदा परिययौ श्वेताश्वश्च महारथः ॥ २२
तत्र संगणना नास्ति राज्ञामयुतशस्तदा ।
येऽयुध्यन्त महाराज क्षत्रिया हतबान्धवाः ॥ २३
किराता यवना राजन्बहवोऽसिधनुर्धराः ।
म्लेच्छाश्चान्ये बहुविधाः पूर्वं ये निकृता रणे २४
आर्याश्च पृथिवीपालाः प्रहृष्टनरवाहनाः ।
समीयुः पाण्डुपुत्रेण बहवो युद्धदुर्मदाः ॥ २५
एवं वृत्तानि युद्धानि तत्रतत्र महीपते ।
अर्जुनस्य महीपालैर्नानादेशसमागतैः ॥ २६
यान्यत्र हयतो राजन्प्रवृत्तानि महान्ति च ।
तानि युद्धानि वक्ष्यामि कौन्तेयस्य तवानघ २७

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

## चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

अर्जुनेन त्रैगर्तानां पराजयः ॥ १ ॥

**वैशंपायन उवाच ।**
**त्रिगर्तैरभवद्युद्धं कृतवैरैः किरीटिनः ।**
**महारथसमाज्ञातैर्हतानां पुत्रनप्तृभिः ॥ १**
**ते समाज्ञाय संप्राप्तं यज्ञियं तुरगोत्तमम् ।**

आकुमारं तदा राजन् इति झ. पाठः ॥ ९ ॥ शिष्यः सोमश्रवाः ॥ १७ ॥ त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

महारथत्वेन सम्यगाज्ञातैः पाण्डवीयैर्हतानां पुत्रनप्तृभिस्त्रिगर्तैः ॥ १ ॥

विषयान्तं ततो वीरा दंशिताः पर्यवारयन् ॥ २
रथिनो बद्धतूणीराः सदश्वैः समलंकृतैः ।
परिवार्य हयं राजन्ग्रहीतुं संप्रचक्रमुः ॥ ३
ततः किरीटी संचिन्त्य तेषां तत्र चिकीर्षितम् ।
वारयामास तान्वीरान्सान्त्वपूर्वमरिंदमः ॥ ४
तदनादृत्य ते सर्वे शरैरभ्यहनंस्तदा ।
तमोरजोभ्यां संछन्नांस्तान्किरीटी न्यवारयत् ॥५
तानब्रवीत्ततो जिष्णुः प्रहसन्निव भारत ।
निवर्तध्वमधर्मज्ञाः श्रेयो जीवितमेव च ॥ ६
स हि वीरः प्रयास्यन्वै धर्मराजेन वारितः ।
हतबान्धवा न ते पार्थ हन्तव्याः पार्थिवा इति ७
स तदा तद्वचः श्रुत्वा धर्मराजस्य धीमतः ।
तान्निवर्तध्वमित्याह न न्यवर्तन्त चापि ते ॥ ८
ततस्त्रिगर्तराजानं सूर्यवर्माणमाहवे ।
विनद्य शरजालेन प्रजहास धनंजयः ॥ ९
ततस्ते रथघोषेण रथनेमिस्वनेन च ।
पूरयन्तो दिशः सर्वा धनंजयमुपाद्रवन् ॥ १०
सूर्यवर्मा ततः पार्थे शराणां नतपर्वणाम् ।
शतान्यमुञ्चद्राजेन्द्र लघ्वस्त्रमभिदर्शयन् ॥ ११
तथैवान्ये महेष्वासा ये च तस्यानुयायिनः ।
मुमुचुः शरवर्षाणि धनंजयवधैषिणः ॥ १२
स ताञ्ज्यामुखनिर्मुक्तैर्बहुभिः सुबहूञ्शरान् ।
चिच्छेद पाण्डवो राजंस्ते भूमौ न्यपतंस्तदा ॥१३
केतुवर्मा तु तेजस्वी तस्यैवावरजो युवा ।
युयुधे भ्रातुरर्थाय पाण्डवेन यशस्विना ॥ १४
तमापतन्तं संप्रेक्ष्य केतुवर्माणमाहवे ।
अभ्यघ्नन्निशितैर्बाणैर्बीभत्सुः परवीरहा ॥ १५
केतुवर्मण्यभिहते धृतवर्मा महारथः ।
रथेनाशु समुत्पत्य शरैर्जिष्णुमवाकिरत् ॥ १६
तस्य तां शीघ्रतामीक्ष्य तुतोषातीव वीर्यवान् ।
गुडाकेशो महातेजा बालस्य धृतवर्मणः ॥ १७
न संदधानं ददृशे नाददानं च तं तदा ।
किरन्तमेवं स शरान्ददृशे पाकशासनिः ॥ १८
स तु तं पूजयामास धृतवर्माणमाहवे ।
मनसा तु मुहूर्तं वै रणे समभिहर्षयन् ॥ १९
'न विव्याध रणे क्रुद्धः कुन्तीपुत्रो हसन्निव ।
सौभद्रस्येव तत्कर्म दृष्ट्वा बालस्य विस्मितः ॥२०
तं पन्नगमिव क्रुद्धं कुरुवीरः स्मयन्निव
महाबाहुः प्राणैर्न व्यपरोपयत् ॥ २१
स तथा रक्ष्यमाणो वै पार्थेनामिततेजसा ।
धृतवर्मा शरं दीप्तं मुमोच विजये तदा ॥ २२
स तेन विजयस्तूर्णमासीद्विद्धः करे भृशम् ।
मुमोच गाण्डिवं मोहात्तत्पपाताथ भूतले ॥ २३
धनुषः पततस्तस्य सव्यसाचिकराद्विभो ।
बभूव सदृशं रूपं शक्रचापस्य भारत ॥ २४
तस्मिन्निपतिते दिव्ये महाधनुषि पार्थिवः ।
चकार सस्वनं हासं धृतवर्मा महाहवे ॥ २५
ततो रोषार्दितो जिष्णुः प्रमृज्य रुधिरं करात् ।
धनुरादत्त तद्दिव्यं शरवर्षैर्ववर्ष च ॥ २६
ततो हलहलाशब्दो दिवस्पृगभवत्तदा ।
नानाविधानां भूतानां तत्कर्माणि प्रशंसताम् २७
ततः संप्रेक्ष्य संक्रुद्धं कालान्तकयमोपमम् ।
जिष्णुं त्रैगर्तका योधाः परीताः पर्यवारयन् ॥ २८
अभिसृत्य परीप्सार्थं ततस्ते धृतवर्मणः ।
परिवव्रुर्गुडाकेशं तत्राक्रुध्यद्धनंजयः ॥ २९
ततो योधाञ्जघानाशु तेषां स दश चाष्ट च ।
महेन्द्रवज्रप्रतिमैरायसैर्बहुभिः शरैः ॥ ३०
तान्संप्रभग्नान्संप्रेक्ष्य त्वरमाणो धनंजयः ।
शरैराशीविषाकारैर्जघान स्वनवद्धसन् ॥ ३१
ते भग्नमनसः सर्वे त्रैगर्तकमहारथाः ।
दिशोऽभिदुद्रुवू राजन्धनंजयशरार्दिताः ॥ ३२
'हतावशिष्टा हि पराः पार्थं दृष्टपराक्रमाः ।'
तमूचुः पुरुषव्याघ्रं संशप्तकनिषूदनम् ॥ ३३
तवास्म किंकराः सर्वे सर्वे वै वशगास्तव ।
आज्ञापयस्व नः पार्थ प्रह्वान्प्रेष्यानवस्थितान् ।
करिष्यामः प्रियं सर्वं तव कौरवनन्दन ॥ ३४
एतदाज्ञाय वचनं सर्वांस्तानब्रवीत्तदा ।
जीवितं रक्षत नृपाः शासनं प्रतिगृह्यताम् ॥ ३५

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

## पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

अर्जुनेन प्राग्ज्योतिषपुरमेत्याश्वरक्षणाय भगदत्तसुतेन यज्ञदत्तेन सहायोधनम् ॥ १ ॥

वैशंपायन उवाच
प्राग्ज्योतिषमथाभ्येत्य व्यचरत्स हयोत्तमः ।
भगदत्तात्मजस्तत्र निर्ययौ रणकर्कशः ॥ १
सहयं पाण्डुपुत्रं तु विषयान्तमुपागतम् ।
युयुधे भरतश्रेष्ठ यज्ञदत्तो महीपतिः ॥ २
सोभिनिर्याय नगराद्भगदत्तसुतो नृपः ।
अश्वमायान्तमुन्मथ्य नगराभिमुखो ययौ ॥
तमालक्ष्य महाबाहुः कुरूणामृषभस्तदा ।
गाण्डीवं विक्षिपंस्तूर्णं सहसा समुपाद्रवत् ॥
ततो गाण्डीवनिर्मुक्तैरिषुभिर्मोहितो नृपः ।
हयमुत्सृज्य तं वीरस्ततः पार्थमुपाद्रवत् ॥
पुनः प्रविश्य नगरं दंशितः स नृपोत्तमः ।
आरुह्य नागप्रवरं निर्ययौ युद्धकाङ्क्षया ॥
पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्धनि ।
दोधूयता चामरेण श्वेतेन च महारथः ॥ ७
ततः पार्थं समासाद्य पाण्डवानां महारथम् ।
आह्वयामास बीभत्सुं बाल्यान्मोहाच्च संयुगे ॥ ८
स वारणं नगप्रख्यं प्रभिन्नकरटामुखम् ।
प्रेषयामास संक्रुद्धः श्वेताश्वं प्रति पार्थिवः ॥ ९
विक्षरन्तं महामेघं परवारणवारणम् ।
शास्त्रवत्कल्पितं सङ्ख्ये विवशं युद्धदुर्मदम् ॥ १०
प्रचोद्यमानः स गजस्तेन राज्ञा महाबलः ।
तदाऽङ्कुशेन विबभावुत्पतिष्यन्निवाम्बरम् ॥ ११
तमापतन्तं संप्रेक्ष्य क्रुद्धो राजन्धनंजयः ।
भूमिष्ठो वारणगतं योधयामास भारत ॥ १२
यज्ञदत्तस्ततः क्रुद्धो मुमोचाशु धनंजये ।
तोमरानग्निसंकाशाञ्शलभानिव वेगितान् ॥ १३
अर्जुनस्तानसंप्राप्तान्गाण्डीवप्रभवैः शरैः ।
द्विधा त्रिधा च चिच्छेद खगमान्खगमैस्तदा १४
स तान्दृष्ट्वा तथा छिन्नांस्तोमरान्भगदत्तजः ।
इषूनसक्तांस्त्वरितः प्राहिणोत्पाण्डवं प्रति ॥ १५
ततोऽर्जुनस्तूर्णतरं रुक्मपुङ्खानजिह्मगान् ।
प्रेषयामास संक्रुद्धो भगदत्तात्मजं प्रति ॥ १६
स तैर्विद्धो महातेजा यज्ञदत्तो महामृधे ।
भृशाहतः पपातोर्व्यां न त्वेनमजहात्स्मृतिः १७
ततः स पुनरारुह्य वारणप्रवरं रणे ।
अव्यग्रः प्रेषयामास जयार्थी विजयं प्रति ॥ १८
तस्मै बाणांस्ततो जिष्णुर्निर्मुक्ताशीविषोपमान् ।
प्रेषयामास संक्रुद्धो ज्वलितज्वलनोपमान् ॥ १९
स तैर्विद्धो महानागो विस्रवन्रुधिरं बभौ ।
हिमवानिव शैलेन्द्रो बहुप्रस्रवणस्तदा ॥ २०

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

## षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

अर्जुनेन भगदत्तात्मजपराजयः ॥ १ ॥

एवं त्रिरात्रमभवत्तद्युद्धं भरतर्षभ ।
अर्जुनस्य नरेन्द्रेण वृत्रेणेव शतक्रतोः ॥ १
ततश्चतुर्थे दिवसे यज्ञदत्तो महाबलः ।
जहास सस्वनं हासं वाक्यं चेदमथाब्रवीत् ॥ २
अर्जुनार्जुन तिष्ठस्व न मे जीवन्विमोक्ष्यसे ।
त्वां निहत्य करिष्यामि पितुस्तोयं यथाविधि ३
त्वया वृद्धो मम पिता भगदत्तः पितुः सखा ।
हतो वृद्धोऽपि बाधित्वा शिशुं मामद्य योधय ॥ ४

वज्रदत्तो महीपतिरिति झ. पाठः ॥ २ ॥ गैरिकाक्तमिवाम्भोदिर्बहुप्रस्रवणं तदा इति झ. पाठः ॥ २० ॥

इत्येवमुक्त्वा संक्रुद्धो यज्ञदत्तो नराधिपः ।
प्रेषयामास कौरव्य वारणं पाण्डवं प्रति ॥ ५
संप्रेष्यमाणो नागेन्द्रो यज्ञदत्तेन धीमता ।
उत्पतिष्यन्निवाकाशमभिदुद्राव पाण्डवम् ॥ ६
अग्रहस्तसुमुक्तेन शीकरेण स नागराट् ।
समौक्षत गुडाकेशं शैलं नील इवाम्बुदः ॥ ७
स तेन प्रेषितो राज्ञा मेघवद्विनदन्मुहुः
मुखाडम्बरसंह्लादैरभ्यद्रवत फल्गुनम् ॥ ८
स नृत्यन्निव नागेन्द्रो यज्ञदत्तप्रचोदितः ।
आससाद द्रुतं राजन्कौरवाणां महारथम् ॥ ९
तमायान्तमथालक्ष्य यज्ञदत्तस्य वारणम् ।
गाण्डीवमाश्रित्य बली न व्यकम्पत शत्रुहा॥१०
चुक्रोध बलवच्चापि पाण्डवस्तस्य भूपतेः ।
कालविघ्नमनुस्मृत्य च भारत ॥ ११
ततस्तं वारणं क्रुद्धः शरजालेन पाण्डवः ।
निवारयामास तदा वेलेव मकरालयम् ॥ १२
स नागप्रवरः श्रीमानर्जुनेन निवारितः ।
तस्थौ शरैर्विनुन्नाङ्गः श्वाविच्छललितो यथा ॥ १३
निवारितं गजं दृष्ट्वा भगदत्तसुतो नृपः ।
उत्ससर्ज शितान्बाणानर्जुने क्रोधमूर्छितः ॥ १४
अर्जुनस्तु महाबाहुः शरैररिनिघातिभिः ।
वारयामास तान्बाणांस्तदद्भुतमिवाभवत् ॥ १५
ततः पुनरभिक्रुद्धो राजा प्राग्ज्योतिषाधिपः ।
प्रेषयामास नागेन्द्रं बलवत्पर्वतोपमम् ॥ १६
तमापतन्तं संप्रेक्ष्य बलवान्पाकशासनिः ।
नाराचमग्निसंकाशं प्राहिणोद्वारणं प्रति ॥ १७
स तेन वारणो राजन्मर्मस्वभिहतो भृशम् ।
पपात सहसा भूमौ वज्ररुग्ण इवाचलः ॥ १८
स पतञ्शुशुभे नागो धनंजयशराहतः ।
विशन्निव महाशैलो महीं वज्रप्रपीडितः ॥ १९
तस्मिन्निपतिते नागे यज्ञदत्तस्य पाण्डवः ।
तं न भेतव्यमित्याह ततो भूमिगतं नृपम् ॥ २०
अब्रवीद्धि महातेजाः प्रस्थितं मां युधिष्ठिरः ।
राजानस्ते न हन्तव्या धनंजय कथंचन ॥ २१
सर्वमेतन्नरव्याघ्र भवत्येतावता कृतम् ।
योधाश्चापि न हन्तव्या धनंजय रणे त्वया ॥ २२
वक्तव्याश्चापि राजानः सर्वे सह सुहृज्जनैः ।
युधिष्ठिरस्याश्वमेधो भवद्भिरनुभूयताम् ॥ २३
इति भ्रातृवचः श्रुत्वा न हन्मि त्वां नराधिप ।
उत्तिष्ठ न भयं तेऽस्ति स्वस्तिमान्गच्छ पार्थिव २४
आगच्छेथा महाराज परां चैत्रीमुपस्थिताम् ।
तदाऽश्वमेधो भविता धर्मराजस्य धीमतः ॥ २५
एवमुक्तः स राजा तु भगदत्तात्मजस्तदा ।
तथेत्येवाब्रवीद्वाक्यं पाण्डवेनाभिनिर्जितः ॥ २६

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

## सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

अश्वानुसरणवशात्सिन्धुदेशं गतेनार्जुनेन सैन्धवैःसह महाऽऽयोधनम् ॥१॥ बाणगणावकीर्णस्यार्जुनस्य कराद्गाण्डीवस्याधःपतने देवर्ष्यादिभिर्जपादिना तस्य तेजोदीपनम् ॥ २ ॥ ततः पुनरर्जुनेन तैःसहायोधनम् ॥ ३ ॥

वैशंपायन उवाच ।
'जित्वा प्रसाद्य राजानं भगदत्तसुतं तदा ।
विसृज्य याते तुरगे सैन्धवान्प्रति भारत ॥' १
सैन्धवैरभवद्युद्धं ततस्तस्य किरीटिनः ।
हतशेषैर्महाराज हतानां च सुतैरपि ॥ २
तेऽवतीर्णमुपश्रुत्य विषयं श्वेतवाहनम् ।
प्रत्युद्ययुरमृष्यन्तो राजानः पाण्डवर्षभम् ॥ ३
अश्वं च तं परामृश्य विषयान्ते विषोपमात् ।
न भयं चक्रिरे पार्थाद्भीमसेनादनन्तरात् ॥ ४
तेऽविदूराद्धनुष्पाणिं यज्ञियस्य हयस्य च ।
बीभत्सुं प्रत्यपद्यन्त पदातिनमवस्थितम् ॥ ५
ततस्ते तं महावीर्या राजानः पर्यवारयन् ।

शललितः शलाकाप्रोतः ॥ १३ ॥

षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

जिगीषन्तो नरव्याघ्रं पूर्वं विनिकृता युधि ॥ ६
ते नामान्यपि गोत्राणि कर्माणि विविधानि च ।
कीर्तयन्तस्तदा पार्थं शरवर्षैरवाकिरन् ॥ ७
ते किरन्तः शरव्रातान्वारणप्रतिवारणान् ।
रणे जयमभीप्सन्तः कौन्तेयं पर्यवारयन् ॥
ते समीक्ष्य च तं कृष्णमुग्रकर्माणमाहवे ।
सर्वे युयुधिरे वीरा रथस्थास्तं पदातिनम् ॥ ९
ते तमाजघ्निरे वीरं निवातकवचान्तकम् ।
संशप्तकनिहन्तारं हन्तारं सैन्धवस्य च ॥ १०
ततो रथसहस्रेण गजानामयुतेन च ।
कोष्ठकीकृत्य बीभत्सुं प्रहृष्टमनसोऽभवन् ॥ ११
तं स्मरन्तो वधं वीराः सिन्धुराजस्य चाहवे ।
जयद्रथस्य कौरव्य समरे सव्यसाचिना ॥ १२
ततः पर्जन्यवत्सर्वे शरवृष्टीरवासृजन् ।
तैः कीर्णः शुशुभे पार्थो रविर्मेघान्तरे यथा ॥ १३
स शरैः समवच्छन्नश्चकाशे पाण्डवर्षभः ।
पञ्जरान्तरसंचारी शकुन्त इव भारत ॥ १४
ततो हाहाकृतं सर्वं कौन्तेये शरपीडिते ।
त्रैलोक्यमभवद्राजन्रविरासीद्रजोरुणः ॥ १५
ततो ववौ महाराज मारुतो रोमहर्षणः ।
राहुरग्रसदादित्यं पर्वणीव विशांपते ॥ १६
उल्काश्च जघ्निरे सूर्यं विकीर्यन्त्यः समन्ततः ।
वेपथुश्चाभवद्राजन्कैलासस्य महागिरेः ॥ १७
[illegible]ः श्वासमत्युष्णं दुःखशोकसमन्विताः ।
सप्तर्षयो जातभयास्तथा देवर्षयोऽपि च ॥ १८
शशं चाशु विनिर्भिद्य मण्डलं शशिनोऽपतन् ।
विपरीता दिशश्चापि सर्वा धूमाकुलास्तथा ॥ १९
रासभारुणसंकाशा धनुष्मन्तः सविद्युतः ।
आवृत्य गगनं मेघा मुमुचुर्मांसशोणितम् ॥ २०
एवमासीत्तदा वीरे शरवर्षेण संवृते ।
फल्गुने भरतश्रेष्ठ तदद्भुतमिवाभवत् ॥ २१
तस्य तेनावकीर्णस्य शरजालेन सर्वतः ।
मोहात्पपात गाण्डीवमावापश्च करादपि ॥ २२
तस्मिन्मोहमनुप्राप्ते शरजालं महत्तदा ।
सैन्धवा मुमुचुस्तूर्णं गतसत्वे महारथे ॥ २३
ततो मोहं समापन्नं ज्ञात्वा पार्थं दिवौकसः ।
सर्वे वित्रस्तमनसस्तस्य शान्तिकृतोऽभवन् ॥ २४
ततो देवर्षयः सर्वे तथा सप्तर्षयोऽपि च
ब्रह्मर्षयश्च विजयं जेपुः पार्थस्य धीमतः ॥ २५
ततः प्रदीपिते देवैः पार्थतेजसि पार्थिव ।
तस्थावचलवद्धीमान्संग्रामे परमास्त्रवित् ॥ २६
विचकर्ष धनुर्दिव्यं ततः कौरवनन्दनः
यन्त्रस्येवेह शब्दोऽभून्महांस्तस्य पुनः पुनः ॥ २७
ततः स शरवर्षाणि प्रत्यमित्रान्प्रति प्रभुः ।
ववर्ष धनुषा पार्थो वर्षाणीव पुरंदरः ॥ २८
ततस्ते सैन्धवा योधाः सर्व एव सराजकाः ।
नादृश्यन्त शरैः कीर्णाः शलभैरिव पादपाः ॥२९
तस्य शब्देन वित्रेसुर्भयार्ताश्च विदुद्रुवुः ।
मुमुचुश्चाश्रु शोकार्ताः शुशुचुश्चापि सैन्धवाः ॥३०
तांस्तु सर्वान्नरव्याघ्रः सैन्धवान्व्यचरद्बली
अलातचक्रवद्राजञ्शरजालैः समार्पयत् ॥ ३१
तदिन्द्रजालप्रतिमं बाणजालममित्रहा ।
विसृज्य दिक्षु सर्वासु महेन्द्र इव वज्रभृत् ॥ ३२
मेघजालनिभं सैन्यं विदार्य शरवृष्टिभिः ।
विबभौ कौरवश्रेष्ठः शरदीव दिवाकरः ॥ ३३

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

उल्का' शश चन्द्रस्थं विनिर्भिद्य शशिनो मण्डलं प्रति अपतन्निति अनुवृत्त्या संबन्धः ॥ १९ ॥ रासभारुणो वर्णविशेषः ॥ २० ॥ आवापो हस्तावापः ॥ २२ ॥ सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

## अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

अर्जुनसमागमनश्रवणमात्रेण जयद्रथसुते मृते दुश्शलया तत्सुतमानीयार्जुनंप्रत्यभियानम् ॥ १ ॥ ततोऽर्जुनेन दुश्शलाप्रार्थनया तस्यां बहुमानेन च युद्धादुपरमः ॥ २ ॥

वैशंपायन उवाच
ततो गाण्डीवभृच्छूरो युद्धाय समुपस्थितः ।
विबभौ युधि दुर्धर्षो हिमवानचलो यथा ॥ १
ततस्ते सैन्धवा योधाः पुनरेव व्यवस्थिताः ।
व्यमुञ्चन्त सुसंरब्धाः शरवर्षाणि भारत ॥ २
तान्प्रहस्य महाबाहुः पुनरेव व्यवस्थितान् ।
ततः प्रोवाच कौन्तेयो मुमूर्षूञ्श्लक्ष्णया गिरा ३
युध्यध्वं परया शक्त्या यतध्वं विजये मम ।
कुरुध्वं सर्वकार्याणि महद्वो भयमागतम् ॥ ४
एष योत्स्यामि सर्वांस्तु निवार्य शरवागुराम् ।
तिष्ठध्वं युद्धमनसो दर्पं शमयितास्मि वः ॥ ५
एतावदुक्त्वा कौरव्यो रोषाद्गाण्डीवभृत्तदा ।
ततोऽथ वचनं स्मृत्वा भ्रातुर्ज्येष्ठस्य भारत ॥ ६
न हन्तव्या रणे तात क्षत्रिया विजिगीषवः ।
जेतव्याश्चेति यत्प्रोक्तं धर्मराज्ञा महात्मना ।
चिन्तयामास स तदा फल्गुनः पुरुषर्षभः ॥ ७
इत्युक्तोऽहं नरेन्द्रेण न हन्तव्या नृपा इति ।
कथितं न मृषेदं स्याद्धर्मराजवचः शुभम् ॥ ८
न हन्येरंश्च राजानो राज्ञश्चाज्ञा कृता भवेत् ।
इति संचिन्त्य स तदा फल्गुनः पुरुषर्षभः ॥ ९
प्रोवाच वाक्यं धर्मज्ञः सैन्धवान्युद्धदुर्मदान् ।
बालांस्त्रियो वा युष्माकं न हनिष्ये व्यवस्थितान्॥
यश्च वक्ष्यति संग्रामे तवास्मीति पराजितः ।
एतच्छ्रुत्वा वचो मह्यं कुरुध्वं हितमात्मनः ॥११
ततोऽन्यथा कृच्छ्रगता भविष्यथ मयाऽर्दिताः ।
एवमुक्त्वा तु तान्वीरान्युयुधे कुरुपुङ्गवः ॥ १२
अत्वरावानसंभ्रान्तः संक्रुद्धैर्विजिगीषुभिः ।
शतं शतसहस्राणि शराणां नतपर्वणाम् ॥ १३
मुमुचुः सैन्धवा राजंस्तदा गाण्डीवधन्वनि ।
शरानापततः क्रूरानाशीविषविषोपमान् ।
चिच्छेद निशितैर्बाणैरन्तरा स धनंजयः ॥ १४
छित्त्वा तु तानाशु चैव कङ्कपत्राञ्शिलाशितान् ।
एकैकमेषां समरे बिभेद निशितैः शरैः ॥ १५
ततः प्रासांश्च शक्तीश्च पुनरेव धनंजये ।
जयद्रथं हतं स्मृत्वा चिक्षिपुः सैन्धवा नृपाः॥१६
तेषां किरीटी संकल्पं मोघं चक्रे महाबलः ।
सर्वांस्तानन्तरा च्छित्त्वा तदा चुक्रोश पाण्डवः॥
तथैवापततां तेषां योधानां जयगृद्धिनाम् ।
शिरांसि पातयामास भल्लैः सन्नतपर्वभिः ॥ १८
तेषां प्रद्रवतां चापि पुनरेवाभिधावताम् ।
निवर्ततां च शब्दोऽभूत्पूर्णस्येव महोदधेः ॥ १९
ते वध्यमानास्तु तदा पार्थेनामिततेजसा ।
यथाप्राणं यथोत्साहं योधयामासुरर्जुनम् ॥ २०
ततस्ते फल्गुनेनाजौ शरैः सन्नतपर्वभिः ।
कृता विसंज्ञा भूयिष्ठाः क्लान्तवाहनसैनिकाः २१
तांस्तु सर्वान्परिग्लानान्विदित्वा धृतराष्ट्रजा ।
दुःशला बालमादाय नप्तारं प्रययौ तदा ॥ २२
सुरथस्य सुतं वीरं रथेनाथागमत्तदा ।
शान्त्यर्थं सर्वयोधानामभ्यगच्छत पाण्डवम् ॥२३
सा धनंजयमासाद्य रुरोदार्तस्वरं तदा ।
धनंजयोपि तां दृष्ट्वा धनुर्विससृजे प्रभुः ॥ २४
समुत्सृज्य धनुः पार्थो विधिवद्भगिनीं तदा ।
प्राह किं करवाणीति सा च तं प्रत्युवाच ह॥२५
एष ते भरतश्रेष्ठ स्वस्रीयस्यात्मजः शिशुः ।
अभिवादयते पार्थ तं पश्य पुरुषर्षभ ॥ २६
इत्युक्तस्तस्य पितरं स पप्रच्छार्जुनस्तथा ।
क्वासाविति ततो राजन्दुःशला वाक्यमब्रवीत् २७
पितृशोकाभिसंतप्तो विषादार्तोऽस्य वै पिता ।
पञ्चत्वमगमद्वीरो यथा तन्मे निशामय ॥ २८
स पूर्वं पितरं श्रुत्वा हतं युद्धे त्वयाऽनघ ।
त्वामागतं च संश्रुत्य युद्धाय हयसारिणम् ।
पितुश्च मृत्युदुःखार्तोऽजहात्प्राणान्धनंजय ॥ २९

प्राप्तो बीभत्सुरित्येव नाम श्रुत्वैव तेऽनघ ।
विषादार्तः पपातोर्व्यां ममार च ममात्मजः॥३०
तं दृष्ट्वा पतितं तत्र ततस्तस्यात्मजं प्रभो ।
गृहीत्वा समनुप्राप्ता त्वामद्य शरणैषिणी ॥ ३१
इत्युक्त्वाऽऽर्तस्वरं सा तु मुमोच धृतराष्ट्रजा ।
दीना दीनं स्थितं पार्थमब्रवीचाप्यधोमुखम्॥३२
स्वसारं समवेक्षस्व स्वस्रीयात्मजमेव च ।
कर्तुमर्हसि धर्मज्ञ दयां कुरुकुलोद्वह ।
विस्मृत्य कुरुराजानं तं च मन्दं जयद्रथम् ॥३३
अभिमन्योर्यथा जातः परिक्षित्परवीरहा ।
तथाऽयं सुरथाज्जातो मम पौत्रो महाभुज ॥ ३४
तमादाय नरव्याघ्र संप्राप्तास्मि तवान्तिकम् ।
शमार्थं सर्वयोधानां शृणु चेदं वचो मम ॥ ३५
आगतोऽयं महाबाहो तस्य मन्दस्य पुत्रकः ।
प्रसादमस्य बालस्य तस्मात्त्वं कर्तुमर्हसि ॥ ३६
एष प्रसाद्य शिरसा प्रशमार्थमरिंदम ।
याचते त्वां महाबाहो शमं गच्छ धनंजय ॥ ३७
बालस्य हतबन्धोश्च पार्थ किंचिदजानतः ।
प्रसादं कुरु धर्मज्ञ मा मन्युवशमन्वगाः ॥ ३८
तमनार्यं नृशंसं च विस्मृत्यास्य पितामहम् ।
आगस्कारिणमत्यर्थं प्रसादं कर्तुमर्हसि ॥ ३९
एवं ब्रुवत्यां करुणं दुःशलायां धनंजयः ।
संस्मृत्य देवीं गान्धारीं धृतराष्ट्रं च पार्थिवम् ।
उवाच दुःखशोकार्तः क्षत्रधर्मं व्यगर्हयत् ॥ ४०
'धिक्तं दुर्योधनं क्षुद्रं राज्यलुब्धं च मानिनम् ।'
यत्कृते बान्धवाः सर्वे मया नीता यमक्षयम्॥४१
इत्युक्त्वा बहु सान्त्वादि प्रसादमकरोज्जयः ।
परिष्वज्य च तां प्रीतो विससर्ज गृहान्प्रति ॥४२
दुःशला चापि तान्योधान्निवार्य महतो रणात् ।
संपूज्य पार्थं प्रययौ गृहानेव शुभानना ॥ ४३
एवं निर्जित्य तान्वीरान्सैन्धवान्स धनंजयः ।
अन्वधावत धावन्तं हयं कामविचारिणम् ॥ ४४
ततो मृगमिवाकाशे यथा देवः पिनाकधृक् ।
ससार तं तथा वीरो विधिवद्यज्ञियं हयम् ॥ ४५
स च वाजी यथेष्टेन तांस्तान्देशान्यथाक्रमम् ।
विचचार यथाकामं कर्म पार्थस्य वर्धयन् ॥ ४६
क्रमेण स हयस्त्वेवं विचरन्पुरुषर्षभ ।
मणलूरपतेर्देशमुपायात्सहपाण्डवः ॥ ४७

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

## एकोनाशीतितमोऽध्यायः ॥ ७९ ॥

अर्जुनेन मणलूरपुरं प्रति गमनम् ॥ १ ॥ तथा पितृभक्त्या विनयेनागतं चित्राङ्गदायां जातं स्वात्मजं बभ्रुवाहनंप्रति क्षत्रधर्मपरित्यागजरोषादुपालम्भः ॥ २ ॥ तमसहमानया उलूप्या नागलोकादेत्य बभ्रुवाहनस्यार्जुनेन सह युद्धप्रोत्साहनम् ॥ ३ ॥ बभ्रुवाहनेन स्वशरगाढाभिघातेन निपतिते पार्थे पितृमारणशोकेन मोहाधिगमः ॥ ४ ॥ ततश्चित्राङ्गदया रणाङ्गणमेत्य बहुधा विलापः ॥ ५ ॥

वैशंपायन उवाच ।
श्रुत्वा तु नृपतिः प्राप्तं पितरं बभ्रुवाहनः ।
निर्ययौ विनयेनाथ ब्राह्मणार्यपुरःसरः ॥ १
मणलूरेश्वरं त्वेवमुपयातं धनंजयः ।
नाभ्यनन्दत्स मेधावी क्षत्रधर्ममनुस्मरन् ॥ २
उवाच च स धर्मात्मा समन्युः फल्गुनस्तदा ।
प्रक्रियेयं न ते युक्ता बहिस्त्वं क्षत्रधर्मतः ॥ ३
संरक्ष्यमाणं तुरगं यौधिष्ठिरमुपागतम् ।
यज्ञियं विषयान्ते मां नायोत्सीः किंनु पुत्रक ॥ ४
धिक्त्वामस्तु सुदुर्बुद्धिं क्षत्रधर्मविशारदम् ।
यो मां युद्धाय संप्राप्तं साम्नैव प्रत्यगृह्णथाः ॥ ५
न त्वया पुरुषार्थो हि कश्चिदस्तीह जीवता ।
यस्त्वं स्त्रीवद्युधा प्राप्तं मां साम्ना प्रत्यगृह्णथाः॥६
यद्यहं न्यस्तशस्त्रस्त्वामागच्छेयं सुदुर्मते ।

मणिपूरपतेरिति झ. पाठः ॥ ४७ ॥

अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

प्रक्रियेयं भवेद्युक्ता तावत्तव नराधम ॥ ७
तमेवमुक्तं भर्त्रा तु विदित्वा पन्नगात्मजा
अमृष्यमाणा भित्त्वोर्वीमुलूपी समुपागमत् ॥
सा ददर्श ततः पुत्रं विमृशन्तमधोमुखम् ।
संतर्ज्यमानमसकृत्पित्रा युद्धार्थिना विभो ॥ ९
ततः सा चारुसर्वाङ्गी समुपेत्योरगात्मजा ।
उलूपी प्राह वचनं क्षत्रधर्मविशारद ॥ १०
उलूपीं मां निबोध त्वं मातरं पन्नगात्मजाम् ।
कुरुष्व वचनं पुत्र धर्मस्ते भविता परः ॥ ११
युध्यस्वैनं कुरुश्रेष्ठं धनंजयमरिन्दमम् ।
एवमेष हि ते प्रीतो भविष्यति न संशयः ॥ १२
एवमुद्धर्षितो राजा स मात्रा बभ्रुवाहनः ।
मनश्चक्रे महातेजा युद्धाय भरतर्षभ ॥ १३
सन्नह्य काञ्चनं वर्म शिरस्त्राणं च भानुमत् ।
तूणीरशतसंबाधमारुरोह रथोत्तमम् ॥ १४
सर्वोपकरणोपेतं युक्तमश्वैर्मनोजवैः ।
सचक्रोपस्करं श्रीमान्हेमभाण्डपरिष्कृतम् ॥ १५
परमार्चितमुच्छ्रित्य ध्वजं हंसं हिरण्मयम् ।
प्रययौ पार्थमुद्दिश्य स राजा बभ्रुवाहनः ॥ १६
ततोऽभ्येत्य हयं वीरो यज्ञियं पार्थरक्षितम् ।
ग्राहयामास पुरुषैर्हयशिक्षाविशारदैः ॥ १७
गृहीतं वाजिनं दृष्ट्वा प्रीतात्मा स धनंजयः ।
पुत्रं रथस्थं भूमिष्ठः संन्यवारयदाहवे ॥ १८
स तत्र राजा तं वीरं शरसङ्घैरनेकशः ।
अर्दयामास निशितैराशीविषविषोपमैः ॥ १९
तयोः समभवद्युद्धं पितुः पुत्रस्य चातुलम् ।
देवासुररणप्रख्यमुभयोः प्रीयमाणयोः ॥ २०
किरीटिनं प्रविव्याध शरेणानतपर्वणा ।
जत्रुदेशे नरव्याघ्रं प्रहसन्बभ्रुवाहनः ॥ २१
सोभ्यगात्सहपुङ्खेन वल्मीकमिव पन्नगः ।
विनिर्भिद्य च कौन्तेयं प्रविवेश महीतलम् ॥ २२
स गाढवेदनो धीमानालम्ब्य धनुरुत्तमम् ।
दिव्यं तेजः समाविश्य प्रमीत इव सोभवत् ॥ २३
स संज्ञामुपलभ्याथ प्रशस्य पुरुषर्षभः ।
पुत्रं शक्रात्मजो वाक्यमिदमाह महाद्युतिः ॥ २४
साधुसाधु महाबाहो वत्स चित्राङ्गदात्मज ।
सदृशं कर्म ते दृष्ट्वा प्रीतिमानस्मि पुत्रक ॥ २५
विमुञ्चाम्येष ते बाणान्पुत्र युद्धे स्थिरो भव ।
इत्येवमुक्त्वा नाराचैरभ्यवर्षदमित्रहा ॥ २६
तान्स गाण्डीवनिर्मुक्तान्वज्राशनिसमप्रभान् ।
नाराचानच्छिनद्राजा भल्लैः सर्वांस्त्रिधा द्विधा २७
तस्य पार्थः शरैर्दिव्यैर्ध्वजं हेमपरिष्कृतम् ।
सुवर्णतालप्रतिमं क्षुरेणापाहरद्रथात् ॥ २८
हयांश्चास्य महाकायान्महावेगानरिंदम ।
चकार राजन्निर्जीवान्प्रहसन्निव पाण्डवः ॥ २९
स रथादवतीर्याथ राजा परमकोपनः ।
पदातिः पितरं क्रुद्धो योधयामास पाण्डवम् ॥ ३०
संप्रीयमाणः पार्थानामृषभः पुत्रविक्रमात् ।
नात्यर्थं पीडयामास पुत्रं वज्रधरात्मजः ॥ ३१
स हन्यमानोऽभिमुखं पितरं बभ्रुवाहनः ।
शरैराशीविषाकारैः पुनरेवार्दयद्बली ॥ ३२
ततः स बाल्यात्पितरं विव्याध हृदि पत्रिणा ।
निशितेन सुपुङ्खेन बलवद्बभ्रुवाहनः ॥ ३३
स बाणस्तेजसा दीप्तो ज्वलन्निव हुताशनः ।
विवेश पाण्डवं राजन्मर्म भित्त्वाऽतिदुःखकृत् ३४
स तेनातिभृशं विद्धः पुत्रेण कुरुनन्दनः ।
महीं जगाम मोहार्तस्ततो राजन्धनंजयः ॥ ३५
तस्मिन्निपतिते वीरे कौरवाणां धुरंधरे ।
सोपि मोहं जगामाथ ततश्चित्राङ्गदासुतः ॥ ३६
व्यायम्य संयुगे राजा दृष्ट्वा च पितरं हतम् ।
पूर्वमेव स बाणौघैर्गाढविद्धोऽर्जुनेन ह ।
पपात सोपि धरणीमालिङ्ग्य रणमूर्धनि ॥ ३७
भर्तारं निहतं दृष्ट्वा पुत्रं च पतितं भुवि ।
चित्राङ्गदा परित्रस्ता प्रविवेश रणाजिरे ॥ ३८

प्रमीतइव मृतइव ॥ २३ ॥ पुत्रं प्रशस्येति संबन्धः ॥२४॥ चित्राङ्गदा चित्रवाहनदुहिताऽर्जुनस्य द्वितीया स्त्री ॥ २५ ॥

शोकसंतप्तहृदया रुदती वेपती भृशम् । मणलूरपतेर्माता ददर्श निहतं पतिम् ॥ ३९

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि एकोनाशीतितमोऽध्यायः ॥ ७९ ॥

## अशीतितमोऽध्यायः ॥ ८० ॥

चित्राङ्गदया रणाङ्गणनिपतितपतिपुत्रदर्शनजशोकातिरेकेण मोहाधिगमः ॥ १ ॥ तथा संज्ञोपलम्भे उलूपीं प्रत्युपालम्भगर्भवचनम् ॥ २ ॥ ततश्चिराल्लब्धसंज्ञेन बभ्रुवाहनेनात्मोपालम्भनपूर्वकं प्रायोपवेशनम् ॥ ३ ॥

वैशंपायन उवाच
ततो बहुतरं भीरुर्विलप्य कमलेक्षणा ।
मुमोह दुःखसंतप्ता पपात च महीतले ॥ १
प्रतिलभ्य च सा संज्ञां देवी दिव्यवपुर्धरा ।
उलूपीं पन्नगसुतां दृष्ट्वेदं वाक्यमब्रवीत् ॥ २
उलूपि पश्य भर्तारं शयानं निहतं रणे ।
त्वत्कृते मम पुत्रेण बाणेन समितिंजयम् ॥ ३
ननु त्वमार्यधर्मज्ञा ननु चासि पतिव्रता ।
यत्त्वत्कृतेऽयं पतितः पतिस्ते निहतो रणे ॥ ४
किंतु मन्देऽपराद्धोऽयं यदि तेऽद्य धनंजयः ।
क्षमस्व याच्यमाना वै जीवयस्व धनंजयम् ॥ ५
ननु त्वमार्ये धर्मज्ञे त्रैलोक्यविदिता शुभे ।
यद्घातयित्वा पुत्रेण भर्तारं नानुशोचसि ॥ ६
नाहं शोचामि तनयं हतं पन्नगनन्दिनि ।
पतिमेव तु शोचामि यस्यातिथ्यमिदं कृतम् ॥ ७
इत्युक्त्वा सा तदा देवीमुलूपीं पन्नगात्मजाम् ।
भर्तारमभिगम्येदमित्युवाच यशस्विनी ॥ ८
उत्तिष्ठ कुरुमुख्यस्य प्रियमुख्य मम प्रिय ।
अयमश्वो महाबाहो मया ते परिमोक्षितः ॥ ९
ननु त्वया नाम विभो धर्मराजस्य यज्ञियः ।
अयमश्वोऽनुसर्तव्यः स शेषे किं महीतले ॥ १०
त्वयि प्राणा ममायत्ताः कुरूणां कुरुनन्दन ।
स कस्मात्प्राणदोऽन्येषां प्राणान्संत्यक्तवानसि ११
उलूपि साधु पश्येमं पतिं निपतितं भुवि ।
पुत्रं चेमं समुत्साह्य घातयित्वा न शोचसि ॥ १२
कामं स्वपितु बालोऽयं भूमौ मृत्युवशं गतः ।
लोहिताक्षो गुडाकेशो विजयः साधु जीवतु ॥ १३
नापराधोऽस्ति सुभगे नराणां बहुभार्यता ।
प्रमदानां भवत्येष मा ते भूद्बुद्धिरीदृशी ॥ १४
सख्यं चैतत्कृतं धात्रा शश्वदव्ययमेव तु ।
सख्यं समभिजानीहि सत्यं संगतमस्तु ते ॥ १५
पुत्रेण घातयित्वैनं पतिं यदि न मेऽद्य वै ।
जीवन्तं दर्शयस्यद्य परित्यक्ष्यामि जीवितम् ॥ १६
साऽहं दुःखान्विता देवि पतिपुत्रविनाकृता ।
इहैव प्रायमासिष्ये प्रेक्षन्त्यास्ते न संशयः ॥ १७
इत्युक्त्वा पन्नगसुतां सपत्नी चैत्रवाहनी ।
ततः प्रायमुपासीना तूष्णीमासीज्जनाधिप ॥ १८
ततो विलप्य विरता भर्तुः पादौ प्रगृह्य सा ।
उपविष्टा भवद्दीना सोच्छ्वासं पुत्रमीक्षती ॥ १९
ततः संज्ञां पुनर्लब्ध्वा स राजा बभ्रुवाहनः ।
मातरं तामथालोक्य रणभूमावथाब्रवीत् ॥ २०
इतो दुःखतरं किंनु यन्मे माता सुखैधिता ।
भूमौ निपतितं वीरमनुशेते मृतं पतिम् ॥ २१
निहन्तारं रणेऽरीणां सर्वशस्त्रभृतां वरम् ।
मया विनिहतं सङ्ख्ये प्रेक्षते दुर्मरं बत ॥ २२
अहोऽस्या हृदयं देव्या दृढं यन्न विदीर्यते ।
व्यूढोरस्कं महाबाहुं प्रेक्षन्त्या निहतं पतिम् ॥ २३
दुर्मरं पुरुषेणेह मन्ये काले ह्यनागते ।
यत्र नाहं न मे माता न वियुज्यौ स्वजीवितात् ॥ २४
हाहा धिक्कुरुवीरस्य किरीटं काञ्चनं भुवि ।
अपविद्धं हतस्येह मया पुत्रेण पश्यत ॥ २५
भोभो पश्यत मे वीरं पितरं ब्राह्मणा भुवि ।
शयानं वीरशयने मया पुत्रेण पातितम् ॥ २६

पतिमर्जुनम् ॥ ३९ ॥ ऊनाशीतितमोऽध्यायः ॥ ७९ ॥

ब्राह्मणाः कुरुमुख्यस्य ये मुक्ता हयसारिणः ।
कुर्वन्ति शान्तिं कामस्य रणे योऽयं मया हतः॥२७
व्यादिशन्तु च किं विप्राः प्रायश्चित्तमिहाद्य मे ।
आनृशंसस्य पापस्य पितृहन्तू रणाजिरे ॥ २८
दुश्चरा द्वादश समा हत्वा पितरमद्य वै ।
ममेह सुनृशंसस्य संवीतस्यास्य चर्मणा ॥ २९
शिरःकपाले चास्यैव भुञ्जतः पितुरद्य मे ।
प्रायश्चित्तं हि नास्त्यन्यद्धत्वाऽद्य पितरं मम ॥३०
पश्य नागोत्तमसुते भर्तारं निहतं मया ।
कृतं प्रियं मया तेऽद्य निहत्य समरेऽर्जुनम् ॥३१
सोऽहमद्य गमिष्यामि गतिं पितृनिषेविताम् ।
न शक्नोम्यात्मनाऽऽत्मानमहं धारयितुं शुभे॥३२
सा त्वं मयि मृते मातस्तथा गाण्डीवधन्वनि ।
भव प्रीतिमती देवि सत्येनात्मानमालभे ॥ ३३
इत्युक्त्वा स ततो राजा दुःखशोकसमाहतः ।
उपस्पृश्य महाराज दुःखाद्वचनमब्रवीत् ॥ ३४
शृण्वन्तु सर्वभूतानि स्थावराणि चराणि च ।
त्वं च मातर्यथा सत्यं ब्रवीमि भुजगोत्तमे ॥ ३५
यदि नोत्तिष्ठति जयः पिता मे नरसत्तमः ।
अस्मिन्नेव रणोद्देशे शोषयिष्ये कलेवरम् ॥ ३६
नहि मे पितरं हत्वा निष्कृतिर्विद्यते क्वचित् ।
नरकं प्रतिपत्स्यामि ध्रुवं गुरुवधार्दितः ॥ ३७
वीरं हि क्षत्रियं हत्वा गोशतेन प्रमुच्यते ।
पितरं तु निहत्यैवं दुर्लभा निष्कृतिर्मम ॥ ३८
एष एको महातेजाः पाण्डुपुत्रो धनंजयः
पिता च मम धर्मात्मा तस्य मे निष्कृतिः कुतः ३९
इत्येवमुक्त्वा नृपते धनंजयसुतो नृपः ।
उपस्पृश्याभवत्तूष्णीं प्रायोपेतो महामतिः ॥ ४०

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि अशीतितमोऽध्यायः ॥ ८० ॥

## एकाशीतितमोऽध्यायः ॥ ८१ ॥

प्रायोपविष्टे उलूप्या स्मरणमात्रसंनिहितसंजीवनमणिनार्जुनस्य समुद्बोधनम् ॥ १ ॥ ततः सुप्तोत्थितेनेव तेन चित्राङ्गदादीनां रणाङ्गणागमने कारणप्रश्ने तेनोलूपींप्रति प्रश्नचोदना ॥ २ ॥

वैशंपायन उवाच ।
प्रायोपविष्टे नृपतौ मणलूरेश्वरे तदा ।
पितृशोकसमाविष्टे सह मात्रा परंतप ॥ १
उलूपी चिन्तयामास तदा संजीवनं मणिम् ।
स चोपातिष्ठत तदा पन्नगानां परायणम् ॥ २
तं गृहीत्वा तु कौरव्य नागराजपतेः सुता ।
मनःप्रह्लादनीं वाचं सैनिकानामथाब्रवीत् ॥ ३
उत्तिष्ठ मा शुचः पुत्र नैव जिष्णुस्त्वया हतः ।
अजेयः पुरुषैरेष तथा देवैः सवासवैः ॥ ४
मया तु मोहनी नाम मायैषा संप्रदर्शिता ।
प्रियार्थं पुरुषेन्द्रस्य पितुस्तेऽद्य यशस्विनः ॥ ५
जिज्ञासुर्ह्येष पुत्रस्य बलस्य तव कौरव ।
संग्रामे युद्ध्यतो राजन्नागतः परवीरहा ॥ ६
तस्मादसि मया पुत्र युद्धाय परिचोदितः ।
मा पापमात्मनः पुत्र शङ्केथा ह्यण्वपि प्रभो ॥ ७
ऋषिरेष महानात्मा पुराणः शाश्वतोऽक्षरः ।
नैनं शक्तो हि संग्रामे जेतुं शक्रोऽपि पुत्रक ॥ ८
अयं तु मे मणिर्दिव्यः समानीतो विशांपते ।
मृतान्मृतान्पन्नगेन्द्रान्यो जीवयति नित्यदा ॥ ९
एनमस्योरसि त्वं च स्थापयस्व पितुः प्रभो ।
संजीवितं तदा पार्थं स त्वं द्रष्टासि पाण्डवम् ॥१०
इत्युक्तः स्थापयामास तस्योरसि मणिं तदा ।
पार्थस्यामिततेजाः स पितुः स्नेहादपापकृत् ॥११
तस्मिन्न्यस्ते मणौ वीरो जिष्णुरुज्जीवितः प्रभुः ।
चिरसुप्त इवोत्तस्थौ मृष्टलोहितलोचनः ॥ १२
तमुत्थितं महात्मानं लब्धसंज्ञं मनस्विनम् ।
समीक्ष्य पितरं स्वस्थं ववन्दे बभ्रुवाहनः ॥ १३
उत्थिते पुरुषव्याघ्रे पुनर्लक्ष्मीवति प्रभो ।

कामस्येति कां अस्यैति च्छेद. ॥ २७ ॥

अशीतितमोऽध्यायः ॥ ८० ॥

दिव्याः सुमनसः पुण्या ववृषे पाकशासनः॥१४
अनाहता दुन्दुभयो विनेदुर्मेघनिःस्वनाः ।
साधुसाध्विति चाकाशे बभूव सुमहान्स्वनः॥१५
उत्थाय च महाबाहुः पर्याश्वस्तो धनंजयः ॥
बभ्रुवाहनमालिङ्ग्य समाजिघ्रत मूर्धनि ॥ १६
ददर्श चापि दूरेऽस्य मातरं शोककर्शिताम् ।
उलूप्या सह तिष्ठन्तीं ततोऽपृच्छद्धनंजयः ॥१७
किमिदं लक्ष्यते सर्वं शोकविस्मयहर्षवत् ।
रणाजिरममित्रघ्न यदि जानासि शंस मे ॥ १८
जननी च किमर्थं ते रणभूमिमुपागता ।
नागेन्द्रदुहिता चेयमुलूपी किमिहागता ॥ १९
जानाम्यहमिदं युद्धं त्वया मद्वचनात्कृतम् ।
स्त्रीणामागमने हेतुमहमिच्छामि वेदितुम् ॥ २०
तमुवाच तथा पृष्टो मणलूरपतिस्तदा ।
प्रसाद्य शिरसा विद्वानुलूपी पृच्छ्यतामिति ॥२१

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि एकाशीतितमोऽध्यायः ॥ ८१ ॥

## द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

उलूप्यार्जुनंप्रति चित्राङ्गदादीनां समराङ्गणागमने कारणाभिधानम् ॥ १ ॥ तथा बभ्रुवाहनेन तस्य पराजये विस्तरेण हेतुकथनम् ॥ २ ॥

न उवाच ।
किमागमनकृत्यं ते कौरव्यकुलनन्दिनि ।
मणलूरपतेर्मातुस्तथैव च रणाजिरे ॥ १
कच्चित्कुशलकामासि राज्ञोऽस्य भुजगात्मजे ।
मम वा चपलापाङ्गि कच्चित्त्वं शुभमिच्छसि ॥२
कच्चित्ते पृथुलश्रोणि नाप्रियं प्रियदर्शने ।
अकार्षमहमज्ञानादयं वा बभ्रुवाहनः ॥ ३
कच्चिन्नु राजपुत्री ते सपत्नी चैत्रवाहनी ।
चित्राङ्गदा वरारोहा नापराध्यति किंचन ॥ ४
तमुवाचोरगपतेर्दुहिता प्रहसन्त्यथ ।
न मे त्वमपराद्धोसि न हि मे बभ्रुवाहनः ।
न जनित्री तथाऽस्येयं मम या प्रेष्यवत्स्थिता॥५
श्रूयतां यद्यथा चेदं मया सर्वं विचेष्टितम् ।
न मे कोपस्त्वया कार्यः शिरसा त्वां प्रसादये॥६
त्वत्प्रियार्थं हि कौरव्य कृतमेतन्मया विभो ।
यत्तच्छृणु महाबाहो निखिलेन धनंजय ॥ ७
महाभारतयुद्धे यत्त्वया शान्तनवो नृपः ।
अधर्मेण हतः पार्थ तस्यैषा निष्कृतिः कृता ॥ ८
न हि भीष्मस्त्वया वीर युध्यमानो हि पातितः ।
शिखण्डिना तु संयुक्तस्तमाश्रित्य हतस्त्वया ॥९
तस्य शान्तिमकृत्वा त्वं त्यजेथा यदि जीवितम् ।
कर्मणा तेन पापेन पतेथा निरये ध्रुवम् ।
एषा तु विहिता शान्तिः पुत्राद्यां प्राप्तवानसि १०
वसुभिर्वसुधापाल गङ्गया च महामते ।
पुरा हि श्रुतमेतत्ते वसुभिः कथितं मया ॥ ११
गङ्गायास्तीरमाश्रित्य हते शान्तनवे नृप ।
आप्लुत्य देवा वसवः समेत्य च महानदीम् ।
इदमूचुर्वचो घोरं भागीरथ्या मते तदा ॥ १२
एष शान्तनवो भीष्मो निहतः सव्यसाचिना ।
अयुध्यमानः संग्रामे संसक्तोऽन्येन भामिनि१३
तदनेनानुषङ्गेण वयमद्य धनञ्जयम् ।
शापेन योजयामेति तथाऽस्त्विति च साऽब्रवीत्॥
तदहं पितुरावेद्य प्रविश्य व्यथितेन्द्रिया ।
अभवं स च तच्छ्रुत्वा विषादमगमत्परम् ॥ १५
पिता तु मे वसून्गत्वा त्वदर्थं समयाचत ।
पुनः पुनः प्रसाद्यैतांस्त एनमिदमब्रुवन् ॥ १६
पुत्रस्तस्य महाभाग मणलूरेश्वरो युवा ।
स एनं रणमध्यस्थः शरैः पातयिता भुवि ॥ १७
एवं कृते स नागेन्द्र मुक्तशापो भविष्यति ।
गच्छेति वसुभिश्चोक्तो मम चेदं शशंस सः॥१८
तच्छ्रुत्वा त्वं मया तस्माच्छापादसि विमोक्षितः ।
न हि त्वां देवराजोऽपि समरेषु पराजयेत् ॥१९

आत्मा पुत्रः स्मृतस्तस्मात्त्वेनेहासि पराजितः ।
न हि दोषो मम मतः कथं वा मन्यसे विभो २०
इत्येवमुक्तो विजयः प्रसन्नात्माऽब्रवीदिदम् ।
सर्वं मे सुप्रियं देवि यदेतत्कृतवत्यसि ॥ २१
इत्युक्त्वा सोऽब्रवीत्पुत्रं मणलूरपतिं जयः ।
चित्राङ्गदायाः शृण्वन्त्याः कौरव्यदुहितुस्तदा २२
युधिष्ठिरस्याश्वमेधः परिचैत्रीं भविष्यति ।
तत्रागच्छेः सहामात्यो मातृभ्यां सहितो नृप २३
इत्येवमुक्तः पार्थेन स राजा बभ्रुवाहनः ।
उवाच पितरं धीमानिदमस्राविलेक्षणः ॥ २४
उपयास्यामि धर्मज्ञ भवतः शासनादहम् ।
अश्वमेधे महायज्ञे द्विजातिपरिवेषकः ॥ २५
मम त्वनुग्रहार्थाय प्रविशस्व पुरं स्वकम् ।
भार्याभ्यां सह धर्मज्ञ माभूत्तेऽत्र विचारणा ॥२६
उषित्वेह निशामेकां सुखं स्वभवने प्रभो ।
पुनरश्वानुगमनं कर्तासि जयतांवर ॥ २७
इत्युक्तः स तु पुत्रेण तदा वानरकेतनः ।
स्मयन्प्रोवाच कौन्तेयस्तदा चित्राङ्गदासुतम् ॥२८
विदितं ते महाबाहो यथा दीक्षां चराम्यहम् ।
न स तावत्प्रवेक्ष्यामि पुरं ते पृथुलोचन ॥ २९
यथाकामं व्रजत्येष यज्ञियाश्वो नरर्षभ ।
स्वस्ति तेऽस्तु गमिष्यामि न स्थानं विद्यते मम ३०
वैशंपायन उवाच ।
स तत्र विधिवत्तेन पूजितः पाकशासनिः ।
भार्याभ्यामभ्यनुज्ञातः प्रायाद्भरतसत्तमः ॥ ३१

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

## त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

अर्जुनेनाश्वानुसरणवशान्मगधदेशगमनम् ॥१॥ तत्र जरासंधपौत्रस्य मेघसंधेः पराजयपूर्वकं तत्रतत्र म्लेच्छादिपराजयः॥२॥

वैशंपायन उवाच ।
स तु वाजी समुद्रान्तां पर्येत्य वसुधामिमाम् ।
निवृत्तोऽभिमुखो राजन्येन वारणसाह्वयम् ॥ १
अनुगच्छंश्च तुरगं निवृत्तोऽथ किरीटभृत् ।
यदृच्छया समापेदे पुरं राजगृहं तदा ॥ २
तमभ्याशगतं दृष्ट्वा सहदेवात्मजः प्रभो ।
क्षत्रधर्मे स्थितो वीरः समरायाजुहाव ह ॥ ३
ततः पुरात्स निष्क्रम्य रथी धन्वी शरी तली ।
मेघसन्धिः पदातिं तं धनंजयमुपाद्रवत् ॥ ४
आसाद्य च महातेजा मेघसन्धिर्धनंजयम् ।
बालभावान्महाराज प्रोवाचेदं न कौशलात् ॥ ५
किमयं चार्यते वाजी स्त्रीमध्य इव भारत ।
हयमेनं हरिष्यामि प्रयतस्व विमोक्षणे ॥ ६
अदत्तानुनयो युद्धे यदि त्वं पितृभिर्मम ।
करिष्यामि तवातिथ्यं प्रहर प्रहरामि च ॥ ७
इत्युक्तः प्रत्युवाचैनं प्रहसन्निव पाण्डवः ।
विघ्नकर्ता मया वार्य इति मे व्रतमाहितम् ॥ ८
भ्रात्रा ज्येष्ठेन नृपते तवापि विदितं ध्रुवम् ।
प्रहरस्व यथाशक्ति न मन्युर्विद्यते मम ॥ ९
इत्युक्तः प्राहरत्पूर्वं पाण्डवं मगधेश्वरः ।
किरञ्शरसहस्राणि वर्षाणीव सहस्रदृक् ॥ १०
ततो गाण्डीवभृच्छूरो गाण्डीवप्रहितैः शरैः ।
चकार मोघांस्तान्बाणान्सयत्नान्भरतर्षभ ॥ ११
स मोघं तस्य बाणौघं कृत्वा वानरकेतनः ।
शरान्मुमोच ज्वलितान्दीप्तास्यानिव पन्नगान् १२
ध्वजे पताकादण्डेषु रथे यन्त्रे हयेषु च ।
अन्येषु च रथाङ्गेषु न शरीरे न सारथौ ॥ १३
संरक्ष्यमाणः पार्थेन शरीरे सव्यसाचिना ।
मन्यमानः स्ववीर्यं तन्मागधः प्राहिणोच्छरान् १४
ततो गाण्डीवधन्वा तु मागधेन भृशाहतः ।
बभौ वसन्तसमये पलाशः पुष्पितो यथा ॥ १५

अदत्तानुनयः अशिक्षितः ॥ ७ ॥

अवध्यमानः सोऽभ्यघ्नन्मागधः पाण्डवर्षभम् ।
तेन तस्थौ स कौरव्य लोकवीरस्य दर्शने ॥ १६
सव्यसाची तु संक्रुद्धो विकृष्य बलवद्धनुः ।
हयांश्चकार निर्जीवान्सारथेश्च शिरोऽहरत् ॥ १७
धनुश्चास्य महच्चित्रं क्षुरेण प्रचकर्त ह ।
हस्तावापं पताकां च ध्वजं चास्य न्यपातयत् ॥१८
स राजा व्यथितो व्यश्वो विधनुर्हतसारथिः
गदामादाय कौन्तेयमभिदुद्राव वेगवान् ॥ १९
तस्यापतत एवाशु गदां हेमपरिष्कृताम् ।
शरैश्चकर्त बहुधा बहुभिर्गृध्रवाजितैः ॥ २०
सा गदा शकलीभूता विशीर्णमणिबन्धना ।
व्याली विमुच्यमानेव पपात धरणीतले ॥ २१
विरथं विधनुष्कं च गदया परिवर्जितम् ।
'नैच्छत्ताडयितुं धीमानर्जुनः समराग्रणीः ॥ २२
तत एनं विमनसं क्षत्रधर्मे व्यवस्थितम् ।'
सान्त्वपूर्वमिदं वाक्यमब्रवीत्कपिकेतनः ॥ २३

पर्याप्तः क्षत्रधर्मोऽयं दर्शितः पुत्र गम्यताम् ।
बह्वेतत्समरे कर्म तव बालस्य पार्थिव ॥ २४
युधिष्ठिरस्य संदेशो न हन्तव्या नृपा इति ।
तेन जीवसि राजंस्त्वमपराद्धोऽपि मे रणे ॥ २५
इति मत्वा तदाऽऽत्मानं प्रत्यादिष्टं स मागधः ।
तथ्यमित्यभिगम्यैनं प्राञ्जलिः प्रत्यपूजयत् ॥२६
पराजितोस्मि भद्रं ते नाहं योद्धुमिहोत्सहे ।
यद्यत्कृत्यं मया तेऽद्य तद्ब्रूहि कृतमेव तु ॥ २७
तमर्जुनः समाश्वास्य पुनरेवेदमब्रवीत् ।
आगन्तव्यं परां चैत्रीमश्वमेधे नृपस्य नः ॥ २८
इत्युक्तः स तथेत्युक्त्वा पूजयामास तं हयम् ।
फल्गुनं च युधिश्रेष्ठं विधिवत्सहदेवजः ॥ २९
ततो यथेष्टमगमत्पुनरेव स कौरवः ।
ततः समुद्रतीरेण वङ्गान्पुण्ड्रान्सकेरलान् ॥ ३०
तत्रतत्र च भूरीणि म्लेच्छसैन्यान्यनेकशः ।
विजिग्ये धनुषा राजन्गाण्डीवेन धनंजयः ॥ ३१

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

## चतुरशीतितमोऽध्यायः ॥ ८४ ॥

दक्षिणां दिशमुपागतेनार्जुनेन चेदीशितुः शिशुपालात्मजस्य पूजापरिग्रहणम् ॥ १ ॥ तथा काशिकोसलादिदेशाधिपतिपराजयपूर्वकं गान्धारदेशगमनम् ॥ २ ॥

वैशंपायन उवाच

मागधेनार्चितो राजन्पाण्डवः श्वेतवाहनः ।
दक्षिणां दिशमास्थाय चारयामास तं हयम् ॥ १
ततः स पुनरावर्त्य हयः कामचरो बली ।
आससाद पुरीं रम्यां चेदीनां शुक्तिसाह्वयाम् ॥२
शरभेणार्चितस्तत्र शिशुपालसुतेन सः ।
युद्धपूर्वं तदा तेन पूजया च महाबलः ॥ ३
ततोऽर्चितो ययौ राजंस्तदा स तुरगोत्तमः ।
काशीनङ्गान्कोसलांश्च किरातानथ तङ्गणान् ॥ ४
पूजां तत्र यथान्यायं प्रतिगृह्य धनंजयः ।
पुनरावृत्य कौन्तेयो दशार्णानगमत्तदा ॥ ५
तत्र चित्राङ्गदो नाम बलवानरिमर्दनः ।

तेन युद्धमभूत्तस्य विजयस्यातिभैरवम् ॥
तं चापि वशमानीय किरीटी पुरुषर्षभः ।
निषादराज्ञो विषयमेकलव्यस्य जग्मिवान् ॥ ७
एकलव्यसुतश्चैनं युद्धेन जगृहे तदा ।
तत्र चक्रे निषादैः स संग्रामं रोमहर्षणम् ॥ ८
ततस्तमपि कौन्तेयः समरेष्वपराजितः ॥
जिगाय युधि दुर्धर्षो यज्ञविघ्नार्थमागतम् ॥ ९
स तं जित्वा महाराज नैषादिं पाकशासनिः ।
अर्चितः प्रययौ भूयो दक्षिणं सलिलार्णवम् ॥ १०
तत्रापि द्रविडैरान्ध्रै रौद्रैर्माहिषकैरपि ।
तथा कोल्लगिरेयैश्च युद्धमासीत्किरीटिनः ॥ ११
तांश्चापि विजयो जित्वा नातितीव्रेण कर्मणा ।

गृध्रवाजितैः गृध्रपक्षयुतैः ॥ २० ॥

त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

तुरङ्गमवशेनाथ सुराष्ट्रानभितो ययौ ।
गोकर्णमथ चासाद्य प्रभासमपि जग्मिवान् ॥ १२
ततो द्वारवतीं रम्यां वृष्णिवीराभिपालिताम् ।
आससाद हयः श्रीमान्कुरुराजस्य यज्ञियः ॥ १३
तमुन्मथ्य हयश्रेष्ठं यादवानां कुमारकाः
प्रययुस्तांस्तदा राजन्नुग्रसेनो न्यवारयत् ॥ १४
ततः पुराद्विनिष्क्रम्य वृष्ण्यन्धकपतिस्तदा ।
सहितो वासुदेवेन मातुलेन किरीटिनः ॥ १५
तौ समेत्य कुरुश्रेष्ठं विधिवत्प्रीतिपूर्वकम् ।
परया भारतश्रेष्ठं पूजया समवस्थितौ ।
ततस्ताभ्यामनुज्ञातो ययौ येन हयो गतः ॥ १६
ततः स पश्चिमं देशं समुद्रस्य तदा हयः ।
क्रमेण व्यचरत्स्फीतं ततः पञ्चनदं ययौ ॥ १७
तस्मादपि स कौरव्य गन्धारविषयं हयः ।
विचचार यथाकामं कौन्तेयानुगतस्तदा ॥ १८
ततो गान्धारराजेन युद्धमासीत्किरीटिनः ।
घोरं शकुनिपुत्रेण पूर्ववैरानुसारिणा ॥ १९

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि चतुरशीतितमोऽध्यायः ॥ ८४ ॥

## पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

अर्जुनेन शकुनितनयपराजयपूर्वकं तत्सेनावमर्दनम् ॥ १ ॥ ततः शकुनिभार्यया तेन स्वसुतवधसंभावनया रणाङ्गणमेत्यार्जुनस्य प्रसादनम् ॥ २ ॥ अर्जुनेन गान्धारीगौरवात्तत्संमाननपूर्वकं तत्तनयसमाश्वासनम् ॥ ३ ॥

वैशंपायन उवाच ।
शकुनेस्तनयो वीरो गान्धाराणां महारथः ।
प्रत्युद्ययौ गुडाकेशं सैन्येन महता वृतः ।
हस्त्यश्वरथयुक्तेन पताकाध्वजमालिना ॥ १
अमृष्यमाणास्ते योधा नृपस्य शकुनेर्वधम् ।
अभ्ययुः सहिताः पार्थं प्रगृहीतशरासनाः ॥ २
स तानुवाच धर्मात्मा बीभत्सुरपराजितः ।
युधिष्ठिरस्य वचनं न च ते जगृहुर्हितम् ॥ ३
वार्यमाणास्तु पार्थेन सान्त्वपूर्वममर्षिताः ।
परिवार्य हयं जग्मुस्ततश्चुक्रोध पाण्डवः ॥ ४
ततः शिरांसि दीप्ताग्रैस्तेषां चिच्छेद पाण्डवः ।
क्षुरैर्गाण्डीवनिर्मुक्तैर्नातियत्नादिवार्जुनः ॥ ५
ते वध्यमानाः पार्थेन हयमुत्सृज्य संभ्रमात् ।
न्यवर्तन्त महाराज शरवर्षार्दिता भृशम् ॥ ६
वितुद्यमानस्तैश्चापि गान्धारैः पाण्डुनन्दनः ।
आदिश्यादिश्य तेजस्वी परानेतानवारयत् ॥ ७
वध्यमानेषु तेष्वाजौ गान्धारेषु समन्ततः ।
स राजा शकुनेः पुत्रः पाण्डवं प्रत्यवारयत् ॥ ८
तं युध्यमानं राजानं क्षत्रधर्मे व्यवस्थितम् ।
पार्थोऽब्रवीन्न मे वध्या राजानो राजशासनात् ॥ ९
अलं युद्धेन ते वीर न तेऽस्त्वद्य पराजयः ।
इत्युक्तस्तदनादृत्य वाक्यमज्ञानमोहितः ।
स शक्रसमकर्माणं समवाकिरदाशुगैः ॥ १०
तस्य पार्थः शिरस्त्राणमर्धचन्द्रेण पत्रिणा ।
अपाहरदमेयात्मा जयद्रथशिरो यथा ॥ ११
तं दृष्ट्वा विस्मयं जग्मुर्गान्धाराः सर्व एव ते ।
इच्छता तेन न हतो राजेत्यपि च ते विदुः ॥ १२
गान्धारराजपुत्रस्तु पलायनकृतक्षणः ।
ययौ तैरेव सहितस्त्रस्तैः क्षुद्रमृगैरिव ॥ १३
तेषां तु तरसा पार्थस्तत्रैव परिधावताम् ।
प्रजहारोत्तमाङ्गानि भल्लैः सन्नतपर्वभिः ॥ १४
उच्छ्रितांस्तु भुजान्केचिन्नाबुध्यन्त शरैर्हृतान् ।
शरैर्गाण्डीवनिर्मुक्तैः पृथुभिः पार्थचोदितैः ॥ १५
संभ्रान्तनरनागाश्वमपतद्विद्रुतं बलम् ।
हतविद्रुतभूयिष्ठमावर्तत मुहुर्मुहुः ॥ १६
नाभ्यदृश्यन्त वीरस्य केचिदग्रेऽग्र्यकर्मणः ।
रिपवः पात्यमाना वै ये सहेरन्महाशरान् ॥ १७
ततो गान्धारराजस्य मन्त्रिवृद्धपुरःसरा ।
जननी निर्ययौ भीता पुरस्कृत्यार्घ्यमुत्तमम् ॥ १८
सा न्यवारयदव्यग्रा तं पुत्रं युद्धदुर्मदम् ।

प्रसादयामास च तं जिष्णुमक्लिष्टकारिणम् ॥१९
तां पूजयित्वा बीभत्सुः प्रसादमकरोत्प्रभुः
शकुनेश्चापि तनयं सान्त्वयन्निदमब्रवीत् ॥ २०
न मे प्रियं महाबाहो यत्ते बुद्धिरियं कृता ।
प्रतियोद्धुममित्रघ्न भ्रातैव त्वं ममानघ ॥ २१
गान्धारीं मातरं स्मृत्वा धृतराष्ट्रकृतेन च ।
तेन जीवसि राजंस्त्वं निहतास्त्वनुगास्तव ॥२२
मैवं भूः शाम्यतां वैरं मा तेऽभूद्बुद्धिरीदृशी ।
आगन्तव्यं परां चैत्रीमश्वमेधे नृपस्य नः ॥ २३
इत्युक्त्वाऽनुययौ पार्थो हयं तं कामचारिणम् ।
ते न्यवर्तन्त गान्धारा हतशिष्टाः स्वकं पुरम् ॥२४

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

## षडशीतितमोऽध्यायः ॥ ८६ ॥

चारमुखादर्जुनस्य तुरगसंचारणात्पुनर्नगरं प्रत्यागमनश्रवणहृष्टस्य युधिष्ठिरस्य निदेशाद्भीमेन यज्ञशालादिनिर्मापणम् ॥ १ ॥ तथा नानादेशेभ्यो ब्राह्मणाद्यानयनपूर्वकं तेषामन्नदानादिव्यवस्थाकरणम् ॥ २ ॥

वैशंपायन उवाच ।
न्यवर्तत ततो वाजी येन नागाह्वयं पुरम् ।
तं निवृत्तं तु शुश्राव चारेणैव युधिष्ठिरः ।
श्रुत्वाऽर्जुनं कुशलिनं स च हृष्टमनाऽभवत् ॥ १
विजयस्य च तत्कर्म गान्धारविषये तदा ।
श्रुत्वा चान्येषु देशेषु स सुप्रीतोऽभवत्तदा ॥ २
एतस्मिन्नेव काले तु द्वादशीं माघमासिकीम् ।
इष्टं गृहीत्वा नक्षत्रं धर्मराजो युधिष्ठिरः ॥ ३
समानीय महातेजाः सर्वान्भ्रातॄन्महीपतिः ।
भीमं च नकुलं चैव सहदेवं च कौरव ॥ ४
प्रोवाचेदं वचः काले तदा धर्मभृतांवरः ।
आमन्त्र्य वदतां श्रेष्ठो भीमं प्रहरतां वरम् ॥ ५
आयाति भीमसेनासौ सहाश्वेन तवानुजः ।
यथा मे पुरुषाः प्राहुर्ये धनंजयसारिणः ॥ ६
उपस्थितश्च कालोऽयमभितो वर्तते हयः ।
माघी च पौर्णमासीयं मासः शेषो वृकोदर ॥ ७
तत्प्रस्थाप्यन्तु विद्वांसो ब्राह्मणा वेदपारगाः ।
वाजिमेधार्थसिद्ध्यर्थं देशं पश्यन्तु यज्ञियम् ॥ ८
इत्युक्तः स तु तच्चक्रे भीमो नृपतिशासनम् ।
हृष्टः श्रुत्वा गुडाकेशमायान्तं पुरुषर्षभम् ॥ ९
ततो ययौ भीमसेनः प्राज्ञैः स्थपतिभिः सह ।
ब्राह्मणानग्रतः कृत्वा कुशलान्यज्ञकर्मणि ॥ १०
तं ससालचयं श्रीमत्सप्रतोलीसुघट्टितम् ।
मापयामास कौरव्यो यज्ञवाटं यथाविधि ॥ ११
प्रासादशतसंबाधं मणिप्रवरकुट्टिमम् ।
'सदः स पत्नीसदनं साग्नीध्रमपि चोत्तरम् ।'
कारयामास विधिवद्धेमरत्नविभूषितम् ॥ १२
स्तंभान्कनकचित्रांश्च तोरणानि बृहन्ति च ।
यज्ञायतनदेशेषु दत्त्वा शुद्धं च काञ्चनम् ॥ १३
अन्तःपुराणां राज्ञां च नानादेशसमीयुषाम् ।
कारयामास धर्मात्मा तत्रतत्र यथाविधि ॥ १४
ब्राह्मणानां च वेश्मानि नानादेशसमीयुषाम् ।
कारयामास कौन्तेयो विधिवत्तान्यनेकशः ॥१५
तथा संप्रेषयामास दूतान्नृपतिशासनात् ।
भीमसेनो महाबाहो राज्ञामक्लिष्टकर्मणाम् ॥ १६
ते प्रियार्थं कुरुपतेराययुर्नृपसत्तम ।
रत्नान्यनेकान्यादाय स्त्रियोऽश्वानायुधानि च ॥१७
तेषां निर्विशतां तेषु शिबिरेषु महात्मनाम् ।
नर्दतः सागरस्येव दिवस्पृगभवत्स्वनः ॥ १८
'प्रत्युद्गम्य नमस्कृत्य ब्राह्मणांश्च न्यवेदयत् ।' १९
तेषामभ्यागतानां च स राजा कुरुवर्धनः ।
व्यादिदेशान्नपानानि शय्याश्चाप्यतिमानुषाः २०

इष्टं नक्षत्र पुष्यम् ॥ ३ ॥ प्रस्थाप्यन्तु प्रस्थापयन्तु । स्वार्थे णिच् । प्रतिष्ठन्त्वित्यर्थः ॥ ८ ॥

षडशीतितमोऽध्यायः ॥ ८६ ॥

वाहनानां च विविधाः शालाः शालीक्षुगोरसैः ।
उपेता भरतश्रेष्ठो व्यादिदेश स धर्मराट् ॥ २१
'वर्णाः पृथक्सन्निविष्टा ह्युत्तरोत्तरपूजिताः' ।
तथा तस्मिन्महायज्ञे धर्मराजस्य धीमतः ।
समाजग्मुर्मुनिगणा बहवो ब्रह्मवादिनः ॥ २२
ये च द्विजातिप्रवरास्तत्रासन्पृथिवीपते ।
समाजग्मुः सशिष्यांस्तान्प्रतिजग्राह कौरवः ॥२३
सर्वांश्चताननुययौ यावदावसथान्प्रति ।
स्वयमेव महातेजा दंभं त्यक्त्वा युधिष्ठिरः ॥२४
ततः कृत्वा स्थपतयः शिल्पिनोऽन्ये च ये तदा ।
कृत्स्नं यज्ञविधिं राजन्धर्मराजे न्यवेदयन् ॥ २५
तच्छ्रुत्वा धर्मराजस्तु कृतं सर्वमतन्द्रितः ।
हृष्टरूपोऽभवद्राजन्सह भ्रातृभिरादृतः ॥ २६
तस्मिन्यज्ञे प्रवृत्ते तु वाग्मिनो हेतुवादिनः ।
हेतुवादान्बहूनाहुः परस्परजिगीषवः ॥ २७
ददृशुस्तं नृपतयो यज्ञस्य विधिमुत्तमम् ।
देवेन्द्रस्येव विहितं भीमसेनेन भारत ॥ २८
ददृशुस्तोरणान्यत्र शातकुंभमयानि ते ।
शय्यासनविहारांश्च सुबहूनरत्नसंचयान् ॥ २९
घटान्पात्रीः कटाहानि कलशान्वर्धमानकान् ।
न हि किंचिदसौवर्णमपश्यन्वसुधाधिपाः ॥ ३०
यूपांश्च शास्त्रपठितान्दारवान्हेमभूषितान् ।
उपक्लृप्तान्यथाकालं विधिवद्भूरिवर्चसः ॥ ३१
स्थलजा जलजा ये च पशवः केचन प्रभो ।
सर्वानेव समानीतानपश्यंस्तत्र ते नृपाः ॥ ३२
गाश्चैव महिषीश्चैव तथा वृद्धस्त्रियोपि च ।
औदकानि च सत्वानि श्वापदानि वयांसि च ३३
जरायुजाण्डजातानि स्वेदजान्युद्भिदानि च ।
पर्वतानूपजातानि भूतानि ददृशुश्च ते ॥ ३४
एवं प्रमुदितं सर्वं पशुगोधनधान्यतः ।
यज्ञवाटं नृपा दृष्ट्वा परं विस्मयमागताः ॥ ३५
'अनिशं दीयते च स्म तत्र भोज्यं पृथग्विधम् ।'
ब्राह्मणानां विशां चैव बहुमृष्टान्नमृद्धिमत् ॥ ३६
पूर्णे शतसहस्रे तु विप्राणां तत्र भुञ्जताम् ।
दुन्दुभिर्मेघनिर्घोषो मुहुर्मुहुरताड्यत ।
विननादासकृच्चापि दिवसेदिवसे गते ॥ ३७
एवं स ववृते यज्ञो धर्मराजस्य धीमतः ।
अन्नस्य सुबहून्राजन्नुत्सर्गान्पर्वतोपमान् ।
दधिकुल्याश्च ददृशुः सर्पिषश्च ह्रदाञ्जनाः ॥ ३८
जंबूद्वीपो हि सकलो नानाजनपदायुतः ।
राजन्नदृश्यतैकस्थो राज्ञस्तस्य महामखे ॥ ३९
तत्र जातिसहस्राणि पुरुषाणां ततस्ततः ।
गृहीत्वा धनमाजग्मुर्बहूनि भरतर्षभ ॥ ४०
स्रग्विणश्चापि ते सर्वे सुमृष्टमणिकुण्डलाः ।
पर्यवेषन्द्विजातींस्ताञ्शतशोऽथ सहस्रशः ॥ ४१
विविधान्यन्नपानानि पुरुषा येऽनुयायिनः ।
ते वै नृपोपभोज्यानि ब्राह्मणानां ददुश्च ह ॥ ४२

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि षडशीतितमोऽध्यायः ॥ ८६ ॥

## सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

कृष्णेन बलरामादिभिः सह युधिष्ठिराश्वमेधाय हास्तिनपुरंप्रत्यागमनम् ॥ १ ॥ तथा युधिष्ठिरंप्रति नानादेशेभ्य आगमिष्यतां राज्ञामप्रमादेन यथोचितपूजाया मणलूरादागमिष्यतो बभ्रुवाहनस्य संमाननस्य च कर्तव्यताप्रतिपादकार्जुनसंदेशनिवेदनम् ॥ २ ॥

---

वैशंपायन उवाच ।
समागतान्वेदविदो राज्ञश्च पृथिवीश्वरान् ।
दृष्ट्वा युधिष्ठिरो राजा भीमसेनमभाषत ॥
उपयाता नरव्याघ्रा य एते पृथिवीश्वराः ।
एतेषां क्रियतां पूजा पूजार्हा हि नराधिपाः ॥ २
इत्युक्तः स तथा चक्रे नरेन्द्रेण यशस्विना ।
भीमसेनो महातेजा यमाभ्यां सह पाण्डवः ॥ ३
अथाभ्यगच्छद्गोविन्दो वृष्णिभिः सह धर्मजम् ।

बलदेवं पुरस्कृत्य सर्वप्राणभृतां वरः ॥ ४
युयुधानेन सहितः प्रद्युम्नेन गदेन च ।
निशठेनाथ सांबेन तथैव कृतवर्मणा ॥ ५
तेषामपि परां पूजां चक्रे भीमो महारथः ।
विविशुस्ते च वेश्मानि रत्नवन्ति च सर्वशः ॥ ६
युधिष्ठिरसमीपे तु कथान्ते मधुसूदनः ।
अर्जुनं कथयामास बहुसंग्रामकर्शितम् ॥ ७
स तं प्रपच्छ कौन्तेयः पुनःपुनररिंदमम् ।
धर्मजः शक्रजं जिष्णुं समाचष्ट जगत्पतिः ॥ ८
आगमद्द्वारकावासी समाप्तः पुरुषो नृप ।
योऽद्राक्षीत्पाण्डवश्रेष्ठं बहुसंग्रामकर्शितम् ॥ ९
समीपे च महाबाहुमाचष्ट च मम प्रभो ।
कुरु कार्याणि कौन्तेय हयमेधार्थसिद्धये ॥ १०
इत्युक्तः प्रत्युवाचैनं धर्मराजो युधिष्ठिरः ।
दिष्ट्या स कुशली जिष्णुरुपायाति च माधव ११
यदिदं संदिदेशास्मिन्पाण्डवानां बलाग्रणीः ।
तदाख्यातमिहेच्छामि भवता यदुनन्दन ॥ १२
इत्युक्तो धर्मराजेन वृष्ण्यन्धकपतिस्तदा ।
प्रोवाचेदं वचो वाग्मी धर्मात्मानं युधिष्ठिरम् ॥ १३
इदमाह महाराज पार्थवाक्यं नरेश्वरः ।
वाच्यो युधिष्ठिरः कृष्ण काले वाक्यमिदं मम १४
आगमिष्यन्ति राजानः सर्वे वै कौरवर्षभ ।
प्राप्तानां महतां पूजा कार्या ह्येतत्क्षमं हि नः १५
इत्येतद्वचनाद्राजा विज्ञाप्यो मम मानद ।
तथा चात्ययिकं न स्याद्यदर्घाहरणेऽभवत् ॥ १६
कर्तुमर्हति तद्राजा भवांश्चाप्यनुमन्यताम् ।
राजद्वेषान्न नश्येयुरिमा राजन्पुनः प्रजाः ॥ १७
इदमन्यच्च कौन्तेय वचः स पुरुषोऽब्रवीत् ।
धनंजयस्य नृपते तन्मे निगदतः शृणु ॥ १८
उपयास्यति यज्ञं नो मणलूरपतिर्नृपः ।
पुत्रो मम महातेजा दयितो बभ्रुवाहनः ॥ १९
तं भवान्मदपेक्षार्थं विधिवत्प्रतिपूजयेत् ।
स तु भक्तोऽनुरक्तश्च मम नित्यमिति प्रभो ॥ २०
इत्येतद्वचनं श्रुत्वा धर्मराजो युधिष्ठिरः ।
अभिनन्द्यास्य तद्वाक्यमिदं वचनमब्रवीत् ॥ २१

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

---

## अष्टाशीतितमोऽध्यायः ॥ ८८ ॥

युधिष्ठिरेण पाण्डवेषु चतुर्भ्योऽर्जुनस्यैव विशेषतोऽश्वसंचारादिपरिक्लेशसूचकशारीरालक्षणप्रश्ने कृष्णेन तंप्रति तत्कथनम् ॥ १ ॥ मेध्याश्वस्य पृथ्वीसंचारणाय गतेनार्जुनेन सहाश्वेन पुनर्नगरं प्रत्यागमनम् ॥ २ ॥

युधिष्ठिर उवाच ।
श्रुतं प्रियमिदं कृष्ण यत्त्वमर्हसि भाषितुम् ।
तन्मेऽमृतरसं पुण्यं मनो ह्लादयति प्रभो ॥ १
बहूनि किल युद्धानि विजयस्य नराधिपैः ।
पुनरासन्हृषीकेश तत्रतत्रेति नः श्रुतम् ॥ २
किंनिमित्तं स नित्यं हि पार्थः सुखविवर्जितः ।
अतीव विजयो धीमानिति मे दूयते मनः ॥ ३
संचिन्तयामि कौन्तेयं रहो जिष्णुं जनार्दन ।
अतीव दुःखभागी स सततं पाण्डुनन्दनः ॥ ४
किंनु तस्य शरीरेऽस्ति सर्वलक्षणपूजिते ।
अनिष्टं लक्षणं कृष्ण येन दुःखान्युपाश्नुते ॥ ५
अतीवासुखभोगी स सततं कुन्तिनन्दनः ।
न हि पश्यामि बीभत्सोर्निन्द्यं गात्रेषु किंचन ।
श्रोतव्यं चेन्मयैतद्वै तन्मे व्याख्यातुमर्हसि ॥ ६
इत्युक्तः स हृषीकेशो ध्यात्वा सुमहदन्तरम् ।
राजानं भोजराजन्यवर्धनो विष्णुरब्रवीत् ॥ ७
न ह्यस्य नृपते किंचिदनिष्टमुपलक्षये ।
ऋते पुरुषसिंहस्य पिण्डिकेऽस्याधिके यतः ॥ ८

---

भोजराजन्याना वर्धनः ॥ ७ ॥ जानुनोरधस्थः पश्चाद्भागीयो मांसलः प्रदेशः पिण्डिका । ते उभे अस्याधिके स्वदेशादधोभागपर्यन्त बहुलमालम्बमाने ॥ ८ ॥ अष्टाशीतितमोऽध्यायः ॥ ८७ ॥

स ताभ्यां पुरुषव्याघ्रो नित्यमध्वसु वर्तते ।
न चान्यदनुपश्यामि येनासौ दुःखभाजनम् ॥९
इत्युक्तः पुरुषश्रेष्ठस्तदा कृष्णेन धीमता ।
प्रोवाच वृष्णिशार्दूलमेवमेतदिति प्रभो ॥ १०
कृष्णा तु द्रौपदी कृष्णं तिर्यक्सासूयमैक्षत ।
प्रतिजग्राह तस्यास्तं प्रणयं चापि केशिहा
सख्युः सखा हृषीकेशः साक्षादिव धनंजयः ॥११
तत्र भीमादयस्ते तु कुरवो याजकाश्च ये ।
रेमुः श्रुत्वा विचित्रां तां धनंजयकथां शुभाम् ॥१२
तेषां कथयतामेव पुरुषोऽर्जुनसंकथाः ।
उपायाद्वचनाद्दूतो विजयस्य महात्मनः ॥ १३
सोभिगम्य कुरुश्रेष्ठं नमस्कृत्य च बुद्धिमान् ।
उपायातं नरव्याघ्रं फल्गुनं प्रत्यवेदयत् ॥ १४
तच्छ्रुत्वा नृपतिस्तस्य हर्षबाष्पाकुलेक्षणः ।
प्रियाख्याननिमित्तं वै ददौ बहुधनं तदा ॥ १५
ततो द्वितीये दिवसे महाञ्शब्दो व्यवर्धत ।
आगच्छति नरव्याघ्रे कौरवाणां धुरंधरे ॥ १६
ततो रेणुः समुद्भूतो विबभौ तस्य वाजिनः ।
अभितो वर्तमानस्य यथोच्चैःश्रवसस्तथा ॥ १७
तत्र हर्षकरीर्वाचो नराणां शुश्रुवेऽर्जुनः ।
दिष्ट्याऽसि पार्थ कुशली धन्यो राजा युधिष्ठिरः ॥
कोन्यो हि पृथिवीं कृत्स्नां जित्वाहि युधि पार्थिवान्
चारयित्वा हयश्रेष्ठमुपागच्छेद्दतेऽर्जुनात् ॥ १९
ये व्यतीता महात्मानो राजानः सगरादयः ।
तेषामपीदृशं कर्म न कदाचन शुश्रुम ॥ २०
नैतदन्ये करिष्यन्ति भविष्या वसुधाधिपाः ।
यत्त्वं कुरुकुलश्रेष्ठ दुष्करं कृतवानसि ॥ २१
इत्येवं वदतां तेषां पुंसां कर्णसुखा गिरः ।
शृण्वन्विवेश धर्मात्मा फल्गुनो यज्ञसंस्तरम् ॥२२
ततो राजा सहामात्यः कृष्णश्च यदुनन्दनः ।
धृतराष्ट्रं पुरस्कृत्य तं प्रत्युद्ययतुस्तदा ॥ २३
सोऽभिवाद्य पितुः पादौ धर्मराजस्य धीमतः ।
भीमादींश्चापि संपूज्य पर्यष्वजत केशवम् ॥ २४
तैः समेत्यार्चितस्तांश्च प्रत्यर्च्याथ यथाविधि ।
विशश्राम महाबाहुस्तीरं लब्ध्वेव पारगः ॥ २५

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि अष्टाशीतितमोऽध्यायः ॥ ८८ ॥

## एकोननवतितमोऽध्यायः ॥ ८९ ॥

बभ्रुवाहनेनोलूपीचित्राङ्गदाभ्यां सह यागदिदृक्षया हास्तिनपुरं प्रत्यागमनम् ॥ १ ॥ ततः स्वयं समागतव्यासाज्ञया युधिष्ठिरेण ऋत्विग्भिः सहाश्वमेधोपक्रमः ॥ २ ॥

वैशंपायन उवाच ।
एतस्मिन्नेव काले तु स राजा बभ्रुवाहनः ।
मातृभ्यां सहितो धीमान्कुरूनभ्याजगाम ह ॥१
तत्र वृद्धान्यथावत्स कुरूनन्यांश्च पार्थिवान् ।
अभिवाद्य महाबाहुस्तैश्चापि प्रतिनन्दितः ।
प्रविवेश पितामह्याः कुन्त्या भवनमुत्तमम् ॥ २
स प्रविश्य महाबाहुः पाण्डवानां निवेशनम् ।
पितामहीमभ्यवन्दत्साम्ना परमवल्गुना ॥ ३
तथा चित्राङ्गदा देवी कौरवस्यात्मजाऽपि च ।
पृथां कृष्णां च सहिते विनयेनोपजग्मतुः ।
सुभद्रां च यथान्यायं याश्चान्याः कुरुयोषितः ॥४
ददौ कुन्ती ततस्ताभ्यां रत्नानि विविधानि च ।
द्रौपदी च सुभद्रा च याश्चाप्यन्या यदुस्त्रियः ॥५
ऊषतुस्तत्र ते देव्यौ महार्हशयनासने ।
सुपूजिते स्वयं कुन्त्या पार्थस्य हितकाम्यया ॥ ६
स च राजा महातेजाः पूजितो बभ्रुवाहनः ।
धृतराष्ट्रं महीपालमुपतस्थे यथाविधि ॥ ७
युधिष्ठिरं च राजानं भीमादींश्चापि पाण्डवान् ।
उपागम्य महातेजा विनयेनाभ्यवादयत् ॥ ८
स तैः प्रेम्णा परिष्वक्तः पूजितश्च यथाविधि ।
धनं चास्मै ददुर्भूरि प्रीयमाणा महारथाः ॥ ९
तथैव च महीपालः कृष्णं चक्रगदाधरम् ।

प्रद्युम्न इव गोविन्दं विनयेनोपतस्थिवान् ॥ १०
तस्मै कृष्णो ददौ राज्ञे महार्हमतिपूजितम् ।
रथं हेमपरिष्कारं दिव्याश्वयुजमुत्तमम् ॥ ११
धर्मराजश्च भीमश्च फल्गुनश्च यमौ तथा ।
पृथक्पृथक् च ते चैनं मानार्थाभ्यामयोजयन् १२
ततस्तृतीये दिवसे सत्यवत्यात्मजो मुनिः ।
युधिष्ठिरं समभ्येत्य वाग्मी वचनमब्रवीत् ॥ १३
अद्यप्रभृति कौन्तेय यज्ञस्य समयो हि ते ।
मुहूर्तो यज्ञियः प्राप्तश्चोदयन्तीह याजकाः ॥ १४
अहीनो नाम राजेन्द्र क्रतुस्तेऽयं विकल्पवान् ।
बहुत्वात्काञ्चनस्यास्य ख्यातो बहुसुवर्णकः॥१५
एवमत्र महाराज दक्षिणाभिर्गुणीकुरु ।
श्रीस्त्वां व्रजतु ते राजन्ब्राह्मणा ह्यत्र कारणम् १६
त्रीनश्वमेधानत्र त्वं संप्राप्य बहुदक्षिणान् ।
ज्ञातिवध्याकृतं पापं प्रहास्यसि नराधिप ॥ १७
पवित्रं परमं चैतत्पावनानां च पावनम् ।
यदश्वमेधावभृथं प्राप्स्यसे कुरुनन्दन ॥ १८
इत्युक्तः स तु तेजस्वी व्यासेनामितबुद्धिना ।
दीक्षां विवेश धर्मात्मा वाजिमेधाप्तये ततः ॥१९
ततो यज्ञं महाबाहुर्वाजिमेधं महाक्रतुम् ।
बह्वन्नदक्षिणं राजा सर्वकामगुणान्वितम् ॥ २०
तत्र वेदविदो राजंश्चक्रुः कर्माणि याजकाः
परिक्रामन्ति शास्त्रज्ञा यथावद्द्विजसत्तमाः ॥ २१
न तेषां स्खलितं किंचिदासीदपहुतं तथा ।
क्रमयुक्तं च युक्तं च चक्रुस्तत्र द्विजर्षभाः ॥ २२
कृत्वा प्रवर्ग्यं धर्मज्ञा यथावद्द्विजसत्तमाः ।
चक्रुस्ते विधिवद्राजंस्तथैवाभिषवं द्विजाः ॥ २३
अभिषूय ततो राजन्सोमं सोमपसत्तमाः ।
सवनान्यानुपूर्व्येण चक्रुः शास्त्रानुसारिणः ॥२४
न तत्र कृपणः कश्चिन्न दरिद्रो बभूव ह ।
क्षुधितो दुःखितो वाऽपि प्राकृतो वाऽपि मानवः॥
भोजनं भोजनार्थिभ्यो दापयामास शत्रुहा ।
भीमसेनो महातेजाः सततं राजशासनात् ॥ २६
संस्तरे कुशलाश्चापि सर्वकार्याणि याजकाः ।
दिवसेदिवसे चक्रुर्यथाशास्त्रानुदर्शनात् ॥ २७
नाषडङ्गविदत्रासीत्सदस्यस्तस्य धीमतः ।
नाव्रतो नानुपाध्यायो न च वादाविचक्षणः॥२८
ततो यूपोच्छ्रये प्राप्ते षड् बैल्वान्भरतर्षभ ।
खादिरान्बिल्वसमितांस्तावतः सर्ववर्णिनः ॥२९
देवदारुमयौ द्वौ तु यूपौ कुरुपतेर्मखे ।
श्लेष्मातकमयं चैकं याजकाः समकल्पयन् ॥३०
'सर्वानेतान्यथाशास्त्रं याजकाः समकारयन् ।'
शोभार्थं चापरान्यूपान्काञ्चनान्भरतर्षभ ।
स भीमः कारयामास धर्मराजस्य शासनात्॥३१
ते व्यराजन्त राजर्षे वासोभिरुपशोभिताः ।
महेन्द्रानुगता देवा यथा सप्तर्षिभिर्दिवि ॥ ३२
इष्टकाः काञ्चनीश्चात्र चयनार्थं कृता विभो ।
शुशुभे चयनं तच्च दक्षस्येव प्रजापतेः ॥ ३३
चतुश्चित्यश्च तस्यासीदष्टादशकरात्मकः ।
स रुक्मपक्षो निचितस्त्रिकोणो गरुडाकृतिः॥३४
ततो नियुक्ताः पशवो यथाशास्त्रं मनीषिभिः ।
तं तं देवं समुद्दिश्य पक्षिणः पशवश्च ये ॥ ३५
ऋषभाः शास्त्रपठितास्तथा जलचराश्च ये ।
सर्वांस्तानभ्ययुञ्जंस्ते तत्राग्निचयकर्मणि ॥ ३६
यूपेषु नियता चासीत्पशूनां त्रिशती तथा ।
अश्वरत्नोत्तरा यज्ञे कौन्तेयस्य महात्मनः ॥ ३७
स यज्ञः शुशुभे तस्य साक्षाद्देवर्षिसंकुलः ।
गन्धर्वगणसंकीर्णः शोभितोऽप्सरसां गणैः ॥ ३८
स किंपुरुषसंकीर्णः किंनरैश्चोपशोभितः ।
सिद्धविप्रनिवासैश्च समन्तादभिसंवृतः ॥ ३९
तस्मिन्सदसि नित्यास्तु व्यासशिष्या द्विजर्षभाः ।
सर्वशास्त्रप्रणेतारः कुशला यज्ञकर्मसु ॥ ४०

---

अहीनः अह्नां सोमयागाना बहूनां समूहोऽहीनः । न हीनः द्रव्यादिना इति वा ॥ १५ ॥ अभिषव सोमवल्ल्याः कण्डनम् ॥ २३ ॥ सोमं सोमवल्लीरसम् । सवनानि प्रातःसवनादीनि ॥ २४ ॥ संस्तरे इष्टकानां चयनाख्ये स्थण्डिलरचने ॥ २७ ॥ वर्णिनः पलाशकाष्ठमयाः ॥ २९ ॥ एकोननवतितमोऽध्यायः ॥ ८९ ॥

नारदश्च बभूवात्र तुंबुरुश्च महाद्युतिः ।
विश्वावसुश्चित्रसेनस्तथाऽन्ये गीतकोविदाः ॥ ४१
गन्धर्वा गीतकुशला नृत्येषु च विशारदाः ।
रमयन्ति स्म तान्विप्रान्यज्ञकर्मान्तरेषु वै ॥ ४२

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि एकोननवतितमोऽध्यायः ॥ ८९ ॥

## नवतितमोऽध्यायः ॥ ९० ॥

युधिष्ठिरेणाश्वमेधसमापनानन्तरं राज्ञां यथोचितं संमानपूर्वकं स्वस्वदेशान्प्रति प्रस्थापनम् ॥ १ ॥

वैशंपायन उवाच ।
श्रपयित्वा पशूनन्यान्विधिवद्द्विजसत्तमाः ।
तं तुरङ्गं यथाशास्त्रमालभन्त द्विजातयः ॥ १
ततः संज्ञप्य तुरगं विधिवद्याजकर्षभाः ।
उपसंवेशयांचक्रुस्ततस्तां द्रुपदात्मजाम् ।
कलाभिस्तिसृभी राजन्यथाविधि मनस्विनीम् ॥२
उद्धृत्य तु वपां तस्य यथाशास्त्रं द्विजातयः ।
श्रपयामासुरव्यग्रा विधिवद्भरतर्षभ ॥ ३
तं वपाधूमगन्धं तु धर्मराजः सहानुजैः ।
उपाजिघ्रद्यथाशास्त्रं सर्वपापापहं तदा ॥ ४
शिष्टान्यङ्गानि यान्यासंस्तस्याश्वस्य नराधिप ।
तान्यग्नौ जुहुवुर्धीराः समस्ताः षोडशर्त्विजः ॥५
संस्थाप्यैवं तस्य राज्ञस्तं यज्ञं शक्रतेजसः ।
व्यासः सशिष्यो भगवान्वर्धयामास तं नृपम् ॥ ६
ततो युधिष्ठिरः प्रादात्सदस्येभ्यो यथाविधि ।
कोटीः सहस्रं निष्काणां व्यासाय तु वसुंधराम् ॥
प्रतिगृह्य धरां राजन्व्यासः सत्यवतीसुतः ।
अब्रवीद्भरतश्रेष्ठं धर्मराजं युधिष्ठिरम् ॥ ८
वसुधा भवतस्त्वेषा संन्यस्ता राजसत्तम ।
निष्क्रयो दीयतां मह्यं ब्राह्मणा हि धनार्थिना ॥ ९
युधिष्ठिरस्तु तान्विप्रान्प्रत्युवाच महामनाः ।
भ्रातृभिः सहितो धीमान्मध्ये राज्ञां महात्मनाम् ॥
अश्वमेधे महायज्ञे पृथिवी दक्षिणा स्मृता ।
अर्जुनेन जिता चेयमृत्विग्भ्यः प्रापिता मया ११
वनं प्रवेक्ष्ये विप्राग्र्या विभजध्वं महीमिमाम् ।
चतुर्धा पृथिवीं कृत्वा चातुर्होत्रप्रमाणतः ॥ १२
नाहमादातुमिच्छामि ब्रह्मस्वं द्विजसत्तमाः ।
इदं नित्यं मनो विप्रा भ्रातृणां चैव मे सदा ॥१३
इत्युक्तवति तस्मिंस्तु भ्रातरो द्रौपदी च सा ।
एवमेतदिति प्राहुस्तदभूद्रोमहर्षणम् ॥ १४
ततोऽन्तरिक्षे वागासीत्साधुसाध्विति भारत ।
तथैव द्विजसङ्घानां शंसतां विबभौ स्वनः ॥ १५
द्वैपायनस्तथा कृष्णः पुनरेव युधिष्ठिरम् ।
प्रोवाच मध्ये विप्राणामिदं संपूजयन्मुनिः ॥१६
दत्तैषा भवता मह्यं तां ते प्रतिददाम्यहम् ।
हिरण्यं दीयतामेभ्यो ब्राह्मणेभ्यो धराऽस्तु ते॥१७
ततोऽब्रवीद्वासुदेवो धर्मराजं युधिष्ठिरम् ।
यथाऽऽह भगवान्व्यासस्तथा त्वं कर्तुमर्हसि ॥१८
इत्युक्तः स कुरुश्रेष्ठः प्रीतात्मा भ्रातृभिः सह ।
कोटिं कोटिं गवां प्रादाद्दक्षिणां त्रिगुणीकृताम्१९
न करिष्यति तल्लोके कश्चिदन्यो नराधिपः ।
यत्कृतं कुरुराजेन मरुत्तस्यानुकुर्वता ॥ २०
प्रतिगृह्य तु तद्द्रव्यं कृष्णद्वैपायनो मुनिः ।
ऋत्विग्भ्यः प्रददौ विद्वांश्चतुर्धा व्यभजंश्च ते २१
धरण्या निष्क्रयं दत्त्वा तद्धिरण्यं युधिष्ठिरः ।
धूतपापो जितस्वर्गो मुमुदे भ्रातृभिः सह ॥ २२
ऋत्विजस्तमपर्यन्तं सुवर्णनिचयं तथा ।
व्यभजन्त द्विजातिभ्यो यथोत्साहं यथासुखम्२३
यज्ञवाटे च यत्किंचिद्धिरण्यं सविभूषणम् ।
तोरणानि च यूपांश्च घटान्पात्रीस्तथेष्टकाः ।

---

संज्ञप्य हिंसित्वा तुरगम् । तस्य समीपे तिसृभिः कलाभिः कलनाभिः मन्त्रद्रव्यश्रद्धाख्याभिरुपेतां द्रौपदी उपसंवेशयांचक्रुः ॥ २ ॥ अङ्गानि हृदयजिह्वावक्षआदीनि ॥ ५ ॥ सस्थाप्य समाप्य ॥ ६ ॥ तुशब्दश्चार्थे । तेन सर्वेभ्यो वसुंधरा ददावित्यर्थः ॥ ७ ॥

युधिष्ठिराभ्यनुज्ञाताः सर्वे तद्व्यभजन्द्विजाः ॥२४
अनन्तरं द्विजातिभ्यः क्षत्रिया जह्रिरे वसु ।
तथा विट्शूद्रसङ्घाश्च तथाऽन्ये म्लेच्छजातयः ।
'कालेन महता जह्रुस्तत्सुवर्णं ततस्ततः ॥' २५
ततस्ते ब्राह्मणाः सर्वे मुदिता जग्मुरालयान् ।
तर्पिता वसुना तेन धर्मराजेन धीमता ॥ २६
स्वमंशं भगवान्व्यासः कुन्त्यै पादाभिवादितः ।
प्रददौ तस्य महतो हिरण्यस्य महाद्युतिः ॥ २७
श्वशुरात्प्रीतिदायं तं प्राप्य सा प्रीतमानसा ।
चकार पुण्यकं तेन सुमहत्सङ्घशः पृथा ॥ २८
गत्वा त्ववभृथं राजा विपाप्मा भ्रातृभिः सह ।
सभाज्यमानः शुशुभे महेन्द्रस्त्रिदशैरिव ॥ २९
पाण्डवाश्च महीपालैः समेतैरभिसंवृताः ।
अशोभन्त महाराज ग्रहास्तारागणैरिव ॥ ३०
राजभ्योपि ततः प्रादाद्रत्नानि विविधानि च ।
गजानश्वानलंकारान्स्त्रियो वासांसि काञ्चनम् ३१
तद्धनौघमपर्यन्तं पार्थः पार्थिवमण्डले ।
विसृजञ्शुशुभे राजन्यथा वैश्रवणस्तथा ॥ ३२
आनीय च तथा वीरं राजानं बभ्रुवाहनम् ।
प्रदाय विपुलं वित्तं गृहान्प्रास्थापयत्तदा ॥ ३३
दुःशलायाश्च तं पौत्रं बालकं भरतर्षभ ।
स्वराज्येऽथ पितुर्धीमान्सुतः प्रीत्या न्यवेशयत् ३४
नृपतींश्चैव तान्सर्वान्सुविभक्तान्सुपूजितान् ।
प्रस्थापयामास वशी कुरुराजो युधिष्ठिरः ॥ ३५
गोविन्दं च महात्मानं बलदेवं महाबलम् ।
तथाऽन्यान्वृष्णिवीरांश्च प्रद्युम्नाद्यान्सहस्रशः ॥३६
पूजयित्वा महाराज यथाविधि महाद्युतिः ।
भ्रातृभिः सहितो राजा प्रास्थापयदरिंदमः ॥३७
एवं बभूव यज्ञः स धर्मराजस्य धीमतः ।
बह्वन्नधनरत्नौघः सुरामैरेयसागरः ॥ ३८
सर्पिःपङ्का ह्रदा यत्र बभूवुश्चान्नपर्वताः ।
रसालकर्दमा नद्यो बभूवुर्भरतर्षभ ॥ ३९
भक्ष्यखाण्डवरागाणां क्रियतां भुज्यतां तथा ।
पशूनां वध्यतां चैव नान्तं ददृशिरे जनाः ॥४०
मत्तप्रमत्तमुदितं सुप्रीतयुवतीजनम् ।
मृदङ्गशङ्खनादैश्च मनोरममभूत्तदा ॥ ४१
दीयतां भुज्यतां चापि तत्र शब्दो महानभूत् ।
दीयतां दीयतां चेति दिवारात्रमवारितम् ॥ ४२
तं महोत्सवसंकाशं हृष्टपुष्टजनाकुलम्
कथयन्ति स्म पुरुषा नानादेशनिवासिनः ॥ ४३
वर्षित्वा धनधाराभिः कामै रत्नै रसैस्तथा ।
विपाप्मा भरतश्रेष्ठः कृतार्थः प्राविशत्पुरम् ॥४४

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि नवतितमोऽध्यायः ॥ ९० ॥

## एकनवतितमोऽध्यायः ॥ ९१ ॥

वैशंपायनेन जनमेजयंप्रति नकुलाख्यानकथनारम्भः ॥ १ ॥ अश्वमेधावसाने बिलान्निस्सृतेन कनकपार्श्वेन केनचिन्नकुलेन सदस्यान्प्रति उञ्छवृत्तिब्राह्मणस्य सक्तुप्रस्थदानप्रशंसनपूर्वकं युधिष्ठिराश्वमेधगर्हणम् ॥ २ ॥ तथा सदस्यचोदनया तत्कथनोपक्रमः ॥ ३ ॥

जनमेजय उवाच ।
पितामहस्य मे यज्ञे धर्मराजस्य धीमतः ।
यदाश्चर्यमभूत्किंचित्तद्भवान्वक्तुमर्हति ॥
वैशंपायन उवाच
श्रूयतां राजशार्दूल-महदाश्चर्यमुत्तमम् ।
अश्वमेधे महायज्ञे निवृत्ते यदभूत्प्रभो ॥
तर्पितेषु द्विजाग्र्येषु ज्ञातिसंबन्धिबन्धुषु ।
दीनान्धकृपणे वाऽपि तदा भरतसत्तम ॥
घुष्यमाणे महादाने दिक्षु सर्वासु भारत ।
पतत्सु पुष्पवर्षेषु धर्मराजस्य मूर्धनि ॥ ४

अनन्तरं द्विजातिभ्यः विप्रेषु गृहीत्वा निवृत्तेषु शिष्टात् क्षत्रियादयो गृहीतवन्त इत्यर्थः ॥ २५ ॥ मैरेयं वृक्षज मद्यम् ॥ ३८ ॥ पिप्पलीशुण्ठीयुक्तो मुद्गयूषः खाण्डवः स एव शर्करायुक्तो रागः ॥ ४० ॥ नवतितमोऽध्यायः ॥ ९० ॥

विलान्निस्सृत्य नकुलो रुक्मपार्श्वस्तदाऽनघ
वज्राशनिसमं नादममुञ्चद्वसुधाधिप ॥
सकृदुत्सृज्य तन्नादं त्रासयानो मृगद्विजान्
मानुषं वचनं प्राह पुष्पोपरिशयो महान् ॥
सक्तुप्रस्थेन वो नायं यज्ञस्तुल्यो नराधिपाः
उञ्छवृत्तेर्वदान्यस्य कुरुक्षेत्रनिवासिनः ॥ ७
तस्य तद्वचनं श्रुत्वा नकुलस्य विशांपते ।
विस्मयं परमं जग्मुः सर्वे ते ब्राह्मणर्षभाः ॥ ८
ततः समेत्य नकुलं पर्यपृच्छन्त ते द्विजाः ।
कुतस्त्वं समनुप्राप्तो यज्ञं साधुसमागमम् ॥ ९
किं बलं परमं तुभ्यं किं श्रुतं किं परायणम् ।
कथं भवन्तं विद्याम यो नो यज्ञं विगर्हसे ॥१०
अविलुप्यागमं कृत्स्नं विविधैर्यज्ञियैः कृतम् ।
यथागमं यथान्यायं कर्तव्यं च तथा कृतम् ॥११
पूजार्हाः पूजिताश्चात्र विधिवच्छास्त्रदर्शनात् ।
मन्त्राहुतिहुतश्चाग्निर्दत्तं देयममत्सरम् ॥ १२
तुष्टा द्विजातयश्चात्र पे ।
क्षत्रियाश्च सुयुद्धेन श्राद्धैश्चापि पितामहाः ॥ १३
पालनेन विशस्तुष्टाः कामैस्तुष्टा वरस्त्रियः ।
अनुक्रोशैस्तथा शूद्रा दानशेषैः पृथग्जनाः ॥१४
ज्ञातिसंबन्धिनस्तुष्टाः शौचेन च नृपस्य नः ।
देवा हविर्भिः पुण्यैश्च रक्षणैः शरणागताः ॥१५
यदत्र तथ्यं तद्ब्रूहि सत्यंसत्यं द्विजातिषु ।
यथाश्रुतं यथादृष्टं पृष्टो ब्राह्मणकाम्यया ॥ १६
श्रद्धेयवाक्यः प्राज्ञस्त्वं दिव्यं रूपं बिभर्षि च ।
समागतश्च विप्रैस्त्वं तद्भवान्वक्तुमर्हति ॥ १७
इति पृष्टो द्विजैस्तैः स प्रहसन्नकुलोऽब्रवीत् ।
नैषा मृषामया वाणी प्रोक्ता दर्पेण वा द्विजाः १८
यन्मयोक्तमिदं वाक्यं युष्माभिश्चाप्युपश्रुतम् ।
सक्तुप्रस्थेन वो नायं यज्ञस्तुल्यो द्विजर्षभाः ॥१९
इत्यवश्यं मयैतद्वो वक्तव्यं द्विजसत्तमाः ।
शृणुताव्यग्रमनसः शंसतो मे यथातथम् ॥ २०
अनुभूतं च दृष्टं च यन्मयाऽद्भुतमुत्तमम् ।
उञ्छवृत्तेर्वदान्यस्य कुरुक्षेत्रनिवासिनः ॥ २१
स्वर्गं येन द्विजाः प्राप्तः सभार्यः ससुतस्नुषः ।
यथा चार्धं शरीरस्य ममेदं काञ्चनीकृतम् ॥ २२

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि एकनवतितमोऽध्यायः ॥ ९१ ॥

## द्विनवतितमोऽध्यायः ॥ ९२ ॥

नकुलेन युधिष्ठिरादीन्प्रति सकुटुम्बस्योञ्छवृत्तेर्ब्राह्मणस्य धर्मपुरुषाय सक्तुप्रस्थदानमहिमवर्णनपूर्वकंपुनस्तत्रैवान्तर्धानम् ॥ १ ॥

नकुल उवाच ।
हन्त वः कथयिष्यामि दानस्य फलमुत्तमम् ।
न्यायलब्धस्य सूक्ष्मस्य विप्रदत्तस्य यद्द्विजाः ॥ १
धर्मक्षेत्रे कुरुक्षेत्रे धर्मज्ञैर्बहुभिर्वृते ।
उञ्छवृत्तिर्द्विजः कश्चित्कापोतिरभवत्पुरा ॥ २
सभार्यः सहपुत्रेण सस्नुषस्तपसि स्थितः ।
बभूव शुक्लवृत्तः स धर्मात्मा नियतेन्द्रियः ॥ ३
षष्ठे काले सदा विप्रो भुङ्क्ते तैः सह संवृतः ॥ ४
षष्ठे काले कदाचित्तु तस्याहारो न विद्यते ।
भुङ्क्तेऽन्यस्मिन्कदाचित्स षष्ठे काले द्विजोत्तमः ॥५
कपोतधर्मिणस्तस्य दुर्भिक्षे सति दारुणे ।
नाविद्यत तदा विप्राः संचयस्तन्निबोधत ॥ ६
क्षीणौषधिसमावापो द्रव्यहीनोऽभवत्तदा ।
कालेकालेऽस्य संप्राप्ते नैव विद्येत भोजनम् ॥ ७
क्षुधापरिगताः सर्वे प्रातिष्ठन्त तदा तु ते ।
उञ्छं तदा मध्यं तपति भास्करे ॥ ८
उष्णार्तश्च क्षुधार्तश्च विप्रस्तपसि संस्थितः ।
उञ्छमप्राप्तवानेव ब्राह्मणः क्षुच्छ्रमान्वितः ॥ ९

नीलाक्षस्तत्र नकुल इति झ. पाठ. ॥ ५ ॥ धृष्टो बिलशयो महान् इति झ. पाठः ॥ ६ ॥ ममेदं यत्रेति शेषः ॥ २२ ॥ एकनवतितमोऽध्यायः ॥ ९१ ॥

कपोतवदेकैकं कणमादत्ते स कापोतिः ॥ २ ॥ उञ्छ कणश आदानं कर्तुमिति शेषः । शुक्लस्य ज्येष्ठस्य पक्षे ॥ ८ ॥

स तथैव क्षुधाविष्टः सार्धं परिजनेन ह ।
क्षपयामास तं कालं कृच्छ्रप्राणो द्विजोत्तमः १०
अथ षष्ठे गते काले यवप्रस्थमुपार्जयन् ।
यवप्रस्थं तु तं सक्तूनकुर्वन्त तपस्विनः ॥ ११
कृतजप्याह्निकास्ते तु हुत्वा चाग्निं यथाविधि ।
कुडवंकुडवं सर्वे व्यभजन्त तपस्विनः ॥ १२
अथागच्छद्द्विजः कश्चिदतिथिर्भुञ्जतां तदा ।
ते तं दृष्ट्वाऽतिथिं प्राप्तं प्रहृष्टमनसोऽभवन् ॥१३
तेऽभिवाद्य सुखप्रश्नं पृष्ट्वा तमतिथिं तदा ।
विशुद्धमनसो दान्ताः श्रद्धादमसमन्विताः ॥१४
अनसूया गतक्रोधाः साधवो वीतमत्सराः ।
त्यक्तमानमदक्रोधा धर्मज्ञा द्विजसत्तमाः ॥ १५
सब्रह्मचर्यं गोत्रं ते तस्य ख्यात्वा परस्परम् ।
कुटीं प्रवेशयामासुः क्षुधार्तमतिथिं तदा ॥ १६
इदमर्घ्यं च पाद्यं च बृसी चेयं तवानघ ।
शुचयः सक्तवश्चेमे नियमोपार्जिताः प्रभो ।
प्रतिगृह्णीष्व भद्रं ते मया दत्ता द्विजर्षभ ॥ १७
इत्युक्तः प्रतिगृह्याथ सक्तूनां कुडवं द्विजः ।
भक्षयामास राजेन्द्र न च तुष्टिं जगाम सः ॥१८
स उञ्छवृत्तिस्तं प्रेक्ष्य क्षुधापरिगतं द्विजम् ।
आहारं चिन्तयामास कथं तुष्टो भवेदिति ॥१९
तस्य भार्याऽब्रवीद्वाक्यं मद्भागो दीयतामिति ।
गच्छत्वेष यथाकामं परितुष्टो द्विजोत्तमः ॥ २०
इति ब्रुवन्तीं तां साध्वीं भार्यां स द्विजसत्तमः ।
क्षुधापरिगतां ज्ञात्वा तान्सक्तून्नाभ्यनन्दत ॥२१
आत्मानुमानतो विद्वान्स तु विप्रर्षभस्तदा ।
जानन्वृद्धां क्षुधार्तां च श्रान्तां ग्लानां तपस्विनीम्।
त्वगस्थिभूतां वेपन्तीं ततो भार्यामुवाच ह ॥२२
अपि कीटपतङ्गानां मृगाणां चैव शोभने ।
स्त्रियो रक्ष्याश्च पोष्याश्च न त्वेवं वक्तुमर्हसि॥२३
अनुकम्प्यो नरः पत्न्या पुष्टो रक्षित एव च ।
प्रपतेद्यशसो दीप्तात्स च लोकान्न चाप्नुयात्॥२४
धर्मकामार्थकार्याणि शुश्रूषाकुलसंततिः ।
दारेष्वधीनो धर्मश्च पितॄणामात्मनस्तथा ॥ २५
न वेत्ति कर्मतो भार्यारक्षणे योऽक्षमः पुमान् ।
अयशो महदाप्नोति नरकांश्चैव गच्छति ॥ २६
इत्युक्ता सा ततः प्राह धर्मार्थौ नौ समौ द्विज ।
सक्तुप्रस्थचतुर्भागं गृहाणेमं प्रसीद मे ॥ २७
सत्यं रतिश्च धर्मश्च स्वर्गश्च गुणनिर्जितः ।
स्त्रीणां पतिसमाधीनं काङ्क्षितं च द्विजर्षभ ॥२८
ऋतुर्मातुः पितुर्बीजं दैवतं परमं पतिः ।
भर्तुः प्रसादान्नारीणां रतिपुत्रफलं तथा ॥ २९
पालनाद्धि पतिस्त्वं मे भर्ताऽसि भरणाच्च मे ।
पुत्रप्रदानाद्वरदस्तस्मात्सक्तून्प्रयच्छ मे ॥ ३०
जरापरिगतो वृद्धः क्षुधार्तो दुर्बलो भृशम् ।
उपवासपरिश्रान्तो यदा त्वमपि कर्शितः ॥ ३१
इत्युक्तः स तया सक्तून्प्रगृह्येदं वचोऽब्रवीत् ।
द्विज सक्तूनिमान्भूयः प्रतिगृह्णीष्व सत्तम ॥ ३२
स तान्प्रगृह्य भुक्त्वा च न तुष्टिमगमद्द्विजः ।
तमुञ्छवृत्तिरालक्ष्य ततश्चिन्तापरोऽभवत् ॥ ३३
पुत्र उवाच ।
सक्तूनिमान्प्रगृह्य त्वं देहि विप्राय सत्तम ।
इत्येव सुकृतं मन्ये तस्मादेतत्करोम्यहम् ॥ ३४
भवान्हि परिपाल्यो मे सर्वदैव प्रयत्नतः ।
साधूनां काङ्क्षितं यस्मात्पितुर्वृद्धस्य पालनम् ॥३५
पुत्रार्थो विहितो ह्येष वार्धके परिपालनम् ।
श्रुतिरेषा हि विप्रर्षे त्रिषु लोकेषु शाश्वती ॥ ३६
प्राणधारणमात्रेण शक्यं कर्तुं तपस्त्वया
प्राणो हि परमो धर्मः स्थितो देहेषु देहिनाम्॥३७
पितोवाच
अपि वर्षसहस्री त्वं बाल एव मतो मम ।
उत्पाद्य पुत्रं हि पिता कृतकृत्यो भवेत्सुतात्३८
बालानां क्षुद्बलवती जानाम्येतदहं प्रभो ।
वृद्धोऽहं धारयिष्यामि त्वं बली भव पुत्रक ॥ ३९
जीर्णेन वयसा पुत्र न मां क्षुद्बाधतेऽपि च ।
दीर्घकालं तपस्तप्तं न मे मरणतो भयम् ॥ ४०
पुत्र उवाच ।
अपत्यमस्मि ते पुंसस्त्राणात्पुत्र इति स्मृतः ।

आत्मा पुत्रः स्मृतस्तस्मात्त्रह्यात्मानमिहात्मना ॥
पितोवाच ।
रूपेण सदृशस्त्वं मे शीलेन च दमेन च ।
परीक्षितश्च बहुधा सक्तूनादद्मि ते सुत ॥ ४२
इत्युक्त्वाऽऽदाय तान्सक्तून्प्रीतात्मा द्विजसत्तमः ।
प्रहसन्निव विप्राय स तस्मै प्रददौ तदा ॥ ४३
भुक्त्वा तानपि सक्तून्स नैव तुष्टो बभूव ह ।
उञ्छवृत्तिस्तु धर्मात्मा व्रीडामनुजगाम ह ॥ ४४
तं वै वधूः स्थिता साध्वी ब्राह्मणप्रियकाम्यया ।
सक्तूनादाय संहृष्टा श्वशुरं वाक्यमब्रवीत् ॥ ४५
संतानात्तव संतानं मम विप्र भविष्यति ।
सक्तूनिमानतिथये गृहीत्वा संप्रयच्छ मे ॥ ४६
तव प्रसादान्निर्वृत्ता मम लोकाः किलाक्षयाः ।
पुत्रेण तानवाप्नोति यत्र गत्वा न शोचति ॥ ४७
धर्माद्या हि यथा त्रेता वह्नित्रेता तथैव च ।
तथैव पुत्रपौत्राणां स्वर्गस्त्रेता किलाक्षयः ॥ ४८
पितॄनृणात्तारयति पुत्र इत्यनुशुश्रुम ।
पुत्रपौत्रैश्च नियतं साधुलोकानुपाश्नुते ॥ ४९
श्वशुर उवाच ।
वातातपविशीर्णाङ्गीं त्वां विवर्णां निरीक्ष्य वै ।
कर्शितां सुव्रताचारे क्षुधाविह्वलचेतसम् ॥ ५०
कथं सक्तून्ग्रहीष्यामि भूत्वा धर्मोपघातकः ।
कल्याणवृत्ते कल्याणि नैवं त्वं वक्तुमर्हसि ॥ ५१
षष्ठे काले व्रतवतीं शौचशीलतपोन्विताम् ।
कृच्छ्रवृत्तिं निराहारां द्रक्ष्यामि त्वां कथं शुभे ॥ ५२
बाला क्षुधार्ता नारी च रक्ष्या त्वं सततं मया ।
उपवासपरिश्रान्ता त्वं हि बान्धवनन्दिनी ॥ ५३
स्नुषोवाच ।
गुरोर्मम गुरुस्त्वं वै यतो दैवतदैवतम् ।
देवातिदेवस्तस्मात्त्वं सक्तूनादत्स्व मे प्रभो ॥ ५४
देहः प्राणश्च धर्मश्च शुश्रूषार्थमिदं गुरोः ।
तव विप्र प्रसादेन लोकान्प्राप्स्यामहे शुभान् ॥ ५५
अवेक्ष्या इति कृत्वाऽहं दृढभक्तेति वा द्विज ।
चिन्त्या ममेयमिति वा सक्तूनादातुमर्हसि ॥ ५६
श्वशुर उवाच ।
अनेन नित्यं साध्वी त्वं शीलवृत्तेन शोभसे ।
या त्वं धर्मव्रतोपेता गुरुवृत्तिमवेक्षसे ॥ ५७
तस्मात्सक्तून्ग्रहीष्यामि वधु नार्हसि वञ्चनाम् ।
गणयित्वा महाभागे त्वां हि धर्मभृतां वरे ॥ ५८
इत्युक्त्वा तानुपादाय सक्तून्प्रादाद्द्विजातये ।
ततस्तुष्टोऽभवद्विप्रस्तस्य साधोर्महात्मनः ॥ ५९
प्रीतात्मा स तु तं वाक्यमिदमाह द्विजर्षभम् ।
वाग्मी तदा द्विजश्रेष्ठो धर्मः पुरुषविग्रहः ॥ ६०
शुद्धेन तव दानेन न्यायोपात्तेन धर्मतः ।
यथाशक्ति विसृष्टेन प्रीतोसि द्विजसत्तम ॥ ६१
अहो दानं घुष्यते ते स्वर्गे स्वर्गनिवासिभिः ।
गगनात्पुष्पवर्षं च पश्येदं पतितं भुवि ॥ ६२
सुरर्षिदेवगन्धर्वा ये च देवपुरःसराः ।
स्तुवन्तो देवदूताश्च स्थिता दानेन विस्मिताः ६३
ब्रह्मर्षयो विमानस्था ब्रह्मलोकचराश्च ये ।
काङ्क्षन्ते दर्शनं तुभ्यं दिवं व्रज द्विजर्षभ ॥ ६४
पितृलोकगताः सर्वे तारिताः पितरस्त्वया ।
अनागताश्च बहवः सुबहूनि युगान्युत ॥ ६५
ब्रह्मचर्येण दानेन यज्ञेन तपसा तथा ।
अगद्वरेण धर्मेण तस्माद्गच्छ दिवं द्विज ॥ ६६
श्रद्धया परया यस्त्वं तपश्चरसि सुव्रत ।
तस्माद्देवास्तवानेन प्रीता ब्राह्मणसत्तम ॥ ६७
सर्वमेतद्धि यस्मात्ते दत्तं शुद्धेन चेतसा ।
कृच्छ्रकाले ततः स्वर्गो विजितः कर्मणा त्वया ६८
क्षुधा निर्णुदति प्रज्ञां धर्मबुद्धिं व्यपोहति ।
क्षुधापरिगतज्ञानो धृतिं त्यजति चैव ह ॥ ६९
बुभुक्षां जयते यस्तु स स्वर्गं जयते ध्रुवम् ।
यदा दानरुचिः स्याद्वै तदा धर्मो न सीदति ७०
अनवेक्ष्य सुतस्नेहं कलत्रस्नेहमेव च ।
धर्ममेव गुरुं ज्ञात्वा तृष्णा न गणिता त्वया ७१
द्रव्यागमो नृणां सूक्ष्मः पात्रे दानं ततः परम् ।

---

अवेक्ष्या पालनीया । चिन्त्या परीक्षणीया ॥ ५६ ॥ हे वरे श्रेष्ठ महाभागे त्वां धर्मभृतां मध्ये गणयित्वा सक्तून् ग्रहीष्यामीत्यन्वयः ॥ ५८ ॥

कालः परतरो दानाच्छ्रद्धा चैव ततः परा ॥७२
स्वर्गद्वारं सुसूक्ष्मं हि नरैर्मोहान्न दृश्यते ।
सङ्गार्गलं लोभकीलं रागगुप्तं दुरासदम् ॥ ७३
तं तु पश्यन्ति पुरुषा जितक्रोधा जितेन्द्रियाः ।
ब्राह्मणास्तपसा युक्ता यथाशक्ति प्रदायिनः॥७४
सहस्रशक्तिश्च शतं शतशक्तिर्दशापि च ।
दद्यादपश्च यः शक्त्या सर्वे तुल्यफलाः स्मृताः ७५
रन्तिदेवो हि नृपतिरपः प्रादादकिंचनः ।
शुद्धेन मनसा विप्र नाकपृष्ठं ततो गतः ॥ ७६
न धर्मः प्रीयते तात दानैर्दत्तैर्महाफलैः ।
न्यायलब्धैर्यथा सूक्ष्मैः श्रद्धापूतैः स तुष्यति ७७
गोप्रदानसहस्राणि द्विजेभ्योऽदान्नृगो नृपः ।
एकां दत्त्वा स पारक्यां नरकं समपद्यत ॥ ७८
आत्ममांसप्रदानेन शिबिरौशीनरो नृपः ।
प्राप्य पुण्यकृताँल्लोकान्मोदते दिवि सुव्रतः॥७९
विभवेन नृणां पुण्यं यच्छक्त्या स्वार्जितं न तत् ।
न यज्ञैर्विविधैर्विप्र यथान्यायेन संचितैः ॥ ८०
क्रोधाद्दानफलं हन्ति लोभात्स्वर्गं न गच्छति ।
न्यायवृत्तिर्हि तपसा दानवित्स्वर्गमश्नुते ॥ ८१
न राजसूयैर्बहुभिरिष्ट्वा विपुलदक्षिणैः ।
न चाश्वमेधैर्बहुभिः फलं सममिदं तव ॥ ८२
सक्तुप्रस्थेन विजितो ब्रह्मलोकस्त्वयाऽक्षयः ।
विरजो ब्रह्मसदनं गच्छ विप्र यथासुखम् ॥ ८३
सर्वेषां वो द्विजश्रेष्ठ दिव्यं यानमुपस्थितम् ।
आरोहत यथाकामं धर्मोऽसि द्विज पश्य माम् ८४
बाधितो हि त्वया देहो लोके कीर्तिः स्थिरा च ते ।
सभार्यः सहपुत्रश्च सस्नुषश्च दिवं व्रज ॥ ८५
इत्युक्तवाक्ये धर्मे तु यानमारुह्य स द्विजः ।
सदारः ससुतश्चैव सस्नुषश्च दिवं गतः ॥ ८६
तस्मिन्विप्रे गते स्वर्गे ससुते सस्नुषे तदा ।
भार्याचतुर्थे धर्मज्ञे ततोऽहं निःसृतो बिलात् ८७
ततस्तु सक्तुगन्धेन क्लेदेन सलिलस्य च ।
दिव्यपुष्पविमर्दाच्च साधोर्दानलवैश्च तैः ॥ ८८
विप्रस्य तपसा तस्य शिरो मे काञ्चनीकृतम् ।
तस्य सत्याभिसन्धस्य सक्तुदानेन चैव ह ॥ ८९
शरीरार्धं च मे विप्राः शातकुंभमयं कृतम् ।
पश्यतेमं सुविपुलं तपसा तस्य धीमतः ॥ ९०
कथमेवंविधं स्याद्वै पार्श्वमन्यदिति द्विजाः ।
तपोवनानि यज्ञांश्च हृष्टोऽभ्येमि पुनः पुनः ॥९१
यज्ञं त्वहमिमं श्रुत्वा कुरुराजस्य धीमतः ।
आशया परया प्राप्तो न चाहं काञ्चनीकृतः॥ ९२
ततो मयोक्तं तद्वाक्यं प्रहस्य ब्राह्मणर्षभाः ।
सक्तुप्रस्थेन यज्ञोऽयं संमितो नेति सर्वथा ॥ ९३
सक्तुप्रस्थलवैस्तैर्हि तदाऽहं काञ्चनीकृतः ।
न हि यज्ञो महानेष सदृशस्तैर्मतो मम ॥ ९४
इत्युक्त्वा नकुलः सर्वान्यज्ञे द्विजवरांस्तदा ।
जगामादर्शनं तेषां विप्रास्ते च ययुर्गृहान् ॥ ९५
एतत्ते सर्वमाख्यातं मया परपुरंजय ।
यदाश्चर्यमभूत्तत्र वाजिमेधे महाक्रतौ ॥ ९६
न विस्मयस्ते नृपते यज्ञे कार्यः कथंचन ।
ऋषिकोटिसहस्राणि तपोभिर्ये दिवं गताः ॥९७
अद्रोहः सर्वभूतेषु संतोषः शीलमार्जवम् ।
तपो दमश्च सत्यं च प्रदानं चेति संमितम् ॥९८

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि द्विनवतितमोऽध्यायः ॥ ९२ ॥

## त्रिनवतितमोऽध्यायः ॥ ९३ ॥

जनमेजयेन नकुलेन यज्ञनिन्दाकारणं पृष्टेन वैशंपायनेन तंप्रति सत्यदानतपोभिरेव स्वर्गादिसिद्धौ पशुहिंसाहेतुयज्ञस्य नातिप्रशस्ततरत्वमिति नकुलाभिप्रायवर्णनम् ॥ १ ॥

जनमेजय उवाच ।
यज्ञे सक्ता नृपतयस्तपःसक्ता महर्षयः ।
शान्तिव्यवस्थिता विप्राः शमे दम इति प्रभो॥१
तस्माद्यज्ञफलैस्तुल्यं न किंचिदिह दृश्यते ।

तारितो हि त्वयेति झ. पाठः ॥ ८४ ॥

इति मे वर्तते बुद्धिस्तथा चैतदसंशयम् ॥ २
यज्ञैरिष्ट्वा तु बहवो राजानो द्विजसत्तमाः ।
इह कीर्तिं परां प्राप्य प्रेत्य स्वर्गमितो गताः ॥३
देवराजः सहस्राक्षः क्रतुभिर्भूरिदक्षिणैः ।
देवराज्यं महातेजाः प्राप्तवानखिलं विभुः ॥ ४
अतो युधिष्ठिरो राजा भीमार्जुनपुरःसरः ।
सदृशो देवराजेन समृद्ध्या विक्रमेण च ॥ ५
अथ कस्मात्स नकुलो गर्हयामास तं क्रतुम् ।
अश्वमेधं महायज्ञं राज्ञस्तस्य महात्मनः ॥ ६
वैशंपायन उवाच ।
यज्ञस्य विधिमग्र्यं वै फलं चापि नराधिप ।
गदतः शृणु मे राजन्यथावदिह भारत ॥ ७
पुरा शक्रस्य यजतः सर्व ऊचुर्महर्षयः ।
ऋत्विक्षु कर्मव्यग्रेषु वितते यज्ञकर्मणि ॥ ८
हूयमाने तथा वह्नौ होत्रा गुणसमन्विते ।
देवेष्वाहूयमानेषु स्थितेषु परमर्षिषु ॥ ९
सुप्रतीतैस्तथा विप्रैः स्वागमैः सुस्वरैर्नृप ।
अश्रान्तैश्चापि लघुभिरध्वर्युवृषभैस्तथा ॥ १०
आलंभसमये तस्मिन्गृहीतेषु पशुष्वथ ।
महर्षयो महाराज बभूवुः कृपयाऽन्विताः ॥ ११
ततो दीनान्पशून्दृष्ट्वा ऋषयस्ते तपोधनाः ।
ऊचुः शक्रं समागम्य नायं यज्ञविधिः शुभः १२
अपरिज्ञानमेतत्ते महान्तं धर्ममिच्छतः ।
सन्ति यज्ञे बहुगुणा विधिदृष्टाः पुरंदर ॥ १३
धर्मोपघातकस्त्वेष समारंभस्तव प्रभो ।
नायं धर्मकृतो यज्ञो न हिंसा धर्म उच्यते ॥ १४
आगमेनैव ते यज्ञं कुर्वन्तु यदि चेच्छसि ।
विधिदृष्टेन यज्ञेन धर्मस्ते सुमहान्भवेत् ॥ १५
यज्ञं बीजैः सहस्राक्ष त्रिवर्षपरमोषितैः ।
एष धर्मो महाञ्शक्र चिन्तयानोसि गम्यते ॥१६
शतक्रतुस्तु तद्वाक्यमृषिभिस्तत्त्वदर्शिभिः ।
उक्तं न प्रतिजग्राह मानमोहवशं गतः ॥ १७
तेषां विवादः सुमहाञ्शक्रयज्ञे तपस्विनाम् ।
जङ्गमैः स्थावरैर्वाऽपि यष्टव्यमिति भारत ॥ १८
ते तु खिन्ना विवादेन ऋषयस्तत्त्वदर्शिनः ।
अभिसंधाय शक्रेण पप्रच्छुर्नृपतिं वसुम् ॥ १९
धर्मसंशयमापन्नान्सत्यं ब्रूहि महामते ।
महाभाग कथं यज्ञेष्वागमो नृपसत्तम ।
यष्टव्यं पशुभिर्मेध्यैरथो बीजैरजैरिति ॥ २०
तच्छ्रुत्वा तु वसुस्तेषामविचार्य बलाबलम् ।
यथोपनीतैर्यष्टव्यमिति प्रोवाच पार्थिवः ॥ २१
एवमुक्त्वा स नृपतिः प्रविवेश रसातलम् ।
उक्त्वेह वितथं राजंश्चेदीनामीश्वरः प्रभुः ॥ २२
तस्मान्न वाच्यं ह्येकेन बहुज्ञेनापि संशये ।
प्रजापतिमपाहाय स्वयंभुवमृते प्रभुम् ॥ २३
तेन दत्तानि दानानि पापेनाशुद्धबुद्धिना ।
तानि सर्वाण्यनादृत्य नश्यन्ति विपुलान्यपि २४
तस्याधर्मप्रवृत्तस्य हिंसकस्य दुरात्मनः ।
दानेन कीर्तिर्भवति न प्रेत्येह च दुर्मतेः ॥ २५
अन्यायोपगतं द्रव्यमभीक्ष्णं यो ह्यपण्डितः ।
धर्माभिकाङ्क्षी त्यजति न स धर्मफलं लभेत् ॥ २६
धर्मवैतंसिको यस्तु पापात्मा पुरुषाधमः ।
ददाति दानं विप्रेभ्यो लोकविश्वासकारजम् २७
पापेन कर्मणा विप्रो धनं प्राप्य निरङ्कुशः ।
रागमोहान्वितः सोन्ते कलुषां गतिमश्नुते ॥ २८
अपि संचयबुद्धिर्हि लोभमोहवशं गतः ।
यज्ञं करोति भूतानि पापेनाशुद्धबुद्धिना ॥ २९
एवं लब्ध्वा धनं मोहाद्यो हि दद्याद्यजेत वा ।
न तस्य स फलं प्रेत्य भुंक्ते पापधनागमात् ॥ ३०
उञ्छं मूलं फलं शाकमुदपात्रं तपोधनाः ।
दानं विभवतो दत्त्वा नराः स्वर्यान्ति धार्मिकाः ३१
एष धर्मो महायोगो दानं भूतदया तथा ।
ब्रह्मचर्यं तथा सत्यमनुक्रोशो धृतिः क्षमा ॥ ३२
सनातनस्य धर्मस्य फलमेतत्सनातनम् ।
श्रूयन्ते हि पुरावृत्ता विश्वामित्रादयो नृपाः ॥ ३३

त्रिनवतितमोऽध्यायः ॥ ९३ ॥

नहि यज्ञे पशुगणाः इति ज्ञ. पाठः ॥ १३ ॥ त्रिवर्षपरमोषितैः पुराणैः ॥ १६ ॥ बीजैः रसैरिति ज्ञ. पाठः ॥ २० ॥

विश्वामित्रोऽसितश्चैवं जनकश्च महीपतिः ।
कक्षसेनार्ष्टिसेनौ च सिन्धुद्वीपश्च पार्थिवः ॥ ३४
एते चान्ये च बहवः सिद्धिं परमिकां गताः ।
नृपाः सत्यैश्च दानैश्च न्यायलब्धैस्तपोधनाः ॥ ३५
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा ये चाश्रितास्तपः ।
दानधर्माग्निना शुद्धास्ते स्वर्गं यान्ति भारत ३६

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि त्रिनवतितमोऽध्यायः ॥ ९३ ॥

## चतुर्नवतितमोऽध्यायः ॥ ९४ ॥

वैशंपायनेन जनमेजयंप्रति पशुहिंसां विनैव ध्यानदानादिभिरेव यज्ञफलसंसिद्धौ दृष्टान्ततयाऽगस्त्ययज्ञप्रकारकथनम् ॥ १ ॥

जनमेजय उवाच ।
धर्मागतेन त्यागेन भगवन्सर्वमस्ति चेत् ।
एतन्मे सर्वमाचक्ष्व कुशलो ह्यसि भाषितुम् ॥ १
तस्योञ्छवृत्तेर्यद्वृत्तं सक्तुदाने फलं महत् ।
कथितं तु मम ब्रह्मंस्तथ्यमेतदसंशयम् ॥ २
कथं हि सर्वयज्ञेषु निश्चयः परमो भवेत् ।
एतदर्हसि मे वक्तुं निखिलेन द्विजर्षभ ॥ ३
वैशंपायन उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
अगस्त्यस्य महायज्ञे पुरावृत्तमरिंदम ॥ ४
पुराऽगस्त्यो महातेजा दीक्षां द्वादशवार्षिकीम् ।
प्रविवेश महाराज सर्वभूतहिते रतः ॥ ५
तत्राग्निकल्पा होतार आसन्सत्रे महात्मनः ।
मूलाहाराः फलाहाराश्चाश्मकुट्टा मरीचिपाः ॥ ६
परिपृष्टिका वैघसिकाः प्रसङ्ख्यानास्तथैव च ।
यतयो भिक्षवश्चात्र बभूवुः पर्यवस्थिताः ॥ ७
सर्वे प्रत्यक्षधर्माणो जितक्रोधा जितेन्द्रियाः ।
दमे स्थिताश्च सर्वे ते हिंसादंभविवर्जिताः ॥ ८
वृत्ते शुद्धे स्थिता नित्यमिन्द्रियैश्चाप्यबाधिताः ।
उपातिष्ठन्त तं यज्ञं यजन्तस्ते महर्षयः ॥ ९
यथाशक्त्या भगवता तदन्नं समुपार्जितम् ।
तस्मिन्सत्रे तु यद्वृत्तं यद्योग्यं च तदाऽभवत् १०
तथा ह्यनेकैर्मुनिभिर्महान्तः क्रतवः कृताः ।
एवंविधे त्वगस्त्यस्य वर्तमाने तथाऽध्वरे ।
न ववर्ष सहस्राक्षस्तदा भरतसत्तम ॥ ११
ततः कर्मान्तरे राजन्नगस्त्यस्य महात्मनः ।
कथेयमभिनिर्वृत्ता मुनीनां भावितात्मनाम् ॥ १२
अगस्त्यो यजमानोऽसौ ददात्यन्नं विमत्सरः ।
न च वर्षति पर्जन्यः कथमन्नं भविष्यति ॥ १३
सत्रं चेदं महद्विप्रा मुनेर्द्वादशवार्षिकम् ।
न वर्षिष्यति देवश्च वर्षाण्येतानि द्वादश ॥ १४
एतद्भवन्तः संचिन्त्य महर्षेरस्य धीमतः ।
अगस्त्यस्यातितपसः कर्तुमर्हन्त्यनुग्रहम् ॥ १५
इत्येवमुक्ते वचने ततोऽगस्त्यः प्रतापवान् ।
प्रोवाच वाक्यं स तदा प्रसाद्य शिरसा मुनीन् १६
यदि द्वादशवर्षाणि न वर्षिष्यति वासवः ।
चिन्तायज्ञं करिष्यामि विधिरेष सनातनः ॥ १७
यदि द्वादशवर्षाणि न वर्षिष्यति वासवः ।
स्पर्शयज्ञं करिष्यामि विधिरेष सनातनः ॥ १८
यदि द्वादशवर्षाणि न वर्षिष्यति वासवः ।
व्यायामेनाहरिष्यामि यज्ञानेतान्यतव्रतः ॥ १९
बीजयज्ञो मयाऽयं वै बहुवर्षसमाचितः ।
बीजैर्हितं करिष्यामि नात्र विघ्नो भविष्यति ॥ २०
नेदं शक्यं वृथा कर्तुं मम सत्रं कथंचन ।
वर्षिष्यतीह वा देवो न वा वर्षं भविष्यति ॥ २१
अथवाऽभ्यर्थनामिन्द्रो न करिष्यति कामतः ।

मरीचिपाश्चन्द्रमरीचिपानमात्रतृप्ताः ॥ ६ ॥ परिपृष्ट चेदेव गृह्णन्ति नान्यथा मे परिपृष्टिकाः । असंख्यानास्तत्कालमात्रसंग्रहाः ॥ ७ ॥ चिन्तायज्ञ मानसं यज्ञम् । संकल्पमात्रेणैव देवानृषींश्च तर्पयिष्यामीत्यर्थः ॥ १७ ॥ स्पर्शयज्ञ उपाहृतद्रव्यस्य व्ययमकृत्वा तत्स्पर्शेनैव तास्तर्पयिष्यामि । एव दृष्टियज्ञोपि ज्ञेयः ॥ १८ ॥ व्यायामेन शरीरक्लेशेन । ध्येयात्मना हरिष्यामि इति झ. पाठः ॥ १९ ॥

स्वयमिन्द्रो भविष्यामि जीवयिष्यामि च प्रजाः२२
यो यदाहारजातश्च स तथैव भविष्यति ।
विशेषं चैव कर्तास्मि पुनः पुनरतीव हि ॥ २३
अद्येह स्वर्णमभ्येतु यच्चान्यद्वसु दुर्लभम् ।
त्रिषु लोकेषु यच्चास्ति तदिहागम्यतां स्वयम्॥२४
दिव्याश्चाप्सरसां सङ्घा गन्धर्वाश्च सकिन्नराः ।
विश्वावसुश्च ये चान्ये तेऽप्युपासन्तु मे मखम्२५
उत्तरेभ्यः कुरुभ्यश्च यत्किंचिद्वसु विद्यते ।
सर्वं तदिह यज्ञेषु स्वयमेवोपतिष्ठतु ॥ २६
स्वर्गः स्वर्गसदश्चैव धर्मश्च स्वयमेव तु ।
इत्युक्ते सर्वमेवैतदभवत्तपसा मुनेः ।
तस्य दीप्ताग्निमहसस्त्वगस्त्यस्यातितेजसः ॥ २७
ततस्ते मुनयो हृष्टा ददृशुस्तपसो बलम् ।
विस्मिता वचनं प्राहुरिदं सर्वे महार्थवत् ॥ २८
प्रीताः स्म तव वाक्येन न त्विच्छामस्तपोवनम् ।
तैरेव यज्ञैस्तुष्टाः स्म न्यायेनेच्छामहे वयम् ॥ २९
यज्ञं दीक्षां तथा होमान्यच्चान्यन्मृगयामहे ।
'तयोस्संधर्षितैर्यज्ञैर्नान्यतो मृगयामहे ॥' ३०
न्यायेनोपार्जिताहाराः स्वकर्माभिरता वयम् ।
वेदांश्च ब्रह्मचर्येण न्यायतः प्रार्थयामहे ॥ ३१
न्यायेनोत्तरकालं च गृहेभ्यो निःसृता वयम् ।
धर्मदृष्टैर्विधिद्वारैस्तपस्तप्स्यामहे वयम् ॥ ३२
भवतः सम्यगिष्टा तु बुद्धिर्हिंसाविवर्जिता ।
एतामहिंसां यज्ञेषु ब्रूयास्त्वं सततं प्रभो ॥ ३३
प्रीतास्ततो भविष्यामो वयं तु द्विजसत्तम ।
विसर्जिताः समाप्तौ च सत्रादस्माद्व्रजामहे ॥३४
तथा कथयतां तेषां देवराजः पुरंदरः ।
ववर्ष सुमहातेजा दृष्ट्वा तस्य तपोबलम् ॥ ३५
आसमाप्तेश्च यज्ञस्य तस्यामितपराक्रमः ।
निकामवर्षी पर्जन्यो बभूव जनमेजय ॥ ३६
प्रसादयामास च तमगस्त्यं त्रिदशेश्वरः ।
स्वयमभ्येत्य राजर्षे पुरस्कृत्य बृहस्पतिम् ॥ ३७
ततो यज्ञसमाप्तौ तान्विससर्ज महामुनीन् ।
अगस्त्यः परमप्रीतः पूजयित्वा यथाविधि ॥३८

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि चतुर्नवतितमोऽध्यायः ॥ ९४ ॥

## पञ्चनवतितमोऽध्यायः ॥ ९५ ॥

वैशंपायनेन जनमेजयंप्रति नकुलस्य निजस्वरूपकथनपूर्वकं तस्य नकुलत्वप्राप्तिविमोक्षकारणाभिधानम् ॥ १ ॥

जनमेजय उवाच ।
कोसौ नकुलरूपेण शिरसा काञ्चनेन वै ।
प्राह मानुषवद्वाचमेतत्पृष्टो वदस्व मे ॥ १
वैशंपायन उवाच ।
एतत्पूर्वं न पृष्टोऽहं न चास्माभिः प्रभाषितम् ।
श्रूयतां नकुलो योसौ यथा वाक्तस्य मानुषी ॥२
श्राद्धं संकल्पयामास जमदग्निः पुरा किल ।
होमधेनुस्तमागाच्च स्वयमेव दुदोह ताम् ॥ ३
तत्पयः स्थापयामास नवे भाण्डे दृढे शुचौ ।
क्रोधो नकुलरूपेण पिठरं पर्यकर्षयत् ॥ ४
जिज्ञासुस्तमृषिश्रेष्ठं किं कुर्याद्विप्रिये कृते ।
इति संचिन्त्य दुर्मेधा धर्षयामास तत्पयः ॥ ५
तमाज्ञाय मुनिः क्रोधं नैवास्य स चुकोप ह ।
स तु क्रोधस्ततो राजन्ब्राह्मणीं मूर्तिमास्थितः॥६
जितोस्मीति भृगुश्रेष्ठ भृगवो ह्यतिरोषणाः ।
लोके मिथ्याप्रवादोयं यत्त्वयाऽस्मि विनिर्जितः ७
वशे स्थितोऽहं त्वय्यद्य क्षमावति महात्मनि ।
बिभेमि तपसः साधो प्रसादं कुरु मे प्रभो ॥ ८
जमदग्निरुवाच ।
साक्षाद्दृष्टोसि मे क्रोध गच्छ त्वं विगतज्वरः ।

न त्विच्छामस्तपोव्ययमिति झ. पाठः ॥ २९ ॥ चतुर्नवतितमोऽध्यायः ॥ ९४ ॥
पिठरं पात्र । तत्पयः पीतवानित्यर्थः । तच्च क्रोधस्वरूपेण

पिठरं धर्म आविशदिति झ. पाठः ॥ ४ ॥ पञ्चनवतितमोऽध्यायः ॥ ९५ ॥

न त्वयापकृतं मेऽद्य न च मे मन्युरस्ति वै ॥ ९
यान्समुद्दिश्य संकल्पः पयसोस्य कृतो मया ।
पितरस्ते महाभागास्तेभ्यो बुद्ध्यस्व गम्यताम्॥१०
इत्युक्तो जातसंत्रासस्तत्रैवान्तरधीयत
पितॄणामभिषङ्गाच्च नकुलत्वमुपागतः ॥ ११
स तान्प्रसादयामास शापस्यान्तो भवेदिति ।
तैश्चाप्युक्तः क्षिपन्धर्मं शापस्यान्तमवाप्स्यसि १२
तैश्चोक्तो यज्ञियान्देशान्धर्मारण्यं तथैव च ।
जुगुप्समानो धावन्स तं यज्ञं समुपासदत् ॥ १३
धर्मपुत्रमथाक्षिप्य सक्तुप्रस्थेन तेन सः ।
मुक्तः शापात्ततः क्रोधो धर्मो ह्यासीद्युधिष्ठिरः१४
एवमेतत्तदा वृत्तं यज्ञे तस्य महात्मनः ।
पश्यतां चापि नस्तत्र नकुलोऽन्तर्हितस्तदा ॥१५

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि पञ्चनवतितमोऽध्यायः ॥ ९५ ॥

समाप्तमनुगीतापर्व ।

# (अथ वैष्णवधर्मपर्व ॥ ३ ॥)

## षण्णवतितमोऽध्यायः ॥ ९६ ॥

युधिष्ठिरेण कृष्णंप्रति वैष्णवधर्मप्रशंसनपूर्वकं तत्कथनप्रार्थना ॥१॥ वसिष्ठादिभिस्तच्छुश्रूषया तत्समीपोपसर्पणम् ॥२॥ कृष्णेन युधिष्ठिरादीन्प्रति वैष्णवधर्मप्रशंसनपूर्वकं स्वमहिमानुबोधनम् ॥ ३ ॥

*जनमेजय उवाच ।
अश्वमेधे पुरावृत्ते केशवं केशिसूदनम् ।
धर्मसंशयमुद्दिश्य किमपृच्छत्पितामहः ॥ १
वैशंपायन उवाच ।
पश्चिमेनाश्वमेधेन यदा स्नातो युधिष्ठिरः ।
तदा राजा नमस्कृत्य केशवं पुनरब्रवीत् ॥
भगवन्वैष्णवा धर्माः किंफलाः किंपरायणाः ।
किं धर्ममधिकृत्याथ भवतोत्पादिताः पुरा ॥ ३
यदि तेहमनुग्राह्यः प्रियोसि मधुसूदन
श्रोतव्या यदि मे कृष्ण तन्मे कथय सुव्रत ॥४
पवित्राः किल ते धर्माः सर्वपापप्रणाशनाः ।
सर्वधर्मोत्तमाः पुण्या भगवंस्त्वन्मुखोद्गताः ॥ ५
याञ्श्रुत्वा ब्रह्महा गोघ्नो मातृहा गुरुतल्पगः ।
पाकभेदी कृतघ्नश्च सुरापो ब्रह्मविक्रयी ॥
मित्रविश्वासघाती च वीरहा भ्रूणहा तथा
तपोविक्रयिणश्चैव दानविक्रयिणस्तथा ॥ ७
आत्मविक्रयिणो मूढा जीवेद्यश्च विकर्मभिः ।
पापाः शठा नैकृतिका डांभिका दूषकास्तथा ॥ ८
रसभेदकरा ये च ये च स्युर्ब्रह्मघातकाः ।
शूद्रप्रेष्यकराश्चोरा विप्रा ये च पुरोहिताः ॥ ९
निक्षेपहारिणः स्त्रीघ्नास्तथा ये पारदारिकाः ।
एते चान्ये च पापा ये मुच्यन्ते तेऽपि किल्बिषात्॥
तानाचक्ष्व सुरश्रेष्ठ त्वद्भक्तस्य ममाच्युत ॥ ११
वैशंपायन उवाच ।
इत्येवं कथिते देवे धर्मपुत्रेण संसदि ।
वसिष्ठाद्यास्तपोयुक्ता मुनयस्तत्त्वदर्शिनः ॥ १२
श्रोतुकामाः परं गुह्यं वैष्णवं धर्ममुत्तमम् ।
तथा भागवताश्चैव ततस्तं पर्यवारयन् ॥ १३
युधिष्ठिर उवाच ।
तत्वतस्तव भावेन पादमूलमुदागतम् ।
यदि जानासि मां भक्तं स्निग्धं वा भक्तवत्सल१४
धर्मगुह्यानि सर्वाणि वेत्तुमिच्छामि तत्वतः ।
धर्मान्कथय मे देव यद्यनुग्रहभागहम् ॥ १५

पश्चिमेनाश्वमेधेनेति ट. पाठः ॥ २ ॥

* एतदारभ्यापर्वसमाप्ति विद्यमानास्त्रयोविंशत्यध्याया दाक्षिणात्यकोशेष्वेव दृश्यन्ते नत्वौत्तराहपाठे

श्रुता मे मानवा धर्मा वासिष्ठाः काश्यपास्तथा ।
गार्गीया गौतमीयाश्च तथा गोपालकस्य च ॥ १६
पराशरकृताः पूर्वा मैत्रेयस्य च धीमतः ।
औमा माहेश्वराश्चैव नन्दिधर्माश्च पावनाः ॥ १७
ब्रह्मणा कथिता ये च कौमाराश्च श्रुता मया ।
धूमायनकृता धर्माः काण्डवैश्वानरा अपि ॥ १८
भार्गवा याज्ञवल्क्याश्च मार्कण्डेयकृता अपि
भारद्वाजकृता ये च बृहस्पतिकृताश्च ये ॥ १९
कुणेश्च कुणिबाहोश्च विश्वामित्रकृताश्च ये ।
सुमन्तुजैमिनिकृताः शाकुनेयास्तथैव च ॥ २०
पुलस्त्यपुलहोद्गीताः पावकीयास्तथैव च ।
अगस्त्यगीता मौद्गल्याः शाण्डिल्याः शलभायनाः
वालखिल्यकृता ये च ये च सप्तर्षिभिस्तथा ।
आपस्तंबकृता धर्माः शङ्खस्य लिखितस्य च ॥ २२
प्राजापत्यास्तथा याम्या माहेन्द्राश्च श्रुता मया ।
वैयाघ्रव्यासकीयाश्च विभण्डककृताश्च ये ॥ २३
नारदीयाः श्रुता धर्माः कापोताश्च श्रुता मया ।
तथा विदुरवाक्यानि भृगोरङ्गिरसस्तथा ॥ २४
क्रौश्चा मृदङ्गगीताश्च सौर्या हारीतकाश्च ये ।
ये पिशङ्गकृताश्चापि कातप्रायाः सुवालकाः ॥ २५
उद्दालककृता धर्मा औशनसास्तथैव च ।
वैशंपायनगीताश्च ये चान्येऽप्येवमादितः ॥ २६
एतेभ्यः सर्वधर्मेभ्यो देव त्वन्मुखनिस्सृताः ।
पावनत्वात्पवित्रत्वाद्विशिष्टा इति मे मतिः ॥ २७
तस्माद्धि त्वां प्रपन्नस्य त्वद्भक्तस्य च केशव ।
युष्मदीयान्वरान्धर्मान्पुण्यान्कथय मेऽच्युत ॥ २८
वैशंपायन उवाच ।
एवं पृष्टस्तु धर्मज्ञो धर्मपुत्रेण केशवः ।
उवाच धर्मान्सूक्ष्मार्थान्धर्मपुत्रस्य हर्षितः ॥ २९
एवं ते यस्य कौन्तेय यत्नो धर्मेषु सुव्रत ।
तस्य ते दुर्लभो लोके न कश्चिदपि विद्यते ॥ ३०
धर्मः श्रुतो वा दृष्टो वा कथितो वा कृतोपि वा ।
अनुमोदितो वा राजेन्द्र नयतीन्द्रपदं नरम् ॥ ३१
धर्मः पिता च माता च धर्मो नाथः सुहृत्तथा ।
धर्मो भ्राता सखा चैव धर्मः स्वामी परंतप ॥ ३२
धर्मादर्थश्च कामश्च धर्माद्भोगाः सुखानि च ।
धर्मादैश्वर्यमेवाग्र्यं धर्मात्स्वर्गगतिः परा ॥ ३३
धर्मोयं सेवितः शुद्धस्त्रायते महतो भयात् ।
धर्माद्द्विजत्वं देवत्वं धर्मः पावयते नरम् ॥ ३४
यदा च क्षीयते पापं कालेन पुरुषस्य तु ।
तदा संजायते बुद्धिर्धर्मे कर्तुं युधिष्ठिर ॥ ३५
जन्मान्तरसहस्रैस्तु मनुष्यत्वं हि दुर्लभम् ।
तद्गत्वापीह यो धर्मं न करोति स वञ्चितः ॥ ३६
कुत्सिता ये दरिद्राश्च विरूपा व्याधितास्तथा ।
परद्वेष्याश्च मूर्खाश्च न तैर्धर्मः कृतः पुरा ॥ ३७
ये च दीर्घायुषः शूराः पण्डिता भोगिनस्तथा ।
नीरोगा रूपसंपन्नास्तैर्धर्मः सुकृतः पुरा ॥ ३८
एवं धर्मः कृतः शुद्धो नयते गतिमुत्तमाम् ।
अधर्मं सेवते यस्तु तिर्यग्योन्यां पतत्यसौ ॥ ३९
इदं रहस्यं कौन्तेय शृणु धर्ममनुत्तमम् ।
कथयिष्ये परं धर्मं तव भक्तस्य पाण्डव ॥ ४०
इष्टस्त्वमसि मेऽत्यर्थं प्रपन्नश्चापि मां सदा ।
परमार्थमपि ब्रूयां किं पुनर्धर्मसंहिताम् ॥ ४१
इदं मे मानुषं जन्म कृतमात्मनि मायया ।
धर्मसंस्थापनार्थाय दुष्टानां नाशनाय च ॥ ४२
मानुष्यं भावमापन्नं ये मां गृह्णन्त्यवज्ञया ।
संसारान्तर्हि ते मूढास्तिर्यग्योनिष्वनेकशः ॥ ४३
ये च मां सर्वभूतस्थं पश्यन्ति ज्ञानचक्षुषा ।
मद्भक्तांस्तान्सदा युक्तान्मत्समीपं नयाम्यहम् ॥ ४४
मद्भक्ता न विनश्यन्ति मद्भक्ता वीतकल्मषाः ।
मद्भक्तानां तु मानुष्ये सफलं जन्म पाण्डव ॥ ४५
अपि पापेष्वभिरता मद्भक्ताः पाण्डुनन्दन ।
मुच्यन्ते पातकैः सर्वैः पद्मपत्रमिवांभसा ॥ ४६
जन्मान्तरसहस्रेषु तपसा भावितात्मनाम् ।

---

शूद्रायनकृता धर्मा इति क. पाठः ॥ १८ ॥ वैभीतककृताश्च ये इति ट. पाठः ॥ २३ ॥ राजेन्द्र पुनाति ह नरं सदेति ट. पाठः ॥ ३१ ॥

भक्तिरुत्पद्यते तात मनुष्याणां न संशयः ॥४७
यच्च रूपं परं गुह्यं कूटस्थमचलं ध्रुवम् ।
न दृश्यते तथा देवैर्मद्भक्तैर्दृश्यते यथा ॥ ४८
अपरं यच्च मे रूपं प्रादुर्भावेषु दृश्यते ।
तदर्चयन्ति सर्वार्थैः सर्वभूतानि पाण्डव ॥ ४९
कल्पकोटिसहस्रेषु व्यतीतेष्वागतेषु च ।
दर्शयामीह तद्रूपं यच्च पश्यन्ति मे सुराः ॥ ५०
स्थित्युत्पत्त्यव्ययकरं यो मां ज्ञात्वा प्रपद्यते ।
अनुगृह्णाम्यहं तं वै संसारान्मोचयामि च ॥५१
अहमादिर्हि देवानां सृष्टा ब्रह्मादयो मया ।
प्रकृतिं स्वामवष्टभ्य जगत्सर्वं सृजाम्यहम् ॥५२
तमोमूलोहमव्यक्तो रजोमध्ये प्रतिष्ठितः ।
ऊर्ध्वं सत्त्वं विना लोभं ब्रह्मादिस्तंबपर्यतः॥ ५३
मूर्धानं मे विद्धि दिवं चन्द्रादित्यौ च लोचने ।
गावोग्निर्ब्राह्मणो वक्त्रं मारुतः श्वसनं च मे ॥५४
दिशो मे बाहवश्चाष्टौ नक्षत्राणि च भूषणम् ।
अन्तरिक्षमुरो विद्धि सर्वभूतावकाशकम् ।
मार्गो मेघानिलाभ्यां तु यन्ममोदरमव्ययम्॥५५
पृथिवीमण्डलं यद्वै द्वीपार्णवनगैर्युतम् ।
सर्वसंधारणोपेतं पादौ मम युधिष्ठिर ॥ ५६
स्थितो ह्येकगुणः खेऽहं द्विगुणश्चास्मि मारुते ।
त्रिगुणोग्नौ स्थितोहं वै सलिले च चतुर्गुणः॥५७
शब्दाद्या ये गुणाः पञ्च महाभूतेषु पञ्चसु ।
तन्मात्रासंस्थितः सोहं पृथिव्यां पञ्चधास्थितः॥५८
अहं सहस्रशीर्षस्तु सहस्रवदनेक्षणः ।
सहस्रबाहूदरधृक्सहस्रोरुः सहस्रपात् ॥ ५९
धृत्वोर्वीं सर्वतः सम्यगत्यतिष्ठं दशांगुलम् ।
सर्वभूतात्मभूतस्थः सर्वव्यापी ततोस्म्यहम् ॥६०
अचिन्त्योहमनन्तोहमजरोहमजो ह्यहम् ।
अनाद्योऽहमवध्योहमप्रमेयोहमव्ययः ॥ ६१
निर्गुणोहं निगूढात्मा निर्द्वन्द्वो निर्ममो नृप ।
निष्कलो निर्विकारोहं निदानममृतस्य तु ॥ ६२
सुधा चाहं स्वधा चाहं स्वाहा चाहं नराधिप ।
तेजसा तपसा चाहं भूतग्रामं चतुर्विधम् ॥ ६३
स्नेहपाशैर्गुणबद्धा धारयाम्यात्ममायया ।
चातुराश्रमधर्मोहं चातुर्होत्रफलाशनः ।
चतुर्मूर्तिश्चतुर्यज्ञश्चतुराश्रमभावनः ॥ ६४
संहृत्याहं जगत्सर्वं कृत्वा वै गर्भमात्मनः ।
शयामि दिव्ययोगेन प्रलयेषु युधिष्ठिर ॥ ६५
सहस्रयुगपर्यन्तां ब्राह्मीं रात्रिं महार्णवे ।
स्थित्वा सृजामि भूतानि जङ्गमानि स्थिराणि च ६६
कल्पे कल्पे च भूतानि संहरामि सृजामि च ।
न च मां तानि जानन्ति मायया मोहितानि मे ६७
मम चैवान्धकारस्य मार्गितव्यस्य नित्यशः ।
प्रशान्तस्येव दीपस्य गतिर्नैवोपलभ्यते ॥ ६८
न तदस्ति क्वचिद्राजन्यत्राहं न प्रतिष्ठितः ।
न च तद्विद्यते भूतं मयि यन्न प्रतिष्ठितम् ॥ ६९
यावन्मित्रं भवेद्भूतं स्थूलं सूक्ष्ममिदं जगत् ।
जीवभूतो ह्यहं तस्मिंस्तावन्मात्रं प्रतिष्ठितः ॥ ७०
किंचात्र बहुनोक्तेन सत्यमेतद्ब्रवीमि ते ।
यद्भूतं यद्भविष्यच्च तत्सर्वमहमेव तु ॥ ७१
मया सृष्टानि भूतानि मन्मयानि च भारत ।
मामेव न विजानन्ति मायया मोहितानि वै ७२
एवं सर्वं जगदिदं सदेवासुरमानुषम् ।
मत्तः प्रभवते राजन्मय्येव प्रविलीयते ॥ ७३

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि वैष्णवधर्मपर्वणि षण्णवतितमोऽध्यायः ॥ ९६ ॥

## सप्तनवतितमोऽध्यायः ॥ ९७ ॥

कृष्णेन युधिष्ठिरंप्रति चातुर्वर्ण्यधर्मनिरूपणम् ॥ १ ॥

शंपायन उवाच ।
एवमात्मोद्भवं सर्वं जगदुद्दिश्य केशवः
धर्मान्धर्मात्मजस्याथ पुण्यानकथयत्प्रभुः ॥ १
शृणु पाण्डव तत्वेन पवित्रं पापनाशनम् ।

कथ्यमानं मया पुण्यं धर्मशास्त्रफलं महत् ॥ २
यः शृणोति शुचिर्भूत्वा एकचित्तस्तपोयुतः ।
स्वर्ग्यं यशस्यमायुष्यं धर्मं ज्ञेयं युधिष्ठिर ॥ ३
श्रद्दधानस्य तस्येह यत्पापं पूर्वसंचितम् ।
विनश्यत्याशु तत्सर्वं मद्भक्तस्य विशेषतः ॥ ४
वैशंपायन उवाच ।
एवं श्रुत्वा वचः पुण्यं सत्यं केशवभाषितम् ।
प्रहृष्टमनसो भूत्वा चिन्तयन्तोऽद्भुतं परम् ॥ ५
देवब्रह्मर्षयः सर्वे गन्धर्वाप्सरसस्तथा ।
भूता यक्षग्रहाश्चैव गुह्यका भुजगास्तथा ॥ ६
वालखिल्या महात्मानो योगिनस्तत्वदर्शिनः ।
तथा भागवताश्चापि पञ्चकालमुपासकाः ॥ ७
कौतूहलसमाविष्टाः प्रहृष्टेन्द्रियमानसाः ।
श्रोतुकामाः परं धर्मं वैष्णवं धर्मशासनम् ।
हृदि कर्तुं च तद्वाक्यं प्रणेमुः शिरसा नताः ॥ ८
ततस्तान्वासुदेवेन दृष्टान्दिव्येन चक्षुषा ।
विमुक्तपापानालोक्य प्रणम्य शिरसा हरिम् ।
पप्रच्छ केशवं धर्मं धर्मपुत्रः प्रतापवान् ॥ ९
युधिष्ठिर उवाच ।
कीदृशी ब्राह्मणस्याथ क्षत्रियस्यापि कीदृशी ।
वैश्यस्य कीदृशी देव गतिः शूद्रस्य कीदृशी ॥१०
कथं बध्येत पाशेन ब्राह्मणस्तु यमालये ।
क्षत्रियो वाथ वैश्यो वा शूद्रो वा बध्यते कथम् ।
एतत्कर्मफलं ब्रूहि लोकनाथ नमोस्तु ते ॥ ११
वैशंपायन उवाच
पृष्टोऽथ केशवो ह्येवं धर्मपुत्रेण धीमता ।
उवाच संसारगतिं चातुर्वर्ण्यस्य कर्मजाम् ॥ १२
भगवानुवाच ।
शृणु वर्णक्रमेणैव धर्मं धर्मभृतां वर ।
नास्ति किंचिन्नरश्रेष्ठ ब्राह्मणस्य तु दुष्कृतम् ॥१३
शिखायज्ञोपवीता ये सन्ध्यां ये चाप्युपासते ।
यैश्च पूर्णाहुतिः प्राप्ता विधिवज्जुह्वते च ये ॥१४
वैश्वदेवं च ये चक्रुः पूजयन्त्यतिथींश्च ये ।
नित्यं स्वाध्यायशीलाश्च जपयज्ञपराश्च ये ॥ १५
सायंप्रातर्हुताशाश्च शूद्रभोजनवर्जिताः ।
डंभानृतविमुक्ताश्च स्वदारनिरताश्च ये ।
पञ्चयज्ञपरा ये च येऽग्निहोत्रमुपासते ॥ १६
दहन्ति दुष्कृतं येषां हूयमानास्त्रयोऽग्नयः ।
नष्टदुष्कृतकर्माणो ब्रह्मलोकं व्रजन्ति ते ॥ १७
ब्रह्मलोके पुनः कामं गन्धर्वैर्ब्रह्मगायकैः ।
उद्गीयमानाः प्रयत्नैः पूज्यमानाः स्वयंभुवा ।
ब्रह्मलोके प्रमोदन्ते यावदाभूतसंप्लवम् ॥ १८
क्षत्रियोपि स्थितो राज्ये स्वधर्मपरिपालकः ।
सम्यक्प्रजाः पालयिता षड्भागनिरतः सदा ॥१९
यज्ञदानरतो धीरः स्वदारनिरतः सदा ।
शास्त्रानुसारी तत्वज्ञः प्रजाकार्यपरायणः ॥ २०
विप्रेभ्यः कामदो नित्यं भृत्यानां भरणे रतः ।
सत्यसन्धः शुचिर्नित्यं लोभडंभविवर्जितः ।
क्षत्रियोप्युत्तमां याति गतिं देवनिषेविताम् ॥२१
तत्र दिव्याप्सरोभिस्तु गन्धर्वैश्च विशेषतः ।
सेव्यमानो महातेजाः क्रीडते शक्रपूजितः ॥२२
चतुर्युगानि वै त्रिंशत्क्रीडित्वा तत्र देववत् ।
इह मानुष्यलोके तु चतुर्वेदी द्विजो भवेत् ॥ २३
कृषिगोपालनिरतो धर्मान्वेषणतत्परः ।
दानधर्मेपि निरतो विप्रशुश्रूषकस्तथा ॥ २४
सत्यसन्धः शुचिर्नित्यं लोभडंभविवर्जितः ।
ऋजुः स्वदारनिरतो हिंसाद्रोहविवर्जितः ॥ २५
वणिग्धर्मान्नमुञ्चन्वै देवब्राह्मणपूजकः ।
वैश्यः स्वर्गतिमाप्नोति पूज्यमानोप्सरोगणैः ॥२६
चतुर्युगानि वै त्रिंशत्क्रीडित्वा दश पञ्च च ।
इह मानुष्यलोके च राजा भवति वीर्यवान् ॥२७
सुवर्णकोट्यः पञ्चाशद्रत्नानां च शतं तथा ।
हस्त्यश्वरथसंयुक्तो महाभोगांश्च सेवते ॥ २८
त्रयाणामपि वर्णानां शुश्रूषानिरतः सदा ।
विशेषतस्तु विप्राणां दासवद्यस्तु तिष्ठति ॥ २९
अयाचितप्रदाता च सत्यशौचसमन्वितः ।
गुरुदेवार्चनरतः परदारविवर्जितः ॥ ३०
परपीडामकृत्वैव भृत्यवर्गं बिभर्ति यः ।

शूद्रोपि स्वर्गमाप्नोति जीवानामभयप्रदः ॥ ३१
स स्वर्गलोके क्रीडित्वा वर्षकोटिं महातपाः ।
इह मानुषलोके तु वैश्यो धनपतिर्भवेत् ॥ ३२
एवं धर्मात्परं नास्ति महत्संसारमोक्षणम् ।
न च धर्मात्परं किंचित्पापकर्मव्यपोहनम् ॥ ३३
तस्माद्धर्मः सदा कार्यो मानुष्यं प्राप्य दुर्लभम् ।
न हि धर्मानुरक्तानां लोके किंचन दुर्लभम् ॥३४
स्वयंभुविहितो धर्मो यो यस्येह नरेश्वर ।
स तेन क्षपयेत्पापं सम्यगाचरितेन च ॥ ३५
सहजं यद्भवेत्कर्म न तत्त्याज्यं हि केनचित् ।
स एव तस्य धर्मो हि तेन सिद्धिं स गच्छति॥३६
विगुणोपि स्वधर्मस्तु पापकर्म व्यपोहति ।
एवमेव तु धर्मोपि क्षीयते पापवर्धनात् ॥ ३७
उवाच ।
भगवन्देवदेवेश श्रोतुं कौतूहलं हि मे ।
शुभस्याप्यशुभस्यापि क्षयवृद्धी यथाक्रमम् ॥ ३८

भगवानुवाच
शृणु पार्थिव तत्सर्वं धर्मसूक्ष्मं सनातनम् ।
दुर्विज्ञेयतमं नित्यं यत्र मग्ना महाजनाः ॥ ३९
यथैव शीतमुदकमुष्णेन बहुना वृतम् ।
भवेत्तु तत्क्षणादुष्णं शीतत्वं च विनश्यति ॥ ४०
यथोष्णं वा भवेदल्पं शीतेन बहुना वृतम् ।
शीतलं च भवेत्सर्वमुष्णत्वं च विनश्यति ॥ ४१
एवं च यद्भवेद्भूरि सुकृतं वाऽपि दुष्कृतम् ।
तदल्पं क्षपयेच्छीघ्रं नात्र कार्या विचारणा ॥ ४२
समत्वे सति राजेन्द्र तयोः सुकृतपापयोः ।
गूहितस्य भवेद्वृद्धिः कीर्तितस्य भवेत्क्षयः ॥ ४३
ख्यापनेनानुतापेन प्रायः पापं विनश्यति ।
तथा कृतस्तु राजेन्द्र धर्मो नश्यति मानद ॥ ४४
तावुभौ गूहितौ सम्यग्वृद्धिं यातो न संशयः ।
तस्मात्सर्वप्रयत्नेन न पापं गूह ॥ ४५
तस्मादेतत्प्रयत्नेन कीर्तयेत्क्षयकारणात् ।
तस्मात्संकीर्तयेत्पापं नित्यं धर्मं च गूहयेत् ॥४६

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि वैष्णवधर्मपर्वणि सप्तनवतितमोऽध्यायः ॥ ९७ ॥

## अष्टनवतितमोऽध्यायः ॥ ९८ ॥

कृष्णेन युधिष्ठिरंप्रति जन्मदानजीवितानां वैयर्थ्यापादकाधर्मकथनम् ॥ १ ॥ तथा दानानां सात्त्विकत्वादिकथनपूर्वकं तत्तत्फलानां त्रैविध्यादिप्रतिपादनम् ॥ २ ॥ तथा दानपात्रलक्षणनिरूपणम् ब्राह्मणमहिमानुवर्णनं च ॥ ३ ॥

वैशंपायन उवाच ।
एवं श्रुत्वा वचस्तस्य धर्मपुत्रोऽच्युतस्य तु ।
पप्रच्छ पुनरप्यन्यं धर्मं धर्मात्मजो हरिम् ॥ १
वृथा च कति जन्मानि वृथा दानानि कानि च ।
वृथा च जीवितं केषां नराणां पुरुषोत्तम ॥ २
कीदृशासु ह्यवस्थासु दानं दत्तं जनार्दन ।
इह लोकेऽनुभवति पुरुषः पुरुषोत्तम ॥ ३
गर्भस्थः किं समश्नाति किं बाल्ये वाऽपि केशव ।
यौवनस्थेऽपि किं कृष्ण वार्धके वाऽपि किं भवेत् ४
सात्त्विकं कीदृशं दानं राजसं कीदृशं भवेत् ।
तामसं कीदृशं देव तर्पयिष्यति किं प्रभो ॥ ५
उत्तमं कीदृशं दानं तेषां वा किं फलं भवेत् ।

किं दानं नयति ह्यूर्ध्वं किं गतिं मध्यमां नयेत् ।
गतिं जघन्यामथवा देवदेव ब्रवीहि मे ॥ ६
एतदिच्छामि विज्ञातुं परं कौतूहलं हि मे ।
त्वदीयं वचनं सत्यं पुण्यं च मधुसूदन ॥ ७
वैशंपायन उवाच ।
एवं धर्मं प्रयत्नेन पृष्टः पाण्डुसुतेन वै ।
उवाच वासुदेवोऽथ धर्मान्धर्मात्मजस्य तु ॥ ८
भगवानुवाच ।
शृणु राजन्यथान्यायं वचनं तथ्यमुत्तमम् ।
कथ्यमानं मया पुण्यं सर्वपापव्यपोहनम् ॥ ९
वृथा च दश जन्मानि चत्वारि च नराधिप ।
वृथा दानानि पञ्चाशत्पञ्चैव च यथाक्रमम् ॥ १०

वृथा च जीवितं येषां ते च षट् परिकीर्तिताः ।
अनुक्रमेण वक्ष्यामि तानि सर्वाणि पार्थिव ११
धर्मघ्नानां वृथा जन्म लुब्धानां पापिनां तथा ।
वृथा पाकं च येऽश्नन्ति परदाररताश्च ये
पाकभेदकरा ये च ये च स्युः सत्यवर्जिताः॥ १२
मृष्टमश्नाति यश्चैकः क्लिश्यमानैस्तु बान्धवैः ।
पितरं मातरं चैव उपाध्यायं गुरुं तथा ।
मातुलं मातुलानीं च यो निहन्याच्छपेत वा॥ १३
ब्राह्मणश्चैव यो भूत्वा सन्ध्योपासनवर्जितः ।
निस्स्वाहो निस्स्वधश्चैव शूद्राणामन्नभुग्द्विजः १४
मम वा शंकरस्याथ ब्रह्मणो वा युधिष्ठिर ।
अथवा ब्राह्मणानां तु ये न भक्ता नराधमाः ।
वृथाजन्मान्यथैतेषां पापिनां विद्धि पाण्डव ॥ १५
अश्रद्धयाऽपि यद्दत्तमवमानेन वाऽपि यत् ।
डंभार्थमपि यद्दत्तं यत्पाषण्डिहृतं नृप ॥ १६
शूद्राचाराय यद्दत्तं यद्दत्वा चानुकीर्तितम् ।
रोषयुक्तं तु यद्दत्तं यद्दत्तमनुशोचितम् ॥ १७
डंभार्जितं च यद्दत्तं यच्च वाऽप्यनृतार्जितम् ।
ब्राह्मणस्वं च यद्दत्तं चौर्येणाप्यार्जितं च यत्॥ १८
अभिशस्ताहृतं यत्तु यद्दत्तं पतिते द्विजे ।
निर्ब्रह्माभिहृतं यत्तु यद्दत्तं सर्वयाचकैः ॥ १९
व्रात्यैस्तु यद्धृतं दानमारूढपतितैश्च यत् ।
यद्दत्तं स्वैरिणीभर्तुः श्वशुराननुवर्तिने ॥ २०
यद्ग्रामयाचकहृतं यत्कृतघ्नहृतं तथा ।
उपपातकिने दत्तं वेदविक्रयिणे च यत् ॥ २१
स्त्रीजिताय च यद्दत्तं यद्दत्तं राजसेविने ।
गणकाय च यद्दत्तं यच्च कारणिकाय च ॥ २२
वृषलीपतये दत्तं यद्दत्तं शस्त्रजीविने ।
भृतकाय च यद्दत्तं व्यालग्राहिहृतं च यत् ॥ २३
पुरोहिताय यद्दत्तं चिकित्सकहृतं च यत् ।
यद्वणिक्कर्मिणे दत्तं क्षुद्रमन्त्रोपजीविने ॥ २४
यच्छूद्रजीविने दत्तं यच्च देवलकाय च ।
देवद्रव्याशिने यच्च यद्दत्तं चित्रकर्मिणे ॥ २५
रङ्गोपजीविने दत्तं यच्च मांसोपजीविने ।
सेवकाय च यद्दत्तं यद्दत्तं ब्राह्मणब्रुवे ॥ २६
अदेशिने च यद्दत्तं दत्तं वार्धुषिकाय च ।
यदनाचारिणे दत्तं यत्तु दत्तमनग्नये ॥ २७
असन्ध्योपासिने दत्तं यच्छूद्रग्रामवासिने ।
यन्मिथ्यालिङ्गिने दत्तं दत्तं सर्वाशिने च यत् २८
नास्तिकाय च यद्दत्तं धर्मविक्रयिणे च यत्
वराकाय च यद्दत्तं यद्दत्तं कूटसाक्षिणे ॥ २९
ग्रामकूटाय यद्दत्तं दानं पार्थिवपुङ्गव ।
वृथा भवति तत्सर्वं नात्र कार्या विचारणा ॥३०
विप्राणामधरा एत लोलुपा ब्राह्मणाधमाः ।
नात्मानं तारयन्त्येते न दातारं युधिष्ठिर ॥ ३१
एतेभ्यो दत्तमात्राणि दानानि सुबहून्यपि ।
वृथा भवन्ति राजेन्द्र भस्मन्याज्याहुतिर्यथा॥३२
एतेषु यत्फलं किंचिद्भविष्यति कथंचन ।
राक्षसाश्च पिशाचाश्च तद्विलुंपन्ति हर्षिताः ॥३३
वृथा ह्येतानि दत्तानि कथितानि समासतः ।
जीवितं तु वृथा येषां तच्छृणुष्व युधिष्ठिर ॥३४
ये मां न प्रतिपद्यन्ते शङ्करं वा नराधमाः ।
ब्राह्मणान्वा महीदेवान्वृथा जीवन्ति ते नराः॥३५
हेतुशास्त्रेषु ये सक्ताः कुदृष्टिपथमाश्रिताः ।
देवान्निन्दन्त्यनाचारा वृथा जीवन्ति ते नराः ३६
कुशलैः कृतशास्त्राणि पठित्वा ये नराधमाः ।
विप्रान्निन्दन्ति यज्ञांश्च वृथा जीवन्ति ते नराः ३७
ये दुर्गां वा कुमारं वा वायुमग्निं जलं रविम् ।
पितरं मातरं चैव गुरुमिन्द्रं निशाकरम् ।
मूढा निन्दन्त्यनाचारा वृथा जीवन्ति ते नराः ३८
विद्यमाने धने यस्तु दानधर्मविवर्जितः ।
मृष्टमश्नाति यश्चैको वृथा जीवति सोपि च ॥ ३९
वृथा जीवितमाख्यातं दानकालं ब्रवीमि ते ॥४०
तमोनिविष्टचित्तेन दत्तं दानं तु यद्भवेत् ।
तदस्य फलमश्नाति नरो गर्भगतो नृप ॥ ४१
ईर्ष्यामत्सरसंयुक्तो डंभार्थं चार्थकारणात् ।
ददाति दानं यो मर्त्यो बालभावे तदश्नुते ॥ ४२
भोक्तुं भोगमशक्तस्तु व्याधिभिः पीडितो भृशम् ।

ददाति दानं यो मर्त्यो वृद्धभावे तदश्नुते ॥ ४३
श्रद्धायुक्तः शुचिः स्नातः प्रसन्नेन्द्रियमानसः ।
ददाति दानं यो मर्त्यो यौवने स तदश्नुते ॥ ४४
स्वयं नीत्वा तु यद्दानं भक्त्या पात्रे प्रदीयते ।
तत्सार्वकालिकं विद्धि दानमामरणान्तिकम् ॥४५
राजसं सात्विकं चापि तामसं च युधिष्ठिर ।
दानं दानफलं चैव गतिं च त्रिविधां शृणु ॥ ४६
दानं दातव्यमित्येव मतिं कृत्वा द्विजाय वै ।
उपकारवियुक्ताय यद्दत्तं तद्धि सात्विकम् ॥ ४७
श्रोत्रियाय दरिद्राय बहुभृत्याय पाण्डव ।
दीयते यत्प्रहृष्टेन तत्सात्विकमुदाहृतम् ॥ ४८
वेदाक्षरविहीनाय यत्तु पूर्वोपकारिणे ।
समृद्धाय च यद्दत्तं तद्दानं राजसं स्मृतम् ॥ ४९
संबन्धिने च यद्दत्तं प्रमत्ताय च पाण्डव ।
फलार्थिभिरपात्राय तद्दानं राजसं स्मृतम् ॥ ५०
वैश्वदेवविहीनाय दानमश्रोत्रियाय च ।
दीयते तस्करायापि तद्दानं तामसं स्मृतम् ॥ ५१
सरोषमवधूतं च क्लेशयुक्तमवज्ञया ।
सेवकाय च यद्दत्तं तत्तामसमुदाहृतम् ॥ ५२
देवाः पितृगणाश्चैव मुनयश्चाग्नयस्तथा ।
सात्विकं दानमश्नन्ति तुष्यन्ति च नरेश्वर ॥५३
दानवा दैत्यसङ्घाश्च ग्रहा यक्षाः सराक्षसाः ।
राजसं दानमश्नन्ति वर्जितं पितृदैवतैः ॥ ५४
पिशाचाः प्रेतसङ्घाश्च कश्मला ये मलीमसाः ।
तामसं दानमश्नन्ति गतिं च त्रिविधां शृणु ५५
सात्विकानां तु दानानामुत्तमं फलमश्नुते ।
मध्यमं राजसानां तु तामसानां तु पश्चिमम् ५६
अभिगम्योपनीतानां दानानामुत्तमं फलम् ।
मध्यमं तु समाहूय जघन्यं याचते फलम् ॥ ५७
अयाचितप्रदाता यः स याति गतिमुत्तमाम् ।
समाहूय तु यो दद्यान्मध्यमां स गतिं व्रजेत् ।
याचितो यश्च वै दद्याज्जघन्यां स गतिं व्रजेत् ५८
उत्तमा दैविकी ज्ञेया मध्यमा मानुषी गतिः ।
गतिर्जघन्या तिर्यक्षु गतिरेषा त्रिधा स्मृता ॥५९
पात्रभूतेषु विप्रेषु संस्थितेष्वाहिताग्निषु ।
यत्तु निक्षिप्यते दानमक्षयं संप्रकीर्तितम् ॥ ६०
श्रोत्रियाणां दरिद्राणां भरणं कुरु पार्थिव ।
समृद्धानां द्विजातीनां कुर्यास्तेषां तु रक्षणम् ॥६१
दरिद्रान्वित्तहीनांश्च प्रदानैः सुष्ठु पूजय ।
आतुरस्यौषधैः कार्यं नीरुजस्य किमौषधैः ॥ ६२
पापं प्रतिग्रहीतारं प्रदातुरुपगच्छति ।
प्रतिग्रहीतुर्यत्पुण्यं प्रदातारमुपैति तत् ।
तस्माद्दानं सदा कार्यं परत्र हितमिच्छता ॥ ६३
वेदविद्यावदातेषु सदा शूद्रान्नवर्जिषु ।
प्रयत्नेन विधातव्यो महादानमयो निधिः ॥ ६४
येषां दाराः प्रतीक्षन्ते सहस्रस्येव लंभनम् ।
भुक्तशेषस्य भक्तस्य तान्निमन्त्र्य पाण्डव ॥ ६५
आमन्त्र्य तु निराशानि न कर्तव्यानि भारत ।
कुलानि सुदरिद्राणि तेषामाशा हता भवेत् ॥६६
मद्भक्ता ये नरश्रेष्ठ मद्गता मत्परायणाः ।
मद्याजिनो मन्नियमास्तान्प्रयत्नेन पूजयेत् ॥ ६७
तेषां तु पावनायाहं नित्यमेव युधिष्ठिर ।
उभे सन्ध्येऽधितिष्ठामि ह्यस्कन्नं तद्व्रतं मम ॥६८
तस्मादष्टाक्षरं मन्त्रं मद्भक्तैर्वीतकल्मषैः ।
सन्ध्याकाले तु जप्तव्यं सततं चात्मशुद्धये ॥६९
अन्येषामपि विप्राणां किल्बिषं हि विनश्यति ।
उभे सन्ध्येप्युपासीत तस्माद्विप्रो विशुद्धये ॥७०
दैवे श्राद्धेपि विप्रः स नियोक्तव्योऽजुगुप्सया ।
जुगुप्सितस्तु यः श्राद्धं दहत्यग्निरिवेन्धनम् ॥७१
भारतं मानवो धर्मो वेदाः साङ्गाश्चिकित्सितम् ।
आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः ७२
न ब्राह्मणान्परीक्षेत दैवे कर्मणि धर्मवित् ।
महान्भवेत्परीवादो ब्राह्मणानां परीक्षणे ॥ ७३
ब्राह्मणानां परीवादं यः कुर्यात्स नराधमः ।
रासभानां शुनां योनिं गच्छेत्पुरुषदूषकः ॥ ७४
श्वत्वं प्राप्नोति निन्दित्वा परीवादात्खरो भवेत् ।
कृमिर्भवत्यभिभवात्कीटो भवति मत्सरात् ॥७५
दुर्वृत्ता वा सुवृत्ता वा प्राकृता वा सुसंस्कृताः ।

ब्राह्मणा नावमन्तव्या भस्मच्छन्ना इवाग्नयः ॥७६
क्षत्रियं चैव सर्पं च ब्राह्मणं च बहुश्रुतम् ।
नावमन्येत मेधावी कृशानपि कदाचन ॥ ७७
एतत्त्रयं हि पुरुषं निर्दहेदवमानितम् ।
तस्मादेतत्प्रयत्नेन नावमन्येत बुद्धिमान् ॥ ७८
यथा सर्वास्ववस्थासु पावको दैवतं महत् ।
तथा सर्वास्ववस्थासु ब्राह्मणो दैवतं महत् ॥ ७९
व्यङ्गाः काणाश्च कुब्जाश्च वामनाङ्गास्तथैव च ।
सर्वे दैवे नियोक्तव्या व्यामिश्रा वेदपारगैः॥८०
मन्युं नोत्पादयेत्तेषां न चारिष्टं समाचरेत् ।
मन्युप्रहरणा विप्रा न विप्राः शस्त्रपाणयः ॥ ८१
मन्युना घ्नन्ति ते शत्रून्वज्रेणेन्द्र इवासुरान् ।
ब्राह्मणो हि महद्दैवं जातिमात्रेण जायते ॥ ८२
ब्राह्मणः सर्वभूतानां धर्मकोशस्य गुप्तये ।
किं पुनर्ये च कौन्तेय सन्ध्यां नित्यमुपासते ८३
यस्यास्येन समश्नन्ति हव्यानि त्रिदिवौकसः ।
कव्यानि चैव पितरः किं भूतमधिकं ततः ॥८४
उत्पत्तिरेव विप्रस्य मूर्तिर्धर्मस्य शाश्वती ।
स हि धर्मार्थमुत्पन्नो ब्रह्मभूयाय कल्पते ॥ ८५
स्वमेव ब्राह्मणो भुङ्क्ते स्वं वस्ते स्वं ददाति च ।
आनृशंस्याद्ब्राह्मणस्य भुञ्जते हीतरे जनाः ।
तस्मात्ते नावमन्तव्या मद्भक्ता हि द्विजाः सदा८६
आरण्यकोपनिषदि ये तु पश्यन्ति मां द्विजाः ।
निगूढं निष्कलावस्थं तान्प्रयत्नेन पूजय ॥ ८७
स्वगृहे वा प्रवासे वा दिवारात्रमथापि वा ।
श्रद्धया ब्राह्मणाः पूज्या मद्भक्ता ये च पाण्डव ८८
नास्ति विप्रसमं दैवं नास्ति विप्रसमो गुरुः ।
नास्ति विप्रात्परो बन्धुर्नास्ति विप्रात्परो निधिः ॥
नास्ति विप्रात्परं तीर्थं न पुण्यं ब्राह्मणात्परम् ।
न पवित्रं परं विप्रान्न द्विजात्पावनं परम् ।
नास्ति विप्रात्परो धर्मो नास्ति विप्रात्परा गतिः ॥
पापकर्मसमाक्षिप्तं पतन्तं नरके नरम् ।
त्रायते पात्रमप्येकं पात्रभूते तु तद्द्विजे ॥ ९१
बालाहिताग्नयो ये च शान्ताः शूद्रान्नवर्जिताः ।
मामर्चयन्ति मद्भक्तास्तेभ्यो दत्तमिहाक्षयम्॥९२
प्रदानैः पूजितो विप्रो वन्दितो वापि संस्कृतः ।
संभाषितो वा दृष्टो वा मद्भक्तो दिवमुन्नयेत् ९३
ये पठन्ति नमस्यन्ति ध्यायन्ति पुरुषास्तु माम् ।
स तान्स्पृष्ट्वा च दृष्ट्वा च नरः पापैः प्रमुच्यते ९४
मद्भक्ता मद्गतप्राणा मद्गीता मत्परायणाः ।
बीजयोनिविशुद्धा ये श्रोत्रियाः संयतेन्द्रियाः ।
शूद्रान्नविरता नित्यं ते पुनन्तीह दर्शनात् ॥९५
स्वयं नीत्वा विशेषेण दानं तेषां गृहेष्वथ ।
निवापयेत्तु यद्भक्त्या तद्दानं कोटिसंमितम् ॥९६
जाग्रतः स्वपतो वापि प्रवासेषु गृहेष्वथ ।
हृदये न प्रणश्यामि यस्य विप्रस्य भावतः ॥९७
स पूजितो वा दृष्टो वा स्पृष्टो वापि द्विजोत्तमः ।
संभाषितो वा राजेन्द्र पुनात्येव नरं सदा ॥९८
एवं सर्वास्ववस्थासु सर्वदानानि पाण्डव ।
मद्भक्तेभ्यः प्रदत्तानि स्वर्गमार्गप्रदानि वै ॥ ९९

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि वैष्णवधर्मपर्वणि अष्टनवतितमोऽध्यायः ॥ ९८ ॥

## एकोनशततमोऽध्यायः ॥ ९९ ॥

कृष्णेन युधिष्ठिरंप्रति बीजयोन्योः शुद्ध्यशुद्धिनिरूपणम् ॥ १ ॥ तथा गायत्रीमहिमानुवर्णनम् ॥ २ ॥ ब्राह्मण्यमहिमप्रशंसनम् । ब्राह्मणावमन्तॄणां नारकयातनानुवर्णनं च ॥ ३ ॥

वैशंपायन उवाच ।
श्रुत्वैवं सात्त्विकं दानं राजसं तामसं तथा ।
पृथक्पृथक्त्वेव गतिं फलं चापि पृथक्पृथक् ॥१
अवितृप्तः प्रहृष्टात्मा पुण्यं धर्मामृतं पुनः ।
युधिष्ठिरो धर्मरतः केशवं पुनरब्रवीत् ॥ २
बीजयोनिविशुद्धानां लक्षणानि वदस्व मे ।
बीजदोषेण लोकेश जायन्ते च कथं नराः ॥ ३
आचारदोषं देवेश वक्तुमर्हस्यशेषतः ।

ब्राह्मणानां विशेषं च गुणदोषौ च केशव ॥ ४
चातुर्वर्ण्यस्य कृत्स्नस्य वर्तमानाः प्रतिग्रहे ।
केन विप्रा विशेषेण तरन्ते तारयन्ति च ।
एतान्कथय देवेश त्वद्भक्तस्य नमोस्तु ते ॥ ५
भगवानुवाच ।
शृणु राजन्यथावृत्तं बीजयोनिं शुभाशुभम् ।
येन तिष्ठति लोकोयं विनश्यति च पाण्डव ॥ ६
अविप्लुतब्रह्मचर्यो यस्तु विप्रो यथाविधि ।
स बीजं नाम विज्ञेयं तस्य बीजं शुभं भवेत् ॥७
कन्या चाक्षतयोनिः स्यात्कुलीना पितृमातृतः ।
ब्राह्मादिषु विवाहेषु परिणीता यथाविधि ।
सा प्रशस्ता वरारोहा तस्या योनिः प्रशस्यते ॥ ८
मनसा कर्मणा वाचा या गच्छेत्परपूरुषम् ।
योनिस्तस्या नरश्रेष्ठ गर्भाधानं न चार्हति ॥ ९
स्वैरिण्या यस्तु पापात्मा संतानार्थमिहेच्छति ।
स कुलान्पातयत्याशु दशपूर्वान्दशापरान् ॥ १०
दुष्टयोनौ तु यो मोहाद्रेतः सिञ्चति मूढधीः ।
तद्रेतसा समुत्पन्नः षडङ्गविदपि द्विजः ।
साधुभिः स बहिष्कार्यः श्वपाक इव पार्थिव॥११
कर्मणा मनसा वाचा या भवेत्स्वैरचारिणी ।
सा कुलघ्नीति विज्ञेया तस्यां जातः श्वपाचकः १२
दैवे पित्र्ये तथा दाने भोजने सहभाषणे ।
शयने सहसंबन्धे न योग्या दुष्टयोनिजाः ॥ १३
न तस्माद्दुष्टयोन्यां तु गर्भमुत्पादयेद्बुधः ।
मोहेन कुरुते यस्तु कुलं हन्ति त्रिपूरुषम् ॥ १४
कानीनश्च सहोढश्च तथोभौ कुण्डगोलकौ ।
आरूढपतिताज्जातः पतितस्यापि यः सुतः ।
षडेते विप्रचण्डाला निकृष्टाः श्वपचादपि ॥ १५
यो यत्र तत्र वा रेतः सिक्त्वा शूद्रासु वा चरेत् ।
कामचारी स पापात्मा बीजं तस्याशुभं भवेत् १६
अशुद्धं तद्भवेद्बीजं शुद्धां योनिं न चार्हति ।
दूषयत्यपि तां योनिं शुना लीढं हविर्यथा ॥ १७
शूद्रयोनौ पतेद्बीजं हाहाशब्दं द्विजन्मनः ।
कुर्यात्पुरीषगर्तेषु पतितोऽस्मीति दुःखितः ॥ १८
मामधःपातयन्नेष पापात्मा काममोहितः ।
अधोगतिं व्रजेत्क्षिप्रमिति शप्त्वा पतेत्तु तत् ॥१९
आत्मा हि शुक्रमुद्दिष्टं दैवतं परमं महत् ।
तस्मात्सर्वप्रयत्नेन निरुन्ध्याच्छुक्रमात्मनः ॥ २०
आयुस्तेजो बलं वीर्यं प्रज्ञा श्रीश्च महद्यशः ।
पुण्यं च मत्प्रियत्वं च लभते ब्रह्मचर्यया ॥ २१
अविप्लुतब्रह्मचर्यैर्गृहस्थाश्रममाश्रितैः ।
पञ्चयज्ञपरैर्धर्मः स्थाप्यते पृथिवीतले ॥ २२
सायंप्रातस्तु ये सन्ध्यां सम्यङ्नित्यमुपासते ।
नावं वेदमयीं कृत्वा तरन्ते तारयन्ति च ॥ २३
यो जपेत्पावनीं देवीं गायत्रीं वेदमातरम् ।
न सीदेत्प्रतिगृह्णानः पृथिवीं च ससागराम् ॥ २४
ये चास्य दुःस्थिताः केचिद्ग्रहाः सूर्यादयो दिवि ।
ते चास्य सौम्या जायन्ते शिवाः शुभकरास्तथा २५
यत्र यत्र स्थिताश्चैव दारुणाः पिशिताशनाः ।
घोररूपा महाकाया धर्षयन्ति न तं द्विजम् ॥ २६
पुनन्तीह पृथिव्यां च चीर्णवेदव्रता नराः ।
चतुर्णामपि वेदानां सा हि राजन्गरीयसी ॥ २७
अचीर्णव्रतवेदा ये विकर्मफलमाश्रिताः ।
ब्राह्मणा नाममात्रेण तेऽपि पूज्या युधिष्ठिर ।
किं पुनर्यस्तु सन्ध्ये द्वे नित्यमेवोपतिष्ठते ॥ २८
शीलमध्ययनं दानं शौचं मार्दवमार्जवम् ।
तस्माद्वेदाद्विशिष्टानि मनुराह प्रजापतिः ॥ २९
भूर्भुवस्स्वरिति ब्रह्म यो वेदनिरतो द्विजः ।
स्वदारनिरतो दान्तः स विद्वान्स च भूसुरः ॥३०
सन्ध्यामुपासते ये वै नित्यमेव द्विजोत्तमाः ।
ते यान्ति नरशार्दूल ब्रह्मलोकं न संशयः ॥ ३१
सावित्रीमात्रसारोपि वरो विप्रः सुयन्त्रितः ।
नायन्त्रितश्चतुर्वेदी सर्वाशी सर्वविक्रयी ॥ ३२
सावित्रीं चैव वेदांश्च तुलयाऽतोलयन्पुरा ।
सदेवर्षिगणाश्चैव सर्वे ब्रह्मपुरस्सराः ।
चतुर्णामपि वेदानां सा हि राजन्गरीयसी ॥३३
यथा विकसिते पुष्पे मधु गृह्णन्ति षट्पदाः ।
एवं गृहीता सावित्री सर्ववेदे च पाण्डव ॥ ३४

तस्मात्तु सर्ववेदानां सावित्री प्राण उच्यते ।
निर्जीवा हीतरे वेदा विना सावित्रिया नृप ॥३५
नायन्त्रितश्चतुर्वेदी शीलभ्रष्टः स कुत्सितः ।
शीलवृत्तसमायुक्तः सावित्रीपाठको वरः ॥ ३६
सहस्रपरमां देवीं शतमध्यां दशावराम् ।
सावित्रीं जप्त्वा कौंतेय सर्वपापप्रणाशिनीम् ॥ ३७
युधिष्ठिर उवाच ।
त्रैलोक्यनाथ हे कृष्ण सर्वभूतात्मको ह्यसि ।
नानायोगपर श्रेष्ठ तुष्यसे केन कर्मणा ॥ ३८
भगवानुवाच ।
यदि भारसहस्रं तु गुग्गुल्वादि प्रधूपयेत् ।
करोति चेन्नमस्कारमुपहारं च कारयेत् ॥ ३९
स्तौति यः स्तुतिभिर्मां च ऋग्यजुस्सामभिः सदा ।
न तोषयति चेद्विप्रान्नाहं तुष्यामि भारत ॥ ४०
ब्राह्मणे पूजिते नित्यं पूजितोस्मि न संशयः ।
आक्रुष्टे चाहमाक्रुष्टो भवामि भरतर्षभ ॥ ४१
परा मयि गतिस्तेषां पूजयन्ति द्विजं हि ये ।
यदहं द्विजरूपेण वसामि वसुधातले ॥ ४२
यस्तान्पूजयति प्राज्ञो मद्गतेनान्तरात्मना ।
तमहं स्वेन रूपेण पश्यामि नरपुङ्गव ॥ ४३
कुब्जाः काणा वामनाश्च दरिद्रा व्याधितास्तथा ।
नावमान्या द्विजाः प्राज्ञैर्मम रूपा हि ते द्विजाः॥
ये केचित्सागरान्तायां पृथिव्यां द्विजसत्तमाः ।
मम रूपं हि तेष्वेवमर्चितेष्वर्चितोऽस्म्यहम्॥४५
बहवस्तु न जानन्ति नरा ज्ञानबहिष्कृताः ।
यदहं द्विजरूपेण वसामि वसुधातले ॥ ४६
अवमन्यन्ति ये विप्रान्स्वधर्मान्पातयन्ति ते ।
प्रेषणैः प्रेषयन्ते च शुश्रूषां कारयन्ति च ॥ ४७
मृतांश्चात्र परत्रेमान्यमदूता महाबलाः ।
निकृन्तन्ति यथाकामं सूत्रमार्गेण शिल्पिनः ४८
आक्रोशपरिवादाभ्यां ये रमन्ते द्विजातिषु ।
तान्मृतान्यमलोकस्थान्निपात्य पृथिवीतले ॥ ४९
आक्रम्योरसि पादेन क्रूरः संरक्तलोचनः ।
अग्निवर्णैस्तु संदंशैर्यमो जिह्वां समुद्धरेत् ॥ ५०
ये च विप्रान्निरीक्षन्ते पापाः पापेन चक्षुषा ।
अब्रह्मण्याः श्रुतेर्बाह्या नित्यं ब्रह्मद्विषो नराः ५१
तेषां घोरा महाकाया वक्रतुण्डा महाबलाः ।
उद्धरन्ति मुहूर्तेन खगाश्चक्षुर्यमाज्ञया ॥ ५२
यः प्रहारं द्विजेन्द्राय दद्यात्कुर्याच्च शोणितम् ।
अस्थिभङ्गं च यः कुर्यात्प्राणैर्वा विप्रयोजयेत् ।
सोनुपूर्व्येण यातीमान्नरकानेकविंशतिम् ॥ ५३
शूलमारोप्यते पश्चाज्ज्वलने परिपच्यते ।
बहुवर्षसहस्राणि पच्यमानस्त्ववाक्शिराः ।
नावमुच्येत दुर्मेधा न तस्य क्षीयते गतिः ॥५४
ब्राह्मणान्वा विचार्यैव व्रजन्वै वधकाङ्क्षया ।
शतवर्षसहस्राणि तामिस्रे परिपच्यते ॥ ५५
उत्पाद्य शोणितं गात्रात्संरंभमतिपूर्वकम् ।
सपर्ययेण यातीमान्नरकानेकविंशतिम् ॥ ५६
तस्मान्नाकुशलं ब्रूयान्न शुष्कां गतिमीरयेत् ।
न ब्रूयात्परुषां वाणीं न चैवैनानतिक्रमेत् ॥५७
ये विप्राञ्श्लक्ष्णया वाचा पूजयन्ति नरोत्तमाः ।
अर्चितश्च स्तुतश्चैव तैर्भवामि न संशयः ॥ ५८
तर्जयन्ति च ये विप्रान्क्रोशयन्ति च भारत ।
आक्रुष्टस्तर्जितश्चाहं तैर्भवामि न संशयः ॥ ५९

यश्चन्दनैश्चागरुधूपदीपै-
रभ्यर्चयेत्काष्ठमयीं ममार्चाम् ।
तेनार्चितो नैव भवामि सम्य-
ग्विप्रार्चनादस्मि समर्चितोऽहम् ॥ ६०

विप्रप्रसादाद्धरणीधरोऽहं
विप्रप्रसादादसुराञ्जयामि ।
विप्रप्रसादाच्च सदक्षिणोऽहं
विप्रप्रसादादजितोऽहमस्मि ॥

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि वैष्णवधर्मपर्वणि एकोनशततमोऽध्यायः ॥ ९९ ॥

## शततमोऽध्यायः ॥ १०० ॥

कृष्णेन युधिष्ठिरंप्रति सुकृतिदुष्कृतिजनप्राप्यवैवस्वतपुरमार्गादिप्रतिपादनपूर्वकं तेषां तद्गमनप्रकारानुवर्णनम् ॥ १ ॥

युधिष्ठिर उवाच ।
देवदेवेश दैत्यघ्न परं कौतूहलं हि मे ।
एतत्कथय सर्वज्ञ त्वद्भक्तस्य च केशव ।
मानुषस्य च लोकस्य धर्मलोकस्य चान्तरम् ॥ १
कीदृशं किंप्रमाणं वा किमधिष्ठानमेव च ।
तरन्ति मानुषा देव केनोपायेन माधव ॥ २
त्वगस्थिमांसनिर्मुक्ते पञ्चभूतविवर्जिते ।
कथयस्व महादेव सुखदुःखमशेषतः ॥ ३
जीवस्य कर्मलोकेषु कर्मभिस्तु शुभाशुभैः ।
अनुबद्धस्य तैः पाशैर्नीयमानस्य दारुणैः ॥ ४
मृत्युदूतैर्दुराधर्षैर्घोरैर्घोरपराक्रमैः ।
वध्यस्याक्षिप्यमाणस्य विद्रुतस्य यमाज्ञया ॥ ५
पुण्यपापकृदातिष्ठेत्सुखदुःखमशेषतः ।
यमदूतैर्दुराधर्षैर्नीयते वा कथं पुनः ।
किं वा तत्र गता देव कर्म कुर्वन्ति मानवाः ॥ ६
कथं धर्मपरा यान्ति देवताद्विजपूजकाः ।
कथं वा पापकर्माणो यान्ति प्रेतपुरं नराः ॥ ७
किं रूपं किं प्रमाणं वा वर्णः को वाऽस्य केशव ।
जीवस्य गच्छतो नित्यं यमलोकं ब्रवीहि मे ॥ ८
भगवानुवाच ।
शृणु राजन्यथावृत्तं यन्मां त्वं परिपृच्छसि ।
तत्तेऽहं कथयिष्यामि मद्भक्तस्य नरेश्वर ॥ ९
षडशीतिसहस्राणि योजनानां युधिष्ठिर ।
मानुष्यस्य च लोकस्य यमलोकस्य चान्तरम् १०
न तत्र वृक्षच्छाया वा न तटाकं सरोपि वा ।
न वाप्यो दीर्घिका वाऽपि न कूपो वा युधिष्ठिर ११
न मण्टपं सभा वाऽपि न प्रपा न निकेतनम् ।
न पर्वतो नदी वाऽपि न भूमेर्विवरं क्वचित् ॥ १२
न ग्रामो नाश्रमो वाऽपि नोद्यानं वा वनानि च ।
न किंचिदाश्रयस्थानं पथि तस्मिन्युधिष्ठिर ॥ १३
जन्तोर्हि प्राप्तकालस्य वेदनार्तस्य वै भृशम् ।
कारणैस्त्यक्तदेहस्य प्राणैः कण्ठगतैः पुनः ॥ १४
शरीराच्चाल्यते जीवो ह्यवशो मातरिश्वना ।
निर्गतो वायुभूतस्तु षट्कोशात्तु कलेवरात् ॥ १५
शरीरमन्यत्तद्रूपं तद्वर्णं तत्प्रमाणतः ।
अदृश्यं तत्प्रविष्टस्तु सोप्यदृष्टोऽथ केनचित् ॥ १६
सोन्तरात्मा देहवतामष्टाङ्गो यस्तु संचरेत् ।
छेदनाद्भेदनाद्दाहात्ताडनाद्वा न नश्यति ॥ १७
नाना रूपधरैर्घोरैः प्रचण्डैश्चण्डसाधनैः ।
नीयमानो दुराधर्षैर्यमदूतैर्यमाज्ञया ॥ १८
पुत्रदारमयैः पाशैः संनिरुद्धोऽवशो बलात् ।
स्वकर्मभिश्चानुगतः कृतैः सुकृतदुष्कृतैः ॥ १९
आक्रन्दमानः करुणं बन्धुभिर्दुःखपीडितैः ।
त्यक्त्वा बन्धुजनं सर्वं निरपेक्षस्तु गच्छति ॥ २०
मातृभिः पितृभिश्चैव भ्रातृभिर्मातुलैस्तथा ।
दारैः पुत्रैर्वयस्यैश्च रुदद्भिस्त्यज्यते पुनः ॥ २१
अदृश्यमानस्तैर्दीनैरश्रुपूर्णमुखेक्षणैः ।
स्वशरीरं परित्यज्य वायुभूतस्तु गच्छति ॥ २२
अन्धकारमपारं तं महाघोरं तमोवृतम् ।
दुःखान्तं दुष्प्रतारं च दुर्गमं पापकर्मणाम् ॥ २३
दुःसहायं दुरन्तं च दुर्निरीक्षं दुरासदम् ।
दुरापमतिदुःखं च पापिष्ठानां नरोत्तम ॥ २४
ऋषिभिः कथ्यमानं तत्पारंपर्येण पार्थिव ।
त्रासं जनयति प्रायः श्रूयमाणं कथास्वपि ॥ २५
अवश्यं चैव गन्तव्यं तदध्वानं युधिष्ठिर ।
प्राप्तकालेन संत्यज्य बन्धून्भोगान्धनानि च २६
जरायुजैरण्डजैश्च स्वेदजैरुद्भिदैस्तथा ।
जङ्गमैः स्थिरसंज्ञैश्च गन्तव्यं यमसादनम् ॥ २७
विस्तरवशानुगैः ।
स्त्रीपुंनपुंसकैश्चापि पृथिव्यां जीवसंज्ञितैः ॥ २८
मध्यमैर्युवभिर्वाऽपि बालैर्वृद्धैस्तथैव च ।
जातमात्रैश्च गर्भस्थैर्गन्तव्यः स महापथः ॥ २९
पूर्वाह्णे वाऽपराह्णे वा सन्ध्याकालेऽथवा पुनः ।
प्रदोषे वाऽर्धरात्रे वा प्रत्यूषे वाऽप्युपस्थिते ॥ ३०

प्रवासस्थैर्वनस्थैर्वा पर्वतस्थैर्जले स्थितैः ।
क्षेत्रस्थैर्वा नभःस्थैर्वा गृहमध्यगतैरपि ॥ ३१
भुञ्जद्भिर्वा पिबद्भिर्वा खादद्भिर्वा नरोत्तम ।
आसीनैर्वा स्थितैर्वापि शयनीयगतैरपि ।
जाग्रद्भिर्वा प्रसुप्तैर्वा गन्तव्यः स महापथः ॥३२
मृत्युदूतैर्दुराधर्षैः प्रचण्डैश्चण्डशासनैः ।
आक्षिप्यमाणा ह्यवशाः प्रयान्ति यमसादनम् ३३
क्वचिद्भीतैः क्वचिन्मत्तैः प्रस्खलद्भिः क्वचित्क्वचित् ।
क्रन्दद्भिर्वेदनार्तैस्तु गन्तव्यं यमसादनम् ॥ ३४
निर्भर्त्स्यमानैरुद्विग्नैर्विधूतैर्भयविह्वलैः ।
तुद्यमानशरीरैश्च गन्तव्यं तर्जितैस्तथा ॥ ३५
कण्टकाकीर्णमार्गेण तप्तवालुकपांसुना ।
दह्यमानैस्तु गन्तव्यं नरैर्दानविवर्जितैः ॥ ३६
काष्ठोपलशिलाघातैर्दण्डोल्मुककशाङ्कुशैः ।
हन्यमानैर्यमपुरं गन्तव्यं धर्मवर्जितैः ॥ ३७
मेदःशोणितपूयाद्यैर्वक्रैर्गात्रैश्च सव्रणैः ।
दग्धक्षतजकीर्णैश्च गन्तव्यं जीवघातकैः ॥ ३८
वेदनार्तैश्च कूजद्भिर्विक्रोशद्भिश्च विस्वरम् ।
वेदनार्तैः पतद्भिश्च गन्तव्यं जीवघातकैः ॥ ३९
भग्नपादोरुहस्ताङ्गैर्भग्नजङ्घाशिरोधरैः ।
छिन्नकर्णोष्ठनासैश्च गन्तव्यं जीवघातकैः ॥ ४०
शक्तिभिर्भिण्डिपालैश्च शङ्कुतोमरसायकैः ।
तुद्यमानैस्तु शूलाग्रैर्गन्तव्यं जीवघातकैः ॥ ४१
श्वभिर्व्याघ्रैर्वृकैः काकैर्भक्ष्यमाणाः समन्ततः ।
तुद्यमानाश्च गच्छन्ति राक्षसैर्मांसघातिभिः ॥४२
महिषैश्च मृगैश्चापि सूकरैः पृषतैस्तथा ।
भक्ष्यमाणैस्तदध्वानं गन्तव्यं मांसखादिभिः ४३
सूचीसुतीक्ष्णतुण्डाभिर्मक्षिकाभिः समन्ततः ।
तुद्यमानैश्च गन्तव्यं पापिष्ठैर्बालघातकैः ॥ ४४
विस्रब्धं स्वामिनं मित्रं स्त्रियं वा घ्नन्ति ये नराः ।
शस्त्रैर्निर्भिद्यमानैश्च गन्तव्यं यमसादनम् ॥ ४५
खादयन्ति च ये जीवान्दुःखमापादयन्ति च ।
राक्षसैश्च श्वभिश्चैव भक्ष्यमाणा व्रजन्ति च ॥४६
ये हरन्ति च वस्त्राणि शय्याः प्रावरणानि च ।
ते यान्ति विद्रुता नग्नाः पिशाचा इव तत्पथं ४७
गाश्च धान्यं हिरण्यं वा बलात्क्षेत्रं गृहं तथा ।
ये हरन्ति दुरात्मानः परस्वं पापकारिणः ॥ ४८
पाषाणैरुल्मुकैर्दण्डैः काष्ठघातैश्च जर्झरैः ।
हन्यमानैः क्षताकीर्णैर्गन्तव्यं तैर्यमालयम् ॥ ४९
ब्रह्मस्वं ये हरन्तीह नरा नरकनिर्भयाः ।
आक्रोशन्तीह ये नित्यं प्रहरन्ति च ये द्विजान् ५०
शुष्ककण्ठा निबद्धास्ते छिन्नजिह्वाक्षिनासिकाः ।
पूयशोणितदुर्गन्धा भक्ष्यमाणाश्च जंबुकैः ॥ ५१
चण्डालैर्भीषणैश्चण्डैस्तुद्यमानाः समन्ततः ।
क्रोशन्तः करुणं घोरं गच्छन्ति यमसादनम् ५२
तत्र चापि गताः पापा विष्ठाकूपेष्वनेकशः ।
जीवन्तो वर्षकोटीस्तु क्लिश्यन्ते वेदनार्दिताः ॥५३
ततश्च मुक्ताः कालेन लोके चास्मिन्नराधमाः ।
विष्ठाक्रिमित्वं गच्छन्ति जन्मकोटिशतं नृप ॥ ५४
विद्यमानधनैर्यैस्तु लोभडंभानृतान्वितैः ।
श्रोत्रियेभ्यो न दत्तानि दानानि कुरुपुङ्गव ॥ ५५
ग्रीवापाशनिबद्धास्ते हन्यमानाश्च राक्षसैः ।
क्षुत्पिपासाश्रमार्तास्तु यान्ति प्रेतपुरं नराः ॥ ५६
अदत्तदाना गच्छन्ति शुष्ककण्ठास्यतालुकाः ।
अन्नं पानीयसहितं प्रार्थयन्तः पुनःपुनः ॥ ५७
स्वामिन्बुभुक्षातृष्णार्ता गन्तुं नैवाद्य शक्नुमः ।
ममान्नं दीयतां स्वामिन्पानीयं दीयतां मम ।
इति ब्रुवन्तस्तैर्दूतैः प्राप्यन्ते वै यमालयम् ॥ ५८
वैशंपायन उवाच ।
तच्छ्रुत्वा वचनं विष्णोः पपात भुवि पाण्डवः ।
निस्संज्ञो भयसंत्रस्तो मूर्छया समभिप्लुतः ॥ ५९
ततो लब्ध्वा शनैः संज्ञां समाश्वस्तोच्युतेन सः ।
नेत्रे प्रक्षाल्य तोयेन भूयः केशवमब्रवीत् ॥ ६०
भीतोस्म्यहं महादेव श्रुत्वा मार्गस्य विस्तरम् ।
केनोपायेन तं मार्गं तरन्ति पुरुषाः सुखम् ॥ ६१
भगवानुवाच ।
इह ये धार्मिका लोके जीवघातविवर्जिताः ।
युक्ता देवब्राह्मणपूजकाः ॥ ६२

अस्मान्मानुष्यलोकात्ते सभार्याः सहबान्धवाः ।
यमध्वानं तु गच्छन्ति यथावत्तं निबोध मे ॥६३
ब्राह्मणेभ्यः प्रदानानि नानारूपाणि पाण्डव ।
ये प्रयच्छन्ति विप्रेभ्यस्ते सुखं यान्ति तत्फलम् ॥
अन्नं ये च प्रयच्छन्ति ब्राह्मणेभ्यः सुसंस्कृतम् ।
श्रोत्रियेभ्यो विशेषेण प्रीत्या परमया युताः ॥६५
ते विमानैर्महात्मानो यान्ति चित्रैर्यमालयम् ।
सेव्यमाना वरस्त्रीभिरप्सरोभिर्महापथम् ॥ ६६
ये च नित्यं प्रभाषन्ते सत्यं निष्कल्मषं वचः ।
ते च यान्त्यमलाभ्राभैर्विमानैर्वृषयोजितैः ॥ ६७
कपिलाद्यानि पुण्यानि गोप्रदानानि ये नराः ।
ब्राह्मणेभ्यः प्रयच्छन्ति श्रोत्रियेभ्यो विशेषतः ६८
ते यान्त्यमलवर्णाभैर्विमानैर्वृषयोजितैः ।
वैवस्वतपुरं प्राप्य ह्यप्सरोभिर्निषेविताः ॥ ६९
उपानहौ च च्छत्रं च शयनान्यासनानि च ।
विप्रेभ्यो ये प्रयच्छन्ति वस्त्राण्याभरणानि च ॥७०
ते यान्त्यश्वैर्वृषैर्वाऽपि कुञ्जरैरप्यलङ्कृताः ।
धर्मराजपुरं रम्यं सौवर्णच्छत्रशोभिताः ॥ ७१
ये च भक्ष्याणि दास्यन्ति भोज्यं पेयं तथैव च ।
स्निग्धान्नान्यपि विप्रेभ्यः श्रद्धया परया युताः ७२
ते यान्ति काञ्चनैर्यानैः सुखं वैवस्वतालयम् ।
वरस्त्रीभिर्यथाकामं सेव्यमानाः सहस्रशः ॥ ७३
ये च क्षीरं प्रयच्छन्ति घृतं दधि गुडं मधु ।
ब्राह्मणेभ्यः प्रयत्नेन श्रद्दधानाः सुसंस्कृताः ॥ ७४
चक्रवाकप्रयुक्तैस्तु यानै रुक्ममयैः शुभैः ।
यान्ति गन्धर्ववादित्रैः सेव्यमाना यमालयम् ७५
ये फलानि प्रयच्छन्ति पुष्पाणि सुरभीणि च ।
हंसयुक्तैर्विमानैस्तु यान्ति धर्मपुरं नराः ॥ ७६
ये प्रयच्छन्ति विप्रेभ्यो विचित्रान्नं घृतप्लुतम् ।
ते व्रजन्त्यमलाभ्राभैर्विमानैर्वायुवेगिभिः ।
पुरं तत्प्रेतनाथस्य नानाजनसमाकुलम् ॥ ७७
पानीयं ये प्रयच्छन्ति सर्वभूतप्रजीवनम् ।
ते सुतृप्ताः सुखं यान्ति भवनैर्हंसनोदितैः ॥ ७८
ये तिलं तिलधेनुं वा घृतधेनुमथापि च ।
श्रोत्रियेभ्यः प्रयच्छन्ति सौम्यभावसमन्विताः ७९
सूर्यमण्डलसंकाशैर्यानैस्ते यान्ति निर्मलैः ।
गीयमानैस्तु गन्धर्वैर्वैवस्वतपुरं नृप ॥ ८०
येषां वाप्यश्च कूपाश्च तटाकानि सरांसि च ।
दीर्घिकाः पुष्करिण्यश्च सजलाश्च जलाशयाः ८१
यानैस्ते यान्ति चन्द्राभैर्दिव्यघण्टानिनादितैः ।
चामरैस्तालवृन्तैश्च वीज्यमाना महाप्रभाः ।
नित्यतृप्ता महात्मानो गच्छन्ति यमसादनम् ८२
येषां देवगृहाणीह चित्राण्यायतनानि च ।
मनोहराणि कान्तानि दर्शनीयानि भान्ति च ८३
ते व्रजन्त्यमलाभ्राभैर्विमानैर्वायुवेगिभिः ।
पुरं तत्प्रेतनाथस्य नानाजनपदाकुलम् ॥ ८४
वैवस्वतं च पश्यन्ति सुखचित्तं सुखस्थितम् ।
यमेन पूजिता यान्ति देवसालोक्यतां ततः ॥८५
देवानुद्दिश्य लोकेषु प्रपासु करकोद्धृतम् ।
शीतलं सलिलं रम्यं तृषितेभ्यो दिशन्ति ये ।
ते तु तृप्तिं परां यान्ति प्राप्य सौख्यं महापथम् ॥८६
काष्ठपादुकदा यान्ति तदध्वानं सुखं नराः ।
सौवर्णमणिपीठे तु पादं कृत्वा रथोत्तमे ॥ ८७
आरामान्वृक्षषण्डांश्च रोपयन्ति च ये नराः ।
संवर्धयन्ति चाव्यग्रं फलपुष्पोपशोभितम् ॥ ८८
वृक्षच्छायासु रम्यासु शीतलासु स्वलङ्कृताः ।
यान्ति ते वाहनैर्दिव्यैः पूज्यमाना मुहुर्मुहुः ८९
सेव्यमानाः सुरूपाभिरुत्तमाभिः प्रयत्नतः ।
स्त्रीभिः कनकवर्णाभिर्यथाकामं यथासुखम् ॥९०
अश्वयानं तु गोयानं हस्तियानमथापि च ।
ये प्रयच्छन्ति विप्रेभ्यो विमानैः कनकोपमैः ॥९१
सुवर्णं रजतं वाऽपि विद्रुमं मौक्तिकं तथा ।
ये प्रयच्छन्ति ते यान्ति विमानैः कनकोज्ज्वलैः ।
ते व्रजन्ति वरस्त्रीभिः सेव्यमाना यथासुखम् ॥९२
भूमिदा यान्ति तं लोकं सर्वकामैः सुतर्पिताः ।
उदितादित्यसंकाशैर्विमानैर्वृषयोजितैः ॥ ९३
कन्यां ये च प्रयच्छन्ति विप्राय श्रोत्रियाय च ।
दिव्यकन्यावृता यान्ति विमानैस्ते यमालयम् ॥९४

सुगन्धान्गन्धसंयोगान्पुष्पाणि सुरभीणि च ।
प्रयच्छन्ति द्विजाग्रेभ्यो भक्त्या परमया युताः ॥९५
सुगन्धाः सुष्ठुवेषाश्च सुप्रभाः स्रग्विभूषणाः ।
यान्ति धर्मपुरं यानैर्विचित्रैरप्यलङ्कृताः ॥ ९६
दीपदा यान्ति यानैश्च द्योतयन्तो दिशो दश ।
आदित्यसदृशाकारैर्दीप्यमाना इवाग्नयः ॥ ९७
गृहावसथदातारो गृहैः काञ्चनवेदिकैः ।
व्रजन्ति बालसूर्याभैर्धर्मराजपुरं नराः ॥ ९८
जलभाजनदातारः कुण्डिकाकरकप्रदाः ।
पूज्यमाना वरस्त्रीभिर्यान्ति तृप्ता महागजैः ॥९९
पादाभ्यङ्गं शिरोभ्यङ्गं पानं पादोदकं तथा ।
ये प्रयच्छन्ति विप्रेभ्यस्ते यान्त्यश्वैर्यमालयम् १००
विश्रामयन्ति ये विप्राञ्श्रान्तानध्वनि कर्शितान् ।
चक्रवाकप्रयुक्तेन यान्ति यानेन तेऽपि च ॥१०१
स्वागतेन च यो विप्रान्पूजयेदासनेन च ।
स गच्छति तदध्वानं सुखं परमनिर्वृतः ॥ १०२
नमो ब्रह्मण्यदेवेति यो मां दृष्ट्वाऽभिवादयेत् ।
व्रतीव प्रयतो नित्यं स सुखं तत्पदं व्रजेत् १०३
नमः 'सर्वसहाभ्यश्चेत्यभिख्याय' दिनेदिने ।
नमस्करोति नित्यं गां स सुखं याति तत्पथं१०४
नमोस्तु प्रियदत्तायेत्येवंवादी दिनेदिने ।
भूमिमाक्रमते प्रातः शयनादुत्थितश्च यः ॥१०५
सर्वकामैः स तृप्तात्मा सर्वभूषणभूषितः ।
याति यानेन दिव्येन सुखं वैवस्वतालयम् १०६
अनन्तराशिनो ये तु डंभानृतविवर्जिताः ।
तेऽपि सारसयुक्तेन यान्ति यानेन वै सुखम् ॥१०७
ये चाप्येकेन भुक्तेन डंभानृतविवर्जिताः ।
हंसयुक्तैर्विमानैस्तु सुखं यान्ति यमालयम् १०८
चतुर्थेन च भुक्तेन वर्तन्ते ये जितेन्द्रियाः ।
यान्ति ते धर्मनगरं यानैर्बर्हिणयोजितैः ॥ १०९
तृतीयदिवसेनेह भुञ्जते ये जितेन्द्रियाः ।
तेऽपि हस्तिरथं यान्ति तत्पथं कनकोज्वलैः ११०
षष्ठान्नकालिको यस्तु वर्षमेकं तु वर्तते ।
कामक्रोधविनिर्मुक्तः शुचिर्नित्यं जितेन्द्रियः ।
स याति कुञ्जरस्थैस्तु जयशब्दरवैर्युतः ॥ १११
पक्षोपवासिनो यान्ति यानैः शार्दूलयोजितैः ।
धर्मराजपुरं रम्यं दिव्यस्त्रीगणसेवितम् ॥ ११२
ये च मासोपवासं वै कुर्वते संयतेन्द्रियाः ।
तेऽपि सूर्योदयप्रख्यैर्यान्ति यानैर्यमालयम् ११३
अग्निप्रवेशं यश्चापि कुरुते मद्गतात्मना ।
स यात्यग्निप्रकाशेन विमानेन यमालयम् ॥११४
गोकृते स्त्रीकृते चैव हत्वा विप्रकृतेऽपि च ।
ते यान्त्यमरकन्याभिः सेव्यमाना रविप्रभाः ११५
ये च कुर्वन्ति मद्भक्तास्तीर्थयात्रां जितेन्द्रियाः ।
ते पन्थानं महात्मानो यानैर्यान्ति सुनिर्वृताः ॥
ये यजन्ति द्विजश्रेष्ठाः क्रतुभिर्भूरिदक्षिणैः ।
हंससारससंयुक्तैर्यानैस्ते यान्ति तत्पथम् ॥ ११७
परपीडामकृत्वैव भृत्यान्बिभ्रति ये नराः ।
तत्पथं ससुखं यान्ति विमानैः काञ्चनोज्वलैः ॥
ये समाः सर्वभूतेषु जीवानामभयप्रदाः ।
क्रोधलोभविनिर्मुक्ता निगृहीतेन्द्रियास्तथा ११९
पूर्णचन्द्रप्रतीकाशैर्विमानैस्ते महाप्रभाः ।
यान्ति वैवस्वतपुरं देवगन्धर्वसेविताः ॥ १२०
ये मामेकान्तभावेन देवं त्र्यंबकमेव वा ।
पूजयन्ति नमस्यन्ति स्तुवन्ति च दिनेदिने ।
धर्मराजपुरं यान्ति यानैस्तेऽर्कसमप्रभैः ॥ १२१
पूजितास्तत्र धर्मेण स्वयं माल्यादिभिः शुभैः ।
यान्त्येव धर्मलोकं वा रुद्रलोकमथापि वा १२२

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि वैष्णवधर्मपर्वणि शततमोऽध्यायः ॥ १०० ॥

## एकाधिकशततमोऽध्यायः ॥ १०१ ॥

कृष्णेन युधिष्ठिरंप्रति जलदानान्नदानफलप्रशंसनम् ॥ १ ॥ तथाऽतिथिलक्षणकथनपूर्वकं तत्पूजाफलकथनम् ॥ २ ॥

वैशंपायन उवाच ।
श्रुत्वा यमपुराध्वानं जीवानां गमनं तथा ।
धर्मपुत्रः प्रहृष्टात्मा केशवं पुनरब्रवीत् ॥ १
देवदेवेश दैत्यघ्न ऋषिसङ्घैरभिष्टुत ।
भगवन्भवहञ्श्रीमन्सहस्रादित्यसन्निभ ॥ २
सर्वसंभव धर्मज्ञ सर्वधर्मप्रवर्तक ।
सर्वदानफलं सौम्य कथयस्व ममाच्युत ॥ ३
दानं देयं कथं कृष्ण कीदृशाय द्विजाय वै ।
कीदृशं वा तपः कृत्वा तत्फलं कुत्र भुज्यते ॥४
एवमुक्तो हृषीकेशो धर्मपुत्रेण धीमता ।
उवाच धर्मपुत्राय पुण्यान्धर्मान्महोदयान् ॥ ५
शृणुष्वावहितो राजन्पूतं पापघ्नमुत्तमम् ।
सर्वदानफलं सौम्य न श्राव्यं पापकर्मणाम् ॥ ६
यच्छ्रुत्वा पुरुषः स्त्री वा नष्टपापः समाहितः ।
तत्क्षणात्पूततां याति पापकर्मरतोपि वा ॥ ७
एकाहमपि कौन्तेय भूमावुत्पादितं जलम् ।
सप्त तारयते पूर्वान्वितृष्णा यत्र गौर्भवेत् ॥ ८
पानीयं परमं लोके जीवानां जीवनं स्मृतम् ।
पानीयस्य प्रदानेन तृप्तिर्भवति पाण्डव ।
पानीयस्य गुणा दिव्याः परलोके गुणावहाः ॥९
तत्र पुष्पोदकी नाम नदी परमपावनी ।
कामान्ददाति राजेन्द्र तोयदानां यमालये ॥१०
शीतलं सलिलं ह्यत्र ह्यक्षय्यममृतोपमम् ।
शीततोयप्रदातॄणां भवेन्नित्यं सुखावहम् ॥ ११
ये चाप्यतोयदातारः पूयस्तेषां विधीयते ॥ १२
प्रणश्यत्यंबुपानेन बुभुक्षा च युधिष्ठिर ।
तृषितस्य न चान्नेन पिपासाऽपि प्रणश्यति ।
तस्मात्तोयं सदा देयं तृषितेभ्यो विजानता ॥१३
अग्नेर्मूर्तिः क्षितेर्योनिरमृतस्य च संभवः ।
अतोंभः सर्वभूतानां मूलमित्युच्यते बुधैः ॥ १४
अद्भिः सर्वाणि भूतानि जीवन्ति प्रभवन्ति च ।
तस्मात्सर्वेषु दानेषु तोयदानं विशिष्यते ॥ १५
सर्वदानतपोयज्ञैर्यत्प्राप्यं फलमुत्तमम् ।
तत्सर्वं तोयदानेन प्राप्यते नात्र संशयः ॥ १६
ये प्रयच्छन्ति विप्रेभ्यस्त्वन्नदानं सुसंस्कृतम् ।
तैस्तु दत्ताः स्वयं प्राणा भवन्ति भरतर्षभ ॥ १७
अन्नाद्रक्तं च शुक्लं च अन्ने जीवः प्रतिष्ठितः ।
इन्द्रियाणि च बुद्धिश्च पुष्णन्त्यन्नेन नित्यशः ।
अन्नहीनानि सीदन्ति सर्वभूतानि पाण्डव ॥ १८
तेजो बलं च रूपं च सत्वं वीर्यं धृतिर्द्युतिः ।
ज्ञानं मेधा तथाऽऽयुश्च सर्वमन्ने प्रतिष्ठितम् ॥ १९
देवमानवतिर्यक्षु सर्वलोकेषु सर्वदा ।
सर्वकालं हि सर्वेषां सर्वमन्ने प्रतिष्ठितम् ॥ २०
अन्नं प्रजापते रूपमन्नं प्रजननं स्मृतम् ।
सर्वभूतमयं चान्नं जीवश्चान्नमयः स्मृतः ॥ २१
अन्नेनाधिष्ठितः प्राण अपानो व्यान एव च ।
उदानश्च समानश्च धारयन्ति शरीरिणम् ॥ २२
शयनोत्थानगमनग्रहणाकर्षणानि च ।
सर्वसत्वकृतं कर्म चान्नादेव प्रवर्तते ॥ २३
चतुर्विधानि भूतानि जङ्गमानि स्थिराणि च
अन्नाद्भवन्ति राजेन्द्र सृष्टिरेषा प्रजापतेः ॥ २४
विद्यास्थानानि सर्वाणि सर्वयज्ञाश्च पावनाः ।
अन्नाद्यस्मात्प्रवर्तन्ते तस्मादन्नं परं स्मृतम् ॥ २५
देवा रुद्रादयः सर्वे पितरोऽप्यग्नयस्तथा ।
यस्मादन्नेन तुष्यन्ति तस्मादन्नं विशिष्यते ॥ २६
यस्मादन्नात्प्रजाः सर्वाः कल्पेकल्पेऽसृजत्प्रभुः ।
तस्मादन्नात्परं दानं न भूतं न भविष्यति ॥ २७
यस्मादन्नात्प्रवर्तन्ते धर्मार्थौ काम एव च ।
तस्मादन्नात्परं दानं नामुत्रेह च पाण्डव ॥ २८
यक्षरक्षोग्रहा नागा भूतान्यन्ये च दानवाः ।
तुष्यन्त्यन्नेन यस्मात्तु तस्मादन्नं परं भवेत् ॥ २९
परान्नमुपभुञ्जानो यत्कर्म कुरुते शुभम् ।
तच्छुभस्यैकभागस्तु कर्तुर्भवति भारत ॥ ३०
अन्नदस्य त्रयो भागा भवन्ति पुरुषर्षभ ।

तस्मादन्नं प्रदातव्यं ब्राह्मणेभ्यो विशेषतः ॥ ३१
ब्राह्मणाय दरिद्राय योऽन्नं संवत्सरं नृप ।
श्रोत्रियाय प्रयच्छेद्वै पाकभेदविवर्जितः ॥ ३२
डंभानृतविमुक्तस्तु परां भक्तिमुपागतः ।
स्वधर्मेणार्जितफलं तस्य पुण्यफलं शृणु ॥ ३३
शतवर्षसहस्राणि कामगः कामरूपधृत् ।
मोदतेऽमरलोकस्थः पूज्यमानोप्सरोगणैः ।
ततश्चापि च्युतः कालान्नरलोके द्विजो भवेत् ॥३४
अग्रभिक्षां च यो दद्यादरिद्राय द्विजातये ।
षण्मासान्वार्षिकं श्राद्धं तस्य पुण्यफलं शृणु ॥ ३५
गोसहस्रप्रदानेन यत्पुण्यं समुदाहृतम् ।
तत्पुण्यफलमाप्नोति नरो वै नात्र संशयः ॥ ३६
अथ संवत्सरं दद्यादग्रभिक्षामयाचते ।
प्रच्छाद्यैव स्वयं नीत्वा तस्य पुण्यफलं शृणु ॥ ३७
कपिलानां सहस्रैस्तु यद्देयं पुण्यमुच्यते ।
तत्सर्वमखिलं प्राप्य शक्रलोके महीयते ॥ ३८
स शक्रभवने रम्ये वर्षकोटिशतं नृप ।
यथाकामं महातेजाः क्रीडत्यप्सरसांगणैः ॥ ३९
अन्नं च यस्तु वै दद्याद्द्विजाय नियतव्रतः ।
दशवर्षाणि राजेन्द्र तस्य पुण्यफलं शृणु ॥ ४०
कपिला शतसहस्रस्य विधिदत्तस्य यत्फलम् ।
तत्पुण्यफलमासाद्य पुरन्दरपुरं व्रजेत् ॥ ४१
स शक्रभवने रम्ये कामरूपी यथासुखम् ।
शतकोटिसमा राजन्क्रीडतेऽमरपूजितः ॥ ४२
शक्रलोकावतीर्णश्च इह लोके महाद्युतिः ।
चतुर्वेदी द्विजः श्रीमाञ्जायते राजपूजितः ॥ ४३
अध्वश्रान्ताय विप्राय क्षुधितायान्नकाङ्क्षिणे ।
देशकालाभियाताय दीयते पाण्डुनन्दन ॥ ४४
याचतेऽन्नं न दद्याद्यो विद्यमाने धनागमे ।
स लुब्धो नरकं याति कृमीणां कालसूत्रकम् ४५
स तत्र नरके घोरे लोभमोहविचेतनः ।
दशवर्षसहस्राणि क्लिश्यते वेदनार्दितः ॥ ४६
तस्माच्च नरकान्मुक्तः कालेन महता हि सः ।
दरिद्रो मानुषे लोके चण्डालेष्वपि जायते ॥ ४७
यस्तु पांसुलपादश्च दूराध्वश्रमकर्शितः ।
क्षुत्पिपासाश्रमश्रान्त आर्तः खिन्नगतिर्द्विजः ४८
पृच्छन्वै ह्यन्नदातारं गृहमभ्येत्य याचयेत् ।
तं पूजयेत्तु यत्नेन सोऽतिथिः स्वर्गसंक्रमः ।
तस्मिंस्तुष्टे नरश्रेष्ठ तुष्टाः स्युः सर्वदेवताः ॥ ४९
न तथा हविषा होमैर्न पुष्पैर्नानुलेपनैः ।
अग्नयः पार्थ तुष्यन्ति यथा ह्यतिथिपूजनात् ५०
कपिलायां तु दत्तायां विधिवज्ज्येष्ठपुष्करे ।
न तत्फलमवाप्नोति यत्फलं विप्रभोजनात् ॥५१
द्विजपादोदकक्लिन्ना यावत्तिष्ठति मेदिनी ।
तावत्पुष्करपत्रेण पिबन्ति पितरो जलम् ॥ ५२
देवमाल्यापनयनं द्विजोच्छिष्टापमार्जनम् ।
श्रान्तसंवाहनं चैव तथा पादावसेचनम् ॥ ५३
प्रतिश्रयप्रदानं च तथा शय्यासनस्य च ।
एकैकं पाण्डवश्रेष्ठ गोप्रदानाद्विशिष्यते ॥ ५४
पादोदकं पादघृतं दीपमन्नं प्रतिश्रयम् ।
ये प्रयच्छन्ति विप्रेभ्यो नोपसर्पन्ति ते यमम् ५५
विप्रातिथ्ये कृते राजन्भक्त्या शुश्रूषितेऽपि च ।
देवाः शुश्रूषिताः सर्वे त्रयस्त्रिंशदरिन्दम ॥ ५६
अभ्यागतो ज्ञातपूर्वो ह्यज्ञातोऽतिथिरुच्यते ।
तयोः पूजां द्विजः कुर्यादिति पौराणिकी श्रुतिः ॥
पादाभ्यङ्गान्नपानैस्तु योऽतिथिं पूजयेन्नरः ।
पूजितस्तेन राजेन्द्र भवामीह न संशयः ॥ ५८
शीघ्रं पापाद्विनिर्मुक्तो मया चानुग्रहीकृतः ।
विमानेनेन्दुकल्पेन मम लोकं स गच्छति ॥ ५९

अभ्यागतं श्रान्तमनुव्रजन्ति
देवाश्च सर्वे पितरोऽग्नयश्च ।
तस्मिन्द्विजे पूजिते पूजिताः स्यु-
र्गते निराशाः पितरो व्रजन्ति ॥ ६०

अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्तते ।
पितरस्तस्य नाश्नन्ति दशवर्षाणि पञ्च च ॥ ६१
वर्जितः पितृभिर्लुब्धः स देवैरग्निभिः सह ।
निरयं रौरवं गत्वा दशवर्षाणि पञ्च च ।
ततश्चापि च्युतः कालादिह चोच्छिष्टभुग्भवेत् ६२

वैश्वदेवान्तिके प्राप्तमतिथिं यो न पूजयेत् ।
चण्डालत्वमवाप्नोति सद्य एव न संशयः ॥ ६३
निर्वासयति यो विप्रं देशकालागतं गृहात् ।
पतितस्तत्क्षणादेव जायते नात्र संशयः ॥ ६४
नरके रौरवे घोरे वर्षकोटिं स पच्यते ।
ततश्चापि च्युतः कालादिह लोके नराधमः ।
श्वा वै द्वादशजन्मानि जायते क्षुत्पिपासितः ६५
चण्डालोऽप्यतिथिः प्राप्तो देशकालेऽन्नकाङ्क्षया ।
अभ्युद्गम्यो गृहस्थेन पूजनीयश्च सर्वदा ॥ ६६
अनर्चयित्वा योऽश्नाति लोभमोहविचेतनः ।
स चण्डालत्वमापन्नो दश जन्मानि पाण्डव ६७
निराशमतिथिं कृत्वा भुञ्जानो यः प्रहृष्टवान् ।
न जानाति किलात्मानं विष्ठाकूपे निपातितं ६८
मोघं ध्रुवं प्रोर्णयति मोघमस्य तु पच्यते ।
मोघमन्नं सदाऽश्नाति योतिथिं न च पूजयेत् ६९
साङ्गोपाङ्गांस्तु यो वेदान्पठतीह दिनेदिने ।
न चातिथिं पूजयति वृथा भवति स द्विजः ॥ ७०
पाकयज्ञमहायज्ञैः सोमसंस्थाभिरेव च ।
ये यजन्ति न चार्चन्ति गृहेष्वतिथिमागतम् ॥७१
तेषां यशोभिकामानां दत्तमिष्टं च यद्भवेत् ।
वृथा भवति तत्सर्वमाशया हि तया हतम् ॥ ७२
देशं कालं च पात्रं च स्वशक्तिं च निरीक्ष्य च ।
अल्पं समं महद्वापि कुर्यादातिथ्यमात्मवान् ॥ ७३
सुमुखः सुप्रसन्नात्मा धीमानतिथिमागतम् ।
स्वागतेनासनेनाद्भिरन्नाद्येन च पूजयेत् ॥ ७४
हितः प्रियो वा द्वेष्यो वा मूर्खः पण्डित एव वा ।
प्राप्तो यो वैश्वदेवान्ते सोतिथिः स्वर्गसंक्रमः ॥ ७५
क्षुत्पिपासाश्रमार्ताय देशकालगताय च ।
सत्कृत्यान्नं प्रदातव्यं यज्ञस्य फलमिच्छता ॥ ७६
भोजयेदात्मनः श्रेष्ठान्विधिवद्धव्यकव्ययोः ।
अन्नं प्राणो मनुष्याणामन्नदः प्राणदो भवेत् ।
तस्मादन्नं विशेषेण दातव्यं भूतिमिच्छता ॥ ७७
अन्नदः सर्वकामैस्तु सुतृप्तः सुष्ठ्वलङ्कृतः ।
पूर्णचन्द्रप्रकाशेन विमानेन विराजते ॥ ७८
सेव्यमानो वरस्त्रीभिर्मम लोकं स गच्छति ।
क्रीडित्वा तु ततस्तस्मिन्वर्षकोटिं यथाऽमरः ॥७९
ततश्चापि च्युतः कालादिह लोके महायशाः ।
वेदशास्त्रार्थतत्वज्ञो भोगवान्ब्राह्मणो भवेत् ॥ ८०
यथाश्रद्धं तु यः कुर्यान्मनुष्येषु प्रजायते ।
महाधनपतिः श्रीमान्वेदवेदाङ्गपारगः ।
सर्वशास्त्रार्थतत्वज्ञो भोगवान्ब्राह्मणो भवेत् ॥ ८१
सर्वातिथ्यं तु यः कुर्याद्वर्षमेकमकल्मषः ।
धर्मार्जितधनो भूत्वा पाकभेदविवर्जितः ॥ ८२
देवानिव स्वयं विप्रानर्चयित्वा पितॄनपि ।
विप्रानग्राशनाशी यस्तस्य पुण्यफलं शृणु ॥ ८३
वर्षेणैकेन यावन्ति पिण्डान्यश्नन्ति ये द्विजाः ।
तावद्वर्षाणि राजेन्द्र मम लोके महीयते ॥ ८४
ततश्चापि च्युतः कालादिह लोके महायशाः ।
वेदशास्त्रार्थतत्वज्ञो भोगवान्ब्राह्मणो भवेत् ॥ ८५
सर्वातिथ्यं तु यः कुर्याद्यथाश्रद्धं नरेश्वर ।
अकालनियमेनापि सत्यवादी जितेन्द्रियः ॥ ८६
सत्यसन्धो जितक्रोधः शाखाधर्मविवर्जितः ।
अधर्मभीरुर्धर्मिष्ठो मायामात्सर्यवर्जितः ॥ ८७
श्रद्दधानः शुचिर्नित्यं पाकभेदविवर्जितः ।
स विमानेन दिव्येन दिव्यरूपी महायशाः ॥ ८८
पुरन्दरपुरं याति गीयमानोप्सरोगणैः ।
मन्वन्तरं तु तत्रैव क्रीडित्वा देवपूजितः ।
मानुष्यलोकमागम्य भोगवान्ब्राह्मणो भवेत् ॥८
दशजन्मानि विप्रत्वमाप्नुयाद्राजपूजितः ।
जातिस्मरश्च भवति यत्रयत्रोपजायते ॥ ९

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि वैष्णवधर्मपर्वणि एकाधिकशततमोऽध्यायः ॥ १०१ ॥

## अधिकशततमोऽध्यायः ॥ १०२ ॥

कृष्णेन युधिष्ठिरंप्रति भूगोतिलकन्यादानफलप्रतिपादनम् ॥ १ ॥

भगवानुवाच ।
अतः परं प्रवक्ष्यामि भूमिदानमनुत्तमम् ॥ १
यः प्रयच्छति विप्राय भूमिं रम्यां सदक्षिणाम् ।
श्रोत्रियाय दरिद्राय साग्निहोत्राय पाण्डव ॥ २
स सर्वकामतृप्तात्मा सर्वरत्नविभूषितः ।
सर्वपापविनिर्मुक्तो दीप्यमानोऽर्कवत्सदा ॥ ३
बालसूर्यप्रकाशेन विचित्रध्वजशोभिना ।
याति यानेन दिव्येन मम लोकं महायशाः ॥ ४
तत्र दिव्याङ्गनाभिस्तु सेव्यमानो यथासुखम् ।
कामगः कामरूपी च क्रीडत्यप्सरसांगणैः ॥ ५
यावद्बिभर्ति लोकान्वै भूमिः कुरुकुलोद्वह ।
तावद्भूमिप्रदः काले मम लोके महीयते ॥ ६
न हि भूमिप्रदानाद्वै दानमन्यद्विशिष्यते ।
न चापि भूमिहरणात्पापमन्यद्विशिष्यते ॥ ७
दानान्यन्यानि हीयन्ते कालेन कुरुपुङ्गव ।
भूमिदानस्य पुण्यस्य क्षयो नैवोपपद्यते ॥ ८
ब्राह्मणाय दरिद्राय भूमिं दत्त्वा तु यो नरः ।
न हिंसति नरव्याघ्र तस्य पुण्यफलं शृणु ॥ ९
सप्तद्वीपसमुद्रान्ता रत्नसंचयसंकुला ।
सशैलवनदुर्गाढ्या तेन दत्ता मही भवेत् ॥ १०
भूमिं दृष्ट्वा दीयमानां श्रोत्रियायाग्निहोत्रिणे ।
सर्वभूतानि मन्यन्ते मां ददातीति हर्षवत् ॥ ११
सुवर्णमणिरत्नानि धनानि च वसूनि च ।
सर्वदानानि वै राजन्ददाति वसुधां ददत् ॥ १२
सागरान्सरितः शैलान्समानि विषमाणि च ।
सर्वगन्धरसांश्चैव ददाति वसुधां ददत् ॥ १३
ओषधीः फलसंपन्ना नानापुष्पसमन्विताः ।
कमलोत्पलषण्डांश्च ददाति वसुधां ददत् ॥ १४
धर्मं कामं तथा चार्थं वेदान्यज्ञांस्तथैव च ।
स्वर्गमार्गगतिं चैव ददाति वसुधां ददत् ॥ १५
अग्निष्टोमादिभिर्यज्ञैर्ये यजन्ते सदक्षिणैः ।
न तत्फलं लभन्ते ते भूमिदानस्य यत्फलम् १६
श्रोत्रियाय महीं दत्त्वा यो न हिंसति पाण्डव ।
तद्दानं कथयिष्यन्ति यावल्लोकाः प्रतिष्ठिताः ।
तावत्स्वर्गोपभोगानां भोक्तारः पाण्डुनन्दन १७
सस्यपूर्णां महीं यस्तु श्रोत्रियाय प्रयच्छति ।
पितरस्तस्य तृप्यन्ति यावदाभूतसंप्लवम् ॥ १८
मम रुद्रस्य सवितुस्त्रिदशानां तथैव च ।
प्रीतये विद्धि राजेन्द्र भूमिर्दत्ता द्विजाय वै ॥ १९
तेन पुण्येन पूतात्मा दाता भूमेर्युधिष्ठिर ।
मम सालोक्यमाप्नोति नात्र कार्या विचारणा २०
यत्किंचित्कुरुते पापं पुरुषो वृत्तिकर्शितः ।
स च गोकर्णमात्रेण भूमिदानेन शुध्यति ॥ २१
मासोपवासे यत्पुण्यं कृच्छ्रे चान्द्रायणेऽपि च ।
भूमिगोकर्णमात्रेण तत्पुण्यं तु विधीयते ॥ २२
सर्वतीर्थाभिषेके च यत्पुण्यं समुदाहृतम् ।
भूमिगोकर्णमात्रेण तत्पुण्यं तु विधीयते ॥ २३
युधिष्ठिर उवाच ।
देवदेव नमस्तेऽस्तु वासुदेव सुरेश्वर ।
गोकर्णस्य प्रमाणं वै वक्तुमर्हसि तत्वतः ॥ २४
भगवानुवाच ।
शृणु गोकर्णमात्रस्य प्रमाणं पाण्डुनन्दन ।
त्रिंशद्दण्डप्रमाणेन प्रमितं सर्वतो दिशम् ॥ २५
प्रत्यक्प्रागपि राजेन्द्र तत्तथा दक्षिणोत्तरम् ।
गोकर्णं तद्विदः प्राहुः प्रमाणं धरणेर्नृप ॥ २६
सवृषं गोशतं यत्र सुखं तिष्ठत्ययन्त्रितम् ।
सवत्सं कुरुशार्दूल तच्च गोकर्णमुच्यते ॥ २७
किंकरा मृत्युदण्डाश्च कुंभीपाकाश्च दारुणाः ।
घोराश्च वारुणाः पाशा नोपसर्पन्ति भूमिदम् २८
निरया रौरवाद्याश्च तथा वैतरणी नदी ।
तीव्राश्च यातनाः कष्टा नोपसर्पन्ति भूमिदम् ॥ २९
चित्रगुप्तः कलिः कालः कृतान्तो मृत्युरेव च ।
यमश्च भगवान्साक्षात्पूजयन्ति महीप्रदम् ॥ ३०
रुद्रः प्रजापतिः शक्रः सुरा ऋषिगणास्तथा ।

अहं च प्रीतिमान्राजन्पूजयामो महीप्रदम् ॥३१
कृशभृत्यस्य कृशगोः कृशाश्वस्य कृतातिथेः ।
भूमिर्देया नरश्रेष्ठ स निधिः पारलौकिकः ॥३२
सीदमानकुटुंबाय श्रोत्रियायाग्निहोत्रिणे ।
व्रतस्थाय दरिद्राय भूमिर्देया नराधिप ॥ ३३
यथा हि धात्री क्षीरेण पुत्रं वर्धयति स्वयम् ।
दातारमनुगृह्णाति दत्ता ह्येवं वसुंधरा ॥ ३४
यथा बिभर्ति गौर्वत्सं सृजन्ती क्षीरमात्मनः ।
तथा सर्वगुणोपेता भूमिर्वहति भूमिदम् ॥ ३५
यथा बीजानि रोहन्ति जलसिक्तानि भूपते ।
तथा कामाः प्ररोहन्ति भूमिदस्य दिनेदिने ॥३६
यथा तेजस्तु सूर्यस्य तमः सर्वं व्यपोहति ।
तथा पापं नरस्येह भूमिदानं व्यपोहति ॥ ३७
दाता दशानुगृह्णाति यो हरेद्दश हन्ति च ।
अतीतान्यागतानीह कुलानि कुरुपुङ्गव ॥ ३८
आश्रुत्य भूमिदानं तु दत्त्वा यो वा हरेत्पुनः
स बद्धो वारुणैः पाशैः क्षिप्यते पूयशोणिते ॥३९
स्वदत्तां परदत्तां वा यो हरेत वसुंधराम् ।
न तस्य नरकाद्घोराद्विद्यते निष्कृतिः क्वचित् ४०
ब्राह्मणस्य हन्याद्द्वादश पूर्वजान् ।
स गच्छेत्कृमियोनिं च न च मुच्येत जातु सः ॥४१
दत्त्वा भूमिं द्विजेन्द्राय यस्तामेवोपजीवति ।
गवां शतसहस्रस्य हन्तुः स लभते फलम् ॥ ४२
सोधश्शिरास्तु पापात्मा कुंभीपाकेषु पच्यते ।
दिव्यैर्वर्षसहस्रैस्तु कुंभीपाकाद्विनिस्सृतः ।
इह लोके भवेत्स श्वा शतजन्मनि पाण्डव ॥ ४३
दत्त्वा भूमिं द्विजेन्द्राणां यस्तामेवोपजीवति ।
स मूढो याति दुष्टात्मा नरकानेकविंशतिम् ।
नरकेभ्यो विनिर्मुक्तः शुनां योनिं स गच्छति ४४
हलकृष्टा मही देया सबीजा सस्यमालिनी ।
अथवा सोदका देया दरिद्राय द्विजातये ॥ ४५
एवं दत्ता मही राजन्प्रहृष्टेनान्तरात्मना ।
सर्वान्कामानवाप्नोति मनसा चिन्तितानि च ४६
बहुभिर्वसुधा दत्ता दीयते च नराधिपैः ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥ ४७
यः प्रयच्छति कन्यां वै सुरूपां श्रोत्रियाय वै ।
स ब्रह्मदेयो राजेन्द्र तस्य पुण्यफलं शृणु ॥ ४८
बलीवर्दसहस्राणां दत्तानां धुर्यवाहिनाम् ।
यत्पुण्यं लभते राजन्कन्यादानेन तत्फलम् ॥ ४९
गवां शतसहस्रस्य सम्यग्दत्तस्य यत्फलम् ।
तत्फलं समवाप्नोति यः प्रयच्छति कन्यकाम् ॥ ५०
यावन्ति चैव रोमाणि कन्यायाः कुरुपुङ्गव ।
तावद्वर्षसहस्राणि मम लोके महीयते ॥ ५१
ततश्चापि च्युतः कालादिह लोके स जायते ।
षडङ्गविच्चतुर्वेदी सर्वलोकार्चितो द्विजः ॥ ५२
यः सुवर्णं दरिद्राय ब्राह्मणाय प्रयच्छति ।
श्रोत्रियाय सुवृत्ताय बहुपुत्राय पाण्डव ॥ ५३
स मुक्तः सर्वपापेभ्यो बालसूर्यसमप्रभः ।
विमानं दिव्यमारूढः कामगः कामभोगवान् ।
वर्षकोटिं महातेजा मम लोके महीयते ॥ ५४
ततः कालावतीर्णश्च सोस्मिँल्लोके हि जायते ।
वेदवेदाङ्गविद्विप्रः कोटीधनपतिर्भवेत् ॥ ५५
यश्च रूप्यं प्रयच्छेद्वै दरिद्राय द्विजातये ।
कृशवृत्तेः कृशगवे स मुक्तः सर्वकिल्बिषैः ॥ ५६
पूर्णचन्द्रप्रकाशेन विमानेन विराजता ।
कामरूपी यथाकामं स्वर्गलोके महीयते ॥ ५७
ततोऽवतीर्णः कालेन लोके चास्मिन्महायशाः ।
सर्वलोकार्चितः श्रीमान्राजा भवति वीर्यवान् ५८
तिलपर्वतकं यस्तु श्रोत्रियाय प्रयच्छति ।
विशेषेण दरिद्राय तस्यापि शृणु यत्फलम् ॥ ५९
पुण्यं वृषायुतोत्सर्गे यत्प्रोक्तं पाण्डुनन्दन ।
तत्पुण्यं समनुप्राप्य तत्क्षणाद्विरजा भवेत् ॥ ६०
यथा त्वचं भुजङ्गो वै त्यक्त्वा शुद्धतनुर्भवेत् ।
तथा तिलप्रदानाद्वै पापं त्यक्त्वा विशुध्यति ॥६१
तिलषण्डं प्रयुञ्जानो जांबूनदविभूषितम् ।
विमानं दिव्यमारूढः पितृलोके महीयते ॥ ६२

कृशातिथेरिति थ. पाठः ॥ ३२ ॥

कृशवृत्तेः कृशवृत्तये ॥ ५६ ॥

षष्टिं वर्षसहस्राणि कामरूपी महायशाः ।
तिलप्रदाता रमते पितृलोके यथासुखम् ॥ ६३
यः प्रयच्छति विप्राय तिलधेनुं नराधिप ।
श्रोत्रियाय दरिद्राय शृणु तस्यापि यत्फलम् ॥६४
गोसहस्रप्रदानेन यत्पुण्यं समुदाहृतम् ।
तत्पुण्यफलमाप्नोति तिलधेनुप्रदो नरः ॥ ६५
तिलानां कुडवैर्यस्तु तिलधेनुं प्रयच्छति ।
तावत्कोटिसमा राजन्स्वर्गलोके महीयते ॥ ६६
अष्टाढकतिलैः कृत्वा तिलधेनुं नराधिप ।
द्वात्रिंशन्निष्कसंयुक्तं विषुवे यः प्रयच्छति ।
मद्भक्त्या मद्गतात्मा वै तस्य पुण्यफलं शृणु ॥ ६७
कन्यादानसहस्रस्य विधिदत्तस्य यत्फलम् ।
तत्पुण्यं समनुप्राप्तो मम लोके महीयते ॥ ६८
मम लोकावतीर्णश्च सोऽस्मिँल्लोकेऽभिजायते ।
ऋग्यजुस्सामवेदानां पारगो ब्राह्मणर्षभः ॥ ६९
गां तु यस्तु दरिद्राय श्रोत्रियाय प्रयच्छति ।
प्रसन्नां क्षीरिणीं पुण्यां सवत्सां कांस्यदोहिनीं ७०
यत्किंचिद्दुष्कृतं कर्म तस्य पूर्वकृतं नृप ।
तत्सर्वं तत्क्षणादेव विनश्यति न संशयः ॥ ७१
यानं च वृषसंयुक्तं दीप्यमानं स्वलङ्कृतम् ।
आरूढः कामगं दिव्यं गोलोकमधिगच्छति ॥७२
यावन्ति चैव रोमाणि तस्या गोस्तु नराधिप ।
तावद्वर्षसहस्राणि गवां लोके महीयते ॥ ७३
गोलोकादवतीर्णस्तु लोकेऽस्मिन्ब्राह्मणो भवेत् ।
सत्रयाजी वदान्यश्च सर्वराजभिरर्चितः ॥ ७४
तिलं गावः सुवर्णं चाप्यन्नं कन्या वसुंधरा ।
तारयन्तीह दत्तानि ब्राह्मणेभ्यो महाभुज ॥ ७५
ब्राह्मणं वृत्तसंपन्नमाहिताग्निमलोलुपम् ।
तर्पयेद्विधिवद्राजन्स निधिः पारलौकिकः ॥ ७६
आहिताग्निं दरिद्रं च श्रोत्रियं च जितेन्द्रियम् ।
शूद्रान्नवर्जितं चैव द्विजं यत्नेन पूजयेत् ॥ ७७
आहिताग्निः सदा पात्रमग्निहोत्री च वेदवित् ।
पात्राणामपि तत्पात्रं शूद्रान्नं यस्य नोदरे ॥ ७८
यच्च वेदमयं पात्रं यच्च पात्रं तपोमयम् ।
असंकीर्णं च यत्पात्रं तत्पात्रं तारयिष्यति ॥७९
नित्यस्वाध्यायनिरतास्त्वसंकीर्णेन्द्रियाश्च ये ।
पञ्चयज्ञपरा नित्यं पूजितास्तारयन्ति ते ॥ ८०
ये क्षान्तिदान्ताः श्रुतिपूर्णकर्णा
जितेन्द्रियाः प्राणिवधे निवृत्ताः ।
प्रतिग्रहे संकुचिता गृहस्था-
स्ते ब्राह्मणास्तारयितुं समर्थाः ॥ ८१
नित्योदकी नित्ययज्ञोपवीती
नित्यस्वाध्यायी वृषलान्नवर्जी ।
ऋतौ गच्छन्विधिवच्चापि जुह्व-
न्स ब्राह्मणस्तारयितुं समर्थः ॥ ८२
ब्राह्मणो यस्तु मद्भक्तो मद्याजी मत्परायणः ।
मयि संन्यस्तकर्मा च स विप्रस्तारयेद्ध्रुवम् ॥८३
द्वादशाक्षरतत्त्वज्ञश्चतुर्व्यूहविभागवित् ।
अच्छिद्रपञ्चकालज्ञः स विप्रस्तारयिष्यति ॥ ८४

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि वैष्णवधर्मपर्वणि द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥

## त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥

कृष्णेन युधिष्ठिरंप्रति वृषभगृहशय्यादिदानप्रशंसनम् ॥ १ ॥ तथा गोब्राह्मणरक्षणादिनानाधर्मकथनम् ॥ २ ॥

वैशंपायन उवाच ।
वासुदेवेन दानेषु कथितेषु यथाक्रमम् ।
अवितृप्तश्च धर्मेषु केशवं पुनरब्रवीत् ॥
देव धर्मामृतमिदं शृण्वतोपि परंतप ।
न विद्यते सुरश्रेष्ठ मम तृप्तिर्हि माधव ॥ २
अनडुत्संप्रदानस्य यत्फलं तु विधीयते ।

मद्भक्ताय महात्मा वै इति थ. पाठः ॥ ६७ ॥

द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥

तत्फलं कथयस्वेह तव भक्तस्य मेऽच्युत ॥ ३
यानिचान्यानिदानानि त्वया नोक्तानि कानिचित्
तान्याचक्ष्व सुरश्रेष्ठ तेषां चानुक्रमात्फलम् ॥ ४
भगवानुवाच ।
पवित्रत्वात्सुपुण्यत्वात्पावनत्वात्तथैव च ।
शृणु धर्मामृतं श्रेष्ठं दत्तस्यानडुहः फलम् ॥
दशधेनुसमोऽनड्वानेकोपि कुरुपुङ्गव ।
मेदोमांसविपुष्टाङ्गो नीरोगः कोपवर्जितः ॥
युवा भद्रः सुशीलश्च सर्वदोषविवर्जितः ।
धुरं धारयति क्षिप्रं दत्तो विप्राय पाण्डव ॥ ७
स तेन पुण्यदानेन वर्षकोटिं युधिष्ठिर ।
यथाकामं महातेजा गवां लोके महीयते ॥ ८
यश्च दद्यादनडुहौ द्वौ युक्तौ च धुरंधरौ ।
सुवृत्ताय दरिद्राय श्रोत्रियाय विशेषतः ।
तस्य यत्पुण्यमाख्यातं तच्छृणुष्व युधिष्ठिर ॥ ९
सहस्रगोप्रदानेन यत्प्रोक्तं फलमुत्तमम् ।
तत्पुण्यफलमाप्नोति याति लोकान्स मामकान् ॥
यावन्ति चैव रोमाणि तयोरनडुहोर्नृप ।
तावद्वर्षसहस्राणि मम लोके महीयते ॥ ११
दरिद्रायैव दातव्यं न समृद्धाय पाण्डव ।
वर्षाणां हि तटाकेषु फलं नैव पयोधिषु ॥ १२
यस्तु दद्यादनडुहं दरिद्राय द्विजातये ।
स तेन पुण्यदानेन पूतात्मा कुरुपुङ्गव ॥ १३
विमानं दिव्यमारूढो दिव्यरूपी यथासुखम् ।
मम लोकेषु रमते यावदाभूतसंप्लवम् ॥ १४
गृहं दीपप्रभायुक्तं शय्यासनविभूषितम् ।
भाजनोपस्करैर्युक्तं धनधान्यैरलङ्कृतम् ।
दासीगोभूमिसंयुक्तमन्यूनं सर्वसाधनैः ॥ १५
ब्राह्मणाय दरिद्राय श्रोत्रियाय युधिष्ठिर ।
दद्यात्सदक्षिणं यस्तु तस्य पुण्यफलं शृणु ॥ १६
देवाः पितृगणाश्चैव ह्यग्नयो ऋषयस्तथा ।
प्रयच्छन्ति प्रहृष्टा वै यानमादित्यसन्निभम् ॥ १७
तेन गच्छेच्छ्रिया युक्तो ब्रह्मलोकमनुत्तमम् ।
स्त्रीसहस्रावृते रम्ये भवने तत्र काञ्चने ।
मोदते ब्रह्मलोकस्थो यावदाभूतसंप्लवम् ॥ १८
शय्यां प्रस्तरणोपेतां यः प्रयच्छति पाण्डव ।
अर्चयित्वा द्विजं भक्त्या वस्त्रमाल्यानुलेपनैः ।
भोजयित्वा विचित्रान्नं तस्य पुण्यफलं शृणु ॥ १९
धेनुदानस्य यत्पुण्यं विधिदत्तस्य पाण्डव ।
तत्पुण्यं तमनुप्राप्य पितृलोके महीयते ॥ २०
शिल्पमध्ययनं वाऽपि विद्यां मन्त्रौषधानि च ।
यः प्रयच्छति विप्राय तस्य पुण्यफलं शृणु ॥ २१
आहिताग्निसहस्रस्य पूजितस्यैव यत्फलम् ।
तत्पुण्यफलमाप्नोति यस्तु शय्यां प्रयच्छति ॥ २२
छन्दोभिः संप्रयुक्तेन विमानेन विराजता ।
सप्तर्षिलोकान्व्रजति पूज्यते ब्रह्मवादिभिः ॥ २३
चतुर्युगानि वै त्रिंशत्क्रीडित्वा तत्र देववत् ।
इह मानुष्यके लोके विप्रो भवति वेदवित् ॥ २४
विश्रामयति यो विप्रं श्रान्तमध्वनि कर्शितम् ।
विनश्यति तदा पापं तस्य वर्षकृतं नृप ॥ २५
अथ प्रक्षालयेत्पादौ तस्य तोयेन भक्तिमान् ।
दशवर्षकृतं पापं व्यपोहति न संशयः ॥ २६
घृतेन वाऽथ तैलेन पादौ तस्य तु पूजयेत्
तद्द्वादशसमारूढं पापमाशु व्यपोहति ॥ २७
धेनुकाञ्चनदत्तस्य यत्पुण्यं समुदाहृतम् ।
तत्पुण्यफलमाप्नोति यस्त्वेनं विप्रमर्चयेत् ॥ २८
स्वागतेन तु यो विप्रं पूजयेदासनेन च ।
प्रत्युत्थानेन वा राजन्स देवानां प्रियो भवेत् २९
स्वागतेनाग्नयो राजन्नासनेन शतक्रतुः ।
प्रत्युत्थानेन पितरः प्रीतिं यान्त्यतिथिप्रियाः ३०
अग्निशक्रपितॄणां च तेषां प्रीत्या नराधिप ।
संवत्सरैकृतं पापं तस्य सद्यो विनश्यति ॥ ३१
यः प्रयच्छति विप्राय आसनं माल्यभूषितम् ।
स याति मणिचित्रेण रथेनेन्द्रनिकेतनम् ॥ ३२
पुरन्दरासने तत्र दिव्यनारीविभूषितः ।
षष्टिं वर्षसहस्राणि क्रीडत्यप्सरसां गणैः ॥ ३३
वाहनं यः प्रयच्छेत ब्राह्मणाय युधिष्ठिर ।
स याति रत्नचित्रेण वाहनेन सुरालयम् ॥ ३४

स तत्र कामं क्रीडित्वा सेव्यमानोऽप्सरोगणैः ।
इह राजा भवेद्राजन्नात्र कार्या विचारणा ॥ ३५
पादपं पल्लवाकीर्णं पुष्पितं फलितं तथा ।
गन्धमाल्यैरथाभ्यर्च्य वस्त्राभरणभूषितम् ॥ ३६
यः प्रयच्छति विप्राय श्रोत्रियाय सदक्षिणम् ।
भोजयित्वा यथाकामं तस्य पुण्यफलं शृणु ॥ ३७
जांबूनदविचित्रेण विमानेन विराजता ।
पुरन्दरपुरं याति जयशब्दरवैर्युतः ॥ ३८
ततः शक्रपुरे रम्ये तस्य कल्पकपादपः ।
ददाति चेप्सितं सर्वं मनसा यद्यदिच्छति ॥ ३९
यावन्ति तस्य पत्राणि पुष्पाणि च फलानि च ।
तावद्वर्षसहस्राणि शक्रलोके महीयते ॥ ४०
शक्रलोकावतीर्णश्च मानुष्यं लोकमागतः ।
रथाश्वगजसंपूर्णं पुरं राज्यं च वक्ष्यति ॥ ४१
स्थापयित्वा तु मद्भक्त्या यो मत्प्रतिकृतिं नरः ।
आलयं विधिवत्कृत्वा पूजाकर्म च कारयेत् ।
स्वयं वा पूजयेद्भक्त्या तस्य पुण्यफलं शृणु ॥ ४२
अश्वमेधसहस्रस्य यत्पुण्यं समुदाहृतम् ।
तत्फलं समवाप्नोति मत्सालोक्यं प्रपद्यते ।
न जाने निर्गमं तस्य मम लोकाद्युधिष्ठिर ॥ ४३
देवालये विप्रगृहे गोवाटे चत्वरेऽपि वा ।
प्रज्वालयति यो दीपं तस्य पुण्यफलं शृणु ॥४४
आरुह्य काञ्चनं यानं द्योतयन्सर्वतो दिशम् ।
गच्छेदादित्यलोकं स सेव्यमानः सुरोत्तमैः ॥४५
तत्र प्रकामं क्रीडित्वा वर्षकोटिं महातपाः ।
इह लोके भवेद्विप्रो वेदवेदाङ्गपारगः ॥ ४६
देवालयेषु वा राजन्ब्राह्मणावसथेषु वा ।
चत्वरे वा चतुष्के वा रात्रौ वा यदि वा दिवा ॥
नानागन्धर्ववाद्यानि धर्मश्रावणिकानि च ।
यस्तु कारयते भक्त्या मद्गतेनान्तरात्मना ॥ ४८
तस्य देवा नरश्रेष्ठ पितरश्चापि हर्षिताः ।
सुप्रीताः संप्रयच्छन्ति विमानं कामगं सुखम् ४९
स च तेन विमानेन याति देवपुरं नरः ।
तत्र दिव्याप्सरोभिस्तु सेव्यमानः प्रमोदते ॥ ५०
देवलोकावतीर्णस्तु सोऽस्मिँल्लोके नराधिप ।
वेदवेदाङ्गतत्त्वज्ञो भोगवान्ब्राह्मणो भवेत् ॥ ५१
चत्वरे वा सभायां वा विस्तीर्णे वा सभाङ्गणे ।
कृत्वाऽग्निकुण्डं विपुलं स्थण्डिलं वा युधिष्ठिर ॥५२
तत्राग्निं चतुरो मासाञ्ज्वालयेद्यस्तु भक्तिमान् ।
समाप्तेषु च मासेषु पौष्यादिषु ततो द्विजान् ॥५३
भोजयेत्पायसं मृष्टं मद्गतेनान्तरात्मना ।
दक्षिणां च यथाशक्ति ब्राह्मणेभ्यो निवेदयत् ॥५४
एवमग्निं तु यः कुर्यान्नित्यमेवार्चयेत्तु माम् ।
तस्य पुण्यफलं यद्वै तन्निबोध युधिष्ठिर ॥ ५५
तेनाहं शङ्करश्चैव पितरो ह्यग्नयस्तथा ।
यास्यामः परमां प्रीतिं नात्र कार्या विचारणा ॥ ५६
षष्टिं वर्षसहस्राणि षष्टिं वर्षशतानि च ।
सोऽसत्प्रीतिकरः श्रीमान्मम लोके महीयते ॥५७
मम लोकावतीर्णश्च अस्मिँल्लोके महायशाः ।
वेदवेदाङ्गविद्विप्रो जायते राजपूजितः ॥ ५८
यः करोति नरश्रेष्ठ भरणं ब्राह्मणस्य तु ।
श्रोत्रियस्याभिजातस्य दरिद्रस्य विशेषतः ।
तस्य पुण्यफलं यद्वै तन्निबोध युधिष्ठिर ॥ ५९
गवां कोटिप्रदानेन यत्पुण्यं समुदाहृतम् ।
तत्सर्वफलमाप्नोति वर्षेणैकेन पाण्डव ॥ ६०
काञ्चनेन विचित्रेण विमानेनार्कशोभिना ।
स याति मामकं लोकं दिव्यस्त्रीगणसेवितः ॥६१
गीयमानो वरस्त्रीभिर्वर्षाणां कोटिविंशतिम् ।
क्रीडित्वा मामके तत्र सर्वदेवैरभिष्टुतः ।
मानुष्यमवतीर्णस्तु वेदविद्ब्राह्मणो भवेत् ॥ ६२
करकां कर्णिकां वाऽपि महद्वा जलभाजनम् ।
यः प्रयच्छति विप्राय तस्य पुण्यफलं शृणु ॥६३
ब्रह्मकूर्चे तु यत्पीते फलं प्रोक्तं नराधिप ।
तत्पुण्यफलमाप्नोति जलभाजनदो नरः ।
सुतृप्तः सर्वसौगन्धः प्रहृष्टेन्द्रियमानसः ॥ ६४
हंससारसयुक्तेन विमानेन विराजता ।

---

अहोरात्रोषितो भूत्वा पौर्णमास्यां विशेषतः ।
पञ्चगव्यं पिबेत्प्रातर्ब्रह्मकूर्चविधिः स्मृतः ॥ ६४ ॥

स याति वारुणं लोकं दिव्यगन्धर्वसेवितम् ॥६५
पानीयं यः प्रयच्छेद्वै जीवानां जीवनं परम् ।
ग्रीष्मे च त्रिषु मासेषु तस्य पुण्यफलं शृणु ॥६६
कपिलाकोटिदानस्य यत्पुण्यं तु विधीयते ।
तत्पुण्यफलमाप्नोति पानीयं यः प्रयच्छति ॥ ६७
पूर्णचन्द्रप्रकाशेन विमानेन विराजता ।
स गच्छेच्चन्द्रभवनं सेव्यमानोप्सरोगणैः ॥ ६८
त्रिंशत्कोटियुगं तत्र दिव्यगन्धर्वसेवितः ।
क्रीडित्वा मानुषे लोके चतुर्वेदी द्विजो भवेत् ६९
शिरोभ्यङ्गप्रदानेन तेजस्वी प्रियदर्शनः ।
सुभगो रूपवाञ्शूरः पण्डितश्च भवेद्द्विजः ॥ ७०
वस्त्रदायी तु तेजस्वी सर्वत्र प्रियदर्शनः ।
सुभगो भवति श्रीमान्स्त्रीणां नित्यं मनोरमः ७१
उपानहौ च छत्रं च यो ददाति नरोत्तमः ।
स याति रथमुख्येन काञ्चनेन विराजता ।
शक्रलोकं महातेजाः सेव्यमानोप्सरोगणैः ॥ ७२
काष्ठपादुकदा यान्ति विमानैर्वृक्षनिर्मितैः ।
धर्मराजपुरं रम्यं सेव्यमानाः सुरोत्तमैः ॥ ७३
दन्तकाष्ठप्रदानेन प्रियवाक्यो भवेन्नरः ।
सुगन्धवदनः श्रीमान्मेधासौभाग्यसंयुतः ॥ ७४
क्षीरं दधि घृतं वाऽपि गुडं मधुरसं तथा ।
ये प्रयच्छन्ति विप्रेभ्यः परां भक्तिमुपागताः ॥७५
ते वृषैरश्वयानैश्च श्वेतस्रग्दामभूषिताः ।
उपगीयमाना गन्धर्वैर्यान्तीश्वरपुरं नराः ॥ ७६
तत्र दिव्याप्सरोभिस्तु सेव्यमाना यथासुखम् ।
षष्टिवर्षसहस्राणि मोदन्ते देवसन्निभाः ॥ ७७
ततः कालावतीर्णाश्च जायन्ते त्विह मानवाः ।
प्रभूतधनधान्याश्च भोगवन्तो नरोत्तमाः ॥ ७८
वैशाखे मासि वैशाखे दिवसे पाण्डुनन्दन ।
वैवस्वतं समुद्दिश्य परां भक्तिमुपागताः ॥ ७९
अभ्यर्च्य विधिवद्विप्रांस्तिलान्गुडसमन्वितान् ।
ये प्रयच्छन्ति विप्रेभ्यस्तेषां पुण्यफलं शृणु ॥ ८०
गोप्रदानेन यत्पुण्यं विधिवत्पाण्डुनन्दन ।
तत्पुण्यं समनुप्राप्तो यमलोके महीयते ।
ततश्चापि च्युतः कालादिह राजा भविष्यति॥८१
तस्मिन्नेव दिने विप्रान्भोजयित्वा सुदक्षिणम् ।
तोयपूर्णानि दिव्यानि भाजनानि दिशन्ति ये ८२
ते यान्त्यादित्यवर्णाभैर्विमानैर्वरुणालयम् ।
तत्र दिव्याङ्गनाभिस्तु रमन्ते कामकामिनः॥ ८३
ततोऽवतीर्णाः कालेन ते चास्मिन्मानुषे पुनः ।
भोगवन्तो द्विजश्रेष्ठा भविष्यन्ति न संशयः॥८४
अनन्तराशी यश्चापि वर्तते व्रतवत्सदा ।
सत्यवाक्क्रोधरहितः शुचिः स्नानरतः सदा ।
स विमानेन दिव्येन याति शक्रपुरं नरः ॥ ८५
तत्र दिव्याप्सरोभिस्तु वर्षकोटिं महातपाः ।
क्रीडित्वा मानुषे लोके जायते वेदविद्द्विजः॥८६
एकभुक्तेन यश्चापि वर्षमेकं तु वर्तते ।
ब्रह्मचारी जितक्रोधः सत्यशौचसमन्वितः ।
स विमानेन दिव्येन याति शक्रपुरं नरः ॥ ८७
दशकोटिसहस्राणि क्रीडित्वाऽप्सरसां गणैः ।
इह मानुष्यके लोके वेदविद्ब्राह्मणो भवेत् ॥ ८८
चतुर्थकाले यो भुङ्क्ते ब्रह्मचारी जितेन्द्रियः ।
वर्तते चैकवर्षं तु तस्य पुण्यफलं शृणु ॥ ८९
चित्रबर्हिणयुक्तेन विचित्रध्वजशोभिना ।
याति यानेन दिव्येन स महेन्द्रपुरं नरः॥ ९०
अकृशाभिर्वरस्त्रीभिः सेव्यमानो यथासुखम् ।
ततो द्वादशकोटिं स समाः सम्यक्प्रमोदते॥९१
शक्रलोकावतीर्णस्तु लोके चास्मिन्नराधिप ।
भवेद्वै ब्राह्मणो विद्वान्क्षमावान्वेदपारगः॥ ९२
षष्ठकाले तु योऽश्नाति वर्षमेकमकल्मषः ।
ब्रह्मचर्यव्रतैर्युक्तः शुचिः क्रोधविवर्जितः ।
तपोयुक्तस्य तस्याथ शृणुष्व फलमुत्तमम्॥ ९३
अत्यादित्यप्रकाशेन विमानेनार्कसंनिभः ।
स याति मम लोकान्वै दिव्यनारीनिषेवितः ९४
तत्र साध्यैर्मरुद्भिस्तु पूज्यमानो यथासुखम् ।
पश्यन्नेव सदा मां तु क्रीडत्यप्सरसां गणैः॥ ९५

ग्रीष्मे चतुर्षु मासेषु इति थ. पाठः ॥ ६६ ॥

त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥

पक्षोपवासं यश्चापि कुरुते मद्गतात्मना ।
समाप्ते तु व्रते तस्मिंस्तर्पयेच्छ्रोत्रियान्द्विजान् ॥९६
सोपि गच्छति दिव्येन विमानेन महातपाः ।
द्योतयन्प्रभया व्योम मम लोकं प्रपद्यते ।
स तत्र मोदते कामं कामरूपी यथासुखम् ॥ ९७
त्रिंशत्कोटिसमा राजन्क्रीडित्वा तत्र देववत् ।
इह मानुष्यके लोके पूजनीयो द्विजो भवेत् ।
त्रयाणामपि वेदानां साङ्गानां पारगो भवेत् ॥ ९८
यश्च मासोपवासं वै कुरुते मद्गतात्मना ।
जितेन्द्रियो जितक्रोधोजितधीः स्नानतत्परः ॥९९
समाप्ते नियमे तत्र भोजयित्वा द्विजोत्तमान् ।
दक्षिणां च ततो दद्यात्प्रहृष्टेनान्तरात्मना ॥१००
स गच्छति महातेजा ब्रह्मलोकमनुत्तमम् ।
सिंहयुक्तेन यानेन दिव्यस्त्रीगणसेवितः ॥ १०१
स तत्र ब्रह्मणो लोके दिव्यर्षिगणसेवितः ।
शतकोटिसमा राजन्यथाकामं प्रमोदते ॥ १०२
ततः कालावतीर्णश्च सोस्मिँल्लोके द्विजो भवेत् ।
षडङ्गविच्चतुर्वेदी त्रिंशज्जन्मान्यरोगवान् ॥ १०३
यस्त्यक्त्वा सर्वकर्माणि शुचिः क्रोधविवर्जितः ।
महाप्रस्थानमेकाग्रो याति मद्गतमानसः ॥ १०४
स गच्छेदिन्द्रसदनं विमानेन महातपाः ।
महामणिविचित्रेण सौवर्णेन विराजता ॥ १०५
शतकोटिसमास्तत्र सुराधिपतिपूजितः ।
नाकपृष्ठे निवसति दिव्यस्त्रीगणसेवितः ॥ १०६
शक्रलोकावतीर्णश्च मानुषेषूपजायते ।
राज्ञां राजा महातेजाः सर्वलोकार्चितः प्रभुः १०७
प्रायोपवेशं यश्चापि कुरुते मद्गतात्मना ।
नमो ब्रह्मण्यदेवायेत्युक्त्वा मन्त्रं समाहितः ।
अन्तःस्वस्थो जितक्रोधस्तस्य पुण्यफलं शृणु १०८
कामगः कामरूपी च बालसूर्यसमप्रभः ।
स विमानेन दिव्येन याति लोकाननामयान् १०९
स्वर्गात्स्वर्गं महातेजा गत्वा चैव यथासुखम् ।
मम लोकेषु रमते यावदाभूतसंप्लवम् ॥ ११०
अग्निप्रवेशं यश्चापि कुरुते मद्गतात्मना
सोपि यानेन दिव्येन मम लोकं प्रपद्यते ॥१११
तत्र सर्वगुणोपेतः पश्यन्नेव स मां सदा ।
त्रिंशत्कोटिसमा राजन्मोदते मम संनिधौ ।
ततोऽवतीर्णः कालेन वेदविद्ब्राह्मणो भवेत् ११२
कर्षणं साधयन्यस्तु मां प्रपन्नः शुचिव्रतः ।
नमो ब्रह्मण्यदेवायेत्येतन्मन्त्रमुदाहरन् ॥ ११३
बालसूर्यप्रकाशेन विमानेन विराजता ।
मम लोकं समासाद्य वर्षकोटिं प्रमोदते ।
मम लोकावतीर्णश्च सोस्मिँल्लोके नृपो भवेत् ११४
निवेशयति मन्मूर्त्यामात्मानं मद्गतः शुचिः ।
रुद्रदक्षिणमूर्त्यां वा चतुर्दश्यां विशेषतः ॥ ११५
सिद्धैर्ब्रह्मर्षिभिश्चैव देवलोकैश्च पूजितः ।
गन्धर्वैर्भूतसङ्घैश्च गीयमानो महातपाः ॥ ११६
प्रविशेत्स महातेजा मां वा शङ्करमेव वा
न स्यात्पुनर्भवो राजन्नात्र कार्या विचारणा ११७
गोकृते स्त्रीकृते चैव गुरुविप्रकृतेऽपि वा ।
हन्यन्ते ये तु राजेन्द्र शक्रलोकं व्रजन्ति ते ॥ ११८
तत्र जांबूनदमये विमाने कामगामिनि ।
मन्वन्तरं प्रमोदन्ते दिव्यनारीनिषेविताः ॥११९
आश्रुतस्याप्रदानेन दत्तस्य हरणेन च
जन्मप्रभृति यद्दत्तं तत्सर्वं तु विनश्यति ॥ १२०
नाऽगोप्रदास्तत्र पयः पिबन्ति
नाभूमिदा भूमिमथाश्नुवन्ति ।
यान्यान्कामान्ब्राह्मणेभ्यो ददाति
तांस्तान्कामान्स्वर्गलोके च भुङ्क्ते ॥ १२१
यद्यदिष्टतमं द्रव्यं न्यायेनोपार्जितं च यत् ।
तत्तद्गुणवते देयं तदेवाक्षयमिच्छता ॥ १२२
अनुपोष्य त्रिरात्राणि तीर्थान्यनभिगम्य च ।
अदत्त्वा काञ्चनं गां च दरिद्रो नाम जायते १२३
दानं यत्तत्फलं नैव श्रोत्रियाय न दीयते ।
श्रोत्रिया यत्र नाश्नन्ति न देवास्तत्र भुञ्जते १२४
श्रोत्रियेभ्यः परं नास्ति परमं दैवतं महत् ।
निधानं त्वापि राजेन्द्र नास्याच्छ्रोत्रियभोजनात् ॥

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि वैष्णवधर्मपर्वणि त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥

## चतुरधिकशततमोऽध्यायः ॥ १०४ ॥

कृष्णान पञ्चमहायज्ञनिरूपणं, स्नानविधिनिरूपणं, वैष्णवलक्षणाभिधानं स्वपूजायोग्यायोग्यपुष्पविवेचनं च ॥ १ ॥

युधिष्ठिर उवाच ।
विप्रयोगे शरीरस्य सेन्द्रियस्य विशेषतः ।
अन्तरा वर्तमानस्य गतिः प्राणस्य कीदृशी ॥ १
भगवानुवाच ।
शुभाशुभकृतं सर्वं प्राप्नोतीह फलं नरः ।
न तु सर्वस्य भूतस्य पञ्चत्वं विद्यते नृप ॥ २
पञ्चत्वं पाण्डवश्रेष्ठ भूरिभूतिकरं नृणाम् ।
तेषां पञ्च महायज्ञान्ये कुर्वन्ति द्विजोत्तम ॥ ३
पञ्चत्वं पञ्चभिर्भूतैर्वियोगं संप्रचक्षते ।
न जायते न म्रियते पुरुषः शाश्वतः सदा ॥ ४
प्रायेण मरणं नाम पापिनामेव पाण्डव ।
येषां तु न गतिः पुण्या तेषां मरणमुच्यते ॥ ५
प्रायेणाकृतकृत्यस्तु मृत्योरुद्विजते जनः ।
कृतकृत्याः प्रतीक्षन्ते मृत्युं प्रियमिवातिथिम् ॥६
युधिष्ठिर उवाच ।
पञ्च यज्ञाः कथं देव क्रियन्तेऽत्र द्विजातिभिः ।
तेषां नाम च देवेश वक्तुमर्हस्यशेषतः ॥ ७
श्रीभगवानुवाच ।
शृणु पञ्च महायज्ञान्कीर्त्यमानान्युधिष्ठिर ।
यैरेव ब्रह्मसालोक्यं लभ्यते गृहमेधिना ॥ ८
ऋभुयज्ञं ब्रह्मयज्ञं भूतयज्ञं च पाण्डव ।
नृयज्ञं पितृयज्ञं च पञ्च यज्ञान्प्रचक्षते ॥ ९
तर्पणं ऋभुयज्ञः स्यात्स्वाध्यायो ब्रह्मयज्ञकः ।
भूतयज्ञो बलिर्यज्ञो नृयज्ञोऽतिथिपूजनम् ।
पितॄनुद्दिश्य यत्कर्म पितृयज्ञः प्रकीर्तितः ॥ १०
हुतं चाप्यहुतं चैव तथा प्रहुतमेव च ।
प्राशितं बलिदानं च पाकयज्ञान्प्रचक्षते ॥ ११
वैश्वदेवादयो होमा हुतमित्युच्यते बुधैः ।
अहुतं च भवेद्दत्तं प्रहुतं ब्राह्मणाशितम् ॥ १२
प्राणाग्निहोत्रहोमं च प्राशितं विधिवद्विदुः ।
बलिकर्म च राजेन्द्र पाकयज्ञाः प्रकीर्तिताः ॥१३
केचित्पञ्च महायज्ञान्पाकयज्ञान्प्रचक्षते ।
अपरे ब्रह्मयज्ञादीन्महायज्ञविदो विदुः ॥ १४
सर्वं एते महायज्ञाः सर्वथा परिकीर्तिताः ।
बुभुक्षितान्ब्राह्मणांस्तु यथाशक्ति न हापयेत् १५
अहन्यहनि ये त्वेतानकृत्वा भुञ्जते स्वयम् ।
केवलं मलमश्नन्ति ते नरा न च संशयः ॥ १६
तस्मात्स्नात्वा द्विजो विद्वान्कुर्यादेतान्दिनेदिने ।
अतोऽन्यथा तु भुञ्जन्वै प्रायश्चित्ती भवेद्द्विजः १७
युधिष्ठिर उवाच ।
देवदेवेश दैत्यघ्न त्वद्भक्तस्य जनार्दन ।
वक्तुमर्हसि देवेश स्नानस्य च विधिं मम ॥ १८
भगवानुवाच ।
शृणु पाण्डव तत्सर्वं पवित्रं पापनाशनम् ।
स्नात्वा येन विधानेन मुच्यन्ते किल्बिषाद्द्विजाः१९
मृदं च गोमयं चैव तिलं दर्भांस्तथैव च ।
पुष्पाण्यपि यथान्यायमादाय तु जलं व्रजेत् २०
नद्यां स्नात्वा न च स्नायादन्यत्र द्विजसत्तम ।
सति प्रभूते पयसि नाल्पे स्नायात्कदाचन ॥ २१
गत्वोदकसमीपं तु शुचौ देशे मनोरमे ।
ततो मृद्गोमयादीनि तत्र विप्रो विनिक्षिपेत् २२
बहिः प्रक्षाल्य पादौ च द्विराचम्य प्रयत्नतः ।
प्रदक्षिणं समावृत्य नमस्कुर्यात्तु तज्जलम् ॥ २३
न च प्रक्षालयेद्विद्वांस्तीर्थमद्भिः कदाचन ।
न च पादेन वा हन्याद्धस्तेनान्येन तज्जलम्॥२४
सर्वदेवमया ह्यापो मन्मयाः पाण्डुनन्दन ।
तस्मात्तास्तु न हन्तव्यास्त्वद्भिः प्रक्षालयेत्स्थलं२५
केवलं प्रथमं मज्जेन्नाङ्गानि विमृशेद्बुधः ।
तत्तु तीर्थं समासाद्य कुर्यादाचमनं पुनः ॥ २६
गोकर्णाकृतिवत्कृत्वा करं त्रिः प्रपिबेज्जलम् ।
द्विस्तत्परिमृजेद्वक्त्रं पादावभ्युक्ष्य चात्मनः ।
शीर्षण्यांस्तु ततः प्राणान्सकृदेव तु संस्पृशेत् २७

बाहू द्वौ च ततः स्पृष्ट्वा हृदयं नाभिमेव च ।
प्रत्यङ्गमुदकं स्पृष्ट्वा मूर्धानं तु पुनः स्पृशेत् ॥२८
आपः पुनन्त्वित्युक्त्वा च पुनराचमनं चरेत् ।
सोङ्कारव्याहृतीर्वाऽपि सदसस्पतिमित्यृचम् ॥२९
आचम्य मृत्तिकाः पश्चात्त्रिधा कृत्वा समालभेत् ।
ऋचेदं विष्णुरित्यङ्गमुत्तमाधममध्यमम् ।
आलभ्य वारुणैः सूक्तैर्नमस्कृत्य जलं ततः ॥३०
स्रवन्ती चेत्प्रतिस्रोतः प्रत्यर्कं चान्यवारिषु ।
मज्जेदोमित्युदाहृत्य न च विक्षोभयेज्जलम् ॥३१
गोमयं च त्रिधा कृत्वा जले पूर्वं समालभेत् ।
सव्याहृतीकां सप्रणवां गायत्रीं च जपेत्पुनः ॥३२
पुनराचमनं कृत्वा मद्गतेनान्तरात्मना ।
आपोहिष्ठेति तिसृभिर्ऋग्भिः पूतेन वारिणा ।
तथा तरत्समन्दीभिः सिञ्चेचतसृभिः क्रमात् ३३
गोसूक्तेनाश्वसूक्तेन शुद्धवर्गेण चात्मनः ।
वैष्णवैर्वारुणैः सूक्तैः सावित्रैरिन्द्रदेवतैः ॥ ३४
वामदेव्येन चात्मानमन्यैर्मन्मयसामभिः ।
स्थित्वाऽन्तःसलिले सूक्तं जपेद्वाचाऽघमर्षणं ३५
सव्याहृतीकां सप्रणवां गायत्रीं वा ततो जपेत् ।
आश्वासमोक्षात्प्रणवं जपेद्वा मामनुस्मरन् ॥ ३६
उत्प्लुत्य तीर्थमासाद्य धौते शुक्ले च वाससी ।
शुद्धे चाच्छादयेत्कक्षे न कुर्यात्परिपाशके ॥ ३७
पाशेन बद्ध्वा कक्षे यत्कुरुते कर्म वैदिकम् ।
राक्षसा दानवा दैत्यास्तद्विलुंपन्ति हर्षिताः ।
तस्मात्सर्वप्रयत्नेन कक्ष्यापाशं न धारयेत् ॥ ३८
ततः प्रक्षाल्य पादौ च हस्तौ चैव मृदा शनैः ।
आचम्य पुनराचामेत्पुनः सावित्रिया द्विजः ३९
प्राङ्मुखोदङ्मुखो वाऽपि ध्यायन्वेदान्समाहितः ।
जले जलगतः शुद्धः स्थल एव स्थलस्थितः ।
उभयत्र स्थितस्तस्मादाचामेदात्मशुद्धये ॥ ४०
दर्भेषु दर्भपाणिः सन्प्राङ्मुखः सुसमाहितः ।
प्राणायामांस्ततः कुर्यान्मद्गतेनान्तरात्मना ॥ ४१
सहस्रकृत्वः सावित्रीं शतकृत्वस्तु वा जपेत् ॥ ४२
समाहितो जपेत्तस्मात्सावित्र्या चाभिमन्त्र्य च ।
मन्देहानां विनाशाय रक्षसां विक्षिपेज्जलम् ॥ ४३
उद्वर्गोसीत्यथा चान्तःप्रायश्चित्तजलं क्षिपेत् ॥४४
अथादाय सुपुष्पाणि तोयमञ्जलिना द्विजः
प्रक्षिप्य प्रतिसूर्यं च व्योममुद्रां प्रकल्पयेत् ॥ ४५
ततो द्वादशकृत्वस्तु सूर्यस्यैकाक्षरं जपेत् ।
ततः षडक्षरादीनि षट्कृत्वः परिवर्तयेत् ॥ ४६
प्रदक्षिणं परामृश्य मुद्रया स्वमुखान्तरे ।
ऊर्ध्वबाहुस्ततो भूत्वा सूर्यमीक्षेत्समाहितः ॥ ४७
तन्मण्डलस्थं मां ध्यायंस्तेजोमूर्तिं चतुर्भुजम् ।
उदुत्यं च जपेन्मन्त्रं चित्रं तच्चक्षुरित्यपि ॥ ४८
सावित्रीं च यथाशक्ति जप्त्वा सूक्तं च मामकम् ।
मन्मयानि च सामानि पुरुषव्रतमेव च ॥ ४९
ततश्चालोकयेदर्कं हंसः शुचिषदित्यपि ।
प्रदक्षिणं समावृत्य नमस्कृत्य दिवाकरम् ॥ ५०
ततस्तु तर्पयेदद्भिर्ब्रह्माणं मां च शङ्करम् ।
प्रजापतिं च देवांश्च तथा देवमुनीनपि ॥ ५१
साङ्गानपि तथा वेदानितिहासान्क्रतूनपि ।
पुराणानि च सर्वाणि कुलान्यप्सरसां तथा ॥ ५२
ऋतून्संवत्सरं चैव कलाकाष्ठात्मकं तथा ।
भूतग्रामांश्च भूतानि सरितः सागरांस्तथा ।
शैलाञ्शैलस्थितान्देवानोषधीः सवनस्पतीः ॥५३
तर्पयेदुपवीती च प्रत्येकं तृप्यतामिति ।
अन्वारभ्य च सव्येन पाणिना दक्षिणेन तु ॥ ५४
निवीती तर्पयेद्विद्वानृषीन्मन्त्रकृतस्तथा ।
मरीच्यादीनृषींश्चैव नारदाद्यान्समाहितः ॥ ५५
प्राचीनावीत्यथैतांस्तु तर्पयेद्देवताः पितॄन् ।
ततस्तु कव्यवाडग्निं सोमं वैवस्वतं तथा ॥ ५६
ततश्चार्यमणं चापि ह्यग्निष्वात्तांस्तथैव च ।
सोमपांश्चैव दर्भेषु सतिलैरेव वारिभिः ।
तृप्यतामिति पश्चात्तु स पितॄंस्तर्पयेत्ततः ॥ ५७
पितॄन्पितामहांश्चैव तथैव प्रपितामहान् ।
पितामहीस्तथा चापि तथैव प्रपितामहीः ॥ ५८
मातरं चात्मनश्चैव गुरुमाचार्यमेव च ।
पितृमातृष्वसारौ च तथा मातामहीमपि ॥ ५९

उपाध्यायान्सखीन्बन्धून्शिष्यर्त्विग्ज्ञातिबांधवान्
प्रमीतानानृशंस्यार्थं तर्पयेत्तानमत्सरः ॥ ६०
तर्पयित्वा तथाऽऽचम्य स्नानवस्त्रं प्रपीडयेत् ।
वृत्तिं भृत्यजनस्याहुः स्नानं पानं च तद्विदः ॥६१
अतर्पयित्वा तान्पूर्वं स्नानवस्त्रं न पीडयेत् ।
पीडयेच्चेत्पुरा मोहाद्देवाः सर्षिगणास्तथा ।
पितरस्तु निराशास्ते शप्त्वा यान्ति यथागतं॥६२
प्रक्षाल्य तु मृदा पादावाचम्य प्रयतः पुनः ।
दर्भेषु दर्भपाणिः सन्स्वाध्यायं तु समारभेत्॥ ६३
वेदमादौ समारभ्य ततोपर्युपरि क्रमात् ।
यदधीतेऽन्वहं शक्त्या तत्स्वाध्यायं प्रचक्षते ॥६४
ऋचो वाऽपि यजुर्वाऽपि सामगायमथापि च ।
इतिहासपुराणानि यथाशक्ति न हापयेत् ॥ ६५
उत्थाय तु नमस्कृत्य दिशो दिग्देवता अपि ।
ब्रह्माणं च ततश्चाग्निं पृथिवीमोषधीस्तथा ॥ ६६
वाचं वाचस्पतिं चैव मां चैव सरितस्तथा ।
नमस्कृत्य तथाऽद्भिस्तु प्रणवादि च पूर्ववत्॥६७
ततो नमोऽद्भ्य इत्युक्त्वा नमस्कुर्यात्तु तज्जलम् ।
घृणिः सूर्यस्तथाऽऽदित्यस्तं प्रणम्य स्वमूर्धनि ६८
ततस्त्वालोकयन्नर्कं प्रणवेन समाहितः ।
ततो मामर्चयेत्पुष्पैर्मत्प्रियैरेव नित्यशः ॥ ६९
युधिष्ठिर उवाच ।
त्वत्प्रियाणि प्रसूनानि त्वदधिष्ठानि माधव ।
सर्वाण्याचक्ष्व देवेश त्वद्भक्तस्य ममाच्युत ॥७०
भगवानुवाच ।
शृणुष्वावहितो राजन्पुष्पाणि प्रियकृन्ति मे ।
कुमुदं करवीरं च चणकं चंपकं तथा ॥ ७१
मल्लिकाजातिपुष्पं च नन्द्यावर्तं च नन्दिकम् ।
पलाशपुष्पपत्राणि दूर्वा भृङ्गकमेव च ॥ ७२
वनमाला च राजेन्द्र मत्प्रियाणि विशेषतः ।
सर्वेषामपि पुष्पाणां सहस्रगुणमुत्पलम् ॥ ७३
तस्मात्पद्मं तथा राजन्पद्मात्तु शतपत्रकम् ।
तस्मात्सहस्रपत्रं तु पुण्डरीकं ततः परम् ॥ ७४
पुण्डरीकसहस्रात्तु तुलसी गुणतोऽधिका ।
बकपुष्पं ततस्तस्मात्सौवर्णं तु ततोऽधिकम् ।
सौवर्णात्तु प्रसूनाच्च मत्प्रियं नास्ति पाण्डव ॥७५
पुष्पाभावे तुलस्यास्तु पत्रैर्मामर्चयेत्पुनः ।
पत्रालाभे तु शाखाभिः शाखालाभे शिफालवैः ।
शिफाभावे मृदा तत्र भक्तिमानर्चयेत माम् ॥७६
वर्जनीयानि पुष्पाणि शृणु राजन्समाहितः ।
किङ्किणी मुनिपुष्पं च धुर्धूरं पाटलं तथा ॥ ७७
तथाऽतिमुक्तकं चैव पुन्नागं नक्तमालिकम् ।
यौथिकं क्षीरिकापुष्पं निर्गुण्डी लाङ्गुली जपा ७८
कर्णिकारं तथाऽशोकं शल्मलीपुष्पमेव च ।
ककुभाः कोविदाराश्च वैभीतकमथापि च ॥ ७९
कुरण्टकप्रसूनं च कल्पकं कालकं तथा ।
अङ्कोलं गिरिकर्णी च नीलान्येव च सर्वशः ।
एकपर्णानि चान्यानि सर्वाण्येव विवर्जयेत् ॥८०
अर्कपुष्पाणि वर्ज्यानि अर्कपत्रस्थितानि च ।
व्याघ्रताः पिचुमन्दानि सर्वाण्येव विवर्जयेत् ८१
अन्यैस्तु शुक्लपत्रैस्तु गन्धवद्भिर्नराधिप ।
अवर्ज्यैस्तैर्यथालाभं मद्भक्तो मां समर्चयेत् ॥ ८२
युधिष्ठिर उवाच ।
कथं त्वमर्चनीयोसि मूर्तयः कीदृशास्तु ते ।
वैखानसाः कथं ब्रूयुः कथं वा पाञ्चरात्रिकाः ८३
भगवानुवाच ।
शृणु पाण्डव तत्सर्वमर्चनाक्रममात्मनः ।
स्थण्डिले पद्मकं कृत्वा चाष्टपत्रं सकर्णिकम् ॥८४
अष्टाक्षरविधानेन ह्यथवा द्वादशाक्षरैः ।
वैदिकैरथ मन्त्रैश्च मम सूक्तेन वा पुनः ॥ ८५
स्थापितं मां ततस्तस्मिन्नर्चयित्वा विचक्षणः ।
पुरुषं च ततः सत्यमच्युतं च युधिष्ठिर ॥ ८६
अनिरुद्धं च मां प्राहुर्वैखानसविदो जनाः ।
अन्ये त्वेवं विजानन्ति मां राजन्पाञ्चरात्रिकाः ८७
वासुदेवं च राजेन्द्र संकर्षणमथापि वा ।
प्रद्युम्नं चानिरुद्धं च चतुर्मूर्तिं प्रचक्षते ॥ ८८
एताश्चान्याश्च राजेन्द्र संज्ञाभेदेन मूर्तयः ।
विद्ध्यनर्थान्तरा एवं मामेवं चार्चयेद्बुधः ॥ ८९

युधिष्ठिर उवाच ।
त्वद्भक्ताः कीदृशा देव कानि तेषां व्रतानि च ।
एतत्कथय देवेश त्वद्भक्तस्य ममाच्युत ॥ ९०
भगवानुवाच ।
अनन्यदेवताभक्ता ये मद्भक्तजनप्रियाः ।
मामेव शरणं प्राप्ता मद्भक्तास्ते प्रकीर्तिताः ॥ ९१
स्वर्ग्याण्यपि यशस्यानि मत्प्रियाणि विशेषतः ।
मद्भक्तः पाण्डवश्रेष्ठ व्रतानीमानि धारयेत् ॥ ९२
नान्यदाच्छादयेद्वस्त्रं मद्भक्तो जलतारणे ।
स्वस्थस्तु न दिवा स्वप्येन्मधुमांसानि वर्जयेत् ९३
प्रदक्षिणं व्रजेद्विप्रान्गामश्वत्थं हुताशनम् ।
न धावेत्पतिते वर्षे नाग्रभिक्षां च लोपयेत् ॥ ९४
प्रत्यक्षलवणं नाद्यात्सौभाञ्जनकरञ्जनौ ।
ग्रासमुष्टिं गवे दद्याद्धान्याम्लं चैव वर्जयेत् ॥९५
तथा पर्युषितं चापि पक्कं परगृहागतम् ।
अनिवेदितं च यद्द्रव्यं तत्प्रयत्नेन वर्जयेत् ॥ ९६
विभीतककरञ्जानां छायां दूरे विवर्जयेत् ।
विप्रदेवपरीवादान्न वदेत्पीडितोपि सन् ॥ ९७
सात्विका राजसाश्चापि तामसाश्चापि पाण्डव ।
मामर्चयन्ति मद्भक्तास्तेषामीदृग्विधा गतिः ॥९८
तामसास्तिमिरं यान्ति राजसा रज एव तत् ।
सात्विकाः सत्वसंपन्नाः सत्वमेव प्रयान्ति ते ९९
ये सिद्धाः सन्ति साङ्ख्येन योगसंत्वबलेन च ।
नभस्यादित्यचन्द्राभ्यां पश्यन्ति पदविस्तरम् १००
एकस्तंभे नवद्वारे त्रिस्थूणे पञ्चसाक्षिके ।
एतस्मिन्देहनगरे राजसस्तु सदा भवेत् ॥ १०१
उदिते सवितर्याप्य क्रियायुक्तस्य धीमतः ।
चतुर्वेदविदश्चापि देहे षड्वृषलाः स्मृताः ॥१०२
क्षत्रियाः सप्त विज्ञेया वैश्यास्त्वष्टौ प्रकीर्तिताः ।
नियताः पाण्डवश्रेष्ठ शूद्राणामेकविंशतिः ॥ १०३
कामः क्रोधश्च लोभश्च मोहश्च मद एव च ।
महामोहश्च इत्येते देहे षड्वृषलाः स्मृताः ॥१०४
गर्वः स्तंभो ह्यहङ्कार ईर्ष्या च द्रोह एव च ।
पारुष्यं क्रूरता चैव सप्तैते क्षत्रियाः स्मृताः १०५
तीक्ष्णता निकृतिर्माया शाठ्यं डंभो ह्यनार्जवम् ।
पैशुन्यमनृतं चैव वैश्यास्त्वष्टौ प्रकीर्तिताः ॥१०६
तृष्णा बुभुक्षा निद्रा च ह्यालस्यं चाघृणादयः ।
आधिश्चापि विषादश्च प्रमादो हीनसत्वता ॥१०७
भयं विक्लवता जाड्यं पापकं मन्युरेव च ।
आशा चाश्रद्दधानत्वमनवस्थाप्यमन्त्रणम् ॥ १०८
आशौचं मलिनत्वं च शूद्रा ह्येते प्रकीर्तिताः ।
यस्मिन्नेते न दृश्यन्ते स वै ब्राह्मण उच्यते ॥१०९
येषुयेषु हि भावेषु यत्कालं वर्तते द्विजः ।
तत्कालं वै स विज्ञेयो ब्राह्मणो ज्ञानदुर्बलः ॥११०
प्राणानायम्य यत्कालं येन मां चापि चिन्तयेत् ।
तत्कालो वै द्विजो ज्ञेयः शेषकालो ह्यथेतरः ॥१११
तस्मात्तु सात्विको भूत्वा शुचिः क्रोधविवर्जितः ।
मामर्चयेत्तु सततं मत्प्रियत्वं यदीच्छति ॥ ११२
अलोलजिह्वः समुपस्थितो धृतिं
निधाय चक्षुर्युगमात्रमेव तत् ।
मनश्च वाचं च निगृह्य चञ्चलं
भयान्निवृत्तो मम भक्त उच्यते ॥ ११३
ईदृशाध्यात्मिनो ये तु ब्राह्मणा नियतेन्द्रियाः ।
तेषां श्राद्धेषु तृप्यन्ति तेन तृप्ताः पितामहाः ॥११४
धर्मो जयति नाधर्मः सत्यं जयति नानृतम् ।
क्षमा जयति न क्रोधः क्षमावान्ब्राह्मणो भवेत् ॥

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि वैष्णवधर्मपर्वणि चतुरधिकशततमोऽध्यायः ॥ १०४ ॥

---

## पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥

कृष्णेन युधिष्ठिरंप्रति दशधा कपिलाविभागकथनपूर्वकं तद्दानप्रशंसनम् ॥ १ ॥

वैशंपायन उवाच ।
दानपुण्यफलं श्रुत्वा तपःपुण्यफलानि च ।
धर्मपुत्रः प्रहृष्टात्मा केशवं पुनरब्रवीत् ॥१
या चैषां कपिला देव पूर्वमुत्पादिता विभो

होमधेनुः सदा पुण्या चतुर्वक्त्रेण माधव ॥ २
सा कथं ब्राह्मणेभ्यो हि देया कस्मिन्दिनेऽपि वा ।
कीदृशाय च विप्राय दातव्या पुण्यलक्षणा ॥ ३
कथिता कपिला प्रोक्ता स्वयमेव स्वयंभुवा ।
कैर्वा देयाश्च ता देव श्रोतुमिच्छामि तत्वतः ॥ ४
वैशंपायन उवाच ।
एवमुक्तो हृषीकेशो धर्मपुत्रेण संसदि ।
अब्रवीत्कपिलासञ्ज्ञां तासां माहात्म्यमेव च ॥५
शृणु पाण्डव तत्वेन पवित्रं पावनं परम् ।
यच्छ्रुत्वा पापकर्मा पि नरः पापात्प्रमुच्यते ॥ ६
अग्निमध्योद्भवां दिव्यामग्निज्वालासमप्रभाम् ।
अग्निज्वालोज्ज्वलच्छृङ्गीं प्रदीप्ताङ्गारलोचनाम् ॥७
अग्निपुच्छामग्निखुरामग्निरोमप्रभान्विताम् ।
तामाग्नेयीमग्निजिह्वामग्निग्रीवां ज्वलत्प्रभाम् ॥ ८
भुञ्जते कपिलां ये तु शूद्रा लोभेन मोहिताः ।
पतितांस्तान्विजानीयाच्चण्डालसदृशा हि ते ॥ ९
न तेषां ब्राह्मणः कश्चिद्गृहे कुर्यात्प्रतिग्रहम् ।
दूराच्च परिहर्तव्या महापातकिनोपि ते ॥ १०
सार्वकालं हि ते सर्वैर्वर्जिताः पितृदैवतैः ।
ते सदा ह्यप्रतिग्राह्या ह्यसंभाष्याश्च पापिनः॥११
पिबन्ति कपिलां यावत्तावत्तेषां पितामहाः ।
अमेध्यमुपभुञ्जन्ति भूम्यां वै श्वसृगालवत् ॥ १२
कपिलाया दधि क्षीरं घृतं तक्रमथापि वा ।
ये शूद्रा उपभुञ्जन्ति तेषां गतिमिमां शृणु ॥ १३
कपिलोपजीवी शूद्रस्तु मृतो गच्छति रौरवम् ।
क्लिश्यते रौरवे घोरे वर्षकोटिशतं वसन् ॥ १४
ततश्चापि च्युतः कालाच्छ्वानयोनिं स गच्छति ।
श्वयोन्याश्च परिभ्रष्टो विष्ठायां जायते क्रिमिः १५
विष्ठाकूपेषु पापिष्ठो दुर्गन्धेषु सहस्रशः ।
तत्रतत्रोपजायेत नोत्तारं तत्र विन्दति ॥ १६
ब्राह्मणश्चैव यस्तेषां गृहे कुर्यात्प्रतिग्रहम् ।
ततः प्रभृति तस्यापि पितरः स्युरमेध्यपाः ॥ १७
न तेन सार्धं संभाषेन्न चाप्येकासनं व्रजेत् ।
स नित्यं वर्जनीयो हि दूरात्तु ब्राह्मणाधमः ॥ १८
यस्तेन सह संभाषेदेकशय्यां व्रजेत वा ।
प्राजापत्यं चरेत्कृच्छ्रं स च तेन विशुद्ध्यति ॥१९
कपिलोपजीविनः शूद्राद्यः करोति प्रतिग्रहम् ।
प्रायश्चित्तं भवेत्तस्य विप्रस्यैतन्न संशयः ॥ २०
ब्रह्मकूर्चं प्रकुर्वीत चान्द्रायणमथापि वा ।
मुच्यते किल्बिषात्तस्मादेतेन ब्राह्मणो हि सः॥२१
कपिला ह्यग्निहोत्रार्थे विप्रार्थे वा स्वयंभुवा ।
सर्वं तेजः समुद्धृत्य निर्मिता ब्रह्मणा पुरा ॥ २२
पवित्रं च पवित्राणां मङ्गलानां च मङ्गलम् ।
पुण्यानां परमं पुण्यं कपिला पाण्डुनन्दन ॥ २३
तपसा तप एवाग्र्यं व्रतानामुत्तमं व्रतम् ।
दानानां परमं दानं निदानं ह्येतदक्षयम् ॥ २४
पृथिव्यां यानि तीर्थानि पुण्यान्यायतनानि च ।
पवित्राणि च रम्याणि सर्वलोकेषु पाण्डव ॥ २५
एभ्यस्तेजः समुद्धृत्य ब्रह्मणा लोककर्तृणा ।
लोकनिस्तरणायैव निर्मिताः कपिलाः स्वयम् २६
सर्वतेजोमयी ह्येषा कपिला पाण्डुनन्दन ।
सदाऽमृतमयी मेध्या शुचिः पावनमुत्तमम् ॥२७
क्षीरेण कपिलायास्तु दध्ना वा सघृतेन वा ।
होतव्यान्यग्निहोत्राणि सायं प्रातर्द्विजातिभिः २८
कपिलाया घृतेनापि दध्ना क्षीरेण वा पुनः ।
जुह्वते योऽग्निहोत्राणि ब्राह्मणा विधिवत्प्रभो ॥२९
पूजयन्त्यतिथींश्चैव परां भक्तिमुपागताः ।
शूद्रान्नाद्विरता नित्यं दंभानृतविवर्जिताः ॥ ३०
ते यान्त्यादित्यसङ्काशैर्विमानैर्द्विजसत्तमाः ।
सूर्यमण्डलमध्येन ब्रह्मलोकमनुत्तमम् ॥ ३१
ब्रह्मणो भवने दिव्ये कामगाः कामरूपिणः ।
ब्रह्मणा पूज्यमानास्तु मोदन्ते कल्पमक्षयम् ॥३२
एवं हि कपिला राजन्पुण्या मन्त्रामृतारणिः ।
आदावेवाग्निमध्ये तु मैत्रेयी ब्रह्मनिर्मिता ॥ ३३
शृङ्गाग्रे कपिलायास्तु सर्वतीर्थानि पाण्डव ।
ब्रह्मणो हि नियोगेन निवसन्ति दिनेदिने ॥३४
प्रातरुत्थाय यो मर्त्यः कपिलाशृङ्गमस्तकात् ।
यश्च्युतामंबुधारां वै शिरसा प्रयतः शुचिः ॥३५

स तेन पुण्यतीर्थेन सहसा हतकिल्बिषः ।
जन्मत्रयकृतं पापं प्रदहत्यग्निवत्तृणम् ॥ ३६
मूत्रेण कपिलायास्तु यश्च प्राणानुपस्पृशेत् ।
स्नानेन तेन पुण्येन नष्टपापः स मानवः ।
त्रिंशद्वर्षकृतात्पापान्मुच्यते नात्र संशयः ॥ ३७
प्रातरुत्थाय यो भक्त्या प्रयच्छेत्तृणमुष्टिकम् ।
तस्य नश्यति तत्पापं त्रिंशद्रात्रकृतं नृप ॥ ३८
प्रातरुत्थाय यद्भक्त्या कुर्याद्यस्मात्प्रदक्षिणम् ।
प्रदक्षिणीकृता तेन पृथिवी नात्र संशयः ॥ ३९
प्रदक्षिणेन चैकेन श्रद्धायुक्तेन पाण्डव ।
दशरात्रकृतं पापं तस्य तन्नश्यति ध्रुवम् ॥ ४०
कपिलापञ्चगव्येन यः स्नायात्तु शुचिर्नरः ।
स गङ्गाद्येषु तीर्थेषु स्नातो भवति पाण्डव ॥ ४१
तेन स्नानेन तस्यापि श्रद्धायुक्तस्य पार्थिव ।
दशरात्रकृतं पापं तत्क्षणादेव नश्यति ॥ ४२
दृष्ट्वा तु कपिलां भक्त्या श्रुत्वा हुङ्कारनिस्वनम् ।
व्यपोहति नरः पापमहोरात्रकृतं नृप ॥ ४३
यत्र वा तत्र वा चाङ्गे कपिलां यः स्पृशेच्छुचिः ।
संवत्सरकृतं पापं विनाशयति पाण्डव ॥ ४४
गोसहस्रं तु यो दद्यादेकां च कपिलां नरः ।
समं तस्य फलं प्राह ब्रह्मा लोकपितामहः ॥ ४५
यस्त्वेवं कपिलां हन्यान्नरः कश्चित्प्रमादतः ।
गोसहस्रं हतं तेन भवेन्नात्र विचारणा ॥ ४६
यश्चैकां कपिलां दद्याच्छ्रोत्रियायाहिताग्नये ।
गवां शतसंहस्रं तु दत्तं भवति पाण्डव ॥ ४७
दश वै कपिलाः प्रोक्ताः स्वयमेव स्वयंभुवा ।
यो दद्याच्छ्रोत्रियेभ्यो वै स्वर्गं गच्छति तच्छृणु ४८
प्रथमा स्वर्णकपिला द्वितीया गौरपिङ्गला ।
तृतीया रक्तपिङ्गाक्षी चतुर्थी गलपिङ्गला ॥ ४९
पञ्चमी बभ्रुवर्णाभा षष्ठी च श्वेतपिङ्गला ।
सप्तमी रक्तपिङ्गाक्षी त्वष्टमी खुरपिङ्गला ॥ ५०
नवमी पाटला ज्ञेया दशमी पुच्छपिङ्गला ।
दशैताः कपिलाः प्रोक्तास्तारयन्ति नरान्सदा ५१
मङ्गल्याश्च पवित्राश्च सर्वपापप्रणाशनाः ।
एवमेव ह्यनड्वाहो दश प्रोक्ता नरेश्वर ॥ ५२
ब्राह्मणो वाहयेत्तांस्तु नान्यो वर्णः कथंचन ।
न वाहयेच्च कपिलां क्षेत्रे वाऽध्वनि वा द्विजः ५३
वाहयेद्धुङ्कृतेनैव शाखया वा सपत्रया ।
न दण्डेन न वा यष्ट्या न पाशेन न वा पुनः ॥५४
न क्षुत्तृष्णाश्रमश्रान्तान्वाहयेद्विकलेन्द्रियान् ।
अतृप्तेषु न भुञ्जीयात्पिबेत्पीतेषु चोदकम् ॥ ५५
शुश्रूषोर्मातरश्चैताः पितरस्ते प्रकीर्तिताः ।
अह्नां पूर्वत्र भागे च धुर्याणां वाहनं स्मृतम् ॥५६
विश्रामेन्मध्यमे भागे भागे चान्ते यथासुखम् ।
यत्र च त्वरया कृत्यं संशयो यत्र वाऽध्वनि ।
वाहयेत्तत्र धुर्यांस्तु न स पापेन लिप्यते ॥ ५७
भ्रूणहत्यासमं पापं तस्य स्यात्पाण्डुनन्दन ।
अन्यथा वाहयन्राजन्निरयं याति रौरवम् ॥ ५८
रुधिरं पातयेत्तेषां यस्तु मोहान्नराधिप ।
तेन पापेन पापात्मा नरकं यात्यसंशयम् ॥ ५९
नरकेषु च सर्वेषु समाः स्थित्वा शतंशतम् ।
इह मानुष्यके लोके बलीवर्दो भविष्यति ॥ ६०
तस्मात्तु मुक्तिमन्विच्छन्दद्यात्तु कपिलां नरः ॥६१
कपिलां वाहयेद्यस्तु वृषलो लोभमोहितः ।
तेन देवास्त्रयस्त्रिंशत्पितरश्चापि वाहिताः ॥ ६२
स देवैः पितृभिर्नित्यं वध्यमानस्तु दुर्मतिः ।
नरकान्नरकं घोरं गच्छेदाप्रलयं नृप ॥ ६३
ब्रह्मा रुद्रस्तथाऽग्निश्च कपिलानां गतिं गताः ।
तस्मात्ते न निहन्तव्याः पूज्याश्चैव न संशयः ।
निःश्वसन्ति यदा श्रान्तास्तदा हन्युश्च तत्कुलं ६४
यावन्ति तेषां रोमाणि तावद्वर्षशतं नृप ।
नरकेषूपपच्यन्ते तत्र तद्वाहका नराः ॥ ६५
कपिला सर्वयज्ञेषु दक्षिणार्थं विधीयते ।
तस्मात्तद्दक्षिणा देया यज्ञेष्वेव द्विजातिभिः ॥ ६६
होमार्थं चाग्निहोत्रस्य यां प्रयच्छेत्प्रयत्नतः ।
श्रोत्रियाय दरिद्राय श्रान्तायामिततेजसे ।
तेन दानेन पूतात्मा मम लोके महीयते ॥ ६७
यावन्ति चैव रोमाणि कपिलाङ्गे युधिष्ठिर ।

तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥ ६८
सुवर्णखुरशृङ्गीं च कपिलां यः प्रयच्छति ।
विषुवे चायने चापि सोऽश्वमेधफलं लभेत् ।
तेनाश्वमेधतुल्येन मम लोकं स गच्छति ॥ ६९
स्वर्णशृङ्गीं रूप्यखुरां सवत्सां कांस्यदोहिनीम् ।
वस्त्रैरलङ्कृतां पुष्टां गन्धैर्माल्यैश्च शोभिताम्॥ ७०
पवित्रं हि पवित्राणां सुवर्णमिति मे मतिः ।
तस्मात्सुवर्णाभरणा दातव्या साऽग्निहोत्रिणे ७१
एवं दत्त्वा तु राजेन्द्र सप्तपूर्वान्परानपि ।
तारयिष्यति राजेन्द्र नात्र कार्या विचारणा ॥७२
अग्निष्टोमसहस्रस्य वाजपेयं च तत्समम् ।
वाजपेयसहस्रस्य अश्वमेधं च तत्समम् ।
अश्वमेधसहस्रस्य राजसूयं च तत्समम् ॥ ७३
कपिलानां सहस्रेण विधिदत्तेन पाण्डव ।
राजसूयफलं प्राप्य मम लोके महीयते ।
न तस्य पुनरावृत्तिर्विद्यते कुरुपुङ्गव ॥ ७४
प्रयच्छते यः कपिलां सवत्सां कांस्यदोहिनीम् ।
सुवर्णखुरशृङ्गाङ्गीं सर्वालङ्कारशोभिताम् ॥ ७५
तैस्तैर्गुणैः कामदुघा च भूत्वा
नरं प्रदातारमुपैति सा गौः ।
स्वकर्मभिश्चाप्यनुबध्यमानं
तीव्रान्धकारे नरके पतन्तम् ।
महार्णवे नौरिव वायुनीता
दत्ता हि गौस्तारयते मनुष्यम् ॥ ७६
पुत्रांश्च पौत्रांश्च कुलं च सर्व-
मासप्तमं तारयते यथावत् ।
यावन्मनुष्यान्पृथिवी बिभर्ति
तावत्प्रदातारमृतं परत्र ॥ ७७
यथौषधं मन्त्रकृतं नरस्य
प्रयुक्तमात्रं विनिहन्ति रोगान् ।
तथैव दत्ता कपिला सुपात्रे
पापं नरस्याशु निहन्ति सर्वम् ॥ ७८
यथैव दृष्ट्वा भुजगाः सुपर्णं
नश्यन्ति दूराद्विवशा भयार्ताः ।
तथैव दृष्ट्वा कपिलाप्रदाना-
न्नश्यन्ति पापानि नरस्य शीघ्रम् ॥ ७९
यथा त्वचं वै भुजगो विहाय
पुनर्नवं रूपमुपैति पुण्यम् ।
तथैव मुक्तः पुरुषः स्वपापै-
र्विरज्यते वै कपिलाप्रदानात् ॥ ८०
यथाऽन्धकारं भवने विलग्नं
दीप्तो हि निर्यातयति प्रदीपः ।
तथा नरः पापमपि प्रलीनं
निष्क्रामयेद्वै कपिलाप्रदानात् ॥ ८१
यावन्ति रोमाणि भवन्ति तस्या
वत्सान्वितायाश्च शरीरजानि ।
तावत्प्रदाता युगवर्षकोटिं
स ब्रह्मलोके रमते मनुष्यः ॥ ८२
यस्याहिताग्नेरतिथिप्रियस्य
शूद्रान्नदूरस्य जितेन्द्रियस्य ।
सत्यव्रतस्याध्ययनान्वितस्य
दत्ता हि गौस्तारयते परत्र ॥ ८३

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि वैष्णवधर्मपर्वणि पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥

## षडधिकशततमोऽध्यायः ॥ १०६ ॥

कृष्णेन युधिष्ठिरंप्रति कपिलादानप्रशंसनम् ॥ १ ॥ ब्रह्मणाऽग्निकुण्डमध्यात्कपिलासर्जनम् । तदा रुद्रादिदेवैः कपिलायै सर्वपूज्यत्वादिरूपवरदानम् ॥ २ ॥ देवर्ष्यादिभिः स्वनिवासाय कपिलावयवसमाश्रयणम् ॥ ३ ॥ कृष्णेन हव्यकव्यदान-कालकथनम् । तथा श्राद्धार्हानर्हब्राह्मणविवेचनम् । तथा स्वर्गनरकप्रापकसुकृतदुष्कृतकथनम् ॥ ४ ॥

वैशंपायन उवाच ।
एवं श्रुत्वा परं पुण्यं कपिलादानमुत्तमम् ।
धर्मपुत्रः प्रहृष्टात्मा केशवं पुनरब्रवीत् ॥
देवदेवेश कपिला यदा विप्राय दीयते ।

कथं सर्वेषु चाङ्गेषु तस्यास्तिष्ठन्ति देवताः ॥ २
याश्चैताः कपिलाः प्रोक्ता दश चैव त्वया मम ।
तासां कति सुरश्रेष्ठ कपिलाः पुण्यलक्षणाः ॥ ३
कथं वाऽनुगृहीतास्ताः सुरैः पितृगणैरपि ।
केन युक्ताश्च वर्णेन श्रोतुं कौतूहलं हि मे ॥ ४
वैशंपायन उवाच ।
युधिष्ठिरेणैवमुक्तः केशवः सत्यवाक्तदा ।
गुह्यानां परमं गुह्यं वक्तुमेवोपचक्रमे ॥ ५
शृणु राजन्पवित्रं वै रहस्यं धर्ममुत्तमम् ।
ग्रहणीयं सत्यमिदं न श्राव्यं हेतुवादिभिः ॥ ६
यदा वत्सस्य पादौ द्वौ प्रसवे शिरसा सह ।
दृश्येते दानकालं तत्तमाहुर्मुनिसत्तमाः ॥ ७
अन्तरिक्षगतो वत्सो यावद्भूमिं न यास्यति ।
गौस्तावत्पृथिवी ज्ञेया तस्माद्देया तु तादृशी ॥ ८
यावन्ति धेन्वा रोमाणि सवत्साया युधिष्ठिर ।
यावत्यः सिकताश्चापि गर्भोदकपरिप्लुताः ।
तावद्वर्षसहस्राणि दाता स्वर्गे महीयते ॥ ९
सुवर्णाभरणां कृत्वा सवत्सां कपिलां तिलैः ।
प्रच्छाद्य तां तु दद्याद्वै सर्वरत्नैरलङ्कृताम् ॥ १०
ससमुद्रा नदी तेन सशैलवनकानना ।
चतुरन्ता भवेद्दत्ता नात्र कार्या विचारणा ॥ ११
पृथिवीदानतुल्येन तेन दानेन मानवः ।
संसारसागरात्तीर्णो याति लोकं प्रजापतेः ॥ १२
ब्रह्महा भ्रूणहा गोघ्नो यदि वा गुरुतल्पगः ।
महापातकयुक्तोपि एतद्दानेन शुद्ध्यति ॥ १३
इदं पठति यः पुण्यं कपिलादानमुत्तमम् ।
प्रातरुत्थाय मद्भक्त्या तस्य पुण्यफलं शृणु ॥ १४
मनसा कर्मणा वाचा मतिपूर्वं युधिष्ठिर ।
पापं रात्रिकृतं हन्यादस्याध्यायस्य पाठकः ॥ १५
इदमावर्तमानस्तु श्राद्धे यस्तर्पयेद्द्विजान् ।
तस्याप्यमृतमश्नन्ति पितरोऽत्यन्तहर्षिताः ॥ १६
यश्चेदं शृणुयाद्भक्त्या मद्गतेनान्तरात्मना ।
तस्य रात्रिकृतं सर्वं पापमाशु प्रणश्यति ॥ १७
अतः परं विशेषं तु कपिलानां ब्रवीमि ते ।
याश्चैताः कपिलाः प्रोक्ता दश राजन्मया तव ।
तासां चतस्रः प्रवराः पुण्याः पापप्रणाशनाः १८
सुवर्णकपिला पुण्या तथा रक्ताक्षिपिङ्गला ।
पिङ्गलाक्षी च या गौश्च या स्यात्पिङ्गलपिङ्गला १९
एताश्चतस्रः प्रवराः पवित्राः पापनाशनाः ।
नमस्कृता वा दृष्टा वा घ्नन्ति पापं नरस्य तु ॥ २०
यस्यैताः कपिलाः सन्ति गृहे पापप्रणाशनाः ।
तत्र श्रीर्विजयः कीर्तिः स्फीता नित्यं युधिष्ठिर २१
एतासां प्रीतिमायाति क्षीरेण तु वृषध्वजः ।
दध्ना च त्रिदशाः सर्वे घृतेन तु हुताशनः ॥ २२
पितरः पितामहाश्चैव तथैव प्रपितामहाः ।
सकृद्दत्तेन तुष्यन्ति वर्षकोटिं युधिष्ठिर ॥ २३
कपिलाया घृतं क्षीरं दधि पायसमेव वा ।
श्रोत्रियेभ्यः सकृद्दत्त्वा नरः पापैः प्रमुच्यते २४
उपवासं तु यः कृत्वाऽप्यहोरात्रं जितेन्द्रियः ।
कपिलापञ्चगव्यं तु पीत्वा चान्द्रायणात्परम् ॥२५
तत्प्राश्य शुद्धात्मा शुद्धमानसः ।
क्रोधानृतविनिर्मुक्तो मद्गतेनान्तरात्मना ॥ २६
कपिलापञ्चगव्येन सुमन्त्रेण पृथक्पृथक् ।
यो मत्प्रतिकृतिं वाऽपि शङ्कराकृतिमेव वा ।
स्नापय यस्तु सोऽश्वमेधफलं लभेत् ॥ २७
स मुक्तपापः शुद्धात्मा यानेनांबरशोभिना ।
मम लोकं व्रजेन्मुक्तो रुद्रलोकमथापि वा ॥ २८
ब्रह्मणा तु पुरा सृष्टा कपिला काञ्चनप्रभा ।
अग्निकुण्डात्परैर्मन्त्रैर्होमधेनुर्महाप्रभा ॥ २९
सृष्टमात्रां तु तां दृष्ट्वा देवा रुद्रादयो दिवि ।
सिद्धा ब्रह्मर्षयश्चैव वेदाः साङ्गाः सहाध्वरैः ॥३०
सागराः सरितश्चैव पर्वताः सबलाहकाः ।
गन्धर्वाप्सरसो यक्षाः पन्नगाश्चाप्युपस्थिताः ॥३१
सर्वे विस्मयमापन्नाः शिखिमध्ये महाप्रभाम् ।
मन्त्रैश्च विविधैस्तां तु तुष्टुवुस्तामनेकशः ॥ ३२
कृताञ्जलिपुटाः सर्वे नीतिशृङ्गीं त्रिलोचनाम् ।
मूर्ध्ना प्रणम्य तां भूमौ सवत्साममृतारणिम् ३३
ऊचुः प्राञ्जलयः सर्वे चतुर्वक्त्रं पितामहम् ।

आज्ञापय महादेव किं ते कुर्मः कथं विभो ॥३४
एवमुक्तः सुरैः सर्वैर्ब्रह्मा वचनमब्रवीत्।
भवन्तोप्यनुगृह्णन्तु दोग्ध्रीमेनां पयस्विनीम्॥३५
होमधेनुरियं ज्ञेया ह्यग्नीन्संतर्पयिष्यति।
अतोऽग्निस्तर्पितः सर्वान्भवतस्तर्पयिष्यति ॥ ३६
प्रीताः क्षीरामृतेनास्या जातवीर्यपराक्रमाः।
जयिष्यथ यथाकामं दानवान्सर्व एव तु ॥ ३७
जातवीर्यबलैर्युक्ताः सत्ववन्तो जितेन्द्रियाः।
असङ्ख्येयबलाः सर्वे पालयिष्यथ वै प्रजाः ॥ ३८
पालिताश्च प्रजाः सर्वा भवद्भिरिह धर्मतः।
पूजयिष्यन्ति वा नित्यं यज्ञैर्विविधदक्षिणैः ॥३९
एवमुक्ताः सुराः सर्वे ब्रह्मणा परमेष्ठिना
ततः संहृष्टवदनाः कपिलायै वरं ददुः ॥ ४०
देवता ऊचुः।
यस्माल्लोकहितायाद्य ब्रह्मणा त्वं विनिर्मिता।
तस्मात्पूता पवित्रा च भव पापव्यपोहिनी ॥४१
ये त्वां दृष्ट्वा नमस्यन्ति स्पृष्ट्वा चापि करैर्नराः।
तेषां वर्षकृतं पापं त्वद्भक्तानां प्रणश्यति ॥ ४२
अकामकृतमज्ञानमदृष्टं यच्च पातकम्।
त्वां दृष्ट्वा ये नमस्यन्ति नराः सर्वसहेति च।
तेषां तद्विलयं याति तमः सूर्योदये यथा ॥ ४३
भगवानुवाच।
इत्युक्त्वाऽस्यै वरं दत्त्वा प्रययुस्ते यथागतम्।
लोकनिस्तरणार्थाय सा च लोकांश्चचार ह ॥४४
तस्यामेव समुद्भूता ह्येताश्च कपिला नव।
विचरन्ति महीमेनां लोकानुग्रहकारणात्।
तस्मात्तु कपिला देया परत्र हितमिच्छता ॥ ४५
यदा च दीयते राजन्कपिला ह्यग्निहोत्रिणे।
तदा च शृङ्गयोस्तस्या विष्णुरिन्द्रश्च तिष्ठति॥४६
चन्द्रवज्रधरौ चापि तिष्ठतः शृङ्गमूलयोः।
शृङ्गमध्ये तथा ब्रह्मा ललाटे गोवृषध्वजः ॥ ४७
कर्णयोरश्विनौ देवौ चक्षुषी शशिभास्करौ।
दन्तेषु मरुतो देवा जिह्वायां वाक्सरस्वती ॥ ४८
प्रजापतिः।
निश्श्वासेषु स्थिता वेदाः सषडङ्गपदक्रमाः ॥४९
नासापुटे स्थिता गन्धाः पुष्पाणि सुरभीणि च।
अधरे वसवः सर्वे मुखे चाग्निः प्रतिष्ठितः ॥ ५०
साध्या देवाः स्थिताः कक्षे ग्रीवायां पार्वती स्थिता।
पृष्ठे च नक्षत्रगणाः ककुद्देशे नभस्स्थलम् ॥ ५१
अपाने सर्वतीर्थानि गोमूत्रे जाह्नवी स्वयम्।
इष्टतुष्टमया लक्ष्मीर्गोमये वसती तदा ॥ ५२
नासिकायां सदा देवी ज्येष्ठा वसति भामिनी।
श्रोणीतटस्थाः पितरो रमा लाङ्गूलमाश्रिता॥५३
पार्श्वयोरुभयोः सर्वे विश्वेदेवाः प्रतिष्ठिताः।
तिष्ठत्युरसि तासां तु प्रीतः शक्तिधरो गुहः॥५४
जानुजङ्घोरुदेशेषु पञ्च तिष्ठन्ति वायवः।
खुरमध्येषु गन्धर्वाः खुराग्रेषु च पन्नगाः ॥ ५५
चत्वारः सागराः पूर्णास्तस्या एव पयोधराः ॥
रतिर्मेधा क्षमा स्वाहा श्रद्धा शान्तिर्धृतिः स्मृतिः॥
कीर्तिर्दीप्तिः क्रिया कान्तिस्तुष्टिः पुष्टिश्च सन्ततिः।
दिशश्च प्रदिशश्चैव सेवन्ते कपिलां सदा ॥ ५७
देवाः पितृगणाश्चापि गन्धर्वाप्सरसां गणाः।
लोका द्वीपार्णवाश्चैव गङ्गाद्याः सरितस्तथा ॥५८
देवाः पितृगणाश्चापि वेदाः साङ्गाः सहाध्वरैः।
वेदोक्तैर्विविधैर्मन्त्रैः स्तुवन्ति हृषितास्तथा ॥ ५९
विद्याधराश्च ये सिद्धा भूतास्तारागणास्तथा।
पुष्पवृष्टिं च वर्षन्ति प्रनृत्यन्ति च हर्षिताः॥ ६०
ब्रह्मणोत्पादिता देवी वह्निकुण्डान्महाप्रभा।
नमस्ते कपिले पुण्ये सर्वदेवैर्नमस्कृते ॥ ६१
कपिलेऽथ महासत्त्वे सर्वतीर्थमये शुभे।
दातारं स्वजनोपेतं ब्रह्मलोकं नय स्वयम् ॥ ६२
अहो रत्नमिदं पुण्यं सर्वदुःखघ्नमुत्तमम्।
अहो धर्मार्जितं शुद्धमिदमग्र्यं महाधनम्।
इत्याकाशस्थितास्ते तु सर्वदेवाः जपन्ति च॥ ६३
तस्याः प्रतिग्रहीता च भुङ्क्ते यावद्द्विजोत्तमः।
तावद्देवगणाः सर्वे कपिलामर्चयन्ति च।
स्वर्णशृङ्गीं रूप्यखुरां गन्धैः पुष्पैः सुपूजिताम्॥६४
वस्त्राभ्यामहताभ्यां तु यावत्तिष्ठत्यलङ्कृता।

तावद्यदिच्छेत्कपिला मन्त्रपूता सुसंस्कृता ।
भूलोकवासिनः सर्वान्ब्रह्मलोकं नयेत्स्वयम् ॥६५
भूरश्वः कनकं गावो रूप्यमश्वं तिला यवाः ।
दीयमानानि विप्राय प्रहृष्यन्ति दिनेदिने ॥ ६६
अथ त्वश्रोत्रियेभ्यो वै तानि दत्तानि पाण्डव ।
तथा निन्दन्त्यथात्मानमशुभं किंनु नः कृतं ६७
अहो रक्षःपिशाचैश्च लुप्यमानाः समन्ततः ।
यास्यामो निरयं शीघ्रमिति शोचन्ति तानि वै॥६८
एतान्यपि द्विजेभ्यो वै श्रोत्रियेभ्यो विशेषतः ।
दीयमानानि वर्धन्ते दातारं तारयन्ति च ॥ ६९
युधिष्ठिर उवाच ।
देवदेवेश दैत्यघ्न कालः को हव्यकव्ययोः ।
के तत्र पूजामर्हन्ति वर्जनीयाश्च के द्विजाः ॥७०
भगवानुवाच ।
दैवं पूर्वाह्णिकं ज्ञेयं पैतृकं चापराह्णिकम् ।
कालहीनं च यद्दानं तद्दानं राजसं विदुः ॥ ७१
अवघुष्टं च यद्भुक्तमनृतेन च भारत ।
परामृष्टं शुना वाऽपि तद्भागं राक्षसं विदुः॥७२
यावन्तः पतिता विप्रा जडोन्मत्तादयोपि च ।
दैवे च पित्र्ये ते विप्रा राजन्नार्हन्ति सत्क्रियां ७३
क्लीबः प्लुङ्गी च कुष्ठी च राजयक्ष्मान्वितश्च यः ।
अपस्मारी च यश्चापि पित्र्ये नार्हति सत्कृतिम्॥७४
चिकित्सका देवलका मिथ्यानियमधारिणः ।
सोमविक्रयिणश्चापि श्राद्धे नार्हन्ति सत्कृतिम् ७५
एकोद्दिष्टे च ये चान्नं भुञ्जते विधिवद्द्विजाः ।
चान्द्रायणमकृत्वा ते पुनर्नार्हन्ति सत्कृतिम् ७६
गायका नर्तकाश्चैव प्लवका वादकास्तथा ।
कथका यौधिकाश्चैव श्राद्धे नार्हन्ति सत्कृतिम् ७७
अनग्नयश्च ये विप्राः शवनिर्यातकाश्च ये ।
स्तेनाश्चापि विकर्मस्था राजन्नार्हन्ति सत्कृतिम्७८
अपरिज्ञातपूर्वाश्च गणपुत्राश्च ये द्विजाः ।
पुत्रिकापुत्रकाश्चापि श्राद्धे नार्हन्ति सत्कृतिम् ७९
रणकर्ता च यो विप्रो यश्च वाणिज्यको द्विजः ।
प्राणिविक्रयवृत्तिश्च श्राद्धे नार्हन्ति सत्कृतिम् ८०
चीर्णव्रतगुणैर्युक्ता नित्यं स्वाध्यायतत्पराः ।
सावित्रीज्ञाः क्रियावन्तस्ते श्राद्धे सत्कृतिक्षमाः ८१
श्राद्धस्य ब्राह्मणः कालः प्राप्तं दधि घृतं तथा
दर्भाः सुमनसः क्षेत्रं तत्काले श्राद्धदो भवेत्॥८२
चारित्रनिरता राजन्कृशा ये कृशवृत्तयः ।
अर्थिनश्चोपगच्छन्ति तेभ्यो दत्तं महत्फलम् ॥८३
तपस्विनश्च ये विप्रास्तथा भैक्षचराश्च ये ।
अर्थिनः केचिदिच्छन्ति तेषां दत्तं महत्फलम् ८४
एवं धर्मभृतां श्रेष्ठ ज्ञात्वा सर्वात्मना तदा ।
श्रोत्रियाय दरिद्राय प्रयच्छानुपकारिणे ॥ ८५
दानं यत्ते प्रियं किंचिच्छ्रोत्रियाणां च यत्प्रियम् ।
तत्प्रयच्छस्व धर्मज्ञ यदीच्छसि तदक्षयम् ॥ ८६
निरयं ये च गच्छन्ति तच्छृणुष्व युधिष्ठिर ॥ ८७
वा भयार्थं वा नोचेदन्यत्र पाण्डव
वदन्ति येऽनृतं विप्रास्ते वै निरयगामिनः ॥ ८८
परदारापहर्तारः परदाराभिमर्शकाः ।
परदारप्रयोक्तारस्ते वै निरयगामिनः ॥ ८९
सूचकाः संधिभेत्तारः परद्रव्योपजीविनः ।
अकृतज्ञाश्च मित्राणां ते वै निरयगामिनः ॥ ९०
वर्णाश्रमाणां ये बाह्याः पाषण्डाश्चैव पापिनः ।
उपासते च तानेव ते सर्वे नरकालयाः ॥ ९१
वेदविक्रयिणश्चैव वेदानां चैव दूषकाः ।
वेदानां लेखकाश्चैव ते वै निरयगामिनः ॥ ९२
रसविक्रयिणो राजन्विषविक्रयिणश्च ये ।
क्षीरविक्रयिणश्चापि ते वै निरयगामिनः ॥ ९३
चण्डालेभ्यश्च ये क्षीरं प्रयच्छन्ति नराधमाः ।
अर्थार्थमथवा स्नेहात्ते वै निरयगामिनः ॥ ९४
पशूनां दमकाश्चैव तथा नासानुवेधकाः ।
पुंस्त्वहिंसाकराश्चैव ते वै निरयगामिनः ॥ ९५
अदातारः समर्था ये द्रव्याणां लोभकारणात् ।
दीनानन्धान्न पश्यन्ति ते वै निरयगामिनः ॥ ९६
क्षान्तान्दान्तान्कृशान्प्राज्ञान्दीर्घकालं सहोषितान्
त्यजन्ति कृतकृत्या ये ते वै निरयगामिनः ॥ ९७
बालानामपि वृद्धानां श्रान्तानां चापि ये नराः ।

अदत्त्वाऽश्नन्ति मृष्टान्नं ते वै निरयगामिनः ॥९८
एते पूर्वर्षिभिः प्रोक्ता नरा निरयगामिनः ।
ये स्वर्गं समनुप्राप्तास्ताञ्शृणुष्व युधिष्ठिर ॥ ९९
दानेन तपसा चैव सत्येन च दमेन च ।
ये धर्ममनुवर्तन्ते ते नराः स्वर्गगामिनः ॥ १००
शुश्रूषयाऽप्युपाध्यायाच्छ्रुतमादाय पाण्डव ।
ये प्रतिग्रहनिस्स्नेहास्ते नराःस्वर्गगामिनः ॥ १०१
मधुमांसासवेभ्यस्तु निवृत्ता व्रतवत्तु ये ।
परदारनिवृत्ता ये ते नराः स्वर्गगामिनः ॥ १०२
मातरं पितरं चैव शुश्रूषन्ति च ये नराः ।
भ्रातॄणामपि सस्नेहास्ते नराः स्वर्गगामिनः १०३
ये तु भोजनकाले तु निर्याताश्चातिथिप्रियाः ।
द्वाररोधं न कुर्वन्ति ते नराः स्वर्गगामिनः ॥१०४
वैवाहिकं तु कन्यानां दरिद्राणां च ये नराः ।
कारयन्ति च कुर्वन्ति ते नराः स्वर्गगामिनः१०५
रसानामथ बीजानामोषधीनां तथैव च ।
दातारः श्रद्धयोपेतास्ते नराः स्वर्गगामिनः ॥ १०६
क्षेमाक्षेमं च मार्गेषु समानि विषमाणि च ।
अर्थिनां ये च वक्ष्यन्ति ते नराः स्वर्गगामिनः ॥
पर्वद्वये चतुर्दश्यामष्टम्यां संध्ययोर्द्वयोः ।
आर्द्रायां जन्मनक्षत्रे विषुवे श्रवणेऽथवा ।
ये ग्राम्यधर्मविरतास्ते नराः स्वर्गगामिनः ॥ १०८
हव्यकव्यविधानं च नरकस्वर्गगामिनौ ।
धर्माधर्मौ च कथितौ किं भूयः श्रोतुमिच्छसि १०९

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि वैष्णवधर्मपर्वणि षडधिकशततमोऽध्यायः ॥ १०६ ॥

## सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥

कृष्णेन युधिष्ठिरंप्रति साक्षाद्ब्रह्महत्याया अकरणेपि तत्तुल्यफलकदुष्कृतकथनम् ॥ १ ॥ तथा अभोज्यान्नानां पापिनां लक्षणकथनम् ॥ २ ॥

युधिष्ठिर उवाच ।
इदं मे तत्वतो देव वक्तुमर्हस्यशेषतः ।
हिंसामकृत्वा यो मर्त्यो ब्रह्महत्यामवाप्नुयात् ॥१
भगवानुवाच ।
ब्राह्मणं स्वयमाहूय भिक्षार्थं वृत्तिकर्शितम् ।
ब्रूयान्नास्तीति यः पश्चात्तमाहुर्ब्रह्मघातकम् ॥ २
मध्यस्थस्येह विप्रस्य योऽनूचानस्य भारत ।
वृत्तिं हरति दुर्बुद्धिस्तमाहुर्ब्रह्मघातकम् ॥ ३
आश्रमे वाऽऽलये वाऽपि ग्रामे वा नगरेऽपि वा ।
अग्निं यः प्रक्षिपेत्क्रुद्धस्तमाहुर्ब्रह्मघातकम् ॥ ४
गोकुलस्य तृषार्तस्य जलान्ते वसुधाधिप ।
उत्पादयति यो विघ्नं तमाहुर्ब्रह्मघातकम् ॥ ५
यः प्रवृत्तां श्रुतिं सम्यक्छास्त्रं वा मुनिभिः कृतम् ।
दूषयत्यनभिज्ञाय तमाहुर्ब्रह्मघातकम् ॥ ६
चक्षुषा वाऽपि हीनस्य पङ्गोर्वाऽपि जडस्य वा ।
हरेद्वै यस्तु सर्वस्वं तमाहुर्ब्रह्मघातकम् ॥ ७
गुरुं त्वंकृत्य हुंकृत्य अतिक्रम्य च शासनम् ।
वर्तते यस्तु मूढात्मा तमाहुर्ब्रह्मघातकम् ॥ ८
क्रोधाद्वा यदि वा द्वेषादाकृष्टस्तर्जितोपि वा ।
ऋतौ स्त्रियं वा नोपेयात्तमाहुर्ब्रह्मघातकम् ॥ ९
यावत्सारो भवेद्दीनस्तन्नाशे यस्य दुःस्थितिः ।
तत्सर्वस्वं हरेद्यो वै तमाहुर्ब्रह्मघातकम् ॥ १०
युधिष्ठिर उवाच ।
सर्वेषामपि दानानां यत्तु दानं विशिष्यते ।
अभोज्यान्नाश्च ये विप्रास्तान्ब्रवीहि सुरोत्तम ॥११
भगवानुवाच ।
अन्नमेव प्रशंसन्ति देवा ब्रह्मपुरस्सराः ।
अन्नेन सदृशं दानं न भूतं न भविष्यति ॥ १२
अन्नमूर्जस्करं लोके ह्यन्नात्प्राणाः प्रतिष्ठिताः ।
अभोज्यान्नान्मया राजन्वक्ष्यमाणान्निबोध मे १३
दीक्षितस्य कदर्यस्य क्रुद्धस्य निकृतस्य च
अभिशप्तस्य षण्डस्य पाकभेदकरस्य च ॥ १४
चिकित्सकस्य दूतस्य तथा चोच्छिष्टभोजिनः ।
उग्रान्नं सूतकान्नं च शूद्रोच्छेषणमेव च ॥ १५

द्विषदन्नं न भोक्तव्यं पतितान्नं च यच्छुतम् ।
तथा च पिशुनस्यान्नं यज्ञविक्रयिणस्तथा ॥ १६
तन्तुवायान्नं कृतघ्नस्यान्नमेव च ।
अंबष्ठकनिषादानां रङ्गावतरकस्य च ॥ १७
सुवर्णकर्तुर्वैणस्य शस्त्रविक्रयिणस्तथा ।
सूतानां शौण्डिकानां च वैद्यस्य रजकस्य च १८
स्त्रीजितस्य नृशंसस्य तथा माहिषिकस्य च ।
अनिर्दशानां प्रेतानां गणिकानां तथैव च ॥१९
बन्दिनो द्यूतकर्तुश्च तथा द्यूतविदामपि ।
परिवित्तस्य यच्चान्नं परिवेत्तुस्तथैव च ॥ २०
यश्चाग्रदिधिषुर्विप्रो दिधिषूपपतिस्तथा ।
तयोरप्युभयोरन्नं राज्ञां चापि विवर्जयेत् ॥ २१
राजान्नं तेज आदत्ते शूद्रान्नं ब्रह्मवर्चसम् ।
आयुः सुवर्णकारान्नं यशश्चर्मावकृन्तिनः ॥ २२
गणान्नं गणिकान्नं च लोकेभ्यः परिकीर्तितम् ।
पूयं चिकित्सकस्यान्नं शुक्रं तु वृषलीपतेः ॥ २३
विष्ठा वार्धुषिकस्यान्नं तस्मात्तत्परिवर्जयेत् ।
तेषां त्वगस्थिरोमाणि भुङ्क्ते योऽन्नं तु भक्षयेत् २४
अमात्यान्नमथैतेषां भुक्त्वा तु त्रियहं क्षिपेत् ।
मत्या भुक्त्वा सकृद्वाऽपि प्राजापत्यं चरेद्द्विजः २५
दानानां च फलं यद्वै शृणु पाण्डव तत्वतः ।
जलदस्तृप्तिमाप्नोति सुखमक्षयमन्नदः ॥ २६
तिलदश्च प्रजामिष्टां दीपदश्चक्षुरुत्तमम् ।
भूमिदो भूमिमाप्नोति दीर्घमायुर्हिरण्यदः ॥ २७
गृहदोऽग्र्याणि वेश्मानि रूप्यदो रूपमुत्तमम् ।
वासोदश्चन्द्रसालोक्यमश्विसालोक्यमश्वदः ॥ २८
अनडुद्दः श्रियं जुष्टां गोदो गोलोकमश्नुते ।
यानशय्याप्रदो भार्यामैश्वर्यमभयप्रदः ॥ २९
धान्यदः शाश्वतं सौख्यं ब्रह्मदो ब्रह्मसाम्यताम् ।
सर्वेषामेव दानानां ब्रह्मदानं विशिष्यते ॥ ३०
हिरण्यभूगवाश्वाजवस्त्रशय्यासनप्रदिषु ।
योऽर्चितः प्रतिगृह्णाति दद्यादुचितमेव च ।
तावुभौ गच्छतः स्वर्गं नरकं च विपर्यये ॥ ३१
अनृतं न वदेद्विद्वांस्तपस्तप्त्वा न विस्मयेत् ।
नार्तोऽप्यभिभवेद्विप्रान्न दत्त्वा परिकीर्तयेत् ॥ ३२
यज्ञोऽनृतेन क्षरति तपः क्षरति विस्मयात् ।
आयुर्विप्रावमानेन दानं तु परिकीर्तनात् ॥ ३३
एकः प्रजायते जन्तुरेक एव प्रमीयते ।
एकोऽनुभुङ्क्ते सुकृतमेकश्चाप्नोति दुष्कृतम् ॥ ३४
मृतं शरीरमुत्सृज्य काष्ठलोष्टसमं क्षितौ ।
विमुखा बान्धवा यान्ति धर्मस्तमनुवर्तते ॥ ३५
अनागतानि कार्याणि कर्तुं गणयते मनः ।
शरीरकं समुद्दिश्य स्मयते नूनमन्तकः ॥ ३६
तस्माद्धर्मसहायस्तु धर्मं संचिनुयात्सदा ।
धर्मेण हि सहायेन तमस्तरति दुस्तरम् ॥ ३७
येषां तटाकानि बहूदकानि
सभाश्च कूपाश्च शुभाः प्रपाश्च ।
अन्नप्रदानं मधुरा च वाणी
यमस्य ते निर्विषया भवन्ति ॥ ३८

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि वैष्णवधर्मपर्वणि सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥

## अष्टाधिकशततमोऽध्यायः ॥ १०८ ॥

कृष्णेन युधिष्ठिरंप्रति यत्यग्निमहिमानुवर्णनम् ॥ १ ॥ दानपात्रब्राह्मणलक्षणकथनम् ॥ २ ॥ तथाऽन्नदानप्रशंसनम् ॥ ३ ॥

युधिष्ठिर उवाच ।
अनेकान्तं बहुद्वारं धर्ममाहुर्मनीषिणः ।
किंलक्षणोऽसौ भवति तन्मे ब्रूहि जनार्दन ॥ १
भगवानुवाच ।
शृणु राजन्समासेन धर्मशौचविधिक्रमम् ।
अहिंसा शौचमक्रोधमानृशंस्यं दमः शमः ।
आर्जवं चैव राजेन्द्र निश्चितं धर्मलक्षणम् ॥ २
ब्रह्मचर्यं तपः क्षान्तिर्मधुमांसस्य वर्जनम् ।
मर्यादायां स्थितिश्चैव शमः शौचस्य लक्षणम् ॥ ३
बाल्ये विद्यां निषेवेत यौवने दारसंग्रहम् ।

वार्धके मौनमातिष्ठेत्सर्वदा धर्ममाचरेत् ॥
ब्राह्मणान्नावमन्येत गुरून्परिवदेन्न च ।
यतीनामनुकूलः स्यादेष धर्मः सनातनः ॥ ५
यतिर्गुरुर्द्विजातीनां वर्णानां ब्राह्मणो गुरुः ।
पतिरेव गुरुः स्त्रीणां सर्वेषां पार्थिवो गुरुः ॥ ६
यद्गृहस्थार्जितं पापं ज्ञानतोऽज्ञानतोपि वा ।
निर्दहिष्यति तत्सर्वमेकरात्रोषितो यतिः ॥ ७
दुर्वृत्ता वा सुवृत्ता वा ज्ञानिनोऽज्ञानिनोपि वा ।
गृहस्थैर्यतयः पूज्याः परत्र हितकाङ्क्षिभिः ॥ ८
एकदण्डी त्रिदण्डी वा शिखी वा मुण्डितोपि वा ।
काषायदण्डधारोपि यतिः पूज्यो न संशयः ॥९
अपूजितो गृहस्थैर्वा तथा चाप्यवमानितः ।
यतिर्वाऽप्यतिथिर्वाऽपि नरके पातयिष्यतः ॥१०
तस्मात्तु यत्नतः पूज्या मद्भक्ता मत्परायणाः ।
मयि संन्यस्तकर्माणः परत्र हितकाङ्क्षिभिः ॥ ११
प्रहरेन्न द्विजान्विप्रो गां न हन्यात्कदाचन ।
भ्रूणहत्यासमं चैव उभयं यो निषेवते ॥ १२
नाग्निं मुखेनोपधमेन्न च पादौ प्रतापयेत् ।
नाधः कुर्यात्कदाचित्तु न पृष्ठं परितापयेत् ॥१३
नान्तरा गमनं कुर्यान्न चामेध्यं विनिक्षिपेत् ।
उच्छिष्टो न स्पृशेदग्निमाशौचस्थो न जातुचित् ॥
श्वचण्डालादिभिः स्पृष्टो नाङ्गमग्नौ प्रतापयेत् ।
सर्वदेवमयो वह्निस्तस्माच्छुद्धः सदा स्पृशेत् ॥१५
प्राप्तमूत्रपुरीषस्तु न स्पृशेद्वह्निमात्मवान् ।
यावत्तु धारयेद्वेगं तावदप्रयतो भवेत् ॥ १६
पचनाग्निं न गृह्णीयात्परवेश्मनि जातुचित् ।
तस्मिन्पक्वेन चान्नेन यत्कर्म कुरुते शुभम् ॥ १७
तस्यैव तच्छुभस्यार्धमग्निदस्य भवेन्नृप ।
तस्माद्गृहगतं वह्निं प्रकुर्यादविनाशितम् ॥ १८
प्रमादाद्यदि वाऽज्ञानात्तस्य नाशो भविष्यति ।
गृह्णीयात्तु मथित्वा वा श्रोत्रियागारतोपि वा१९
युधिष्ठिर उवाच ।
कीदृशाः साधवो विप्रास्तेभ्यो दत्तं महाफलम् ।
कीदृशेभ्यो हि दातव्यं तन्मे ब्रूहि जनार्दन॥२०

भगवानुवाच ।
अक्रोधनाः सत्यपरा धर्मनित्या जितेन्द्रियाः ।
तादृशाः साधवो विप्रास्तेभ्यो दत्तं महाफलम् २१
अमानिनः सर्वसहा दृष्टार्था विजितेन्द्रियाः ।
सर्वभूतहिता मैत्रास्तेभ्यो दत्तं महाफलम् ॥ २२
अलुब्धाः शुचयो वैद्या ह्रीमन्तः सत्यवादिनः ।
स्वधर्मनिरता ये तु तेभ्यो दत्तं महाफलम् ॥२३
साङ्गांश्च चतुरो वेदान्योऽधीयेत दिनेदिने ।
शूद्रान्नं यस्य नो देहे तत्पात्रमृषयो विदुः ॥२४
प्रज्ञाश्रुताभ्यां वृत्तेन शीलेन च समन्वितः ।
तारयेत्तत्कुलं सर्वमेकोपीह युधिष्ठिर ॥ २५
गामश्वमन्नं वित्तं वा तद्विधे प्रतिपादयेत् ।
निशम्य तु गुणोपेतं ब्राह्मणं साधुसंमतम् ।
दूरादाहृत्य सत्कृत्य तं प्रयत्नेन पूजयेत् ॥ २६
युधिष्ठिर उवाच ।
धर्माधर्मविधिस्त्वेवं भीमं भीष्मेण भाषितम् ।
भीष्मवाक्यात्सारभूतं वद धर्मं सुरेश्वर ॥ २७
भगवानुवाच ।
अन्नेन धार्यते सर्वं जगदेतच्चराचरम् ।
अन्नात्प्रभवति प्राणः प्रत्यक्षं नास्ति संशयः २८
कलत्रं पीडयित्वा तु देशे काले च शक्तितः ।
दातव्यं भिक्षवे चान्नमात्मनो भूतिमिच्छता २९
विप्रमध्वपरिश्रान्तं बालं वृद्धमथापि वा ।
अर्चयेद्गुरुवत्प्रीतो गृहस्थो गृहमागतम् ॥ ३०
क्रोधमुत्पतितं हित्वा सुशीलो वीतमत्सरः ।
अर्चयेदतिथिं प्रीतः परत्र हितभूतये ॥ ३१
अतिथिं नावमन्येत नानृतां गिरमीरयेत् ।
न पृच्छेद्गोत्रचरणं नाधीतं वा कदाचन ॥ ३२
चण्डालो वा श्वपाको वा काले यः कश्चिदागतः ।
अन्नेन पूजनीयः स्यात्परत्र हितमिच्छता ॥ ३३
पिधाय तु गृहद्वारं भुङ्क्ते योऽन्नं प्रहृष्टवान् ।
स्वर्गद्वारपिधानं वै कृतं तेन युधिष्ठिर ॥ ३४
पितॄन्देवानृषीन्विप्रानतिथींश्च निराश्रयान् ।
यो नरः प्रीणयत्यन्नैस्तस्य पुण्यफलं महत् ॥ ३५

कृत्वा तु पापं बहुशो यो दद्यादन्नमर्थिने ।
ब्राह्मणाय　　　　　　　: प्रमुच्यते ॥ ३६
अन्नदः प्राणदो लोके प्राणदः सर्वदो भवेत् ।
तस्मादन्नं विशेषेण दातव्यं भूतिमिच्छता ॥ ३७
अन्नं ह्यमृतमित्याहुरन्नं प्रजननं स्मृतम् ।
अन्नप्रणाशे सीदन्ति शरीरे पञ्च धातवः ॥ ३८
बलं बलवतो नश्येदन्नहीनस्य देहिनः ।
तस्मादन्नं विशेषेण श्रद्धयाऽश्रद्धयापि वा ॥ ३९
आदत्ते हि रसं सर्वमादित्यः स्वगभस्तिभिः ।
वायुस्तस्मात्समादाय रसं मेघेषु धारयेत् ॥ ४०
तत्तु मेघगतं भूमौ शक्रो वर्षति तादृशम् ।
तेन दिग्धा भवेद्देवी मही प्रीता च भारत ॥ ४१
तस्यां सस्यानि रोहन्ति यैर्जीवन्त्यखिलाः प्रजाः।
मांसमेदोस्थिमज्जानां संभवस्तेभ्य एव हि ॥ ४२
एवं सूर्यश्च पवनो मेघः शक्रस्तथैव च ।
एक एव स्थितो राशिर्यतो भूतानि जज्ञिरे ॥ ४३
भवनानि च दिव्यानि दिवि तेषां महात्मनाम् ।
नानासंस्थानि भूतानि नानाभूमिगतानि च ४४
चन्द्रमण्डलशुभ्राणि किङ्किणीजालवन्ति च ।
तरुणादित्यवर्णानि स्थावराणि चराणि च ॥ ४५
अनेकशतसङ्ख्यानि सान्तर्जलवनानि च
तत्र पुष्पफलोपेताः कामदाः सुरपादपाः ॥ ४६
वाप्यो बद्धसभाः कूपा दीर्घिकाश्च सहस्रशः ।
भक्ष्यभोज्यमयाः शैला वासांस्याभरणानि च ४७
क्षीरस्रवन्त्यः सरितस्तथा चैवान्नपर्वताः ।
घोषवन्ति च यानानि युक्तान्यथ सहस्रशः ॥ ४८
प्रासादप्रवराः शुभ्राः शय्याश्च कनकोज्ज्वलाः ।
अन्नदास्तत्र तिष्ठन्ति तस्मादन्नप्रदो भवेत् ॥ ४९

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि वैष्णवधर्मपर्वणि अष्टोत्तरशततमोऽध्यायः ॥ १०८ ॥

---

## नवाधिकशततमोऽध्यायः ॥ १०९ ॥

कृष्णेन युधिष्ठिरंप्रति भोजनविधिकथनम् ॥ १ ॥ तथा गोग्रासदानप्रकारकथनम् ॥ २ ॥ तथा तिलप्रशंसनपूर्वकं तैषामिक्षूणां च ब्राह्मणेन स्वयं यन्त्रे निपीडनप्रतिषेधनम् ॥ ३ ॥

युधिष्ठिर उवाच ।
अन्नदानफलं श्रुत्वा प्रीतोस्मि मधुसूदन ।
भोजनस्य विधिं वक्तुं देवदेव त्वमर्हसि ॥ १
भगवानुवाच ।
भोजनस्य द्विजातीनां विधानं शृणु पाण्डव ।
स्नातः शुचिः शुचौ देशे निर्जने हुतपावकः ॥ २
मण्डलं कारयित्वा च चतुरश्रं द्विजोत्तमः ।
क्षत्रियश्चेत्ततो वृत्तं वैश्योऽर्धेन्दुसमाकृतिम् ॥ ३
आर्द्रपादस्तु भुञ्जीयात्प्राङ्मुखश्चासने शुचौ ।
पादाभ्यां धरणीं स्पृष्ट्वा पादेनैकेन वा पुनः ॥ ४
नैकवासास्तु भुञ्जीयान्न चान्तर्धाय वा द्विजः ।
न भिन्नपात्रे भुञ्जीत पर्णपृष्ठे तथैव च ॥ ५
अन्नं पूर्वं नमस्कुर्यात्प्रहृष्टेनान्तरात्मना ।
नान्यदालोकयेदन्नान्न जुगुप्सेत तत्परः ॥ ६
जुगुप्सितं च यच्चान्नं राक्षसा एव भुञ्जते ।
पाणिना जलमुद्धृत्य कुर्यादन्नं प्रदक्षिणम् ॥ ७
अपेयं तद्विजानीयात्पीत्वा चान्द्रायणं चरेत् ।
परिवेषजलादन्यत्पेयमेव तु मन्त्रवत् ॥ ८
पञ्च प्राणाहुतीः कुर्यात्समन्त्रं तु पृथक्पृथक् ॥ ९
यथा रसं न जानाति जिह्वा प्राणाहुतौ नृप ।
तथा समाहितः कुर्यात्प्राणाहुतिमतन्द्रितः ॥ १०
विदित्वाऽन्नमथान्नादं पञ्च प्राणांश्च पाण्डव ।
यः कुर्यादाहुतीः पञ्च तेनेष्टाः पञ्चवायवः ॥ ११
अतोऽन्यथा तु भुञ्जानो ब्राह्मणो ज्ञानदुर्बलः ।
तेनान्नेनासुरान्प्रेतान्राक्षसांस्तर्पयिष्यति ॥ १२
वक्त्रप्रमाणान्पिण्डांश्च ग्रसेदेकैकशः पुनः ।
वक्त्राधिकं तु यत्पिण्डमात्मोच्छिष्टं तदुच्यते ॥ १३
पिण्डावशिष्टमन्यच्च वक्त्रान्निस्सृतमेव च ।
अभोज्यं तद्विजानीयाद्भुक्त्वा चान्द्रायणं चरेत् १४
स्वमुच्छिष्टं तु यो भुङ्क्ते यो भुङ्क्ते मुक्तभोजनम् ।

चान्द्रायणं चरेत्कृच्छ्रं प्राजापत्यमथापि वा ॥१५
स्त्रीपात्रभुङ्नरः पापः स्त्रीणामुच्छिष्टभुक्तथा ।
तया सह च यो भुङ्क्ते स भुङ्क्ते मद्यमेव हि ।
न तस्य निष्कृतिर्दृष्टा मुनिभिस्तत्त्वदर्शिभिः १६
पिबतः पतिते तोये भोजने मुखनिस्सृते ।
अभोज्यं तद्विजानीयाद्भुक्त्वा चान्द्रायणं चरेत् १७
पीतशेषं तु तन्नाम न पेयं पाण्डुनन्दन ।
पिबेद्यदि हि तन्मोहाद्द्विजश्चान्द्रायणं चरेत् ॥ १८
पानीयानि पिबेद्येन तत्पात्रं द्विजसत्तमः ।
अनुच्छिष्टं भवेत्तावद्यावद्भूमौ न निक्षिपेत् ॥ १९
मौनी वाऽप्यथवा भूमौ नावलोक्य दिशस्तथा ।
भुञ्जीत विधिवद्विप्रो न चोच्छिष्टं प्रदापयेत् २०
सदा चात्यशनं नाद्यान्नातिहीनं च कर्हिचित् ।
यथाऽन्नेन व्यथा न स्यात्तथा भुञ्जीत नित्यशः ॥
उदक्यामपि चण्डालं श्वानं सूकरमेव वा ।
भुञ्जानो यदि वा पश्येत्तदन्नं च परित्यजेत् ।
भुञ्जानो ह्यत्यजन्मोहाद्द्विजश्चान्द्रायणं चरेत् २२
केशकीटोपपन्नं च मुखमारुतवीजितम् ।
अभोज्यं तद्विजानीयाद्भुक्त्वा चान्द्रायणं चरेत् ॥
उत्थाय च पुनः स्पृष्टं पादस्पृष्टं च लङ्घितम् ।
अन्नं तद्राक्षसं विद्यात्तस्मात्तत्परिवर्जयेत् ॥ २४
राक्षसोच्छिष्टभुग्विप्रः सप्त पूर्वान्परानपि ।
नरके रौरवे घोरे स पितॄन्पातयिष्यति ॥ २५
तस्मिन्नाचमनं कुर्याद्यस्मिन्पात्रे स भुक्तवान् ।
यद्युत्तिष्ठत्यनाचान्तो भुक्तवानासनात्ततः ।
स्नानं सद्यः प्रकुर्वीत सोन्यथाऽप्रयतो भवेत्॥२६
युधिष्ठिर उवाच ।
तृणमुष्टिविधानं च तृणमाहात्म्यमेव च ।
ः सोमसमुद्भूतिं वक्तुमर्हसि मानद ॥ २७
भगवानुवाच ।
पितरो वृषभा ज्ञेयो गावो लोकस्य मातरः ।
तासां तु पूजया राजन्पूजिताः पितृदेवताः ॥२८
सभा प्रपा गृहाश्चापि देवतायतनानि च ।
शुद्ध्यन्ति शकृता यासां किं भूतमधिकं ततः२९
ग्रासमुष्टिं परगवे दद्यात्संवत्सरं तु यः ।
अकृत्वा स्वयमाहारं प्राप्नस्तत्सार्वकालिकम् ॥३०
गावो मे मातरः सर्वाः पितरश्चैव गोवृषाः ।
ग्रासमुष्टिं मया दत्तं प्रतिगृह्णीत मातरः ॥ ३१
इत्युक्त्वाऽनेन मन्त्रेण गायत्र्या वा समाहितः ।
अभिमन्त्र्य ग्रासमुष्टिं तस्य पुण्यफलं शृणु ॥ ३२
यत्कृतं दुष्कृतं तेन ज्ञानतोऽज्ञानतोपि वा ।
तस्य नश्यति तत्सर्वं दुःस्वप्नं च विनश्यति ॥३३
तिलाः पवित्राः पापघ्ना नारायणसमुद्भवाः ।
तिलाञ्श्राद्धे प्रशंसन्ति दानमेतदनुत्तमम् ॥ ३४
तिलान्दद्यात्तिलान्भक्ष्यात्तिलान्प्रातरुपस्पृशेत् ।
तिलंतिलमिति ब्रूयात्तिलाः पापहरा हि ते ॥३५
क्रीत्वा प्रतिगृहीत्वा वा न विक्रेया द्विजातिभिः ।
भोजनाभ्यञ्जनाद्दानाद्योन्यत्तु कुरुते तिलैः ।
कृमिर्भूत्वा श्वविष्ठायां पितृभिः सह मज्जति ३६
तिलान्नपीडयेद्विप्रो यन्त्रचक्रे स्वयं नृप ।
पीडयन्हि द्विजो मोहान्नरकं याति रौरवम् ॥३७
इक्षुवंशोद्भवः सोमः सोमवंशोद्भवा द्विजाः ।
इक्षुं न पीडयेत्तस्मादिक्षुघात्यात्मघातकः ॥ ३८
इक्षुदण्डसहस्राणामेकैकेन युधिष्ठिर ।
ब्रह्महत्यामवाप्नोति द्विजश्चेद्यन्त्रपीडकः ।
तस्मान्न पीडयेदिक्षुं यन्त्रचक्रे द्विजोत्तमः ॥ ३९

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि वैष्णवधर्मपर्वणि नवाधिकशततमोऽध्यायः ॥ १०९ ॥

---

## दशाधिकशततमोऽध्यायः ॥ ११० ॥

कृष्णेन युधिष्ठिरंप्रत्यापद्धर्मकथनम् ॥ १ ॥ तथा प्रशस्ताप्रशस्तब्राह्मणलक्षणकथनम् ॥ २ ॥ तथा सामान्यतो नानाधर्मकथनपूर्वकं ब्राह्मण्यसिद्धिप्रकारकथनम् ॥ ३ ॥ तथा गुर्वाचार्योपाध्यायलक्षणकथनम् ॥ ४ ॥

युधिष्ठिर उवाच ।
समुच्चयं च धर्माणां भोज्याभोज्यं तथैव च ।
श्रुतं मया त्वत्प्रसादादापद्धर्मं ब्रवीहि मे ॥ १
भगवानुवाच ।

दुर्भिक्षे राष्ट्रसंबाधेऽप्याशौचे मृतसूतके ।
धर्मकालेऽध्वनि तथा नियमो येन लुप्यते ॥ २
दूराध्वगमनात्खिन्नो द्विजालाभेऽथ शूद्रतः ।
अकृतान्नं तु यत्किंचिद्गृह्णीयादात्मवृत्तये ॥ ३
आतुरो दुःखितो वाऽपि तथाऽऽर्तो वा बुभुक्षितः ।
भुञ्जन्नविधिना विप्रः प्रायश्चित्तीयते न च ॥ ४
निमन्त्रितस्तु यो विप्रो विधिवद्धव्यकव्ययोः ।
मांसादीन्यपि भुञ्जानः प्रायश्चित्तीयते न च ॥५
अष्टौ तान्यव्रतघ्नानि आपो मूलं घृतं पयः ।
हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम् ॥ ६
अशक्तो विधिवत्कर्तुं प्रायश्चित्तानि यो नरः ।
विदुषां वचनेनापि दानेनापि विशुद्ध्यति ॥ ७
अनृतावृतुकाले वा दिवा रात्रौ तथाऽपि वा ।
प्रोषितस्तु स्त्रियं गच्छेत्प्रायश्चित्तीयते न च ॥ ८
युधिष्ठिर उवाच ।
प्रशस्याः कीदृशा विप्रा निन्द्याश्चापि सुरेश्वर ।
अष्टकायाश्च कः कालस्तन्मे कथय सुव्रत ॥ ९
भगवानुवाच ।
सत्यसन्धं द्विजं दृष्ट्वा स्थानाद्वेपति भास्करः ।
एष मे मण्डलं भित्त्वा याति ब्रह्म सनातनम् १०
कुलीनः कर्मकृद्वैद्यस्तथा चाप्यानृशंस्यवान् ।
श्रीमानृजुः सत्यवादी पात्रं सर्वेऽप्यमे द्विजाः ११
एते चाग्रासनस्थास्ते भुञ्जानाः प्रथमं द्विजाः ।
तस्यां पङ्क्त्यां तु ये चान्ये तान्पुनन्त्येव दर्शनात् १२
मद्भक्ता ये द्विजश्रेष्ठा मद्भक्ता मत्परायणाः ।
तान्पङ्क्तिपावनान्विद्धि पूज्यांश्चैव विशेषतः ॥ १३
निन्द्याञ्शृणु द्विजान्राजन्नपि वा वेदपारगान् ।
ब्राह्मणच्छद्मना लोके चरतः पापकारिणः ॥ १४
अनग्निरनधीयानः प्रतिग्रहरुचिस्तु यः ।
यतस्ततस्तु भुञ्जानस्तं विद्याद्ब्रह्मदूषकम् ॥ १५
मृतसूतकपुष्टाङ्गो यश्च शूद्रान्नभुग्द्विजः ।
अहं चापि न जानामि गतिं तस्य नराधिप १६
शूद्रान्नरसपुष्टाङ्गोऽप्यधीयानो हि नित्यशः ।
जपतो जुह्वतो वाऽपि गतिरूर्ध्वं न विद्यते ॥१७
आहिताग्निश्च यो विप्रः शूद्रान्नान्न निवर्तते ।
पञ्च तस्य प्रणश्यन्ति आत्मा ब्रह्म त्रयोऽग्नयः १८
शूद्रप्रेषणकर्तुश्च ब्राह्मणस्य विशेषतः ।
भूमावन्नं प्रदातव्यं श्वसृगालसमो हि सः ॥ १९
प्रेतभूतं तु यः शूद्रं ब्राह्मणो ज्ञानदुर्बलः ।
अनुगच्छेन्नीयमानं त्रिरात्रमशुचिर्भवेत् ॥ २०
त्रिरात्रे तु ततः पूर्णे नदीं गत्वा समुद्रगाम् ।
प्राणायामशतं कृत्वा घृतं प्राश्य विशुद्ध्यति ॥२१
अनाथं ब्राह्मणं प्रेतं ये वहन्ति द्विजोत्तमाः ।
पदेपदेऽश्वमेधस्य फलं ते प्राप्नुवन्ति हि ॥ २२
न तेषामशुभं किंचित्पापं वा शुभकर्मणाम् ।
जलावगाहनादेव सद्यः शौचं विधीयते ॥ २३
शूद्रवेश्मनि विप्रेण क्षीरं वा यदि वा दधि ।
निवृत्तेन न भोक्तव्यं विद्धि शूद्रान्नमेव तत् ॥ २४
विप्राणां भोक्तुकामानामत्यन्तं चान्नकाङ्क्षिणाम् ।
यो विघ्नं कुरुते मर्त्यस्ततो नान्योऽस्ति पापकृत् ॥२५

सर्वे च वेदाः सहषड्भिरङ्गैः
साङ्ख्यं पुराणं च कुले च जन्म ।
नैतानि सर्वाणि गतिर्भवन्ति
शीलव्यपेतस्य नृप द्विजस्य ॥ २६

ग्रहोपरागे विषुवेऽयनान्ते
पित्र्ये मघासु स्वसुते च जाते ।
गयेषु पिण्डेषु च पाण्डुपुत्र
दत्तं भवेन्निष्कसहस्रतुल्यम् ॥ २७

वैशाखमासस्य तु या तृतीयाऽ-
नवद्याऽसौ कार्तिकशुक्लपक्षे ।
नभस्यमासस्य च कृष्णपक्षे
त्रयोदशी पञ्चदशी च माघे ॥ २८

उपप्लवे चन्द्रमसो रवेश्च
श्राद्धस्य कालो ह्ययनद्वये च ।
पानीयमप्यत्र तिलैर्विमिश्रं
दद्यात्पितृभ्यः प्रयतो मनुष्यः ।
श्राद्धं कृतं तेन समासहस्रं
रहस्यमेतत्पितरो वदन्ति ॥ २९

यस्त्वेकपङ्क्त्यां विषमं ददाति
स्नेहाद्भयाद्वा यदि वाऽर्थहेतोः ।
क्रूरं दुराचारमनात्मवन्तं
ब्रह्मघ्नमेनं कवयो वदन्ति ॥ ३०

धनानि येषां विपुलानि सन्ति
नित्यं रमन्ते परलोकमूढाः ।
तेषामयं शत्रुवरघ्नलोको
नान्यत्सुखं देहसुखे रतानाम् ॥ ३१

ये चैव मुक्तास्तपसि प्रयुक्ताः
स्वाध्यायशीला जरयन्ति देहम् ।
जितेन्द्रिया भूतहिते निविष्टा-
स्तेषामसौ चापि परश्च लोकः ॥ ३२

ये चैव विद्यां न तपो न दानं
न चापि मूढाः प्रजने यतन्ते ।
न चापि गच्छन्ति सुखानि भोगां-
स्तेषामयं चापि परश्च नास्ति ॥ ३३

युधिष्ठिर उवाच ।
नारायण पुराणेश लोकावास नमोस्तु ते ।
श्रोतुमिच्छामि कार्त्स्न्येन धर्मसारसमुच्चयम् ॥३४

भगवानुवाच ।
धर्मसारं महाप्राज्ञ मनुना प्रोक्तमादितः ।
प्रवक्ष्यामि मनुप्रोक्तं पौराणां श्रुतिसंहितम् ॥ ३५
अग्निचित्कपिला सत्री राजा भिक्षुर्महोदधिः ।
दृष्टमात्रात्पुनन्त्येते तस्मात्पश्येत तान्सदा ॥ ३६
गौरेकस्यैव दातव्या न बहूनां युधिष्ठिर ।
सा गौर्विक्रयमापन्ना दहत्यासप्तमं कुलम् ॥ ३७
बहूनां न प्रदातव्या गौर्वस्त्रं शयनं स्त्रियः ।
तादृग्भूतं तु तद्दानं दातारं नोपतिष्ठति ॥ ३८
आक्रम्य ब्राह्मणैर्भुक्तमनार्याणां च वेश्मनि ।
गोभिश्च पुण्यं तत्तेषां राजसूयाद्विशिष्यते ॥ ३९
मा ददात्विति यो ब्रूयाद्ब्राह्मणेषु च गोषु च ।
तिर्यग्योनिशतं गत्वा चण्डालेषूपजायते ॥ ४०
ब्राह्मणस्वं च यद्देवं दरिद्रस्यैव यद्धनम् ।
गुरोश्चापि हृतं राजन्स्वर्गस्थानपि पातयेत् ॥ ४१
धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः ।
द्वितीयं धर्मशास्त्राणि तृतीयं लोकसंग्रहः ॥ ४२
आसमुद्राच्च यत्पूर्वादासमुद्राच्च पश्चिमात् ।
हिमाद्रिविन्ध्ययोर्मध्यमार्यावर्तं प्रचक्षते ॥ ४३
सरावतीदृषद्वत्योर्देवनद्योर्यदन्तरम् ।
तद्देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते ॥ ४४
यस्मिन्देशे य आचारः पारंपर्यक्रमागतः ।
वर्णानां सान्तरालानां स सदाचार उच्यते ॥ ४५
कुरुक्षेत्रं च मत्स्याश्च पाञ्चालाः शूरसेनयः ।
एते ब्रह्मर्षिदेशास्तु ब्रह्मावर्तादनन्तराः ॥ ४६
एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।
स्वं चारित्रं च गृह्णीयुः पृथिव्यां सर्वमानवाः॥४७
हिमवद्विन्ध्ययोर्मध्यं यत्प्राग्विशसनादपि ।
प्रत्यगेव प्रयागात्तु मध्यदेशः प्रकीर्तितः ॥ ४८
कृष्णसारस्तु चरति मृगो यत्र स्वभावतः ।
स ज्ञेयो याज्ञिको देशो म्लेच्छदेशस्ततः परम् ॥४९
एतान्विज्ञाय देशांस्तु संश्रयेरन्द्विजातयः ।
शूद्रस्तु यस्मिन्कस्मिन्वा निवसेद्वृत्तिकर्शितः ॥५०
आचारः प्रथमो धर्मो ह्यहिंसा सत्यमेव च ।
दानं चैव यथाशक्ति नियमाश्च यमैः सह ॥ ५१
वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम् ।
कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च ॥ ५२
गर्भहोमैर्जातकर्मनामचौलोपनायनैः ।
स्वाध्यायैस्तद्व्रतैश्चैव विवाहस्नातकव्रतैः ।
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ॥ ५३
धर्मार्थौ यदि न स्यातां शुश्रूषा वाऽपि तद्विधा ।
विद्या तस्मिन्नवप्तव्या शुभं बीजमिवोषरे ॥ ५४
लौकिकं वैदिकं वाऽपि तथाऽऽध्यात्मिकमेव वा ।
यस्माज्ज्ञानमिदं प्राप्तं तं पूर्वमभिवादयेत् ॥ ५५
सव्येन सव्यं संगृह्य दक्षिणेन तु दक्षिणम् ।
न कुर्यादेकहस्तेन गुरोः पादाभिवादनम् ॥ ५६
निषेकादीनि कर्माणि यः करोति यथाविधि ।
अध्यापयति चैवैनं स विप्रो गुरुरुच्यते ॥ ५७

कृत्वोपनयनं वेदान्योध्यापयति नित्यशः ।
सकल्पान्सरहस्यांश्च स चोपाध्याय उच्यते ॥ ५८
साङ्गांश्च वेदानध्याप्य शिक्षयित्वा व्रतानि च ।
विवृणोति च मन्त्रार्थानाचार्यः सोभिधीयते ॥५९
उपाध्यायाद्दशाचार्य आचार्याणां शतं पिता ।
पितुः शतगुणं माता गौरवेणातिरिच्यते ॥ ६०
एतेषामपि सर्वेषां गरीयाञ्ज्ञानदो गुरुः ।
गुरोः परतरं किंचिन्न भूतं न भविष्यति ॥ ६१
तस्मात्तेषां वशे तिष्ठेच्छुश्रूषापरमो भवेत् ।
अवमानाद्धि तेषां तु नरकं स्यान्न संशयः ॥ ६२
हीनाङ्गानतिरिक्ताङ्गान्विद्याहीनान्वयोधिकान् ।
रूपद्रविणहीनांश्च जातिहीनांश्च नाक्षिपेत् ॥ ६३
शपता यत्कृतं पुण्यं शप्यमानं तु गच्छति ।
शप्यमानस्य यत्पापं शपन्तमनुगच्छति ॥ ६४
नास्तिक्यं वेदनिन्दां च देवतानां च कुत्सनम् ।
द्वेषं डंभं च मानं च क्रोधं तैक्ष्ण्यं विवर्जयेत् ॥ ६५

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि वैष्णवधर्मपर्वणि दशाधिकशततमोऽध्यायः ॥ ११० ॥

## एकादशाधिकशततमोऽध्यायः ॥ १११ ॥

कृष्णेन युधिष्ठिरंप्रत्यग्निसृष्टिप्रकारकथनम् ॥ १ ॥ आहवनीयादित्वेन तद्विभागकथनपूर्वकं तत्तन्नामनिर्वचनम् ॥ २ ॥ तथा यज्ञाग्निहोत्रप्रशंसनम् ॥ ३ ॥

युधिष्ठिर उवाच ।
स्वभक्तस्य हृषीकेश धर्माधर्ममजानतः ।
धर्मं पुण्यतमं देव पृच्छतः कथयस्व मे ॥ १
भगवानुवाच ।
यदेतदग्निहोत्रं वै सृष्टं वर्णत्रयस्य तु ।
मन्त्रवद्यद्धुतं सम्यग्विधिना चाप्युपासितम् ।
आहिताग्निं नयत्यूर्ध्वं सपत्नीकं सबान्धवम् ॥ २
युधिष्ठिर उवाच ।
कथं तद्ब्राह्मणैर्देव होतव्यं क्षत्रियैः कथम् ।
वैश्यैर्वा देवदेवेश कथं वा सुहुतं भवेत् ॥ ३
कस्मिन्काले कथं कस्य आधेयोऽग्निः सुरोत्तम ।
आहितस्य कथं वाऽपि सम्यगाचरणं भवेत् ॥ ४
कत्यग्नयः किमात्मानः स्थानं किं कस्य वा विभो ।
कतरस्मिन्हुते स्थाने कं व्रजेदाग्निहोत्रिकः ॥ ५
अग्निहोत्रनिमित्तं च किमुत्पन्नं पुराऽनघ ।
कथमेवाथ हूयन्ते प्रीयन्ते च सुराः कथम् ॥ ६
विधिवन्मन्त्रवत्कृत्वा पूजितास्त्वग्नयः कथम् ।
कां गतिं वदतांश्रेष्ठ नयन्ति ह्यग्निहोत्रिणः ॥ ७
दुर्हुताश्चापि भगवन्नविज्ञातास्त्रयोऽग्नयः ।
किमाहिताग्नेः कुर्वन्ति दुश्चीर्णा वाऽपि केशव ॥ ८
उत्सन्नाग्निस्तु पापात्मा कां योनिं देव गच्छति ।
एतत्सर्वं समासेन भक्त्या ह्युपगतस्य मे ।
वक्तुमर्हसि सर्वज्ञ सर्वाधिक नमोऽस्तु ते ॥ ९
भगवानुवाच ।
शृणु राजन्महापुण्यमिदं धर्मामृतं परम् ।
यत्तु तारयते युक्तान्ब्राह्मणानग्निहोत्रिणः ॥ १०
ब्रह्मत्वेनासृजं लोकानहमादौ महाद्युते ।
सृष्टोऽग्निर्मुखतः पूर्वं लोकानां हितकाम्यया ॥ ११
यस्मादग्रे स भूतानां सर्वेषां निर्मितो मया ।
तस्मादग्नीत्यभिहितः पुराणज्ञैर्मनीषिभिः ॥ १२
यस्मात्तु सर्वकृत्येषु पूर्वमस्मै प्रदीयते ।
आहुतिर्दीप्यमानाय तस्मादग्नीति कथ्यते ॥ १३
यस्माच्च तु नयत्यग्र्यां गतिं विप्रान्सुपूजितः ।
यस्माच्च नयनाद्राजन्देवेष्वग्नीति कथ्यते ॥ १४
तस्माच्च दुर्हुतः सोयमलं भक्षयितुं क्षणात् ।
यजमानं नरश्रेष्ठ क्रव्यादोऽग्निस्ततः स्मृतः ॥१५
सर्वभूतात्मको राजन्देवानामेष वै मुखम् ।
प्रथमं मन्मुखात्सृष्टो लोकार्थे पचनः प्रभुः ॥१६
सृष्टमात्रो जगत्सर्वमत्तुमैच्छत्पुरा खलु ।
ततः प्रशमितः सोग्निरुपास्यैव मया पुरा ॥ १७
सततोपासनात्सोयमौपासन इति स्मृतः ॥ १८
आहुतिः सर्वमाख्याति तस्मिन्वसति सोनलः ।

आवसथ्य इति ख्यातस्तेनासौ ब्रह्मवादिभिः १९
तस्मात्पञ्च महायज्ञा वर्तन्ते यस्य धर्मतः ।
सोममण्डलमध्येन गतिस्तस्य द्विजन्मनः ॥ २०
ते च सप्तर्षयः सिद्धाः संयतेन्द्रियबुद्धयः ।
गता ह्यमरसायुज्यं ते ह्यभ्यर्चनतत्पराः ॥ २१
अपरे चावसथ्यं च पचनाग्निं प्रचक्षते ।
तस्मिन्पञ्च महायज्ञा वैश्वदेवश्च वर्तते ॥ २२
स्थालीपाकं च गार्हं च सर्वे चास्मिन्प्रतिष्ठिताः ।
गृह्यकर्मवहो यस्मात्तस्माद्गृहपतिस्तु सः ॥ २३
औपासनं चावसथ्यं सभ्यं पचनपावकम् ।
आहुर्ब्रह्मविदः केचिन्मतमेतन्ममापि च ॥ २४
अग्निहोत्रप्रकारं च शृणु राजन्समाहितः ।
त्रयाणां गुणनामानां वह्नीनामुच्यते मया ॥ २५
गृहाणां हि पतित्वं हि गृहपत्यमिति स्मृतम् ।
गृहपत्यं तु यस्यासीत्तत्तस्माद्गार्हपत्यता ॥ २६
यजमानं तु यस्मात्तु दक्षिणां तु गतिं नयेत् ।
दक्षिणाग्निं तमाहुस्ते दक्षिणायतनं द्विजाः ॥ २७
आहुतिः सर्वमाख्याति हव्यं वै वहनं स्मृतम् ।
सर्वहव्यवहो वह्निर्गतश्चाहवनीयताम् ॥ २८
यं चावसथ्यं जुहुयान्मूलाग्निं विधिवद्द्विजः ।
आवसथ्यं तु तं चाग्निं पचनाग्निं प्रचक्षते ॥ २९
तेषां स भागतो वह्निः सभ्य इत्यभिधीयते ।
आवतथ्यस्तु यो वह्निः प्रथमः स प्रजापतिः ३०
ब्रह्मा च गार्हपत्योऽग्निस्तस्मिन्नेव हि सोभवत् ।
दक्षिणाग्निस्त्वयं रुद्रः क्रोधात्मा चण्ड एव सः ३१
अहमाहवनीयोऽग्निराहोमाद्यस्य वै मुखे ।
सभ्योऽग्निः पञ्चमो यस्तु स्कन्द एव नराधिप ३२
पृथिवी गार्हपत्योऽग्निरन्तरिक्षं च दक्षिणः ।
स्वर्गमाहवनीयोऽग्निरेवमग्नित्रयं स्मृतम् ॥ ३३
वृत्तश्च गार्हपत्योऽग्निर्यस्माद्वृत्ता च मेदिनी ।
अर्धचन्द्राकृतिस्तं वै दक्षिणाग्निस्तथा भवेत् ॥ ३४
चतुरश्रं ततः स्वर्गं निर्मलं तु निरामयम् ।
तस्मादाहवनीयोऽग्निश्चतुरश्रो भवेन्नृप ॥ ३५
जुहुयाद्गार्हपत्यं यो भुवं जयति स द्विजः ।
जुहोति दक्षिणं यस्तु स जयत्यन्तरिक्षकम् ॥ ३६
पृथिवीमन्तरिक्षं च दिवं ऋषिगणैः सह ।
जयत्याहवनीयं यो जुहुयाद्भक्तिमान्नरः ॥ ३७
आभिमुख्येन होमस्तु यस्य यज्ञेषु वर्तते ।
तेनाप्याहवनीयत्वं गतो वह्निर्महाद्युतिः ॥ ३८
आहोमादग्निहोत्रेषु यज्ञैर्वा यत्र सर्वशः ।
यस्मात्तस्मात्प्रवर्तन्ते ततो ह्याहवनीयता ॥ ३९
यस्त्वावसथ्यं जुहुयान्मूलाग्निं विधिवद्द्विजः ।
स तु सप्तर्षिलोकेषु सपत्नीकः प्रमोदते ॥ ४०
इष्टो भवति सर्वाग्नेरग्निहोत्रं च तद्भवेत् ।
त्राणाद्वै यजमानस्य ह्यग्निहोत्रमिति स्मृतम् ॥ ४१
होइज्येषु विषादो वै विषादो दुःखमुच्यते ।
दुःखं तापत्रयं प्रोक्तं तापं हि नरकं विदुः ॥ ४२
आध्यात्मिकं चाधिदैवमाधिभौतिकमेव च ।
एतत्तापत्रयं प्रोक्तमात्मविद्भिर्नराधिप ॥ ४३
यस्माद्वै त्रायते दुःखाद्यजमानं हुतोऽनलः ।
तस्मात्तु विधिवत्प्रोक्तमग्निहोत्रमिति श्रुतौ ॥ ४४
तदग्निहोत्रं सृष्टं वै ब्रह्मणा लोककर्तृणा ।
वेदाश्चाप्यग्निहोत्रं तु जज्ञिरे स्वयमेव तु ॥ ४५
अग्निहोत्रफला वेदाः शीलवृत्तफलं श्रुतम् ।
रतिपुत्रफला दारा दत्तभुक्तफलं धनम् ॥ ४६
त्रिवेदमन्त्रसंयोगादग्निहोत्रं प्रवर्तते ।
ऋग्यजुःसामभिः पुण्यैः स्थाप्यते सूत्रसंयुतैः ४७
वसन्ते ब्राह्मणस्य स्यादाधेयोऽग्निर्नराधिप ।
वसन्तो ब्राह्मणो ज्ञेयो वेदयोनिः स उच्यते ४८
अभ्याधेयं तु येनाथ वसन्ते क्रियतेऽनघ ।
तस्य श्रीर्ब्रह्मवृद्धिश्च ब्राह्मणस्य विवर्धते ॥ ४९
क्षत्रियस्याग्निराधेयो ग्रीष्मे श्रेष्ठः स वै नृप ।
येनाधानं तु वै ग्रीष्मे क्रियते तस्य वर्धते ।
श्रीः प्रजाः पशवश्चैव वित्तं तेजो बलं यशः ॥ ५०
शरद्यतौ तु वैश्यस्य ह्याधानीयो हुताशनः ।
शरद्रात्रं स्वयं वैश्यो वैश्ययोनिः स उच्यते ॥ ५१
शरद्याधानमेवं वै क्रियते येन पाण्डव ।
तस्यापि श्रीः प्रजाऽऽयुश्च पशवोऽर्थश्च वर्धते ५२

पशवः सर्व एवैते त्रिभिः सर्वैरलङ्कृताः ।
अग्निहोत्रा ह्यवर्तन्ते तैरेव ध्रियते जगत् ॥ ५३
ग्राम्यारण्याश्च पशवो वृक्षाश्चैव तृणानि च ।
फलान्योषधयश्चापि अग्निहोत्रकृते हविः ॥ ५४
रसाः स्नेहास्तथा गन्धा रत्नानि मणयस्तथा ।
काञ्चनानि च लोहानि ह्यग्निहोत्रकृतेऽभवन् ५५
आयुर्वेदो धनुर्वेदो मीमांसा न्यायविस्तरः ।
धर्मशास्त्रं च तत्सर्वमग्निहोत्रकृते कृतम् ॥ ५६
छन्दः शिक्षा च कल्पश्च तथा व्याकरणानि च ।
शास्त्रं ज्योतिर्निरुक्तं चाप्यग्निहोत्रकृते कृतम् ५७
इतिहासपुराणं च गाथाश्चोपनिषत्तथा ।
आथर्वणानि कर्माणि चाग्निहोत्रकृते कृतम् ॥ ५८
यच्चैतस्यां पृथिव्यां वै किंचिदस्ति चराचरम् ।
तत्सर्वमग्निहोत्रस्य कृते सृष्टं स्वयंभुवा ॥ ५९
अग्निहोत्रस्य दर्शस्य पूर्णमासस्य चाप्यथ ।
यूपेष्टिपशुबन्धानां सोमपानक्रियावताम् ॥ ६०
तिथिनक्षत्रयोगानां मुहूर्तकरणात्मकम् ।
कालस्य वेदनार्थं तु ज्योतिर्ज्ञानं पुराऽनघ ॥ ६१
ऋग्यजुः साममंत्राणां श्लोकतत्वार्थचिन्तनात् ।
प्रत्यापत्तिविकल्पानां छन्दोज्ञानं प्रकल्पितम् ६२
वर्णाक्षरपदार्थानां सन्धिलिङ्गं प्रकीर्तितम् ।
नामधातुविवेकार्थं पुरा व्याकरणं स्मृतम् ॥ ६३
यूपवेद्यध्वरार्थं तु प्रोक्षणश्रवणाय तु ।
यज्ञदैवतयोगार्थं शिक्षाज्ञानं प्रकल्पितम् ॥ ६४
यज्ञपात्रपवित्रार्थं द्रव्यसंभारणाय च ।
सर्वयज्ञविकल्पाय पुराकल्पं प्रकल्पितम् ॥ ६५
नामधातुविकल्पानां तत्वार्थनियमाय च ।
सर्ववेदनिरुक्तानां निरुक्तमृषिभिः कृतम् ॥ ६६
वेद्यर्थं पृथिवी सृष्टा संभारार्थं तथैव च ।
इध्मार्थमथ यूपार्थं ब्रह्मा चक्रे वनस्पतिम् ॥ ६७
ग्राम्यारण्याश्च पशवो जायन्ते यज्ञकारणात् ।
मन्त्राणां विनियोगं च प्रोक्षितं श्रपणं तथा ॥ ६८
अनुयाजप्रयाजाश्च मरुतां शंसिनस्तथा ।
औद्गात्रं चैव साम्नां वै प्रतिप्रस्थानमेव च ॥ ६९
विष्णुक्रमाणां क्रमण दक्षिणावभृथं तथा ।
त्रिकासमर्चनं चैव स्थानेषूपहृतं तथा ॥ ७०
देवताग्रहणं मोक्षं हविषां श्रपणं तथा ।
नावबुध्यन्ति ये विप्रा निन्दन्ति च पशोर्वधम् ।
ते यान्ति नरकं घोरं रौरवं तमसाऽऽवृतम् ॥ ७१
शतवर्षसहस्राणि तत्र स्थित्वा नराधमाः ।
कृमिभिर्भक्ष्यमाणाश्च तिष्ठेयुः पूयशोणिते ॥ ७२
वृक्षा यूपत्वमिच्छन्ति पशुत्वं पशवस्तथा ।
तृणानीच्छन्ति बर्हिष्ट्वमोषध्यश्च हविष्यताम् ।
सोमत्वं च लताः सर्वा वेदित्वं च वसुंधरा ॥ ७३
यस्मात्पशुत्वमिच्छन्ति पशवः स्वर्गलिप्सया ।
तस्मात्पशुवधे हिंसा नास्ति यज्ञेषु पाण्डव ॥ ७४
यूपास्तन्मन्त्रसंस्कारैर्दर्भाश्च पशवस्तथा ।
यजमानेन सहिताः स्वर्गं यान्ति नरेश्वर ॥ ७५
यावत्कालं हि यज्वा वै स्वर्गलोके महीयते ।
तावत्कालं प्रमोदन्ते पशवो ह्यध्वरे हताः ॥ ७६
अहिंसा वैदिकं कर्म ब्रह्मकर्मेति तत्कृतम् ।
वेदोक्तं ये न कुर्वन्ति हिंसाबुद्ध्या क्रतून्द्विजाः ।
सद्यः शूद्रत्वमायान्ति प्रेत्य चण्डालतामपि ॥ ७७
गावो यज्ञार्थमुत्पन्ना दक्षिणार्थं तथैव च ।
सुवर्णं रजतं चैव पात्रकुंभार्थमेव च ॥ ७८
दर्भाः संस्तरणार्थं तु रक्षसां रक्षणाय च ।
पजनार्थं द्विजाः सृष्टास्तारका दिवि देवताः ॥ ७९
क्षत्रिया रक्षणार्थं तु वैश्या वार्तानिमित्ततः ।
शुश्रूषार्थं त्रयाणां वै शूद्राः सृष्टाः स्वयंभुवा ॥८०
एवमेतज्जगत्सर्वमग्निहोत्रकृते कृतम् ।
नावबुध्यन्ति ये चैव नरास्तु तमसा वृताः ॥८१
ते यान्ति नरकं घोरं रौरवं नाम विश्रुतम् ।
रौरवाद्विप्रयुक्तास्तु कृमियोनिं व्रजन्ति ते ॥ ८२
यथोक्तमग्निहोत्राणां शुश्रूषन्ति च ये द्विजाः ।
तैर्दत्तं सहुतं चेष्टं दत्तमध्यापितं भवेत् ॥ ८३
एवमिष्टं च पूर्तं च यद्विप्रैः क्रियते नृप ।
तत्सर्वं सम्यगाहृत्य चादित्ये स्थापयाम्यहम् ८४
मया स्थापितमादित्ये लोकस्य सुकृतं हि तत् ।

धारयेद्यत्सहस्रांशुः सुकृतं ह्यग्निहोत्रिणाम् ॥ ८५
यावत्कालं तु तिष्ठन्ति लोके चाप्यग्निहोत्रिणः ।
तावदेव हि पुण्येन दीप्यते रविणाऽम्बरे ॥ ८६
स्वर्गे स्वर्गं गतानां तु वीर्याद्भवति वीर्यवान् ।
तत्र ते ह्युपभुञ्जन्ति ह्यग्निहोत्रस्य तत्फलम् ।
समानरूपा देवानां तिष्ठन्त्याभूतसंप्लवम् ॥ ८७
वृथाऽग्निना च ये केचिद्धन्ते ह्यग्निहोत्रिणः ।
न तेऽग्निहोत्रिणां लोके मनसाऽपि व्रजन्ति ते ॥
वीरघ्नास्तु दुराचारा दरिद्रास्तु नराधमाः ।
विकला व्याधिताश्चापि जायन्ते शूद्रयोनिषु॥८९
तस्मादप्रोषितैर्नित्यमग्निहोत्रं द्विजातिभिः ।
होतव्यं विधिवद्राजन्नूर्ध्वामिच्छन्ति ये गतिम् ९०
आत्मवन्नावमन्तव्यमग्निहोत्रं युधिष्ठिर ।
न त्याज्यं क्षणमप्येतदग्निहोत्रं युधिष्ठिर ॥ ९१
वृद्धत्वेऽप्यग्निहोत्रं ये गृह्णन्ति विधिवद्द्विजाः ।
शूद्रान्नाद्विरता दान्ताः संयतेन्द्रियबुद्धयः ॥ ९२
पञ्चयज्ञपरा नित्यं लोभक्रोधविवर्जिताः ।
द्विकालमतिथींश्चैव पूजयन्ति च भक्तितः ॥ ९३
तेऽपि सूर्योदयप्रख्यैर्विमानैर्वायुवेगिभिः ।
मम लोके प्रमोदन्ते दृष्ट्वा मां च युधिष्ठिर ॥९४
मन्वन्तरं च तत्रैकं मोदिता द्विजसत्तमाः ।
इह मानुष्यके लोके जायन्ते द्विजसत्तमाः ॥ ९५
बालाहिताग्नयो ये च शूद्रान्नाद्विरताः सदा ।
क्रोधलोभविनिर्मुक्ताः प्रातःस्नानपरायणाः ।
यथोक्तमग्निहोत्रं वै जुह्वते विजितेन्द्रियाः ॥ ९६
आतिथेयाः सदा सौम्या द्विकालं मत्परायणाः ।
ते यान्त्यपुनरावृत्तिं भित्त्वा चादित्यमण्डलम् ९७
मम लोकं सपत्नीका यानैः सूर्योदयप्रभैः ।
तत्र बालार्कसङ्काशाः कामगाः कामरूपिणः ९८
ऐश्वर्यगुणसंपन्नाः क्रीडन्ति च यथासुखम् ।
इत्येषामाहिताग्नीनां विभूतिः पाण्डुनन्दन ॥९९
श्रुतिं केचिन्निन्दमानाः श्रुतिं दूष्यन्त्यबुद्धयः ।
प्रमाणं न च कुर्वन्ति ये यान्तीहापि दुर्गतिम् १००
प्रमाणमितिहासं च वेदान्कुर्वंति ये द्विजाः ।
ते यान्त्यमरसायुज्यं नित्यमास्तिक्यबुद्धयः १०१

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि वैष्णवधर्मपर्वणि एकादशाधिकशततमोऽध्यायः ॥ १११ ॥

## द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥

कृष्णेन युधिष्ठिरंप्रति चान्द्रायणविधिनिरूपणपूर्वकं तदाचरणफलकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
चक्रायुध नमस्तेऽस्तु देवेश गरुडध्वज ।
चान्द्रायणविधिं पुण्यमाख्याहि भगवन्मम ॥ १
भगवानुवाच ।
शृणु पाण्डव तत्वेन सर्वपापप्रणाशनम् ।
पापिनो येन शुद्ध्यन्ति तत्ते वक्ष्यामि सर्वशः॥२
ब्राह्मणः क्षत्रियो वाऽपि वैश्यो वा चरितव्रतः ।
यथावत्कर्तुकामो वै तस्यैवं प्रथमा क्रिया ॥ ३
शोधयेत्तु शरीरं स्वं पञ्चगव्येन यन्त्रितः ।
सशिरः कृष्णपक्षस्य ततः कुर्वीत वापनम् ॥ ४
शुक्लवासाः शुचिर्भूत्वा मौञ्जीं बध्नीत मेखलाम् ।
पालाशदण्डमादाय ब्रह्मचारिव्रते स्थितः ॥ ५
कृतोपवासः पूर्वं तु शुक्लप्रतिपदि द्विजः ।
नदीसंगमतीर्थेषु शुचौ देशे गृहेऽपि वा ।
गोमयेनोपलिप्तेऽथ स्थण्डिलेऽग्निं निधापयन् ॥ ६
आघारावाज्यभागौ च प्रणवं व्याहृतीस्तथा ।
वारुणं चैव पञ्चैव हुत्वा सर्वान्यथाक्रमम् ॥ ७
सत्याय विष्णवे चेति ब्रह्मर्षिभ्योऽथ ब्रह्मणे ।
विश्वेभ्यो हि च देवेभ्यः सप्रजापतये तथा ॥ ८
षडुक्त्वा जुहुयात्पश्चात्प्रायश्चित्ताहुतिं द्विजः ।
अतः समापयेदग्निं शान्तिं कृत्वाऽथ पौष्टिकीम् ९
प्रणम्य चाग्निं सोमं च भस्म दिग्ध्वा यथाविधि ।
नदीं गत्वा विशुद्धात्मा सोमाय वरुणाय च ।
आदित्याय नमस्कृत्वा ततः स्नायात्समाहितः१०

उत्तीर्योदकमाचम्य चासीनः पूर्वतोमुखः ।
प्राणायामं ततः कृत्वा पवित्रैरभिषेचनम् ॥ ११
आचान्तस्त्वभिवीक्षेत ऊर्ध्वबाहुर्दिवाकरम् ।
कृताञ्जलिपुटः स्थित्वा कुर्याच्चैव प्रदक्षिणम् ॥१२
नारायणं वा रुद्रं वा ब्रह्माणमथवाऽपि च ।
वारुणं मन्त्रसूक्तं वा प्राग्भोजनमथापि वा ॥ १३
वीरघ्नमृषभं वाऽपि तथा चाप्यघमर्षणम् ।
गायत्रीं मम देवीं वा सावित्रीं वा जपेत्ततः ।
शतं वाऽष्टशतं वाऽपि सहस्रमथवा परम् ॥ १४
ततो मध्याह्नकाले वै पायसं यावकं हि वा ।
पाचयित्वा प्रयत्नेन प्रयतः सुसमाहितः ॥ १५
पात्रं तु सुसमादाय सौवर्णं राजतं तु वा ।
ताम्रं वा मृन्मयं वापि औदुंबरमथापि वा ॥ १६
वृक्षाणां याज्ञियानां तु पर्णैरार्द्रैरकुत्सितैः ।
पुटकेन तु गुप्तेन चरेद्भैक्षं समाहितः ॥ १७
ब्राह्मणानां गृहाणां तु सप्तानां नापरं व्रजेत् ।
गोदोहमात्रं तिष्ठेत्तु वाग्यतः संयतेन्द्रियः ॥ १८
न हसेन्न च वीक्षेत नाभिभाषेत वा स्त्रियम् ॥१९
दृष्ट्वा मूत्रं पुरीषं वा चण्डालं वा रजस्वलाम् ।
पतितं च तथा श्वानमादित्यमवलोकयेत् ॥ २०
यो हि पादुकमारुह्य सर्वदा प्रचरेद्द्विजः ।
तं दृष्ट्वा पापकर्माणमादित्यमवलोकयेत् ॥ २१
ततस्त्वावसथं प्राप्तो भिक्षां निक्षिप्य भूतले ।
प्रक्षाल्य पादावाजान्वोर्हस्तावाकूर्परं पुनः ।
आचम्य वारिणा तेन वह्निं विप्रांश्च पूजयेत् ॥२२
पञ्च सप्ताथवा कुर्याद्भागान्भैक्षस्य तस्य वै ।
तेषामन्यतमं पिण्डमादित्याय निवेदयेत् ॥ २३
ब्रह्मणे चाग्नये चैव सोमाय वरुणाय च ।
विश्वेभ्यश्चैव देवेभ्यो दद्यादन्नं यथाक्रमम् ॥ २४
अवशिष्टमथैकं तु वक्त्रमात्रं प्रकल्पयेत् ॥ २५
अङ्गुल्यग्रे स्थितं पिण्डं गायत्र्या चाभिमन्त्रयेत् ।
अङ्गुलीभिस्त्रिभिः पिण्डं प्राश्नीयात्प्राङ्मुखः शुचिः
यथा च वर्धते सोमो ह्रसते च यथा पुनः ।
तथा पिण्डाश्च वर्धन्ते ह्रसन्ते च दिनेदिने ॥ २७

त्रिकालं स्नानमस्योक्तं द्विकालमथवा सकृत् ।
ब्रह्मचारी सदा वाऽपि न च वस्त्रं प्रपीडयेत् ॥ २८
स्थाने न दिवसं तिष्ठेद्रात्रौ वीरासनं व्रजेत् ।
भवेत्स्थण्डिलशायी वाऽप्यथवा वृक्षमूलिकः ॥२९
वल्कलं यदि वा क्षौमं शाणं कार्पासकं तथा ।
आच्छादनं भवेत्तस्य वस्त्रार्थं पाण्डुनन्दन ॥ ३०
एवं चान्द्रायणे पूर्णे मासस्यान्ते प्रयत्नवान् ।
ब्राह्मणान्भोजयेद्भक्त्या दद्याच्चैव च दक्षिणाम् ३१
चान्द्रायणेन चीर्णेन यत्कृतं तेन दुष्कृतम् ।
तत्सर्वं तत्क्षणादेव भस्मीभवति काष्ठवत् ॥ ३२
ब्रह्महत्या च गोहत्या सुवर्णस्तैन्यमेव च
भ्रूणहत्या सुरापानं गुरोर्दारव्यतिक्रमः ॥ ३३
एवमन्यानि पापानि पातकीयानि यानि च ।
चान्द्रायणेन नश्यन्ति वायुना पांसवो यथा ३४
अनिर्दशाया गोः क्षीरमौष्ट्रमाविकमेव च ।
मृतसूतकयोश्चान्नं भुक्त्वा चान्द्रायणं चरेत् ॥३५
उपपातकिनश्चान्नं पतितान्नं तथैव च ।
शूद्रस्योच्छेषणं चैव भुक्त्वा चान्द्रायणं चरेत् ३६
आकाशस्थं तु हस्तस्थमधः स्रस्तं तथैव च ।
परहस्तस्थितं चैव भुक्त्वा चान्द्रायणं चरेत् ॥३७
अथाग्रेदिधिषोरन्नं दिधिषूपपतेस्तथा ।
परिवेत्तुस्तथा चान्नं परिवित्तान्नमेव च ॥ ३८
कुण्डान्नं गोलकान्नं च देवलान्नं तथैव च ।
तथा पुरोहितस्यान्नं भुक्त्वा चान्द्रायणं चरेत् ३९
सुराऽऽसवं विषं सर्पिर्लाक्षा लवणमेव च ।
तैलं चापि च विक्रीणन्द्विजश्चान्द्रायणं चरेत् ४०
एकोद्दिष्टं तु यो भुङ्क्ते जनमध्यगतोऽपि यः ।
भिन्नभाण्डेषु यो भुङ्क्ते द्विजश्चान्द्रायणं चरेत् ॥४१
यो भुङ्क्तेऽनुपनीतेन यो भुङ्क्ते च स्त्रिया सह ।
कन्यया सह यो भुङ्क्ते द्विजश्चान्द्रायणं चरेत् ॥४२
उच्छिष्टं स्थापयेद्विप्रो यो मोहाद्भोजनान्तरे ।
दद्याद्वा यदि वा मोहाद्द्विजश्चान्द्रायणं चरेत् ४३
तुम्बकोशातकं चैव पलाण्डुं गृञ्जनं तथा ।
छत्राकं लशुनं चैव भुक्त्वा चान्द्रायणं चरेत् ४४

द्विजः पर्युषितं चान्नं पक्कं परगृहागतम् ।
विपक्कं च तथा मांसं भुक्त्वा चान्द्रायणं चरेत् ४५
उदक्यया शुना वाऽपि चण्डालैर्वा द्विजोत्तमः ।
दृष्टमन्नं तु भुञ्जानो द्विजश्चान्द्रायणं चरेत् ॥४६
एतत्पुरा विशुद्ध्यर्थमृषिभिश्चरितं व्रतम् ।
पावनं सर्वभूतानां पुण्यं पाण्डवचोदितम् ॥ ४७
एतेन वसवो रुद्राश्चादित्याश्च दिवं गताः ।
एतदद्य परं गुह्यं पवित्रं पापनाशनम् ॥ ४८
यथोक्तमेतद्यः कुर्याद्द्विजः पापप्रणाशनम् ।
स दिवं याति पूतात्मा निर्मलादित्यसंनिभः ४९

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि वैष्णवधर्मपर्वणि द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥

---

## त्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥

कृष्णेन युधिष्ठिरंप्रति कार्तिकादिद्वादशमासेषु एकभुक्तव्रताचरणप्रकारनिरूपणपूर्वकं तत्फलकथनम् ॥ १ ॥

---

वैशंपायन उवाच
केशवेनैवमुक्ते तु चान्द्रायणविधिक्रमे ।
अपृच्छत्पुनरन्यांश्च धर्मान्धर्मात्मजो नृप ॥ १
युधिष्ठिर उवाच ।
सर्वभूतपते श्रीमन्सर्वभूतनमस्कृत ।
सर्वभूतहितं धर्मं सर्वज्ञ कथयस्व नः ॥
भगवानुवाच ।
यद्दरिद्रजनस्यापि स्वर्ग्यं सुखकरं भवेत् ।
सर्वपापप्रशमनं तच्छृणुष्व युधिष्ठिर ॥
कार्तिकाद्यास्तु ये मासा द्वादशैव प्रकीर्तिताः
तेष्वेकभुक्तनियमः सर्वेषामुच्यते मया ॥
कार्तिके यस्तु वै मासे नन्दायां संयतेन्द्रियः
एकभुक्तेन मद्भक्तो मासमेकं तु वर्तते ॥
जलं वा न पिबेन्मासे नान्तरं भोजनात्परम्
आदित्यरूपं मां नित्यमर्चयन्सुसमाहितः ॥ ६
व्रतान्ते भोजयेद्विप्रान्दक्षिणां संप्रदाय च ।
क्रोधलोभविनिर्मुक्तस्तस्य पुण्यफलं शृणु ॥ ७
विधिवत्कपिलादाने यत्पुण्यं समुदाहृतम् ।
तत्पुण्यं समनुप्राप्य सूर्यलोके महीयते ।
ततश्चापि च्युतः कालात्पुरुषेषूपजायते ॥ ८
मार्गशीर्षं तु यो मासमेकभुक्तेन वर्तते ।
कामं क्रोधं च लोभं च परित्यज्य यथाविधि ॥ ९
स्नात्वा चादित्यरूपं मामर्चयेन्नियतेन्द्रियः ।
जपेच्चैव च गायत्रीं मामिकां वाग्यतेन्द्रियः ॥ १०
मासे परिसमाप्ते तु भोजयित्वा द्विजाञ्शुचिः ।
तानर्चयति मद्भक्त्या तस्य पुण्यफलं शृणु ॥ ११
अग्निहोत्रे कृते पुण्यमाहिताग्नेस्तु यद्भवेत् ।
तत्पुण्यं फलमासाद्य यानेनांऽबरशोभिना ।
सह सप्तर्षिलोकेषु यथाकामं यथासुखम् ॥ १२
ततश्चापि च्युतः कालाद्धरिवर्षेषु जायते ।
तत्र प्रकामं क्रीडित्वा राजा पश्चाद्भविष्यति ॥ १३
पौषमासं क्षिपेदेवमेकभुक्तेन यो नरः ।
अर्चयन्नेव मां नित्यं मद्व्रतेनान्तरात्मना ॥ १४
अहिंसासत्यसहितः क्रोधहर्षविवर्जितः ।
एवं युक्तस्य राजेन्द्र शृणु यत्फलमुत्तमम् ॥ १५
विप्रातिथ्यसहस्रेषु यत्पुण्यं समुदाहृतम् ।
तत्पुण्यं समनुप्राप्य शक्रलोके महीयते ॥ १६
अवतीर्णस्ततः कालादिलावर्षेषु जायते ।
तत्र स्थित्वा चिरं कालमस्मिन्विप्रो भविष्यति १७
माघमासं सदा यस्तु वर्तते चैकभुक्ततः ।
मदर्चनपरो भूत्वा डंभक्रोधविवर्जितः ।
मामिकामपि सावित्रीं सन्ध्यायां तु जपेद्बुधः ॥१८
दत्त्वा तु दक्षिणामन्ते भोजयित्वा द्विजानपि ।
नमस्करोति तान्भक्त्या मद्व्रतेनान्तरात्मना ।
त्रिकालस्नानयुक्तस्य तस्य पुण्यफलं शृणु ॥ १९
नीलकण्ठप्रयुक्तेन यानेनांऽबरशोभिना ।
पितृलोकं व्रजेच्छ्रीमान्सेव्यमानोऽप्सरोगणैः ॥ २०
तत्र प्रकामं क्रीडित्वा भद्राश्वेषूपजायते ।
ततश्च्युतश्चतुर्वेदी विप्रो भवति भूतले ॥ २१
यश्चरेत्फाल्गुनं मासमेकभुक्तो जितेन्द्रियः ।

नमो ब्रह्मण्यदेवायेत्येतन्मन्त्रं जपेत्सदा ॥ २२
पायसं भोजयेद्विप्रान्व्रतान्ते संयतेन्द्रियः ।
मदर्चनपरोऽक्रोधस्तस्य पुण्यफलं शृणु ॥ २३
विमानं सारसैर्युक्तमारूढः कामगामि च ।
नक्षत्रलोके रमते नक्षत्रसदृशाकृतिः ॥ २४
ततश्चापि च्युतः कालात्केतुमालेषु जायते ।
तत्र प्रकामं क्रीडित्वा मानुषेषु मुनिर्भवेत् ॥ २५
चैत्रमासं तु यो राजन्नेकभुक्तेन वर्तते ।
ब्रह्मचारी च मद्भक्त्या तस्य पुण्यफलं शृणु ॥ २६
यदग्निहोत्रिणः पुण्यं यथोक्तं व्रतचारिणः ।
तत्पुण्यफलमासाद्य चन्द्रलोके महीयते ॥ २७
ततोऽवतीर्णो जायेत वर्षे रमणके पुनः ।
भुक्त्वा कामांस्ततस्तस्मिन्निह राजा भविष्यति २८
वैशाखे यस्तु मासे वै ह्येकभुक्तेन वर्तते ।
द्विजमग्रासने कृत्वा भुञ्जन्भूमौ च वाग्यतः ॥२९
नमो ब्रह्मण्यदेवायेत्यर्चयित्वा दिवाकरम् ।
व्रतान्ते भोजयेद्विप्रांस्तस्य पुण्यफलं शृणु ॥ ३०
फलं यद्विधिवत्प्रोक्तमग्निष्टोमातिरात्रयोः ।
तत्पुण्यफलमासाद्य देवलोके महीयते ॥ ३१
ततो हैमवते वर्षे जायते कालपर्ययात् ।
तत्र प्रकामं क्रीडित्वा विप्रः पश्चाद्भविष्यति ॥३२
ज्येष्ठमासं तु यो विप्रो ह्येकभुक्तेन वर्तते ।
विप्रमग्रासने कृत्वा भूमौ भुञ्जन्यथाविधि ॥ ३३
नमो ब्रह्मण्यदेवायेत्युच्चरन्मां समाहितः ।
डंभानृतविनिर्मुक्तस्तस्य पुण्यफलं शृणु ॥ ३४
चीर्णे चान्द्रायणे सम्यग्यत्पुण्यं समुदाहृतम् ।
तत्पुण्यफलमासाद्य देवलोके महीयते ॥ ३५
अथोत्तरकुरौ वर्षे जायते निर्गतस्ततः ।
ततश्चापि च्युतः कालादिह लोके द्विजो भवेत् ३६
आषाढमासं यो राजन्नेकभुक्तेन वर्तते ।
ब्रह्मचारी जितक्रोधो मदर्चनपरायणः ॥ ३७
विप्रमग्रासने कृत्वा भूमौ भुञ्जञ्जितेन्द्रियः ।
कृत्वा त्रिषवणं स्नानमष्टाक्षरविधानतः ॥ ३८
व्रतान्ते भोजयेद्विद्वान्पायसेन युधिष्ठिर ।
गुडोदनेन राजेन्द्र तस्य पुण्यफलं शृणु ॥ ३९
कपिलाशतदानस्य यत्पुण्यं पाण्डुनन्दन ।
तत्पुण्यफलमासाद्य देवलोके महीयते ॥ ४०
ततोऽवतीर्णः काले तु शाकद्वीपे तु जायते ।
ततश्चापि च्युतः कालादिह विप्रो भविष्यति ४१
श्रावणं यः क्षिपेन्मासमेकभुक्तेन वर्तते ।
नमो ब्रह्मण्यदेवायेत्युक्त्वा मामर्चयेत्सदा ।
विप्रमग्रासने कृत्वा भूमौ भुञ्जन्यथाविधि ॥४२
पायसेनार्चयन्विप्राञ्जितक्रोधो जितेन्द्रियः ।
लोभमोहविनिर्मुक्तस्तस्य पुण्यफलं शृणु ॥ ४३
कपिलादानस्य यत्पुण्यं विधिदत्तस्य पाण्डव ।
तत्पुण्यं समनुप्राप्य शक्रलोके महीयते ॥ ४४
ततश्चापि च्युतः कालात्कुशद्वीपे प्रजायते ।
तत्र प्रकामं क्रीडित्वा विप्रो भवति मानुषे॥४५
यस्तु भाद्रपदं मासमेकभुक्तेन वर्तते ।
ब्रह्मचारी जितक्रोधः सत्यसन्धो जितेन्द्रियः ४६
विप्रमग्रासने कृत्वा पाकभेदविवर्जितः ।
नमो ब्रह्मण्यदेवायेत्युक्त्वाऽस्य चरणौ स्पृशेत् ४७
तिलानपि घृतं वाऽपि व्रतान्ते दक्षिणां ददत् ।
मद्भक्तस्य नरश्रेष्ठ तस्य पुण्यफलं शृणु ॥ ४८
यत्फलं विधिवत्प्रोक्तं राजसूयाश्वमेधयोः ।
तत्पुण्यफलमासाद्य शक्रलोके महीयते ॥ ४९
ततश्चापि च्युतः कालाज्जायते धनदालये ।
तत्र प्रकामं क्रीडित्वा राजा भवति मानुषे ॥५०
यश्चाप्याश्वयुजं मासमेकभुक्तेन वर्तते ।
मद्गायत्रीं जपेद्भक्त्या मद्गतेनान्तरात्मना ।
द्विसन्ध्यं वा त्रिसन्ध्यं वा शतमष्टोत्तरं तु वा५१
विप्रमग्रासने कृत्वा संयतेन्द्रियमानसः ।
व्रतान्ते भोजयेद्विप्रांस्तस्य पुण्यफलं शृणु ॥ ५२
अश्वमेधस्य यत्पुण्यं विधिवत्पाण्डुनन्दन ।
तत्पुण्यफलमासाद्य मम लोके महीयते ॥ ५३
ततश्चापि च्युतः कालाच्छ्वेतद्वीपे प्रजायते ।
तत्र भुक्त्वा च भोगांश्च ततो विप्रवरो भवेत् ५४

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि वैष्णवधर्मपर्वणि त्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥

## चतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥

कृष्णेन युधिष्ठिरंप्रति केशवादिभगवन्मूर्त्युपास्तिपूर्वकं मार्गशीर्षादिद्वादशद्वादशीव्रताचरणफलकथनम् ॥१॥ युधिष्ठिरेण विस्तरेण कृष्णस्तवनम् ॥ २ ॥ पुनः कृष्णेन युधिष्ठिराय एकादश्युपवासपूर्वकं द्वादश्यां भगवत्पूजायाः फलकथनम् ॥ ३ ॥

युधिष्ठिर उवाच ।
एवं संवत्सरं पूर्णमेकभुक्तेन यः क्षिपेत् ।
तस्य पुण्यफलं यद्वै तन्ममाचक्ष्व केशव ॥ १
भगवानुवाच ।
शृणु पाण्डव तत्त्वं मे वचनं पुण्यमुत्तमम् ।
यदकृत्वाऽथवा कृत्वा नरः पापैः प्रमुच्यते ॥ २
एकभुक्तेन वर्तेत नरः संवत्सरं तु यः ।
ब्रह्मचारी जितक्रोधो ह्यधश्शायी जितेन्द्रियः॥३
शुचिश्च स्नानतो व्यग्रः सत्यवागनसूयकः ।
अर्चन्नेव तु मां नित्यं मद्गतेनान्तरात्मना ।
सन्ध्ययोस्तु जपेन्नित्यं मद्गायत्रीं समाहितः॥ ४
नमो ब्रह्मण्यदेवायेत्यसकृन्मां प्रणम्य च ।
विप्रमग्रासने कृत्वा यावकं भैक्षमेव वा ॥ ५
भुक्त्वा तु वाग्यतो भूमावाचान्तस्य द्विजन्मनः ।
नमोस्तु वासुदेवायेत्युक्त्वा तु चरणौ स्पृशेत्॥६
मासेमासे समाप्ते तु भोजयित्वा द्विजाञ्शुचीन् ।
संवत्सरे ततः पूर्णे दद्यात्तु व्रतदक्षिणाम् ॥ ७
नवनीतमयीं गां वा तिलधेनुमथापि वा ।
विप्रहस्तच्युतैस्तोयैः सहिरण्यैः समुक्षितः ।
तस्य पुण्यफलं राजन्कथ्यमानं मया शृणु ॥ ८
दशजन्मकृतं पापं ज्ञानतोऽज्ञानतोपि वा ।
तद्विनश्यति तस्याशु नात्र कार्या विचारणा ॥ ९
युधिष्ठिर उवाच ।
सर्वेषामुपवासानां यच्छ्रेयः सुमहत्फलम् ।
यच्च निःश्रेयसं लोके तद्भवान्वक्तुमर्हति ॥ १०
भगवानुवाच ।
शृणु राजन्यथापूर्वं मयाऽभीष्टं तु मोदते ।
तथा ते कथयिष्यामि मद्भक्ताय युधिष्ठिर ॥११
यस्तु भक्त्या शुचिर्भूत्वा पञ्चम्यां मे नराधिप ।
उपवासव्रतं कुर्यात्त्रिकालं चार्चयंस्तु माम् ।
सर्वक्रतुफलं लब्ध्वा मम लोके महीयते ॥ १२
युधिष्ठिर उवाच ।
भगवन्देवदेवेश पञ्चमी नाम का तव ।
तामहं श्रोतुमिच्छामि कथयस्व ममानघ ॥ १३
भगवानुवाच ।
पर्वद्वयं च द्वादश्यां श्रवणं च नराधिप ।
मत्पञ्चमीति विख्याता मत्प्रिया च विशेषतः १४
तस्मात्तु ब्राह्मणश्रेष्ठैर्मन्निवेशितबुद्धिभिः ।
उपवासस्तु कर्तव्यो मत्प्रियार्थं विशेषतः ॥ १५
द्वादश्यामेव वा कुर्यादुपवासमशक्नुवन् ।
तेनाहं परमां प्रीतिं यास्यामि नरपुङ्गव ॥ १६
अहोरात्रेण द्वादश्यां मार्गशीर्षेण केशवम् ।
उपोष्य पूजयेद्यो मां सोऽश्वमेधफलं लभेत् ॥१७
द्वादश्यां पुष्यमासे तु नाम्ना नारायणं तु माम् ।
उपोष्य पूजयेद्यो मां वाजिमेधफलं लभेत् ॥ १८
द्वादश्यां माघमासे तु मामुपोष्य तु माधवम् ।
पूजयेद्यः समाप्नोति राजसूयफलं नृप ॥ १९
द्वादश्यां फाल्गुने मासि गोविन्दाख्यमुपोष्य माम् ।
पूजयेद्यः समाप्नोति ह्यतिरात्रफलं नृप ॥ २०
द्वादश्यां मासि चैत्रे तु मां विष्णुं समुपोष्य यः ।
पूजयंस्तदवाप्नोति पौण्डरीकस्य यत्फलम् ॥ २१
द्वादश्यां मासि वैशाखे मधुसूदनसंज्ञितम् ।
उपोष्य पूजयेद्यो मां सोग्निष्टोमस्य पाण्डव ॥ २२
द्वादश्यां ज्येष्ठमासे तु मामुपोष्य त्रिविक्रमम् ।
अर्चयेद्यः समाप्नोति गवां मेधफलं नृप ॥ २३
आषाढे वामनाख्यं मां द्वादश्यां समुपोष्य यः ।
नरमेधस्य स फलं प्राप्नोति भरतर्षभ ॥ २४
द्वादश्यां श्रावणे मासि श्रीधराख्यमुपोष्य माम् ।
पूजयेद्यः समाप्नोति पञ्चयज्ञफलं नृप ॥ २५
मासे भाद्रपदे यो मां हृषीकेशाख्यमर्चयेत् ।
उपोष्य स समाप्नोति सौत्रामणिफलं नृप ॥ २६
द्वादश्यामाश्वयुङ्मासे पद्मनाभमुपोष्य माम् ।

अर्चयेद्यः समाप्नोति गोसहस्रफलं नृप ॥ २७
द्वादश्यां कार्तिके मासि मां दामोदरसंज्ञितम्।
उपोष्य पूजयेद्यस्तु सर्वक्रतुफलं नृप ॥ २८
केवलेनोपवासेन द्वादश्यां पाण्डुनन्दन
यत्फलं पूर्वमुद्दिष्टं तस्यार्धं लभते नृप ॥ २९
श्रावणेऽप्येवमेवं मामर्चयेद्भक्तिमान्नरः।
मम सालोक्यमाप्नोति नात्र कार्या विचारणा ३०
मासेमासे समभ्यर्च्य क्रमशो माममतन्द्रितः।
पूर्णे संवत्सरे कुर्यात्पुनः संवत्सरं तु माम् ॥ ३१
एवं द्वादशवर्षं यो मद्भक्तो मत्परायणः।
अविघ्नमर्चयानस्तु मम सायुज्यमाप्नुयात् ॥ ३२
अर्चयेत्प्रीतिमान्यो मां द्वादश्यां वेदसंहिताम्।
स पूर्वोक्तफलं राजँल्लभते नात्र संशयः ॥ ३३
गन्धं पुष्पं फलं तोयं पत्रं वा मूलमेव वा।
द्वादश्यां मम यो दद्यात्तत्समो नास्ति मत्प्रियः ३४
एतेन विधिना सर्वे देवाः शक्रपुरोगमाः।
मद्भक्ता नरशार्दूल स्वर्गलोकं तु भुञ्जते ॥ ३५
वैशंपायन उवाच
एवं वदति देवेशे केशवे पाडुनन्दनः।
कृताञ्जलिः स्तोत्रमिदं भक्त्या धर्मात्मजोऽब्रवीत्॥
सर्वलोकेश देवेश हृषीकेश नमोस्तु ते।
सहस्रशिरसे नित्यं सहस्राक्ष नमोस्तु ते ॥ ३७
त्रयीमय त्रयीनाथ त्रयीस्तुत नमोनमः।
यज्ञात्मन्यज्ञसंभूत यज्ञनाथ नमोनमः ॥ ३८
चतुर्मूर्ते चतुर्बाहो चतुर्व्यूह नमोनमः।
लोकात्मँल्लोककृन्नाथ लोकावास नमोनमः॥ ३९
सृष्टिसंहारकर्त्रे ते नरसिंह नमोनमः।
भक्तप्रिय नमस्तेऽस्तु कृष्ण नाथ नमोनमः॥ ४०
लोकप्रिय नमस्तेऽस्तु भक्तवत्सल ते नमः।
ब्रह्मावास नमस्तेऽस्तु ब्रह्मनाथ नमोनमः ॥ ४१
रुद्ररूप नमस्तेऽस्तु रुद्रकर्मरताय ते।
पञ्चयज्ञ नमस्तेऽस्तु सर्वयज्ञ नमोनमः ॥ ४२
कृष्णप्रिय नमस्तेऽस्तु कृष्णनाथ नमोनमः।
योगिप्रिय नमस्तेऽस्तु योगिनाथ नमोनमः ४३
हयवक्त्र नमस्तेऽस्तु चक्रपाणे नमोनमः।
पञ्चभूत नमस्तेऽस्तु पञ्चायुध नमोनमः ॥ ४४
पायन उवाच।
भक्तिगद्गदया वाचा स्तुवत्येवं युधिष्ठिरे।
गृहीत्वा केशवो हस्ते प्रीतात्मा तं न्यवारयत् ४५
निवार्य च पुनर्वाचा भक्तिनम्रं युधिष्ठिरम्।
वक्तुमेव नरश्रेष्ठ धर्मपुत्रं प्रचक्रमे ॥ ४६
भगवानुवाच।
अन्यवत्किमिदं राजन्मां स्तौषि नरपुङ्गव।
तिष्ठ पृच्छ यथापूर्वं धर्मपुत्र युधिष्ठिर ॥ ४७
युधिष्ठिर उवाच।
भगवंस्त्वत्प्रसादात्तु धर्मं स्मृत्वा पुनःपुनः।
न शान्तिरस्ति मे देव नृत्यतीव च मे मनः॥ ४८
इदं च धर्मसंपन्नं वक्तुमर्हसि माधव।
कृष्णपक्षेषु द्वादश्यामर्चनीयः कथं भवेत् ॥ ४९
भगवानुवाच।
शृणु राजन्यथापूर्वं तत्सर्वं कथयामि ते।
परमं कृष्णद्वादश्यामर्चनायां फलं मम ॥ ४०
एकादश्यामुपोष्याथ द्वादश्यामर्चयेत्तु माम्
विप्रानपि यथालाभं पूजयेद्भक्तिमान्नरः ॥ ५१
स गच्छेद्दक्षिणामूर्तिं मां वा नात्र विचारणा।
चन्द्रसालोक्यमथवा ग्रहनक्षत्रपूजितः ॥ ५२

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि वैष्णवधर्मपर्वणि चतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥

## पञ्चदशाधिकशततमोऽध्यायः ॥ ११५ ॥

कृष्णेन युधिष्ठिरंप्रति विषुवाख्यपुण्यकालस्य महिमानुवर्णनपूर्वकं तत्र दानादिप्रशंसनम् ॥ १ ॥ तथा गायत्रीजपमाहात्म्यकथनम्, अश्वत्थमाहात्म्यकथनं च ॥ २ ॥ तथा नानाधर्मकथनपूर्वकं शिंशुमाराकृतिनिरूपणम्, पञ्चगव्यविधानकथनं च ॥ ३ ॥

वैशंपायन उवाच।
केशवेनैवमाख्याते धर्मपुत्रः पुनःपुनः।
पप्रच्छ दानकालस्य विशेषं च विधिं नृप ॥ १
युधिष्ठिर उवाच।

देव किं फलमाख्यातं विषुवेष्वमरेश्वर ।
सूर्येन्दूपप्लवे चैव वक्तुमर्हसि तत्फलम् ॥ २
भगवानुवाच ।
शृणुष्व राजन्विषुवे सोमार्कग्रहणेषु च ।
व्यतीपातेऽयने चैव दानं स्यादक्षयं फलम् ॥ ३
राजन्नयनयोर्मध्ये विषुवं संप्रचक्षते ।
समे रात्रिदिने तत्र सन्ध्यायां विषुवे नृप ॥ ४
ब्रह्माऽहं शङ्करश्चापि तिष्ठामः सहिताः सकृत् ।
क्रियाकरणकार्याणामेकीभावत्वकारणात् ॥ ५
अस्माकमेकीभूतानां निष्कलं परमं पदम् ।
तन्मुहूर्तं परं पुण्यं राजन्विषुवसंज्ञितम् ॥ ६
तदेवाद्यक्षरं ब्रह्म परं ब्रह्मेति कीर्तितम् ।
तस्मिन्मुहूर्ते सर्वे तु चिन्तयन्ति परं पदम् ॥ ७
देवाश्च वसवो रुद्राः पितरश्चाश्विनौ तथा ।
साध्याश्च विश्वे गन्धर्वाः सिद्धा ब्रह्मर्षयस्तथा ॥८
सोमादयो ग्रहाश्चैव सरितः सागरास्तथा ।
मरुतोप्सरसो नागा यक्षराक्षसगुह्यकाः ॥ ९
एते चान्ये च राजेन्द्र विषुवे संयतेन्द्रियाः ।
सोपवासाः प्रयत्नेन भवन्ति ध्यानतत्पराः ॥१०
अन्न गावस्तिलान्भूमि कन्यादान च ।
गृहमायतनं धान्यं वाहनं शयनं तथा ॥ ११
यच्चान्यच्च मया प्रोक्तं तत्प्रयच्छ युधिष्ठिर ।
दीयते विषुवेष्वेवं श्रोत्रियेभ्यो विशेषतः ॥ १२
तस्य दानस्य कौन्तेय क्षयं नैवोपपद्यते ।
वर्धतेऽहरहः पुण्यं तद्दानं कोटिसंमितम् ॥ १३
विषुवे स्नपनं यस्तु मम कुर्याद्धरस्य वा ।
अर्चनां च यथान्यायं तस्य पुण्यफलं शृणु ॥१४
दशजन्मकृतं पापं तस्य सद्यो विनश्यति ।
दशानामश्वमेधानामिष्टानां लभते फलम् ॥ १५
विमानं दिव्यमारूढः कामरूपी यथासुखम् ।
स याति मामकं लोकं रुद्रलोकमथापि वा ॥१६
तत्रस्थैर्देवगन्धर्वैर्गीयमानो यथासुखम् ।
दिव्यवर्षसहस्राणि कोटिमेकं तु मोदते ॥ १७
ततश्चापि च्युतः कालादिह लोके द्विजोत्तमः ।
चतुर्णामपि वेदानां पारगो ब्रह्मविद्भवेत् ॥ १८
चन्द्रसूर्यग्रहे व्योम्नि मम वा शङ्करस्य वा ।
गायत्रीं मामिकां वाऽपि जपेद्यः शङ्करस्य वा १९
शङ्खतूर्यस्वनैश्चैव कांस्यघण्टास्वनैरपि ।
कारयेत्तु ध्वनिं भक्त्या तस्य पुण्यफलं शृणु ॥२०
गान्धर्वैर्होमजप्यैश्च जप्तैरुत्कृष्टनामभिः ।
दुर्बलोपि भवेद्राहुः सोमश्च बलवान्भवेत् ॥ २१
सूर्येन्दूपप्लवे चैव श्रोत्रियेभ्यः प्रदीयते ।
तत्सहस्रगुणं भूत्वा दातारमुपतिष्ठति ॥ २२
महापातकैर्युक्तोपि यद्यपि स्यान्नरोत्तम ।
निष्पापस्तत्क्षणादेव तेन दानेन जायते ॥ २३
चन्द्रसूर्यप्रकाशेन विमानेन विराजता ।
याति सोमपुरं रम्यं सेव्यमानोप्सरोगणैः ॥ २४
यावदृक्षाणि तिष्ठन्ति गगने शशिना सह ।
तावत्कालं स राजेन्द्र सोमलोके महीयते ॥ २५
ततश्चापि च्युतः कालादिह लोके युधिष्ठिर ।
वेदवेदाङ्गविद्विप्रः कोटीधनपतिर्भवेत् ॥ २६
युधिष्ठिर उवाच ।
भगवंस्तव गायत्री जप्यते च कथं विभो ।
किं वा तस्य फलं देव ममाचक्ष्व सुरेश्वर ॥ २७
भगवानुवाच ।
द्वादश्यां विषुवे चैव चन्द्रसूर्यग्रहे तथा ।
अयने श्रवणे चैव व्यतीपाते तथैव च ॥ २८
अश्वत्थदर्शने चैव तथा मद्दर्शनेऽपि च ।
जप्या तु मम गायत्री चाथवाऽष्टाक्षरं नृप ।
आर्जितं दुष्कृतं तस्य नाशयेन्नात्र संशयः ॥ २९
युधिष्ठिर उवाच ।
अश्वत्थदर्शनं चैव किं त्वद्दर्शनसंमितम् ।
एतत्कथय मे देव परं कौतूहलं हि मे ॥ ३०
भगवानुवाच ।
अहमश्वत्थरूपेण पालयामि जगत्रयम् ।
अश्वत्थो न स्थितो यत्र नाहं तत्र प्रतिष्ठितः ३१
यत्राहं संस्थितो राजन्नश्वत्थश्चापि तिष्ठति ।
यस्त्वेनमर्चयेद्भक्त्या स मां साक्षात्समर्चति ॥ ३२

यस्त्वेनं प्रहरेत्कोपान्मामेव प्रहरेत्तु सः ।
तस्मात्प्रदक्षिणं कुर्यान्न च्छिन्द्यादेनमन्वहम् ॥ ३३
व्रतस्य पारणं तीर्थमार्जवं तीर्थमुच्यते ।
देवशुश्रूषणं तीर्थं गुरुशुश्रूषणं तथा ॥ ३४
पितृशुश्रूषणं तीर्थं मातृशुश्रूषणं तथा ।
दाराणां तोषणं तीर्थं गार्हस्थ्यं तीर्थमुच्यते ॥ ३५
आतिथेयः परं तीर्थं ब्रह्मतीर्थं सनातनम् ।
ब्रह्मचर्यं परं तीर्थं त्रेताग्निस्तीर्थमुच्यते ॥ ३६
मूलं धर्मं तु विज्ञाय मनस्तत्रावधार्यताम् ।
गच्छ तीर्थानि कौन्तेय धर्मो धर्मेण वर्धते ॥ ३७
द्विविधं तीर्थमित्याहुः स्थावरं जङ्गमं तथा ।
स्थावराज्जङ्गमं तीर्थं ततो ज्ञानपरिग्रहः ॥ ३८
कर्मणाऽपि विशुद्धस्य पुरुषस्येह भारत ।
हृदये सर्वतीर्थानि तीर्थभूतः स उच्यते ॥ ३९
गुरुतीर्थं परं ज्ञानमतस्तीर्थं न विद्यते ।
ज्ञानतीर्थं परं तीर्थं ब्रह्मतीर्थं सनातनम् ॥ ४०
क्षमा तु परमं तीर्थं सर्वतीर्थेषु पाण्डव ।
क्षमावतामयं लोकः परश्चैव क्षमावताम् ॥ ४१
मानितोऽमानितो वाऽपि पूजितोऽपूजितोपि वा ।
आक्रुष्टस्तर्जितो वाऽपि क्षमावांस्तीर्थमुच्यते ॥ ४२
क्षमा यशः क्षमा दानं क्षमा यज्ञः क्षमा दमः ।
क्षमाऽहिंसा क्षमा धर्मः क्षमा चेन्द्रियनिग्रहः ४३
क्षमा दया क्षमा यज्ञः क्षमयैव धृतं जगत् ।
क्षमावान्ब्राह्मणो देवः क्षमावान्ब्राह्मणो वरः ॥४४
क्षमावानाप्नुयात्स्वर्गं क्षमावानाप्नुयाद्यशः ।
क्षमावान्प्राप्नुयान्मोक्षं तस्मात्साधुः स उच्यते ४५
आत्मा नदी भारतपुण्यतीर्थ-
मात्मा तीर्थं सर्वतीर्थप्रधानम् ।
आत्मा यज्ञः सततं मन्यते वै
स्वर्गो मोक्षः सर्वमात्मन्यधीनम् ॥ ४६
आचारनैर्मल्यमुपागतेन
सत्यक्षमानिस्तुलशीतलेन ।
ज्ञानाम्बुना स्नाति हि नित्यमेवं
किं तस्य भूयः सलिलेन तीर्थम् ॥ ४७

युधिष्ठिर उवाच ।
भगवन्सर्वपापघ्नं प्रायश्चित्तमदुष्करम् ।
त्वद्भक्तस्य सुरश्रेष्ठ मम त्वं वक्तुमर्हसि ॥ ४८
भगवानुवाच ।
रहस्यमिदमत्यर्थमश्राव्यं पापकर्मणाम् ।
अधार्मिकाणामश्राव्यं प्रायश्चित्तं ब्रवीमि ते ॥ ४९
पावनं ब्राह्मणं दृष्ट्वा मद्गतेनान्तरात्मना ।
नमो ब्रह्मण्यदेवायेत्यभिवादनमाचरेत् ॥ ५०
प्रदक्षिणं च यः कुर्यात्पुनरष्टाक्षरेण तु ।
तेन तुष्टेन विप्रेण तत्पापं क्षपयाम्यहम् ॥ ५१
पोत्रकृष्टां वराहस्य मृत्तिकां शिरसा वहन् ।
प्राणायामशतं कृत्वा नरः पापैः प्रमुच्यते ॥ ५२
दक्षिणावर्तशङ्खाद्वा कपिलाशृङ्गतोपि वा ।
प्राक्स्रोतसं नदीं गत्वा ममायतनसंनिधौ ॥ ५३
सलिलेन तु यः स्नायात्सकृदेव रविग्रहे ।
तस्य यत्संचितं पापं तत्क्षणादेव नश्यति ॥ ५४
मस्तकान्निस्सृतैस्तोयैः कपिलाया युधिष्ठिर ।
गोमूत्रेणापि यः स्नायाद्रोहिण्यां मम वा दिने ।
विप्रपादच्युतैर्वाऽपि तोयैः पापं प्रणश्यति ॥ ५५
नमस्येद्यस्तु मद्भक्त्या शिंशुमारं प्रजापतिम् ।
चतुर्दशाङ्गसंयुक्तं तस्य पापं प्रणश्यति ॥ ५६
ततश्चतुर्दशाङ्गानि शृणु तस्य युधिष्ठिर ।
शिरो धर्मो हनुर्ब्रह्मा वृषावुत्तरदक्षिणौ ॥ ५७
हृदयं तु भवेद्विष्णुरंसौ स्यातां तथाऽश्विनौ ।
अत्रिर्मध्यं भवेद्राजँल्लिङ्गं संवत्सरं भवेत् ॥ ५८
मित्रावरुणकौ पादावूरुद्वन्द्वं हुताशनः ।
ततः पश्चाद्भवेदिन्द्रस्ततः पश्चात्प्रजापतिः ॥ ५९
अभयं च ततः पश्चात्स एव ध्रुवसंज्ञिकः ।
एतान्यङ्गानि सर्वाणि शिंशुमारप्रजापतेः ॥ ६०
पिबेत्तु पञ्चगव्यं यः पौर्णमास्यामुपोष्य तु ।
तस्य नश्यति यत्पापं तत्पापं पूर्वसंचितम् ॥ ६१
तथैव ब्रह्मकूर्चं तु समन्त्रं तु पृथक्पृथक् ।
मासिमासि पिबेद्यस्तु तस्य पापं प्रणश्यति ॥ ६२
पात्रं च ब्रह्मकूर्चं च शृणु तत्र च भारत ।

पालाशं पद्मपत्रं च ताम्रं वाऽथ हिरण्मयम् ।
सादयित्वा तु गृह्णीयात्तत्तु पात्रमुदाहृतम् ॥ ६३
गायत्र्या गृह्यते मूत्रं गन्धद्वारेति गोमयम् ।
आप्यायस्वेति च क्षीरं दधिक्राण्वेति वै दधि ६४
तेजोसिशुक्रमित्याज्यं देवस्यत्वेति कुशोदकम् ।
आपोहिष्ठेत्यृचा गृह्य यवचूर्णं यथाविधि ॥ ६५
ब्रह्मणे च यथा हुत्वा समिद्धे च हुताशने ।
आलोड्य प्रणवेनैव निर्मथ्य प्रणवेन तु ॥ ६६
उद्धृत्य प्रणवेनैव पिबेत्तु प्रणवेन तु ।
महताऽपि स पापेन त्वचेवाहिर्विमुच्यते ॥ ६७
भद्रं न इति यः पादं पठन्नृक्संहितां तदा ।
अन्तर्जले वाऽभ्यादित्ये तस्य पापं प्रणश्यति॥६८
मम सूक्तं जपेद्यस्तु नित्यं मद्गतमानसः ।
न पापेन स लिप्येत पद्मपत्रमिवांभसा ॥ ६९

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि वैष्णवधर्मपर्वणि पञ्चदशाधिकशततमोऽध्यायः ॥ ११५ ॥

## षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥

कृष्णेन युधिष्ठिरंप्रति भगवद्भक्तिसौशील्याद्यभावे ब्राह्मणानामपि अग्निहोत्रस्वाध्यायाध्ययनादिसत्कर्मणामपि वैफल्यस्य शूद्राणामपि भक्त्यादिमतां स्वोचितकिंचित्कर्मणामपि साफल्यस्य च कथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
कीदृशा ब्राह्मणाः पुण्या भावशुद्धाः सुरेश्वर ।
यत्कर्म सफलं नेति कथयस्व ममानघ ॥ १
भगवानुवाच ।
शृणु पाण्डव तत्सर्वं ब्राह्मणानां यथाक्रमम् ।
सफलं निष्फलं चैव तेषां कर्म ब्रवीमि ते ॥ २
त्रिदण्डधारणं मौनं जटाधारणमुण्डनम् ।
वल्कलाजिनसंवासो व्रतचर्याऽभिषेचनम् ॥ ३
अग्निहोत्रं गृहे वासः स्वाध्यायं दारसत्क्रिया ।
सर्वाण्येतानि वै मिथ्या यदि भावो न निर्मलः ४
अग्निहोत्रं वृथा राजन्वृथा वेदास्तथैव च ।
शीलेन देवास्तुष्यन्ति श्रुतयस्तत्र कारणम् ॥ ५
क्षान्तं दान्तं जितक्रोधं जितात्मानं जितेन्द्रियम्
तमग्र्यं ब्राह्मणं मन्ये शेषाः शूद्रा इति स्मृताः ६
अग्निहोत्रव्रतपरान्स्वाध्यायनिरताञ्शुचीन् ।
उपवासरतान्दान्तांस्तान्देवा ब्राह्मणान्विदुः ॥ ७
न जात्या पूजितो राजन्गुणाः कल्याणकारणाः ।
चण्डालमपि वृत्तस्थं तं देवा ब्राह्मणं विदुः ॥ ८
मनश्शौचं कर्मशौचं कुलशौचं च भारत ।
शरीरशौचं वाक्छौचं शौचं पञ्चविधं स्मृतम् ॥९
पञ्चस्वे
हृदयस्य च शौचेन स्वर्गं गच्छन्ति मानवाः॥१०
अग्निहोत्रपरिभ्रष्टः प्रसक्तः क्रयविक्रयैः ।
वर्णसङ्करकर्ता च ब्राह्मणो वृषलैः समः ॥ ११
यस्य वेदश्रुतिर्नष्टा कर्षकश्चापि यो द्विजः ।
विकर्मसेवी कौन्तेय स वै वृषल उच्यते ॥ १२
वृषो हि धर्मो विज्ञेयस्तस्य यः कुरुते लयम् ।
वृषलं तं विदुर्देवा निकृष्टं श्वपचादपि ॥ १३
स्तुतिभिर्ब्रह्मगीताभिर्यः शूद्रं स्तौति मानवः ।
न तु मां स्तौति पापात्मा स तु चण्डालतः समः १४
श्वदृतौ तु यथा क्षीरं ब्रह्म वै वृषले तथा ।
दुष्टतामेति तत्सर्वं शुना लीढं हविर्यथा ॥ १५
अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तरः ।
धर्मशास्त्रं पुराणं च विद्या ह्येताश्चतुर्दश ॥ १६
यान्युक्तानि मया सम्यग्विद्यास्थानानि भारत ।
उत्पन्नानि पवित्राणि भुवनार्थं तथैव च ॥ १७
तस्मात्तानि न शूद्रस्य स्प्रष्टव्यानि युधिष्ठिर ।
सर्वं च शूद्रसंस्पृष्टमपवित्रं न संशयः ॥ १८
लोके त्रीण्यपवित्राणि पञ्चामेध्यानि भारत ।
श्वा च शूद्रः श्वपाकश्च अपवित्राणि पाण्डव ॥ १९
गायकः कुक्कुटो यूपो ह्युदक्या वृषलीपतिः ।
स्युरमेध्याश्च स्प्रष्टव्या न कदाचन ।

स्पृष्ट्वैतानष्ट वै विप्रः सचेलो जलमाविशेत् ॥ २०
मद्भक्ताञ्शूद्रसामान्यादवमन्यन्ति ये नराः ।
नरकेष्वेव तिष्ठन्ति वर्षकोटिं नराधमाः ॥ २१
चण्डालमपि मद्भक्तं नावमन्येत बुद्धिमान् ।
अवमानात्पतन्त्येव नरके रौरवे नराः ॥ २२
मम भक्तस्य भक्तेषु प्रीतिरभ्यधिका मम ।
तस्मान्मद्भक्तभक्ताश्च पूजनीया विशेषतः ॥ २३
कीटपक्षिमृगाणां च मयि संन्यस्तचेतसाम् ।
ऊर्ध्वामेव गतिं विद्धि किं पुनर्ज्ञानिनां नृणाम् २४
पत्रं वाऽप्यथवा पुष्पं फलं वाऽप्यप एव वा ।
ददाति मम शूद्रो यच्छिरसा धारयामि तत् ॥ २५
विप्रानेवार्चयेद्भक्त्या शूद्रप्रायांश्च मत्प्रियान् ।
तेषां तेनैव रूपेण पूजां गृह्णामि भारत ॥ २६
वेदोक्तेनैव मार्गेण सर्वभूतहृदि स्थितम् ।
मामर्चयन्ति ये विप्रा मत्सायुज्यं व्रजन्ति ते ॥२७
मद्भक्तानां हितायैव प्रादुर्भावः कृतो मया ।
प्रदुर्भावकृता काचिदर्चनीया युधिष्ठिर ॥ २८
आसामन्यतमां मूर्तिं यो मद्भक्त्या समर्चति ।
तेनैव परितुष्टोऽहं भविष्यामि न संशयः ॥ २९
मृदा च मणिरत्नैश्च ताम्रेण रजतेन च ।
कृत्वा प्रतिकृतिं कुर्यादर्चनां काञ्चनेन वा ।
पुण्यं दशगुणं विद्यादेतेषामुत्तरोत्तरम् ॥ ३०
जपकामो भवेद्राजा विद्याकामो द्विजोत्तमः ।
वैश्यो वा धनकामस्तु शूद्रः सुखफलप्रियः ।
सर्वकामाः स्त्रियो वाऽपि सर्वान्कामानवाप्नुयुः ३१

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि वैष्णवधर्मपर्वणि षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥

---

## सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥

कृष्णेन युधिष्ठिरंप्रत्यश्वत्थगोब्राह्मणमहिमप्रशंसनपूर्वकं ब्राह्मण्यभ्रंशकदुष्कर्मकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
कीदृशानां तु शूद्राणां नानुगृह्णासि चार्चनम् ।
उद्वेगस्तव कस्माद्धि तन्मे ब्रूहि सुरेश्वर ॥ १
भगवानुवाच ।
अव्रतेनाप्यभक्तेन स्पृष्टां शूद्रेण चार्चनाम् ।
तां वर्जयामि राजेन्द्र श्वपाकविहितामिव ॥ २
नन्वहं शङ्करश्चापि गावो विप्रास्तथैव च ।
अश्वत्थोऽमररूपं हि त्रयमेतद्युधिष्ठिर ॥ ३
एतत्त्रयं हि मद्भक्तो नावमन्येत कर्हिचित् ।
अवमानितमेतत्तु दहत्यासप्तमं कुलम् ॥ ४
अश्वत्थो ब्राह्मणा गावो मन्मयास्तारयन्ति हि ।
तस्मादेतत्प्रयत्नेन त्रयं पूजय पाण्डव ॥ ५
युधिष्ठिर उवाच ।
ब्राह्मणेनैव देहेन कथं शूद्रत्वमाप्नुयात् ।
ब्रह्म वा नश्यति कथं वक्तुं देव त्वमर्हसि ॥ ६
भगवानुवाच
कूपस्नानं तु यो विप्रः कुर्याद्द्वादशवार्षिकम् ।
स तेनैव शरीरेण शूद्रत्वं यात्यसंशयम् ॥ ७
यस्तु राजाश्रयेणैव जीवेद्द्वादशवार्षिकम् ।
स शूद्रत्वं व्रजेद्विप्रो वेदानां पारगोपि सन् ॥ ८
पत्तने नगरे वाऽपि यो द्वादशसमा वसेत् ।
स शूद्रत्वं व्रजेद्विप्रो नात्र कार्या विचारणा ॥ ९
उत्पादयति यः पुत्रं शूद्रायां काममोहितः ।
तस्य कायगतं ब्रह्म सद्य एव विनश्यति ॥ १०
यः सोमलतिकां विप्रः केवलं भक्षयेद्वृथा ।
तस्य कायगतं ब्रह्म सद्य एव विनश्यति ॥ ११
मैथुनं कुरुते यस्तु जिह्वायां ब्राह्मणो नृप ।
तस्य कायगतं ब्रह्म सद्य एव विनश्यति ॥ १२
विप्रत्वं दुर्लभं प्राप्य दुर्मार्गैरेवमादिभिः ।
विनाशयन्ति ये तत्तु ताञ्शोचामि युधिष्ठिर १३
तस्मात्सर्वप्रयत्नेन मत्प्रियो यो युधिष्ठिर ।
जातिभ्रंशकरं कर्म न कुर्यादीदृशं द्विजः ॥ १४

॥ इति श्रीमन्महाभारते आश्वमेधिकपर्वणि वैष्णवधर्मपर्वणि सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥

## अष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥

कृष्णेन युधिष्ठिरंप्रति पालाशविधिप्रकारकथनम् ॥ १ ॥ तथा तीर्थाटनासमर्थानां तत्प्रतिनिधितीर्थानुवर्णनम् ॥ २ ॥ तथा भगवद्भक्तलक्षणकथनपूर्वकं तत्प्रशंसनम् ॥ ३ ॥ तथा स्वस्य सर्वोत्तमत्वकथनपूर्वकं स्वोक्तधर्मश्रवणस्य फलकथनम् ॥ ४ ॥ ततो युधिष्ठिराद्यामन्त्रणपूर्वकं दारुकोपनीतरथारोहणेन द्वारकांप्रति गमनम् ॥ ५ ॥

युधिष्ठिर उवाच ।
देशान्तरगते विप्रे संयुक्ते कालधर्मणा ।
शरीरनाशे संप्राप्ते कथं प्रेतत्वकल्पना ॥ १
भगवानुवाच ।
श्रूयतामाहिताग्नेस्तु तथाभूतस्य संस्क्रिया ।
पालाशवृन्दैः प्रतिमा कर्तव्या कल्पचोदिता ॥ २
त्रीणि षष्टिशतान्याहुरस्थीन्यस्य युधिष्ठिर ।
तेषां विकल्पना कार्या यथाशास्त्रं विनिश्चितम् ३
अशीत्यर्धं शिरसि च ग्रीवायां दश एव च ।
बाह्वोश्चापि शतं दद्यादङ्गुलीषु पुनर्दश ॥ ४
उरसि त्रिंशतं दद्याज्जठरे वाऽपि विंशतिम् ।
वृषणे द्वादशार्धं तु शिश्ने चाष्टार्धमेव च ॥ ५
दद्यात्तु शतमूर्वोस्तु षष्ट्यर्धं जानुजङ्घयोः ।
दश दद्याच्चरणयोरेषा प्रेतस्य निष्कृतिः ॥ ६
युधिष्ठिर उवाच ।
विशेषतीर्थं सर्वेषामशक्तानामनुग्रहात् ।
भक्तानां तारणार्थं तु वक्तुमर्हसि धर्मतः ॥ ७
भगवानुवाच ।
पावनं सर्वतीर्थानां सत्यं गायन्ति सामगाः ।
सत्यस्य वचनं तीर्थमहिंसा तीर्थमुच्यते ॥ ८
तपस्तीर्थं दया तीर्थं शीलं तीर्थं युधिष्ठिर ।
अल्पसंतोषकं तीर्थं नारी तीर्थं पतिव्रता ॥ ९
संतुष्टो ब्राह्मणस्तीर्थं ज्ञानं वा तीर्थमुच्यते ।
मद्भक्तः सततं तीर्थं शङ्करस्य विशेषतः ॥ १०
यतयस्तीर्थमित्येवं विद्वांसस्तीर्थमुच्यते ।
शरण्यपुरुषस्तीर्थमभयं तीर्थमुच्यते ॥ ११
त्रैलोक्येऽस्मिन्निरुद्विग्नो न बिभेमि कुतश्चन ।
न दिवा यदि वा रात्रावुद्विग्नः शूद्रलङ्घनात् ॥ १२
न भयं देवदैत्येभ्यो रक्षोभ्यश्चैव मे नृप ।
शूद्रवक्त्राच्च्युतं ब्रह्म भयं तु मम सर्वदा ॥ १३
तस्मात्सप्रणवं शूद्रो मन्नामापि न कीर्तयेत् ।
प्रणवं हि परं लोके ब्रह्म ब्रह्मविदो विदुः ॥ १४
द्विजशुश्रूषणं धर्मः शूद्राणां भक्तितो मयि ।
तेन गच्छन्ति ते स्वर्गं चिन्तयन्तो हि मां सदा ॥
द्विजशुश्रूषया शूद्रः परं श्रेयोऽधिगच्छति ।
द्विजशुश्रूषणादन्यन्नास्ति शूद्रस्य निष्कृतिः ॥ १६
रागो द्वेषश्च मोहश्च पारुष्यं चानृशंसता ।
शाठ्यं च दीर्घवैरित्वमतिमानमनार्जवम् ॥ १७
अनृतं चापवादं च पैशुन्यमतिलोभता ।
हिंसा स्तेयो मृषावादो वञ्चना रोषलोभता ॥ १८
अबुद्धिता च नास्तिक्यं भयमालस्यमेव च ।
अशौचं चाकृतज्ञत्वं डंभता स्तंभ एव च ।
निकृतिश्चाप्यविज्ञानं जातके शूद्रमाविशेत् ॥ १९
सृष्ट्वा पितामहः शूद्रमभिभूतं तु तामसैः ।
द्विजशुश्रूषणं धर्मं शूद्राणां तु प्रयुक्तवान् ।
नश्यन्ति तामसा भावाः शूद्रस्य द्विजभक्तितः २०
पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतं मूर्ध्ना गृह्णामि शूद्रतः ॥ २१
अग्रजो वाऽपि यः कश्चित्सर्वपापसमन्वितः ।
यदि मां सततं ध्यायेत्सर्वपापैः प्रमुच्यते ॥ २२
विद्याविनयसंपन्ना ब्राह्मणा वेदपारगाः ।
मयि भक्तिं न कुर्वन्ति चण्डालसदृशा हि ते ॥ २३
वृथा दानं वृथा तप्तं वृथा चेष्टं वृथा हुतम् ।
वृथाऽऽतिथ्यं च तत्तस्य यो न भक्तो मम द्विजः ॥
यत्कृतं च हुतं चापि यदिष्टं दत्तमेव च ।
अभक्तिमत्कृतं सर्वं राक्षसा एव भुञ्जते ॥ २५
स्थावरे जङ्गमे वाऽपि सर्वभूतेषु पाण्डव ।
समत्वेन यदा कुर्यान्मद्भक्तो मित्रशत्रुषु ॥ २६
आनृशंस्यमहिंसा च यथा सत्यं तथाऽऽर्जवम् ।
भूतानां मद्व्रतानां व्रतं नृप ॥ २७

नम इत्येव यो ब्रूयान्मद्भक्तं श्रद्धयाऽन्वितः ।
तस्याक्षयाऽभवँल्लोकाः श्वपाकस्यापि पार्थिव॥२८
किं पुनर्ये यजन्ते मां सदारं विधिपूर्वकम् ।
मद्भक्ता मद्गतप्राणाः कथयन्तश्च मां सदा ॥ २९
बहुवर्षसहस्राणि तपस्तप्यति यो नरः ।
नासौ पदमवाप्नोति मद्भक्तैर्यदवाप्यते ॥ ३०
मामेव तस्माद्राजेन्द्र ध्यायन्नित्यमतन्द्रितः ।
अवाप्स्यति ततः सिद्धिं द्रक्ष्यत्येव परं पदम् ॥३१
अपार्थकं प्रभाषन्तः शूद्रा भागवता इति ।
न शूद्रा भगवद्भक्ता विप्रा भागवताः स्मृताः ३२
द्वादशाक्षरतत्वज्ञश्चतुर्व्यूहविभागवित् ।
अच्छिद्रपञ्चकालज्ञः स वै भागवतः स्मृतः ॥ ३३
ऋग्वेदेनैव होता च यजुषाऽध्वर्युरेव च ।
सामवेदेन चोद्गाता पुण्येनाभिष्टुवन्ति माम् ३४
अथर्वशिरसा चैव नित्यमाथर्वणा द्विजाः ।
स्तुवन्ति सततं ये मां ते वै भागवताः स्मृताः३५
वेदाधीनाः सदा यज्ञा यज्ञाधीनास्तु देवताः
देवता ब्राह्मणाधीनास्तस्माद्विप्रास्तु देवताः॥ ३६
अनाश्रित्योच्छ्रयं नास्ति मुख्यमाश्रयमाश्रयेत् ।
रुद्रं समाश्रिता देवा रुद्रो ब्रह्माणमाश्रितः ॥ ३७
ब्रह्मा मामाश्रितो राजन्नाहं कंचिदुपाश्रितः ।
ममाश्रयो न कश्चित्तु सर्वेषामाश्रयो ह्यहम् ॥ ३८
एवमेतन्मया प्रोक्तं रहस्यमिदमुत्तमम् ।
धर्मप्रियस्य ते नित्यं राजन्नेवं समाचर ॥ ३९
इदं पवित्रमाख्यानं पुण्यं वेदेन संमितम् ।
यः पठेन्मामकं धर्ममहन्यहनि पाण्डव ॥ ४०
धर्मोपि वर्धते तस्य बुद्धिश्चापि प्रसीदति
पापक्षयमुपेत्यैवं कल्याणं च विवर्धते ॥ ४१
एतत्पुण्यं पवित्रं च पापनाशनमुत्तमम् ।
श्रोतव्यं श्रद्धया युक्तैः श्रोत्रियैश्च विशेषतः ४२
श्रावयेद्यस्त्विदं भक्त्या प्रयतोथ शृणोति वा ।
स गच्छेन्मम सायुज्यं नात्र कार्या विचारणा ४३
यश्चेमं श्रावयेच्छ्राद्धे मद्भक्तो मत्परायणः ।
पितरस्तस्य तृप्यन्ति यावदाभूतसंप्लवम् ॥ ४४

वैशंपायन उवाच

श्रुत्वा भागवतान्धर्मान्साक्षाद्विष्णोर्जगद्गुरोः ।
प्रहृष्टमनसो भूत्वा चिन्तयन्तोद्भुताः कथाः ॥ ४५
ऋषयः पाण्डवाश्चैव प्रणेमुस्तं जनार्दनम् ।
पूजयामास गोविन्दं धर्मपुत्रः पुनः पुनः ॥ ४६
देवा ब्रह्मर्षयः सिद्धा गन्धर्वाप्सरसस्तथा ।
ऋषयश्च महात्मानो गुह्यका भुजगास्तथा ॥ ४७
वालखिल्या महात्मानो योगिनस्तत्वदर्शिनः ।
तथा भागवताश्चापि पञ्चकालमुपासकाः ॥ ४८
कौतूहलसमायुक्ता भगवद्भक्तिमागताः ।
श्रुत्वा तु परमं पुण्यं वैष्णवं धर्मशासनम् ॥ ४९
विमुक्तपापाः पूतास्ते संवृत्तास्तत्क्षणेन तु ।
प्रणम्य शिरसा विष्णुं प्रतिनन्द्य च ताः कथाः ५०
द्रष्टारो द्वारकायां वै वयं सर्वे जगद्गुरुम् ।
इति प्रहृष्टमनसो ययुर्देवगणैः सह ।
सर्वे ऋषिगणा राजन्ययुः स्वंस्वं निवेशनम् ॥५१
गतेषु तेषु सर्वेषु केशवः केशिहा हरिः ।
सस्मार दारुकं राजन्स च सात्यकिना सह ।
समीपस्थोऽभवत्सूतो याहि देवेति चाब्रवीत् ५२
ततो विषण्णवदनाः पाण्डवाः पुरुषोत्तमम् ।
अञ्जलिं मूर्ध्नि संधाय नेत्रैरश्रुपरिप्लुतैः ।
पिबन्तः सततं कृष्णं नोचुरार्ततरास्तदा ॥ ५३
कृष्णोपि भगवान्देवः पृथामामन्त्र्य चार्तवत् ।
धृतराष्ट्रं च गान्धारीं विदुरं द्रौपदीं तथा ॥ ५४
कृष्णद्वैपायनं व्यासमृषीनन्यांश्च मन्त्रिणः ।
सुभद्रामात्मजयुतामुत्तरां स्पृश्य पाणिना ।
निर्गत्य वेश्मनस्तस्मादारुरोह तदा रथम् ॥ ५५
वाजिभिः शैब्यसुग्रीवमेघपुष्पबलाहकैः ।
युक्तं तु ध्वजभूतेन पतगेन्द्रेण धीमता ॥ ५६
अन्वारुरोह चाप्येनं प्रेम्णा राजा युधिष्ठिरः ।
अपास्य चाशु यन्तारं दारुकं सूतसत्तमम्
अभीशून्प्रतिजग्राह स्वयं कुरुपतिस्तदा ॥ ५७
उपारुह्यार्जुनश्चापि चामरव्यजनं शुभम् ।
रुक्मदण्डं बृहन्मूर्ध्नि दुधावाभिप्रदक्षिणम् ॥ ५८

तथैव भीमसेनोपि रथमारुह्य वीर्यवान् ।
छत्रं शतशलाकं च दिव्यमाल्योपशोभितम् ५९
वैडूर्यमणिदण्डं च चामीकरविभूषितम् ।
दधार तरसा भीमश्छत्रं तच्छार्ङ्गधन्वनः ॥ ६०
उपारुह्य रथं शीघ्रं चामरव्यजने सिते ।
नकुलः सहदेवश्च धूयमानौ जनार्दनम् ॥ ६१
भीमसेनोऽर्जुनश्चैव यमावप्यरिसूदनौ ।
पृष्ठतोऽनुययुः कृष्णं माशब्द इति हर्षिताः ॥६२
त्रियोजने व्यतीते तु परिष्वज्य च पाण्डवान् ।
विसृज्य कृष्णस्तान्सर्वान्प्रणतान्द्वारकां ययौ ॥६३
तथा प्रणम्य गोविन्दं तदाप्रभृति पाण्डवाः ।
कपिलाद्यानि दानानि ददुर्धर्मपरायणाः ॥ ६४
मधुसूदनवाक्यानि स्मृत्वास्मृत्वा पुनःपुनः ।
मनसा पूजयामासुर्हृदयस्थानि पाण्डवाः ॥ ६५
युधिष्ठिरस्तु धर्मात्मा हृदि कृत्वा जनार्दनम् ।
तद्भक्तस्तन्मना युक्तस्तद्याजी तत्परोऽभवत् ॥६६
एवमुक्तं पुरावृत्तं वैष्णवं धर्मशासनम् ।
मया ते कथितं राजन्पवित्रं पापनाशनम् ॥ ६७
तच्छृणुष्व महाराज विष्णुप्रोक्तं कुरूद्वह ।
तेन गच्छसि नान्येन तद्विष्णोः परमं पदम् ॥६८

॥ इति श्रीमन्महाभारते शतसाहस्र्यां संहितायां वैयासिक्यां आश्वमेधिकपर्वणि वैष्णवधर्मपर्वणि अष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥

॥ इत्याश्वमेधिकपर्व समाप्तम् ॥

---

इतः परमाश्रमवासिकपर्व भविष्यति ।
तस्यायमाद्यः श्लोकः ।
जनमेजय उवाच ।
प्राप्य पैतामहं राज्यं मम पूर्वपितामहाः ।
कथमासन्महाराजे धृतराष्ट्रे महात्मनि ॥

इत्याश्वमेधिकपर्व कुंभघोणस्थेन टी. आर्. कृष्णाचार्येण टी. आर्. व्यासाचार्येण च मुंबय्यां निर्णयसागरमुद्रायन्त्रे मुद्रापितम् । शकाब्दाः १८३२ सन १९१०.

# SRIMANMAHABHARATAM

A NEW EDITION

MAINLY BASED ON

THE SOUTH INDIAN TEXTS,

With footnotes and Readings.

---

## ASHRAMAVASIKAPARVA XV.

EDITED BY

T. R. KRISHNACHARYA & T. R. VYASACHARYA,

Proprietors, Madhva Vilas Book Depot, Kumbakonam.

*Printed by B. R. Ghanekar for the proprietors,*

*at Tukaram Javaji's "Nirnaya-sagar" Press,*

BOMBAY.

1910.

॥ श्रीः ॥

# श्रीमन्महाभारतम् ।

## सटिप्पणम् ।



## आश्रमवासिकपर्व १५.

---

एतच्च

कुम्भघोणस्थेन श्रीमन्मध्वविलासपुस्तकालयाधिपतिना

**टी. आर्. कृष्णाचार्येण टी. आर्. व्यासाचार्येण च**

अनेकेषां विदुषां साहाय्येन दाक्षिणात्यबहुकोशानुसारेण

संशोध्य

मुंबापुर्यां

जावजी दादाजी इत्येतेषां निर्णयसागरमुद्रणयन्त्रे मुद्रयित्वा प्रकाशितम् ।

शाके १८३२ साधारणनामसंवत्सरे ।


आश्रमवासिक पर्व.
कुंती
धृतराष्ट्रः
गांधारी
विदुरः
संजयः
पांडवा
द्रौपदी सुभद्रादयः

श्रीः ।

# श्रीमन्महाभारतम् ।

## आश्रमवासिकपर्व १५ ।

### (अथाश्रमवासपर्व ॥ १ ॥)

#### प्रथमोऽध्यायः ॥ १ ॥

युधिष्ठिरेण राज्यपरिपालनम् ॥ १ ॥ कुन्तीद्रौपद्यादिभिर्गान्धार्यां श्वश्रूवद्वर्तनम् ॥ २ ॥ भीमवर्जमर्जुनादिभिर्युधिष्ठिरशासनेन विशेषतो धृतराष्ट्रानुवर्तनम् ॥ ३ ॥

श्रीवेदव्यासाय नमः ।
नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥ १
जनमेजय उवाच ।
प्राप्य पैतामहं राज्यं मम पूर्वपितामहाः ।
कथमासन्महाराजे धृतराष्ट्रे महात्मनि ॥ १
स तु राजा हतामात्यो हतपुत्रो निराश्रयः ।
कथमासीद्धतैश्वर्यो गान्धारी च तपस्विनी ॥ २
कियन्तं चैव कालं ते मम पूर्वपितामहाः ।
स्थिता राज्ये महात्मानस्तन्मे व्याख्यातुमर्हसि ॥ ३
वैशंपायन उवाच ।
प्राप्य राज्यं महात्मानः पाण्डवा हतशत्रवः ।
धृतराष्ट्रं पुरस्कृत्य पृथिवीं पर्यपालयन् ॥ ४
धृतराष्ट्रमुपातिष्ठद्विदुरः संजयस्तथा ।
वैश्यापुत्रश्च मेधावी युयुत्सुः कुरुसत्तम ॥ ५
पाण्डवाः सर्वकार्येषु पर्यपृच्छन्त तं नृपम् ।
चक्रुस्तेनाभ्यनुज्ञाता वर्षाणि दश पञ्च च ॥ ६
सदाऽभिगम्य ते वीराः पर्युपासन्त तं नृपम् ।
पादाभिवादनं कृत्वा धर्मराजमते स्थिताः ॥ ७
ते मूर्ध्नि समुपाघ्राताः सर्वकार्याणि चक्रिरे ।
कुन्तिभोजसुता चैव गान्धारीमन्ववर्तत ॥ ८
द्रौपदी च सुभद्रा च याश्चान्याः पाण्डवस्त्रियः ।
समां वृत्तिमवर्तन्त तयोः श्वश्र्वोर्यथाविधि ॥ ९
शयनानि महार्हाणि वासांस्याभरणानि च ।
राजार्हाणि च सर्वाणि भक्ष्यभोज्यान्यनेकशः १०
युधिष्ठिरो महाराज धृतराष्ट्रेऽभ्युपाहरत् ।
तथैव कुन्ती गान्धार्यां गुरुवृत्तिमवर्तत ॥ ११
विदुरः संजयश्चैव युयुत्सुश्चैव कौरव ।
उपासते स्म तं वृद्धं हतपुत्रं जनाधिपम् ॥ १२
श्यालो द्रोणस्य यश्चासीद्दयितो ब्राह्मणो महान् ।
स च तस्मिन्महेष्वासः कृपः समभवत्तदा ॥ १३
व्यासश्च भगवान्नित्यमासांचक्रे नृपेण ह ।
कथाः कुर्वन्पुराणर्षिर्देवर्षिपितृरक्षसाम् ॥ १४
धर्मयुक्तानि कार्याणि व्यवहारान्वितानि च ।
धृतराष्ट्राभ्यनुज्ञातो विदुरस्तान्यकारयत् ॥ १५
सामन्तेभ्यः प्रियाण्यस्य कार्याणि सुबहून्यपि ।
प्राप्यन्तेऽर्थैः सुलघुभिः सुनयाद्विदुरस्य वै ॥ १६
अकरोद्बन्धमोक्षं च वध्यानां मोक्षणं तथा ।

गान्धारी च यशस्विनीति झ. थ. पाठः ॥ २ ॥ उपातिष्ठदारावितवान् ॥ ५ ॥ सतां वृत्तिमवर्तन्तेति थ. पाठः ॥ ९ ॥ तस्मिन्धृतराष्ट्रे समभवत्तन्निकटे अभवत् ॥ १३ ॥ वासं चक्रे नृपेण हेति क. थ. पाठः ॥ १४ ॥ प्रभावाद्विदुरस्य वै इति क. थ. पाठः ॥ १६ ॥

न च धर्मसुतो राजा कदाचित्किंचिदब्रवीत् ॥ १७
विहारयात्रासु पुनः कुरुराजो युधिष्ठिरः ।
सर्वान्कामानुपस्थाप्य धृतराष्ट्रे न्यवेदयत् ॥ १८
आरालिकाः सूपकारा रागषाडविकास्तथा ।
उपातिष्ठन्त राजानं धृतराष्ट्रं यथापुरम् ॥ १९
वासांसि च महार्हाणि माल्यानि विविधानि च ।
उपाजह्रुर्यथाकालं धृतराष्ट्रस्य पाण्डवाः ॥ २०
मैरेयमधुमांसानि पानकानि लघूनि च ।
चित्रान्भक्ष्यविकारांश्च चक्रुस्तस्य यथा पुरा॥२१
ये चापि पृथिवीपालाः समाजग्मुस्ततस्ततः ।
उपातिष्ठन्त ते सर्वे कौरवेन्द्रं यथापुरा ॥ २२
कुन्ती च द्रौपदी चैव सात्वती च यशस्विनी ।
उलूपी नागकन्या च देवी चित्राङ्गदा तथा २३
धृष्टकेतोश्च भगिनी जरासन्धसुता तथा ।
एताश्चान्याश्च बह्व्यो वै योषितः पुरुषर्षभ ।
किंकराः पर्युपातिष्ठन्सर्वाः सुबलजां तथा ॥ २४
यथा पुत्रवियुक्तोऽयं न किंचिद्दुःखमाप्नुयात् ।
इति तानन्वशाद्भ्रातॄन्नित्यमेव युधिष्ठिरः ॥ २५
एवं ते धर्मराजस्य श्रुत्वा वचनमर्थवत् ।
सविशेषमवर्तन्त भीममेकं तदा विना ॥ २६
न हि तत्तस्य वीरस्य हृदयादपसर्पति ।
धृतराष्ट्रस्य दुर्बुद्ध्या यद्वृत्तं द्यूतमण्डले ॥ २७

॥ इति श्रीमन्महाभारते आश्रमवासिकपर्वणि आश्रमवासपर्वणि प्रथमोऽध्यायः ॥ १ ॥

## [द्वित]ीयोऽध्यायः ॥ २ ॥

युधिष्ठिरेण नागराणां धृतराष्ट्रानुशासनपूर्वकं सहभ्रातृभिरप्रमादेन तत्परितोषणम् ॥ १ ॥

[वै]शंपायन उवाच ।
एवं संपूजितो राजा पाण्डवैरंबिकासुतः ।
विजहार यथापूर्वमृषिभिः पर्युपस्थितः ॥ १
ब्रह्मदेयाग्रहारांश्च प्रददौ स कुरूद्वहः ।
तच्च कुन्तीसुतो राजा सर्वमेवान्वमोदत ॥ २
आनृशंस्यपरो राजा प्रीयमाणो युधिष्ठिरः ।
उवाच स तदा भ्रातॄनमात्यांश्च महीपतिः ।
मया चैव भवद्भिश्च मान्य एष नराधिपः ॥ ३
निदेशे धृतराष्ट्रस्य यस्तिष्ठति स मे सुहृत् ।
विपरीतश्च मे शत्रुर्नियम्यश्च भवेन्नरः ॥ ४
परिवृत्तेषु चाहःसु पुत्राणां श्राद्धकर्मणि ।
ददौ च राजा वित्तानि यावदस्य चिकीर्षितम् ५
ततः स राजा कौरव्यो धृतराष्ट्रो महामनाः ।
ब्राह्मणेभ्यो यथार्हेभ्यो ददौ वित्तान्यनेकशः ॥६
धर्मराजश्च भीमश्च सव्यसाची यमावपि ।
तत्सर्वमन्ववर्तन्त धृतराष्ट्रव्यपेक्षया ॥ ७
कथं नु राजा वृद्धः स पुत्रपौत्रवधार्दितः ।
शोकमस्मत्कृतं प्राप्य न म्रियेतेति चिन्त्य ते ॥८
यावद्धि कुरुवीरस्य जीवत्पुत्रस्य वै सुखम् ।
तावत्सुखमवाप्नोति भोगांश्चैव व्यवस्थितान् ॥ ९
ततस्ते सहिताः पञ्च भ्रातरः पाण्डुनन्दनाः ।
तथाशीलाः समातस्थुर्धृतराष्ट्रस्य शासने ॥ १०
धृतराष्ट्रश्च तान्सर्वान्विनीतान्नियमे स्थितान् ।
शिष्यवृत्तिं समापन्नान्गुरुवत्प्रत्यपद्यत ॥ ११
गान्धारी चैव पुत्राणां विविधैः श्राद्धकर्मभिः ।
आनृण्यमगमत्कामान्विप्रेभ्यः प्रतिपाद्य सा ॥१२
एवं धर्मभृतांश्रेष्ठो धर्मराजो युधिष्ठिरः ।
भ्रातृभिः सहितो धीमान्पूजयामास तं नृपम् ॥१३
स राजा सुमहातेजा वृद्धः कुरुकुलोद्वहः ।
न ददर्श तदा किंचिदप्रियं पाण्डुनन्दने ॥ १४
वर्तमानेषु सद्वृत्तिं पाण्डवेषु महात्मसु ।
प्रीतिमानभवद्राजा धृतराष्ट्रोंऽबिकासुतः ॥ १५

---

अरया शस्त्रविशेषेण लून छिन्न शाकादि अराल्लु तत्संस्कुर्वन्ति ते आरालिकाः शाकविशेषकर्तारः रागखाण्डविकास्तथेति झ. पाठः । रागषाडवं पिप्पलीशुंठीशर्करोपेतो मुद्गयूषस्तत्कर्तारो रागषाडविकाः ॥ १९ ॥ अन्वशात् अनुशिक्षितवान् ॥ २५ ॥ प्रथमोऽध्यायः ॥ १ ॥

निरस्यश्च भवेन्नर इति क. थ. पाठः ॥४॥ द्वितीयोऽध्यायः॥२॥

सौबलेयी च गान्धारी पुत्रशोकमपास्य तम्
सदैव प्रीतिमत्यासीत्तनयेषु निजेष्विव ॥ १६
प्रियाण्येव तु कौरव्यो नाप्रियाणि कुरूद्वहः ।
वैचित्रवीर्ये नृपतौ समाचरत सर्वदा ॥ १७
यद्यद्ब्रूते च किंचित्स धृतराष्ट्रो जनाधिपः ।
गुरु वा लघु वा कार्यं गान्धारी च तपस्विनी १८
तं स राजा महाराज पाण्डवानां धुरंधरः ।
पूजयित्वा वचस्तत्तदकार्षीत्परवीरहा ॥ १९
तेन तस्याभवत्प्रीतो वृत्तेन स नराधिपः ।
अन्वतप्यत संस्मृत्य पुत्रं तं मन्दचेतसम् ॥ २०
सदा च प्रातरुत्थाय कृतजप्यः शुचिर्नृपः ।
आशास्ते पाण्डुपुत्राणां समरेष्वपराजयम् ॥ २१
ब्राह्मणान्स्वस्तिवाच्याथ हुत्वा चैव हुताशनम् ।
आयूंषि पाण्डुपुत्राणामाशंसत नराधिपः ॥ २२
न तां प्रीतिं परामाप पुत्रेभ्यः स तदा पुरा ।
यां प्रीतिं पाण्डुपुत्रेभ्यः सदाऽवाप नराधिपः २३
ब्राह्मणानां यथा वृत्तः क्षत्रियाणां यथाविधः ।
तथा विट्शूद्रसङ्घानामभवत्स प्रियस्तदा ॥ २४
यच्च किंचित्तदा पापं धृतराष्ट्रसुतैः कृतम् ।
अकृत्वा हृदि तत्पापं तं नृपं सोन्ववर्तत ॥ २५
यः कश्चिदपि यत्किंचित्प्रमादाद्वं विकासुते ।
कुरुते द्वेष्यतामेति स कौन्तेयस्य धीमतः ॥ २६
न राज्ञो धृतराष्ट्रस्य न च दुर्योधनस्य वै ।
उवाच दुष्कृतं कश्चिद्युधिष्ठिरभयान्नरः ॥ २७
धृत्या तुष्टो नरेन्द्रः स गान्धारी विदुरस्तथा ।
अजातशत्रोर्वृत्तेन न तु भीमस्य पार्थिवः ॥ २८
अन्ववर्तत भीमोपि निश्चितो धर्मजं नृपम् ।
धृतराष्ट्रं च संप्रेक्ष्य सदा भवति दुर्मनाः ॥ २९
राजानमनुवर्तन्त धर्मपुत्रममित्रहा ।
अन्ववर्तत संक्रुद्धो हृदयेन पराङ्मुखः ॥ ३०

॥ इति श्रीमन्महाभारते आश्रमवासिकपर्वणि आश्रमवासपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

## तृतीयोऽध्यायः ॥ ३ ॥

भीमसेनपरुषभाषणश्रवणान्निर्वेदमुपगतवता धृतराष्ट्रेण सहगान्धार्या वनगमनाध्यवसायः ॥ १ ॥ तथा सकलपौरानयनेन तेषु स्वाध्यवसायनिवेदनम् ॥ २ ॥

वैशंपायन उवाच
युधिष्ठिरस्य नृपतेर्दुर्योधनपितुस्तदा ।
नान्तरं ददृशू राज्ये पुरुषाः प्रणयं प्रति ॥ १
यदा तु कौरवो राजा पुत्रं सस्मार बालिशम् ।
तदा भीमं हृदा राजन्नपध्याति स पार्थिवः ॥ २
कौरवश्चैव भीमश्च हृदाऽन्योन्यमवर्तताम् ।
ध्यायन्तौ श्लक्ष्णया वाचा त्वन्योन्यमभितिष्ठतां ३
अप्रकाशं व्यलीकानि चकारास्य वृकोदरः ।
आज्ञां प्रत्यहरच्चापि कृतकैः पुरुषैः सदा ॥ ४
सरन्दुर्मन्त्रितं तस्य वृत्तान्यप्यस्य कानिचित् ।
'असंकुचाप्युवाचेदं हतास्ते मन्दचेतसः ॥' ५
अथ भीमः सुहृन्मध्ये बाहुशब्दं तथाऽकरोत् ।
संश्रवे धृतराष्ट्रस्य गान्धार्याश्चाप्यमर्षणः ॥ ६
स्मृत्वा दुर्योधनं शत्रुं कर्णदुःशासनावपि ।
प्रोवाचेदं सुसंरब्धो भीमः सपरुषं वचः ॥ ७
अन्धस्य नृपतेः पुत्रा मया परिघबाहुना
नीता लोकममुं सर्वे नानाशस्त्रास्त्रयोधिनः ॥ ८
इमौ तौ परिघप्रख्यौ भुजौ मम दुरासदौ ।
ययोरन्तरमासाद्य धार्तराष्ट्राः क्षयं गताः ॥ ९
ताविमौ चन्दनेनाक्तौ वन्दनीयौ च मे भुजौ ।
याभ्यां दुर्योधनो नीतः क्षयं ससुतबान्धवः १०
एताश्चान्याश्च विविधाः शल्यभूता नराधिपः ।
वृकोदरस्य ता वाचः श्रुत्वा निर्वेदमागमत् ॥ ११
सा च बुद्धिमती देवी कालपर्यायवेदिनी ।
गान्धारी सर्वधर्मज्ञा तान्यलीकानि शुश्रुवे ।
'कुन्तीं वर्या तु संवीक्ष्य शापे नास्याकरोन्मतिं' १२

तथैव भीमसेनोऽपि धृतराष्ट्रं जनाधिपम् । नामर्षयत राजेन्द्र सदैव दुष्टवद्धृदेति झ. पाठः ॥ ३ ॥

ततः पञ्चदशे वर्षे समतीते नराधिपः ।
राजा निर्वेदमापेदे भीमवाग्बाणपीडितः ॥ १३
'सुखासक्तं कृच्छ्रपरं ज्ञात्वा चैव युधिष्ठिरम् ।
तपोयोगात्तपस्तप्तुं मनश्चक्रे महामतिः ॥' १४
नान्वबुध्यत तद्राजा कुन्तीपुत्रो युधिष्ठिरः ।
श्वेताश्वो वाऽथ कुन्ती वा द्रौपदी वा यशस्विनी १५
माद्रीपुत्रौ च भीमस्य मतं तावन्ववर्तताम् ।
राज्ञस्तु चित्तं रक्षन्तौ नोचतुः स्वयमप्रियम् ॥१६
ततः समानयामास धृतराष्ट्रः सुहृज्जनम् ।
बाष्पसंदिग्धमत्यर्थमिदमाह च तान्भृशम् ॥१७
विदितं भवतामेतद्यथा वृत्तः कुरुक्षयः ।
ममापराधात्तत्सर्वमिति ज्ञेयं तु कौरवाः ॥ १८
योऽहं दुष्टमतिं मन्दो ज्ञातीनां भयवर्धनम् ।
दुर्योधनं कौरवाणामाधिपत्येऽभ्यषेचयम् ।
यच्चाहं वासुदेवस्य नाश्रौषं वाक्यमर्थवत् ॥ १९
वध्यतां साध्वयं पापः सामात्य इति दुर्मतिः ।
पुत्रस्नेहाभिभूतस्तु हितमुक्तो मनीषिभिः ॥ २०
विदुरेणाथ भीष्मेण द्रोणेन च कृपेण च ।
पदेपदे भगवता व्यासेन च महात्मना ।
संजयेनाथ गान्धार्या तदिदं तप्यते मया ॥ २१
यच्चाहं पाण्डुपुत्रेषु गुणवत्सु महात्मसु ।
न न्यस्तवाञ्श्रियं दीप्तां पितृपैतामहीमिमाम्२२
विनाशं पश्यमानो हि सर्वराज्ञां गदाग्रजः ।
एतच्छ्रेयस्तु परमममन्यत जनार्दनः ॥ २३
सोहमेतान्यलीकानि दुर्वृत्तान्यात्मनस्तदा ।
हृदये शल्यभूतानि धारयामि सहस्रशः ॥ २४
विशेषतस्तु दह्यामि वर्षे पञ्चदशेऽद्य वै ।
अस्य पापस्य शुद्ध्यर्थं नियतोसि सुदुर्मतिः॥२५
चतुर्थे नियते काले कदाचिदपि चाष्टमे ।
तृष्णाविनयनं भुञ्जे गान्धारी वेद तन्मम ॥ २६
करोत्याहारमिति मां सर्वः परिजनः सदा ।
युधिष्ठिरभयादेति भृशं तप्यति पाण्डवः ॥ २७
भूमौ शये जप्यपरो दर्भेष्वजिनसंवृतः ।
नियमव्यपदेशेन गान्धारी च यशस्विनी ॥ २८
अहं पुत्रशतं वीरं संग्रामेष्वपलायिनम् ।
नानुतप्ये हतं तत्र क्षत्रधर्मं हि तं विदुः ॥ २९
इत्युक्त्वा धर्मराजानमभ्यभाषत कौरवः ।
भद्रं ते यादवीमातर्वचश्चेदं निबोध मे ॥ ३०
सुखमध्युषितः पुत्र त्वया सुपरिपालितः ।
मया दानानि दत्तानि श्राद्धानि च पुनःपुनः ३१
प्रकृष्टं च मया पुत्र पुण्यं चीर्णं यथाबलम् ।
गान्धारी हतपुत्रेयं धैर्येणोदीक्षते च माम् ॥ ३२
द्रौपद्या ह्यपकर्तारस्तव चैश्वर्यहारिणः ।
समतीता नृशंसास्ते स्वधर्मेण हता युधि ॥ ३३
न तेषु प्रतिकर्तव्यं पश्यामि कुरुनन्दन ।
सर्वे शस्त्रजिताँल्लोकान्गतास्तेऽभिमुखं हताः॥ ३४
आत्मनस्तु हितं पुण्यं प्रतिकर्तव्यमद्य ते ।
गान्धार्याश्चैव राजेन्द्र तदनुज्ञातुमर्हसि ॥ ३५
त्वं तु शस्त्रभृतां श्रेष्ठः सततं धर्मवत्सलः ।
राजा गुरुः प्राणभृतां तस्मादेतद्ब्रवीम्यहम् ॥ ३६
अनुज्ञातस्त्वया वीर संश्रयेयं वनान्यहम् ।
चीरवल्कलभृद्राजन्गान्धार्या सहितोऽनघ ॥३७
तवाशिषः प्रयुञ्जानो भविष्यामि वनेचरः ।
उचितं नः कुले तात सर्वेषां भरतर्षभ ।
पुत्रेष्वैश्वर्यमाधाय वयसोन्ते वनं नृप ॥ ३८
तत्राहं वायुभक्षो वा निराहारोपि वा वसन् ।
पत्न्या सहानया वीर चरिष्यामि तपः परम् ॥३९
त्वं चापि फलभाक्तात तपसः पार्थिवो ह्यसि ।
फलभाजो हि राजानः कल्याणस्येतरस्य वा ॥४०

॥ इति श्रीमन्महाभारते आश्रमवासिकपर्वणि आश्रमवासपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

सोहमेतान्यतीतानीति क. पाठः ॥२४॥ तृष्णाविनयन तृषामात्रापहं मण्डादि नतु क्षुद्बाधिहरम्॥२६॥ तृतीयोऽध्यायः॥३॥

## चतुर्थोऽध्यायः ॥ ४ ॥

धृतराष्ट्रेण युधिष्ठिरंप्रति स्वस्य वनगमनाभ्यनुज्ञानप्रार्थना ॥ १ ॥ युधिष्ठिरेण धृतराष्ट्रानुशोचनपूर्वकं तत्प्रतिषेधने व्यासेन युधिष्ठिरचोदनाय तत्रागमनम् ॥ २ ॥

युधिष्ठिर उवाच ।
न मां प्रीणयते राज्यं त्वय्येवं दुःखिते नृप ।
धिङ्मामस्तु सुदुर्बुद्धिं राज्यसक्तं प्रमादिनम् ॥ १
गृहे वसन्तं दुःखार्तमुपवासकृशं भृशम् ।
यताहारं क्षितिशयं नाविदं भ्रातृभिः सह ॥ २
अहोस्मि वञ्चितो मूढो भवता गूढबुद्धिना ।
विश्वासयित्वा पूर्वं मां यदिदं दुःखमश्नुथाः ॥ ३
किं मे राज्येन भोगैर्वा किं यज्ञैः किं सुखेन वा ।
यस्य मे त्वं महीपाल दुखान्येतान्यवाप्तवान् ॥ ४
पीडितं चापि जानामि राज्यमात्मानमेव च ।
अनेन वचसा तेऽद्य दुःखितस्य जनेश्वर ॥ ५
भवान्पिता भवान्माता भवान्नः परमो गुरुः ।
भवता विप्रहीणा वै क्व नु तिष्ठामहे वयम् ॥ ६
औरसो भवतः पुत्रो युयुत्सुर्नृपसत्तम ।
अस्तु राजा महाराज यमन्यं मन्यते भवान् ॥ ७
अहं वनं गमिष्यामि भवान्राजा प्रशास्त्विदम् ।
नमामयशसा दग्धं भूयस्त्वं दग्धुमर्हसि ॥ ८
नाहं राजा भवान्राजा भवता परवानहम् ।
कथं गुरुं त्वां धर्मज्ञमनुज्ञातुमिहोत्सहे ॥ ९
न मन्युर्हृदि नः कश्चित्सुयोधनकृतेऽनघ ।
भवितव्यं तथा तद्धि वयं चान्ये च मोहिताः १०
वयं पुत्रा हि भवतो यथा दुर्योधनादयः ।
गान्धारी चैव कुन्ती च निर्विशेषे मते मम ॥ ११
स मां त्वं यदि राजेन्द्र परित्यज्य गमिष्यसि ।
पृष्ठतस्त्वनुयास्यामि सत्यमात्मानमालभे ॥ १२
इयं हि वसुसंपूर्णा मही सागरमेखला ।
भवता विप्रहीणस्य न मे प्रीतिकरी भवेत् ॥ १३
भवदीयमिदं सर्वं शिरसा त्वां प्रसादये ।
त्वदधीनाः स्म राजेन्द्र व्येतु ते मानसो ज्वरः १४
भवितव्यमनुप्राप्तो मन्ये त्वं वसुधाधिप ।
दिष्ट्या शुश्रूषमाणस्त्वां मोक्षिष्ये मनसो ज्वरं १५

धृतराष्ट्र उवाच ।
तापस्ये मे मनस्तात वर्तते कुरुनन्दन ।
उचितं च कुलेऽस्माकमरण्यगमनं प्रभो ॥ १६
चिरमध्युषितः पुत्र चिरं शुश्रूषितस्त्वया ।
वृद्धं मामप्यनुज्ञातुमर्हसि त्वं नराधिप ॥ १७
वैशंपायन उवाच ।
इत्युक्त्वा धर्मराजानं वेपमानं कृताञ्जलिम् ।
उवाच विदुरं राजा धृतराष्ट्रोऽम्बिकासुतः ॥ १८
संजयं च महात्मानं कृपं चापि महारथम् ।
अनुनेतुमिहेच्छामि भवद्भिर्वसुधाधिपम् ॥ १९
म्लायते मे मनो हीदं मुखं च परिशुष्यति ।
वयसा च प्रकृष्टेन वाग्व्यायामेन चैव ह ॥ २०
इत्युक्त्वा स तु धर्मात्मा वृद्धो राजा कुरूद्वहः ।
गान्धारीं शिश्रिये धीमान्सहसैव गतासुवत् ॥ २१
तं तु दृष्ट्वा समासीनं विसंज्ञमिव कौरवम् ।
आर्तिं राजाऽगमत्तीव्रां कौन्तेयः परवीरहा ॥ २२
युधिष्ठिर उवाच ।
यस्य नागसहस्रेण शतसङ्ख्येन वै बलम् ।
सोयं नारीं व्यपाश्रित्य शेते राजा गतासुवत् २३
आयसी प्रतिमा येन भीमसेनस्य सा पुरा ।
चूर्णीकृता बलवता सोबलामाश्रितः स्त्रियम् ॥ २४
धिगस्तु मामधर्मज्ञं धिग्बुद्धिं धिक्च मे श्रुतम् ।
यत्कृते पृथिवीपालः शेतेऽयमतथोचितः ॥ २५
अहमप्युपवत्स्यामि यथैवायं गुरुर्मम ।
यदि राजा न भुङ्क्तेऽयं गान्धारी च यशस्विनी ॥ २६
वैशंपायन उवाच ।
ततोस्य पाणिना राजञ्जलशीतेन पाण्डवः ।
उरो मुखं च शनकैः पर्यमार्जत धर्मवित् ॥ २७
तेन रत्नौषधिमता पुण्येन च सुगन्धिना ।
पाणिस्पर्शेन राज्ञः स राजा संज्ञामवाप ह ॥ २८
स्पृशन्तं पाणिना भूयः परिष्वज्य च पाण्डवम् ।

'उवाच राजा धर्मज्ञो धृतराष्ट्रः शुभं वचः ॥'२९
जीवामीवातिसंस्पर्शात्तव राजीवलोचन ।
मूर्धानं च तवाघ्रातुमिच्छामि मनुजाधिप ।
पाणिभ्यां हि परिस्प्रष्टुं प्राणानां हितमात्मनि॥३०
अष्टमो ह्यद्य कालोऽयमाहारस्य कृतस्य मे ।
येनाहं कुरुशार्दूल शक्नोमि न विचेष्टितुम् ॥ ३१
व्यायामश्चायमत्यर्थं कृतस्त्वामभियाचता ।
ततो ग्लानमनास्तात नष्टसंज्ञ इवाभवम् ॥ ३२
तवामृतसुखस्पर्शं हस्तस्पर्शमिमं प्रभो ।
लब्ध्वा संजीवितोऽस्मीति मन्ये कुरुकुलोद्वह ॥३३
वैशंपायन उवाच ।
एवमुक्तस्तु कौन्तेयः पित्रा ज्येष्ठेन भारत ।
पस्पर्श सर्वगात्रेषु स्नेहार्द्रस्तं शनैस्तदा ॥ ३४
उपलभ्य ततः प्राणान्धृतराष्ट्रो महीपतिः ।
बाहुभ्यां संपरिष्वज्य मूर्ध्न्याजिघ्रत पाण्डवम् ३५
विदुराद्यश्च ते सर्वे रुरुदुर्दुःखिता भृशम् ।
अतिदुःखात्तु राजानं नोचुः किंचन पाण्डवम्३६
गान्धारी त्वेव धर्मज्ञा मनसोद्वहती भृशम् ।
दुःखान्यधारयद्राजन्मैवमित्येव चाब्रवीत् ॥ ३७
इतरास्तु स्त्रियः सर्वाः कुन्त्या सह सुदुःखिताः ।
नेत्रैरागतविक्लेदैः परिवार्य स्थिताऽभवन् ॥ ३८
अथाब्रवीत्पुनर्वाक्यं धृतराष्ट्रो युधिष्ठिरम् ।
अनुजानीहि मां राजंस्तापस्ये भरतर्षभ ॥ ३९
ग्लायते मे मनस्तात भूयोभूयः प्रजल्पतः ।
न मामतः परं पुत्र परिक्लेष्टुमिहार्हसि ॥ ४०
तस्मिंस्तु कौरवेन्द्रे तं तथा ब्रुवति पाण्डवम् ।
सर्वेषामवरोधानामार्तनादो महानभूत् ॥ ४१
दृष्ट्वा कृशं विवर्णं च राजानमतथोचितम् ।
उपवासपरिश्रान्तं त्वगस्थिपरिवारितम् ॥ ४२
धर्मपुत्रः स्वपितरं परिष्वज्य महाप्रभुम् ।
शोकजं बाष्पमुत्सृज्य पुनर्वचनमब्रवीत् ॥ ४३
न कामये नरश्रेष्ठ जीवितं पृथिवीं तथा ।
यथा तव प्रियं राजंश्चिकीर्षामि परंतप ॥ ४४
यदि चाहमनुग्राह्यो भवतो दयितोऽपि वा ।
क्रियतां तावदाहारस्ततो वेत्स्याम्यहं परम् ॥ ४५
ततोऽब्रवीन्महातेजा धृतराष्ट्रो युधिष्ठिरम् ।
अनुज्ञातस्त्वया पुत्र भुञ्जीयामिति कामये ॥ ४६
इति ब्रुवति राजेन्द्रे धृतराष्ट्रे युधिष्ठिरम् ।
ऋषिः सत्यवतीपुत्रो व्यासोऽभ्येत्य वचोऽब्रवीत्॥

॥ इति श्रीमन्महाभारते आश्रमवासिकपर्वणि आश्रमवासपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥

## पञ्चमोऽध्यायः ॥ ५ ॥

व्यासेन युधिष्ठिरंप्रति सहेतूपन्यासं धृतराष्ट्रस्य वनगमनाभ्यनुज्ञानचोदनापूर्वकं स्वाश्रमगमनम् ॥ १ ॥ युधिष्ठिरेण धृतराष्ट्रंप्रति कृच्छ्रेण तदभ्यनुज्ञानाङ्गीकरणम् ॥ २ ॥

व्यास उवाच ।
युधिष्ठिर महाबाहो यथाऽऽह कुरुनन्दनः ।
[illegible] महातेजास्तत्कुरुष्वाविचारयन् ॥
अयं हि वृद्धो नृपतिर्हतपुत्रो विशेषतः ।
नेदं कृच्छ्रं चिरतरं सहेदिति मतिर्मम ॥
गान्धारी च महाभागा प्राज्ञा करुणवेदिनी ।
पुत्रशोकं महाराज धैर्येणोद्वहते भृशम् ॥
अहमप्येतदेव त्वां ब्रवीमि कुरु मे वचः ।
अनुज्ञां लभतां राजा मा वृथेह मरिष्यति ॥
'स्वस्थो भवत्वयं धीमान्वनेषु मधुगन्धिषु ।'
राजर्षीणां पुराणानामनुयातु गतिं नृपः ।
राजर्षीणां हि सर्वेषामन्ते वनमुपाश्रयः ॥ ५
वैशंपायन उवाच ।
इत्युक्तः स तदा राजा व्यासेनाद्भुतकर्मणा ।
प्रत्युवाच महातेजा धर्मराजो महामुनिम् ॥ ६
भगवानेव नो मान्यो भगवानेव नो गुरुः ।
भगवानस्य राज्यस्य कुलस्य च परायणम् ॥ ७
अहं तु पुत्रो भगवन्पिता राजा गुरुश्च मे ।

निदेशवर्ती च पितुः पुत्रो भवति धर्मतः ॥ ८
वैशंपायन उवाच ।
इत्युक्तः स तु तं प्राह व्यासो वेदविदांवरः ।
युधिष्ठिरं महातेजाः पुनरेव महाकविः ॥ ९
एवमेतन्महाभाग यथा वदसि भारत ।
राजाऽयं वृद्धतां प्राप्तः प्रमाणे परमे स्थितः ॥ १०
सोयं मयाऽभ्यनुज्ञातस्त्वया च पृथिवीपतिः ।
करोतु स्वमभिप्रायं मा स्म विघ्नकरो भव ॥ ११
एष एव परो धर्मो राजर्षीणां युधिष्ठिर ।
समरे वा भवेन्मृत्युर्वने वा विधिपूर्वकम् ॥ १२
पित्रा तु तव राजेन्द्र पाण्डुना पृथिवीक्षिता ।
शिष्यभूतेन राजाऽयं गुरुवत्पर्युपासितः ॥ १३
क्रतुभिर्दक्षिणावद्भी रत्नपर्वतशोभितैः ।
महद्भिरिष्टं गौर्भुक्ता प्रजाश्च परिपालिताः ॥ १४
पुत्रसंस्थं च विपुलं राज्यं विप्रोषिते त्वयि ।
त्रयोदशसमा भुक्तं दत्तं च विविधं वसु ॥ १५
त्वया चायं नरव्याघ्र गुरुशुश्रूषयाऽनघ ।
आराधितः स भृत्येन गान्धारी च यशस्विनी ॥ १६
अनुजानीहि पितरं समयोऽस्य तपोविधौ ।
न मन्युर्विद्यते चास्य सुसूक्ष्मोऽपि युधिष्ठिर ॥ १७
वैशंपायन उवाच ।
एतावदुक्त्वा वचनमनुमान्य च पार्थिवम् ।
तथाऽस्त्विति च तेनोक्तः कौंतेयेन ययौ वनम् १८
गते भगवति व्यासे राजा पाण्डुसुतस्तदा ।
प्रोवाच पितरं वृद्धं मन्दंमन्दमिवानतः ॥ १९
यदाह भगवान्व्यासो यच्चापि भवतो मतम् ।
यथाऽऽह च महेष्वासः कृपो विदुर एव च ॥ २०
युयुत्सुः संजयश्चैव तत्कर्तास्म्यहमञ्जसा ।
सर्वे एव हि मान्या मे कुलस्य हि हितैषिणः ॥ २१
इदं तु याचे नृपते त्वामहं शिरसा नतः ।
क्रियतां तावदाहारस्ततो गच्छाश्रमं प्रति ॥ २२

॥ इति श्रीमन्महाभारते आश्रमवासिकपर्वणि आश्रमवासपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥

## षष्ठोऽध्यायः ॥ ६ ॥

वनं यियासुना धृतराष्ट्रेण-युधिष्ठिराय राजनीत्युपदेशः ॥ १ ॥

वैशंपायन उवाच ।
ततो राज्ञाऽभ्यनुज्ञातो धृतराष्ट्रो महामनाः ।
ययौ स्वभवनं राजा गान्धार्याऽनुगतस्तदा ॥ १
मन्दप्राणगतिर्धीमान्कृच्छ्रादिव समुद्वहन् ।
पदानि स महीपालो जीर्णो गजपतिर्यथा ॥ २
तमन्वगच्छद्विदुरो विद्वान्सूतश्च संजयः ।
स चापि परमेष्वासः कृपः शारद्वतस्तथा ॥ ३
स प्रविश्य गृहं राजा कृतपूर्वाह्णिकक्रियः ।
तर्पयित्वा द्विजश्रेष्ठानाहारमकरोत्तदा ॥ ४
गान्धारी चैव धर्मज्ञा कुन्त्या सह मनस्विनी ।
वधूभिरुपचारेण पूजिताऽभुङ्क्त भारत ॥ ५
कृताहारं कृताहाराः सर्वे ते विदुरादयः ।
पाण्डवाश्च कुरुश्रेष्ठमुपातिष्ठन्त तं नृपम् ॥ ६
ततोऽब्रवीन्महाराजः कुन्तीपुत्रमुपह्वरे ।
निषण्णं पाणिना पृष्ठे संस्पृशन्नंबिकासुतः ॥ ७
अप्रमादस्त्वया कार्यः सर्वथा कुरुनन्दन ।
अष्टाङ्गे राजशार्दूल राज्ये धर्मपुरस्कृते ॥ ८
तत्तु शक्यं महाराज रक्षितुं पाण्डुनन्दन ।
राज्यं धर्मेण कौन्तेय विद्वानसि निबोध तत् ॥ ९
विद्यावृद्धान्सदैव त्वमुपासीथा युधिष्ठिर ।
शृणुयास्ते च यद्ब्रूयुः कुर्याश्चैवाविचारयन् ॥ १०
प्रातरुत्थाय तान्राजन्पूजयित्वा यथाविधि ।
कृत्यकाले समुत्पन्ने पृच्छेथाः कार्यमात्मनः ॥ ११
ते तु संमानिता राजंस्त्वया लोकहितार्थिना ।
प्रवक्ष्यन्ति हितं तात सर्वथा तव भारत ॥ १२

---

तपोविधौ तपःकरणे ॥ १७ ॥ पञ्चमोऽध्यायः ॥ ५ ॥

अभुङ्क्त भुक्तवती ॥ ५ ॥ अष्टाङ्गे स्वाम्यमात्यादियुते ॥ ८ ॥

इन्द्रियाणि च सर्वाणि वाजिवत्परिपालय ।
हितायैव भविष्यन्ति रक्षितं द्रविणं यथा ॥ १३
अमात्यानुपधातीतान्पितृपैतामहाञ्शुचीन् ।
दान्तान्कर्मसु सर्वेषु मुख्यान्मुख्येषु योजयेः १४
चारयेथाश्च सततं चारैरविदितः परैः ।
परीक्षितैर्बहुविधैः स्वराष्ट्रेषु परेषु च ॥ १५
पुरं च ते सुगुप्तं स्याद्दृढप्राकारतोरणम् ।
अट्टाट्टालकसंबाधं षट्पदं सर्वतो दिशम् ॥ १६
तस्य द्वाराणि सर्वाणि पर्याप्तानि बृहन्ति च ।
सर्वतः सुविभक्तानि यन्त्रैरारक्षितानि च ॥ १७
पुरुषैरलमर्थस्ते विदितैः कुलशीलतः ।
आत्मा च रक्ष्यः सततं भोजनादिषु भारत ।
विहाराहारकालेषु माल्यशय्यासनेषु च ॥ १८
स्त्रियश्च ते सुगुप्ताः स्युर्वृद्धैराप्तैरधिष्ठिताः ।
शीलवद्भिः कुलीनैश्च विद्वद्भिश्च युधिष्ठिर ॥ १९
मन्त्रिणश्चैव कुर्वीथा द्विजान्विद्याविशारदान् ।
विनीतांश्च कुलीनांश्च धर्मार्थकुशलानृजून् ॥ २०
तैः सार्धं मन्त्रयेथास्त्वं नात्यर्थं बहुभिः सह ।
समस्तैरपि च व्यस्तैर्व्यपदेशेन केनचित् ॥ २१
सुसंवृतं मन्त्रगृहं स्थलं चारुह्य मन्त्रयेः ।
अरण्ये निःशलाके वा न च रात्रौ कथंचन ॥२२
वानराः पक्षिणश्चैव ये मनुष्यानुकारिणः ।
सर्वे मन्त्रगृहे वर्ज्या ये चापि जडपङ्गवः ॥ २३
मन्त्रभेदे हि ये दोषा भवन्ति पृथिवीक्षिताम् ।
न ते शक्याः समाधातुं कथंचिदिति मे मतिः ॥२४
दोषांश्च मन्त्रभेदस्य ब्रूयास्त्वं मन्त्रिमण्डले ।
अभेदे च गुणा राजन्पुनःपुनररिंदम ॥ २५
पौरजानपदानां च शौचाशौचे युधिष्ठिर ।
यथा स्याद्विदितं राजंस्तथा कार्यं कुरूद्वह ॥ २६
व्यवहारश्च ते राजन्नित्यमाप्तैरधिष्ठितः ।
योज्यस्तुष्टैर्हितै राजन्नित्यं चारैरनुष्ठितः ॥ २७
परिमाणं विदित्वा च दण्डं दण्ड्येषु भारत ।
प्रणयेयुर्यथान्यायं पुरुषास्ते युधिष्ठिर ॥ २८
आदानरुचयश्चैव परदाराभिमर्शिनः ।
उग्रदण्डप्रधानाश्च मिथ्याव्याहारिणस्तथा ॥ २९
आक्रोष्टारश्च लुब्धाश्च हर्तारः साहसप्रियाः ।
सभाविहारभेत्तारो वर्णानां च प्रदूषकाः ।
हिरण्यदण्ड्या वध्याश्च कर्तव्या देशकालतः ॥३०
'अवरोधभूमौ भृत्यैश्च पानं सह विवर्जयेत् ।
आक्रोशन्त्यनुमत्तास्ते कलत्रं वाऽपि गृह्णते ॥३१
जिघांसन्त्यपि शस्त्रेण नष्टाः क्रीडन्ति चोत्कटाः ।
नानाक्षेपा व्याहरन्ति गम्यागम्यं न जानते ३२
अतिपानेन राजाऽपि सर्वं कोशं विनाशयेत् ।
वितरेद्गायकेभ्यश्च वृथा च द्रव्यसंचयम् ॥ ३३
शब्दमात्मनि दोषांश्च पिबेदेकश्च जायया ।
युक्त्या प्रकाशमयति सुवीर्यस्य विवृद्धये ॥' ३४
प्रातरेव हि पश्येथा ये कुर्युः प्रियकर्म ते ।
अलंकारमथो भोज्यमत ऊर्ध्वं समाचरेः ॥ ३५
पश्येथाश्च ततो योधान्सदा त्वं प्रतिहर्षयन् ।
दूतानां च चराणां च प्रदोषस्ते सदा भवेत् ३६
सदा चापररात्रान्ते भवेत्कार्यार्थनिर्णयः ।
मध्यरात्रे विहारस्ते मध्याह्ने च सदा भवेत् ॥ ३७
सर्वे त्वौपयिकाः कालाः कार्याणां भरतर्षभ ।
तथैवालंकृतः काले तिष्ठेथा भूरिदक्षिणः ॥ ३८
'न विद्राव्य च तिष्ठेत परिहार्यं विभूषणम् ।
प्रयोज्यं सर्वदैवेह मङ्गल्यं पापनाशनम् ॥' ३९
चक्रवत्तात कार्याणां पर्यायो दृश्यते सदा ।
कोशस्य निचये यत्नं कुर्वीथा न्यायतः सदा ।
विविधस्य महाराज विपरीतं विवर्जयेः ॥ ४०
चारैर्विदित्वा शत्रूंश्च ये राज्ञामन्तरैषिणः
तानाप्तैः पुरुषैर्दूराद्धातयेथा नराधिप ॥ ४१
कर्म दृष्ट्वाऽथ भृत्यांस्त्वं वरयेथाः कुरूद्वह ।

---

राज्यवत्परिपालयेति क. थ. पाठः ॥ १३ ॥ अट्टा दुर्गोपरिभागे सचारस्थानानि । षट्पदं षड्भिः पदैः पदनीयैः स्थानैर्युक्तम् । तेन सप्तप्राकारमिति गम्यते । तत्र सप्तमस्यान्तःपुरस्तात् षडेवान्येषां पदनीयानि स्थानानि ॥ १६ ॥ निःशलाके अतृणे । सतृणे ह्यासन्नः परचारो ज्ञातुमशक्य इति ॥ २२ ॥ आदानरुचयः उत्कोचोपजीविन ॥ २९ ॥ प्रदोषो रजनीमुखं दूतादीनां दर्शनकालः । प्रदेयस्ते सदा भवेदिति क. थ. पाठः ॥ ३६ ॥

कारयेथाश्च कर्माणि युक्तायुक्तैरधिष्ठितैः ॥ ४२
सेनाप्रणेता च भवेत्तव तात दृढव्रतः
शूरः क्लेशसहश्चैव हितो भक्तश्च पूरुषः ॥ ४३
सर्वे जनपदाश्चैव तव कर्माणि पाण्डव ।
गोवद्रासभवच्चैव कुर्युर्ये व्यवहारिणः ॥ ४४
स्वरन्ध्रं पररन्ध्रं च स्वेषु चैव परेषु च ।
उपलक्षयितव्यं ते नित्यमेव युधिष्ठिर ॥ ४५
देशजाश्चैव पुरुषा विक्रान्ताः स्वेषु कर्मसु
यात्राभिरनुरूपाभिरनुग्राह्या हितास्त्वया ॥ ४६
गुणार्थिनां गुणः कार्यो विदुषा वै जनाधिप ।
अविचार्याश्च ते ते स्युरचला इव नित्यशः ॥ ४७

॥ इति श्रीमन्महाभारते आश्रमवासिकपर्वणि आश्रमवासपर्वणि षष्ठोऽध्यायः ॥ ६ ॥

## सप्तमोऽध्यायः ॥ ७ ॥

धृतराष्ट्रेण युधिष्ठिरंप्रति राजनीतिकथनम् ॥ १ ॥

धृतराष्ट्र उवाच ।
मण्डलानि च बुध्येथाः परेषामात्मनस्तथा ।
उदासीनगुणानां च मध्यस्थानां च भारत ॥ १
चतुर्णां शत्रुजातानां सर्वेषामाततायिनाम् ।
मित्रं चामित्रमित्रं च बोद्धव्यं तेऽरिकर्शन ॥ २
अथ नानाजनपदा दुर्गाणि विविधानि च ।
बलानि च कुरुश्रेष्ठ भवन्त्येषां यथेच्छकम् ॥ ३
ते च द्वादश कौन्तेय राजानो विविधात्मकाः ।
मन्त्रिप्रधानाश्च गुणाः षष्टिर्द्वादश च प्रभो ॥ ४
एतन्मण्डलमित्याहुराचार्या नीतिकोविदाः ।
अत्र षाड्गुण्यमायत्तं युधिष्ठिर निबोध तत् ॥ ५
वृद्धिक्षयौ च विज्ञेयौ स्थानं च कुरुसत्तम ।
द्विसप्तत्यां महाबाहो ततः षाड्गुण्यजा गुणाः ॥ ६
यथा स्वपक्षो बलवान्परपक्षस्तथा बलः ।
विगृह्य शत्रून्कौन्तेय यायात्क्षितिपतिस्तदा ॥ ७
यदा परे च बलिनः स्वपक्षश्चैव दुर्बलः ।
सार्धं विद्वांस्तदा क्षीणः परैः सन्धिं समाश्रयेत् ॥ ८
द्रव्याणां संचयश्चैव कर्तव्यः सुमहांस्तथा ।
यदा समर्थो यानाय नचिरेणैव भारत ॥ ९
तदा सर्वं विधेयं स्यात्स्थानेन स विचारयेत् ।
भूमिरल्पफला देया विपरीतस्य भारत ॥ १०
हिरण्यरूप्यभूयिष्ठं मित्रं क्षीणमकोशभृत् ।
विपरीतं निगृह्णीयात्स्वयं सन्धिविशारदः ॥ ११
सन्ध्यर्थं राजपुत्रं वा लिप्सेथा भरतर्षभ ।
विपरीतं न तच्छ्रेयः पुत्र कस्यांचिदापदि ॥ १२
तस्याः प्रमोक्षे यत्नं च कुर्याः सोपायमन्त्रवित् ।
प्रकृतीनां च राजेन्द्र राजा दीनान्विभावयेत् ॥ १३
क्रमेण युगपद्बुध्वा व्यसनानां बलाबलम् ।
पीडनं स्तंभनं चैव कोशभङ्गस्तथैव च ॥ १४
कार्यं यत्नेन शत्रूणां स्वराज्यं रक्षता स्वयम् ।
न च हिंस्योऽभ्युपगतः सामन्तो वृद्धिमिच्छता ॥
कौन्तेय तद्धितं ते स्यात्पृथिवीं विजिगीषतः ।
गुणानां भेदने योगमीप्सेथाः सह मन्त्रिभिः १६
साधुसंग्रहणाच्चैव पापनिग्रहणात्तथा ।
आत्मसात्करणे नित्यं पालनानि गृहे तथा ।
दुर्बलाश्चैव सततं नान्वेष्टव्या बलीयसा ॥ १७

गवादिवत् आहारमात्रवेतनाः । व्यवहारिणः कारुशिल्पिप्रभृतयः ॥ ४४ ॥ षष्ठोऽध्यायः ॥ ६ ॥

मण्डलानि अरिर्मित्रमित्यादीनि ॥ १ ॥ यथेच्छक परैर्भेद्यत्वमभेद्यत्व च भवति तस्मादवहितस्तिष्ठेत् । तथामात्या जनपदा इति झ. पाठः । भवत्येषा स्वकं परमिति थ. पाठः ॥ ३ ॥ द्वादश चत्वार. शत्रुजाता. । षट् आततायिनः । मित्र अमित्रमित्र चेति षष्टिर्गुणा । कृष्यादीन्यष्टौ संधानकर्माणि । बालादयो विंशतिरसंधेयाः । नास्तिक्यादयश्चतुर्दश दोषाः । मन्त्रादीन्यष्टादश तीर्थानीति । एतेषु केचित् हानार्थं ज्ञातव्याः केचिदुपादानार्थम् ॥ ४ ॥ अत्र प्राङ्मुख्यमायत्तमिति थ. पाठः ॥ ५ ॥ ततः षाड्गुण्यचारिण इति क. थ. पाठः ॥ ६ ॥ द्रव्याणा संचये चैव यत्नः कार्यः सदा भवेत् इति क. पाठः ॥ ९ ॥ दीनान् अन्धबधिरादीन् विभावयेत्पूजयेत् ॥ १३ ॥

तिष्ठेथा राजशार्दूल वैतसीं वृत्तिमास्थितः ।
यद्येनमभियायाच्च बलवान्दुर्बलं नृपः ॥ १८
सामादिभिरुपायैस्तं क्रमेण विनिवर्तयेः ।
अशक्नुवंश्च युद्धाय निष्पतेत्सह मन्त्रिभिः ॥ १९
कोशेन पौरैर्दण्डेन ये चास्य प्रियकारिणः ।
असंभवे तु सर्वस्य यथा मुख्येन निष्पतेत् ।
क्रमेणानेन मोक्षः स्याच्छरीरं प्रति केवलम् ॥२०

॥ इति श्रीमन्महाभारते आश्रमवासिकपर्वणि आश्रमवासपर्वणि सप्तमोऽध्यायः ॥ ७ ॥

## अष्टमोऽध्यायः ॥ ८ ॥

धृतराष्ट्रेणं युधिष्ठिरंप्रति राजनीतिकथनम् ॥ १ ॥

धृतराष्ट्र उवाच ।
सन्धिविग्रहमप्यत्र पश्येथा राजसत्तम ।
द्वियोनिं विविधोपायं बहुकल्पं युधिष्ठिर ॥ १
कौरव्य पर्युपासीथाः स्थित्वा द्वैविध्यमात्मनः ।
तुष्टपुष्टजनः शत्रुरर्थवानिति च स्मरेत् ॥ २
पर्युपासनकाले तु विपरीतं विधीयते ।
आमर्दकाले राजेन्द्र व्यवसायस्ततोऽपरः ॥ ३
व्यसनं भेदनं चैव शत्रूणां कारयेत्ततः ।
कर्षणं भीषणं चैव युद्धे चैव बहुक्षयम् ॥ ४
प्रयास्यमानो नृपतिस्त्रिविधं परिचिन्तयेत् ।
आत्मनश्चैव शत्रोश्च शक्तिं शास्त्रविशारदः ॥ ५
उत्साहप्रभुशक्तिभ्यां मन्त्रशक्त्या च भारत ।
उपपन्नो नृपो यायाद्विपरीतं च वर्जयेत् ॥ ६
आददीत बलं राजा मौलं मित्रबलं तथा ।
अटवीबलं भृतं चैव तथा श्रेणीबलं प्रभो ॥ ७
'मित्रामित्रबलं राजन्यायाद्व्युदये धृतः ।'
तत्र मित्रबलं राजन्मौलं चैव विशिष्यते ।
श्रेणीबलं भृतं चैव तुल्ये एवेति मे मतिः ॥ ८
तथाऽऽचारबलं चैव परस्परसमं नृप ।
विज्ञेयं बलकालेषु राज्ञा काल उपस्थिते ॥ ९
आपदश्चापि बोद्धव्या बहुरूपा नराधिप ।
भवन्ति राज्ञा कौरव्य यास्ताः पृथगतः शृणु १०
विकल्पा बहुधा राजन्नापदां पाण्डुनन्दन ।
सामादिभिरुपन्यस्य गमयेत्तान्नृपः सदा ॥ ११
यात्रां गच्छेद्बलैर्युक्तो राजा षड्भिः परंतप ।
युक्तश्च देशकालाभ्यां बलैरात्मगुणैस्तथा ॥ १२
हृष्टपुष्टबलो गच्छेद्राजा वृद्ध्युदये रतः ।
अकृशश्चाप्यथो यायादनृतावपि पाण्डव ॥ १३
तूणाश्मानं वाजिरथप्रवाहां
ध्वजद्रुमैः संवृतकूलरोधसम् ।
पदातिनागैर्बहुकर्दमां नदीं
सपत्ननाशे नृपतिः प्रयोजयेत् ॥ १४
अथोपपत्त्या शकटं पद्मवज्रं च भारत ।
उशना वेद यच्छास्त्रं तत्रैतद्विहितं विभो ॥ १५
चारयित्वा परबलं कृत्वा स्वबलदर्शनम् ।
स्वभूमौ योजयेद्युद्धं परभूमौ तथैव च ॥ १६
बलं प्रसादयेद्राजा निक्षिपेद्बलिनो नरान् ।
ज्ञात्वा स्वविषयं तत्र सामादिभिरुपक्रमेत् ॥ १७
सर्वथैव महाराज शरीरं धारयेदिह ।
प्रेत्य चेह च कर्तव्यमात्मनिःश्रेयसं परम् ॥ १८
एवं कुर्वञ्शुभा वाचो लोकेऽस्मिञ्शृणु ते नृप ।
प्रेत्य स्वर्गमवाप्नोति प्रजा धर्मेण पालयन् ॥ १९

एन लाम् ॥ १८ ॥ सप्तमोऽध्यायः ॥ ७ ॥

प्रबलप्रतियोगिकौ दुर्बलप्रतियोगिकौ चेति द्वियोनी सधिविग्रहौ ॥ १ ॥ स्थित्वा स्थिरो भूत्वा । द्वैविध्यं बलाबलं ज्ञात्वा शत्रुं पर्युपास्स्वेति भावः । स्मरेज्जयोपायं विचारयेन्न त्वकस्मात्प्रयायात् । 'जित्वा द्विविधमात्मनेति क. पाठः ॥ २ ॥ विपरीतमतुष्टपुष्टबलं प्रयायादित्यर्थः ॥ ३ ॥ गमनं चेदनं चैवेति थ. पाठः ॥ ४ ॥ मौलं वनबलम् ॥ ७ ॥ अनृतौ अकालेऽपि शिशिरादौ ॥ १३ ॥ शकटादयो व्यूहविशेषाः ॥ १५ ॥ साधयित्वा परबलं कृत्वा च बलमर्पणम् इति क. थ. पाठः ॥ १६ ॥ अष्टमोऽध्यायः ॥ ८ ॥

एवं त्वया कुरुश्रेष्ठ वर्तितव्यं प्रजासु वै ।
उभयोर्लोकयोस्तात प्राप्तये नित्यमेव हि ॥ २०
भीष्मेण सर्वमुक्तोसि कृष्णेन विदुरेण च ।
मयाऽप्यवश्यं वक्तव्यं प्रीत्या ते नृपसत्तम ॥२१
एतत्सर्वं यथान्यायं कुर्वीथा भूरिदक्षिण ।
प्रियस्तथा प्रजानां त्वं स्वर्गे सुखमवाप्स्यसि॥२२
अश्वमेधसहस्रेण यो यजेत्पृथिवीपतिः ।
पालयेद्वाऽपि धर्मेण प्रजास्तुल्यं फलं लभेत्॥२३

॥ इति श्रीमन्महाभारते आश्रमवासिकपर्वणि आश्रमवासपर्वणि अष्टमोऽध्यायः ॥ ८ ॥

## नवमोऽध्यायः ॥ ९ ॥

धृतराष्ट्रेण युधिष्ठिरात्सकलपौरजनानयनेन स्वस्य वनजिगमिषानिवेदनपूर्वकं तान्प्रति तदभ्यनुज्ञानप्रार्थना ॥ १ ॥

उवाच ।
एवमेतत्करिष्यामि यथाऽऽत्थ पृथिवीपते ।
भूयश्चैवानुशास्योऽहं भवता पार्थिवर्षभ ॥ १
भीष्मे स्वर्गमनुप्राप्ते गते च मधुसूदने ।
विदुरे संजये चैव कोऽन्यो मां वक्तुमर्हति ॥
यत्तु मामनुशास्तीह भवानद्य हिते स्थितः ।
कर्तास्मि तन्महीपाल निर्वृतो भव पार्थिव ॥
वैशंपायन उवाच ।
एवमुक्तः स राजर्षिर्धर्मराजेन धीमता ।
कौन्तेयं समनुज्ञातुमियेष भरतर्षभ ॥ ४
पुत्र विश्राम्यतां तावन्ममापि बलवाञ्श्रमः ।
इत्युक्त्वा प्राविशद्राजा गान्धार्या भवनं तदा ५
तमासनगतं देवी गान्धारी धर्मचारिणी ।
उवाच काले कालज्ञा प्रजापतिसमं पतिम् ॥ ६
अनुज्ञातः स्वयं तेन व्यासेन त्वं महर्षिणा ।
युधिष्ठिरस्यानुमते कदाऽरण्यं गमिष्यसि ॥ ७
धृतराष्ट्र उवाच
गान्धार्यहमनुज्ञातः स्वयं पित्रा महात्मना ।
युधिष्ठिरस्यानुमते गन्तास्मि नचिराद्वनम् ॥
अहं हि तावत्सर्वेषां तेषां दुर्द्यूतदेविनाम् ।
पुत्राणां दातुमिच्छामि प्रेत्यभावानुगं वसु ।
सर्वप्रकृतिसान्निध्यं कारयित्वा स्ववेश्मनि ॥
वैशंपायन उवाच ।
इत्युक्त्वा धर्मराजाय प्रेषयामास वै तदा ।
स च तद्वचनात्सर्वं समानिन्ये महीपतिः ॥ १०
ततः प्रतीतमनसो ब्राह्मणाः कुरुजाङ्गलाः ।
क्षत्रियाश्चैव वैश्याश्च शूद्राश्चैव समाययुः ॥ ११
ततो निष्क्रम्य नृपतिस्तस्मादन्तःपुरात्तदा ।
ददृशे तं जनं सर्वं सर्वाश्च प्रकृतीस्तथा ॥ १२
समवेतांश्च तान्सर्वान्पौराञ्जानपदांस्तथा ।
तानागतानभिप्रेक्ष्य समस्तं च सुहृज्जनम् ॥ १३
ब्राह्मणांश्च महीपाल नानादेशसमागतान् ।
उवाच मतिमान्राजा धृतराष्ट्रोऽम्बिकासुतः ॥१४
भवन्तः कुरवश्चैव चिरकालं सहोषिताः ।
परस्परस्य सुहृदः परस्परहिते रताः ॥ १५
यदिदानीमहं ब्रूयामस्मिन्काल उपस्थिते ।
तथा भवद्भिः कर्तव्यमविचार्य वचो मम ॥ १६
अरण्यगमने बुद्धिर्गान्धारीसहितस्य मे ।
व्यासस्यानुमते राज्ञस्तथा कुन्तीसुतस्य मे ॥ १७
भवन्तोप्यनुजानन्तु मान्या वोऽभूद्विचारणा १८
अस्माकं भवतां चैव येयं प्रीतिर्हि शाश्वती ।
न च साऽन्येषु देशेषु राज्ञामिति मतिर्मम ॥१९
शान्तोस्मि वयसाऽनेन तथा पुत्रविनाकृतः ।
उपवासकृशश्चास्मि गान्धारीसहितोऽनघाः ॥२०
युधिष्ठिरगते राज्ये प्राप्तश्चास्मि सुखं महत् ।
मन्ये दुर्योधनैश्वर्याद्विशिष्टं बहुभिर्गुणैः ॥ २१
मम चान्धस्य वृद्धस्य हतपुत्रस्य का गतिः ।
ऋते वनं महाभागास्तन्माऽनुज्ञातुमर्हथ ॥ २२
तस्य तद्वचनं श्रुत्वा सर्वे ते कुरुजाङ्गलाः ।
बाष्पसंदिग्धया वाचा रुरुदुर्भरतर्षभ ॥ २३
तानविब्रुवतः किंचित्सर्वाञ्शोकपरायणान् ।
पुनरेव महातेजा धृतराष्ट्रोऽब्रवीदिदम् ॥ २४

॥ इति श्रीमन्महाभारते आश्रमवासिकपर्वणि आश्रमवासपर्वणि नवमोऽध्यायः ॥ ९ ॥

## दशमोऽध्यायः ॥ १० ॥

धृतराष्ट्रेण पौरान्प्रति दुर्योधनपक्षपातेन स्वकृतापनयक्षमापनम् ॥ १ ॥ तथा युधिष्ठिरस्य तेषु न्यासतया समर्पणपूर्वकं स्वस्य वनगमनाभ्यनुज्ञानप्रार्थना ॥ २ ॥

धृतराष्ट्र उवाच ।
शान्तनुः पालयामास यथावद्वसुधामिमाम् ।
तथा विचित्रवीर्यश्च भीष्मेण परिपालितः ।
पालयामास नस्तातो विदितं वो न संशयः ॥१
यथा च पाण्डुर्भ्राता मे दयितो भवतामभूत् ।
स चापि पालयामास यथावत्तच्च वेत्थ ह ॥ २
'अनन्तरं हि पितरमनुज्ञातो युधिष्ठिरः ।
नात्र किंचिन्मृषा जातु भाषतेति मतिर्मम ॥' ३
मया च भवतां सम्यक् शुश्रूषा या कृताऽनघाः ।
असम्यग्वा महाभागास्तत्क्षन्तव्यमतन्द्रितैः ॥ ४
यदा दुर्योधनेनेदं भुक्तं राज्यमकण्टकम् ।
अपि तत्र न वो मन्दो दुर्बुद्धिरपराद्धवान् ॥ ५
तस्यापराधाद्दुर्बुद्धेरभिमानान्महीक्षिताम् ।
विमर्दः सुमहानासीदनयात्स्वकृतादथ ।
'घातिताः कौरवेयाश्च पृथिवी च विनाशिता॥'६
तन्मया साधु वाऽपीदं यदि वाऽसाधु वै कृतम् ।
तद्वो हृदि न कर्तव्यं मया बद्धोऽयमञ्जलिः ॥ ७
वृद्धोऽयं हतपुत्रोऽयं दुःखितोऽयं नराधिपः ।
पूर्वराज्ञां च पुत्रोऽयमिति कृत्वाऽनुजानथ ॥ ८
इयं च कृपणा वृद्धा हतपुत्रा तपस्विनी ।
गान्धारी पुत्रशोकार्ता तुल्यं याचति वो मया ॥९
हतपुत्राविमौ वृद्धौ विदित्वा दुःखितौ तथा ।
अनुजानीत भद्रं वो व्रजाव शरणं च वः ॥ १०
अयं च कौरवो राजा कुन्तीपुत्रो युधिष्ठिरः ।
सर्वैर्भवद्भिर्द्रष्टव्यः समेषु विषमेषु च ।
न जातु विषमं चैव गमिष्यति कदाचन ॥ ११
चत्वारः सचिवा यस्य भ्रातरो विपुलौजसः ।
लोकपालसमा ह्येते सर्वधर्मार्थदर्शिनः ॥ १२
'चतुर्णां लोकपालानां मध्ये विपरिवर्तते ।'
ब्रह्मेव भगवानेष सर्वभूतजगत्पतिः ॥ १३
'एवमेव महाबाहुर्भीमार्जुनयमैर्वृतः ।'
युधिष्ठिरो महातेजा भवतः पालयिष्यति ॥ १४
अवश्यमेव वक्तव्यमिति कृत्वा ब्रवीमि वः ।
एष न्यासो मया दत्तः सर्वेषां वो युधिष्ठिरः ।
भवन्तोऽस्य च वीरस्य न्यासभूताः कृता मया१५
यदेव तैः कृतं किंचिद्व्यलीकं वः सुतैर्मम ।
यदन्येन मदीयेन तदनुज्ञातुमर्हथ ॥ १६
भवद्भिर्न हि मे मन्युः कृतपूर्वः कथंचन ।
अत्यन्तगुरुभक्तानामेषोऽञ्जलिरिदं नमः ॥ १७
तेषामस्थिरबुद्धीनां लुब्धानां कामचारिणाम् ।
कृते याचेऽद्य वः सर्वान्गान्धारीसहितोऽनघाः १८
इत्युक्तास्तेन ते सर्वे पौरजानपदा जनाः ।
नोचुर्बाष्पकलाः किंचिद्वीक्षांचक्रुः परस्परम् ॥१९

॥ इति श्रीमन्महाभारते आश्रमवासिकपर्वणि आश्रमवासपर्वणि दशमोऽध्यायः ॥ १० ॥

## एकादशोऽध्यायः ॥ ११ ॥

पौरजनैर्ब्राह्मणमुखेन धृतराष्ट्रंप्रति समाश्वासनपूर्वकं कृच्छ्रेण वनगमनाभ्यनुज्ञानम् ॥ १ ॥

वैशंपायन उवाच
एवमुक्तास्तु ते तेन पौरजानपदा जनाः ।
वृद्धेन राज्ञा कौरव्य नष्टसंज्ञा इवाभवन् ॥ १
तूष्णींभूतांस्ततस्तांस्तु बाष्पकण्ठान्महीपतिः ।
धृतराष्ट्रो महीपालः पुनरेवाभ्यभाषत ॥
वृद्धं च हतपुत्रं च धर्मपत्न्या सहानया ।
विलपन्तं बहुविधं कृपणं चैव सत्तमाः ॥
पित्रा स्वयमनुज्ञातं कृष्णद्वैपायनेन वै ।

---

न कर्तव्यमनुज्ञातुमिहार्हथेति क. ट. थ. पाठः ॥ ७ ॥ अन्येन भृत्येन। अनुज्ञातु क्षन्तुम्॥ १६॥ दशमोऽध्याय ॥१०॥

वनवासाय धर्मज्ञा धर्मज्ञेन नृपेण ह ॥ ४
सोऽहं पुनःपुनर्याचे शिरसाऽवनतोऽनघाः ।
गान्धार्या सहितं तन्मां समनुज्ञातुमर्हथ ॥
वैशंपायन उवाच ।
तच्छ्रुत्वा कुरुराजस्य वाक्यानि करुणानि ते
रुरुदुः सर्वशो राजन्समेताः कुरुजाङ्गलाः ॥
उत्तरीयैः करैश्चापि संछाद्य वदनानि ते ।
रुरुदुः शोकसंतप्ता मुहूर्तं पितृमातृवत् ॥ ७
हृदयैः शून्यभूतैस्ते धृतराष्ट्रप्रवासजम् ।
दुःखं संधारयन्तो हि नष्टसंज्ञा इवाभवन् ॥ ८
ते विनीय तमायासं धृतराष्ट्रवियोगजम् ।
शनैः शनैस्तदाऽन्योन्यमब्रुवन्स्वमतान्युत ॥ ९
ततः संचिन्त्य ते सर्वे वाक्यान्यथ समासतः ।
एकस्मिन्ब्राह्मणे कार्यमावेश्योचुर्नराधिपम् ॥ १०
ततः स्वाचरणो विप्रः संमतोऽर्थविशारदः ।
संभाव्यो बह्वृचो राजन्वक्तुं समुपचक्रमे ॥ ११
अनुमान्य महाराजं सदः समनुभाष्य च ।
विप्रः प्रगल्भो मेधावी स राजानमुवाच ह ॥ १२
राजन्वाक्यं जनस्यास्य मयि सर्वं समर्पितम् ।
वक्ष्यामि तदहं वीर तज्जुषस्व नराधिप ॥ १३
यथा वदसि राजेन्द्र सर्वमेतत्तथा विभो ।
नात्र मिथ्या वचः किंचित्सुहृत्त्वं नः परस्परम् १४
न जात्वस्य च वंशस्य राज्ञां कश्चित्कदाचन ।
राजाऽऽसीद्यः प्रजापालः प्रजानामप्रियोऽभवत् ॥
पितृवन्मातृवच्चैव भवन्तः पालयन्ति नः ।
न च दुर्योधनः किंचिदयुक्तं कृतवान्नृपः ॥ १६
'प्रियाणि कुर्वन्सर्वेषामनुवृत्त्यर्थमुद्यतः ।'
यथा ब्रवीति धर्मात्मा मुनिः सत्यवतीसुतः ।
तथा कुरु महाराज स हि नः परमो गुरुः ॥ १७
त्यक्ता वयं तु भवता दुःखशोकपरायणाः ।
भविष्यामश्चिरं राजन्भवद्गुणशतैर्हृताः ॥ १८
यथा शन्तनुना गुप्ता राज्ञा चित्राङ्गदेन च ।
भीष्मवीर्योपगूढेन पित्रा तव च पार्थिव ।
भवद्बुद्धियुजा चैव पाण्डुना पृथिवीक्षिता ॥ १९
तथा दुर्योधनेनापि राज्ञा सुपरिपालिताः ।
न स्वल्पमपि पुत्रस्ते व्यलीकं कृतवान्नृप ॥ २०
पितरीव सुविश्वस्तास्तस्मिन्नपि नराधिपे ।
वयसा स यथा सम्यग्भवतो विदितं तथा ॥ २१
तथा वर्षसहस्राणि कुन्तीपुत्रेण धीमता ।
पाल्यमाना धृतिमता सुखं विन्दामहे नृप ॥ २२
राजर्षीणां पुराणानां भवतां पुण्यकर्मणाम् ।
कुरुसंवरणादीनां भरतस्य च धीमतः ॥ २३
वृत्तं समनुयात्येष धर्मात्मा भूरिदक्षिणः ।
नात्र वाच्यं महाराज सुसूक्ष्ममपि विद्यते ॥ २४
उषिताः स्म सुखं नित्यं भवता परिपालिताः ।
सुसूक्ष्मं च व्यलीकं ते सपुत्रस्य न विद्यते ॥ २५
यत्तु ज्ञातिविमर्देऽस्मिन्नात्थ दुर्योधनं प्रति ।
भवन्तमनुनेष्यामि तत्रापि कुरुनन्दन ॥ २६
न तद्दुर्योधनकृतं न च तद्भवता कृतम् ।
न कर्णसौबलाभ्यां च कुरवो यत्क्षयं गताः ॥ २७
दैवं तत्तु विजानीमो यन्न शक्यं प्रबाधितुम् ।
दैवं पुरुषकारेण न शक्यमपि बाधितुम् ॥ २८
अक्षौहिण्यो महाराज दशाष्टौ च समागताः ।
अष्टादशाहेन हताः कुरुभिर्योधपुङ्गवैः ॥ २९
भीष्मद्रोणकृपाद्यैश्च कर्णेन च महात्मना ।
युयुधानेन वीरेण धृष्टद्युम्नेन चाहवे ॥ ३०
चतुर्भिः पाण्डुपुत्रैश्च भीमार्जुनयमैस्तथा ।
न च क्षयोऽयं नृपते ऋते दैवबलादभूत् ॥ ३१
अवश्यमेव संग्रामे क्षत्रियेण विशेषतः ।
कर्तव्यं निधनं काले मर्तव्यं क्षत्रबन्धुना ॥ ३२
तैरियं पुरुषव्याघ्रैर्विद्याबाहुबलान्वितैः ।
पृथिवी निहता सर्वा सहया सरथद्विपा ॥ ३३
न स राज्ञां वधे सूनुः कारणं ते महात्मनाम् ।
न भवान्न च ते भृत्या न कर्णो न च सौबलः ३४
यद्विशस्ताः कुरुश्रेष्ठ राजानश्च सहस्रशः ।
सर्वं दैवकृतं विद्धि कोऽत्र किं वक्तुमर्हति ॥ ३५

साबाह्यो बह्वृच इति झ. पाठः । शामव्य इति क. ... ।
जनक्षयोऽथ नृपते कृतो दैवबलात्कृतैरिति थ. पाठः ॥ ३१ ॥
नच राजापराध्नोति पुत्रस्तव महामना इति क. थ. पाठः ॥ ३४ ॥
दशमोऽध्यायः ॥ १० ॥

गुरुर्मतो भवानस्य कृत्स्नस्य जगतः प्रभुः ।
धर्मात्मानमतस्तुभ्यमनुजानीमहे सुतम् ॥ ३६
लभतां वीरलोकं स ससहायो नराधिपः ।
द्विजाग्र्यैः समनुज्ञातस्त्रिदिवे मोदतां सुखम् ॥३७
प्राप्स्यते च भवान्पुण्यं धर्मे च सततं स्थितः ।
वेद धर्मं महाबाहो लौक्यं वैदिकमेव च ॥ ३८
दृष्टापदानाश्चास्माभिः पाण्डवाः पुरुषर्षभाः ।
समर्थास्त्रिदिवस्यापि पालने किं पुनः क्षितेः ॥ ३९
अनुवर्त्स्यन्ति वा धीमन्समेषु विषमेषु च ।
प्रजाः कुरुकुलश्रेष्ठ पाण्डवाञ्शीलभूषणान् ॥४०
ब्रह्मदेयाग्रहारांश्च पारिबर्हांश्च पार्थिवः ।
पूर्वराजातिसर्गांश्च पालयत्येव पाण्डवः ॥ ४१
दीर्घदर्शी मृदुर्दान्तः सदा वैश्रवणो यथा ।
अक्षुद्रसचिवश्चायं कुन्तीपुत्रो महामनाः ॥ ४२
अप्यमित्रे दयावांश्च शुचिश्च भरतर्षभः ।
ऋजु पश्यति मेधावी पुत्रवत्पाति नः सदा ॥४३
विप्रियं च जनस्यास्य संसर्गाद्धर्मजस्य वै ।
न करिष्यन्ति राजर्षे तथा भीमार्जुनादयः ॥४४
मन्दा मृदुषु कौरव्य तीक्ष्णेष्वाशीविषोपमाः ।
वीर्यवन्तो महात्मानः पौराणां च हिते रताः ४५
न कुन्ती न च पाञ्चाली न चोलूपी न सात्वती ।
अस्मिञ्जने करिष्यन्ति प्रतिकूलानि कर्हिचित् ४६
भवत्कृतमिमं स्नेहं युधिष्ठिरविवर्धितम् ।
न पृष्ठतः करिष्यन्ति पौरा जानपदा जनाः ॥४७
अधर्मिष्ठानपि सतः कुन्तीपुत्रा महारथाः ।
मानवान्पालयिष्यन्ति भूत्वा धर्मपरायणाः ॥४८
स राजन्मानसं दुःखमपनीय युधिष्ठिरात् ।
कुरु कार्याणि धर्म्याणि नमस्ते पुरुषर्षभ ॥ ४९
वैशंपायन उवाच ।
तस्य तद्वचनं धर्म्यमनुमान्य गुणोत्तरम् ।
साधुसाध्विति सर्वः स जनः प्रतिगृहीतवान् ॥५०
धृतराष्ट्रश्च तद्वाक्यमभिपूज्य पुनःपुनः ।
विसर्जयामास तदा प्रकृतीस्तु शनैःशनैः ॥ ५१
स तैः संपूजितो राजा शिवेनावेक्षितस्तथा ।
प्राञ्जलिः पूजयामास तं जनं भरतर्षभ ॥ ५२
ततो विवेश भवनं गान्धार्या सहितो निजम् ।
आगतायां च शर्वर्यां सुखं शेते नराधिपः ॥५३

॥ इति श्रीमन्महाभारते आमश्रवासिकपर्वणि आश्रमवासपर्वणि एकादशोऽध्यायः ॥ ११ ॥

## द्वादशोऽध्यायः ॥ १२ ॥

धृतराष्ट्रेण भीष्मदुर्योधनादीनां श्राद्धदानाय विदुरमुखाद्युधिष्ठिरंप्रति द्रव्ययाचनम् ॥ १ ॥ तच्छ्रवणेन विमनायमाने भीमे तद्भावज्ञेनार्जुनेन तंप्रति द्रव्ययाचने भीमेन धृतराष्ट्रापनयानुस्मारणपूर्वकं तदनङ्गीकरणम् ॥ २ ॥

शपायन उवाच ।
ततो रजन्यां व्युष्टायां धृतराष्ट्रोऽम्बिकासुतः ।
विदुरं प्रेषयामास युधिष्ठिरनिवेशनम् ॥ १
स गत्वा राजवचनादुवाचाच्युतमीश्वरम् ।
युधिष्ठिरं महातेजाः सर्वबुद्धिमतांवरः ॥ २
धृतराष्ट्रो महाराजो वनवासाय दीक्षितः ।
गमिष्यति वनं राजन्नागतां कार्तिकीमिमाम् ॥३
स त्वां कुरुकुलश्रेष्ठ किंचिदर्थमभीप्सति ।
श्राद्धमिच्छति दातुं स गाङ्गेयस्य महात्मनः ॥ ४
द्रोणस्य सोमदत्तस्य बाह्लीकस्य च धीमतः ।
पुत्राणां चैव सर्वेषां ये चान्ये सुहृदो हताः ।
यदि चाप्यनुजानीषे सैन्धवापशदस्य च ॥ ५
एतच्छ्रुत्वा तु वचनं विदुरस्य युधिष्ठिरः ।
हृष्टः संपूजयामास गुडाकेशश्च पाण्डवः ॥ ६
न च भीमो दृढक्रोधस्तद्वचो जगृहे तदा ।
विदुरस्य महातेजा दुर्योधनकृतं स्मरन् ॥ ७

किंचिदर्थं किंचित्कार्यं कर्तुं त्वामभीप्सति द्रष्टुमिति शेषः ॥ ४ ॥ किंचिदागम्य भीम वचनमब्रवीदिति क. थ. पाठः ॥ ८ ॥ द्वादशोऽध्यायः ॥ १२ ॥

ततापं लोकानेकेन द्वितीयेनागमत्स माम् ॥१०
स मामुवाच वेपन्तीं वरं मत्तो वृणीष्व ह ।
गम्यतामिति तं चाहं प्रणम्य शिरसाऽवदम् ११
स मामुवाच तिग्मांशुर्वृथाऽऽह्वानं न मे क्षमम् ।
धक्ष्यामि त्वां च विप्रं च येन दत्तो वरस्तव ॥१२
तमहं रक्षती विप्रं शापादनपकारिणम् ।
पुत्रो मे त्वत्समो देव भवेदिति ततोऽब्रवम् ॥१३
ततो मां तेजसाऽऽविश्य मोहयित्वा च भानुमान् ।
उवाच भविता पुत्रस्तवेत्यभ्यगमद्दिवम् ॥ १४
ततोऽहमन्तर्भवने पितुश्चित्तानुरक्षिणी ।
गूढोत्पन्नं सुतं बालं जले कर्णमवासृजम् ॥ १५
नूनं तस्यैव देवस्य प्रसादात्पुनरेव तु ।
कन्याऽहमभवं विप्र यथा प्राह स मामृषिः ॥१६
स मया मूढया पुत्रो ज्ञायमानोऽप्युपेक्षितः ।
तन्मां दहति विप्रर्षे यथा सुविदितं तव ॥ १७
यदि पापमपापं वा यदेतद्विवृतं मया ।
तं द्रष्टुमिच्छामि भगवन्व्यपनेतुं त्वमर्हसि ॥ १८
यच्चास्य राज्ञो विदितं हृदिस्थं भवतोऽनघ ।
तं चायं लभतां काममद्यैव मुनिसत्तम ॥ १९
इत्युक्तः प्रत्युवाचेदं व्यासो वेदविदांवरः ।
साधु सर्वमिदं भाव्यमेवमेतद्यथाऽऽत्थ माम् २०
अपराधश्च ते नास्ति कन्याभावं गता ह्यसि ।
देवाश्चैश्वर्यवन्तो वै शरीराण्याविशन्ति वै ॥ २१
सन्ति देवनिकायाश्च संकल्पाज्जनयन्ति ये ।
वाचा दृष्ट्या तथा स्पर्शात्संघर्षेणेति पञ्चधा ॥२२
मनुष्यधर्मो दैवेन धर्मेण हि न दुष्यति ।
इति कुन्ति विजानीहि व्येतु ते मानसो ज्वरः २३
सर्वं बलवतां पथ्यं सर्वं बलवतां शुचि ।
सर्वं बलवतां धर्मः सर्वं बलवतां स्वकम् ॥ २४

॥ इति श्रीमन्महाभारते आश्रमवासिकपर्वणि पुत्रदर्शनपर्वणि द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

## त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

व्यासेन गान्धारींप्रति समरहतानां दुर्योधनादीनां सर्वेषां रात्रौ प्रदर्शनप्रतिज्ञानपूर्वकं धृतराष्ट्रादीनां विशिष्य गन्धर्वांशत्वकथनम् ॥ १ ॥ धृतराष्ट्रादिभिर्व्यासवचनाद्गङ्गातीरमेत्य बन्धुदर्शनौत्कण्ठ्येन कृच्छ्राद्दिहर्यापनम् ॥ २ ॥

व्यास उवाच ।
भद्रे द्रक्ष्यसि गान्धारि पुत्रान्भ्रातॄन्सखान्गणान् ।
वधूश्च पतिभिः सार्धं निशि सुप्तोत्थिता इव ॥ १
कर्णं द्रक्ष्यति कुन्ती च सौभद्रं चापि यादवी ।
द्रौपदी पञ्चपुत्रांश्च पितॄन्भ्रातॄंस्तथैव च ॥ २
पूर्वमेवैष हृदये व्यवसायोऽभवन्मम ।
यदाऽस्मि चोदितो राज्ञा भवत्या पृथयैव च ॥ ३
न ते शोच्या महात्मानः सर्व एव नरर्षभाः ।
क्षत्रधर्मपराः सन्तस्तथा हि निधनं गताः ॥ ४
भवितव्यमवश्यं तत्सुरकार्यमनिन्दिते ।
अवतेरुस्ततः सर्वे देवा भागैर्महीतलम् ॥ ५
गन्धर्वाप्सरसश्चैव पिशाची गुह्यराक्षसाः ।
तथा पुण्यजनाश्चैव सिद्धा देवर्षयोपि च ॥ ६
देवाश्च दानवाश्चैव तथा देवर्षयोऽमलाः ।
त एते निधनं प्राप्ताः कुरुक्षेत्रे रणाजिरे ॥ ७
गन्धर्वराजो यो धीमान्धृतराष्ट्र इति श्रुतः ।
स एव मानुषे लोके धृतराष्ट्रः पतिस्तव ॥ ८
पाण्डुं मरुद्गणाद्विद्धि विशिष्टतममच्युतम् ।
धर्मस्यांशोऽभवत्क्षत्ता राजा चैव युधिष्ठिरः ॥ ९
कलिं दुर्योधनं विद्धि शकुनिं द्वापरं नृपम् ।
दुःशासनादीन्विद्धि त्वं राक्षसाञ्शुभदर्शने ॥ १०
मरुद्गणाद्भीमसेनं बलवन्तमरिंदमम् ।
विद्धि त्वं तु नरमृषिमिमं पार्थं धनंजयम् ।
नारायणं हृषीकेशमश्विनौ यमजौ तथा ॥ ११
द्विधा कृत्वाऽऽत्मनो देहमादित्यं तपतां वरम् ।
लोकांश्च तापयानं वै कर्णं विद्धि पृथासुतम् ॥ १२

संघर्षेण रत्या ॥ २२ ॥ द्वात्रिंशोऽध्यायः ॥ ३२ ॥

यः स वैरार्थमुद्भूतः संघर्षजननस्तथा
तं कर्णं विद्धि कल्याणि भास्करं शुभदर्शने ॥ १३
यश्च पाण्डवदायादो हतः षड्भिर्महारथैः ।
स सोम इह सौभद्रो योगादेवाभवद्विधा ॥ १४
द्रौपद्या सह संभूतं धृष्टद्युम्नं च पावकात् ।
अग्नेर्भागं शुभं विद्धि राक्षसं तु शिखण्डिनम् ॥ १५
द्रोणं बृहस्पतेर्भागं विद्धि द्रौणिं च रुद्रजम् ।
गाङ्गेयो वसुवीर्येण देवो मानुषतां गतः ॥ १६
एवमेते महाप्राज्ञे देवा मानुष्यमेत्य हि ।
ततः पुनर्गताः स्वर्गं कृते कर्मणि शोभने ॥ १७
यच्च वै हृदि सर्वेषां दुःखमेतच्चिरं स्थितम् ।
तदद्य व्यपनेष्यामि परलोककृताद्भयात् ॥ १८
सर्वे भवन्तो गच्छन्तु नदीं भागीरथीं प्रति ।
तत्र द्रक्ष्यथ तान्सर्वान्ये हतास्तत्र संयुगे ॥ १९

वैशंपायन उवाच ।
इति व्यासस्य वचनं श्रुत्वा सर्वो जनस्तदा ।
महता सिंहनादेन गङ्गामभिमुखो ययौ ॥ २०
धृतराष्ट्रश्च सामात्यः प्रययौ सह पाण्डवैः ।
सहितो मुनिशार्दूलैर्गन्धर्वैश्च समागतैः ॥ २१
ततो गङ्गां समासाद्य क्रमेण स जनार्णवः ।
निवासमकरोत्सर्वो यथाप्रीति यथासुखम् ॥ २२
राजा च पाण्डवैः सार्धमिष्टे देशे सहानुगः ।
निवासमकरोद्धीमान्सस्त्रीवृद्धपुरःसरः ॥ २३
जगाम तदहश्चापि तेषां वर्षशतं यथा ।
निशां प्रतीक्षमाणानां दिदृक्षूणां मृतान्नृपान् २४
अथ पुण्यं गिरिवरमस्तमभ्यगमद्रविः ।
ततः कृताभिषेकास्ते नैशं कर्म समाचरन् ॥ २५

॥ इति श्रीमन्महाभारते आश्रमवासिकपर्वणि पुत्रदर्शनपर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

## चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

व्यासेन निशायां गङ्गाजलावगाहनेन समाह्वाने पुरा समरनिहतैः कुरुपाण्डवोभयपक्षीयैः सर्वैः स्वस्वाभरणायुधवाहनादिभिः सह सलिलादुद्गम्य तीरोत्तरणम् ॥ १ ॥ धृतराष्ट्रेण व्यासप्रसादलब्धदिव्यचक्षुषा दुर्योधनादीनां सर्वेषामवलोकनम् ॥ २ ॥

वैशंपायन उवाच ।
ततो निशायां प्राप्तायां कृतसायाह्निकक्रियाः ।
व्यासमभ्यगमन्सर्वे ये तत्रासन्समागताः ॥ १
धृतराष्ट्रस्तु धर्मात्मा पाण्डवैः सहितस्तदा ।
शुचिरेकमनाः सार्धमृषिभिस्तैरुपाविशत् ॥ २
गान्धार्या सह नार्यस्तु सहिताः समुपाविशन् ।
पौरजानपदश्चापि जनः सर्वो यथा वयः ॥ ३
ततो व्यासो महातेजाः पुण्यं भागीरथीजलम् ।
अवतीर्याजुहावाथ सर्वाल्लोकान्महामुनिः ॥ ४
पाण्डवानां च ये योधाः कौरवाणां च सर्वशः ।
राजानश्च महाभागा नानादेशनिवासिनः ।
'प्रतीक्ष्य तस्थुस्ते सर्वे तेषामागमनं प्रति ॥' ५
ततः सुतुमुलः शब्दो जलान्ते जनमेजय ।
प्रादुरासीद्यथायोगं कुरुपाण्डवसेनयोः ॥ ६
ततस्ते पार्थिवाः सर्वे भीष्मद्रोणपुरोगमाः ।
ससैन्याः सलिलात्तस्मात्समुत्तस्थुः सहस्रशः ॥ ७
विराटद्रुपदौ चैव सहपुत्रौ ससैनिकौ ।
द्रौपदेयाश्च सौभद्रो राक्षसश्च घटोत्कचः ॥ ८
कर्णदुर्योधनौ चैव शकुनिश्च महारथः ।
दुःशासनादयश्चैव धार्तराष्ट्रा महाबलाः ॥ ९
जारासन्धिर्भगदत्तो जलसन्धश्च वीर्यवान् ।
भूरिश्रवाः शलः शल्यो वृषसेनश्च सानुजः ॥ १०
लक्ष्मणो राजपुत्रश्च धृष्टद्युम्नस्सहात्मजः ।
शिखण्डिपुत्राः सर्वे च धृष्टकेतुश्च सानुजः ॥ ११
अचलो वृषकश्चैव राक्षसश्चाप्यलायुधः ।
बाह्लिकः सोमदत्तश्च चेकितानश्च पार्थिवः ॥ १२

रहिते समुपाविशन् • इति क. पाठः ॥ ३ ॥ प्रादुरासी- यथापूर्वं इति झ. पाठः ॥ ६ ॥ चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

एते चान्ये च बहवो बहुत्वाद्ये न कीर्तिताः ।
सर्वे भासुरदेहास्ते समुत्तस्थुर्जलात्ततः ॥ १३
यस्य वीरस्य यो वेषो यो ध्वजो यच्च वाहनम् ।
यद्वर्म यत्प्रहरणं तेन तेन स दृश्यते ॥ १४
दिव्यांबरधराः सर्वे सर्वे भ्राजिष्णुकुण्डलाः ।
निर्वैरा निरहंकारा विगतक्रोधमत्सराः ॥ १५
गन्धर्वैरुपगीयन्तः स्तूयमानाश्च बन्दिभिः ।
दिव्यमाल्यस्रजोपेतास्तथा दिव्याप्सरोवृताः॥१६
धृतराष्ट्रस्य च तदा दिव्यं चक्षुर्नराधिप ।
मुनिः सत्यवतीपुत्रः प्रीतः प्रादात्तपोबलात्॥१७
दिव्यज्ञानबलोपेता गान्धारी च यशस्विनी ।
ददर्श पुत्रांस्तान्सर्वान्ये चान्येऽपि मृधे हताः १८
तदद्भुतमचिन्त्यं च सुमहद्रोमहर्षणम् ।
विस्मितः स जनः सर्वो ददर्शानिमिषेक्षणः ॥१९
तदुत्सवमहोदग्रं हृष्टनारीनराकुलम् ।
आश्चर्यभूतं ददृशे चित्रं पटगतं यथा ॥ २०
धृतराष्ट्रस्तु तान्सर्वान्पश्यन्दिव्येन चक्षुषा ।
भरतश्रेष्ठ प्रसादात्तस्य वै मुनेः ॥ २१

॥ इति श्रीमन्महाभारते आश्रमवासिकपर्वणि पुत्रदर्शनपर्वणि चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

## पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

धृतराष्ट्रयुधिष्ठिरादिभिर्व्यासप्रसादोज्जीवितैर्हतपूर्वबन्धुभिः सह संल्लापादिना यावद्रात्रिसुखविहरणम् ॥ १ ॥

वैशंपायन उवाच ।
ततस्ते पुरुषश्रेष्ठाः समाजग्मुः परस्परम् ।
विगतक्रोधमात्सर्याः सर्वे विगतकल्मषाः ॥ १
विधिं परममास्थाय ब्रह्मर्षिविहितं शुभम् ।
संहृष्टमनसः सर्वे देवलोक इवामराः ॥ २
पुत्रः पित्रा च मात्रा च भार्याश्च पतिभिः सह ।
भ्रात्रा भ्राता सखा चैव सख्या राजन्समागताः ३
पाण्डवास्तु महेष्वासं कर्णं सौभद्रमेव च ।
संप्रहर्षात्समाजग्मुर्द्रौपदेयांश्च सर्वशः ॥ ४
ततस्ते प्रीयमाणा वै कर्णेन सह पाण्डवाः ।
समेत्य पृथिवीपाल सौहृदे च स्थिताऽभवन् ॥ ५
परस्परं समागम्य योधास्ते भरतर्षभ
मुनेः प्रसादात्ते ह्येवं क्षत्रिया नष्टमन्यवः ॥
असौहृदं परित्यज्य सौहृदे पर्यवस्थिताः ।
एवं समागताः सर्वे गुरुभिर्बान्धवैः सह ॥ ७
पुत्रैश्च पुरुषव्याघ्राः कुरवोऽन्ये च पार्थिवाः ।
तां रात्रिमखिलामेवं विहृत्य प्रीतमानसाः ॥ ८
मेनिरे परितोषेण नृपाः स्वर्गसदो यथा
नात्र शोको भयं त्रासो नारतिर्नायशोऽभवत् ॥ ९
परस्परं समागम्य योधानां भरतर्षभ ।
समागतास्ताः पितृभिर्भ्रातृभिः पतिभिः सुतैः ।
मुदं परमिकां प्राप्य नार्यो दुःखमथात्यजन् ॥१०
'देवलोकं गता ये च ये च ब्रह्मसदो गताः ।
ये चापि वारुणं लोकं ये च गोलोकमाश्रिताः ११
तथा वैवस्वतं लोकं ये च यक्षानुपागताः ।
राक्षसांश्च पिशाचांश्च कुरूंश्चापि तथोत्तरान् ॥१२
विचित्राश्च गतीरन्ये ये प्राप्ताः कर्मभिर्नराः ।
सर्वे ते तद्वयोरूपवेषास्तत्र समभ्ययुः ॥' १३
एकां रात्रिं विहृत्यैवं ते वीरास्ताश्च योषितः ।
आमन्त्र्यान्योन्यमाश्लिष्य ततो जग्मुर्यथागतं १४
ततो विसर्जयामास लोकांस्तान्मुनिपुङ्गवः ।
क्षणेनान्तर्हिताश्चैव प्रेक्षतामेव तेऽभवन् ॥ १५
अवगाह्य महात्मानः पुण्यां भागीरथीं नदीम्
सरथाः सध्वजाश्चैव स्वानि वेश्मानि भेजिरे १६
देवलोकं ययुः केचित्केचिद्ब्रह्मसदस्तथा ।
केचिच्च वारुणं लोकं केचित्कौबेरमाप्नुवन् ॥ १७
ततो वैवस्वतं लोकं केचिच्चैवाप्नुवन्नृपाः ।
राक्षसानां पिशाचानां केचिच्चाप्युत्तरान्कुरून् १८
विचित्रगतयः सर्वे यानवाप्यामरैः सह ।
आजग्मुस्ते महात्मानः सवाहाः सपदानुगाः १९
गतेषु तेषु सर्वेषु सलिलस्थो महामुनिः ।
धर्मशीलो महातेजाः कुरूणां हितकृत्तदा ।

ततः प्रोवाच ताः सर्वाः क्षत्रिया निहतेश्वराः॥२०
यायाः पतिकृताँल्लोकानिच्छन्ति परमस्त्रियः।
ता जाह्नवीजलं क्षिप्रमवगाहन्त्वतन्द्रिताः॥ २१
ततस्तस्य वचः श्रुत्वा श्रद्दधाना वराङ्गनाः।
श्वशुरं समनुज्ञाप्य विविशुर्जाह्नवीजलम्॥ २२
विमुक्ता मानुषैर्देहैस्ततस्ता भर्तृभिः सह।
समाजग्मुस्तदा साध्व्यः सर्वा एव विशांपते॥२३
एवं क्रमेण सर्वास्ताः शीलवत्यः पतिव्रताः।
प्रविश्य तोयं निर्मुक्ता जग्मुर्भर्तृसलोकताम्॥२४
दिव्यरूपसमायुक्ता दिव्याभरणभूषिताः।
दिव्यमाल्यांबरधरा यथाऽऽसां पतयस्तथा॥ २५
ताः शीलगुणसंपन्ना विमानस्था गतक्लमाः।
सर्वाः सर्वगुणोपेताः स्वस्थानं प्रतिपेदिरे॥ २६
यस्य यस्य तु यः कामस्तस्मिन्काले बभूव ह।
तंतं विसृष्टवान्व्यासो वरदो धर्मवत्सलः॥ २७
तच्छ्रुत्वा नरदेवानां पुनरागमनं नराः।
जहृषुर्मुदिताश्चासन्नानादेशगता अपि॥ २८
'ते नष्टभयसंकल्पा नरा विगतकल्मषाः।
बभूवुः पौरवाःसर्वे तद्दृष्ट्वाऽऽश्चर्यमुत्तमम्॥' २९
प्रियैः समागमं तेषां यः सम्यक् शृणुयान्नरः।
प्रियाणि लभते नित्यमिह च प्रेत्य चैव सः।
इष्टबान्धवसंयोगमनायासमनामयम्॥ ३०
यश्चैतच्छ्रावयेद्विद्वान्विदुषो धर्मवित्तमः।
स यशः प्राप्नुयाल्लोके परत्र च शुभां गतिम्॥ ३१
स्वाध्याययुक्ता मनुजास्तपोयुक्ताश्च भारत।
साध्वाचारा दमोपेता दाननिर्धूतकल्मषाः॥ ३२
ऋजवः शुचयः शान्ता हिंसानृतविवर्जिताः।
आस्तिकाः श्रद्दधानाश्च धृतिमन्तश्च मानवाः।
श्रुत्वाऽऽश्चर्यमिदं पर्व ह्यवाप्स्यन्ति परां गतिम्॥ ३३
'पुनस्ते दर्शनं प्राप्ताः पुनश्च परिकीर्तिताः।
पुनःपुनः प्रयच्छन्ति शृण्वतामभयं सदा॥' ३४

॥ इति श्रीमन्महाभारते आश्रमवासिकपर्वणि पुत्रदर्शनपर्वणि पञ्चत्रिंशोऽध्यायः॥ ३५॥

## षट्त्रिंशोऽध्यायः॥ ३६॥

त्यक्तदेहानामपि कुरुपाण्डवपक्षीयाणां कथं पुनरागमनमिति जनमेजयप्रश्नस्य सोपपत्तिकमुत्तरदानम्॥१॥

सौतिरुवाच।
एतच्छ्रुत्वा नृपो विद्वान्हृष्टोऽभूज्जनमेजयः।
पितामहानां सर्वेषां गमनागमनं तदा॥ १
अब्रवीच्च मुदा युक्तः पुनरागमनं प्रति।
कथं नु त्यक्तदेहानां पुनस्तद्रूपदर्शनम्॥ २
इत्युक्तः स द्विजश्रेष्ठो व्यासशिष्यः प्रतापवान्।
प्रोवाच वदतांश्रेष्ठस्तं नृपं जनमेजयम्॥ ३
वैशंपायन उवाच।
अविप्रणाशः सर्वेषां कर्मणामिति निश्चयः।
कर्मजानि शरीराणि शरीराकृतयस्तथा॥ ४
महाभूतानि नित्यानि भूताधिपतिसंश्रयात्।
तेषां च नित्यसंवासो न विनाशो वियुज्यताम्॥ ५
अनाशया कृतं कर्म तस्य चेष्टः फलागमः।
आत्मा चैभिः समायुक्तः सुखदुःखमुपाश्नुते॥ ६
अविनाश्यस्तथा नित्यं क्षेत्रज्ञ इति निश्चयः।
भूतानामात्मभावो यो ध्रुवोसौ संविजानताम्॥७
यावन्न क्षीयते कर्म तावत्तस्य स्वरूपता।
क्षीणकर्मा नरो लोके रूपान्यत्वमुपाश्नुते॥ ८
नानाभूतास्तथैकत्वं शरीरं प्राप्य संहताः।
भवन्ति ते तथा नित्याः पृथग्भावं विजानताम्॥९
अश्वमेधश्रुतिश्चेयमश्वसंज्ञपनं प्रति।
लोकान्तरगता नित्यं प्राणा नित्या हि वाजिनः॥
अहं हितं वदाम्येतत्प्रियं चेत्तव पार्थिव।
देवयाना हि पन्थानः श्रुतास्ते यज्ञसंस्तरे॥ ११

संज्ञपन मारणम्॥ १०॥ नासौ मानादहंकारान्न च वेत्ति विरागतामिति क. पाठः॥ ११॥ षट्त्रिंशोऽध्यायः॥ ३६॥

सुकृतो यत्र यज्ञस्ते तत्र देवा हितास्तव ।
यदा समन्विता देवाः पशूनां गमनेश्वराः ॥ १२
गतिमन्तश्च तेनेष्टा नान्ये नित्या भवन्त्युत ।
नित्येऽस्मिन्पञ्चके वर्गे नित्ये चात्मनि पूरुषः॥१३
अस्य नाशं समायोगं यः पश्यति वृथामतिः ।
वियोगे शोचतेऽत्यर्थं स बाल इति मे मतिः॥१४
वियोगे दोषदर्शी यः संयोगं स विसर्जयेत् ।
असङ्गे संगमो नास्ति दुःखं भावि वियोगजम् १५
परापरज्ञस्त्वपरो नाभिमानादुदीक्षितः ।
अपरज्ञः परां बुद्धिं स्पृष्ट्वा मोहाद्विमुच्यते ॥ १६
अदर्शनादापतितः पुनश्चादर्शनं गतः ।
नाहं तं वेद्मि नासौ मां न च मेऽस्ति विरागता१७
येनयेन शरीरेण करोत्ययमनीश्वरः ।
तेनतेन शरीरेण तदवश्यमुपाश्नुते ।
मानसं मनसाऽऽप्नोति शरीरं च शरीरवान् ॥ १८

॥ इति श्रीमन्महाभारते आश्रमवासिकपर्वणि पुत्रदर्शनपर्वणि षट्त्रिंशोऽध्यायः ॥ ३६ ॥

## सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

जनमेजयेन परिक्षित्प्रदर्शने प्रार्थिते व्यासेन परिक्षितः शमीकमहर्षेः शृङ्गिणश्च प्रदर्शनम् ॥ १ ॥ जनमेजयेनावभृथस्नानानन्तरमास्तिकपूजनपूर्वकं वैशंपायनंप्रति कथावशेषकथनप्रार्थना ॥ २ ॥

वैशंपायन उवाच ।
अदृष्ट्वा तु नृपः पुत्रान्दर्शनं प्रतिलब्धवान् ।
ऋषेः प्रसादात्पुत्राणां स्वरूपाणां कुरूद्वह ॥ १
स राजा राजधर्मांश्च ब्रह्मोपनिषदं तथा ।
अवाप्तवान्नरश्रेष्ठो बुद्धिनिश्चयमेव च ॥ २
विदुरश्च महाप्राज्ञो ययौ सिद्धिं तपोबलात् ।
धृतराष्ट्रः समासाद्य व्यासं चैव तपस्विनम् ॥ ३
जनमेजय उवाच ।
ममापि वरदो व्यासो दर्शयेत्पितरं यदि ।
तद्रूपवेषवयसं श्रद्दध्यां सर्वमेव तत् ॥ ४
प्रियं मे स्यात्कृतार्थश्च स्यामहं कृतनिश्चयः ।
प्रसादादृषिमुख्यस्य मम कामः समृद्ध्यताम् ॥ ५
सौतिरुवाच ।
इत्युक्तवचने तस्मिन्नृपे व्यासः प्रतापवान् ।
प्रसादमकरोद्धीमानानयच्च परिक्षितम् ॥ ६
ततस्तद्रूपवयसमागतं नृपतिं दिवः ।
श्रीमन्तं पितरं राजा ददर्श स परीक्षितम् ॥ ७
शमीकं च महात्मानं पुत्रं तं चास्य शृङ्गिणम् ।
अमात्या ये च निहता राज्ञस्तांश्च ददर्श ह ॥ ८
ततः सोवभृथे राजा मुदितो जनमेजयः ।
पितरं स्नापयामास स्वयं सस्नौ च पार्थिवः ॥ ९
'परीक्षिदपि तत्रैव बभूव स तिरोहितः ।'
स्नात्वा स नृपतिर्विप्रमास्तीकमिदमब्रवीत् ।
यायावरकुलोत्पन्नं जरत्कारुसुतं तदा ॥ १०
आस्तीक विविधाश्चर्यो यज्ञोऽयमिति मे मतिः ।
यदद्यायं पिता प्राप्तो मम शोकप्रणाशनः ॥ ११
आस्तीक उवाच ।
ऋषिर्द्वैपायनो यत्र पुराणस्तपसो निधिः ।
यज्ञे कुरुकुलश्रेष्ठ तस्य लोकावुभौ जितौ ॥ १२
श्रुतं विचित्रमाख्यानं त्वया पाण्डवनन्दन ।
सर्पाश्च भस्मसान्नीता गताश्च पदवीं पितुः ॥ १३
कथंचित्तक्षको मुक्तः सत्यत्वात्तव पार्थिव ।
ऋषयः पूजिताः सर्वे गतिर्दृष्टा महात्मनः ॥ १४
प्राप्तः सुविपुलो धर्मः श्रुत्वा पापविनाशनम् ।
विमुक्तो हृदयग्रन्थिरुदारजनदर्शनात् ॥ १५
ये च पक्षधरा धर्मे सद्वृत्तरुचयश्च ये ।
यान्दृष्ट्वा हीयते पापं तेभ्यः कार्या नमस्क्रिया १६
सौतिरुवाच ।

स धृतराष्ट्रो राजा विदुरश्च सिद्धिं ययौ इति द्वयोः सबन्धः । तत्रापि विदुरस्तपोबलात् । धृतराष्ट्रो व्यासं समासाद्येति संबन्धः ॥ २ ॥ पापविनाशन इतिहासमिति शेषः ॥ १५ ॥ पक्षधराः पक्षस्थापकाः ॥ १६ ॥ सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

एतच्छ्रुत्वा द्विजश्रेष्ठात्स राजा जनमेजयः ।
पूजयामास तमृषिमनुमान्य पुनःपुनः ॥ १७
पप्रच्छ तमृषिं चापि वैशंपायनमच्युतम् ।
कथावशेषं धर्मज्ञो वनवासस्य सत्तम ॥ १८

॥ इति श्रीमन्महाभारते आश्रमवासिकपर्वणि पुत्रदर्शनपर्वणि सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

## अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

धृतराष्ट्रेण पुत्रदर्शनानन्तरं युधिष्ठिरादिभिः सह पुनः स्वाश्रमंप्रत्यागमनम् ॥ १ ॥ व्यासेन धृतराष्ट्रंप्रति युधिष्ठिरादीनां नगरंप्रस्थापनचोदना ॥ २ ॥ नगरंप्रति पुनरागमनमनिच्छतापि युधिष्ठिरेण धृतराष्ट्रस्य कुन्तीगान्धार्योश्च निदेशनिर्बन्धेन पुनः सर्वैःसह हास्तिनपुरं प्रत्यागमनम् ॥ ३ ॥

जनमेजय उवाच ।
दृष्ट्वा पुत्रांस्तथा पौत्रान्सानुबन्धाञ्जनाधिपः ।
धृतराष्ट्रः किमकरोद्राजा चैव युधिष्ठिरः ॥ १
वैशंपायन उवाच ।
तद्दृष्ट्वा महदाश्चर्यं पुत्राणां दर्शनं पुनः ।
वीतशोकः स राजर्षिः पुनराश्रममागमत् ॥ २
इतरस्तु जनः सर्वस्ते चैव परमर्षयः ।
प्रतिजग्मुर्यथाकामं धृतराष्ट्राभ्यनुज्ञया ॥ ३
पाण्डवास्तु महात्मानो लघुभूयिष्ठसैनिकाः ।
अनुजग्मुर्महात्मानं सदारास्तं महीपतिम् ॥ ४
तमाश्रमगतं धीमान्ब्रह्मर्षिर्लोकपूजितः ।
द्वैपायनोऽभ्युपागम्य राजानमिदमब्रवीत् ॥ ५
धृतराष्ट्र महाबाहो शृणु कौरवनन्दन ।
श्रुतास्ते ज्ञानवृद्धानामृषीणां पुण्यकर्मणाम् ॥ ६
श्रद्धाभिजनवृद्धानां वेदवेदाङ्गवेदिनाम् ।
धर्मज्ञानां पुराणानां वदतां विविधाः कथाः ॥ ७
मा स्म शोके मनः कार्षीर्दिष्टे न व्यथते बुधः ।
श्रुतं देवरहस्यं ते नारदाद्देवदर्शनात् ॥ ८
गतास्ते क्षत्रधर्मेण शस्त्रपूतां गतिं शुभाम् ।
यथा दृष्टास्त्वया पुत्रास्तथा कामविहारिणः ॥ ९
युधिष्ठिरः स्वयं धीमान्भवन्तमनुरुध्यते ।
सहितो भ्रातृभिः सर्वैः सदारः ससुहृज्जनः ॥ १०
विसर्जयैनं यात्वेष स्वराज्यमनुशासताम् ।
मासः समधिकस्तेषामतीतो वसतां वने ॥ ११
एतद्धि नित्यं यत्नेन पदं रक्ष्यं नराधिप ।
बहुप्रत्यर्थिकं ह्येतद्राज्यं नाम कुरूद्वह ॥ १२
इत्युक्तः कौरवो राजा व्यासेनामितबुद्धिना ।
युधिष्ठिरमथाहूय वाग्मी वचनमब्रवीत् ॥ १३
अजातशत्रो भद्रं ते शृणु मे भ्रातृभिः सह ।
त्वत्प्रसादान्महीपाल शोको नास्मान्प्रबाधते ॥ १४
रमे चाहं त्वया पुत्र पुरेव गजसाह्वये ।
नाथेनानुगतो विद्वन्प्रियेषु परिवर्तिना ॥ १५
प्राप्तं पुत्रफलं त्वत्तः प्रीतिर्मे परमा त्वयि ।
न मे मन्युर्महाबाहो गम्यतां मा चिरं कृथाः ॥ १६
भवन्तं चेह संप्रेक्ष्य तपो मे परिहीयते ।
उपयुक्तं शरीरं च त्वां दृष्ट्वा धारितं पुनः ॥ १७
मातरौ ते तथैवेमे शीर्णपर्णकृताशने ।
मम तुल्यव्रते पुत्र न चिरं वर्तयिष्यतः ॥ १८
दुर्योधनप्रभृतयो दृष्टा लोकान्तरं गताः ।
व्यासस्य तपसो वीर्याद्भवतश्च समागमात् ॥ १९
प्रयोजनं चिरं वृत्तं जीवितस्य ममानघ ।
उग्रं तपः समास्थास्ये त्वमनुज्ञातुमर्हसि ॥ २०
त्वय्यद्य पिण्डः कीर्तिश्च कुलं चेदं प्रतिष्ठितम् ।
श्वोवाऽद्य वा महाबाहो गम्यतां माचिरं कृथाः ॥ २१
राजनीतिः सुबहुशः श्रुता ते भरतर्षभ ।
संदेष्टव्यं न पश्यामि कृतमेतावता विभो ॥ २२
वैशंपायन उवाच ।
इत्युक्तवचनं तं तु नृपो राजानमब्रवीत् ।
न मामर्हसि धर्मज्ञ परित्यक्तुमनागसम् ॥ २३
कामं गच्छन्तु मे सर्वे भ्रातरोऽनुचरास्तथा ।
भवन्तमहमन्विष्ये मातरौ च यतव्रतः ॥ २४
तमुवाचाथ गान्धारी मैवं पुत्र शृणुष्व च ।

बहवः प्रत्यर्थिनः प्रार्थयानाः शत्रवो यत्र तत् ॥ १२ ॥ नाथेन त्वया ॥ १५ ॥ अन्विष्ये सेविष्ये ॥ २४ ॥

त्वय्यधीनं कुरुकुलं पिण्डश्च श्वशुरस्य मे ॥ २५
गम्यतां पुत्र पर्याप्तमेतावत्पूजिता वयम् ।
राजा यदाह तत्कार्यं त्वया पुत्र पितुर्वचः ॥ २६
वैशंपायन उवाच ।
इत्युक्तः स तु गान्धार्या कुन्तीमिदमभाषत ।
स्नेहबाष्पाकुले नेत्रे परिमृज्य विनीतवत् ॥ २७
विसर्जयति मां राजा गान्धारी च यशस्विनी
भवत्यां बद्धचित्तस्तु कथं यास्यामि दुःखितः २८
न चोत्सहे तपोविघ्नं कर्तुं ते धर्मचारिणि ।
तपसो हि परं नास्ति तपसा विन्दते महत् ॥ २९
ममापि न तथा राज्ञि राज्ये बुद्धिर्यथा पुरा ।
तपस्येवानुरक्तं मे मनः सर्वात्मना तथा ॥ ३०
शून्येयं च मही कृत्स्ना न मे प्रीतिकरी शुभे ।
बान्धवा नः परिक्षीणा बलं नो न यथा पुरा ३१
पाञ्चालाः सुभृशं क्षीणाः कन्यामात्रावशेषिताः ।
न तेषां कुलकर्तारं कंचित्पश्याम्यहं शुभे ॥ ३२
सर्वे हि भस्मसान्नीतास्ते द्रोणेन रणाजिरे ।
अवशिष्टाश्च निहता द्रोणपुत्रेण वै निशि ।
चेदयश्चैव मत्स्याश्च दृष्टपूर्वास्तथैव नः ॥ ३३
केवलं वृष्णिचक्रं च वासुदेवपरिग्रहात् ।
यद्दृष्ट्वा स्थातुमिच्छामि धर्मार्थं नार्थहेतुतः ॥ ३४
शिवेन पश्य नः सर्वान्दुर्लभं तव दर्शनम् ।
भविष्यत्यंब राजा हि तीव्रं चारप्स्यते तपः ॥ ३५
एतच्छ्रुत्वा महाबाहुः सहदेवो युधांपतिः ।
युधिष्ठिरमुवाचेदं बाष्पव्याकुललोचनः ॥ ३६
नोत्सहेऽहं परित्यक्तुं मातरं भरतर्षभ ।
प्रतियातु भवान्क्षिप्रं तपस्तप्स्याम्यहं वने ॥ ३७
इहैव शोषयिष्यामि तपसेदं कलेवरम् ।
पादशुश्रूषणे रक्तो राज्ञो मात्रोस्तथाऽनयोः ॥ ३८
तमुवाच ततः कुन्ती परिष्वज्य महाभुजम् ।
गम्यतां पुत्र मैवं त्वं वोचः कुरु वचो मम ॥ ३९
आगमा वः शिवाः सन्तु स्वस्था भवत पुत्रकाः ।
उपरोधो भवेदेवमस्माकं तपसः कृते ॥ ४०
त्वत्स्नेहपाशबद्धा च हीयेय तपसः परात् ।
तस्मात्पुत्रक गच्छ त्वं शिष्टमल्पं च नः प्रभो ४१
एवं संस्तंभितं वाक्यैः कुन्त्या बहुविधैर्मनः
सहदेवस्य राजेन्द्र राज्ञश्चैव विशेषतः ॥
ते मात्रा समनुज्ञाता राज्ञा च कुरुपुङ्गवाः
अभिवाद्य कुरुश्रेष्ठमामन्त्रयितुमारभन् ॥
युधिष्ठिर उवाच ।
राज्यं प्रति गमिष्यामः शिवेन प्रतिनन्दिताः
अनुज्ञातास्त्वया राजन्गमिष्यामो विकल्मषाः ॥
एवमुक्तः स राजर्षिर्धर्मराज्ञा महात्मना ।
अनुजज्ञे जयाशीर्भिः पूजयित्वा युधिष्ठिरम् ॥ ४५
भीमं च बलिनां श्रेष्ठं सान्त्वयामास पार्थिवः ।
स चास्य सम्यङ्मेधावी प्रत्यपद्यत वीर्यवान् ॥ ४६
अर्जुनं च समाश्लिष्य यमौ च भरतर्षभौ ।
अनुजज्ञे स कौरव्यः परिष्वज्याभिनन्द्य च ॥ ४७
गान्धार्या चाभ्यनुज्ञाताः कृतपादाभिवादनाः ।
जनन्या समुपाघ्राताः परिष्वक्ताश्च ते नृपम् ॥ ४८
चक्रुः प्रदक्षिणं सर्वे वत्सा इव निवारणे ।
पुनः पुनर्निरीक्षन्तः प्रचक्रुस्ते प्रदक्षिणम् ॥ ४९
द्रौपदीप्रमुखाश्चैव सर्वाः कौरवयोषितः ।
न्यायतः श्वशुरे वृत्तिं प्रयुज्य प्रययुस्ततः ॥ ५०
श्वश्रूभ्यां समनुज्ञाताः परिष्वज्याभिनन्दिताः ।
संदिष्टाश्चेतिकर्तव्यं प्रययुर्भर्तृभिः सह ॥ ५१
ततः प्रजज्ञे निनदः सूतानां युज्यतामिति ।
उष्ट्राणां क्रोशतां चापि हयानां हेषतामपि ॥ ५२
ततो युधिष्ठिरो राजा सदारः सहसैनिकः ।
नगरं हास्तिनपुरं पुनरायात्सबान्धवः ॥ ५३

॥ इति श्रीमन्महाभारते आश्रमवासिकपर्वणि पुत्रदर्शनपर्वणि अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

॥ समाप्तं चेदं पुत्रदर्शनपर्व ॥ २ ॥

कथामात्रावशेषिता इति क्ष. पाठः ॥ ३२ ॥ अविषह्य च राजा हीति क्ष. पाठः ॥ ३५ ॥ श्रेयसः परादिति क. ट. पाठः । शिष्टमायुरिति शेषः ॥ ४१ ॥ निवारणे स्तनपानादिति शेषः ॥ ४९ ॥ तथैव द्रौपदी भद्रा पाण्ड्यजा भुजगेन्द्रजेति क. ठ. थ. पाठः ॥ ५० ॥ अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

# (अथ नारदागमनपर्व ॥ ३ ॥)

## एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

कदाचन हास्तिनपुरमुपागतेन नारदेन पाण्डवान्प्रति धृतराष्ट्रादीनां स्वर्गप्राप्तिनिवेदनम् ॥ १ ॥ धृतराष्ट्रे गान्धारीकुन्तीसञ्जयैः सह गङ्गायामाप्लुत्य स्वाश्रममागच्छति सति मध्येमार्गं दावाग्निना तत्परिवेष्टनम् ॥ २ ॥ धृतराष्ट्रेण सञ्जयं प्रत्यग्नितो दूरापसरणप्रेरणापूर्वकं कुन्तीगान्धारीभ्यां सह वन्हौ प्रवेशनम् ॥ ३ ॥ ततः सञ्जयेन हिमवत्पर्वतंप्रति गमनम् ॥ ४ ॥

वैशंपायन उवाच
तेषु चोपनिवृत्तेषु पाण्डवेषु यदृच्छया ।
देवर्षिर्नारदो राजन्नाजगाम युधिष्ठिरम् ॥ १
तमभ्यर्च्य महाबाहुः कुरुराजो युधिष्ठिरः ।
आसीनं परिविश्वस्तं प्रोवाच वदतांवरः ॥ २
चिरात्तु नानुपश्यामि भगवन्तमुपस्थितम् ।
कच्चित्ते कुशलं विप्र शुभं वा प्रत्युपस्थितम् ॥ ३
के देशाः परिदृष्टास्ते किं च कार्यं करोमि ते ।
तद्ब्रूहि द्विजमुख्यस्त्वं ह्यस्माकं च प्रियोऽतिथिः ४
नारद उवाच ।
चिरदृष्टोसि मेऽत्येवमागतोऽहं तपोवनात् ।
परिदृष्टानि तीर्थानि गङ्गा चैव मया नृप ॥ ५
युधिष्ठिर उवाच ।
वदन्ति पुरुषा मेऽद्य गङ्गातीरनिवासिनः ।
धृतराष्ट्रं महात्मानमास्थितं परमं तपः ॥ ६
अपि दृष्टस्त्वया तत्र कुशली स कुरूद्वहः ।
गान्धारी च पृथा चैव सूतपुत्रश्च संजयः ॥ ७
कथं च वर्तते चाद्य पिता मम स पार्थिवः ।
श्रोतुमिच्छामि भगवन्यदि दृष्टस्त्वया नृपः ॥ ८
नारद उवाच ।
स्थिरीभूय महाराज शृणु वृत्तं यथातथम् ।
यथाश्रुतं च दृष्टं च मया तस्मिंस्तपोवने ॥ ९
वनवासनिवृत्तेषु भवत्सु कुरुनन्दन ।
कुरुक्षेत्रात्पिता तुभ्यं गङ्गाद्वारं ययौ नृप ॥ १०
गान्धार्या सहितो धीमान्वध्वा कुन्त्या समन्वितः ।
संजयेन च सूतेन साग्निहोत्रः सयाजकः ॥ ११
आतस्थे स तपस्तीव्रं पिता तव तपोधनः ।
अग्निं मुखे समाधाय वायुभक्षोऽभवन्मुनिः ॥ १२
वने स मुनिभिः सर्वैः पूज्यमानो महातपाः ।
त्वगस्थिमात्रशेषः स षण्मासानभवन्नृपः ॥ १३
गान्धारी तु जलाहारी कुन्ती मासोपवासिनी ।
संजयः षष्ठभुक्तेन वर्तयामास भारत ॥ १४
अग्नींस्तु याजकास्तत्र जुहुवुर्विधिवत्प्रभो ।
दृश्यतोऽदृश्यतश्चैव वने तस्मिन्नृपस्य वै ॥ १५
अनिकेतोथ राजा स बभूव वनगोचरः ।
ते चापि सहिते देव्यौ संजयश्च तमन्वयुः ॥ १६
संजयो नृपतेर्नेता समेषु विषमेषु च ।
गान्धार्याश्च पृथा चैव चक्षुरासीदनिन्दिता ॥ १७
ततः कदाचिद्गङ्गायाः कच्छे स नृपसत्तमः ।
गङ्गायामाप्लुतो धीमानाश्रमाभिमुखो ययौ ॥ १८
अथ वायुः समुद्भूतो दावाग्निरभवन्महान् ।
ददाह तद्वनं सर्वं परिगृह्य समन्ततः ॥ १९
दह्यत्सु मृगयूथेषु द्विजिह्वेषु समन्ततः ।
वराहाणां च यूथेषु संश्रयत्सु जलाशयान् ॥ २०
संप्रदीप्ते वने तस्मिन्प्राप्ते व्यसन उत्तमे ।
निराहारतया राजा मन्दप्राणविचेष्टितः ।
असमर्थोऽपसरणे सुकृशे मातरौ च ते ॥ २१
ततः स नृपतिर्दृष्ट्वा वह्निमायान्तमन्तिकात् ।
इदमाह ततः सूतं संजयं जयतांवरः ॥ २२
गच्छ संजय यत्राग्निर्न त्वां दहति कर्हिचित् ।

द्विवर्षोपनिवृत्तेष्विति झ. पाठः ॥ १ ॥ मे मयाऽतिचिरं दृष्टोऽसीत्यर्थः ॥ ५ ॥ मुखे पिण्डान्समाधायेति क. ट. पाठः ॥ वीटां मुखे समाधायेति झ. पाठः ॥ १२ ॥ दृश्यतोऽदृश्यत इति । पश्यन्तमपश्यन्तं चोनाद्दिष्टेत्यर्थः । नियमेन सान्निध्याभावात् ॥ १५ ॥

वयमत्राग्निना युक्ता गमिष्यामः परां गतिम्॥२३
तमुवाच किलोद्विग्नः संजयो वदतांवरः।
राजन्मृत्युरनिष्टोऽयं भविता ते वृथाऽग्निना॥२४
न चोपायं प्रपश्यामि मोक्षणे जातवेदसः।
यदत्रानन्तरं कार्यं तद्भवान्वक्तुमर्हति॥ २५
इत्युक्तः संजयेनेदं पुनराह स पार्थिवः।
नैष मृत्युरनिष्टो नो निःसृतानां गृहात्स्वयम् २६
जलमग्निस्तथा वायुरथवाऽपि विकर्षणम्।
तापसानां प्रशस्यं ते गच्छ संजय माचिरम्॥२७
इत्युक्त्वा संजयं राजा समाधाय मनस्तथा।
प्राङ्मुखः सह गान्धार्या कुन्त्या चोपाविशत्तदा॥
संजयस्तं तथा दृष्ट्वा प्रदक्षिणमथाकरोत्।
उवाच चैनं मेधावी युङ्क्ष्वात्मानमिति प्रभो॥२९
ऋषिपुत्रो मनीषी स राजा चक्रेऽस्य तद्वचः।
सन्निरुध्येन्द्रियग्राममासीत्काष्ठोपमस्तदा॥ ३०
गान्धारी च महाभागा जननी च पृथा तव।
दावाग्निना समायुक्ते स च राजा पिता तव॥३१
संजयस्तु महाप्राज्ञस्तस्माद्दावादमुच्यत।
गङ्गाकूले मया दृष्टस्तापसैः परिवारितः॥ ३२
स तानामन्त्र्य तेजस्वी निवेद्यैतच्च सर्वशः।
प्रययौ संजयो धीमान्हिमवन्तं महीधरम्॥ ३३
एवं स निधनं प्राप्तः कुरुराजो महामनाः।
गान्धारी च पृथा चैव जनन्यौ ते विशांपते॥३४
यदृच्छयाऽनुव्रजता मया राज्ञः कलेवरम्।
तयोश्च देव्योरुभयोर्मया दृष्टानि भारत॥ ३५
ततस्तपोवने तस्मिन्समाजग्मुस्तपोधनाः।
श्रुत्वा राज्ञस्तदा निष्ठां न त्वशोचन्गतीश्च ते ३६
तत्राश्रौषमहं सर्वमेतत्पुरुषसत्तम।
यथा च नृपतिर्दग्धो देव्यौ ते चेति पाण्डव॥३७
न शोचितव्यं राजेन्द्र स्वर्गस्थः पृथिवीपतिः।
प्राप्तवानग्निसंयोगं गान्धारी जननी च ते॥३८
वैशंपायन उवाच।
एतच्छ्रुत्वा च सर्वेषां पाण्डवानां महात्मनाम्।
निर्याणं धृतराष्ट्रस्य शोकः समभवन्महान्॥३९
अन्तःपुराणां च तदा महानार्तस्वरोऽभवत्।
पौराणां च महाराज श्रुत्वा राज्ञस्तदा गतिम् ४०
अहो धिगिति राजा तु विक्रुश्य भृशदुःखितः।
ऊर्ध्वबाहुः स्मरन्मातुः प्ररुरोद युधिष्ठिरः॥४१
भीमसेनपुरोगाश्च भ्रातरः सर्व एव ते।
रुरुदुर्दुःखसंतप्ता वर्णयन्तः पृथां तदा॥ ४२
अन्तःपुरेषु च तदा सुमहान्रुदितस्वनः।
प्रादुरासीन्महाराज पृथां श्रुत्वा तथागताम्॥४३
तं च वृद्धं तथा दग्धं हतपुत्रं नराधिपम्।
अन्वशोचन्त ते सर्वे गान्धारीं च तपस्विनीम्॥४४
तस्मिन्नुपरते शब्दे मुहूर्तादिव भारत।
निगृह्य बाष्पं धैर्येण धर्मराजोऽब्रवीदिदम्॥४५

॥ इति श्रीमन्महाभारते आश्रमवासिकपर्वणि नारदागमनपर्वणि एकोनचत्वारिंशोऽध्यायः॥ ३९॥

## चत्वारिंशोऽध्यायः॥ ४०॥

युधिष्ठिरेण धृतराष्ट्रादिनिधनश्रवणेन भ्रातृभिः सह सकरुणं परिदेवनपूर्वकं सतिसंस्कृताग्नौ तेषां वृथाग्निना दाहं प्रत्यनुशोचनम्॥ १॥

उवाच।
तथा महात्मनस्तस्य तपस्युग्रे च तस्थुषः।
अनाथस्येव निधनं तिष्ठत्स्वस्मासु बन्धुषु॥ १
दुर्विज्ञेया गतिर्ब्रह्मन्पुरुषाणां मतिर्मम।
यत्र वैचित्रवीर्योऽसौ दग्ध एवं वनाग्निना॥ २
यस्य पुत्रशतं श्रीमदभवद्बाहुशालिनः।
नागायुतबलो राजा स दग्धो हि दवाग्निना॥ ३
यं पुरा पर्यवीजन्त तालवृन्तैर्वरस्त्रियः।
तं गृध्राः पर्यवीजन्त दावाग्निपरिकालितम्॥ ४
सूतमागधसङ्घैश्च शयानो यः प्रबोध्यते।

विकर्षणं अनशनम्॥ २७॥ ऋषिपुत्रो व्यासपुत्र इति योगसामर्थ्यं सूचितम्॥ ३०॥ एकोनचत्वारिंशोऽध्यायः॥ ३९॥

धरण्यां स नृपः शेते विकृष्टो गृध्रवायसैः ॥ ५
न च शोचामि गान्धारीं हतपुत्रां यशस्विनीम् ।
पतिलोकमनुप्राप्तां तथा भर्तृव्रते स्थिताम् ॥ ६
पृथामेव च शोचामि या पुत्रैश्वर्यमृद्धिमत् ।
उत्सृज्य सुमहद्दीप्तं वनवासमरोचयत् ॥ ७
धिग्राज्यमिदमस्माकं धिग्बलं धिक्पराक्रमम् ।
क्षत्रधर्मं च धिग्यस्मान्मृता जीवामहे वयम् ॥ ८
सुसूक्ष्मा किल लोकस्य गतिर्द्विजवरोत्तम ।
यत्समुत्सृज्य राज्यं सा वनवासमरोचयत् ॥ ९
युधिष्ठिरस्य जननी भीमस्य विजयस्य च ।
अनाथवत्कथं दग्धा इति मुह्यामि चिन्तयन् १०
वृथा संतर्पितो वह्निः खाण्डवे सव्यसाचिना ।
उपकारमजानन्स कृतघ्न इति मे मतिः ॥ ११
यत्रादहत्स भगवान्मातरं सव्यसाचिनः ।
कृत्वा यो ब्राह्मणच्छद्म भिक्षार्थी समुपागतः १२
धिगग्निं धिक् च पार्थस्य विश्रुतां सत्यसन्धताम् ।
इदं कष्टतरं चान्यद्भगवन्प्रतिभाति मे ॥ १३
वृथाऽग्निना समायोगो यदभूत्पृथिवीपतेः ।
तथा तपस्विनस्तस्य राजर्षेः कौरवस्य ह ॥ १४
कथमेवंविधो मृत्युः प्रशास्य पृथिवीमिमाम् ॥ १५
तिष्ठत्सु मन्त्रपूतेषु तस्याग्निषु महावने ।
वृथाऽग्निना समायुक्तो निष्ठां प्राप्तः पिता मम १६
मन्ये पृथा वेपमाना कृशा धमनिसंतता ।
हा तात धर्मराजेति मामाक्रन्दन्महाभये ॥ १७
भीम पर्याप्नुहि भयादिति चैवाभिवाशती ।
समन्ततः परिक्षिप्ता माताऽभून्मे दवाग्निना ॥ १८
सहदेवः प्रियस्तस्याः पुत्रेभ्योऽधिक एव तु ।
न चैनां मोक्षयामास वीरो माद्रवतीसुतः ॥ १९
तच्छ्रुत्वा रुरुदुः सर्वे समालिङ्ग्य परस्परम् ।
पाण्डवाः पञ्च दुःखार्ता भूतानीव युगक्षये ॥ २०
तेषां तु पुरुषेन्द्राणां रुदतां रुदितस्वनः ।
प्रासादाभोगसंरुद्धे अन्वरौत्सीत्स रोदसी ॥ २१

॥ इति श्रीमन्महाभारते आश्रमवासिकपर्वणि नारदागमनपर्वणि चत्वारिंशोऽध्यायः ॥ ४० ॥

## एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

नारदेन युधिष्ठिरंप्रति धृतराष्ट्रादिदाहकाग्नेर्मन्त्रपूतत्वकथनम् ॥ १ ॥ युधिष्ठिरेण युयुत्सुपुरस्कारेण गान्धारीधृतराष्ट्रयोरुदकदानपूर्वकं कुन्त्याश्च विधिवच्छ्राद्धदानम् ॥ २ ॥ ततो नारदगमनानन्तरं प्रजापालनेन निजनगरे भ्रात्रादिभिः सह सुखविहारः ॥ ३ ॥

नारद उवाच ।
नासौ वृथाऽग्निना दग्धो यथा तत्र श्रुतं मया ।
वैचित्रवीर्यो नृपतिर्न ते शोच्यो नराधिप ॥ १
वनं प्रविशतानेन वायुभक्षेण धीमता ।
अग्नयः कारयित्वेष्टिमुत्सृष्टा इति नः श्रुतम् ॥ २
याजकास्तु ततस्तस्य तानग्नीन्निर्जने वने ।
समुत्सृज्य यथाकामं जग्मुर्भरतसत्तम ॥ ३
स विवृद्धस्तदा वह्निर्वने तस्मिन्नभूत्किल ।
तेन तद्वनमादीप्तमिति ते तापसाऽब्रुवन् ॥ ४
स राजा जाह्नवीतीरे यथा ते कथितं मया ।
तेनाग्निना समायुक्तः स्वेनैव भरतर्षभ ॥ ५
एवमावेदयामासुर्मुनयस्ते ममानघ ।
ये ते भागीरथीतीरे मया दृष्टा युधिष्ठिर ॥ ६
एवं स्वेनाग्निना राजा समायुक्तो महीपते ।
मा शोचिथास्त्वं नृपतिं गतः स परमां गतिम् ७
गुरुशुश्रूषया चैव जननी ते जनाधिप ।
प्राप्ता सुमहतीं सिद्धिमिति मे नात्र संशयः ॥ ८
कर्तुमर्हसि राजेन्द्र तेषां त्वमुदकक्रियाम् ।
भ्रातृभिः सहितः सर्वैरेतदत्र विधीयताम् ॥ ९
वैशंपायन उवाच ।
ततः स पृथिवीपालः पाण्डवानां धुरंधरः ।
निर्ययौ सहसोदर्यः सदारश्च नरर्षभः ॥ १०
पौरजानपदाश्चैव राजभक्तिपुरस्कृताः ।
गङ्गां प्रजग्मुरभितो वाससैकेन संवृताः ॥ ११

ततोऽवगाह्य सलिले सर्वे ते कुरुपुङ्गवाः ।
युयुत्सुमग्रतः कृत्वा ददुस्तोयं महात्मने ॥ १२
गान्धार्याश्च पृथायाश्च विधिवन्नामगोत्रतः ।
शौचं निवर्तयन्तस्ते तत्रोषुर्नगराद्बहिः ॥ १३
प्रेषयामास स नरान्विधिज्ञानाप्तकारिणः ।
गङ्गाद्वारं कुरुश्रेष्ठो यत्र दग्धोऽभवन्नृपः ॥ १४
तत्रैव तेषां तुल्यानि गङ्गाद्वारेऽन्वशात्तदा ।
कर्तव्यानीति पुरुषान्दत्तदेयान्महीपतिः ॥ १५
द्वादशेऽहनि तेभ्यः स कृतशौचो नराधिपः ।
ददौ श्राद्धानि विधिवद्दक्षिणावन्ति पाण्डवः ॥१६
धृतराष्ट्रं समुद्दिश्य ददौ स पृथिवीपतिः ।
सुवर्णं रजतं गाश्च शय्याश्च सुमहाधनाः ॥ १७
गान्धार्याश्चैव तेजस्वी पृथायाश्च पृथक्पृथक् ।
संकीर्त्य नामनी राजा ददौ दानमनुत्तमम् ॥ १८
यो यदिच्छति यावच्च तावत्स लभते द्विजः ।
शयनं भोजनं यानं मणिरत्नमथो धनम् ॥ १९
यानमाच्छादनं भोगान्दासीश्च समलंकृताः ।
ददौ राजा समुद्दिश्य तयोर्मात्रोर्महीपतिः ॥ २०
ततः स पृथिवीपालो दत्त्वा श्राद्धान्यनेकशः ।
प्रविवेश पुनर्धीमान्नगरं वारणाह्वयम् ॥ २१
ते चापि राजवचनात्पुरुषा ये गताऽभवन् ।
संकल्प्य तेषां कुल्यानि पुनः प्रत्यागमंस्ततः ॥२२
माल्यैर्गन्धैश्च विविधैरर्चयित्वा यथाविधि ।
कुल्यानि तेषां संयोज्य तदाचख्युर्महीपतेः ॥ २३
समाश्वास्य तु राजानं धर्मात्मानं युधिष्ठिरम् ।
नारदोऽप्यगमत्प्रीतः परमर्षिर्यथेप्सितम् ॥ २४
एवं वर्षाण्यतीतानि धृतराष्ट्रस्य धीमतः ।
वनवासे तथा त्रीणि नगरे दशपञ्च च ॥ २५
हतपुत्रस्य संग्रामे दानानि ददतः सदा ।
ज्ञातिसंबन्धिमित्राणां भ्रातॄणां स्वजनस्य च ॥२६
युधिष्ठिरस्तु नृपतिर्नातिप्रीतमनास्तदा ।
धारयामास तद्राज्यं निहतज्ञातिबान्धवः ॥ २७

॥ इति श्रीमन्महाभारते शतसाहस्र्यां संहितायां वैयासिक्यां आश्रमवासिकपर्वणि नारदागमनपर्वणि एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

॥ समाप्तं नारदागमनपर्व ॥ ३ ॥ आश्रमवासिकपर्व च ॥ १५ ॥

अस्यानन्तरं मौसलपर्व भविष्यति ।
तस्यायमाद्यः श्लोकः
वैशंपायन उवाच ।
षट्त्रिंशे त्वथ संप्राप्ते वर्षे कौरवनन्दनः ।
ददर्श विपरीतानि निमित्तानि युधिष्ठिरः ॥ १

इदमाश्रमवासिकपर्व कुंभघोणस्थेन टी. आर्. कृष्णाचार्येण टी. आर्. व्यासाचार्येण च मुंबय्यां निर्णयसागरमुद्रायन्त्रे मुद्रापितम् । शकाब्दाः १८३२ सन १९१०.

तत्रैव तेषां कृत्यानीति झ. पाठः ॥ १५ ॥ संकल्प्य एकीकृत्य कुल्यानि अस्थीनि प्रत्यागमन् गङ्गामिति शेषः ॥ २२ ॥ संयोज्य गङ्गयेति शेषः ॥ २३ ॥ एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

# SRIMANMAHABHARATA

A NEW EDITION

MAINLY BASED ON

THE SOUTH INDIAN TEXTS,

With footnotes and Readings.

---

## MOUSALAPARVA XVI.

EDITED BY

T. R. KRISHNACHARYA & T. R. VYASACHARYA,

Proprietors, Madhva Vilâs Book Depot, Kumbakonam.

*Printed by B. R Ghanekar for the proprietors,*

*at Tukaram Javaji's "Nirnaya-sagar" Press,*

BOMBAY.

---

1910.

॥ श्रीः ॥

# श्रीमन्महाभारतम् ।

## सटिप्पणम् ।



## मौसलपर्व १६.

एतच्च

कुम्भघोणस्थेन श्रीमन्मध्वविलासपुस्तकालयाधिपतिना

**टी. आर्. कृष्णाचार्येण टी. आर्. व्यासाचार्येण च**

अनेकेषां विदुषां साहाय्येन दाक्षिणात्यबहुकोशानुसारेण

संशोध्य

मुंबापुर्यां

जावजी दादाजी इत्येतेषां निर्णयसागरमुद्रणयन्त्रे मुद्रयित्वा प्रकाशितम् ।

शाके १८३२ साधारणनामसंवत्सरे ।

## मौसल पर्व.






श्रीः ।

# श्रीमन्महाभारतम् ।

## मौसलपर्व १६ ।

### प्रथमोऽध्यायः ॥ १ ॥

प्रजापालनेन निजनगरे भ्रातृभिः सह सुखनिवासिना युधिष्ठिरेण कदाचनाशुभसूचकोत्पातदर्शनम् ॥ १ ॥ ततः कालान्तरे सबलकृष्णानां सर्वयादवानां परस्परं मौसलप्रहारेण निश्शेषनिधनश्रवणम् ॥ २ ॥

श्रीवेदव्यासाय नमः ।
नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥ १
वैशंपायन उवाच ।
षट्त्रिंशे त्वथ संप्राप्ते वर्षे कौरवनन्दनः ।
ददर्श विपरीतानि निमित्तानि युधिष्ठिरः ॥ १
ववुर्वाताश्च निर्घाता रूक्षाः शर्करवर्षिणः ।
अपसव्यानि शकुना मण्डलानि प्रचक्रिरे ॥ २
प्रत्यगूहुर्महानद्यो दिशो नीहारसंवृताः ।
उल्काश्चाङ्गारवर्षिण्यः प्रापतन्गगनाद्भुवि ॥ ३
आदित्यो रजसा राजन्समवच्छन्नमण्डलः ।
विरश्मिरुदये नित्यं कबन्धैः समलङ्कृतः ॥ ४
परिवेषाश्च दृश्यन्ते दारुणाश्चन्द्रसूर्ययोः ।
त्रिवर्णाः श्यामरूक्षान्तास्तथा भस्मारुणप्रभाः ॥ ५
एते चान्ये च बहव उत्पाता भयशंसिनः ।
दृश्यन्ते जगतो नाथ दिवमारोढुमिच्छति ॥ ६
'यस्य प्रसादाद्धर्मोऽयं कृते यद्वत्कलावपि ।
पाण्डवाश्च महाभाग युक्तास्तु यशसाऽनघ ॥' ७
कस्य चित्त्वथ कालस्य कुरुराजो विशङ्कितः ।
शुश्राव वृष्णिचक्रस्य मुसलोत्सादनं कृतम् ॥ ८
विमुक्तं वासुदेवं च श्रुत्वा रामं च पाण्डवः ।
समानीयाब्रवीद्भ्रातॄन्किं करिष्याम इत्युत ॥ ९
परस्परं समासाद्य ब्रह्मदण्डबलात्कृतान् ।
वृष्णीन्विनष्टांस्ते श्रुत्वा व्यथिताः पाण्डवा भृशम्
निधनं वासुदेवस्य समुद्रस्येव शोषणम् ।
वीरा न श्रद्दधुस्तस्य विनाशं शार्ङ्गधन्वनः ॥ ११
मौसलं ते समाश्रित्य दुःखशोकसमन्विताः ।
विषण्णा हतसंकल्पाः पाण्डवाः समुपाविशन् १२

॥ इति श्रीमन्महाभारते मौसलपर्वणि प्रथमोऽध्यायः ॥ १ ॥

### द्वितीयोऽध्यायः ॥ २ ॥

वैशंपायनेन जनमेजयंप्रति यादवानां मौसलेन निधनप्रकारकथनारम्भः ॥ १ ॥ कदाचन विश्वामित्रादिमहर्षिषु द्वारकामागतेषु केश्चन यादवैः सांबस्य स्त्रीवेषपरिकल्पनेन मुनीन्प्रति गर्भिणीयं किंरूपमपत्यं प्रसविष्यतीति प्रश्नः ॥ २ ॥ ततो रुष्टैर्महर्षिभिः स्वकुलविनाशकमायसं मुसलं प्रसविष्यतीति शापदानम् ॥ ३ ॥ ततः परेद्युः सांबेन मुसले प्रसूते भीतैस्तै राजाज्ञया तस्य चूर्णीकरणेन समुद्रे प्रक्षेपणम् ॥ ४ ॥

जनमेजय उवाच ।
कथं विनष्टा भगवन्नन्धका वृष्णिभिः सह ।
पश्यतो वासुदेवस्य भोजाश्चैव महारथाः ॥ १

मौसल मुसलकृत कदनं समाश्रित्य मनसि धृत्वा ॥ १२ ॥

प्रथमोऽध्यायः ॥ १ ॥

वैशंपायन उवाच ।
षट्त्रिंशेऽथ ततो वर्षे वृष्णीनामनयो महान् ।
अन्योन्यं मुसलैस्ते तु निजघ्नुः कालचोदिताः ॥ २
जनमेजय उवाच ।
केनानुशप्तास्ते वीराः क्षयं वृष्ण्यन्धका गताः ।
भोजाश्च द्विजवर्य त्वं विस्तरेण वदस्व मे ॥ ३
वैशंपायन उवाच ।
विश्वामित्रं च कण्वं च नारदं च तपोधनम् ।
सारणप्रमुखा वीरा ददृशुर्द्वारकां गतान् ॥ ४
ते वै सांबं पुरस्कृत्य भूषयित्वा स्त्रियं यथा ।
अब्रुवन्नुपसंगम्य दैवदण्डनिपीडिताः ॥ ५
इयं स्त्री पुत्रकामस्य बभ्रोरमिततेजसः ।
ऋषयः साधु जानीत किमियं जनयिष्यति ॥ ६
इत्युक्तास्ते तदा राजन्विप्रलंभप्रधर्षिताः ।
प्रत्यब्रुवंस्तान्मुनयो यत्तच्छृणु नराधिप ॥ ७
वृष्ण्यन्धकविनाशाय मुसलं घोरमायसम् ।
वासुदेवस्य दायादः सांबोऽयं जनयिष्यति ॥ ८
येन यूयं सुदुर्वृत्ता नृशंसा जातमन्यवः ।
उच्छेत्तारः कुलं कृत्स्नमृते रामजनार्दनौ ॥ ९
समुद्रं यास्यति श्रीमांस्त्यक्त्वा देहं हलायुधः ।
जरः कृष्णं महात्मानं शयानं भुवि भेत्स्यति ॥ १०

इत्यब्रुवंस्ततो राजन्प्रलब्धास्तैर्दुरात्मभिः ।
मुनयः क्रोधरक्ताक्षाः समीक्ष्याथ परस्परम् ।
तथोक्त्वा मुनयस्ते तु यथागतमथो ययुः ॥ ११
अथाब्रवीत्तदा वृष्णीञ्श्रुत्वैतन्मधुसूदनः ।
अन्तज्ञो मतिमांस्तस्य भवितव्यं तथेति तान् ॥ १२
एवमुक्त्वा हृषीकेशः प्रविवेश पुरं तदा ।
कृतान्तमन्यथा नैच्छत्कर्तुं स जगतः प्रभुः ॥ १३
श्वोभूतेऽथ ततः सांबो मुसलं तदसूत वै ।
येन वृष्ण्यन्धककुले पुरुषा भस्मसात्कृताः ॥ १४
वृष्ण्यन्धकविनाशाय किंकरप्रतिमं महत् ।
असूत शापजं घोरं तच्च राज्ञे न्यवेदयन् ॥ १५
विषण्णरूपस्तद्राजा सूक्ष्मं चूर्णमकारयत् ।
तच्चूर्णं सागरे चापि प्राक्षिपन्पुरुषा नृप ॥ १६
अघोषयंश्च नगरे वचनादाहुकस्य ते ।
जनार्दनस्य रामस्य बभ्रोश्चैव महात्मनः ॥ १७
अद्यप्रभृति सर्वेषु वृष्ण्यन्धककुलेष्विह ।
सुरासवो न कर्तव्यः सर्वैर्नगरवासिभिः ॥ १८
यश्च नो विदितं कुर्यात्पेयं कश्चिन्नरः क्वचित् ।
जीवन्स शूलमारोहेत्स्वयं कृत्वा सबान्धवः ॥ १९
ततो राजभयात्सर्वे नियमं चक्रिरे तदा ।
नराः शासनमाज्ञाय तस्य राज्ञो महात्मनः ॥ २०

॥ इति श्रीमन्महाभारते मौसलपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

## तृतीयोऽध्यायः ॥ ३ ॥

द्वारकायां नानोत्पातप्रादुर्भावः ॥ १ ॥ तत्तद्दर्शनात्कृष्णेन गान्धारीशापदानानुस्मरणेन तस्य सत्यताचिकीर्षया भटैः सर्ववृष्ण्यादीनां तीर्थयात्रोद्घोषणम् ॥ २ ॥

[वैशंपाय]न उवाच ।
एवं प्रयतमानानां वृष्णीनामन्धकैः सह ।
कालो गृहाणि सर्वेषां परिचक्राम नित्यशः ॥ १
करालो विकटो मुण्डः पुरुषः कृष्णपिङ्गलः ।
गृहाण्यावेक्ष्य वृष्णीनां नादृश्यत पुनः क्वचित् ॥ २

तमघ्नन्त महेष्वासाः शरैः शतसहस्रशः ।
न चाशक्यत वेद्धुं स सर्वभूतात्ययस्तदा ॥ ३
उत्पेदिरे महावाता दारुणाश्च दिनेदिने ।
वृष्ण्यन्धकविनाशाय बहवो रोमहर्षणाः ॥ ४
विवृद्धमूषिका रथ्या विभिन्नमणिकास्तथा ।

मुसलैरेरकालग्नैर्मुसलकल्पैः ॥ २ ॥ जरा कृष्णमिति झ. पाठः । जरानामा कश्चित्कैवर्तः ॥ १० ॥ किङ्करो यमदूतस्तत्तुल्यम् ॥ १५ ॥ स्वयकृत्वा स्वयंकर्ता ॥ १९ ॥ द्वितीयोऽध्यायः ॥ २ ॥

कालः कपोतोलूकादिरूपेण ॥ १ ॥ स एव क्वचित्करालादिरूपोऽदृश्यत क्वचिन्न । आवेक्ष्य परिक्रामन्निर्ति शेष. ॥ २ ॥ सर्वभूतानां अत्ययो नाशो यस्मात् ॥ ३ ॥ मणिका मृण्पात्राणि ॥ ५ ॥

केशा नखाश्च सुप्तानामद्यन्ते मूषिकैर्निशि॥ ५
चीचीकूचीति वाशन्ति शारिका वृष्णिवेश्मसु ।
नोपशाम्यति शब्दश्च सदिवारात्रमेव हि ॥ ६
अन्वकुर्वन्नुलूकानां सारसा विरुतं तथा ।
अजाः शिवानां विरुतमन्वकुर्वत भारत ॥ ७
पाण्डुरा रक्तपादाश्च विहगाः कालचोदिताः ।
वृष्ण्यन्धकानां गेहेषु कपोता व्यचरंस्तदा ॥ ८
व्यजायन्त खरा गोषु करभाश्वतरीषु च ।
शुनीष्वपि बिडालाश्च मूषिका नकुलीषु च ॥ ९
नापत्रपन्त पापानि कुर्वन्तो वृष्णयस्तदा ।
प्राद्विषन्ब्राह्मणांश्चापि पितॄन्देवांस्तथैव च ॥ १०
गुरूंश्चाप्यवमन्यन्ते न तु रामजनार्दनौ
पत्न्यः पतीनुच्चरन्ति पत्नीश्च पतयस्तथा ॥ ११
विभावसुः प्रज्वलितो वामं विपरिवर्तते
नीललोहितमञ्जिष्ठा विसृजन्नर्चिषः पृथक् ॥ १२
उदयास्तमये नित्यं पुर्यां तस्यां दिवाकरः ।
व्यदृश्यतासकृत्पुंभिः कबन्धैः परिवारितः ॥ १३
महानसेषु सिद्धेषु संस्कृतेऽतीव भारत ।
आहार्यमाणे कृमयो व्यदृश्यन्त सहस्रशः ॥ १४
पुण्याहे वाच्यमाने तु जपत्सु च महात्मसु ।
अभिधावन्तः श्रूयन्ते न चादृश्यत कश्चन ॥ १५
परस्परं च नक्षत्रं हन्यमानं पुनःपुनः ।
ग्रहैरपश्यन्सर्वे ते नात्मनस्तु कथंचन ॥ १६
नदन्तं पाञ्चजन्यं च वृष्णन्धकनिवेशने ।
समन्तात्पर्यवाशन्त रासभा दारुणस्वराः ॥ १७
एवं पश्यन्हृषीकेशः संप्राप्तं कालपर्ययम् ।
त्रयोदश्याममावास्यां तान्दृष्ट्वा प्राब्रवीदिदम् १८
चतुर्दशी पञ्चदशी कृतेयं राहुणा पुनः ।
प्राप्ते वै भारते युद्धे प्राप्ता चाद्य क्षयाय नः ॥ १९
विमृशन्नेव कालं तं परिचिन्त्य जनार्दनः ।
मेने प्राप्तं स षट्त्रिंशं वर्षं वै केशिसूदनः ॥ २०
पुत्रशोकाभिसंतप्ता गान्धारी हतबान्धवा ।
यदनुव्याजहारार्ता तदिदं समुपागमत् ॥ २१
इदं च तदनुप्राप्तमब्रवीद्यद्युधिष्ठिरः ।
पुरा व्यूढेष्वनीकेषु दृष्ट्वोत्पातान्सुदारुणान् ॥ २२
इत्युक्त्वा वासुदेवस्तु चिकीर्षुः सत्यमेव तत् ।
आज्ञापयामास तदा तीर्थयात्रामरिंदमः ॥ २३
अघोषयन्त पुरुषास्तत्र केशवशासनात् ।
तीर्थयात्रा समुद्रे वः कार्येति पुरुषर्षभाः ॥ २४

॥ इति श्रीमन्महाभारते मौसलपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

## चतुर्थोऽध्यायः ॥ ४ ॥

द्वारकायां वृष्ण्यन्धकादिभिरनर्थसूचकदुस्स्वप्नानुभवः ॥ १ ॥ ततः कृष्णाज्ञया सस्त्रीबालवृद्धैः प्रभासक्षेत्रगमनम् ॥२॥ तत्र नृत्तगानादिमहोत्सवानुभवपूर्वकं मद्यादिपानम् ॥ ३ ॥ तत्र सभायां सात्यकिना स्यमन्तकमणिहरणादिमर्मोद्घाटनपूर्वकं कृतवर्मगर्हणम् ॥ ४ ॥ मणिवृत्तान्तश्रवणखिन्नसत्यभामामनःप्रसादनाय सात्यकिना खड्गेन कृतवर्मणः शिरश्छेदनम् ॥ ५ ॥ ततः कृतवर्मसात्यकिपक्षीयैर्मौसलतृणैः परस्परप्रहारेण परस्परमारणम् ॥ ६ ॥

वैशंपायन उवाच ।
काली स्त्री पाण्डुरैर्दन्तैः प्रविश्य हसती निशि ।
स्त्रियः स्वप्नेषु मुष्णन्ती द्वारकां परिधावति ॥ १
अग्निहोत्रनिकेतेषु वास्तुमध्येषु वेश्मसु ।
वृष्ण्यन्धकानखादन्त स्वप्ने गृध्रा भयानकाः ॥ २
अलंकाराश्च च्छत्रं च ध्वजाश्च कवचानि च ।
ह्रियमाणान्यदृश्यन्त रक्षोभिः सुभयानकैः ॥ ३
तच्चाग्निदत्तं कृष्णस्य वज्रनाभमयोमयम् ।

उच्चरन्ति वञ्चयन्ति ॥ ११ ॥ आहार्यमाणे अन्ने ॥ १४ ॥ स्वनक्षत्रादर्शनमपि स्वमृत्युसूचकमित्यर्थः ॥ १६ ॥ एवमिति । त्रयोदशदिवसः कृष्णपक्षोऽभूदित्यर्थः ॥ १८ ॥ एवं सत्यग्निमपक्षे वृद्ध्या भाव्य॰ तत्र जातं प्रत्युतैकातिथिः क्षीणा तत्र ग्रहणं च जातमित्याह चतुर्दशीति ॥ १९ ॥ तृतीयोऽध्यायः ३

मुष्णन्ती स्त्रीणां मङ्गलसूत्रादिकं चोरयन्ती ॥ १ ॥

देवमाचक्रमे चक्रं वृष्णीनां पश्यतां तदा ॥ ४
युक्तं रथं दिव्यमादित्यवर्णं
हयाऽहरन्पश्यतो दारुकस्य ।
ते सागरस्योपरिष्टादगच्छ-
न्मनोजवाश्चतुरो वाजिमुख्याः ॥ ५
तालः सुपर्णश्च महाध्वजौ तौ
सुपूजितौ रामजनार्दनाभ्याम् ।
उच्चैर्जह्रुरप्सरसश्च दिव्या
देवा ऊचुर्गम्यतां तीर्थयात्राः ॥ ६
'भगवद्दर्शनस्पर्शस्नेहैर्विततभोगिनः ।
दिवः प्रवेशनार्थं ते विमानैर्दिवमाययुः ॥' ७
ततो जिगमिषन्तस्ते वृष्ण्यन्धकमहारथाः ।
सान्तःपुरास्तदा तीर्थयात्रामैच्छन्नरर्षभाः ॥ ८
ततो मनोहरा हृष्टाः पेयं मांसं मधूनि च ।
बहु नानाविधं चक्रुस्त्वरिताः कालचोदिताः॥ ९
ततः सीधुषु सक्ताश्च निर्ययुर्नगराद्बहिः ।
यानैरश्वैर्गजैश्चैव श्रीमन्तस्तिग्मतेजसः ॥ १०
ततः प्रभासे न्यवसन्यथोद्दिष्टं यथागृहम् ।
प्रभूतभक्ष्यपेयास्ते सदारा यादवास्तदा ॥ ११
निविष्टांस्तान्निशाम्याथ समुद्रान्ते स योगवित् ।
जगामामन्त्र्य तान्वीरानुद्धवोऽर्थविशारदः ॥ १२
तं प्रस्थितं महात्मानमभिवाद्य कृताञ्जलिम् ।
जानन्विनाशं वृष्णीनां नैच्छद्वारयितुं हरिः॥ १३
ततः कालपरीतास्ते वृष्ण्यन्धकमहारथाः ।
अपश्यन्नुद्धवं यान्तं तेजसाऽऽवृत्य रोदसी ॥ १४
ब्राह्मणार्थेषु यत्सिद्धमन्नं तेषां महात्मनाम् ।
तद्वानरेभ्यः प्रददुः सुरागन्धसमन्वितम् ॥ १५
ततस्तूर्यशताकीर्णं नटनर्तकसंकुलम् ।
अवर्तत महापानं प्रभासे तिग्मतेजसाम् ॥ १६
कृष्णस्य सन्निधौ रामः सहितः कृतवर्मणा ।
अपिबद्युयुधानश्च गदो बभ्रुस्तथैव च ॥ १७
ततः परिषदो मध्ये युयुधानो मदोत्कटः ।
अब्रवीत्कृतवर्माणमवहास्यावमत्य च ॥ १८
कः क्षत्रियो हन्यमानः सुप्तान्हन्यान्मृतानिव ।
तन्न मृष्यन्ति हार्दिक्य यादवा यत्त्वया कृतम्॥ १९
इत्युक्ते युयुधानेन पूजयामास तद्वचः ।
प्रद्युम्नो रथिनांश्रेष्ठो हार्दिक्यमवमत्य च ॥ २०
ततः परमसंक्रुद्धः कृतवर्मा तमब्रवीत् ।
निर्दिशन्निव सावज्ञं तदा सव्येन पाणिना ॥ २१
भूरिश्रवाश्छिन्नबाहुर्युद्धे प्रायगतस्त्वया ।
वधेन सुनृशंसेन कथं वीरेण पातितः ॥ २२
इति तस्य वचः श्रुत्वा केशवः परवीरहा ।
तिर्यक्सरोषया दृष्ट्या वीक्षांचक्रे स मन्युमान् २३
मणिः स्यमन्तकश्चैव यः स सत्राजितोऽभवत् ।
तां कथां श्रावयामास सात्यकिर्मधुसूदनम् ॥ २४
तच्छ्रुत्वा केशवस्याङ्कमगमद्रुदती तदा ।
सत्यभामा प्रकुपिता कोपयन्ती जनार्दनम् ॥ २५
तत उत्थाय सक्रोधः सात्यकिर्वाक्यमब्रवीत् २६
पञ्चानां द्रौपदेयानां धृष्टद्युम्नशिखण्डिनोः ।
एष गच्छामि पदवीं सत्येन च तथा शपे ॥ २७
सौप्तिके ये च निहताः सुप्ता येन दुरात्मना ।
द्रोणपुत्रसहायेन पापेन कृतवर्मणा ॥ २८
समाप्तमायुरस्याद्य यशश्चैव सुमध्यमे ।
इत्येवमुक्त्वा खड्गेन केशवस्य समीपतः ।
अभिद्रुत्य शिरः क्रुद्धश्चिच्छेद कृतवर्मणः ॥ २९
तथाऽन्यानपि निघ्नन्तं युयुधानं समन्ततः ।
अभ्यधावद्धृषीकेशो विनिवारयितुं तदा ॥ ३०
एकीभूतास्ततः सर्वे कालपर्यायचोदिताः ।
भोजान्धका महाराज शैनेयं पर्यवारयन् ॥ ३१
तान्दृष्ट्वा पततस्तूर्णमभिक्रुद्धाञ्जनार्दनः ।
न चुक्रोध महातेजा जानन्कालस्य पर्ययम्॥ ३२
ते तु पानमदाविष्टाश्चोदिताः कालधर्मणा ।
युयुधानमथाभ्यघ्नन्नुच्छिष्टैर्भाजनैस्तदा ॥ ३३
हन्यमाने तु शैनेये क्रुद्धो रुक्मिणिनन्दनः ।
तदनन्तरमागच्छन्मोचयिष्यञ्शिनेः सुतम् ॥ ३४
स भोजैः सह संयुक्तः सात्यकिश्चान्धकैः सह ।

निशाम्य दृष्ट्वा। अर्थविशारदः मोक्षपण्डितः॥ १२ ॥ ब्राह्मणार्थ- द्रव्यस्यान्यत्र विनियोजनमायुःक्षयकरमित्यर्थः ॥ १५ ॥

व्यायच्छमानौ तौ वीरौ बाहुद्रविणशालिनौ ।
तेहुत्वान्निहतौ तत्र उभौ कृष्णस्य पश्यतः ॥ ३५
हतं दृष्ट्वा च शैनेयं पुत्रं च यदुनन्दनः ।
एरकाणां ततो मुष्टिं कोपाज्जग्राह केशवः ॥ ३६
तदभून्मुसलं घोरं वज्रकल्पमयोमयम् ।
जघान कृष्णस्तांस्तेन ये ये प्रमुखतोऽभवन् ॥ ३७
ततोऽन्धकाश्च भोजाश्च शैनेया वृष्णयस्तथा ।
जघ्नुरन्योन्यमाक्रन्दे मुसलैः कालचोदिताः ॥ ३८
यस्तेषामेरकां कश्चिज्जग्राह कुपितो नृप ।
वज्रभूतेव सा राजन्नदृश्यत तदा विभो ॥ ३९
तृणं च मुसलीभूतमपि तत्र व्यदृश्यत ।
ब्रह्मदण्डकृतं सर्वमिति तद्विद्धि पार्थिव ॥ ४०
आविध्याविध्य ते राजन्प्रहरन्ति स्म तैस्तृणैः ।
तद्वज्रभूतं मुसलं व्यदृश्यत तदा दृढम् ॥ ४१
अवधीत्पितरं पुत्रः पिता पुत्रं च भारत ।
मत्ताः परिपतन्ति स्म योधयन्तः परस्परम् ॥ ४२
पतङ्गा इव चाग्नौ ते निपेतुः कुकुरान्धकाः ।
नासीत्पलायने बुद्धिर्वध्यमानस्य कस्यचित् ॥ ४३
तत्रापश्यन्महाबाहुर्जानन्कालस्य पर्ययम् ।
मुसलं समवष्टभ्य तस्थौ स मधुसूदनः ॥ ४४
सांबं च निहतं दृष्ट्वा चारुदेष्णं च माधवः ।
प्रद्युम्नं चानिरुद्धं च ततश्चुक्रोध भारत ॥ ४५
गदं वीक्ष्य शयानं च भृशं कोपसमन्वितः ।
स निःशेषं तदा चक्रे शार्ङ्गचक्रगदाधरः ॥ ४६
तं निघ्नन्तं महातेजा बभ्रुः परपुरंजयः ।
दारुकश्चैव दाशार्हमूचतुर्यन्निबोध तत् ॥ ४७
भगवन्निहताः सर्वे त्वया भूयिष्ठशो नराः ।
रामस्य पदमन्विच्छ तत्र गच्छाम यत्र सः ॥ ४८

॥ इति श्रीमन्महाभारते मौसलपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥

## पञ्चमोऽध्यायः ॥ ५ ॥

सर्वयादवेषु निहतेषु बभ्रुदारुकाभ्यां सह बलभद्रमन्वेषमाणेन कृष्णेन वने वृक्षाश्रितस्य तस्य दर्शनम् ॥ १ ॥ ततः कृष्णेन पाण्डवान्प्रति दारुकप्रेषणम् ॥ २ ॥ बलभद्रेण योगात्सर्पशरीरस्वीकारेण समुद्रप्रवेशः ॥ ३ ॥ कृष्णेन शरीरत्यागाय योगेन शयनम् ॥ ४ ॥ व्याधेन मृगबुद्ध्या कृष्णस्य पादतले सायकेन गाढवेधनम् ॥ ५ ॥ कृष्णेन पश्चात्समीपमेत्य पश्चात्तापेन प्रणमतो व्याधस्य देवैः स्वर्गप्रापणम् ॥ ६ ॥ ततः शरीरत्यागपूर्वकं दिवं गतेन कृष्णेन देवैः पुष्पवर्षणपूर्वकं स्तुत्या प्रत्युद्गम्यमानेन सता निजपरधामप्रवेशः ॥ ७ ॥

वैशंपायन उवाच ।
ततो ययुर्दारुकः केशवश्च
बभ्रुश्च रामस्य पदं पतन्तः ।
अथापश्यन्राममनन्तवीर्यं
वृक्षाश्रितं चिन्तयानं विविक्ते ॥ १
ततः समासाद्य महानुभावः
कृष्णस्तदा दारुकमन्वशासत् ।
गत्वा कुरून्सर्वमिमं महान्तं
पार्थाय शंसस्व वधं यदूनाम् ॥ २
ततोऽर्जुनः क्षिप्रमिहोपयातु
श्रुत्वा मृतान्यादवान्ब्रह्मशापात् ।
इत्येवमुक्तः स ययौ रथेन
कुरूंस्तदा दारुको नष्टचेताः ॥ ३
ततो गते दारुके केशवोथ
दृष्ट्वान्तिके बभ्रुमुवाच वाक्यम् ।
स्त्रियो भवान्रक्षितुं यातु शीघ्रं
नैता हिंस्युर्दस्यवो वित्तलोभात् ॥ ४
स प्रस्थितः केशवेनानुशिष्टो
मदातुरो ज्ञातिवधार्दितश्च ।

आविध्य-विद्ध्वा ॥ ४१ ॥ तत्र यन्मुसलमपश्यत्तदेवावष्टभ्य तस्थाविन्वयः ॥ ४४ ॥ चतुर्थोऽध्यायः ॥ ४ ॥

पतन्तः शीघ्रं गच्छन्तः ॥ १ ॥ वधं मधूनामिति क. ढ. पाठः ॥ २ ॥ वित्तभावात् इति ढ. पाठः ॥ ४ ॥

तं वै यातं सन्निधौ केशवस्य
त्वरन्तमेकं सहसैव बभ्रुम् ।
ब्रह्मानुशप्तमवधीन्महद्वै
कूटे युक्तं मुसलं लुब्धकस्य ॥ ५

ततो दृष्ट्वा निहतं बभ्रुमाह
कृष्णोऽग्रजं भ्रातरमुग्रतेजाः ।
इहैव त्वं मां प्रतीक्षस्व राम
यावत्स्त्रियो ज्ञातिवशाः करोमि ॥ ६

ततः पुरीं द्वारवतीं प्रविश्य
जनार्दनः पितरं प्राह वाक्यम् ।
सर्वं भवान्रक्षतु नः समग्रं
धनंजयस्यागमनं प्रतीक्षन् ॥ ७

रामो वनान्ते प्रतिपालयन्मा-
मास्तेऽद्याहं तेन समागमिष्ये ।
दृष्टं मयेदं निधनं यदूनां
राज्ञां च पूर्वं कुरुपुङ्गवानाम् ॥ ८

नाहं विना यदुभिर्यादवानां
पुरीमिमामशकं द्रष्टुमद्य ।
तपश्चरिष्यामि निबोध तन्मे
रामेण सार्धं वनमभ्युपेत्य ॥ ९

इतीदमुक्त्वा शिरसा च पादौ
संस्पृश्य कृष्णस्त्वरितो जगाम ।
ततो महान्निनदः प्रादुरासी-
त्सस्त्रीकुमारस्य पुरस्य तस्य ॥ १०

अथाब्रवीत्केशवः सन्निवर्त्य
शब्दं श्रुत्वा योषितां क्रोशतीनाम् ।
पुरीमिमामेष्यति सव्यसाची
स वो दुःखान्मोचयिता नराग्र्यः ॥ ११

ततो गत्वा केशवस्तं ददर्श
रामं वने स्थितमेकं विविक्ते ॥ १२

अथापश्यद्योगयुक्तस्य तस्य
नागं मुखान्निस्सरन्तं महान्तम् ।
श्वेतं ययौ स ततः प्रेक्षमाणो
महार्णवो येन महानुभावः ।
सहस्रशीर्षः पर्वताभोगवर्ष्मा
रक्ताननः स्वां तनुं तां विमुच्य ॥ १३

सम्यक्श्यन्तं सागरान्तं विशन्तं
सम्यक्तदा सागरः प्रत्यगृह्णात् ।
नागा दिव्याः सरितश्चैव पुण्याः
कर्कोटको वासुकिस्तक्षकश्च ॥ १४

पृथुश्रवा अरुणः कुञ्जरश्च
मिश्री शङ्खः कुमुदः पुण्डरीकः ।
तथा नागो धृतराष्ट्रो महात्मा
ह्रादः क्राथः शितिपृष्ठो निकेतुः ॥ १५

तथा नागौ चक्रमन्दातिषण्डौ
नागश्रेष्ठो दुर्मुखश्चांबरीषः ।
स्वयं राजा वरुणश्चापि राज-
न्प्रत्युद्गम्य स्वागतेनाभ्यनन्दन् ।
तेऽपूजयंश्चार्घ्यपाद्यक्रियाभिः
सङ्कर्षणं भूधरं शुद्धबुद्धिम् ॥ १६

ततो गते भ्रातरि वासुदेवो
जानन्सर्वा गतयो दिव्यदृष्टिः ।
वने शून्ये विचरंश्चिन्तयानो
भूमौ चाथ संविवेशाग्र्यतेजाः ॥ १७

सर्वं तेन प्राक्तदा वित्तमासी-
द्गान्धार्या यद्वाक्यमुक्तं स्वधर्मात् ।
दुर्वाससा पायसोच्छिष्टलिप्ते
यच्चाप्युक्तं तच्च सस्मार कृष्णः ॥ १८

'कुलस्त्रीणां संवृतानां गवां च
द्विजेन्द्राणां बलमादाय धर्मे ।
योनिर्देवानां वरदो ब्रह्मदेवो
गोविन्दाख्यो वासुदेवोऽथ नित्यः ॥ १९

संचिन्तयन्नन्धकवृष्णिनाशं
कुरुक्षयं चैव महानुभावः ।

कूटे लोहमुद्गरे युक्तं बद्धं मुसलं ब्राह्मणशप्तं बभ्रुं स्वयमेव निपत्यावधीत् ॥ ५ ॥ स्त्रियो भवान्रक्षत्विति झ. पाठः ॥ ७ ॥ महार्णवे येन इति क. ट. पाठः ॥ १३ ॥

पञ्चमोऽध्यायः ॥ ५ ॥

मेने ततः संक्रमणस्य कालं
ततश्चकारेन्द्रियसन्निरोधम् ॥ २०
यथा च लोकत्रयपालनार्थं
दुर्वासवाक्यप्रतिपालनाय ।
देवोऽपि सन्देहविमोक्षहेतो-
र्निमित्तमैच्छत्सकलार्थतत्त्ववित् ॥ २१
स सन्निरुद्धेन्द्रियवाङ्मनास्तु
शिश्ये महायोगमुपेत्य कृष्णः ।
जरोऽथ तं देशमुपाजगाम
लुब्धस्तदानीं मृगलिप्सुरुग्रः ॥ २२
स केशवं योगयुक्तं शयानं
मृगासक्तो लुब्धकः सायकेन ।
जरोऽविध्यत्पादतले त्वरावां-
स्तं चाभितस्तज्जिघृक्षुर्जगाम ॥ २३
अथापश्यत्पुरुषं योगयुक्तं
पीतांबरं लुब्धकोऽनेकबाहुम् ।
मत्वाऽऽत्मानं त्वपराद्धं स तस्य
पादौ जरो जगृहे शङ्कितात्मा ॥ २४
आश्वासितः पुण्यफलेन भक्त्या
तथाऽनुतापात्कर्मणो जन्मनश्च ।
दृष्ट्वा तथा देवमनन्तवीर्यं
देवैस्स्वर्गं प्रापितस्त्यक्तदेहः ॥ २५
गणैर्मुनीनां पूजितस्तत्र कृष्णो
गच्छन्नूर्ध्वं व्याप्य लोकान्स लक्ष्म्या ॥२६
दिवं प्राप्तं वासवोऽथाश्विनौ च
रुद्रादित्या वसवश्चाथ विश्वे ।
प्रत्युद्ययुर्मुनयश्चापि सिद्धा
गन्धर्वमुख्याश्च सहाप्सरोभिः ॥ २७
ततो राजन्भगवानुग्रतेजा
नारायणः प्रभवश्चाव्ययश्च ।
योगाचार्यो रोदसी व्याप्य लक्ष्म्या
स्थानं प्राप स्वं महात्माऽप्रमेयम् ॥ २८
ततो देवैर्ऋषिभिश्चापि कृष्णः
समागतश्चारणैश्चैव राजन् ।
गन्धर्वाग्र्यैरप्सरोभिर्वराभिः
सिद्धैः साध्यैश्चानतैः पूज्यमानः ॥ २९
तं वै देवाः प्रत्यनन्दन्त राज-
न्मुनिश्रेष्ठा ऋग्भिरानर्चुरीशम् ।
तं गन्धर्वाश्चापि तस्थुः स्तुवन्तः
प्रीत्या चैनं पुरुहूतोऽभ्यनन्दत् ॥ ३०
'नमोनमस्ते भगवञ्शार्ङ्गधन्व-
न्धर्मस्थित्या प्रादुरासीर्धरायाम् ।
कंसाख्यादीन्देवशत्रूंश्च सर्वा-
न्हत्वा भूमिः स्थापिता भारतप्ता ॥ ३१
दिव्यं स्थानमजरं चाप्रमेयं
दुर्विज्ञेयं चागमैर्गम्यमग्र्यम् ।
गच्छ प्रभो रक्ष चार्तिं प्रपन्ना-
न्कल्पेकल्पे जायमानांश्च मर्त्यान् ॥ ३२
इत्येवमुक्त्वा देवसंघोऽनुगम्य
श्रिया युक्तं पुष्पवृष्ट्या ववर्ष ।
वाणी चासीत्संश्रिता रूपिणी सा
भानोर्मध्ये प्रविश त्वं तु राजन् ॥ ३३
भुजैश्चतुर्भिः समुपेतं ममेदं
रूपं विशिष्टं जीवितं संस्थितं च ।
भूमौ गतं पूजयताप्रमेयं
सदा हि तस्मिन्निवसामीति देवाः ॥ ३४
देवा निवृत्तास्तत्पदं नाप्नुवन्तो
बुद्ध्या देवं संस्मरन्तः प्रतीताः ।
ब्रह्माद्यास्ते तद्गुणान्कीर्तयन्तः
शुभाँल्लोकान्स्वान्प्रपेदुः सुरेन्द्राः ॥ ३५

॥ इति श्रीमन्महाभारते मौसलपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥

## षष्ठोऽध्यायः ॥ ६ ॥

दारुकेण हास्तिनपुरमेत्य पाण्डवेषु सर्वयादवक्षयनिवेदनम् ॥ १ ॥ अर्जुनेन द्वारकामेत्य रुक्मिण्यादिपरिसान्त्वनपूर्वकं वसुदेवगृहंप्रति गमनम् ॥ २ ॥

वैशंपायन उवाच
दारुकोपि कुरून्गत्वा दृष्ट्वा पार्थान्महारथान् ।
आचष्ट मौसले वृष्णीनन्योन्येनोपसंहतान् ॥ १
श्रुत्वा विनष्टान्वार्ष्णेयान्सभोजान्धककौकुरान् ।
पाण्डवाः शोकसंतप्ता वित्रस्तमनसोऽभवन् ॥ २
ततोऽर्जुनस्तानामन्त्र्य केशवस्य प्रियः सखा ।
प्रययौ मातुलं द्रष्टुं नेदमस्तीति चाब्रवीत् ॥ ३
स वृष्णिनिलयं गत्वा दारुकेण सह प्रभो ।
ददर्श द्वारकां वीरो मृतनाथामिव स्त्रियम् ॥ ४
याः स ता लोकनाथेन नाथवत्यः पुराऽभवन् ।
तास्त्वनाथास्तदा नाथं पार्थं दृष्ट्वा विचुक्रुशुः ॥ ५
षोडश स्त्रीसहस्राणि वासुदेवपरिग्रहाः ।
तासामासीन्महान्नादो दृष्ट्वैवार्जुनमागतम् ॥ ६
तास्तु दृष्ट्वैव कौरव्यो बाष्पेणापिहितेक्षणः ।
हीनाः कृष्णेन पुत्रैश्च नाशकत्सोभिवीक्षितुम् ॥ ७
स तां वृष्ण्यन्धकजलां हयमीनां रथोडुपाम् ।
वादित्ररथघोषौघां वेश्मतीर्थमहाग्रहाम् ॥ ८
रत्नशैवलसंघातां वज्रप्राकारमालिनीम् ।
रथ्यास्रोतोजलावर्तां चत्वरस्तिमितह्रदाम् ॥ ९
रामकृष्णमहाग्राहां द्वारकां सरितं तदा ।
कालपाशग्रहां भीमां नदीं वैतरणीमिव ॥ १०
ददर्श वासविर्धीमान्विहीनां वृष्णिपुङ्गवैः ।
गतश्रियं निरानन्दां पद्मिनीं शिशिरे यथा ॥ ११
तां दृष्ट्वा द्वारकां पार्थस्ताश्च कृष्णस्य योषितः ।
सस्वनं बाष्पमुत्सृज्य निपपात महीतले ॥ १२
सात्राजिती ततः सत्या रुक्मिणी च विशांपते ।
अभिपत्य प्ररुरुदुः परिवार्य धनंजयम् ॥ १३
ततस्तं काञ्चने पीठे समुत्थाप्योपवेश्य च ।
अभिनन्द्य महात्मानं परिवार्योपतस्थिरे ॥ १४
ततः संस्तूय गोविन्दं कथयित्वा च पाण्डवः ।
आश्वास्य ताः स्त्रियश्चापि मातुलं द्रष्टुमभ्यगात् ॥

॥ इति श्रीमन्महाभारते मौसलपर्वणि षष्ठोऽध्यायः ॥ ६ ॥

## सप्तमोऽध्यायः ॥ ७ ॥

वसुदेवेन स्वगृहमागतेऽर्जुने यादवक्षयनिदाननिवेदनपूर्वकं कृष्णाद्यनुस्मरणेन परिशोचनम् ॥ १ ॥ तथा तंप्रति कृष्णवचननिवेदनेन राज्यस्त्रीधनादिसमर्पणपूर्वकं स्वेन स्वप्राणत्यजनप्रतिज्ञानम् ॥ २ ॥

वैशंपायन उवाच
तं प्रविष्टं महात्मानं वीरमानकदुन्दुभिः ।
पुत्रशोकेन संतप्तो ददर्श कुरुपुङ्गवम् ॥ १
तस्याश्रुपरिपूर्णाक्षो व्यूढोरस्को महाभुजः ।
आर्तस्यार्ततरः पार्थः पादौ जग्राह भारत ॥ २
तस्य मूर्धानमाघ्रातुमियेषानकदुन्दुभिः ।
स्वस्रीयस्य महाबाहुर्न शशाक च शत्रुहन् ॥ ३
समालिङ्ग्यार्जुनं वृद्धः स भुजाभ्यां महाभुजः ।
रुरोदाथ सरन्शौरिं विललाप सुविह्वलः ।
भ्रातॄन्पुत्रांश्च पौत्रांश्च दौहित्रान्स सखीनपि ॥ ४
वसुदेव उवाच ।
यैर्जिता भूमिपालाश्च दैत्याश्च शतशोऽर्जुन ।
तान्सर्वान्नेह पश्यामि जीवाम्यर्जुन दुर्मरः ॥ ५
यौ तावर्जुनशिष्यौ ते प्रियौ बहुमतौ सदा ।
तयोरपनयात्पार्थ वृष्णयो निधनं गताः ॥ ६
यौ तौ वृष्णिप्रवीराणां द्वावेवातिरथौ मतौ ।

---

अब्रुवन्तो महात्मानमिति झ. पाठः ॥ १४ ॥ षष्ठोऽध्यायः ॥ ६ ॥

शिष्यौ प्रद्युम्नसात्यकी ॥ ६ ॥

प्रद्युम्नो युयुधानश्च कथयन्कत्थसे च यौ ॥ ७
तौ सदा कुरुशार्दूल कृष्णस्य प्रियभाजनौ ।
तावुभौ वृष्णिनाशस्य मुखमास्तां धनंजय ॥ ८
न तु गर्हामि शैनेयं हार्दिक्यं चाहमर्जुन ।
अक्रूरं रौक्मिणेयं च शापो ह्येवात्र कारणम् ॥ ९
केशिनं यस्तु कंसं च विक्रम्य हतवान्प्रभुः ।
विदेहमकरोत्पार्थ चैद्यं च बलगर्वितम् ॥ १०
नैषादिमेकलव्यं च चक्रे कालिङ्गमागधान् ।
गान्धारान्काशिराजं च मरुभूमौ च पार्थिवान् ११
प्राच्यांश्च दाक्षिणात्यांश्च पार्वतीयांस्तथा नृपान् ।
सोऽभ्युपेक्षितवानेवमनयान्मधुसूदनः ॥ १२
त्वं हि तं नारदश्चैव मुनयश्च सनातनम् ।
गोविन्दमनघं देवमभिजानीध्वमच्युतम् ॥ १३
प्रत्यपश्यच्च स विभुर्ज्ञातिक्षयमधोक्षजः ।
समुपेक्षितवान्नित्यं स्वयं स मम पुत्रकः ॥ १४
गान्धार्या वचनं यत्तदृषीणां च परंतप ।
तन्नूनमन्यथा कर्तुं नैच्छत्स जगतः प्रभुः ॥ १५
प्रत्यक्षं भवतश्चापि तव पौत्रः परंतप ।
अश्वत्थाम्ना हतश्चापि जीवितस्तस्य तेजसा ।
इमांस्तु नैच्छत्स्वान्ज्ञातीन्रक्षितुं च सखा तव ॥ १६
ततः पुत्रांश्च पौत्रांश्च भ्रातॄनथ सखींस्तथा ।
शयानान्निहतान्दृष्ट्वा कृष्णो मामब्रवीदिदम् १७
संप्राप्तोऽद्यायमस्यान्तः कुलस्य भरतर्षभ ।
आगमिष्यति बीभत्सुरिमां द्वारवतीं पुरीम् ।
आख्येयं तस्य यद्वृत्तं वृष्णीनां वैशसं महत् ॥ १८
स तु श्रुत्वा महातेजा यदूनां निधनं प्रभो ।
आगन्ता क्षिप्रमेवेह न मेऽत्रास्ति विचारणा १९
योऽहं तमर्जुनं विद्धि योऽर्जुनः सोहमेव तु ।
यद्ब्रूयात्तत्तथा कार्यमिति बुद्ध्यस्व भारत ॥ २०
स स्त्रीषु प्राप्तकालासु पाण्डवो बालकेषु च ।
प्रतिपत्स्यति बीभत्सुर्भवतश्चौर्ध्वदेहिकम् ॥ २१
इमां च नगरीं सद्यः प्रतियाते धनंजये ।
प्राकाराट्टालकोपेतां समुद्रः प्लावयिष्यति ॥ २२
अहं देशे तु कस्मिंश्चित्पुण्ये नियममास्थितः ।
कालं काङ्क्षे सद्य एव रामेण सहितो वने ॥ २३
एवमुक्त्वा हृषीकेशो मामचिन्त्यपराक्रमः ।
हित्वा मां बालकैः सार्धं दिशं काम्प्यगात्प्रभुः २४
सोहं तौ च महात्मानौ चिन्तयन्रामकेशवौ ।
घोरं ज्ञातिवधं चैव न भुञ्जे शोककर्शितः ॥ २५
न मोक्ष्ये न च जीविष्ये दिष्ट्या प्राप्तोसि पाण्डव ।
यदुक्तं पार्थ कृष्णेन तत्सर्वमखिलं कुरु ॥ २६
एतत्ते पार्थ राज्यं च स्त्रियो रत्नानि चैवं हि ।
इष्टान्प्राणानहं हीमांस्त्यक्ष्यामि रिपुसूदन ॥ २७

॥ इति श्रीमन्महाभारते मौसलपर्वणि सप्तमोऽध्यायः ॥ ७ ॥

## अष्टमोऽध्यायः ॥ ८ ॥

अर्जुनेन वसुदेवसमाश्वासनपूर्वकं सकलपौरान्प्रति नातिचिरादेव द्वारकायाः समुद्रेण समाप्लावननिवेदनपूर्वकं सर्वेषामिन्द्रप्रस्थंप्रति प्रयाणसंनाहसंचोदना ॥ १ ॥ तथा परेद्युर्योगेन शरीरंत्यक्तवतो वसुदेवस्य पत्नीभिः सह संस्करणपूर्वकं रामकृष्णशरीरयोर्दाहनम् ॥ २ ॥ ततो वज्रार्जुनपुरस्कारेण सकलपौरजने पुरःपुरः प्रयाते समुद्रेण पश्चाद्भागे पौरजनमुक्ततत्तद्भागस्य स्वजलेन समाक्रमणम् ॥ ३ ॥ अर्जुनेन मध्येमार्गं चोरापहृतावशिष्टयादवकलत्रादिभिः सह स्वदेशमेत्य युधिष्ठिराज्ञया वज्रस्येन्द्रप्रस्थराज्येऽभिषेचनम् । तथा सात्यकिसुतादीनां तत्रतत्र राज्येऽभिषेचनम् ॥ ४ ॥ रुक्मिण्यादिभिः काभिश्चिद्वह्निप्रवेशनम् । सत्यभामादिभिः काभिश्चन तपसे वनगमनम् ॥ ५ ॥

---

वैशंपायन उवाच ।
एवमुक्तः स बीभत्सुर्मातुलेन परंतप ।
दुर्मना दीनवदनो वसुदेवमुवाच ह ॥ १
नाहं वृष्णिप्रवीरेण बन्धुभिश्चैव मातुल ।
विहीनां पृथिवीं द्रष्टुं शक्तश्चिरमिह प्रभो ॥ २
राजा च भीमसेनश्च सहदेवश्च पाण्डवः ।

काशिराज पौण्ड्रकम् ॥ ११ ॥

सप्तमोऽध्यायः ॥ ७ ॥

नकुलो याज्ञसेनी च षडेकमनसो वयम् ॥ ३
राज्ञः संक्रमणे चापि कामोऽयं नित्यमेव हि ।
तमिमं विद्धि संप्राप्तं कालं कालविदांवर ॥ ४
सर्वथा वृष्णिदारांस्तु बालं वृद्धं तथैव च ।
नयिष्ये परिगृह्याहमिन्द्रप्रस्थमरिंदम ॥ ५
इत्युक्त्वा दारुकमिदं वाक्यमाह धनंजयः ।
अमात्यान्वृष्णिवीराणां द्रष्टुमिच्छामि माचिरम् ६
इत्येवमुक्त्वा वचनं सुधर्मां यादवीं सभाम् ।
प्रविवेशार्जुनः शूरः शोचमानो महाभुजः ॥ ७
तमासनगतं तत्र सर्वाः प्रकृतयस्तथा ।
ब्राह्मणा नागरास्तत्र परिवार्योपतस्थिरे ॥ ८
तान्दीनमनसः सर्वान्विमूढान्गतचेतसः ।
उवाचेदं वचः काले पार्थो दीनतरस्तथा ॥ ९
शक्रप्रस्थमहं नेष्ये वृष्ण्यन्धकजनं स्वयम् ।
इदं तु नगरं सर्वं समुद्रः प्लावयिष्यति ॥ १०
सज्जीकुरुत यानानि रत्नानि विविधानि च ।
वज्रोऽयं भवतां राजा शक्रप्रस्थे भविष्यति ॥ ११
सप्तमे दिवसे चैव रवौ विमल उद्गते ।
बहिर्वत्स्यामहे सर्वे सज्जीभवत माचिरम् ॥ १२
इत्युक्तास्तेन ते सर्वे पार्थेनाक्लिष्टकर्मणा ।
सज्जमाशु ततश्चक्रुः स्वसिद्ध्यर्थं समुत्सुकाः ॥ १३
तां रात्रिमवसत्पार्थः केशवस्य निवेशने ।
महता शोकमोहेन सहसाऽभिपरिप्लुतः ॥ १४
श्वोभूतेऽथ ततः शौरिर्वसुदेवः प्रतापवान् ।
युक्त्वाऽऽत्मानं महातेजा जगाम गतिमुत्तमां १५
ततः शब्दो महानासीद्वसुदेवनिवेशने ।
दारुणः क्रोशतीनां च रुदतीनां च योषिताम् १६
प्रकीर्णमूर्धजाः सर्वा विमुक्ताभरणस्रजः ।
उरांसि पाणिभिर्घ्नन्त्यो व्यलपन्करुणं स्त्रियः १७
तं देवकी च भद्रा च रोहिणी मदिरा तथा ।
अन्वारोढुं व्यवसिता भर्तारं योषितां वराः॥ १८
ततः शौरिं नृयुक्तेन बहुमूल्येन भारत ।
यानेन महता पार्थो बहिर्निष्क्रामयत्तदा ॥ १९
तमन्वयुस्तत्रतत्र दुःखशोकसमन्विताः ।
द्वारकावासिनः सर्वे पौरजानपदा हिताः ॥ २०
तस्याश्वमेधिकं छत्रं दीप्यमानाश्च पावकाः ।
पुरस्तात्तस्य यानस्य याजकाश्च ततो ययुः ॥ २१
अनुजग्मुश्च तं वीरं देव्यस्ता वै स्वलंकृताः ।
स्त्रीसहस्रैः परिवृता वधूभिश्च सहस्रशः ॥ २२
यस्तु देशः प्रियस्तस्य जीवतोऽभून्महात्मनः ।
तत्रैनमुपसंकल्प्य पितृमेधं प्रचक्रिरे ॥ २३
तं चिताग्निगतं वीरं शूरपुत्रं वराङ्गनाः ।
ततोऽन्वारुरुहुः पत्न्यश्चतस्रः पतिलोकगाः ॥ २४
तं वै चतसृभिः स्त्रीभिरन्वितं पाण्डुनन्दनः ।
अदाहयच्चन्दनैश्च गन्धैरुच्चावचैरपि ॥ २५
ततः प्रादुरभूच्छब्दः समिद्धस्य विभावसोः ।
सामगानां च निर्घोषो नराणां रुदतामपि ॥ २६
ततो वज्रप्रधानास्ते वृष्ण्यन्धककुमारकाः ।
सर्वे चैवोदकं चक्रुः स्त्रियश्चैव महात्मनः ॥ २७
अलुप्तधर्मस्तं धर्मं कारयित्वा स फल्गुनः ।
जगाम वृष्णयो यत्र विनष्टा भरतर्षभ ॥ २८
स तान्दृष्ट्वा निपतितान्कदने भृशदुःखितः ।
बभूवातीव कौरव्यः प्राप्तकालं चकार ह ॥ २९
यथाप्रधानतश्चैव चक्रे सर्वास्तथा क्रियाः ।
ये हता ब्रह्मशापेन मुसलैरेरकोद्भवैः ॥ ३०
'ततो भगवतो देहं दृष्ट्वा शिष्यः प्रलप्य च ।
स्मृत्वा तद्वचनं सर्वं मोहशोकोपबृंहितः ॥' ३१
ततः शरीरे रामस्य वासुदेवस्य चोभयोः ।
अन्वीक्ष्य दाहयामास पुरुषैराप्तकारिभिः ॥ ३२
स तेषां विधिवत्कृत्वा प्रेतकार्याणि पाण्डवः ।
सप्तमे दिवसे प्रायाद्रथमारुह्य सत्वरः ॥ ३३
अश्वयुक्तै रथैश्चापि गोखरोष्ट्रयुतैरपि ।
स्त्रियस्ता वृष्णिवीराणां रुदन्त्यः शोककर्शिताः ॥
अनुजग्मुर्महात्मानं पाण्डुपुत्रं धनंजयम् ।
भृत्याश्चान्धकवृष्णीनां सादिनो रथिनश्च ये ॥ २५
वीरहीना वृद्धबालाः पौरजानपदास्तथा ।
ययुस्ते परिवार्याथ कलत्रं पार्थशासनात् ॥ ३६

अन्विष्य दाहयामासेति झ. पाठः॥ ३२ ॥

कुञ्जरैश्च गजारोहा ययुः शैलनिभैस्तथा ।
सपादरक्षैः संयुक्ताः सोत्तरायुधिका ययुः ॥ ३७
पुत्राश्चान्धकवृष्णीनां सर्वे पार्थमनुव्रताः ।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव महाधनाः ३८
दश षट् च सहस्राणि वासुदेवावरोधनम् ।
पुरस्कृत्य ययुर्वज्रं पौत्रं कृष्णस्य धीमतः ॥ ३९
बहूनि च सहस्राणि प्रयुतान्यर्बुदानि च ।
भोजवृष्ण्यन्धकस्त्रीणां हतनाथानि निर्ययुः ॥४०
तत्सागरसमप्रख्यं वृष्णिचक्रं महर्द्धिमत् ।
उवाह रथिनांश्रेष्ठः पार्थः परपुरंजयः ॥ ४१
निर्याते तु जने तस्मिन्सागरो मकरालयः ।
द्वारकां रत्नसंपूर्णां जलेनाप्लावयत्तदा ॥ ४२
यद्यद्धि पुरुषव्याघ्रो भूमेस्तस्या व्यमुञ्चत ।
तत्तत्संप्लावयामास सलिलेन स सागरः ॥ ४३
तदद्भुतमभिप्रेक्ष्य द्वारकावासिनो जनाः ।
तूर्णात्तूर्णतरं जग्मुरहो दैवमिति ब्रुवन् ॥ ४४
काननेषु च रम्येषु पर्वतेषु नदीषु च ।
निवसन्नानयामास वृष्णिदारान्धनंजयः ॥ ४५
स पञ्चनदमासाद्य धीमानतिसमृद्धिमत् ।
देशे गोपशुधान्याढ्ये निवासमकरोत्प्रभुः ॥ ४६
ततो लोभः समभवद्दस्यूनां निहतेश्वराः ।
दृष्ट्वा स्त्रियो नीयमानाः पार्थेनैकेन भारत ॥ ४७
ततस्ते पापकर्माणो लोभोपहतचेतसः ।
आभीरा मन्त्रयामासुः समेत्याशुभदर्शनाः ॥ ४८
अयमेकोऽर्जुनो धन्वी वृद्धबालं हतेश्वरम् ।
नयत्यस्मानतिक्रम्य योधाश्चेमे हतौजसः ॥ ४९
ततो यष्टिप्रहरणा दस्यवस्ते सहस्रशः ।
अभ्यधावन्त वृष्णीनां तं जनं लोप्त्रहारिणः ५०
महता सिंहनादेन त्रासयन्तः पृथग्जनम् ।
अभिपेतुर्धनार्थं ते कालपर्यायचोदिताः ॥ ५१
ततो निवृत्तः कौन्तेयः सहसा सपदानुगः ।
उवाच तान्महाबाहुरर्जुनः प्रहसन्निव ॥ ५२
निवर्तध्वमधर्मज्ञा यदि जीवितुमिच्छथ ।
इदानीं शरनिर्भिन्नाः शोचध्वं निहता मया ॥ ५३
तथोक्तास्तेन वीरेण कदर्थीकृत्य तद्वचः ।
मूढा वार्यमाणाः पुनःपुनः ॥ ५४
ततोऽर्जुनो धनुर्दिव्यं गाण्डीवमजरं महत् ।
आरोपयितुमारेभे यत्नादिव कथंचन ॥ ५५
चकार सज्यं कृच्छ्रेण संभ्रमे तुमुले सति ।
चिन्तयामास शस्त्राणि न च सस्मार तान्यपि ५६
वैकृतं तन्महद्दृष्ट्वा भुजवीर्ये तथा युधि ।
दिव्यानां च महास्त्राणां विनाशाद्व्रीडितोऽभवत् ॥
वृष्णियोधाश्च ते सर्वे गजाश्वरथयोधिनः ।
न शेकुरावर्तयितुं ह्रियमाणं स्वकं धनम् ॥ ५८
कलत्रस्य बहुत्वाद्धि संपतत्सु ततस्ततः ।
प्रयत्नमकरोत्पार्थो जनस्य परिरक्षणे ॥ ५९
मिषतां सर्वयोधानां ततस्ताः प्रमदोत्तमाः ।
समन्ततोऽवकृष्यन्त कामाच्चान्याः प्रवव्रजुः ॥ ६०
ततो गाण्डीवनिर्मुक्तैः शरैः पार्थो धनंजयः ।
जघान दस्यून्सोद्वेगो वृष्णिभृत्यैः सहस्रशः ॥ ६१
क्षणेन तस्य ते राजन्क्षयं जग्मुरजिह्मगाः ।
अक्षया हि पुरा भूत्वा क्षीणाः क्षतजभोजनाः ६२
स शरक्षयमासाद्य दुःखशोकसमाहतः ।
धनुष्कोट्या तदा दस्यूनवधीत्पाकशासनिः ॥ ६३
[प्रेक्षतस्त्वेव पार्थस्य वृष्ण्यन्धकवरस्त्रियः ।
जग्मुरादाय ते म्लेच्छाः समन्ताज्जनमेजय ॥] ६४
धनंजयस्तु दैवं तन्मनसाऽचिन्तयत्प्रभुः ।
दुःखशोकसमाविष्टो निःश्वासपरमोऽभवत् ॥ ६५
अस्त्राणां च प्रणाशेन बाहुवीर्यस्य च क्षयात् ।
धनुषश्चाविधेयत्वाच्छराणां संक्षयेण च ॥ ६६
बभूव विमनाः पार्थो दैवमित्यनुचिन्तयन् ।
न्यवर्तत ततो राजन्नेदमस्तीति चिन्तयन् ॥ ६७
ततः शेषं समादाय कलत्रस्य महामतिः ।
हृतभूयिष्ठरत्नस्य कुरुक्षेत्रमवातरत् ॥ ६८
युधिष्ठिरस्यानुमते वंशकृर्तृन्कुमारकान् ।
न्यवेशयत कौरव्यस्तत्रतत्र धनंजयः ॥ ६९

अष्टमोऽध्यायः ॥ ८ ॥

ब्रुवन् अब्रुवन् ॥ ४४ ॥

हार्दिक्यतनयं पार्थो नगरे मृत्तिकावते ।
अश्वपतिं खाण्डवारण्ये राज्ये तत्र न्यवेशयत् ।
भोजराजकलत्रं च हृतशेषं नरोत्तमः ॥ ७०
तथा वृद्धांश्च बालांश्च स्त्रियश्चादाय पाण्डवः ।
वीरैर्विहीनान्सर्वांस्ताञ्शक्रप्रस्थे न्यवेशयत् ॥ ७१
यौयुधानिं सरस्वत्याः पुत्रं सात्यकिनः प्रियम् ।
न्यवेशयत धर्मात्मा वृद्धबालपुरस्कृतम् ॥ ७२
इन्द्रप्रस्थे ददौ राज्यं वज्राय परवीरहा ।
वज्रेणाक्रूरदारास्तु वार्यमाणाः प्रवव्रजुः ॥ ७३
रुक्मिणी त्वथ गान्धारी शैब्या हैमवतीत्यपि ।
देवी जांबवती चैव विविशुर्जातवेदसम् ॥ ७४
सत्यभामा तथैवान्या देव्यः कृष्णस्य संमताः ।
वनं प्रविविशू राजंस्तापस्ये कृतनिश्चयाः ॥ ७५
द्वारकावासिनो ये तु पुरुषाः पार्थमभ्ययुः ।
यथार्हं संविभज्यैनान्वज्रे पर्यददज्जयः ॥ ७६
स तत्कृत्वा प्राप्तकालं बाष्पेणापिहितोऽर्जुनः ।
कृष्णद्वैपायनं व्यासं ददर्शासीनमाश्रमे ॥ ७७

॥ इति श्रीमन्महाभारते मौसलपर्वणि अष्टमोऽध्यायः ॥ ८ ॥

## नवमोऽध्यायः ॥ ९ ॥

अर्जुनेन व्यासाश्रमे तद्दर्शनम् ॥ १ ॥ तस्मिन्द्वारकावृत्तान्तनिवेदनम् ॥ २ ॥ व्यासेनार्जुनंप्रति युधिष्ठिरादीनामपि स्वर्गगमनसूचनम् ॥ ३ ॥ ततोऽर्जुनेन हास्तिनपुरमेत्य युधिष्ठिरे द्वारकावृत्तान्तादिनिवेदनम् ॥ ४ ॥

वैशंपायन उवाच ।
प्रविश्य त्वर्जुनो राजन्नाश्रमं सत्यवादिनः ।
ददर्शासीनमेकान्ते मुनिं सत्यवतीसुतम् ॥ १
स तमासाद्य धर्मज्ञमुपतस्थे महाव्रतम् ।
अर्जुनोस्मीति नामास्मै निवेद्याभ्यवदत्ततः ॥ २
स्वागतं तेऽस्त्विति प्राह मुनिः सत्यवतीसुतः ।
आस्यतामिति होवाच प्रसन्नात्मा महामुनिः ॥ ३
तमप्रतीतमनसं निःश्वसन्तं पुनःपुनः ।
निर्विण्णमनसं दृष्ट्वा पार्थं व्यासोऽब्रवीदिदम् ॥ ४
नखकेशदशाकुंभवारिणा किं समुक्षितः ।
आवीरजानुगमनं ब्राह्मणो वा हतस्त्वया ॥ ५
युद्धे पराजितो वाऽसि गतश्रीरिव लक्ष्यसे ।
न त्वां प्रभिन्नं जानामि किमिदं भरतर्षभ ।
श्रोतव्यं चेन्मया पार्थ क्षिप्रमाख्यातुमर्हसि ॥ ६
अर्जुन उवाच ।
यः स मेघवपुः श्रीमान्बृहत्पङ्कजलोचनः ।
स कृष्णः सह रामेण त्यक्त्वा देहं दिवं गतः ॥ ७
'तदनुस्मृत्य संमोहं तदा शोकं महामते ।
प्रयामि सर्वदा मह्यं मुमूर्षा चोपजायते ॥ ८
तद्वाक्यस्पर्शनालोकसुखं चामृतसन्निभम् ।
संस्मृत्य देवदेवस्य प्रमुह्यत्यमृतात्मनः ॥' ९
मौसले वृष्णिवीराणां विनाशो ब्रह्मशापजः ।
बभूव वीरान्तकरः प्रभासे रोमहर्षणः ॥ १०
एते शूरा महात्मानः सिंहदर्पा महाबलाः ।
भोजवृष्ण्यन्धका ब्रह्मन्नन्योन्यं तैर्हतं युधि ॥ ११
गदापरिघशक्तीनां सहाः परिघबाहवः ।
त एरकाभिर्निहताः पश्य कालस्य पर्ययम् ॥ १२
हतं पञ्चशतं तेषां सहस्रं बाहुशालिनाम् ।
निधनं समनुप्राप्तं समासाद्येतरेतरम् ॥ १३

नखोदक केशोदकं वस्त्रप्रान्तो दशा तदुदक कुम्भमुखोदक च । आवीरजा नारी रजस्वला तस्या रजःप्रस्रवकाले दिनत्रयादर्वाक् अनुगमन तस्यां मैथुन ब्राह्मणस्य वधो युद्धे पराजयश्चेति सप्तभिर्निमित्तैः पुरुषो भ्रष्टश्रीर्भवति । अपि रजोपघातस्ते ब्राह्मणो वेति क. ट. पाठः ॥ ५ ॥ प्रभिन्नं पराजितं त्वां कदाचिदपि न जानामि ॥ ६ ॥ [illegible] । मारितवन्त इत्यर्थः ॥ ११ ॥ पञ्चशत सहस्र [illegible] ॥ १२ ॥ न केवल हत [illegible] निधन प्राप्तमित्यर्थः ॥ १३ ॥

पुनःपुनर्न मृष्यामि विनाशममितौजसाम् ।
चिन्तयानो यदूनां च कृष्णस्य च यशस्विनः १४
शोषणं सागरस्येव मन्दरस्येव चालनम् ।
नभसः पतनं चैव शैत्यमग्नेस्तथैव च ॥ १५
अश्रद्धेयमहं मन्ये विनाशं शार्ङ्गधन्वनः ।
न चेह स्थातुमिच्छामि लोके कृष्णविनाकृतः १६
इतः कष्टतरं चान्यच्छृणु तद्वै तपोधन ।
मनो मे दीर्यते येन चिन्तयानस्य वै मुहुः ॥ १७
पश्यतो वृष्णिदाराश्च मम ब्रह्मन्सहस्रशः ।
आभीरैरभिभूयाजौ हृताः पञ्चनदालयैः ॥ १८
धनुरादाय तत्राहं नाशकं तस्य पूरणे ।
यथापुरा च मे वीर्यं भुजयोर्न तथाऽभवत् ॥ १९
अस्त्राणि मे प्रनष्टानि विविधानि महामुने ।
शराश्च क्षयमापन्नाः क्षणेनैव समन्ततः ॥ २०
पुरुषश्चाप्रमेयात्मा शङ्खचक्रगदाधरः ।
चतुर्भुजः पीतवासाः श्यामः पद्मदलेक्षणः ॥ २१
यश्च याति पुरस्तान्मे रथस्य सुमहाद्युतिः ।
प्रदहत्रिपुसैन्यानि न पश्याम्यहमद्य तम् ॥ २२
येन पूर्वं प्रदग्धानि शत्रुसैन्यानि तेजसा ।
शरैर्गाण्डीवनिर्मुक्तैरहं पश्चादशातयम् ॥ २३
तमपश्यन्विषीदामि घूर्णामीव च सत्तम ।
परिनिर्विण्णचेताश्च शान्तिं नोपलभेऽपि च ॥२४
'देवकीनन्दनं देवं वासुदेवमजं प्रभुम् ।'
विना जनार्दनं वीरं नाहं जीवितुमुत्सहे ॥ २५
श्रुत्वैव हि गतं विष्णुं ममापि मुमुहुर्दिशः ।
प्रनष्टज्ञातिवीर्यस्य शून्यस्य परिधावतः ॥ २६
उपदेष्टुं मम श्रेयो भवानर्हति सत्तम ॥ २७

व्यास उवाच ।
'देवांशा देवभूतेन संभूतास्ते गतास्सह ।
धर्मव्यवस्थारक्षार्थं देवेन समुपेक्षिताः ॥' २८
ब्रह्मशापविनिर्दग्धा वृष्ण्यन्धकमहारथाः ।
विनष्टाः कुरुशार्दूल न ताञ्शोचितुमर्हसि ॥ २९
भवितव्यं तथा तच्च दिष्टमेतन्महात्मनाम् ।
उपेक्षितं च कृष्णेन शक्तेनापि व्यपोहितुम् ॥ ३०
त्रैलोक्यमपि गोविन्दः कृत्स्नं स्थावरजङ्गमम् ।
प्रसहेदन्यथा कर्तुं कुतः शापं महात्मनाम् ॥ ३१
'स्त्रियश्च ताः पुरा शप्ताः प्रभासे कुपितेन वै ।
अष्टावक्रेण मुनिना तदर्थं त्वद्बलक्षयम् ॥' ३२
रथस्य पुरतो याति यः स चक्रगदाधरः ।
तव स्नेहात्पुराणर्षिर्वासुदव ३३
कृत्वा भारावतरणं पृथिव्याः पृथुलोचनः ।
मोक्षयित्वा तनुं प्राप्तः कृष्णः स्वस्थानमुत्तमम् ३४
त्वयाऽपीह महत्कर्म देवानां पुरुषर्षभ ।
कृतं भीमसहायेन यमाभ्यां च महाभुज ॥ ३५
कृतकृत्यांश्च वो मन्ये संसिद्धान्कुरुपुङ्गव ।
गमनं प्राप्तकालं वं इदं श्रेयस्करं विभो ॥ ३६
बलं बुद्धिश्च तेजश्च प्रतिपत्तिश्च भारत ।
भवन्ति भवकालेषु विपद्यन्ते विपर्यये ॥ ३७
कालमूलमिदं सर्वं जगद्बीजं धनंजय ।
काल एव समादत्ते पुनरेव यदृच्छया ॥ ३८
स एव बलवान्भूत्वा पुनर्भवति दुर्बलः ।
स एवेशश्च भूत्वेह परैराज्ञाप्यते पुनः ॥ ३९
कृतकृत्यानि चास्त्राणि गतान्यद्य यथागतम् ।
पुनरेष्यन्ति ते हस्तं यदा कालो भविष्यति ॥ ४०
कालो गन्तुं गतिं मुख्यां भवतामपि भारत ।

पश्यतः अनादरे षष्ठी । मां पश्यन्तमनादृत्येत्यर्थः ॥ १८ ॥ बुद्धिरुपस्थितकार्यावधारणम् । तेजः प्रागल्भ्यम् । प्रतिपत्तिरनागतावेक्षणम् । भवन्ति उत्पद्यन्ते । भवकालेषु ऐश्वर्यावाप्तिसमयेषु । विपर्यये विनाशकाले । विपद्यन्ते विनश्यन्ति ॥ ३७ ॥ कालः ईश्वरः । जगद्बीजं वियदादिपञ्चक । समादत्ते संहरति यदा भूतानामपि संहारो भवति क्रियास्तत्र भौतिकानां नाश इति तदर्थं श्लोकोऽनुचित इति भावः । य एव बलवान्स एव दुर्बलो भवत्येव विपर्ययोऽपि कालमूलो ज्ञेयः ॥ ३८ ॥ पुनर्युगान्तरे ॥ ४० ॥ मुख्यां गतिं स्वर्गं गन्तुम् एतत्प्रस्थानं श्रेयः ॥ ४१ ॥ नवमोऽध्यायः ॥ ९ ॥

एतच्छ्रेयो हि वो मन्ये परमं भरतर्षभ ॥ ४१
वैशंपायन उवाच ।
एतद्वचनमाज्ञाय व्यासस्यामिततेजसः ।
अनुज्ञातो ययौ पार्थो नगरं नागसाह्वयम् ॥ ४२
प्रविश्य च पुरीं वीरः समासाद्य युधिष्ठिरम् ।
आचष्ट तद्यथावृत्तं वृष्ण्यन्धककुलं प्रति ॥ ४३

॥ इति श्रीमन्महाभारते शतसाहस्र्यां संहितायां वैयासिक्यां मौसलपर्वणि नवमोऽध्यायः ॥ ९ ॥

## मौसलपर्व समाप्तम् ॥

अस्यानन्तरं महाप्रस्थानिकं पर्व भविष्यति
तस्यायमाद्यः श्लोकः ।
जनमेजय उवाच ।
एवं वृष्ण्यन्धककुले श्रुत्वा मौसलमाहवम् ।
पाण्डवाः किमकुर्वन्त तथा कृष्णे दिवं गते ॥ १

इदं मौसलपर्व कुंभघोणस्थेन टी. आर्. कृष्णाचार्येण टी. आर्. व्यासाचार्येण च मुंबय्यां निर्णयसागरमुद्रायन्त्रे मुद्रापितम् । शकाब्दाः १८३२ सन १९१०.

# SRIMANMAHABHARATA

A NEW EDITION

MAINLY BASED ON

THE SOUTH INDIAN TEXTS,

With footnotes and Readings.

---

## MAHAPRASTHANIKPARVA XVII.

EDITED BY

T. R. KRISHNACHARYA & T. R. VYASACHARYA,

Proprietors, Madhva-Vilâs Book Depot, Kumbakonam.

*Printed by B. R. Ghanekar for the proprietors,*

*at Tukaram Javaji's "Nirnaya-sagar" Press,*

BOMBAY.

1910.

॥ श्रीः ॥

# श्रीमन्महाभारतम् ।

## सटिप्पणम् ।



## महाप्रस्थानिकपर्व १७.

एतच्च

कुम्भघोणस्थेन श्रीमन्मध्वविलासपुस्तकालयाधिपतिना

टी. आर्. कृष्णाचार्येण टी. आर्. व्यासाचार्येण च

अनेकेषां विदुषां साहाय्येन दाक्षिणात्यबहुकोशानुसारेण

संशोध्य

मुंबापुर्यां

जावजी दादाजी इत्येतेषां निर्णयसागरमुद्रणयन्त्रे मुद्रयित्वा प्रकाशितम् ।

शाके १८३२ साधारणनामसंवत्सरे ।








महाप्रस्थानिक पर्व
धर्मराजः
भीमसेन.
अर्जुन.
नकुळ.
सहदेव
द्रौपदी

श्रीः ।

# श्रीमन्महाभारतम् ।

## महाप्रस्थानिकपर्व १७ ।

### प्रथमोऽध्यायः ॥ १ ॥

भ्रातृभिर्द्रौपद्या च सह स्वर्गं जिगमिषुणा युधिष्ठिरेण युयुत्सौ राज्यभारनिवेशनपूर्वकं परिक्षितो राज्येऽभिषेचनम् ॥१॥ तथा कृच्छ्रात्पौरानुमतिसंपादनेन वल्कलधारणादिपूर्वकं शुना सह गृहात्प्रस्थानम् ॥ २ ॥ अर्जुनेन मध्येमार्गमग्निवचसा सनिषङ्गस्य गाण्डीवस्य वरुणोद्देशेन समुद्रे प्रक्षेपणम् ॥ ३ ॥

श्रीवेदव्यासाय नमः ।

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥ १
जनमेजय उवाच ।
एवं वृष्ण्यन्धककुले श्रुत्वा मौसलमाहवम् ।
पाण्डवाः किमकुर्वन्त तथा कृष्णे दिवं गते ॥ १
वैशंपायन उवाच ।
श्रुत्वैवं कौरवो राजा वृष्णीनां कदनं महत् ।
प्रस्थाने मतिमाधाय वाक्यमर्जुनमब्रवीत् ॥ २
कालः पचति भूतानि सर्वाण्येव महामते ।
कालपाशमहं मन्ये त्वमपि द्रष्टुमर्हसि ॥ ३
इत्युक्तः स तु कौन्तेयः कालः काल इति ब्रुवन् ।
अन्वपद्यत तद्वाक्यं भ्रातुर्ज्येष्ठस्य धीमतः ॥ ४
अर्जुनस्य मतं ज्ञात्वा भीमसेनो यमौ तथा ।
अन्वपद्यन्त तद्वाक्यं यदुक्तं सव्यसाचिना ॥ ५
ततो युयुत्सुमानाय्य प्रव्रजन्धर्मकाम्यया ।
राज्यं परिददौ सर्वं वैश्यापुत्रे युधिष्ठिरः ॥ ६
अभिषिच्य स्वराज्ये च राजानं च परिक्षितम् ।
दुःखार्तश्चाब्रवीद्राजा सुभद्रां पाण्डवाग्रजः ॥ ७
एष पुत्रस्य पुत्रस्ते कुरुराजो भविष्यति ।
यदूनां परिशेषश्च वज्रो राजा कृतश्च ह ॥ ८
परिक्षिद्धास्तिनपुरे शक्रप्रस्थे च यादवः ।
वज्रो राजा त्वया रक्ष्यो मा चाधर्मे मनः कृथाः ९
इत्युक्त्वा धर्मराजः स वासुदेवस्य धीमतः ।
मातुलस्य च वृद्धस्य रामादीनां तथैव च ॥ १०
भ्रातृभिः सह धर्मात्मा कृत्वोदकमतन्द्रितः ।
श्राद्धान्युद्दिश्य सर्वेषां चकार विधिवत्तदा ॥ ११
द्वैपायनं नारदं च मार्कण्डेयं तपोधनम् ।
भारद्वाजं याज्ञवल्क्यं हरिमुद्दिश्य यत्नवान् ।
अभोजयत्स्वादु भोज्यं कीर्तयित्वा च शार्ङ्गिणं १२
ददौ रत्नानि वासांसि ग्रामानश्वान्रथांस्तथा ।
स्त्रियश्च द्विजमुख्येभ्यस्तदा शतसहस्रशः ॥ १३
कृपमभ्यर्च्य च गुरुमथ पौरपुरस्कृतम् ।
'आहूय भरतश्रेष्ठ संनिवेश्यासने तदा ।'
शिष्यं परिक्षितं तस्मै ददौ भरतसत्तमः ॥ १४
ततस्तु प्रकृतीः सर्वाः समानाय्य युधिष्ठिरः ।

प्रस्थाने स्वर्गं गन्तुं गृहान्निःसरणे ॥ २ ॥ पाश तत्कृतमाकर्षं मरणमितियावत् । तदहं मन्ये अङ्गीकरोमि । त्वमप्येतद्द्रष्टुमालोचितुम् ॥ ३ ॥ कालः काल इति निश्चयार्थे द्वित्वम् । अपरिहार्यः कालो मृत्युः सोऽद्यैवास्तु किं चिरेणेत्याशयः ॥४॥ धर्मकाम्यया प्रव्रजन्नतूद्वेगेन । परिददौ तदधीनं कृतवान् । तस्याभिषेकेऽनधिकारात् ॥ ६ ॥ स्वराज्ये हास्तिनपुरे ॥ ७ ॥ अधर्मे परिक्षिद्वज्रयोर्बालयोररक्षणजे । महाप्रस्थानमियं मा कुर्यादिति भावः ॥ ९ ॥ स्त्रियो दासीः ॥ १३ ॥

सर्वमाचष्ट राजर्षिश्चिकीर्षितमथात्मनः ॥ १५
ते श्रुत्वैव वचस्तस्य पौरजानपदा जनाः ।
भृशमुद्विग्नमनसो नाभ्यनन्दन्त तद्वचः ॥ १६
नैवं कर्तव्यमिति ते तदोचुस्तं जनाधिपम् ।
न च राजा तथाऽकार्षीत्कालपर्यायधर्मवित् ॥ १७
ततोऽनुमान्य धर्मात्मा पौरजानपदं जनम् ।
गमनाय मतिं चक्रे कृष्णस्य गमनादपि ॥ १८
'वर्तमाने विवादे तु वास्तुविक्रयिणं प्रति ।
धनेच्छा युगपत्प्राप्ता क्षेत्रतत्स्वामिभूभृताम् ॥ १९
प्राप्तं कलियुगं ज्ञात्वा सहदेवो हसन्निव ।
राज्ञस्तु कथयामास धर्मो नष्टस्तु सङ्करः ॥ २०
श्रुत्वा तु दुर्मना राजा पर्याप्तं जीवनं मम ।'
इति स राजा कौरव्यो धर्मपुत्रो युधिष्ठिरः ।
उत्सृज्याभरणान्यङ्गाज्जगृहे वल्कलान्युत ॥ २१
भीमार्जुनयमाश्चैव द्रौपदी च यशस्विनी ।
तथैव जगृहुः सर्वे वल्कलानि नराधिप ॥ २२
विधिवत्कारयित्वेष्टिं नैष्ठिकीं भरतर्षभ ।
समुत्सृज्याप्सु सर्वेऽग्नीन्प्रतस्थुर्नरपुङ्गवाः ॥ २३
ततः प्ररुरुदुः सर्वाः स्त्रियो दृष्ट्वा नरोत्तमान् ।
प्रस्थितान्द्रौपदीषष्ठान्पुरा द्यूतजितान्यथा ॥ २४
हर्षोऽभवच्च सर्वेषां भ्रातॄणां गमनं प्रति ।
युधिष्ठिरमतं ज्ञात्वा वृष्णिक्षयमवेक्ष्य च ॥ २५
भ्रातरः पञ्च कृष्णा च षष्ठी श्वा चैव सप्तमः ।
आत्मना सप्तमो राजा निर्ययौ गजसाह्वयात् ।
पौरैरनुगतो दूरं सर्वैरन्तःपुरैस्तथा ॥ २६
न चैनमशकत्कश्चिन्निवर्तस्वेति भाषितुम् ।
न्यवर्तन्त ततः सर्वे नरा नगरवासिनः ॥ २७
कृपप्रभृतयश्चैव युयुत्सुं पर्यवारयन् ।
विवेश गङ्गां कौरव्य उलूपी भुजगात्मजा ॥ २८
चित्राङ्गदा ययौ चापि मणलूरपुरं प्रति ।
शिष्टाः परिक्षितं त्वन्या मातरः पर्यवारयन् ॥ २९
'पाण्डवाश्च महात्मानो द्रौपदी च यशस्विनी ।
कृतोपवासाः कौरव्य प्रययुः प्राङ्मुखास्ततः ॥ ३०
योगयुक्ता महात्मानस्त्यागधर्ममुपेयुषः ।
अभिजग्मुर्बहून्देशान्सरितः सागरांस्तथा ॥ ३१
युधिष्ठिरो ययावग्रे भीमस्तु तदनन्तरम् ।
अर्जुनस्तस्य चान्वेव यमौ चापि यथाक्रमम् ॥ ३२
पृष्ठतस्तु वरारोहा श्यामा पद्मदलेक्षणा ।
द्रौपदी योषितांश्रेष्ठा ययौ भरतसत्तम ॥ ३३
श्वा चैवानुययावेकः प्रस्थितान्पाण्डवान्वनम् ।
क्रमेण ते ययुर्वीरा लौहित्यं सलिलार्णवम् ॥ ३४
गाण्डीवं तु धनुर्दिव्यं न मुमोच धनंजयः ।
रत्नलोभान्महाराज ते चाक्षय्ये महेषुधी ॥ ३५
अग्निं ते ददृशुस्तत्र स्थितं शैलमिवाग्रतः ।
मार्गमावृत्य तिष्ठन्तं साक्षात्पुरुषविग्रहम् ॥ ३६
ततो देवः स सप्तार्चिः पाण्डवानिदमब्रवीत् ।
भोभो पाण्डुसुता वीराः पावकं मां निबोधत ३७
युधिष्ठिर महाबाहो भीमसेन परंतप ।
अर्जुनाश्विसुतौ वीरौ निबोधत वचो मम ॥ ३८
अहमग्निः कुरुश्रेष्ठा मया दग्धं च खाण्डवम् ।
र्जुनस्य प्रभावेन तथा नारायणस्य च ॥ ३९
अयं वः फल्गुनो भ्राता गाण्डीवं परमायुधम् ।
परित्यज्य वने यातु नानेनार्थोऽस्ति कश्चन ॥ ४०
चक्ररत्नं तु यत्कृष्णे स्थितमासीन्महात्मनि ।
गतं तच्च पुनर्हस्ते कालेनैष्यति तस्य ह ॥ ४१
वरुणादाहृतं पूर्वं मयैतत्पार्थकारणात् ।
गाण्डीवं धनुषां श्रेष्ठं वरुणायैव दीयताम् ॥ ४२
ततस्ते भ्रातरः सर्वे धनंजयमचोदयन् ।
स जले प्राक्षिपच्चैतत्तथाऽक्षय्ये महेषुधी ॥ ४३
ततोऽग्निर्भरतश्रेष्ठ तत्रैवान्तरधीयत ।
ययुश्च पाण्डवा वीरास्ततस्ते दक्षिणामुखाः ॥ ४४

---

अनुमान्यानुमतिप्रद कृत्वा ॥ १८ ॥ नैष्ठिकीं पार्यन्तिकी उत्सर्गेष्टिमित्यर्थः । आत्मन्यग्नीन्समारोप्याप्स्वग्नीनुत्सृज्येति ज्ञेयम् ॥ २३ ॥ अन्या युधिष्ठिरादीनां भार्याः श्रुतसोमादीनां मातरः ॥ २९ ॥ लौहित्यं उदयाचलप्रान्तस्थं समुद्रम् ॥ ३४ ॥ अनेन गाण्डीवेन । अर्थः प्रयोजनम् ॥ ४० ॥ कालेन अवतारान्तरे ॥ ४१ ॥ प्रथमोऽध्यायः ॥ १ ॥

ततस्ते तूत्तरेणैव तीरेण लवणांभसः ।
जग्मुर्भरतशार्दूल दिशं दक्षिणपश्चिमाम् ॥ ४५
ततः पुनः समावृत्ताः पश्चिमां दिशमेव ते ।
ददृशुर्द्वारकां चापि सागरेण परिप्लुताम् ॥ ४६
उदीचीं पुनरावृत्त्य ययुर्भरतसत्तमाः ।
प्रादक्षिण्यं चिकीर्षन्तः पृथिव्या योगधर्मिणः ४७

॥ इति श्रीमन्महाभारते महाप्रस्थानिकपर्वणि प्रथमोऽध्यायः ॥ १ ॥

## द्वितीयोऽध्यायः ॥ २ ॥

मेरुगिरिंप्रति गच्छन्तं युधिष्ठिरं ज्यैष्ठ्यक्रमादनुगच्छत्सु द्रौपद्यादिषु योगभ्रंशात्क्रमेण भूमौ निपतत्सु भीमप्रश्नात्तं प्रति युधिष्ठिरेण तेषां पतने हेतुकथनम् ॥ १ ॥ तथा ततः शुना केवलमनुगम्यमानेन सता पुरोगमनम् ॥ २ ॥

वैशंपायन उवाच ।
ततस्ते नियतात्मान उदीचीं दिशमास्थिताः ।
ददृशुर्योगयुक्ताश्च हिमवन्तं महागिरिम् ॥ १
तं चाप्यतिक्रमन्तस्ते ददृशुर्वालुकार्णवम् ।
अवैक्षन्त महाशैलं मेरुं शिखरिणां वरम् ॥ २
तेषां तु गच्छतां शीघ्रं सर्वेषां योगधर्मिणाम् ।
याज्ञसेनी भ्रष्टयोगा निपपात महीतले ॥ ३
तां तु प्रपतितां दृष्ट्वा भीमसेनो महाबलः ।
उवाच धर्मराजानं याज्ञसेनीमवेक्ष्य ह ॥ ४
नाधर्मश्चरितः कश्चिद्राजपुत्र्या परंतप ।
कारणं किंनु तद्ब्रूहि यत्कृष्णा पतिता भुवि ॥ ५
युधिष्ठिर उवाच ।
पक्षपातो महानस्या विशेषेण धनंजये ।
तस्यैतत्फलमद्यैषा पुरुषसत्तम ॥ ६
वैशंपायन उवाच ।
एवमुक्त्वाऽनवेक्ष्यैनां ययौ भरतसत्तमः ।
समाधाय मनो धीमान्धर्मात्मा पुरुषर्षभः ॥ ७
सहदेवस्ततो विद्वान्निपपात महीतले ।
तं चापि पतितं दृष्ट्वा भीमो राजानमब्रवीत् ॥ ८
योऽयमस्मासु सर्वेषु शुश्रूषुरनहंकृतः ।
सोयं माद्रवतीपुत्रः कस्मान्निपतितो भुवि ॥ ९
युधिष्ठिर उवाच ।
आत्मनः सदृशं प्राज्ञं नैषोऽमन्यत कंचन ।
तेन दोषेण पतितो विद्वानेष नृपात्मजः ॥ १०
वैशंपायन उवाच ।
इत्युक्त्वा तं समुत्सृज्य सहदेवं ययौ तदा ।
भ्रातृभिः सह कौन्तेयः शुना चैव युधिष्ठिरः॥११
कृष्णां निपतितां दृष्ट्वा सहदेवं च पाण्डवम् ।
आर्तो बन्धुप्रियः शूरो नकुलो निपपात ह ॥ १२
तस्मिन्निपतिते वीरे नकुले चारुदर्शने ।
पुनरेव तदा भीमो राजानमिदमब्रवीत् ॥ १३
योऽयमक्षतधर्मात्मा भ्राता वचनकारकः ।
रूपेणाप्रतिमो लोके नकुलः पतितो भुवि ॥ १४
इत्युक्तो भीमसेनेन प्रत्युवाच युधिष्ठिरः ।
नकुलं प्रति धर्मात्मा सर्वबुद्धिमतांवरः ॥ १५
रूपेण मत्समो नास्ति कश्चिदित्यस्य दर्शनम् ।
अधिकश्चाहमेवैक इत्यस्य मनसि स्थितम् ॥ १६
नकुलः पतितस्तस्मादागच्छ त्वं वृकोदर ।
यस्य यद्विहितं वीर सोऽवश्यं तदुपाश्नुते ॥ १७
तांस्तु प्रपतितान्दृष्ट्वा पाण्डवः श्वेतवाहनः ।
पपात शोकसंतप्तस्ततोनु परवीरहा ॥ १८
तस्मिंस्तु पुरुषव्याघ्रे पतिते शक्रतेजसि ।
म्रियमाणे दुराधर्षे भीमो राजानमब्रवीत् ॥ १९
अनृतं न स्मराम्यस्य स्वैरेष्वपि महात्मनः ।
अथ कस्य विकारोऽयं येनायं पतितो भुवि ॥ २०
युधिष्ठिर उवाच ।
एकोहं निर्दहेयं वै शत्रूनित्यर्जुनोऽब्रवीत् ।
न च तत्कृतवानेष शूरमानी ततोपतत् ॥ २१

तत्रो दिक्त्रयप्रदक्षिणीकरणानन्तरम् । योगयुक्ताः समाहितमनसः ॥ १ ॥ भ्रष्टयोगा ध्यानात् स्खलितमानसा ॥ ३ ॥ अनवेक्ष्य स्वर्गान्तरायरूपः स्नेहो माभूदिति भावः ॥ ७ ॥ द्वितीयोऽध्यायः ॥ २ ॥

अवमेने धनुर्ग्राहानेष सर्वांश्च फल्गुनः ।
तथा चैतन्न तु तथा कर्तव्यं भूतिमिच्छता ॥ २२
वैशंपायन उवाच ।
इत्युक्त्वा प्रस्थितो राजा भीमोऽथ निपपात ह ।
पतितश्चाब्रवीद्भीमो धर्मराजं युधिष्ठिरम् ॥ २३
भोभो राजन्नवेक्षस्व पतितोऽहं प्रियस्तव ।
किंनिमित्तं च पतनं ब्रूहि मे यदि वेत्थ ह ॥ २४
युधिष्ठिर उवाच ।
अतिभुक्तं च भवता प्राणेन च विकत्थसे ।
अनवेक्ष्य परं पार्थ तेनासि पतितः क्षितौ ॥ २५
इत्युक्त्वा तं महाबाहुर्जगामानवलोकयन् ।
श्वाप्येकोऽनुययौ यस्ते बहुशः कीर्तितो मया ॥ २६

॥ इति श्रीमन्महाभारते महाप्रस्थानिकपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

## तृतीयोऽध्यायः ॥ ३ ॥

शुना सह गच्छन्तं युधिष्ठिरं प्रति इन्द्रेण स्वर्गगमनाय निजरथारोहणचोदना ॥ १ ॥ युधिष्ठिरे शुना विना रथारोहणमरोचयमाने यमेन निजस्वरूपप्रकाशनेन तत्प्रशंसनम् ॥ २ ॥ ततो यमेन्द्रादिभी रथेन स्वर्गं प्रापितेन युधिष्ठिरेण तत्र भीमाद्यदर्शनादिन्द्रंप्रति भ्रात्रादीन्विना स्वस्य स्वर्गेप्यनभिरुचिकथनपूर्वकं तत्समीपगमनेच्छानिवेदनम् ॥ ३ ॥

---

वैशंपायन उवाच ।
ततः संनादयञ्शक्रो दिवं भूमिं च सर्वशः ।
रथेनोपययौ पार्थमारोहेत्यब्रवीच्च तम् ॥ १
स भ्रातॄन्पतितान्दृष्ट्वा धर्मराजो युधिष्ठिरः ।
अब्रवीच्छोकसंतप्तः सहस्राक्षमिदं वचः ॥ २
भ्रातरः पतिता मेऽत्र गच्छेयुस्ते मया सह ।
न विना भ्रातृभिः स्वर्गमिच्छे गन्तुं सुरेश्वर ॥ ३
सुकुमारी सुखार्हा च राजपुत्री पुरंदर ।
साऽस्माभिः सह गच्छेत तद्भवाननुमन्यताम् ॥ ४
शक्र उवाच ।
भ्रातॄन्द्रक्ष्यसि स्वर्गे त्वमग्रतस्त्रिदिवं गतान् ।
कृष्णया सहितान्सर्वान्मा शुचो भरतर्षभ ॥ ५
निक्षिप्य मानुषं देहं गतास्ते भरतर्षभ ।
अनेन त्वं शरीरेण स्वर्गं गन्ता न संशयः ॥ ६
युधिष्ठिर उवाच ।
अयं श्वा भूतभव्येश भक्तो मां नित्यमेव ह ।
स गच्छेत मया सार्धमानृशंस्या हि मे मतिः ॥ ७
शक्र उवाच ।
अमर्त्यत्वं मत्समत्वं च राजञ्श्रियं कृत्स्नां महतीं चैव सिद्धिम् ।
संप्राप्तोऽद्य स्वर्गसुखानि च त्वं त्यज श्वानं नात्र नृशंसमस्ति ॥ ८
युधिष्ठिर उवाच ।
अनार्यमार्येण सहस्रनेत्र शक्यं कर्तुं दुष्करमेतदार्य ।
मा मे श्रिया संगमनं तयाऽस्तु यस्याः कृते भक्तजनं त्यजेयम् ॥ ९
इन्द्र उवाच ।
स्वर्गे लोके श्ववतां नास्ति धिष्ण्यमिष्टापूर्तं क्रोधवशा हरन्ति ।
ततो विचार्य क्रियतां धर्मराज त्यज श्वानं नात्र नृशंसमस्ति ॥ १०
युधिष्ठिर उवाच ।
भक्तत्यागं प्राहुरत्यन्तपापं तुल्यं लोके ब्रह्मवध्याकृतेन ।
तस्मान्नाहं जातु कथंचनाद्य त्यक्ष्याम्येनं स्वसुखार्थी महेन्द्र ॥ ११
भीतं भक्तं नान्यदस्तीति चार्तं प्राप्तं क्षीणं रक्षणे प्राणलिप्सुम् ।

---

अस्पृश्यस्य संत्यागे नृशंसं निर्दयत्वं नास्ति ॥ ८ ॥ श्ववतामशुचित्वाद्धिष्ण्यं स्थानं स्वर्गे नास्ति । क्रोधवशा नाम देवगणाः अशुचेरिष्टापूर्तफलं घ्नन्ति ॥ १० ॥

प्राणत्यागादप्यहं नैव मोक्तुं
यतेयं वै नित्यमेतद्व्रतं मे ॥ १२
इन्द्र उवाच ।
शुना दृष्टं क्रोधवशा हरन्ति
यद्दत्तमिष्टं विवृतमथो हुतं च ।
तस्माच्छुनस्त्यागमिमं कुरुष्व
शुनस्त्यागात्प्राप्स्यसे देवलोकम् ॥ १३
त्यक्त्वा भ्रातॄन्दयितां चापि कृष्णां
प्राप्तो लोकः कर्मणा स्वेन वीर ।
श्वानं चैनं न त्यजसे कथं नु
त्यागं कृत्स्नं चास्थितो मुह्यसेऽद्य ॥ १४
युधिष्ठिर उवाच ।
न विद्यते संधिरथापि विग्रहो
मृतैर्मर्त्यैरिति लोकेषु निष्ठा ।
न ते मया जीवयितुं हि शक्या-
स्ततस्त्यागस्तेषु कृतो न जीवताम् ॥ १५
प्रतिप्रदानं शरणागतस्य
स्त्रिया वधो ब्राह्मणस्वापहारः ।
मित्रद्रोहस्तानि चत्वारि शक्र
भक्तत्यागश्चैव समो मतो मे ॥ १६
वैशंपायन उवाच ।
तद्धर्मराजस्य वचो निशम्य
धर्मस्वरूपी भगवानुवाच ।
युधिष्ठिरं प्रीतियुक्तो नरेन्द्रं
श्लक्ष्णैर्वाक्यैः संस्तवसंप्रयुक्तैः ॥ १७
अभिजातोसि राजेन्द्र पितुर्वृत्तेन मेधया ।
अनुक्रोशेन चानेन सर्वभूतेषु भारत ॥ १८
पुरा द्वैतवने चासि मया पुत्र परीक्षितः ।
पानीयार्थे पराक्रान्ता यत्र ते भ्रातरो हताः ॥ १९
भीमार्जुनौ परित्यज्य यत्र त्वं भ्रातरावुभौ ।
मात्रोः साम्यमभीप्सन्वै नकुलं जीवमिच्छसि २०
अयं श्वा भक्त इत्येवं त्यक्तो देवरथस्त्वया ।
तस्मात्स्वर्गे न ते तुल्यः कश्चिदस्ति नराधिपः २१
अतस्तवाक्षया लोकाः स्वशरीरेण भारत ।
प्राप्तोसि भरतश्रेष्ठ दिव्यां गतिमनुत्तमाम् ॥ २२
वैशंपायन उवाच ।
ततो धर्मश्च शक्रश्च मरुतश्चाश्विनावपि ।
देवा देवर्षयश्चैव रथमारोप्य पाण्डवम् ॥ २३
प्रययुः स्वैर्विमानैस्ते सिद्धाः कामविहारिणः ।
सर्वे विरजसः पुण्याः पुण्यवाग्बुद्धिकर्मिणः ॥२४
स तं रथं समास्थाय राजा कुरुकुलोद्वहः ।
ऊर्ध्वमाचक्रमे शीघ्रं तेजसाऽऽवृत्य रोदसी ॥ २५
ततो देवनिकायस्थो नारदः सर्वलोकवित् ।
उवाचोच्चैस्तदा वाक्यं बृहद्वादी बृहत्तपाः ॥ २६
येऽपि राजर्षयः पूर्वे ते चापि समुपस्थिताः ।
कीर्तिं प्रच्छाद्य तेषां वै कुरुराजोऽधितिष्ठति ॥ २७
लोकानावृत्य यशसा तेजसा वृत्तसंपदा ।
स्वशरीरेण संप्राप्तं नान्यं शुश्रुम पाण्डवात् ॥ २८
तेजांसि यानि दृष्टानि भूमिष्ठेन त्वया विभो ।
वेश्मानि भुवि देवानां पश्यामूनि सहस्रशः ॥ २९
नारदस्य वचः श्रुत्वा राजा वचनमब्रवीत् ।
भ्रातॄनपश्यन्धर्मात्मा स्वपक्षांश्चैव पार्थिवान् ॥३०
शुभं वा यदि वा पापं भ्रातॄणां स्थानमद्य मे ।
तदेव प्राप्तुमिच्छामि लोकानन्यान्न कामये ॥ ३१
राज्ञस्तु वचनं श्रुत्वा देवराजः पुरंदरः ।
आनृशंस्यसमायुक्तं प्रत्युवाच युधिष्ठिरम् ॥ ३२
स्थानेऽस्मिन्वस राजेन्द्र कर्मभिर्निर्जिते शुभैः ।
किं त्वं मानुष्यकं स्नेहमद्यापि परिकर्षसि ॥ ३३
सिद्धिं प्राप्तोसि परमां यथा नान्यः पुमान्क्वचित् ।
नैव ते भ्रातरः स्थानं संप्राप्ताः कुरुनन्दन ॥ ३४
अद्यापि मानुषो भावः स्पृशते त्वां नराधिप ।
स्वर्गोऽयं पश्य देवर्षीन्सिद्धांश्च त्रिदिवालयान् ३५

अभिजातोसि कुलीनोसि । पितुः पाण्डोः ॥१८॥ निकायस्थो निवासस्थः ॥ २६ ॥ समुपस्थिताः स्मृतिविषयाः सन्ति ॥ २७ ॥ यदेव भ्रातॄणां स्थानं तदेव प्राप्तुमिच्छामि ॥ ३१ ॥

तृतीयोऽध्यायः ॥ ३ ॥

युधिष्ठिरस्तु देवेन्द्रमेवंवादिनमीश्वरम् ।
पुनरेवाब्रवीद्धीमानिदं वचनमर्थवत् ॥ ३६
तैर्विना नोत्सहे वस्तुमिह दैत्यनिबर्हण ।
गन्तुमिच्छामि तत्राहं यत्र मे भ्रातरो गताः ॥३७
यत्र सा बृहती श्यामा बुद्धिसत्त्वगुणान्विता ।
द्रौपदी योषितांश्रेष्ठा यत्र चैव सुता मम ॥ ३८

॥ इति श्रीमन्महाभारते महाप्रस्थानिकपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

महाप्रस्थानिकं पर्व समाप्तम् ॥ १७ ॥

अतः परं स्वर्गारोहणपर्व । तस्यायमाद्यः श्लोकः ।
जनमेजय उवाच ।
स्वर्गे त्रिविष्टपं प्राप्य मम पूर्वपितामहाः ।
पाण्डवा धार्तराष्ट्राश्च कानि स्थानानि भेजिरे ॥ १

इदं महाप्रस्थानिकं पर्व कुंभघोणस्थेन टी. आर्. कृष्णाचार्येण टी. आर्. व्यासाचार्येण च मुंबय्यां निर्णयसागरमुद्रायन्त्रे मुद्रापितम् । शकाब्दाः १८३२ सन १९१०.

# SRIMANMAHABHARATA

A NEW EDITION

MAINLY BASED ON

THE SOUTH INDIAN TEXTS

With footnotes and Readings.

---

## SWARGAROHANAPARVA XVIII.

EDITED BY

T. R. KRISHNACHARYA & T. R. VYASACHARYA,

Proprietors, Madhva Vilâs Book Depot, Kumbakonam.

*Printed by B. R. Ghanekar for the proprietors,*

*at Tukaram Javaji's "Nirnaya-sagar" Press,*

BOMBAY.

1910.

॥ श्रीः ॥

# श्रीमन्महाभारतम् ।

## सटिप्पणम् ।



## स्वर्गारोहणपर्व १८.

---

एतच्च

कुम्भघोणस्थेन श्रीमन्मध्वविलासपुस्तकालयाधिपतिना

**टी. आर्. कृष्णाचार्येण टी. आर्. व्यासाचार्येण च**

अनेकेषां विदुषां साहाय्येन दाक्षिणात्यबहुकोशानुसारेण

संशोध्य

मुंबापुर्यां

जावजी दादाजी इत्येतेषां निर्णयसागरमुद्रणयन्त्रे मुद्रयित्वा प्रकाशितम् ।

शाके १८३२ साधारणनामसंवत्सरे ।


स्वर्गारोहणपर्व.
नरक.
देवदूत.
युधिष्ठिर

श्रीः ।

# श्रीमन्महाभारतम् ।



## स्वर्गारोहणपर्व १८ ।

### प्रथमोऽध्यायः ॥ १ ॥

स्वर्ग गतेन युधिष्ठिरेण तत्र महासमुच्छ्रयेण शोभमानदुर्योधनदर्शनम् ॥ १ ॥ तथा तदुत्कर्षासहिष्णुतया तदीयदोषोद्घाटनेन तेन सह स्वेन स्वर्गवासानभिरोचननिवेदनपूर्वकं नारदंप्रति स्वस्य भ्रात्रादिदिदृक्षानिवेदनम् ॥ २ ॥

श्रीवेदव्यासाय नमः ।

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥ १

जनमेजय उवाच ।

स्वर्गं त्रिविष्टपं प्राप्य मम पूर्वपितामहाः ।
पाण्डवा धार्तराष्ट्राश्च कानि स्थानानि भेजिरे ॥१
एतदिच्छाम्यहं श्रोतुं सर्वविच्चासि मे मतः ।
महर्षिणाऽभ्यनुज्ञातो व्यासेनाद्भुतकर्मणा ॥ २

वैशंपायन उवाच ।

स्वर्गं त्रिविष्टपं प्राप्य तव पूर्वपितामहाः ।
युधिष्ठिरप्रभृतयो यदकुर्वत तच्छृणु ॥ ३
स्वर्गं त्रिविष्टपं प्राप्य धर्मराजो युधिष्ठिरः ।
दुर्योधनं श्रिया जुष्टं ददर्शासीनमासने ॥ ४
भ्राजमानमिवादित्यं वीरलक्ष्म्याऽभिसंवृतम् ।
देवैर्भ्राजिष्णुभिः साध्यैः सहितं पुण्यकर्मभिः ॥ ५
ततो युधिष्ठिरो राजा दुर्योधनममर्षितः ।
सहसा संनिवृत्तोऽभूच्छ्रियं दृष्ट्वा सुयोधने ॥ ६
ब्रुवन्नुच्चैर्वचस्तान्वै नाहं दुर्योधनेन वै ।
सहितः कामये लोकाँल्लुब्धेनादीर्घदर्शिना ॥ ७
यत्कृते पृथिवी सर्वा सुहृदो बान्धवास्तथा ।
हतास्माभिः प्रसह्याजौ क्लिष्टैः पूर्वं महावने ॥ ८
द्रौपदी च सभामध्ये पाञ्चाली धर्मचारिणी ।
पर्याकृष्टाऽनवद्याङ्गी पत्नी नो गुरुसन्निधौ ॥ ९
अस्ति देवा न मे कामः सुयोधनमुदीक्षितुम् ।
तत्राहं गन्तुमिच्छामि यत्र ते भ्रातरो मम ॥ १०
नैवमित्यब्रवीत्तं तु नारदः प्रहसन्निव ।
स्वर्गे निवासे राजेन्द्र विरुद्धं चापि नश्यति ॥ ११
युधिष्ठिर महाबाहो मैवं वोचः कथंचन ।
दुर्योधनं प्रति नृपं शृणु चेदं वचो मम ॥ १२
एष दुर्योधनो राजा पूज्यते त्रिदशैः सह ।
सद्भिश्च राजप्रवरैर्य इमे स्वर्गवासिनः ॥ १३
वीरलोकगतिं प्राप्ता युद्धे हुत्वाऽऽत्मनस्तनुम् ।
यूयं सर्वे सुरसमा येन युद्धेन बाधिताः ॥ १४
स एष क्षत्रधर्मेण स्थानमेतदवाप्तवान् ।
भये महति योऽभीतो बभूव पृथिवीपतिः ॥ १५
न तन्मनसि कर्तव्यं पुत्र यद्द्यूतकारितम् ।
द्रौपद्याश्च परिक्लेशं न चिन्तयितुमर्हसि ॥ १६
ये चान्येऽपि परिक्लेशा युष्माकं ज्ञातिकारिताः ।
संग्रामेष्वथवाऽन्यत्र न तान्संस्मर्तुमर्हसि ॥ १७
समागच्छ यथान्यायं राज्ञा दुर्योधनेन वै ।

त्रीणि विष्टपानि भुवनानि फलोत्कर्षवशाद्यत्रान्तर्भवन्ति तादृश स्वर्ग प्राप्य ॥ १ ॥ तत इति । स्वर्गेऽप्यमर्षो दुस्त्यज इति संस्काराणा प्राबल्यमुक्तम् ॥ ६ ॥ हताः अस्माभिः सुधिरार्षः ॥ ९ ॥ विरुद्धं वैरादिक नश्यति अन्तर्धीयते ॥ ११ ॥

स्वर्गोऽयं नेह वैराणि भवन्ति मनुजाधिप ॥ १८
नारदेनैवमुक्तस्तु कुरुराजो युधिष्ठिरः ।
भ्रातॄन्पप्रच्छ मेधावी वाक्यमेतदुवाच ह ॥ १९
यदि दुर्योधनस्यैते वीरलोकाः सनातनाः ।
अधर्मज्ञस्य पापस्य पृथिवीसुहृदद्रुहः ॥ २०
यत्कृते पृथिवी नष्टा सहसा सनरद्विपा ।
वयं च मन्युना दग्धा वैरं प्रतिचिकीर्षवः ॥ २१
ये ते वीरा महात्मानो भ्रातरो मे महाव्रताः ।
सत्यप्रतिज्ञा लोकस्य शूरा वै सत्यवादिनः ।
तेषामिदानीं के लोका द्रष्टुमिच्छामि तानहम् ॥ २२
कर्णं चैव महात्मानं कौन्तेयं सत्यसंगरम् ।
धृष्टद्युम्नं सात्यकिं च धृष्टद्युम्नस्य चात्मजान् ॥ २३
ये च शस्त्रैर्वधं प्राप्ताः क्षत्रधर्मेण पार्थिवाः ।
क्व नु ते पार्थिवा ब्रह्मन्नैतान्पश्यामि नारद ॥ २४
विराटद्रुपदौ चैव धृष्टकेतुमुखांश्च तान् ।
शिखण्डिनं च पाञ्चाल्यं द्रौपदेयांश्च सर्वशः ।
अभिमन्युं च दुर्धर्षं द्रष्टुमिच्छामि नारद ॥ २५

॥ इति श्रीमन्महाभारते स्वर्गारोहणपर्वणि प्रथमोऽध्यायः ॥ १ ॥

## द्वितीयोऽध्यायः ॥ २ ॥

स्वर्गे कर्णादिबन्धुजनानपश्यता युधिष्ठिरेण देवान्प्रति यत्र कुत्रापि बन्धुजनैः सहैव स्वस्य निवासेच्छानिवेदनम् ॥ १ ॥ देवैर्युधिष्ठिराय बन्धुजनप्रदर्शनं चोदितेन देवदूतेन तस्य नरकप्रदेशप्रापणम् ॥ २ ॥ दुर्दर्शनरकदर्शनासहिष्णुतया सह दूतेन प्रतिनिवर्तमानेन युधिष्ठिरेण श्रुतपूर्वकण्ठध्वनिश्रवणम् ॥ ३ ॥ ततो युधिष्ठिरपृष्टैस्तैस्तं प्रति स्वेषां कर्णभीमादित्वकथनम् ॥ ४ ॥ ततस्तेन दूतंप्रति इन्द्रे स्वस्य तत्समीपं प्रत्यनागमनचोदना ॥ ५ ॥ दूतेनेन्द्रे युधिष्ठिरचिकीर्षितनिवेदनम् ॥ ६ ॥

युधिष्ठिर उवाच ।
नेह पश्यामि विबुधा राधेयममितौजसम् ।
भ्रातरौ च महात्मानौ युधामन्यूत्तमौजसौ ॥ १
जुहुवुर्ये शरीराणि रणवह्नौ महारथाः ।
राजानो राजपुत्राश्च ये मदर्थे हता रणे ॥ २
क्व ते महारथाः सर्वे शार्दूलसमविक्रमाः ।
तैरप्ययं जितो लोकः कच्चित्पुरुषसत्तमैः ॥ ३
यदि लोकानिमान्प्राप्तास्ते च सर्वे महारथाः ।
स्थितं वित्त हि मां देवाः सहितं तैर्महात्मभिः ॥ ४
कच्चिन्न तैरवाप्तोऽयं नृपैर्लोकोऽक्षयः शुभः ।
न तैरहं विना वत्स्ये भ्रातृभिर्ज्ञातिभिस्तथा ॥ ५
मातुर्हि वचनं श्रुत्वा तदा सलिलकर्मणि ।
कर्णस्य क्रियतां तोयमिति तप्यामि तेन वै ॥ ६
इदं च परितप्यामि पुनःपुनरहं सुराः ।
यन्मातुः सदृशौ पादौ तस्याहममितात्मनः ॥ ७
दृष्ट्वैव तं नानुगतः कर्णं परबलार्दनम् ।
न ह्यस्मान्कर्णसहिताञ्जयेच्छक्रोऽपि संयुगे ॥ ८
तमहं यत्रतत्रस्थं द्रष्टुमिच्छामि सूर्यजम् ।
अविज्ञातो मया योऽसौ घातितः सव्यसाचिना ९
भीमं च भीमविक्रान्तं प्राणेभ्योऽपि प्रियं मम ।
अर्जुनं चेन्द्रसंकाशं यमौ चैव यमोपमौ ॥ १०
द्रष्टुमिच्छामि तां चाहं पाञ्चालीं धर्मचारिणीम् ।
न चेह स्थातुमिच्छामि सत्यमेवं ब्रवीमि वः ॥ ११
किं मे भ्रातृविहीनस्य स्वर्गेण सुरसत्तमाः ।
यत्र ते मम स स्वर्गो नायं स्वर्गो मतो मम ॥ १२
देवा ऊचुः ।
यदि वै तत्र ते श्रद्धा गम्यतां तत्र माचिरम् ।
प्रिये हि तव वर्तामो देवराजस्य शासनात् ॥ १३
वैशंपायन उवाच ।
इत्युक्त्वा तं ततो देवा देवदूतमुपादिशन् ।
युधिष्ठिरस्य सुहृदो दर्शयेति परंतप ॥
ततः कुन्तीसुतो राजा देवदूतश्च जग्मतुः
सहितौ राजशार्दूल यत्र ते पुरुषर्षभाः ॥
अग्रतो देवदूतश्च ययौ राजा च पृष्ठतः ।

सुहृद इत्यदन्तः शब्दः ॥ २० ॥

प्रथमोऽध्यायः ॥ १ ॥

पन्थानमशुभं दुर्गं सेवितं पापकर्मभिः ॥ १६
तमसा संवृतं घोरं केशशैवलशाद्वलम् ।
युक्तं पापकृतां गन्धैर्मांसशोणितकर्दमम् ॥ १७
दंशोत्पातकभल्लूकमक्षिकामशकावृतम् ।
इतश्चेतश्च कुणपैः समन्तात्परिवारितम् ॥ १८
अस्थिकेशसमाकीर्णं कृमिकीटसमाकुलम् ।
ज्वलनेन प्रदीप्तेन समन्तात्परिवेष्टितम् ॥ १९
अयोमुखैश्च काकाद्यैर्गृध्रैश्च समभिद्रुतम् ।
सूचीमुखैस्तथा प्रेतैर्विन्ध्यशैलोपमैर्वृतम् ॥ २०
मेदोरुधिरयुक्तैश्च छिन्नबाहूरुपाणिभिः ।
निकृत्तोदरपादैश्च तत्रतत्र प्रवेशितैः ॥ २१
स तत्कुणपदुर्गन्धमशिवं रोमहर्षणम् ।
जगाम राजा धर्मात्मा मध्ये बहु विचिन्तयन् २२
ददर्शोष्णोदकैः पूर्णां नदीं चापि सुदुर्गमाम् ।
असिपत्रवनं चैव निशितं क्षुरसंवृतम् ॥ २३
करंभवालुकास्तप्ता आयसीश्च शिलाः पृथक् ।
लोहकुंभीश्च तैलस्य क्वाथ्यमानाः समन्ततः ॥ २४
कूटशाल्मलिकं चापि दुःस्पर्शं तीक्ष्णकण्टकम् ।
ददर्शान्याश्च कौन्तेयो यातनाः पापकर्मिणाम् २५
स तं दुर्गन्धमालक्ष्य देवदूतमुवाच ह ।
कियदध्वानमस्माभिर्गन्तव्यमिममीदृशम् ॥ २६
क च ते भ्रातरो मह्यं तन्ममाख्यातुमर्हसि ।
देशोऽयं कश्च देवानामेतदिच्छामि वेदितुम् ॥ २७
स संनिववृते श्रुत्वा धर्मराजस्य भाषितम् ।
देवदूतोऽब्रवीच्चैनमेतावद्गमनं तव ॥ २८
निवर्तितव्यो हि मया तथाऽस्म्युक्तो दिवौकसैः ।
यदि श्रान्तोसि राजेन्द्र त्वमथागन्तुमर्हसि ॥२९
युधिष्ठिरस्तु निर्विण्णस्तेन गन्धेन मूर्छितः ।
निवर्तने धृतमनाः पर्यावर्तत भारत ॥ ३०
स संनिवृत्तो धर्मात्मा दुःखशोकसमाहतः ।
शुश्राव तत्र वदतां दीना वाचः समन्ततः ॥ ३१
भोभो धर्मज राजर्षे पुण्याभिजन पाण्डव ।
अनुग्रहार्थमस्माकं तिष्ठ तावन्मुहूर्तकम् ॥ ३२
आयाति त्वयि दुर्धर्षे वाति पुण्यः समीरणः ।
तव गन्धानुगस्तात येनास्मान्सुखमागमत् ॥ ३३
ते वयं पार्थ दीर्घस्य कालस्य पुरुषर्षभ ।
सुखमासादयिष्यामस्त्वां दृष्ट्वा राजसत्तम ॥ ३४
संतिष्ठस्व महाबाहो मुहूर्तमिह भारत ।
त्वयि तिष्ठति कौरव्य यातनाऽस्मान्न बाधते ॥ ३५
एवं बहुविधा वाचः कृपणा वेदनावताम् ।
तस्मिन्देशे स शुश्राव समन्ताद्वदतां नृप ॥ ३६
तेषां तु वचनं श्रुत्वा दयावान्दीनभाषिणाम् ।
अहो कृच्छ्रमिति प्राह तस्थौ स च युधिष्ठिरः ३७
स ता गिरः पुरस्ताद्वै श्रुतपूर्वाः पुनःपुनः ।
ग्लानानां दुःखितानां च नाभ्यजानत पाण्डवः ॥
अबुध्यमानस्ता वाचो धर्मपुत्रो युधिष्ठिरः ।
उवाच के भवन्तो वै किमर्थमिह तिष्ठथ ॥ ३९
इत्युक्तास्ते ततः सर्वे समन्तादवभाषिरे ।
कर्णोऽहं भीमसेनोऽहमर्जुनोऽहमिति प्रभो ॥ ४०
नकुलः सहदेवोऽहं धृष्टद्युम्नोऽहमित्युत ।
द्रौपदी द्रौपदेयाश्च इत्येवं ते विचुक्रुशुः ॥ ४१
ता वाचः स तदा श्रुत्वा तद्देशसदृशीर्नृप ।
ततो विममृशे राजा किंत्विदं दैवकारितम् ॥ ४२
किंतु तत्कलुषं कर्म कृतमेभिर्महात्मभिः ।
कर्णेन द्रौपदेयैर्वा पाञ्चाल्या वा सुमध्यया ॥ ४३
य इमे पापगन्धेऽस्मिन्देशे सन्ति सुदारुणे ।
नाहं जानामि सर्वेषां दुष्कृतं पुण्यकर्मणाम् ॥ ४४
किं कृत्वा धृतराष्ट्रस्य पुत्रो राजा सुयोधनः ।
तथा श्रिया युतः पापैः सह सर्वैः पदानुगैः ॥ ४५
महेन्द्र इव लक्ष्मीवानास्ते परमपूजितः ।
कस्येदानीं विकारोऽयं य इमे नरकं गताः ॥ ४६
सर्वे धर्मविदः शूराः सत्यागमपरायणाः ।
क्षत्रधर्मरताः सन्तो यज्वानो भूरिदक्षिणाः ॥ ४७
किंनु सुप्तोसि जागर्मि चेतयामि न चेतये ।
अहो चित्तविकारोऽयं स्याद्वा मे चित्तविभ्रमः ४८
एवं बहुविधं राजा विममर्श युधिष्ठिरः ।

करंभवालुकाः श्वेतसूक्ष्मवालुका भ्राष्ट्रवालुका इत्यर्थः ॥२४॥

विममर्श विचारं कृतवान् ॥ ४९ ॥

दुःखशोकसमाविष्टश्चिन्ताव्याकुलितेन्द्रियः ॥ ४९
क्रोधमाहारयच्चैव तीव्रं धर्मसुतो नृपः ।
देवांश्च गर्हयामास धर्मं चैव युधिष्ठिरः ॥ ५०
स तीव्रशोकसंतप्तो देवदूतमुवाच ह ।
गम्यतां तत्र येषां त्वं दूतस्तेषामुपान्तिकम् ॥ ५१
न ह्यहं तत्र यास्यामि स्थितोस्मीति निवेद्यताम् ।
मत्संश्रयाद्दिमे दूनाः सुखिनो भ्रातरो हि मे ५२
इत्युक्तः स तदा दूतः पाण्डुपुत्रेण धीमता ।
जगाम तत्र यत्रास्ते देवराजः शतक्रतुः ॥ ५३
निवेदयामास च तद्धर्मराजचिकीर्षितम्
यथोक्तं धर्मपुत्रेण सर्वमेव जनाधिप ॥ ५४

॥ इति श्रीमन्महाभारते स्वर्गारोहणपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

## तृतीयोऽध्यायः ॥ ३ ॥

तत्रैवावस्थानपरीक्षया परितुष्टेषु यमेन्द्रादिषु युधिष्ठिरसमीपमुपागतेषु तद्दृष्टपूर्वनरकादीनां क्षणेनान्तर्धानम् ॥ १ ॥ धर्मेण युधिष्ठिरंप्रति सप्रशंसनं तद्दृष्टनरकस्य परीक्षणायेन्द्रमायासृष्टत्वकथनम् ॥ २ ॥ ततो युधिष्ठिरेण गङ्गायामवगाहनान्मानुषशरीरपरित्यागपूर्वकं दिव्यशरीरपरिग्रहणेन महर्ष्यादिभिः स्तूयमानेन सता सहदेवैर्भ्रात्राद्यधिष्ठितदिव्यस्थानगमनम् ॥ ३ ॥

वैशंपायन उवाच ।
स्थिते मुहूर्तं पार्थे तु धर्मराजे युधिष्ठिरे ।
आजग्मुस्तत्र कौरव्य देवाः शक्रपुरोगमाः ॥ १
स च विग्रहवान्धर्मो राजानं संपरीक्ष्य तम् ।
तत्राजगाम यत्रासौ कुरुराजो युधिष्ठिरः ॥ २
तेषु भासुरदेहेषु पुण्याभिजनकर्मसु ।
समागतेषु देवेषु व्यगमत्तत्तमो नृप ॥ ३
नादृश्यन्त च तास्तत्र यातनाः पापकर्मणाम् ।
नदी वैतरणी चैव कूटशाल्मलिना सह ॥ ४
लोहकुम्भ्यः शिलाश्चैव नादृश्यन्त भयानकाः ।
विकृतानि शरीराणि यानि तत्र समन्ततः ॥ ५
ददर्श राजा कौरव्यस्तान्सर्वान्सुमहाप्रभान् ॥ ६
ततो वायुः सुखस्पर्शः पुण्यगन्धवहः शुचिः ।
ववौ देवसमीपस्थः शीतलोऽतीव भारत ॥ ७
मरुतः सह शक्रेण वसवश्चाश्विनौ सह ।
साध्या रुद्रास्तथाऽऽदित्या ये चान्येऽपि दिवौकसः
सर्वे तत्र समाजग्मुः सिद्धाश्च परमर्षयः ।
यत्र राजा महातेजा धर्मपुत्रः स्थितोऽभवत् ॥ ९
ततः शक्रः सुरपतिः श्रिया परमया युतः ।
युधिष्ठिरमुवाचेदं सान्त्वपूर्वमिदं वचः ॥ १०
युधिष्ठिर महाबाहो प्रीता देवगणास्त्वया ।
एह्येहि पुरुषव्याघ्र कृतमेतावता विभो ॥ ११
सिद्धिः प्राप्ता महाबाहो लोकाश्चाप्यक्षयास्तव ।
भ्रातॄणां सुहृदां चैव गतिर्नित्या सुपूजितम् ॥ १२
न च मन्युस्त्वया कार्यः शृणु चेदं वचो मम ।
अवश्यं नरकस्तात द्रष्टव्यः सर्वराजभिः ॥ १३
शुभानामशुभानां च द्वौ राशी पुरुषर्षभ ।
यः पूर्वं सुकृतं भुङ्क्ते पश्चान्निरयमेति सः ॥ १४
पूर्वं नरकभाग्यस्तु पश्चात्स्वर्गमुपैति सः ।
भूयिष्ठं पापकर्मा यः स पूर्वं स्वर्गमश्नुते ॥ १५
'भूयिष्ठशुभकर्मा त्वमल्पजिह्मतयाऽच्युत ।'
तेन त्वमेवं गमितो मया श्रेयोर्थिना नृप ॥ १६
व्याजेन हि त्वया द्रोण उपचीर्णः सुतं प्रति ।
व्याजेनैव ततो राजन्दर्शितो नरकस्तव ॥ १७
यथैव त्वं तथा भीमस्तथा पार्थो यमौ तथा ।
द्रौपदी च तथा कृष्णा व्याजेन नरकं गताः ।
आगच्छ नरशार्दूल मुक्तास्ते चैव कल्मषात् ॥ १८
स्वपक्ष्याश्चैव ये तुभ्यं पार्थिवा निहता रणे ।

---

दूनाः खिन्नाः ॥ ५२ ॥ द्वितीयोऽध्यायः ॥ २ ॥
हतः कुजर इति अश्वत्थामवधे द्रोण उपचीर्णो वञ्चितः गजवाचीशब्दो मनुष्यपरत्वेन ज्ञापित इत्युपचारच्छलेनेत्यर्थः ॥ १७ ॥ तुभ्यं तव ॥ १९ ॥

सर्वे स्वर्गमनुप्राप्तास्तान्पश्य भरतर्षभ ॥ १९
कर्णश्चैव महेष्वासः सर्वशस्त्रभृतांवरः ।
स गतः परमां सिद्धिं यदर्थं परितप्यसे ॥ २०
तं पश्य पुरुषव्याघ्रमादित्यतनयं विभो ।
स्वस्थानस्थं महाबाहो जहि शोकं नरर्षभ ॥ २१
भ्रातॄन्पुत्रांस्तथा पश्य स्वपक्ष्यांश्चैव पार्थिवान् ।
स्वंस्वं स्थानमनुप्राप्तान्व्येतु ते मानसो ज्वरः ॥ २२
कृच्छ्रं पूर्वं चानुभूय इतःप्रभृति कौरव ।
विहरस्व मया सार्धं गतशोको निरामयः ॥ २३
कर्मणां तात पुण्यानां ज्ञानानां तपसां स्वयम् ।
दानानां च महाबाहो फलं प्राप्नुहि पार्थिव ॥ २४
अद्य त्वां देवगन्धर्वा दिव्याश्चाप्सरसो दिवि ।
उपसेवन्तु कल्याणं विरजोंबरभूषणाः ॥ २५
राजसूयजिताँल्लोकानश्वमेधाभिनिर्मितान् ।
प्राप्नुहि त्वं महाबाहो तपसश्च महाफलम् ॥ २६
उपर्युपरि राज्ञां हि तव लोका युधिष्ठिर ।
हरिश्चन्द्रसमः पार्थ येषु त्वं विहरिष्यसि ॥ २७
मान्धाता यत्र राजर्षिर्यत्र राजा भगीरथः ।
दौष्यन्तिर्यत्र भरतस्तत्र त्वं विहरिष्यसि ॥ २८
एषा देवनदी पुण्या पार्थ त्रैलोक्यपावनी ।
आकाशगङ्गा राजेन्द्र तत्राप्लुत्य गमिष्यसि ॥ २९
अत्र स्नातस्य भावस्ते मानुषो विगमिष्यति ।
गतशोको निरायासो मुक्तवैरो भविष्यसि ॥ ३०
एवं ब्रुवति देवेन्द्रे कौरवेन्द्रं युधिष्ठिरम् ।
धर्मो विग्रहवान्साक्षादुवाच सुतमात्मनः ॥ ३१
भोभो राजन्महाप्राज्ञ प्रीतोस्मि तव पुत्रक ।
मद्भक्त्या सत्यवाक्यैश्च क्षमया च दमेन च ॥ ३२
एषा तृतीया जिज्ञासा तव राजन्कृता मया ।
न शक्यसे चालयितुं स्वभावात्पार्थ हेतुतः ॥ ३३
पूर्वं परीक्षितो हि त्वं प्रश्नाद्द्वैतवने मया ।
अरणीसहितस्यार्थे तच्च निस्तीर्णवानसि ॥ ३४
सोदर्येषु विनष्टेषु द्रौपद्या तत्र भारत ।
श्वरूपधारिणा तत्र पुनस्त्वं मे परीक्षितः ॥ ३५
इदं तृतीयं भ्रातॄणामर्थे यत्स्थातुमिच्छसि ।
विशुद्धोसि महाभाग सुखी विगतकल्मषः ॥ ३६
न च ते भ्रातरः पार्थ नरकार्हा विशांपते ।
मायैषा देवराजेन महेन्द्रेण प्रयोजिता ॥ ३७
अवश्यं नरकास्तात द्रष्टव्याः सर्वराजभिः ।
ततस्त्वया प्राप्तमिदं मुहूर्तं दुःखमुत्तमम् ॥ ३८
न सव्यसाची भीमो वा यमौ वा पुरुषर्षभौ ।
कर्णो वा सत्यवाक् शूरो नरकार्हाश्चिरं नृप ॥ ३९
न कृष्णा राजपुत्री च नरकार्हा कथंचन ।
एह्येहि भरतश्रेष्ठ पश्य चेमांस्त्रिलोकगान् ॥ ४०
वैशंपायन उवाच ।
एवमुक्तः स राजर्षिस्तव पूर्वपितामहः ।
जगाम सह धर्मेण सर्वैश्च त्रिदिवालयैः ॥ ४१
गङ्गां देवनदीं पुण्यां पावनीमृषिसंस्तुताम् ।
अवगाह्य ततो राजा तनुं तत्याज मानुषीम् ॥ ४२
ततो दिव्यवपुर्भूत्वा धर्मराजो युधिष्ठिरः ।
निर्वैरो गतसंतापो जले तस्मिन्समाप्लुतः ॥ ४३
ततो ययौ वृतो देवैः कुरुराजो युधिष्ठिरः ।
धर्मेण सहितो धीमांस्तूयमानो महर्षिभिः ॥ ४४
यत्र ते पुरुषव्याघ्राः शूरा विगतमन्यवः ।
पाण्डवा धार्तराष्ट्राश्च स्वानि स्थानानि भेजिरे ४५

॥ इति श्रीमन्महाभारते स्वर्गारोहणपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

## चतुर्थोऽध्यायः ॥ ४ ॥

युधिष्ठिरेण स्वर्गे निवसतां कृष्णकर्णादीनां दर्शनम् ॥ १ ॥ इन्द्रेण युधिष्ठिराय द्रौपदेयादीनां तत्तत्स्थानगतानां पृथक्पृथक्प्रदर्शनम् ॥ २ ॥

वैशंपायन उवाच ।
ततो युधिष्ठिरं राजा देवैः सर्षिमरुद्गणैः ।

जिज्ञासा परीक्षा ॥ ३३ ॥ स्वर्गाधिरोहणे द्रौपद्या सह सोदर्येषु विनष्टेषु सत्सु । श्वरूपधारिणा शुनकरूपिणा ॥ ३५ ॥ यत्र ते पाण्डवास्तत्र देवैः सह ययाविति द्वयोः संबन्धः ॥ ४४ ॥ तृतीयोऽध्यायः ॥ ३ ॥

स्तूयमानो ययौ तत्र यत्र ते कुरुपुङ्गवाः ॥ १
ददर्श तत्र गोविन्दं ब्राह्मेण वपुषाऽन्वितम् ।
तेनैव दृष्टपूर्वेण सादृश्येनैव सूचितम् ॥ २
दीप्यमानं स्ववपुषा दिव्यैरस्त्रैरुपस्थितम् ।
चक्रप्रभृतिभिर्घोरैर्दिव्यैः पुरुषविग्रहैः ॥ ३
उपास्यमानं वीरेण फल्गुनेन सुवर्चसा ।
तथास्वरूपं कौन्तेयो ददर्श मधुसूदनम् ॥ ४
तावुभौ पुरुषव्याघ्रौ समुद्वीक्ष्य युधिष्ठिरम् ।
यथावत्प्रतिपेदाते पूजया देवपूजितौ ॥ ५
अपरस्मिन्नथोद्देशे कर्णं शस्त्रभृतां वरम् ।
द्वादशादित्यसहितं ददर्श कुरुनन्दनः ॥ ६
अथापरस्मिन्नुद्देशे मरुद्गणवृतं विभुम् ।
भीमसेनमथापश्यत्तेनैव वपुषाऽन्वितम् ॥ ७
वायोर्मूर्तिमतः पार्श्वे दिव्यमूर्तिसमन्वितम् ।
श्रिया परमया युक्तं सिद्धिं परमिकां गतम् ॥ ८
अश्विनोस्तु तथा स्थाने दीप्यमानौ स्वतेजसा ।
नकुलं सहदेवं च ददर्श कुरुनन्दनः ॥ ९
तथा ददर्श पाञ्चालीं कमलोत्पलमालिनीम् ।
वपुषा स्वर्गमाक्रम्य तिष्ठन्तीमर्कवर्चसम् ॥ १०
तत्रैनां सहसा राजा स्प्रष्टुमैच्छद्युधिष्ठिरः ।
ततोऽस्य भगवानिन्द्रः कथयामास देवराट् ॥ ११
श्रीरेषा द्रौपदीरूपा त्वदर्थे मानुषं गता ।
अयोनिजा लोककान्ता पुण्यगन्धा युधिष्ठिर १२
रत्यर्थं भवतां ह्येषा निर्मिता शूलपाणिना ।
द्रुपदस्य कुले जाता भवद्भिश्चोपजीविता ॥ १३
एते पञ्च महाभागा गन्धर्वाः पावकप्रभाः ।
द्रौपद्यास्तनया राजन्युष्माकममितौजसः ॥ १४
पश्य गन्धर्वराजानं धृतराष्ट्रं मनीषिणम् ।
एनं च त्वं विजानीहि भ्रातरं पूर्वजं पितुः ॥ १५
अयं ते पूर्वजो भ्राता कौन्तेयः पावकद्युतिः ।
सूर्यपुत्रो रथिश्रेष्ठो राधेय इति विश्रुतः ।
आदित्यसहितो भाति पश्यैनं पुरुषर्षभम् ॥ १६
साध्यानामथ देवानां विश्वेषां मरुतामपि ।
गणेषु पश्य राजेन्द्र वृष्ण्यन्धकमहारथान् ।
सात्यकिप्रमुखान्वीरान्भोजांश्चैव महाबलान् ॥ १७
सोमेन सहितं पश्य सौभद्रमपराजितम् ।
अभिमन्युं महेष्वासं निशाकरसमद्युतिम् ॥ १८
एष पाण्डुर्महेष्वासः कुन्त्या माद्र्या च संगतः ।
विमानेन सदाऽभ्येति पिता तव ममान्तिकम् १९
वसुभिः सहितं पश्य भीष्मं शान्तनवं नृपम् ।
द्रोणं बृहस्पतेः पार्श्वे गुरुमेनं निशामय ॥ २०
एते चान्ये महीपाला योधास्तव च पाण्डव ।
गन्धर्वसहिता यान्ति यक्षपुण्यजनैस्तथा ॥ २१
गुह्यकानां गतिं चापि केचित्प्राप्ता नराधिपाः ।
त्यक्त्वा देहं जितः स्वर्गः पुण्यवाग्बुद्धिकर्मभिः ॥

॥ इति श्रीमन्महाभारते स्वर्गारोहणपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥

## पञ्चमोऽध्यायः ॥ ५ ॥

वैशंपायनेन जनमेजयंप्रति भीष्मद्रोणादीनां स्वस्वसुकृतफलत्वेन स्वर्गभोगानन्तरं स्वस्वांशिभिः सहैक्यप्राप्तिकथनम् ॥ १ ॥ जनमेजयेन यज्ञान्ते सबहुमानमास्तिकादिप्रेषणपूर्वकं तक्षशिलातो हास्तिनमेत्य प्रजापालनपूर्वकं सुखनिवासः ॥ २ ॥ सौतिना शौनकादीन्प्रति जनमेजयाय वैशंपायनोक्तभारतकथनसमापनपूर्वकं भारतमहिमप्रशंसनम् ॥ ३ ॥

जनमेजय उवाच ।
भीष्मद्रोणौ महात्मानौ धृतराष्ट्रश्च पार्थिवः ।
विराटद्रुपदौ चोभौ शङ्खश्चैवोत्तरस्तथा ॥ १
धृष्टकेतुर्जयत्सेनो राजा चैव स सत्यजित् ।
दुर्योधनसुताश्चैव शकुनिश्चैव सौबलः ॥ २
कर्णपुत्राश्च विक्रान्ता राजा चैव जयद्रथः ।
घटोत्कचादयश्चैव ये चान्ये नानुकीर्तिताः ॥ ३
ये चान्ये कीर्तिता वीरा राजानो दीप्तमूर्तयः ।

ब्राह्मेण ब्रह्मणा आराध्येन ॥ २ ॥ उपस्थित सेवितं अस्त्रैः ॥ ३ ॥ मानुष मानुषभावम् ॥ १२ ॥ चतुर्थोऽध्यायः ॥ ४ ॥

स्वर्गे कालं कियन्तं ते तस्थुस्तदपि शंस मे ॥ ४
अहोस्विच्छाश्वतं स्थानं तेषां तत्र द्विजोत्तम ।
अन्ते वा कर्मणां कां ते गतिं प्राप्ता नरर्षभाः ॥ ५
एतदिच्छाम्यहं श्रोतुं प्रोच्यमानं द्विजोत्तम ।
तपसा हि प्रदीप्तेन सर्वं त्वमनुपश्यसि ॥ ६
सौतिरुवाच ।
इत्युक्तः स तु विप्रर्षिरनुज्ञातो महात्मना ।
व्यासेन तस्य नृपतेराख्यातुमुपचक्रमे ॥ ७
वैशंपायन उवाच
गन्तव्यं कर्मणामन्ते सर्वेषां मनुजाधिप ।
शृणु गुह्यमिदं राजन्देवानां भरतर्षभ ।
यदुवाच महातेजा दिव्यचक्षुः प्रतापवान् ॥ ८
मुनिः पुराणः कौरव्य पाराशर्यो महाव्रतः ।
अगाधबुद्धिः सर्वज्ञो गतिज्ञः सर्वकर्मणाम् ॥ ९
तेनोक्तं कर्मणामन्ते प्रविशन्ति स्विकां तनुम् १०
वसूनेव महातेजा भीष्मः प्राप महाद्युतिः ।
अष्टावेव हि दृश्यन्ते वसवो भरतर्षभ ॥ ११
बृहस्पतिं विवेशाथ द्रोणो ह्याङ्गिरसां वरम् ।
कृतवर्मा तु हार्दिक्यः प्रविवेश मरुद्गणान् ॥ १२
सनत्कुमारं प्रद्युम्नः प्रविवेश यथागतम् ।
धृतराष्ट्रो धनेशस्य लोकान्प्राप दुरासदान् ॥ १३
धृतराष्ट्रेण सहिता गान्धारी च यशस्विनी ।
पत्नीभ्यां सहितः पाण्डुर्महेन्द्रसदनं ययौ ॥ १४
विराटद्रुपदौ चोभौ धृष्टकेतुश्च पार्थिवः ।
निशठाक्रूरसांबाश्च भानुः कम्पो विदूरथः ॥ १५
भूरिश्रवाः शलश्चैव भूरिश्च पृथिवीपतिः ।
कंसश्चैवोग्रसेनश्च वसुदेवस्तथैव च ॥ १६
उत्तरश्च सह भ्रात्रा शङ्खेन नरपुङ्गवः ।
विश्वेषां देवतानां ते विविशुर्नरसत्तमाः ॥ १७
[वर्चा नाम महातेजाः सोमपुत्रः प्रतापवान् ।
सोऽभिमन्युर्नृसिंहस्य फल्गुनस्य सुतोऽभवत् ॥ १८
स युद्ध्वा क्षत्रधर्मेण यथा नान्यः पुमान्क्वचित् ।]
विवेश सोमं धर्मात्मा कर्मणोन्ते महारथः ॥ १९
आविवेश रविं कर्णो निहतः पुरुषर्षभ
द्वापरं शकुनिः प्राप धृष्टद्युम्नस्तु पावकम् ॥ २०
धृतराष्ट्रात्मजाः सर्वे यातुधानान्प्रपेदिरे ।
धर्ममेवाविशत्क्षत्ता राजा चैव युधिष्ठिरः ॥ २१
अनन्तो भगवान्देवः प्रविवेश रसातलम् ।
पितामहनियोगाद्धि यो योगाद्गामधारयत् ॥ २२
यः स नारायणो नाम देवदेवः सनातनः ।
तस्यांशो वासुदेवस्तु कर्मणोन्ते विवेश ह ॥ २३
षोडशस्त्रीसहस्राणि वासुदेवपरिग्रहाः ।
अमज्जंस्ताः सरस्वत्यां कालेन जनमेजय ॥ २४
तत्र त्यक्त्वा शरीराणि दिवमारुरुहुः पुनः ।
ताश्चैवाप्सरसो भूत्वा वासुदेवमुपाविशन् ॥ २५
हतास्तस्मिन्महायुद्धे ये वीरास्तु महारथाः ।
घटोत्कचादयश्चैव देवान्यक्षांश्च भेजिरे ॥ २६
दुर्योधनसहायाश्च राक्षसा येऽनुकीर्तिताः ।
प्राप्तास्ते क्रमशो राजन्सर्वलोकाननुत्तमान् ॥ २७
भवनं च महेन्द्रस्य कुबेरस्य च धीमतः ।
वरुणस्य तथा लोकान्विविशुः पुरुषर्षभाः ॥ २८
एतत्ते सर्वमाख्यातं विस्तरेण महाद्युते ।
कुरूणां चरितं कृत्स्नं पाण्डवानां च भारत ॥ २९
सौतिरुवाच ।
एतच्छ्रुत्वा द्विजश्रेष्ठात्स राजा जनमेजयः ।
विस्मितोऽभवदत्यर्थं यज्ञकर्मान्तरेष्वथ ॥ ३०
ततः समापयामासुः कर्म तत्तस्य याजकाः ।
आस्तिकश्चाभवत्प्रीतः परिमोक्ष्य भुजङ्गमान् ३१
ततो द्विजातीन्सर्वांस्तान्दक्षिणाभिरतोषयत् ।
पूजिताश्चापि ते राज्ञा ततो जग्मुर्यथागतम् ॥ ३२
विसर्जयित्वा विप्रांस्तान्राजाऽपि जनमेजयः ।
हृष्टस्तक्षशिलायाः स पुनरायाद्गजाह्वयम् ॥ ३३
एतत्ते सर्वमाख्यातं वैशंपायनकीर्तितम् ।
व्यासाज्ञया समाज्ञातं सर्पसत्रे नृपस्य हि ॥ ३४
पुण्योऽयमितिहासाख्यः पवित्रं चेदमुत्तमम् ।
कृष्णेन मुनिना विप्र निर्मितं सत्यवादिना ॥ ३५

न शक्यं कर्मणामन्ते सर्वेण मनुजाधिप । प्रकृतिं किंतु सम्यक्ते पृच्छैषा सम्प्रयोजितेति झ. पाठः ॥ ८ ॥

